स्थितिः "प्रपञ्चे क्रीडनं हरेः"; प्रपञ्चे क्रीडनञ्च प्रापञ्चिकधर्मरहितमपि प्रसादातिशयेन भक्तोद्धारार्थं लीलया प्रपञ्चाधिकरणत्वात्तद्धर्मविशिष्टमेव। तेन च मर्यादापालनमेव। तत एव "मन्वन्तराणि सद्धर्म ऊतयः कर्मवासनाः" इति परिच्छिन्नत्वबोधकानि वाक्यानि, "एकादशसमास्तत्र"इत्यादीनि च। तथा च निरोधेन भक्तोद्धाराय यथा मर्यादाङ्गीकारस्तथैवेदानीमपि तन्मार्गस्यैव प्रकटीकरणं "सर्वोद्धारप्रयत्नात्मा कृष्णः प्रादुर्बभूव ह"इत्यादिना "कलिकाले"इत्यादिना "स्वया निजमाहात्म्य"मित्यन्तेन "तस्यैवाऽऽत्मानुभावप्रकटनहृदयस्याऽऽज्ञये"-त्यादिना च सन्दर्भेण सिद्धमिति। तत्र च कृतनिर्वचननिरोधलीलाविशिष्टप्रभुतिरोभावे तदुद्धारकतया श्रीभागवतरूपेण भगवत्स्थितिः सिद्धेति, श्रीभागवतञ्च वेदादिसर्वसन्देहनिरासद्वारा वेदादीनां पुष्टितात्पर्यकत्वस्थापकमिति श्रीकृष्णप्रादुर्भावः, श्रीमद्भागवताविर्भावः, श्रीमदाचार्यचरणप्रादुर्भावलीलासहग्रन्थकरणं, तेन च वेदादीनां पुष्टिपरत्वमिति सर्वमेतत् श्रीकृष्णस्याऽनुग्रहरूपा निरोधलीलैवेति तस्याः प्रमाणाधिकरणकतायां प्रमेयमार्गस्य प्रमाणानुरुद्धता परमौचित्यायेति। परमानुग्रहरूपा च। भक्तानामुद्धारार्थं भगवत आनुकूल्येन प्रपञ्चस्थितेः परमानुग्रहरूपत्वात्। तेनाऽप्रामाणिकत्वपाषण्डत्वादिशङ्काप्युदासोऽपि परमानुग्रहेणैवेति गङ्गाप्रवाहान्तःपातिबाह्योदकस्येव प्रमाणाङ्गीकारस्याऽपि पुष्टिरूपत्वमेव। अनुग्रहप्रवाहपातित्वात्।

एवमप्रामाणिकत्वपाषण्डत्वादिशङ्कानुदयद्वारा प्रेक्षावत्प्रवृत्त्यानुकूल्याय ततशौचर्यौचित्यायर्थञ्च प्रमेयमार्गेऽपि प्रमाणाङ्गीकारः सुतरामेवाऽऽवश्यक इति स्थितम्।

तथा सति तत्र "नायमात्मा प्रवचनेने"त्यादिना सर्वसाधननिषेधपूर्वकं वरणैकलभ्यत्वं श्राव्यते। "भक्त्या-हमेकया ग्राह्य" इत्यादिना भक्तिप्राप्यत्वमप्युच्यते। भक्तिपदशक्तिश्च "स्नेहो भक्तिरिति प्रोक्त" इत्यनेन स्नेहे निर्धारिता। तत्साधनता च नवविधभक्तेः "भक्त्या सञ्जातया भक्त्ये"त्यादिना सिद्धा। नवविधायाश्च "जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः" "श्रेयोभिर्विविधैश्चाऽन्यैः कृष्णे भक्तिर्हि साध्यत" इत्यादिना पापाभावस्य दानव्रतादीनाञ्च हेतुता बोध्यते। एवञ्च स्वतन्त्रानुग्रहैकलभ्यत्वतत्तत्साधनानुक्रमलभ्यत्वयोर्विरोधे तदुभयसामञ्जस्याय "उभयव्यपदेशात्त्वहिकुण्डलव"दिति "प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय" इति सविशेषनिर्विशेषश्रुत्योर्व्यवस्थावज्जीवकृतिसाध्यसाधनैरलभ्यं भगवदनुग्रहीतस्य तु साधनद्वारेणाऽपि लभ्यमिति सिद्धान्तव्यवस्थया "नाऽयमात्मे"ति साधनानि प्रतिषिध्याऽपि "नाऽयमात्मा बलहीनेन लभ्य" इत्यादिना बलादीनां पुनः साधनत्वोक्त्याऽपि केवलानुग्रहाधीनतत्तत्साधनानुक्रमलभ्यत्वमभिलभ्यत्वमप्यङ्गीकार्यमेव।

तेन प्रमाणबोधितया यथा प्रमेयमार्गस्य प्रमाणानुरुद्धता, तथा प्रमाणोक्तसाधनसाध्यतयाऽपि। परं भगवदनुग्रहे सत्येव, न त्वन्यथाऽपि। भगवदनुग्रहश्च भगवदर्थित्वानुमेयः। तदर्थित्वस्यैव वरणकार्यत्वात्। वरणञ्चानुग्रहादिति। स्थितमेतद्भक्तिहंसे। एवञ्चाऽनुग्रहेण वरणे सति भगवदर्थित्वम्। भगवदर्थित्वञ्च भगवत्प्राप्तिरिदानीमनवतारकाले न रूपेण, नापि मार्गनिरपेक्षेण प्रमेयबलमात्रेण श्रीमदाचार्यचरणस्वरूपेण, सम्प्रति तेषामप्यनवतारकालोऽयमिति, किन्तु तत्प्रकटितमार्गेणेति तन्मार्गीयसाधननिष्ठोदयस्तस्य भवतीति। तदुक्तं श्रीमदाचार्यचरणैः—"यथा यथा हरिः कृष्णो मनस्याविशते निजे। तथा तथा साधनेषु परिनिष्ठा विवर्धत" इति। रागोत्कट्ये नायिकया नायकस्य वा दूत्याश्रयणवद्गमनोदये साधनाश्रयणस्याऽनिवार्यतया वरणकार्यस्य भगवदर्थित्वस्य फलपर्यवसायित्वनियमेन तीव्रतया च साधनाश्रयणमुचिततरम्।

तथा च प्रमाणबोधिततया प्रमाणानुरुद्धता यथा तथा प्रमाणोक्तसाधनसाध्यतयाऽपि प्रमाणानुरुद्धता प्रमेयमार्गस्याऽनुग्रहव्यापाररूपैवेति "नायमात्मा प्रवचनेन लभ्य" इतीतरसाधनसाध्यतानिषेधपूर्वकं वृत्तलभ्यत्वश्रुतिर्भक्तिलभ्यत्वोक्तिरनुग्रहस्य सैकसाध्यत्वास्थितिः प्रमेयस्य वस्तुवृत्त्या सिद्धत्वव्यवस्थितिरप्रामाणिकत्वपाषण्डत्वानासत्वादिशङ्काप्युदासो मार्गबोधनप्रचारसौकर्यौचित्यादि सर्वं चतुरस्रम्।

अनुग्रहाभावे तु केवलं प्रमाणोक्ततया प्राप्तानां साधनानां "जायस्व म्रियस्वे"त्यादिप्रवाहवत् "धनं मे जायताम्" "शत्रुर्मे व्यापाद्यताम्" तथैव कदाचिद्यदृच्छयाऽनन्तदुःखानुभवेन वैराग्योदये "मोक्षो मे जायता"-मिति प्रवृत्तिप्रवाहस्य भगवदनभिमुखेष्वपि तेषु तेष्वास्तिकंमन्येषु वैदिकंमन्येषु वा बहुलं जागरूकतया प्रवाहि-

कर्येन प्रावाहिकफलसाधकत्वमेव, तदपि न स्वातन्त्र्येण, किन्तर्हि भगवता चिक्रीडिषया फलाध्यक्षेणेश्वरेणाऽनधिष्ठितमचेतनमदृष्टं न फलं साधयितुं समर्थमिति मीमांसकं प्रत्याक्षिप्योपदेशेन भगवत्कृतमेव । तत्स्थितं "फलमत उपपत्ते"रित्यत्र, "येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्" "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनाऽतश्च्यवन्ति ते" "कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । तं तं नियममास्थाय प्रकृत्या नियताः स्वया । यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याऽचलां श्रद्धां तामेव विदधाम्यहम् । स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान् मयैव विहितान् हि तान् । अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्" "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विता" इत्यादिषु चैतत्स्फुटम् ।

अयमेव तावत्प्रावाहिको मोक्षो निन्द्यते "स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन" इति "मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुरि"ति । "सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जना" इति च । अत्रैतदवधेयम् । भगवदर्थित्वं नाधिकारितावच्छेदकमपि त्वनुगृहीतत्वलिङ्गमिति न भगवदर्थितया कृतानामेव प्रमाणोक्तानां साधनानामनुग्रहव्यापारत्वं, किन्तर्हि केवलप्रमाणोक्ततया कृतानामपि साधनानां सत्यां भगवतः स्वरूपफलदित्सायामिति प्रावाहिकस्यापि प्रमाणमार्गस्य प्रमेयमार्गे उपयोगस्तदनुग्रहताऽपि विरोधाभावादाद्रियते । प्रवाहस्यापि प्रमेयौपयिकता तु "संसारचक्रे भ्रमतः स्वकर्मभि"रित्यत्र गूढागुरचतुःश्लोकीटीकायां श्रीमदाचार्यचरणप्रकटीकृतायां सिद्धा । श्रीयमुनाष्टके श्रीमत्प्रभुचरणप्रणीततद्विवृतिकृतनिर्वचनसकलसिद्धिहेतावपि "इयं तव कथाऽधिका सकलगोपिकासङ्गमस्मरश्रमजलाणुभिः सकलगात्रजैः सङ्गम" इति प्रतिपादितप्रमेयबलायामपि श्रीकालिन्द्यां "न जातु यमयातना भवति ते पयःपानतः"इत्यादिप्रावाहिकफलदातृत्वप्रतिपादनमपि माहात्म्यबोधनद्वारा प्रमेयोपयोगी जीवस्याऽभिमुखीकरणार्थमानुग्रहातिशयादेवेति प्रावाहिकफललोभेन प्रवृत्तस्य तत्फलप्राप्त्या माहात्म्यबोधे जाते तेन च भगवत्सम्बन्धे सति "न वस्तुशक्तिर्बुद्धिमपेक्षत" इति न्यायेन प्रमेयेण फलं न प्रवाहेणेत्यभिमुखीकरण उपक्षीणः प्रावाहिकः प्रमाणमार्ग इति तदनुग्रहताऽपि साधीयस्येव । अनुग्रहस्य नियामकान्तराभावेन स्वतन्त्रत्वात्सर्वोपयोगानुपयोगौ तदन्वयव्यतिरेकाभ्यामिति निगर्वः ।

किञ्च । "भवेऽस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः । श्रवणस्मरणार्हाणि करिष्यन्निति केचन" "तथा परमहंसानां मुनीनाममलात्मनाम् । भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः" "आच्छिद्य कीर्तिं सुश्लोक्यां वितत्य ह्यञ्जसा नु कौ । तमोऽनया तरिष्यन्तीत्यगात्स्वं पदमीश्वर" इत्यादौ प्रावहिकानामुद्धारार्थे भगवत्प्रादुर्भाव उच्यते । मुनीनां प्रावाहिकत्वञ्च "देवानां शुद्धसत्त्वानामृषीणाञ्चाऽमलात्मनाम् । भक्तिर्मुकुन्दचरणे न प्रायेणोपजायत" इत्यत्र वृत्रप्रसङ्गे स्फुटं प्रादर्शि । स्थितञ्चैतत् "सर्वोद्धारप्रयत्नात्मा कृष्णः प्रादुर्बभूव हे" त्यत्र "यस्याऽऽसीद्रूपमेव त्रिभुवनतरणे भक्तिवच्च स्वतन्त्र"मित्याद्यश्लोके श्रीमत्सुबोधिन्यामेवमन्यत्रापि तत्र तत्र श्रीमदाचार्यचरणप्रबन्धेषु । तथा च "कलिं सभाजयन्त्यार्याः सारज्ञाः सारभागिनः । कुशलान्याशु सिध्यन्ति नेतराणि कृतानि च"इत्यादिवत्प्रवाहस्याऽपि प्रकृतोपयोगितया प्रशस्यत्वमन्यथा तु कलेर्निन्द्यावदतितरां हेयत्वमिति सत्त्वम् ।

अपि च पुष्टिमार्गो ह्यनुग्रहमार्गः । तदुत्कर्षश्च तत्साध्यफलस्य साधनान्तरसाध्यफलापेक्षयोत्कर्षसाधनमात्रेण न सिध्यति, किन्तु तदधिकारस्य सर्वदेशदिशाकालेषु सार्वजनीनत्वेन सौलभ्ये, तत्साधनानाञ्च सौलभ्यसुकरत्वनिरपायत्वादिरूपतायां, प्रज्ञापराधेन साधनवैगुण्यादावपि फलांशे व्यभिचाराद्युदय एव सिध्यति । तदैव तस्य पुष्टित्वम् । यदि परमोत्कर्षेऽपि फलस्य न स्वाधिकारस्वकृतिसाध्यता ? अलं तेनोत्कर्षेण, स्वानुपयोगात् । तेन केवलायामनुग्रहाधीनतायां तदनुग्रहाधीनसाधनसाध्यत्वसर्वाधिकारकत्वाभावे तु स्वानुपयोगप्रसङ्गात्पुष्टित्वमेव न सिध्यतीति तदनुग्रहलभ्यसाधनवत्त्वेन भगवत्प्राप्तिरूपकफलसिद्धिः परमानुग्रहमेव पुष्णाति-

न तु साधनान्तरसत्त्वेन भगवदनुग्रहे तत्फले वा न्यूनतां प्रसञ्जयतीति सुतरामनुसन्धेयमेतद्विवेकिभिः । एवं स्थिते प्रवाहिकानामपि "स्वबलेन सम्प्रापणं पुष्टि"रिति पुष्टिलक्षणाद्भगवत्प्राप्तिरूपः परमः उद्धारस्तदुद्धारे च यथातथं प्रवाहोपयोगश्च पुष्टेः कालादिबाधकत्वरूपपरमोत्कर्षेणैरवश्यादिसाधक एव, न तु पुष्टेरपकर्षं प्रयोजयतीति व्यक्तं नवरत्ने । न तावतैव पुष्टिशास्त्रं परिसमाप्तुमर्हति यदुत्तमानामेव समुद्धरणम्, किन्तु मन्दमध्यमावप्यनुगृह्य । तदनुग्रहश्च तदभीप्सितसम्पादनेन माहात्म्यबोधनद्वारा स्वाभिमुखीकृत्य केवलानुग्रहसाध्यफलस्य तेभ्यो दानम् । तथा चाहुः श्रीमदाचार्यचरणाः–"यस्य प्रसादाद्वागीशाः प्रजेशा विभवोन्नताः । क्षुद्रा अपि भवन्त्याशु श्रीकृष्णं तं नतोऽस्म्यहम्" । श्रीकृष्णेति मुख्यफलात्मकं नामेति प्रजेशत्वादिसम्पादनपूर्वकं तादृशफलदानमपि । "राज्यान्ते नरकं ध्रुव"मित्यादिना प्रजेशत्वादेः फलप्रतिबन्धकतायामपि तत्प्रतिबन्धकत्वं प्रत्युत प्रतिबध्य, साधकत्वमेवाऽद्भुतकर्मत्वात्सम्पाद्य तन्मुख्यफलप्रापणं तदीश्वरत्वादुपपन्नम् । तदिदं प्रथमस्य दशमे "वंशाङ्कुरं वंशदवाग्निनिर्हृतं संरोहयित्वा भवभावनो हरिः । निवेशयित्वा निजराज्य ईश्वरो युधिष्ठिरं प्रीतमना बभूव ह"त्यत्रेश्वरपदव्याख्याने"सगभीश्वरोऽन्यानपीश्वरान् कृत्वा सुखीभवति । अथ वा ईश्वरः समर्थः, असमर्थो हि प्रमाणमुखनिरीक्षकः सर्वं त्याजयित्वा मुक्तिं प्रयच्छति । अयं तु न तथेत्यर्थ" इत्यनया श्रीमत्सुबोधिन्यां स्फुटम् ।

युक्तं चैतत् । यदाहुः श्रीमत्प्रभुचरणाः–"दयालोरसमर्थस्य दुःखायैव दयालुते"ति । "कियान् पूर्वं जीवस्तुचितकृतिश्चापि कियती भवान् यत्सापेक्षो निजचरणदाने बत भवेत् । अतः स्वात्मानं स्वं निरुपममहत्त्वं प्रजपते समीक्ष्याऽऽत्मन्येव शिशिरय निजास्याम्बुजरसै"रिति च ।

तदेवं प्रमेयमार्गस्य प्रमाणानुरुद्धता न प्रमाणमार्गता । प्रमाणबलेन भगवत्प्राप्तिनिरूपणाभावात् । वरणश्रुत्या प्रमाणबलेन तत्प्राप्तेर्निराकृतत्वाच्च । किन्तु भगवदर्थितया तत्प्राप्तिमुख्योपायभूतस्नेहलाभसाधनेषु प्रमाणोक्तेषु ज्ञानकर्मादिषु प्रमेयबलेन प्रवृत्तिरूपा । विधेः प्रवर्तकत्वं निवर्तकत्वञ्च नास्ति, "पुण्यं कुरु" "पापं माकार्षी"रिति विधिश्रवणेनाऽधिकारिमात्रस्य पापनिवृत्तिपुण्यप्रवृत्त्योरदर्शनात्, किन्तु भगवत एव वस्तुतः प्रवर्तकत्वनिवर्तकत्वे । तथा च श्रूयते–"एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमधो निनीषत" इति । "प्रवर्तकत्वं कृष्णस्य न विध्यर्थस्य कर्हिचि"दित्यादौ निबन्धे तत्प्रकाशे तदावरणभङ्गे च विशदमेतदुपपादितम् । एवं सति यत्र मर्यादायामपि न मुख्यं प्रमाणबलम्, फलमुखप्रवृत्त्यप्रवृत्तिसामर्थ्याभावात् किन्तु प्रमेयस्य भगवतो बलेनैव फलमुखप्रवृत्त्यप्रवृत्ती भवतः, परं तत्प्रमेयबलं प्रमाणानुग्राहकमिति प्रमाणबलं प्रमाणमार्ग इति व्यवहारः । तदा यथोक्तप्रमाणप्राप्तस्वाभाविकाद्यनुपकरिविधिसाधननिषेधपूर्वकं भूतलभ्यत्वश्रुत्या तादृशप्रमाणास्पृष्टेः पुष्टिमार्गे वरणस्याऽनुग्रहजन्यत्वे तद्व्यापाररूपतायां वरणप्रकारविशेषरूपतायाञ्च भगवत्प्राप्त्युपायभूतस्नेहोदयसाधनेषु प्रवृत्तेरनुग्रहाधीनप्रवृत्तिकेषु ज्ञानकर्मादिषु प्रमाणोक्तेषु प्रमाणोक्तफलदत्वेन प्रमाणानुग्राहकं प्रमाणबलं नास्तीति किन्तु प्रमेयसाध्यफलदत्वेन प्रमेयानुग्राहकं प्रमेयबलमेव केवलमस्तीति सर्वथाऽप्यवक्तव्यमेव । प्रस्फुटत्वात् ।

एवमेव भगवदर्थितया तत्प्राप्तिमुख्योपायसाधनेऽप्यप्रवृत्तौ "पुत्रो मे जायतामि"त्यादि–प्रावाहिकफलार्थितया प्रावाहिकसाधनेषु प्रवृत्तावपि, भगवतोऽनुग्रहवशेन स्वरूपात्मकफलदित्सायां माहात्म्यबोधनद्वारा भगवदर्थित्वरूपभगवदाभिमुख्यसम्पादनेन प्रावाहिकसाधनानां प्रमेयसाध्यफलसाधकतया प्रमेयानुग्राहकेन प्रमेयबलेनैवोपयोगो, न प्रमाणबलेनेति भगवदर्थितया तल्लाभसाधनेषु प्रवृत्तिसम्पादनरूपा वा, भगवदरत्वसम्पादनरूपा वा प्रमेयमार्गे प्रमाणानुरुद्धता, न तु प्रमाणमार्गता । प्रमाणबलेन फलस्याऽसाध्यत्वादित्यवोचाम ।

प्रामाणिकत्वसम्पादनाय प्रमाणोपपन्नता चैका प्रमेयमार्गस्य प्रमाणानुरुद्धता । साऽपि प्रमेयबलरूपैवेत्युक्तं प्राक् ।

तथा च स्वतन्त्रेण साधनासाध्येन प्रमेयबलरूपेण भगवदनुग्रहेण परम्परया प्रमाणोक्तसाधनसाध्यस्वतत्त्वस्वार्थ्यगोचरत्वादिरूपा प्रमेयमार्गस्य प्रमाणानुरुद्धताऽविरुद्धैवेति सिद्धं श्रीमदाचार्यचरणैः प्रमाणानुरुद्धः प्रमेयमार्गः प्रकटीकृत इति ।

एतत्सर्वं "नाऽयमात्मा प्रवचनेन लभ्य" इत्यादिश्रुतेरेव प्रपञ्चः । प्रवचनादिसाधननिषेधपूर्वकं वृतलभ्यत्वोक्त्या, "यमेवैष वृणुते" इत्यत्र यमिति साधनेषु प्रवृत्ताप्रवृत्तसाधारण्येन वरणोक्त्या, तेन च जीवकृतसाधनप्रवृत्त्यप्रवृत्त्योरनुग्रहेऽनावश्यकत्वोक्त्या बाधकत्वानुक्त्या, प्रत्युत स्वबलेन तयोः सहकारित्वसम्पादने "अधिकं तत्रानुप्रविष्टं, न तु तद्धानिरि"ति न्यायात्साधनत्वोक्तिर्निर्गलत्वेन च सर्वमपीदं संसिध्यतीति ।

वेदोक्तत्वादिनाऽपि यदि प्रमेयमार्गस्य प्रमाणमार्गत्वापातः । तेन च "नाऽयमात्मा प्रवचनेन लभ्य" इति निषेधस्य वेदतात्पर्य्यगोचरत्वमात्रेऽपि प्रसर इति वेदोक्तत्वादिना प्रामाणिकत्वादिसाधनं पुष्टिराद्धान्तविरुद्धमिति तूपजीव्यवरणश्रुतितात्पर्य्यगोचरत्वादिना विरोधान्न वक्तुं शक्यम् ।

अनुग्रहात्सहकारित्वं प्रमाणस्य तत्तात्पर्य्यगोचरत्वांशेऽपि । अननुगृहीतस्य तथा प्रमाणतातात्पर्य्यमेव न स्फुरतीति ज्ञापनांशेऽनुष्ठेयांशे च सहकारित्वानुदयात् । "न ह्यन्यो वागधीशाच्छ्रुतिगणवचसां भावमाज्ञातुमीष्टे यस्मात्साध्वी स्वभावं प्रकटयति वधूरग्रतः पत्युरेव । तस्माच्छ्रीवल्लभाख्य त्वदुदितवचनादन्यथा रूपयन्ति भ्रान्ता ये ते निसर्गत्रिदशरिपुतया केवलान्धन्तमोगाः" इत्यत्रैतत्स्फुटन् । 'वेदपारग'इत्यत्र च ।

किञ्च, स्वानुभावप्रकटनहृदयेन साक्षाद्भगवता श्रीमदाचार्यचरणाः श्रीमद्भागवतगूढार्थप्रकाशनाय स्वयमाज्ञप्ता इति भगवतः प्रमाणानुरुद्धः प्रमेयमार्ग एव प्रचिकटयिषितः । स एव च तयाऽऽज्ञया भूमावाविर्भूय सन्मनुष्याकृतिभिरविकृतैः श्रीमदाचार्यचरणैः प्रकटित इति । "अर्थं तस्य विवेचितुं न हि विभुर्वैश्वानराद्वाक्पतेरन्यस्तत्र विधाय मानुषतनुं मां व्यासवच्छ्रीपतिः । दत्वाऽऽज्ञाञ्च कृपावलोकनपटुर्यस्मादतोऽहं मुदा गूढार्थं प्रकटीकरोमि सततं व्यासस्य विष्णोः प्रियमि"त्यादावेतत् स्थितम् । तेन साक्षाच्छ्रीकृष्णेन तदाज्ञया श्रीमदाचार्यचरणैश्च केवलया करुणयैव प्रमाणस्य सहकारित्वं सम्पादितं स्वीकृतञ्चेति प्रस्फुटमिदम् ।

"नायमात्मा प्रवचनेने" त्यादौ च प्रमाणस्य फलप्रापणे स्वातन्त्र्यमेव प्रतिषिध्यते, न तु प्रमेयबलेन प्रमाणे सहकारित्वोदयोऽपीति तत्तदुपबृंहणबलादध्यवसीयते ।

अपरञ्च, "इन्द्रियाणां प्रमाणत्वं सत्त्वयोगाच्च चाऽन्यथे"त्यत्र प्रकाशे–"सत्त्वसहिता बुद्धिः प्रमाणम् । सत्त्वप्रवृद्धावन्तःकरणं प्रमितिं जनयति । 'सत्वात्सञ्जायते ज्ञान'मिति । अन्यथा सत्त्वलये सैव सामग्री भ्रमं जनयति । अतोऽन्वयव्यतिरेकाभ्यां सत्त्वमेव प्रमाणमि"त्युक्तं श्रीमदाचार्यचरणैः ।

तथेहाऽपि भगवत्तदनुग्रहान्यतरयोगादेव प्रवचनादिप्रमाणं भगवत्स्वरूपलाभ–तत्साक्षात्साधनस्नेह–तत्साधननवविधभक्ति–तत्साधनदानादिसर्वसाधनानां प्रमितिं जनयति, न त्वन्यथाऽपि । तथा सति नानाफलतत्साधनभ्रममेव जनयति, न प्रमां यथार्थामिति नैतद्विवाद्यं वक्तव्यं बुद्धिमत्सु ।

एवं सति प्रमेयमार्गस्य या प्रमाणानुरुद्धता सा न प्रमाणानुरोधिता । प्रमेयस्य स्वातन्त्र्यात्प्रमाणमनुरोद्धुं शीलं नाऽस्तीति । किन्तु प्रमाणेन प्रवचनादिना अनु आनुकूल्येन तज्जन्यत्वे सति तज्जन्यजनकत्वरूपेण सहकारित्वादिना वा भगवत्तदनुग्रहान्यतरसम्बन्धावच्छिन्नप्रमाणताकत्वरूपेण वा अप्रमाणिकत्वपाषण्डत्वादिनिरासाय मार्गबोधनम् प्रचारसौकर्य्याय तत्तदौचित्याय च रुद्धता आवृतता अभिव्याप्यता संरक्षिततेति यावत् । सर्वत्राप्यंशे प्रमाणप्रदर्शनात् ।

एवञ्चाऽन्वयव्यतिरेकाभ्यां सत्त्वस्येव प्रमाणत्वमद्भगवत्तदनुग्रहयोरेव प्रमाणतेति प्रमाणानुरुद्धता भगवत्तदनुग्रहान्यतररुद्धतैव । सा च "यमेवैष वृणुत" इति श्रुत्या तदुपबृंहणैश्च स्पष्टा ।

तथा च उपपादितपरमावश्यकताकप्रामाणिकत्वापाषण्डित्वतत्सौकर्य्यौचित्यादिप्रयोजनाय प्रमाणोपपन्नतातात्पर्यगोचरत्वाभ्यां साक्षात् उपपादितपरमावश्यकताकसौलभ्यसौकर्य्यादिसिद्धये भगवत्प्राप्त्युद्देशेन प्रमाणोक्तसाधनानुष्ठानसाध्यतया स्वोक्तसाधनद्वारा निरङ्कुशगतिस्वमाहात्म्यादिपरमोत्कर्षसिद्धये तदनुद्देशेनापि कृतैः प्रमाणोक्तसाधनैः प्रावाहिकफलदानद्वारा ज्ञानभक्त्युदयक्रमेण स्वाभिमुखीकरणपूर्वकं स्वप्राप्तिसाधनेषु प्रवर्त्य स्वरूपात्मकफलदानेन परम्परया च प्राप्त्या प्रमाणानुरुद्धता, अनुग्रहमहामृताब्धेरपर्य्यनुयोज्यलोकलोकोत्तरलीलासंरम्भमहाविलासरूपा "यमेवैष वृणुत" इति प्रकारविशेषनियममनपेक्ष्य वरणलभ्यत्वोक्तेरेव विवरणञ्च । अनुग्रहक्रमत्वं

च विवक्षितायाः प्रमाणानुरुद्धताया उपपादितमिति श्रीमच्छुद्धपुष्टिमार्गाचार्यप्रवृत्त्यनुरूपं "वेदाः श्रीकृष्णवाक्यानी"ति प्रमाणाङ्गीकारपूर्वकं श्रीमदाचार्यचरणानां पुष्टिमार्गस्थापनम् । तच प्रमाणसम्बन्धेन नाऽन्यरूपं, किन्तु प्रमेयरूपमेव । तेन शुद्धपुष्टिमार्गाचार्यत्वं न विहन्यते, प्रत्युतोपचीयत एवेत्यभिव्यक्तम् । प्रमेयमार्गस्य प्रमाणानुरुद्धतेति तु मर्मज्ञं प्रति प्रमेयप्रकारनिर्देशस्तदितरं प्रति च "न बुद्धिभेदं जनये"दित्यादिवद्वालोपच्छन्दनम् ।

अत्रैतदवबोध्यम् । प्रमाणं मर्यादा । प्रमेयं पुष्टिः । प्रमेयस्य प्रमाणानुरुद्धता च प्रमेयमर्यादा ।

तदन्या तु प्रवाहमर्यादा । सा च "एतावान् सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया । जन्मलाभः परः पुंसामन्ते नारायणस्मृतिरि"त्यत्राऽन्यत्रापि च श्रीमत्सुबोधिन्यादौ व्युत्पादिता । इहापि प्रागुपदर्शिता व्यवस्थापिताऽपि ।

प्रमेयमर्यादा तु या सा द्वेधा धर्मद्वारा धर्मिपरा एका । साक्षाद्धर्मिपरा द्वितीया । "तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम्" "किमेकं दैवतं लोके किं वाऽप्येकं परायणम् । स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् । को धर्मः सर्वधर्माणां भवतः परमो मतः । किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात्" "माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चाऽन्यथा" "चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभे"त्यादिषु मोक्षदातृत्वादिधर्मपुरस्कारेण धर्मिपरतायाः स्पष्टमुपपादनात् । धर्मिपरता च प्रमाणमार्गस्य फलत्वेन विधेयत्वेनोद्देश्यत्वेन च भगवति सम्बन्धाभावेन विभूतिपर्य्यवसायित्वं भक्तिहंसे स्थितमिति न प्रमाणबलेन, किन्तु "यमेवैष वृणुत" इति श्रवणाद्वरणबलेनैव । तेन धर्मद्वारा धर्मिपराणां श्रीपुरहरनारदव्यासशुकादीनां भीष्मकुन्तीद्रौपद्यादीनाञ्च स्वबलेन सम्प्रापणमस्तीति पुष्टिमार्गीयत्वं स्पष्टम् । प्रमाणादिनिष्ठता च तेषामनुग्रहरूपैवेत्यवधेयम् ।

तथापि तेषां यो भगवल्लाभः स तावत्, "प्रगायतः स्ववीर्याणि तीर्थपादः प्रियश्रवाः । आहूत इव मे शीघ्रं दर्शनं याति चेतसी"त्यत्र "तीर्थानि सन्तः पादे यस्य । सर्वे हि सन्तः सायुज्यं प्राप्ता भगवत्पादे वर्तन्ते । अन्येऽपि भक्तिवशात् । तादृशो हि भक्तियुग" इत्यादिना प्रथमस्य षष्ठे श्रीमत्सुबोधिन्यां बोधितः । तथैव प्रथमस्य नवमे "त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने । वपुरलककुलावृताननाब्जे विजयसखे रतिरस्तु मेऽनवद्ये" त्यत्र "अलककुलावृताननाब्जमि" त्येतत्पदव्याख्याने "अलमत्यर्थं कं येषां ते ब्रह्मविदः । तेषां कुलं वा । त एव वार्ते" इत्यनया श्रीमत्सुबोधिन्या ब्रह्मविदामलकादिरूपेण भगवद्वपुषि सायुज्यं भगवल्लाभ इत्युक्तम् । "ब्रह्मविदाप्नोति परमि"त्यत्राऽपि सायुज्यमेव ब्रह्मविदां न्यरूपि । तच नैक्यम् । "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते" त्युत्तरश्रुत्यां व्याख्यानाच्च ब्रह्मणा सह सर्वकामभोगस्य परप्राप्तिपदार्थत्वेन विवृतत्वात् । किन्तु सह युनक्तीति सयुक् तस्य भावः सायुज्यमिति भेदसहोऽभेद एव सायुज्यम् । तदेव "तीर्थपाद" इत्यत्र "अलककुले"त्यत्र च बोधितम् । तदिदं सेवाफलविवरणटीकासु श्रीदेवकीनन्दनश्रीहरिरायादिप्रणीतासु मध्यमफलसायुज्यपदार्थविवेचने स्फुटम् । "भजनं सर्वरूपेषु फलसिद्धै तथापि तु । आदिमूर्तिः कृष्ण एव सेव्यः सायुज्यकाम्यये"त्यत्र शास्त्रार्थनिबन्धकारिकायां तत्प्रकाशतदावरणभङ्गयोश्चैतद्विशदम् । "प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम् । आरब्धकर्मनिर्वाणो न्यपतत्पाञ्चभौतिकः" "अथो विभूतिं मम मायाविनस्तामष्टाऽऽरमैश्वर्यमनुप्रवृत्तम् । श्रियं भागवतीं वा स्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते तु लोके" इत्यादौ यः सेवोपयोगी देहो निरूपितः, स वा तेषां भगवल्लाभः ।

तेन श्रीपुरहरनारदव्यासशुकादीनां धर्मद्वारा धर्मिपराणां पुष्टिमार्गीयत्वेऽपि प्रमाणादिनिष्ठत्वस्य तेषामनुग्रहरूपत्वेऽपि मोक्षदातृत्वादिधर्मपुरस्कारेणैव ते धर्मिपराः, न तु साक्षादिति मोक्षादावेव मुख्यस्तेषां फलसम्प्रत्ययः, न तु साक्षात्स्वरूपे । तथापि धर्मिपरा इति स्नेहोदयोऽप्यस्ति तेषाम् । "आत्मा वा अरे द्रष्टव्य" इति धर्मिणो निरुपधिप्रियत्वश्रुत्या तत्साभाव्यात्स्नेहोदयावश्यम्भावात् । तथा सति मोक्षेच्छानिवृत्त्या स्वरूपैकफलाभिलाषोदयोऽपि भवति तेषाम् । एवमपि मोक्ष एव तेषां फलम् । "अनिच्छतो यतिमन्वी प्रयुङ्क्त"

इति वाक्यात्। स च साधनावस्थायां धर्मद्वारा धर्मिपरतया मध्ये च स्नेहोदयात्तद्बलेन नाऽन्यरूपः, किन्तु भगवत्स्वरूपानन्दतुन्दिलः सायुज्यरूपः, वैकुण्ठादिषु सेवोपयोगिदेहलाभरूपो वा, न तु मुख्यः स्वरूपानन्दानुभवस्तेषाम् "अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम्। हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरमि"त्यादिभिर्मधुराष्टकनिर्वर्णितस्वरूपः। स तु मुख्यभजनाधिकारिणां शुद्धपुष्टिमार्गीयाणामेव, नान्येषामिति परस्तात्प्रतिपादयिष्यते । एवं च तेषां मुख्यं फलं नास्ति, किन्तु मध्यममन्तिमञ्च साधारणं सेवाफलोक्तम्। ततश्च तेष्वनुग्रहोऽपि न मुख्यः, किन्तु फलानुरूपो मध्यमः साधारणश्चाऽपि । फलतारतम्यतुलिततारतम्य इति यावत्। फलतारतम्यं तु पुष्टिमर्यादाप्रवाहभेदैस्त्रिधाऽङ्गीकारेण पुष्टेस्त्रैविध्यात्। पुष्टावङ्गीकारः पुष्टिपुष्टिः। सैव च वक्ष्यमाणया साक्षाद्धर्मिपरया मर्यादया लब्धा शुद्धपुष्टिः केवलपुष्टिरित्युच्यते। मर्यादायां या पुष्टिस्तस्याः साधनमिश्रत्वात्। तत्फलरूपा तु मर्यादांशत्यागपूर्विकेति तस्याः शुद्धत्वात्। तत्र तावन्मुख्यं फलम्। मर्यादायामङ्गीकारो मर्यादापुष्टिः पुष्टिमर्यादा वा । सैव प्रमेयमर्यादा । तत्र धर्मद्वारा धर्मिपरायां तस्यां मध्यमं सायुज्यं फलम् । प्रमेयमर्यादा चेयमुक्तरीत्या केवलानुग्रहरूपाऽपि धर्मद्वारा धर्मिपरत्वेन धर्मोन्मुखी, न धर्म्युन्मुखी। तथा च यथैतस्याः साधनतो मर्यादापर्य्यवसानमेवं धर्मप्राधान्येन पर्य्यवसन्नतया, मध्यमतया, प्रमाणोक्तसाधनसाध्यतया च तत्फलस्य फलतोऽपि मर्यादापर्य्यवसन्नत्वम् । शुद्धपुष्टिप्रविष्टभोग्यफलापेक्षया तत्फलस्यैकान्ततोऽल्पत्वतया च मर्यादापन्नत्वम्। ततश्च शुद्धपुष्टिमार्गीयाणां तदनपेक्षा, तत्र पुष्टित्वास्फूर्तिश्च। तथा सति "प्राधान्येन व्यपदेशा भवन्ती"ति न्यायेन प्रमेयमर्यादेयं सिद्धान्तगत्या पुष्टिरूपाऽपि पुष्टिप्राधान्याभावेन मर्यादांशस्यैव च स्फुरद्रूपतया, मर्यादाशब्देनैव केवलेन तत्र तत्र शुद्धपुष्टिपक्षपातस्थलेषु मार्मिकैर्व्यपदिश्यते। सिद्धान्तपरिचयकाले तु मर्यादापुष्ट्यादिशब्देनाऽपीति ज्ञेयमेतत्। प्रवाहेऽङ्गीकारः प्रवाहपुष्टिः, तत्र च तृतीयं साधारणं फलमित्यन्यत्र विस्तरः। तस्माद्धर्मद्वारा धर्मिपरा मर्यादा यद्यपि पुष्टिमयी, तथापि सा पुष्टिमर्यादाङ्गीकारहेतुभूताऽन्यशेषतयोपक्षीणा। तत्र तस्याः पुष्टिपदव्यपदेश्यतां प्रयोजयितुं सामर्थ्यं नास्तीति मर्यादाशब्देनैव तद्व्यपदेशः। तदेवं प्रावाहिक्यामिव प्रामेयिक्यामपि धर्मद्वारा धर्मिपरायां मर्यादायां शुद्धपुष्टिमार्गीयाणां न पक्षपात इति स्थितम्।

यद्यपि शुद्धपुष्टिस्थानामाराद्उपकारकत्वमस्यां न भवतीति मा स्म भवदत्र तत्पक्षपातः, विप्रकृष्टाऽपि साधनता त्वस्यास्तथापि तैर्व्यवस्थाप्यते इति तु पश्यत पश्यताऽनर्पं पीनानुग्रहं तत्रभवताम्। यदाहुः सिद्धान्तवाङ्मुक्ताफलावल्यां श्रीमदाचार्यचरणाः—"उभयोस्तु क्रमेणैव पूर्वोक्तैव फलिष्यति"। क्रमस्वरूपं व्याचक्षुः श्रीमत्प्रभुचरणाः मर्यादास्थावपि ज्ञानिभक्तौ चेत्तदनुगृह्णाति विशेषतस्तदा आदौ पुष्टिमार्गं प्राप्य तन्मार्गीयां भक्तिं प्राप्नुत इत्याहुः—उभयोरिति। यदि "मर्यादायामेवाऽङ्गीकारस्तदोभयोर्मुक्तिरेव फलिष्यतीत्याशय" इति। अयमेव क्रमपदाशय इत्यत्र मार्गभेदेनाऽङ्गीकारान्यथानुपपत्तिं प्रमाणयन्तः पुष्टिमार्गप्राप्तिपदार्थोऽपि क्रमघटित इति तत्क्रमस्वरूपं विवव्रुः श्रीगोकुलाधीशाः—उभयोरित्यस्याऽऽभास उक्तो मर्यादास्थावपीति । अयमाशयः। यदि मर्यादापुष्टिमार्गीययोरप्येकमेव फलं स्यात्, तदा मार्गभेदेनाऽङ्गीकारोऽनुपपन्नः स्यात्। मूले च साधारण्येनोभयोरपि फलैक्यप्रतिपादनाद्भवति सन्देहः। तस्मादुक्तम्—यद्युभावपि अनुगृह्णाति तदोभयोरपि मर्यादांशं त्याजयित्वा केवलपुष्टिमार्गे प्रवेशं कारयित्वा पूर्वोक्तं सेवारूपं फलं प्रयच्छति। तथा नाङ्गीकरोतीति चेत्तदोभयोरपि मुक्तिमेव ददातीति। एतदेवोक्तम्—यद्यपीति। केवलपुष्टिमार्गः फलदशापन्नः पुष्टिमार्गः। तत्प्राप्तिर्मर्यादात्यागपूर्विकेत्युक्तम्—मर्यादांशं त्याजयित्वेति। एतेनानुपदं विवक्षितस्वरूपे साधनदशापन्ने पुष्टिमार्गे प्रवेश उक्तः । मर्यादांशत्यागस्य साधनदशापन्नपुष्टिमार्गप्रवेशस्य च प्रवेशनिर्गमनयोरिवैक्यात्। तथा च धर्मद्वारा धर्मिपरां मर्यादां त्याजयित्वा साक्षाद्धर्मिपरमर्यादारूपं साधनावस्थापन्नं पुष्टिमार्गं प्रापयित्वा तत्फलरूपं शुद्धपुष्टिमार्गञ्च प्रापयित्वा तत्फलं प्रयच्छतीति तदर्थः सम्पद्यते। क्रमपदस्वारस्यात्। अन्यथा क्रमेणैवेति सावधारणपदस्वारस्यं हीयेत। अनुग्रहबलविचारे तस्य क्रमानपेक्षत्वेऽपि "चेदनुगृह्णाति विशेषतस्तदा तन्मार्गीयां भक्तिं प्राप्नुत" इति "यद्यनुगृह्णाति तदा पूर्वोक्तं सेवारूपं फलं प्रयच्छती"ति चाऽनुक्त्वा योऽयं गुरुतर उल्लेखः सोऽपि क्रमपदस्वारस्यैकप्रयोजन एवेति "तदा आदौ पुष्टिमार्गं प्राप्ये"त्यादि "तदोभयोरपि मर्यादांशं त्याजयित्वे" त्यादि च कथनं यत्तद्

साक्षाद्धर्मिपरया मर्यादया शुद्धपुष्टयुदयाभिप्रायेणेति ज्ञेयम् "ब्रह्मविदाप्नोति परमि"त्यादिवचनप्रपञ्चोऽत्र प्रमाणम्। आकरेषु तद्विस्तरो द्रष्टव्यः। यद्यपीह "मदनुग्रहाति विशेषत" इत्युक्त्या तदनुग्रहस्य वैफल्यं नास्तीति दौर्लभ्यञ्च सूचितम्, तथापि "स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसौहृदाः। भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवानि"ति वचनेन सत्स्वनुग्रहस्तस्य नियतः, तत्सङ्गेन मर्यादास्थस्य पुष्टिलाभः सूपपन्नः। तत एव "सत्सङ्गलब्धया भक्त्या मयि मां स उपासिता। स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम्" "यथाऽवरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम्" "सत्सङ्गेन हि दैतेयाः" "सत्सङ्गान्मामुपागता" इत्यादीनि वचनानि। तत एव च "कृष्णाश्रयमिदं स्तोत्रं यः पठेत्कृष्णसन्निधौ। तस्याऽऽश्रयो भवेत्कृष्ण इति श्रीवल्लभोऽब्रवीत्" "तवाऽष्टकमिदं मुदा पठति सूरसूते सदा समस्तदुरितक्षयो भवति वै मुकुन्दे रतिः। तया सकलसिद्धयो मुररिपुश्च संतुष्यति स्वभावविजयो भवेद्वदति वल्लभः श्रीहरेरि"त्यादीनि श्रीमदाचार्यचरणवचांसि। एवमभिप्रायकमेव "उभयोस्तु क्रमेणैव पूर्वोक्तैव फलिष्यती"ति सिद्धान्तकारेण श्रीमदाचार्यचरणवचनामृतमखिलं प्रसक्तानुप्रसक्तेनेति दिक्। तेन सत्प्रवर्तिते शुद्धपुष्टिमार्गे शिष्टाचारानुच्छेद उक्तः।

साक्षाद्धर्मिपरा मर्यादा तु ततः सुतरामतिविलक्षणा। शुद्धपुष्टितत्फलयोरव्यभिचारेण च तयोश्च साक्षादेव च प्रापकत्वात्। सा चैकादशस्यैकोनविंशे "भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ। पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम्। श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम्। परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम। आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम्। मद्भक्तपूजाऽभ्यधिका सर्वभूतेषु मन्मतिः। मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम्। मय्यर्पणञ्च मनसः सर्वकामविवर्जनम्। मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च। इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः। एवं धर्मैर्मनुष्याणामुद्धवाऽऽत्मनिवेदिनाम्। मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते" इत्यनेन साक्षाद्भगवता निरूपिता। तत्रोपक्रमे "ज्ञानं विशुद्धं विपुलं यथैतद्वैराग्यविज्ञानयुतं पुराणम्। आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगं च महद्विमृग्यमि"ति श्रीमदुद्धवैः पृष्टम्। तदुत्तरे "भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ। पुनश्च कथयिष्यामि मद्भक्तेः कारणं परमि"त्यादि श्रीयदुवंशोदयाचलचूडामणिनोक्तम्। महद्भिः श्रीपुरहरनारदव्यासशुकादिभिर्विमृग्यः। तैस्तदलाभात्। एवंभूतो भक्तियोगः पुष्टिपुष्टिमार्गीयः शुद्धपुष्टपरपर्यायस्तैः पृष्टः, श्रीभगवता च "भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ" इत्यधिकारविशेषापेक्षनिरूपणतयाऽतिदुर्लभोऽतिगोप्यश्च सर्वोत्तमश्च भक्तियोगः "पुरैवोक्त" इति प्रागेव स्वेन तत्कथनं स्मारयता श्रीमद्व्रजरत्नेष्वेव माहितः। तथोदाहरिष्यते। श्रीमद्व्रजरत्नानां भक्तियोगोऽनघः, श्रीपुरहरनारदादीनां न तथेति तु "धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः। यान् ब्रह्मेशौ रमा देवी दधुर्मूर्ध्न्यघनुत्तये" इत्यादिवचनैः स्पष्टम्। विद्वन्मण्डननिबन्धलीलावादादिषु च विशिष्य निरूपितमिति विशेषोदन्या ततः शमयितव्या। किञ्च, तस्य तदेकलभ्यतया महद्भिः श्रीपुरहरनारदादिभिरपि तदप्राप्त्या चाऽन्येषां तदर्थिनां सुतरां तदनुपयोगः। तथा सति पुरा तत्कथनं कोपयोगाय। तादृशो यथा भवेत्तद्वक्तव्यम्। स्थूणानिखननन्यायेन महद्विमृग्यत्वनिश्चयेच्छया च प्रश्नः। अन्यथा पुरा तत्कथनस्य "अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन। सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखे"ति वचनेन श्रीभगवता परमानुग्रहपूर्वकत्वबोधनात्तत एव महद्विमृग्यत्वसूचनाच्च मुख्याधिकारित्वाद्विस्मरणासम्भवेन तत्प्रश्नो नोपपद्यते। तत्र महद्विमृग्यत्वं श्रीमद्व्रजसीमन्तिनीनां भक्तियोगस्य तत्कथनोपक्रमे "अथैतत्परमं गुह्यमि"ति वचनेन "रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः। विगाढभावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाये"त्यादिभिर्वक्ष्यमाणैः पूर्वोक्तभक्तियोगवचनैर्विस्फुरत्तममपि, तत्प्रश्नानुसारेण मन्दानामसम्भावनाविपरीतभावनाद्यनुदयाय, स्थूणानिखननरीत्या "भक्तियोगः पुरैवोक्त" इत्यर्धेन पुनर्निश्चायितम्। तत्प्राप्तिसाधनेच्छाप्रश्नश्च इदानीं पूरयितव्यः। अन्यथा तत्कथनमकथनसदृशं स्यात्। "त्वं मे भृत्यः सुहृत्सखे"ति तदुपक्रमे प्रदर्शितायाः करुणाया विप्रलिप्सात्वञ्च भवेत्। तस्मात्तया करुणया महद्विमृग्यभक्तियोगकथनम्, तयैव मुख्यस्वरूपानन्दफलिकया करुणया तत्साधनकथनम्। श्रीभगवानुवाच "पुनश्च कथयिष्यामि मद्भक्तेः कारणं परमि"ति। एवञ्च महद्विमृग्यतया यथा प्रतिपित्सितस्य भक्तियोगस्य परमदुर्लभत्वम्। अनुग्रहैक-

लभ्यत्वात् । तथा तत्करणस्य परमानुग्रहेणैवोच्यमानत्वात्परमत्वमपि । तच्च शीघ्रमव्यभिचारेण जनकत्वम् । तथा च तद्दौर्लभ्यवद्विवक्षितसाधनानुष्ठानेन तत्सौलभ्यमपि परममेवेति तथा प्रवृत्तस्य न काचिच्चिन्तेति । तत एव "चिन्ता कापि न कार्या निवेदितात्मभिः कदापीति । भगवानपि पुष्टिस्थो न करिष्यति लौकिकीं च गतिमि"ति निष्कृष्योक्तं श्रीमदाचार्य्यचरणैः । व्याख्यातञ्च तथा श्रीमत्प्रभुचरणैः । एतेन तत्साधनानामपि महद्विमृग्यत्वं व्याख्यातम् । अन्यथा तत्सौलभ्ये तत्प्रश्नोत्तरयोरनवसरपराहतत्वात् । ततश्च "आख्याहि विश्वेश्वर विश्वमूर्ते त्वद्भक्तियोगञ्च महद्विमृग्यमि"ति प्रश्नस्य विशेषणांशनिधिक्षीर्षितसाधनज्ञानेच्छाप्रयुक्तत्वेऽपि तत्साधनानामपि महद्विमृग्यभक्तियोगत्वेनैव प्रश्नः । तथैव चोत्तरमाह "पुनश्च कथयिष्यामी"त्यादिना । अन्यथा पुरोक्तस्य फलत्वाविशेषितस्य साधनरूपत्वात्फलरूपस्य भावरूपतयाऽऽन्तरत्वात्साधनरूपस्य बाह्यत्वात्तस्योक्तत्वादस्य च वक्ष्यमाणत्वात्पुनः कथनं न प्राप्नोति । तस्मात्पुनः कथनोचित्यत्वान्महद्विमृग्यभक्तियोगत्वेनैव परमकारणकथनप्रतिज्ञेति द्रष्टव्यम् ।

तदेवमेककरणैककारणकत्वात्साक्षाद्धर्मिपर्य्यवसन्नतया फलैक्यात्समाख्यैक्याच्च साक्षाद्धर्मिपरा मर्यादा प्रथमकक्षाविश्रान्ता मुख्या पुष्टिरेव, न तु धर्मद्वारा धर्मिपरायामिवाऽन्यशेषतयोपक्षीणेह पुष्टिरिति । किन्तु पुष्टिपुष्टाविव मुख्येति । ततश्च "मुख्ये सम्प्रत्यय" न्यायेन कारणफलयोरन्तरीयस्थिततया "तन्मध्यपतित" न्यायेन च पुष्टिशब्देनैव व्यवजह्रुरेनां श्रीमदाचार्य्यचरणाः । तद्यथा सिद्धान्तमुक्तावल्यां "ज्ञानाभावे पुष्टिमार्गी तिष्ठेत्पूजोत्सवादिषु । मर्यादास्थस्तु गङ्गायां श्रीभागवततत्परः । अनुग्रहः पुष्टिमार्गे नियामक इति स्थितिरि"ति । तथैव च व्यवजह्रुरेतद्विवृण्वन्तः श्रीमत्प्रभुचरणाः "स्वस्वरूपज्ञानप्रभुस्वरूपज्ञानाभाववान् भक्तोऽपि मर्यादापुष्टिभेदेन द्विविधः । उभयोश्चित्तचाञ्चल्याभावायाऽऽहुः–ज्ञानाभाव इति । पुष्टिमार्गीये विशेषमाहुः अनुग्रह इती"ति । तथापि पुष्टिशब्देनेह फलदशापन्नशुद्धपुष्टिभ्रमो मा भूदिति तट्टिप्पण्यामाहुः– श्रीगोकुलाधीशाः "पुष्टिभेदेनेति । अत्रापि मर्यादापुष्टिरेवेत्यर्थः । केवलपुष्टस्य भगवत्स्वरूपाज्ञानाभावेन चित्तचाञ्चल्याभावादित्यर्थः । पुष्टिमार्गीय इति । केवलमर्यादामार्गीयत्वाद्विशेष इत्यर्थ" इति । तेन फलदशापन्नभक्तियोग एव मुख्यं पुष्टित्वं, न साधनावस्थापन्न इत्यातिष्ठानाः पुष्टिपदव्यपदेश्यत्वमस्य नेच्छन्ति ये, ते श्रीमदाचार्य्यचरणसिद्धान्तलक्ष्यात्सुदूरं परिभ्रष्टाः स्वार्थान्धाः पाषण्डिजनसम्प्रतारिता भ्रान्ता वा विरक्षन्तीत्यनुसंहितमिदं सच्चिन्तामणिशेखरितचरणनलिनयुगलरेणुकणलाभपवित्रितभूवलयैः श्रीमदाचार्यचरणपरिचरणप्रवणैः । आस्ताम् ।

येयं साक्षाद्धर्मिपरा मर्यादा एककरणैककारणकत्वादिना पुष्टिपदेन युक्तं व्यपदिश्यते, तथापि केवलपुष्टेः केवलाया मर्यादायाश्च व्यावर्त्यमाना मर्यादापुष्टिरित्युच्यते । सैव मर्यादाभक्तिरित्यपि विवेकेप्सुभिरभिलप्यते । तथा च भक्तिहंसः "प्रेमात्मकभक्तिसाधनत्वेन क्रियमाणः श्रवणादिर्भक्तिमार्गे मर्यादाभक्तिरित्युच्यत" इति । "परतः पुरुषार्थत्वेन साधनकरणादस्य मर्यादाभक्तित्वमि"ति तद्विवेके श्रीपुरुषोत्तमाः । यद्यपि स्नेहाभावे तदुदयमाकाङ्क्षतां स्नेहवदुपदेशानुसारेणैव श्रवणादिः । तदनुसारित्वबोधनायैव "भक्तिमार्गे मर्यादाभक्तिरित्युच्यत" इति श्रीमत्प्रभुचरणोक्तिः । स्नेहवदुपदेशश्च स्वतन्त्रपुरुषार्थत्वेन साधनानुष्ठानबोधकः, न तु मोक्षादिशेषत्वेन तद्बोधकः । यदाहुः–"एकान्तलाभं वचसो नु पुंसां सुश्लोकमौलेर्गुणवादमाहुः । श्रुतेश्च विद्वद्भिरुपाकृतायां कथासुधायामुपसम्प्रयोगमि"त्यादि । तत एव स्नेहोदयस्ततः फलिष्यति । तत एव च स्नेहोदयक्रमेण तदनुष्ठानं स्वतन्त्रपुरुषार्थत्वेन पर्य्यवसन्नत्, ततः फलिष्यति । तत्क्रतुन्यायात् । "एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् । यत्सत्यमनृतेनेह मर्त्येनाप्नोति माऽमृतमि"ति ब्रह्मवादसमाप्तौ भगवद्वाक्याच्च । तथापि स्नेहवदुपदेशानुसारेण स्वतन्त्रपुरुषार्थतया साधनानुष्ठानं यत् तत् स्नेहोदयोपयोग्येव । तदानीं स्वतन्त्रपुरुषार्थत्वेन श्रवणादेः सम्भावनाऽपि का । एवञ्च परतः पुरुषार्थत्वमपि तत्र लब्धव्यवस्थानमिति न कश्चित्सन्देहावसरः ।

"यमेवैष वृणुते तेन लभ्य" इति श्रुत्युक्तस्य भगवल्लाभस्य "भक्त्याऽहमेकया ग्राह्यः" इति श्रीमद्भागवत-

वचनेन, स्नेहद्वारैव जातस्य प्रमितिरूपत्वबोधनात्स्नेहस्य परमावश्यकतायां, तद्धेतुतयाऽनुष्ठीयमानायामपि, साक्षाद्धर्मिपरात्वं निर्बाधम्। स्नेहवदुपदेशानुसारितया स्नेहवत्स्नेहेन–दध्नः सर्पिषेव तन्मयत्वाच्च तस्याः साक्षाद्धर्मिपरात्वं विभासमानमस्ति। तत एव "श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनमि"त्यादिषु साधनदशापन्नशुद्धपुष्टिरूपमहद्धिमृग्यभक्तियोगबोधकेषु भगवद्वचनेषु केवलधर्मिपरत्वबोधकोऽस्मत्सदाभ्यासः। उपसंहारे च "एवं धर्मैर्मनुष्याणामुद्धवाऽऽत्मनिवेदिनाम्। मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्याऽवशिष्यत" इति भगवत्यात्मनिवेदनपूर्वकमेव कथाश्रद्धादीनामनुष्ठानकथनमिति साक्षाद्धर्मिपरत्वमपाणिपिहितम्। एतमेन हि साक्षाद्धर्मिपरात्वे शुद्धपुष्टित्वतः फलति, नाऽन्यथेत्यपि अस्मत्सदाभ्यासादिनैव आत्मनिवेदनपूर्वकत्वोक्त्या च सिद्धम्। "एषा बुद्धिमतां बुद्धिरि"त्यादिना ब्रह्मवादसमाप्तावुक्तेन भगवद्वाक्येन कथञ्चिदिच्छया मन्त्रग्रहणेन सम्प्रदाये जातप्रवृत्तेरपि तत्स्वरूपाद्यनभिज्ञस्य विप्रकृष्टाधिकारिणोऽपि भगवल्लाभनिश्चयं प्रति सम्पूर्णरीत्या, समाश्वासनं स्थितमिति, साक्षाद्धर्मिपरात्वे किमधिकं, वक्तव्यमवशिष्यते।

किञ्च, एकादशस्योनत्रिंशे उद्धव उवाच–"सुदुस्तरामिमां मन्ये योगचर्यामनात्मनः। यथाऽञ्जसा पुमान् सिद्ध्येत्तन्मे ब्रूह्यञ्जसाऽच्युते"त्यादि। एवं प्रश्ने–श्रीभगवानुवाच–"हन्त ते कथयिष्यामि मम धर्मान् सुमङ्गलान्। यान् श्रद्धयाऽऽचरन्मर्त्यो मृत्युं जयति दुर्जयम्। कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन्। मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिः। देशान् पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान्। देवासुरमनुष्येषु मद्भक्ताचरितानि चे" त्यादिना साक्षाद्धर्मिपरां मर्यादाम्। एकादशस्यैकादशेऽपि "श्रद्धालुर्मे कथाः शृण्वन् सुभद्रा लोकपावनीः। गायन्ननुस्मरन् कर्म जन्म चाऽभिनयन् मुहुः। मदर्थे धर्मकामार्थानाचरन्मदपाश्रयः। लभते निश्चलां भक्तिं मय्युद्धव सनातने" इति सा निरूपिता। अन्यान्यप्येवञ्जातीयकानि "भक्त्या त्वनन्यया शक्यः" "भक्त्याऽहमेकया ग्राह्य" इत्येकयोक्त्या साध्यसाधनरूपभक्तिद्वये भगवल्लाभहेतुत्वबोधकानि वचनानि, "भक्त्या सञ्जातया भक्त्ये"त्यादीनि, "मन्मना भव मद्भक्त" इत्यादीनि च वचनानि तदभिरूपकाण्यनुसन्धेयानि।

साक्षाद्धर्मिपरतयैव "मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये। मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ। लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतमि"त्युक्तलक्षणकत्वे निर्गुणभक्तिमार्गं एवेयं साक्षाद्धर्मिपरा मर्यादा। एवं सति साधनरूपत्वेऽपि मुख्यफलरूपत्वाभावेऽपि शुद्धिपुष्टिरूपैवेयम्। विशेषजिज्ञासायां सावरणभङ्गप्रज्ञानिबन्धसर्वनिर्णये भक्तिमार्गोपपादनं द्रष्टव्यम्। एतावता लोकवेदातीतत्वमप्यस्याः स्थितम्।

एतस्याः शुद्धपुष्टितत्फलप्रापिकाया मर्यादाया पुष्टिपाषण्डेन वा, मर्यादात्वभ्रान्त्या वा त्यागस्तु सर्वथा पुष्टेर्भ्रंशकर एवेति ज्ञेयम्। तस्त्यागस्तु कियानिदानीं जातः। तेन च कियान् पुष्टेर्भ्रंशोऽपि जीवानामिति तु केवलं श्रीमदाचार्यचरणैः, श्रीमत्प्रभुचरणैरेव च बोधयितव्यं जनस्य। हा धिक्। कथाः कथयताऽपराः।

पुष्टिपुष्टिस्तु–"यमेवैष वृणुते तेन लभ्य" इति प्रकारविशेषनियममनपेक्ष्य वरणलभ्यत्वश्रुत्या तत्तत्प्रकारकवरणवत् सर्वसाधनराहित्यप्रकारकवरणेनाऽऽत्मानो यत् तत् तदर्थितया स्वसाधनेष्वप्रवर्त्यं भावदानम्। तथा चोपबृंहणानि–"न साधयति मां योगो न सांख्यं धर्म उद्धव। न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिता" "नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा। भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप" "अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज। साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः" "नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना। श्रियं चाऽऽत्यन्तिकीं ब्रह्मन् येषां गतिरहं परा। ये दारागारपुत्राप्तप्राणान् वित्तमिमं परम्। हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे। मयि निर्बद्धहृदयाः साधवः समदर्शिनः। वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा" "नालं द्विजत्वं देवत्वमृषित्वं नाऽसुरात्मजाः। प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता। न दानं न तपो नेज्या न शौचं न व्रतानि च। प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम्" "भक्त्याऽहमेकया ग्राह्यः" "भक्त्या तुतोष भगवान् गजयूथपाये"त्यादीनि। "ते नाऽधीतश्रुतिगणा नोपासितमहत्तमाः। अव्रतातप्ततपसः सत्सङ्गान्मामुपागता" इत्यादीनि च। भक्तेरूर्जितत्वं योगादिनैरपेक्ष्योक्त्या व्यक्तमपि "अहं भक्तपराधीन" इत्यादिना सत्स्त्रियः सत्पतिं यथेत्यन्तेन फलतोऽप्यव्यभिचारितया पुनर्द्रढितम्। एतेन तदर्थितया

तत्साधनेष्वप्रवर्त्यं भावदानं यदुक्तं तदेवंविधमूर्जस्वलं विवक्षितमित्युक्तम् । अयमेव तावत्फलरूपो महद्भिर्मृग्यो भक्तियोगोऽपि । तथाहि । एकादशस्यैकादशोपसंहारे "इष्टापूर्तेन मामेवं यो यजेत समाहितः । लभते मयि सद्भक्तिं मत्स्मृतिः साधुसेवया । प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव । नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामिह" इत्युक्त्वा "अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन । सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखे"ति भिन्नप्रक्रमेण परमगुह्यकथनं प्रतिज्ञाय द्वादशे श्रीभगवानुवाच–"न रोधयति मां योगो न साङ्ख्यं धर्म एव च । न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा । व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः । यथाऽवरुन्धे सत्सङ्गः सर्वसङ्गापहो हि माम् । सत्सङ्गेन हि दैतेया यातुधाना खगा मृगाः । गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः । विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः । रजस्तमःप्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ । बहवो मत्पदं प्राप्तास्त्वाष्ट्रकायाधवादयः । वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः । सुग्रीवो हनुमानृक्षो गजो गृध्रो वणिक्पथः । व्याधः कुब्जा व्रजे गोप्यो यज्ञपत्न्यस्तथा परे । ते नाऽधीतश्रुतिगणा नोपासितमहत्तमाः । अव्रतातप्ततपसः सत्सङ्गान्मामुपागताः । केवलेन हि भावेन गोप्यो गावो नगा मृगाः । येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा । यं न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः । व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि । रामेण सार्धं मधुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः । विगाढभावेन न मे वियोगतीव्राऽऽधयोऽन्यं ददृशुः सुखाय । तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण । क्षणार्धवत्ताः पुनरङ्ग तासां हीना मया कल्पसमा बभूवुः । ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् । यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे । मत्कामा रमणं जारं मत्स्वरूपाविदोऽबलाः । ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः । तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् । प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च । मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयमि"ति । महद्भिर्मृग्यत्वमत्र स्पष्टम् । प्राङ्निश्चायितव । पुष्टपुष्टानां फलत्व धर्मद्वारा धर्मिपरतया मर्यादातोऽतिविलक्षणम् । तन्निरूपितं "यन्न योगेन साङ्ख्येने"त्यादिना वचनेन । तच्चालौकिकसामर्थ्यरूपम् । "विवृणुते तनूं स्वामि"त्यत्र स्वरूपविवरणस्य ब्रह्मपदार्थतानिर्णयात्स्वरूपस्य च "रसो वै स" इत्यादिभिः शुद्धपूर्णरसात्मकत्वात्तस्य पूर्णतयाऽनुभवः साम्यं विना न भवति, रसाभासतापत्तेरिति तत्तादृशरसप्रचुरप्रभुस्वरूपसर्वस्वानुभवोपयोगि यत्सामर्थ्यं तदलौकिकम् । तदिदम् "अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूननुविवेशयतोर्वयस्यैः । वक्त्रं व्रजेशसुतयोरनुवेणुजुष्टं यैर्वा निपीतमनुरक्तकटाक्षमोक्षमि"त्यत्र श्रीमत्सुबोधिन्यां "भगवता सह संलापो दर्शनं मिलितस्य च । आश्लेषः सेवनं चापि स्पर्शश्चाऽपि तथाविधः । अधरामृतपानञ्च भोगो रोमोद्गमस्तथा । तत्कूजितानां श्रवणमाघ्राणं चाऽपि सर्वतः । तदन्तिकगतिर्नित्यमेवं तद्भावनं सदा । इदमेवेन्द्रियवतां फलं मोक्षोऽपि नाऽन्यथे"त्येताभिः कारिकाभिरभिदर्शितम् । फलप्रकरणादिषु च "साक्षान्मन्मथमन्मथः" "आत्तगजेन्द्रलीलः" "इभराडिव भिन्नसेतुरि"त्यादिना । "तरङ्गोत्क्षिप्तसमीक्षेषु पद्माभावीरसाब्धिषु । पुनरुत्थानरहितं नित्यं विन्दौ निमज्जनमि"ति "भावैरङ्कुरितं महीमृगदृशामालम्बमासिञ्चितैः प्रेम्णा कन्दलितं मनोरथमयैः शाखाशतैः सम्भृतम् । सौख्यैः पल्लवितं मुदा कुसुमितं प्रत्याशया पुष्पितं लीलाभिः फलितं भजे व्रजवनीशृङ्गारकल्पद्रुममि"ति श्रीमत्प्रभुचरणपद्माभ्यां शृङ्गाररसमण्डनादिभिर्विद्वन्मण्डनादिभिश्चाऽन्यतश्च तेभ्यस्तेभ्यः पुष्टिमार्गीयेभ्यो ग्रन्थेभ्यो विशदम् । तुरीयस्य तुरीये "प्रदीपवदावेशस्तथा हि दर्शयती"त्यधिकरणे च सप्रपञ्चमिदं प्रत्यपादि । तथाहि तद्भाष्यम्–"ननु पूर्णज्ञानक्रियाशक्तिमता ब्रह्मणा तुल्यभावेन तत्रापि प्रधानभावं प्राप्य कामभोगकरणमपूर्णज्ञानक्रियावतो भक्तस्याऽनुपपन्नमित्याशङ्कायां तत्रोपपत्तिमाह–न हि तदा नैसर्गिकज्ञानक्रियाभ्यां तथा भोक्तुं शक्तो भवति, किन्तु भगवाँस्तस्मिन्नाविशति यदा तदाऽयमपि तथैव भवतीति सर्वमुपपद्यते । एतदेवाऽऽह–'प्रदीपव'दिति । यथा प्राचीनः प्रकृष्टो दीपः स्नेहयुक्तायां वर्त्यामर्वाचीनायामाविष्टः स्वसमानकार्यक्षमां तां करोति, स्नेहाधीनस्थितिश्च भवति स्वयम्, तथाऽत्राऽपीत्यर्थः । अत्र प्रमाणमाह–'तथाहि दर्शयति' । श्रुतिः–"भर्ता सन् भ्रियमाणो बिभर्ति । एको देवो बहुधा निविष्ट" इति । सर्वान् कामानित्युक्तत्वाद् यस्य कामस्य भोगो यथा निवेशो सति तत्तथा तदा

निवेश इति यद्बुधा निवेश उक्तः । अयं निवेशो नाऽन्तर्यामित्वेन । तस्यैकधैव प्रवेशात् । निसर्गतः सर्वेषां जीवानां भगवान् भवत्येव प्रभुर्यद्यपि, तथापि यं स्वीयत्वेन वृणुते, तस्य विवाहितः पतिरिव भर्ता सन् वरणजस्नेहातिशयेन भक्तेनाऽपि ध्रियमाणः सन् स भक्त इव स्वयमपि तं स्वस्मिन् बिभर्ति । अत एव स्नेहराहित्येनाऽयोगोलकादिकं विहाय दीपं दृष्टान्तमुक्तवान् व्यासः । अत एव 'देव'पदमुक्तम्, स्वरूपानन्ददानाद्भावोद्दीपनात्पूतनादिमुक्तिदानेन स्वमाहात्म्यद्योतनाद्वैकुण्ठादिस्थितेश्च । तदुक्तं निरुक्ते "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देव" इति । किञ्च । भक्तानां कामभोजनार्थं क्रीडाकरणात्क्रीडायामेव जयेच्छाकरणाद्गोपैः सह व्यवहारकरणाद्गोपेषु स्वमाहात्म्येच्छादिद्योतनात् "न पारयेऽहं" "न त्वादृशी प्रणयिनीभिरि"त्यादिभिः स्तुतिकरणाद्भक्तप्रपत्तिदर्शनेन कालीयदमनादौ मोदकरणात्तेष्वेव भक्तिमदकरणात्ते स्वप्नेऽपि प्रियमेव पश्यन्तीति स्वप्नकरणात्तेषां कान्तिकरणादिच्छाकरणाद्वा तन्निकटे गमनादपि देवः । तदुक्तं धातुपाठे–"दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिष्वि"ति । एवं सति युक्तमेव तेषां तथात्वमिति 'हि'शब्देनाऽऽहे"ति । तेन यः पुष्टपुष्टानां भगवदनुभवः, स श्रीपुरहरादीनां पूर्वोक्तरीत्या पुष्टिभक्तत्वेऽपि स्वरूपपरत्वेऽपि तल्लाभेऽपि तेषां फलतारतम्ये विलक्षणः सुमेरुसर्षपयोः साम्यमेव प्रमेयबलप्राप्ततया स्वरूपनिष्ठतया च धत्तां नाम, न ततोऽधिकमपीति सत्यनुमहे, सति च भाग्योदये चेच्छ्रीपुरहरादिप्राप्यफलतो महावैलक्षण्यानुसन्धित्सा, तदास्वादकुतूहलं च, तदुभयं तादृशभगवदनुग्रहैकलभ्यशुद्धपुष्टिमार्गीयचरणपरिचरणेन पूरणीयमिति दिक् ।

पुष्टिपुष्टौ केवलं भावदानमुक्तम् । तद्भावस्वाभाव्येन तद्भाववत्सु "कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्तनः । स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजद्" इत्यत्रोक्तरीतिकं श्रवणादिकमावश्यकम् । तद्दृष्टव्यं श्रीमत्सुबोधिन्याम् । तादृशं यच्छ्रवणादि तदेव पुष्टिभक्तिरित्युच्यते । तच्च प्रेमात्मकभक्तिसाधनत्वेन क्रियमाणाच्छ्रवणादेरुत्तमम् । तदुक्तं भक्तिहंसे– "प्रेमोत्पत्त्यनन्तरं स्वव्यसनतः स्वतन्त्रपुरुषार्थत्वेन क्रियमाण उत्तमः पुष्टिभक्तिरूपः ।" "मत्सेवया प्रतीतञ्च सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतम् ।" "नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः" । "मर्त्यानां मधुद्विड् सेवानुरक्तमनसामभवोऽपि फल्गुः ।" "नारायणपरा लोके न कुतश्चन बिभ्यति" । "स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन इत्यादिवाक्यैस्तथात्वं ज्ञेयमि" त्यन्तेन । तथात्वमुक्तमलम् । तेन पुष्टिपुष्टिः पुष्टिभक्तिश्चेत्यनर्थान्तरम् । तथैव तया शुद्धपुष्टिः केवलपुष्टिरित्येतदप्यनर्थान्तरम् । स्वतन्त्रायां पुष्टिपुष्टौ पूर्वोक्तया साक्षाद्धर्मिपरया मर्यादया शुद्धपुष्टिरूपयैव साध्यायामपि च पुष्टपुष्टौ साधनस्पर्शाभावात् । एवञ्च उभयस्या अपि पुष्टपुष्टेस्तारतम्यसम्भावनागन्धसम्बन्धशून्यतया वस्त्वैक्यं स्थितम् ।

भावः साधनम् । अलौकिकसामर्थ्येन भगवदास्वादः फलम् । साधनतः फलतश्च स्वतन्त्राया एतस्या मुख्यायाः शुद्धपुष्टेः प्रवर्तनमेव श्रीमदाचार्यचरणानां प्रादुर्भावेऽनन्यसाधारणं प्रयोजनम् । अवतारानवतारकालाभ्यां प्रवर्तने प्रकारभेदस्तु नाप्राप्तः । स च प्राग्दत्तविस्तरः । तदानीं रूपेण, इदानीं नाम्ना, तदानीं वेणुनादद्वारा, इदानीं श्रीमदाचार्यचरणैरित्यादिहेतुसद्भावश्च हत्त्यविवेकः । एवं सति साक्षात्पुरुषपूर्णरसात्मकभगवत्स्वरूपेण तादृशरसाभिपूर्णालौकिकदिव्यश्रीविग्रहाः श्रीमदाचार्यचरणाः शुद्धपुष्टिमार्गप्रवर्तनायाऽऽस्यां भूमौ प्रादुर्भूतास्तादृशशुद्धपुष्टिमार्गं प्रवर्तयिष्यन्तः स्नेहे भक्तिपदशक्तिं निर्धार्य, स्नेहस्य च रतिरूपत्वभावरूपत्वादि व्याख्याय, स्नेहमार्गे स्नेहस्यैव नियामकत्वं कर्ममार्गे विधेः प्राधान्यमिव समुपपाद्य तादृशस्नेहैकरसं व्रजाधीशसेवासरणिरूपं शुद्धपुष्टिमार्गं स्थापितवन्तः । उपादानं विना वस्तुस्थितेरसम्भववद्ब्रह्मवादं विना पुष्टिस्थितेरसम्भवं विभाव्य तदुपयोगिनं ब्रह्मवादञ्च ते संस्थापयामासुः । स्नेहस्यैव स्नेहमार्गे नियामकत्वस्थापनेन तद्भाववतां तदुदयमाकाङ्क्षतां मनोरथाभिपूर्तावविधिशबालकृतसन्ध्यावन्दनादौ विधिशोपदेशस्य नियामकत्वमेषां स्नेहवदुपदेशो नियामक इति व्यवस्थापितवन्तः । तथापि जातस्नेहानामजनिष्यमाणस्नेहानाञ्च साम्यं न सम्भवति । अजातस्नेहानां स्नेहाचारेष्वतिचारस्य नियामकाभावेन सम्भवात् । तेन स्नेहवतां स्नेहाचारोपदेशो मर्यादापथ

एव स्नेहरहितेषु मुख्यफलप्रापक इति निर्धारितवन्तः। मर्यादा चेयं न प्रावाहिकी, नापि मोक्षादिफलिका प्रामेयिकी, किन्तु साक्षाच्छुद्धपूर्णरसात्मकभगवत्स्वरूपभजनतत्साक्षात्साधनशुद्धपुष्टिस्नेहफलकस्नेहवदुपदिष्टस्नेहोपचाराङ्गम्। साक्षाद्धर्मिपरैव हि सा। अत्राग्निभावापन्नयोर्मर्यादाभेदाचार्ययोर्वैशिष्ट्येनोपदेशस्य तस्यां जागरूकत्वात्। महद्भिमुख्यभक्तियोगत्वं निर्गुणभक्तियोगरूपत्वं शुद्धपुष्टित्वं मुख्यपुष्टित्वं लोकवेदातीतत्वञ्च तत्सामर्थ्येनाऽऽप्यतया तस्यां प्रादर्शयाम। एवञ्च पुष्टिपुष्टाविव भावरूपत्वं भगवदास्वादफलकत्वञ्च साक्षाद्धर्मिपरायामपि मर्यादायां निर्विचिकित्समिति स्पष्टम्। साक्षाद्धर्मिपरतयैव च लोकवेदातीतत्वादिरूपया निर्गुणभक्तियोगत्वादिरूपया च ("यथा भक्तिर्ममोर्जिते"ति वचनादपेक्षितम्) भावस्योर्जितत्वं तस्यां सिद्धोद्योतम्। आत्मनिवेदनपूर्वकत्वाच्च तथा। ऊर्जितत्वेनाऽलौकिकसामर्थ्यं च तत्राऽस्तीति व्याख्यातम्। "प्रतिनियतेन्द्रियवद्भगवद्भक्तिरि"ति सिद्धान्तात्। यथा तांस्तान् विषयान् प्रति तदनुभावकानि तानि तानीन्द्रियाणि नियतानि, तथा भगवदनुभवाय भक्तिरिति हि तदर्थः। तच्च भगवदावेशजनितमेव। हृदय आविष्टायामेव हि कामिन्यां तदर्थं यत्नो यथा, तथेहाऽपीति। "न ह्यननुभूतविषया रुचिरस्ती"ति न्यायात्। इदमलौकिकसामर्थ्यं बीजरूपम्, अग्रे फलरूपमित्यन्यदेतत्, तथापि तादृशफलात्मकशुद्धपुष्टिप्रवृत्त्याशंसया साक्षाच्छ्रीमद्वृन्दावनेन्दुनाऽवतारितानां श्रीमदाचार्यचरणानां करुणोत्तरवरणसामर्थ्यमहिम्ना तदनुगतानां फलरूपतयैव साऽपि पर्य्यवसन्ना। तेन "यथा यथाऽऽत्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः। तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाऽञ्जनसम्प्रयुक्तमि"ति न्यायेन यथाभावोदयं यथाऽलौकिकसामर्थ्योद्बोधञ्च तत्रापि तेषां तत्तादृशरसप्रचुरभगवत्स्वरूपानुभवो निराबाधः। तत एव नायिकाया नायक इव विजातीयभावानन्तरितसजातीयभावप्रवाहस्तेषां "श्रद्धामृतकथायां मे शश्वन्मदनुकीर्तनमि"त्यादिना निरूप्यते। तत एव शुद्धपुष्टेस्ततः फलनं, नाऽन्यथेत्युक्तं प्राक्। पुष्टिपदव्यवहार्य्यत्वञ्च तस्या दर्शितम्। ततश्च साक्षाद्धर्मिपरा मर्यादा, तया लभ्यमाना शुद्धपुष्टिश्च पूर्वोत्तरदलद्वयापन्नमेकमेव भावोत्थितं भावपर्य्यवसन्नं भावैकरसञ्च वस्त्विति न कश्चित्सन्देहः। तथा सति सिद्धशुद्धपुष्टिस्थितीनां फलार्थममृग्यत्वेऽपि तद्रहितानां मङ्गलाय, सम्प्रदायस्याऽप्रतिहतार्थं प्रवृत्त्यै च साक्षाद्धर्मिपरायास्तस्या अत्यावश्यकत्वेन तत्करणं मुख्यफलानुभवाविरोधीति "अधिकं तत्राऽनुप्रविष्टं, न तु तद्धानिरि"ति न्यायात्प्रत्युत प्रशस्तं चेति तन्मर्यादास्थितिः शुद्धपुष्टिस्थेष्वपि नूनं नैव निवर्तते। तत एव स्वमार्गीया मर्यादेति तद्व्यवहारः।

साक्षाद्धर्मिपरैषा मर्यादा प्रपञ्चितप्रकारेण श्रुतिगीताब्रह्मसूत्रश्रीभागवतादौ विद्यमानाऽपि मुख्यरासात्मकफलरूपभजनोपयोगितया तैस्तैराचार्य्यैः श्रीपुरन्दरनारदादिभिश्च शास्त्रेष्वभिप्रुतेन ज्ञाता। नाप्याख्याताऽपि। केवलन्तु श्रीमदाचार्य्यचरणैरेव प्रकटीकृता। शास्त्रतो व्याख्यातापि। सर्वेऽपि धर्मद्वारैव धर्मिपरा इति। वस्तुतस्तु यथाधिकारं बोधनियमात् शुद्धपुष्टिस्थेष्वपि धर्मद्वारैव धर्मिपरत्वबोधस्तेषाम्। तत्प्रत्यक्षं भीष्मस्तुतौ "ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः। कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमगन् किल यस्य गोपवध्व" इत्यत्र च "गोपवध्वः जात्या स्वभावेन च दुष्टाः, ता अपि यस्य सम्बन्धात्प्रकृतिं स्वरूपमगमन्नि"ति श्रीमत्सुबोधिन्यां व्याख्यानात्। "वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः।" "यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनमि"ति वा, "अक्षण्वतां फलमिदं न परं विदाम" इति शुद्धपुष्टिस्थनिर्णीतार्थप्रशंसावचनं वा "रामेण सार्धं मथुरां प्रणीते" इत्यादिना वर्णिततदुत्कर्षानुसन्धानवचनं वा तत्र नास्ति। 'प्रकृतिमग'न्निति त्वस्तीति तद्बोधभेदः सुज्ञातः। तथा सति यत्र शुद्धपुष्टेरेवाऽज्ञानं तत्र तदसाधारणकारणरूपायाः साक्षाद्धर्मिपरायाः मर्यादायास्तथा भजनोपयोगितया ज्ञानं नास्तीत्युक्तमिदम्। तेन श्रीमदाचार्यचरणैरेव केवलैर्यथोक्तदलद्वयापन्नः शुद्धपुष्टिमार्गो ज्ञातः प्रकटीकृतः शास्त्रतो व्याख्यातोऽपि, नान्येन तद्दिगप्यनुसंहितेति नैतत्तिरोहितम्।

तथा च पुष्टपुष्टेः स्वतन्त्राया यत्फलं तदेव स्वमार्गीयमर्यादयाऽपि साक्षाद्धर्मिपरया तदुदयद्वारेति प्रामाणिकत्वसिद्धये, पाषण्डित्वापनाशये, तत्तत्सांकर्य्यनिवृत्त्यादिनेऽञ्जसा सिद्धयेऽन्यथा तत्फलानुपलब्धिप्रसक्तिपरिहाराय च स्वमार्गीयमर्यादयैव शुद्धिपुष्टिमार्गः प्रवर्तनीयः। सोऽपि ब्रह्मवादस्थापनपूर्वकमेव। ब्रह्मवादोऽपि हि प्रमाणतः प्रमेयतः साधनतः फलतश्च धर्म्येव। अत्रैव च केवलं व्याख्या वाचोपदिशति, तदैव हि स मुख्यतयोपयोगं

मुख्यभक्तिमार्गं लभते, नाऽन्यथेति स्वमार्गीयमर्यादायामेव तत्समावेशः प्रचन्द इति न त्ववतारकालवत्प्रमाणाधनपेक्ष्यैव। तथैव च स प्रवर्तितः श्रीमदाचार्यचरणैः। तत्तावद्युक्तमुक्तमेतत्, यत्किल-श्रीमदाचार्यचरणैः प्रमाणानुरुद्धः प्रमेयमार्गः प्रकटीकृत इति। युक्तं चैतदप्युक्तं यत्-श्रीमच्छुद्धपुष्टिमार्गाचार्य्यप्रवृत्त्यनुरूपं "वेदाः श्रीकृष्णवाक्यानी"ति प्रमाणाङ्गीकारपूर्वकं पुष्टिमार्गस्थापनमिति।

एष तावच्छ्रीमदाचार्य्यचरणानां शुद्धपुष्टिमार्गस्थापनप्रकारः सूत्रभाष्य-श्रीमत्सुबोधिनी-सिद्धान्तमुक्तावली-पुष्टिप्रवाहमर्य्यादाभेदनिरूपण-सेवाफल-सिद्धान्तरहस्य-तत्त्वदीपनिबन्धादिषु प्रस्फुटः। श्रीमत्प्रभुचरणैर्विद्वन्मण्डन-भक्तिहंस-भक्तिहेतुनिर्णयादौ तत्पुत्रपौत्रैश्च तट्टीकादिषु निष्कृष्टश्च। तदवतरणान्यपि यथा—

भक्तिहंसे-"एवं सति भक्तिमार्गीयभजनप्रकारेषु स्नेह एव नियामकः स्नेहवताम्। कर्मवत् विधिवत्। तद्रहितानां तु तद्धस्तत उपदेश एव। स च वेदाविरुद्ध एवेति ज्ञेयम्। विधिमजानता बालेन पित्रादिशिक्षया कृतसन्ध्यावन्दनादेः कर्मत्ववदुपदेशानुसारेण कृतेरपि भक्तित्वम्। तन्मार्गीयत्वात्। एवम्भूतस्याऽग्रे स्नेहोऽवश्यम्भावीति ज्ञेयम्। यथा तादृग्बालकृतकर्मणोऽप्युक्तफलसाधकत्वम्, तथा तादृग्भजनस्याऽपि पुरुषोत्तमप्रापकत्वमिति किमन्यदवशिष्यते" इति श्रीमत्प्रभुचरणाः।

भक्तितरङ्गिण्याम्-"तद्रहितानामिति। स्नेहरहितानां भजने नियुक्तानां कृतिर्वक्तृपुरुषाधीना। स्नेहस्याऽनुदितत्वान्मर्यादयैवोपदेश इत्यर्थं" इति श्रीमद्रघुनाथाः।

तीर्थे-"मर्यादयैवेति। एतेन वेदाविरुद्धपदं व्याख्यातम्। तेन य इदानीन्तनास्तद्विरुद्धमुपदिशन्ति कुर्वन्ति वा, ते भ्रान्ता इति सिद्ध्यति। तस्मात्पूर्वेषां रीतिमनुसृत्यैव कार्य्यमि"ति श्रीपुरुषोत्तमाः।

अपि च भक्तिहंसे-"नन्वेवं पुरुषोत्तमार्थिप्रवृत्त्यनुपपत्तिः। नैवम्। तदर्थित्वस्यैव वरणपर्यवसानात्। अन्यथा तदनुपपत्तेः। वरणे चाऽस्ति प्रकारद्वयं मर्यादापुष्टिभेदेन। आद्यस्तु तत्साधने भवति प्रवृत्तः। तथैव तद्वरणात्। परन्तु स्नेहोत्पत्तिपर्य्यन्तं विधिरेव तत्र प्रयोजकः। तदुत्पत्त्यनन्तरं च रागादेव तत्सम्बन्धिपदार्थे यतिष्यते इति विधेरप्रयोजकत्वम्। द्वितीयस्य तु प्रवृत्त्यप्रवृत्ती अप्रयोजिके। भगवता स्वस्यैव साधनत्वाङ्गीकारः, अत एव "अहयापृतं निशि शयानमतिश्रमेणे"ति गोकुलविशेषणं द्वितीयस्कन्धे ब्रह्मणोक्तमिति सर्वमवदातमि"ति।

भक्तितरङ्गिण्याम्-"स्वविषयकवरणास्तित्वानिश्चयात्पुरुषोत्तमभजनं नोपपद्यत इत्याशङ्क्याऽऽह-नन्विति। य देव वरणकार्यं निश्चायकं कारणस्य तस्य पुरुषोत्तमार्थित्वस्य स्फुटमनुपलम्भादित्यर्थः। अन्यथेति। कारणमन्तरेण कार्योत्पत्तेराकस्मिकत्वमाऽऽपद्येतेति भावः। ननु क्वचिद्वरणकार्य्यपुरुषोत्तमार्थित्वं विनाऽपि स्वतः सम्बन्धः पुरुषोत्तमे दृश्यते, तस्य चाऽवश्यं कारणपूर्वकत्वं वाच्यम्, तच्च प्रकृते तदर्थित्वमन्तरेणाऽनुपपन्नमित्यत आहुः-वरणे चेति। साधने प्रवृत्तं तदनुरूपफलदानमाऽऽस्नेहोत्पत्तेरिति मर्यादामार्गस्वरूपम्। द्वितीयस्येति। यद्यपि प्रथमेऽपि स्वकृतप्रवृत्त्यप्रवृत्ती स्वरूपसम्बन्धं कर्तुं न शक्नुतः, तथाप्यवान्तरकृतिरपि द्वितीये नाऽपेक्षितेति वैलक्षण्यम्। अनुग्रहस्तुभयत्राऽऽप्यादिकारणत्वेन सर्वैरप्यङ्गीकार्य्य एवे"ति।

तीर्थे-"तत्साधन इति। भगवत्प्राप्त्युपायभूतस्नेहोत्पादके साधने। तथैवेति। साधनद्वारैव भक्तिं मां च प्राप्नोत्वितीच्छयेत्यर्थं" इति।

पुष्टिपुष्टेः स्वतन्त्राया यत्फलं तदेव स्वमार्गीयमर्य्यादयाऽपि साक्षाद्धर्मिपरत्वेनात्र निरूपितं स्फुटम्।

भक्तिहेतुनिर्णये तु-वरणद्वैविध्यव्युत्पादने निरूप्यमाणा मर्य्यादा धर्मद्वारा धर्मिपरेति ज्ञेयम्। तदिदं तत एवाऽवगन्तव्यम्।

न चैवं मर्यादाया अभ्युपगमे तत्तत्साधनानुष्ठानस्य फलोपयोगित्ववत्तदनाचरणस्यान्यथाचरणस्य च कलिकालकृतासामर्थ्यबुद्धिदोषादिनोदये फलविघातोऽपीति मर्य्यादायाः सापायत्वं प्राप्तं मर्य्यादायां वरणेऽनुग्रहेणैवैतं साधनतः फलति। तथैव फले तारतम्याभावे वरणे प्रकारद्वयस्य निष्प्रयोजनत्वापत्त्या फलेऽपि तारतम्यमनु-

१ कर्मज्ञानभक्तिष्वित्यनुवर्तते। २ कर्मज्ञानभक्तिरिति शेषः पूर्वानुसन्धानेन लभ्यते।

येयमिति भ्रमितव्यम् । स्वमार्गीयमर्यादायाः साधनतः फलतोऽपि साक्षाद्धर्मिपरतया व्यवस्थापनात्साधनानुष्ठान-तत्साद्गुण्यवैगुण्यतदभावेषु निष्ठाया एवाऽनुदयेनाऽन्यथा केवलधर्मिपरत्वासिध्या फलविघाततत्तारम्यादिशङ्कानव-सरात् । प्रथमतः प्रविष्टस्य फलतः साधनानां धर्मिपरत्वावधारणेऽपि साधनतो न धर्मिपरत्वावधारणं यद्यपि, तथापि तज्ज्ञोपदेशानुसारेण वर्तमानस्य सर्वं सूपपन्नमेवेत्यसकृत्समाहितम् । अत्र "यानास्थाय नरो राजन् प्रमाद्येत कर्हिचित् । धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह" इत्यादिवचनमप्यनुसन्धेयम् । तत एव "यदुक्तं तातचरणैः श्रीकृष्णः शरणं मम । तत एवास्ति नैश्चिन्त्यमैहिके पारलौकिके" "दुर्भगाऽसि तथापि त्वं मा त्यज स्वप्रियान्तिकम् । कदाचित्कृपया पश्येत्प्रियस्त्वद्भाग्ययोगतः" इत्यादीनि श्रीमत्प्रभुचरणवचांसि । आत्मसु-तेभ्यः पत्रे च श्रीमत्प्रभुचरणाः—श्रीगोकुलनाथोऽस्माकमैहिकं पारलौकिकञ्च स्वयमेव जातोऽस्तीति किमस्माकं विचारणीयमस्तीत्यलिखन् ।

एवञ्च प्रामाणिकत्वापाषण्डत्वादिपूर्वोक्ततत्तत्फलप्रयोजनसिद्धये "श्रुतिस्मृती ममैवाऽऽज्ञे यस्ते उल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः" इति वचनेन "यद्यदाऽऽचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते । न मे पार्थाऽस्ति कर्तव्यं त्रिषु लोकेषु किञ्चन । नानवाप्तमवा-प्तव्यं वर्त एव च कर्मणि । यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः । उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् । सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः । सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत । कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसङ्ग्रहम् । न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् । जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् । प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कार-विमूढात्मा कर्ताऽहमिति मन्यते । तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः । गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते । प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु । तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् । मयि सर्वाणि कर्माणि संन्यस्याऽध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः । ये मे मतमिदं नित्य-मनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः । ये त्वेतदभ्यसूयन्तो नाऽनुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ।" इति श्रीमद्भगवद्गीतातृतीयाध्यायप्रघट्टकोक्तरीत्या यथा-भगवदिष्टमनाग्रहेणाऽनास्थया च केवलं धर्म्यनुसन्धानेन स्नेहवतां तदुपदेशानुसारेण वर्तमानानाञ्च यथाशक्ति साधनानुष्ठानं न साधनसापेक्षत्वेनेति स्पष्टमेतत् । तत एव "लौकिकत्वं वैदिकत्वं कापट्यात्तेषु नाऽन्यथा । वैष्णवत्वं हि सहजं ततोऽन्यत्र विपर्य्ययः" इति पुष्टिस्थानां लक्षणमुक्तम् ।

सर्वथा सर्वसाधनराहित्यप्रकारकं तु वरणं प्रादुर्भावसामयिकलीलास्थानामेवेति "अलब्धपूर्वं निशि शयानमति-श्रमेण" इत्यादिवचनैरेव स्फुटम् । किञ्च, व्रजस्थानां तु स्वमार्गमर्मविदुषां परमो व्यामोहः । 'क्वचित्पाण्डित्यं' श्लोके व्रजस्थानां स्वमार्गमुख्यैकदेशित्वनिर्धारणात् । तेनेदानीं पाण्डित्यादिक्रमेणैव व्रजपतिरतिमार्गस्थापनमिति द्रष्टव्यम् ।

एवञ्च स्वमार्गीयमर्यादायाः पुष्टिपुष्टितत्फलप्रापकत्वात्फले भेदाभावेन स्वयञ्च सा पुष्टिपुष्टिरूपैवेत्यवतारान-वतारकालाभ्यां तत्रापि प्रकारभेदो न वस्त्वन्यथयतीति स्वमार्गीयमर्यादायाः साक्षाच्छुद्धपुष्टिमार्गरूपायाः सर्वथैव न प्रमदितव्यं श्रीमदाचार्यचरणानुगृहीतेन पुष्टिस्थेन जनेनेत्यनुसन्धीयतामेतत्सुधीभिः । तत एव श्रीमत्प्रभुचरणानां पद्यम् ।

"श्रीवल्लभाचार्यमते फलं त-
द्याकृष्णमत्राऽव्यभिचारिहेतुः ।
प्रेमैव तस्मिन्नवधोक्तभक्ति-
स्तत्रोपयोगोऽखिलसाधनानामि"ति ।

तस्माच्छ्रीमदाचार्य्यचरणैः पुष्टिपुष्टिमार्गस्थापनाय प्रमाणानुरुद्धः प्रमेयमार्गः प्रकटीकृत इत्यतिरोहितम् । तेन तदीयैस्तदनुसरणेनैव पुष्टिपुष्टिः सम्पाद्यताम् । नाऽन्ययेदानीं सा शक्यसम्पादनेति नैतद्विस्मर्तव्यं सज्जनैः ।

नन्वु भोः "न रोधयती"त्यादिना "नियमा यमाः"इत्यन्तेन स्वप्राप्तिं प्रति साधनानि प्रतिषिध्य "यथाऽवरुन्धे सत्सङ्ग" इत्यादिना "सत्सङ्गान्मामुपागता" इत्यन्तेन सत्सङ्गस्य स्वप्रापकत्वमुक्त्वा "केवलेन हि भावेने"त्यादिना "सङ्गाच्छतसहस्रश" इत्यन्तेन मुख्यं महद्भिर्मृग्यं भक्तियोगं कथयित्वा स्वस्य केवलभक्तियोगसुलभत्वेन तदितरसाधनकोटिभिरप्यसंश्रयलभत्वेन च स्वप्राप्तये साधनत्यागपूर्वकं सर्वात्मभावप्रकारकं स्वशरणगमनमाह भगवान् । तेनैव साम्प्रतिकाः प्रवेशमात्रेण साधनत्यागमिच्छन्ति । किमत्राऽयुक्तम् ? नन्विदमेवाऽयुक्तम्, यदुत प्रवेशमात्रेण साधनत्यागः । तथाहि—इह तावत् सर्वात्मभावेन शरणगमने पूर्वाङ्गतया साधनत्याग उच्यते । सर्वात्मभावस्तु—सर्वोऽप्यात्मनो भावः । भगवत्स्वरूपातिरिक्तास्फूर्तिरिति यावत् । यत्र यथावद्बुधैरपि नेक्ष्यत उदयस्तत्र का चर्चा सर्वात्मभावस्य । सति सर्वात्मभावे "न क्रोधो न च मात्सर्यं न लोभो नाऽशुभा मतिः । भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे" "त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्र । ततोऽनुमेयो भगवत्प्रसादो यो दुर्लभोऽकिञ्चनगोचरोऽन्यैः" "पुंसां किलैकान्तधियां स्वकानां याः सम्पदो दिवि भूमौ रसायाम् । न राति यद्द्वेष उद्वेग आधिर्मदः कलिर्व्यसनं संप्रयासः" इत्यादिवचनविरुद्धाचरणं तेषु नोदियात् । यत्र—"त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेदि"ति मर्यादायामपि कामक्रोधादेरसम्भवः । तत्र पुष्टौ तत्रापि च निरोधचरमावस्थायां भगवत्प्राप्तेरव्यवहितपूर्ववर्तिन्यां फलदशायां प्रपञ्चप्रलये कामक्रोधादेः सर्वथा स्फुरितुमप्यनवसरात् । आरम्भदशायामपि "नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया । भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी"त्यादिभिः कामक्रोधादेर्नाशस्याऽऽवश्यकत्वोक्तेः "अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे" इति श्रीमद्भागवतीयेन वचनेन सर्वानर्थप्रशमनीकृतया पुष्टिभक्तेर्भक्तिहंसे निरूपणाच्च । सर्वात्मभावश्च न स्वकृतिसाध्यः । ननु मैवम् ! "तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनामि"त्यादिना चोदनादेस्त्यागमुक्त्वा सर्वात्मभावप्रकारकशरणगमनोपदेशेन चोदनादेस्त्यागस्य सर्वात्मभावतत्पूर्वकशरणगमनं प्रति कारणत्वं गम्यते । तेन स्वकृतिसाध्यत्वमाऽऽपद्यते । तथा सति सर्वमर्यादोल्लङ्घनं कृत्वाऽवस्थानं साम्प्रदायिकानां न दुष्यति, प्रत्युताऽनयैव रीत्या सर्वात्मभावस्य निष्पत्तेरावश्यकमपीति चेत् ?, अहो नु खलु भोः !!! 'स्वभावरक्षस्य महान् व्यतिक्रमः' । उत्सृज्येति ल्यपा तत्त्यागपूर्वकत्वमेव सर्वात्मभावेन शरणगमनस्याऽऽयाति, न तु त्यागहेतुकत्वमपि मानाभावात् । भुक्त्वा गच्छतीत्यत्र भोजनपूर्वकत्वमेव गमनस्य, न तु भोजनहेतुकत्वमितिवत् । क्रमाद्यनुदयेन भोजनस्योपकारकत्ववत्सर्वात्मभावस्वरूपसंरक्षणाय साधनत्यागस्याऽऽवश्यकत्वेनाङ्गत्वं तु न निवार्यते । तेनाङ्गविधित्वमप्यस्तु । सर्वात्मभावस्य तद्धेतुकत्वाङ्गीकारे तु तत्त्यागस्य तदङ्गत्वाभावात्स्वातन्त्र्येण स्वतन्त्ररीत्या विहितत्वमपेक्षितं स्यात् । तच्च सर्वमर्यादोल्लङ्घनेन सर्वात्मभावकामो यतेतेत्याकारकम् । "ज्योतिष्टोमेन स्वर्गकामो यजेते"तिवत् । ननूत्सृज्येति स्वतन्त्र एव विधिरस्तु । तथा सति वाक्यभेदापत्तिः । तस्मात्सर्वात्मभावस्य साधनत्यागसाध्यत्वं न सिध्यति । येन तत्त्यागस्तदर्थं तत्पूर्वं कर्तव्यः स्यात् । किन्तु शरणगमने सर्वात्मभावः प्रकारः । तथैव चोदनादेस्त्यागोऽपि सर्वात्मभावविशिष्टशरणगमने । तेन तादृशशरणगमनप्रकारत्वेनैव त्यागः कर्तव्य इति सिध्यति । तत्प्रकारतया त्यागस्तु सर्वात्मभावेन शरणगमने सति भवेत् । सर्वात्मभावस्यैवाऽनुदये तादृशी शरणागतिस्तत्प्रकारतया साधनत्यागश्च दूरापास्तावेव । किं साध्यस्तर्हि सर्वात्मभावः । भगवत्कृत्यैकसाध्यः । तद्विचारितं "प्रदानवदेव तदुक्तमि"त्यधिकरणे श्रीकृष्णद्वैपायनैः । तद्भाष्यं यथा—"अथेदं विचार्यते । सर्वात्मभावो विहितकर्मज्ञानभक्तिसाध्यो न वेति । तत्र पुराणे—'तस्मात्त्वमुद्धवोत्सृज्ये'त्युपक्रम्य 'मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसे ह्यकुतोभय'मिति वाक्ये मुक्त्यात्मकाकुतोभयसाधनरूपशरणगमने प्रकारत्वेन सर्वात्मभावस्य कथनेन स्वप्रयत्नसाध्यत्वं गम्यते । अतः साधनसाध्य इति पूर्वः पक्षः । तत्र सिद्धान्तं वक्तुं तदुपदेशस्वरूपमाह—प्रदानवदिति । यद्ययं साधनोपदेशः स्यात् । स्यात्, तदा साधनत्वेन सर्वात्मभावेन शरणप्राप्तेः स्वकृतिसाध्यत्वम् । न त्वेवम्, किन्तु तदुक्तं भगवदुक्तम् । प्रदानवत् । प्रकृष्टं दानं वरदानमिति यावत् । तद्वदेवेत्यर्थः । वरेण हि स्वकृत्यसाध्यमपि सिध्यतीति । तथा ह्यनुसंहारभयादिनाऽपि शरणाप्तिर्भवति । तत्र न तस्याः पुरुषार्थत्वं, किन्तु तन्निवृत्तेरेव । प्रकृतेऽपि सर्वात्मभावे

स्वरूपप्राप्तिविलम्बासहिष्णुत्वेनाऽत्यार्त्या स्वरूपातिरिक्तास्फूर्त्या तद्भावस्याभाव्येन गुणगानादिसाधनेषु कृतेष्व-प्यप्राप्तौ स्वासक्यत्वं ज्ञात्वा प्रभुमेव शरणं गच्छति। एतच्च न स्वकृतिसाध्यमिति सुष्ठूक्तं प्रदानवदिति। भक्त-स्येप्सितोऽर्थो हि वरो भवति। सर्वात्मभावस्याऽनुभवैकवेद्यत्वेन पूर्वमज्ञानेनेक्षितत्वासम्भवेऽपि स्वत एव कृपया दानमिति प्रदानवदित्युक्तम्। अथवा। सर्वात्मभावेन मां याहीति सम्बन्धः। यद्वा। प्रदानवदित्यस्य पूर्ववदेव व्याकृतिः। तत्र साधनासाध्यत्वे प्रमाणमाह—तदुक्तमिति। "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्य" इति श्रुत्या वरणातिरिक्तसाधनाप्राप्यत्वमुच्यत इति तत्तथैवे-त्यर्थः। भगवदुक्ताकुतोभयपदस्य न मुक्तिरर्थः, किन्तु "यतो वाच" इत्यादिनाऽऽनन्दस्य स्वरूपमुक्त्वा "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने"ति श्रुत्युक्तं यत्पूर्वोक्तं रसात्मकपुरुषोत्तमभजनानन्दानुभवोत्तरकालीनमकुतो-भयं तदर्थ"इति। तथा च राजभोजनप्रसङ्गे संवृतद्वारतया प्रवेशनिराशस्य पामरस्य राजैव दयातिशयाद्वारं विवार्य स्वयं प्रेरयत्यनार्या हि राजभोजनं लप्स्यसे इति। तत्र यथा न पामरकृतिसाध्यत्वमंशतोऽप्यनुसन्धा-तुमवसरः तथैव साक्षात्स्वरूपं विवार्याऽवस्थितो भगवान् तथा त्यागपूर्वकसर्वात्मभावप्रकारकशरणगमनं मयि कुर्वंकुतोभयं प्राप्स्यसीति श्रीमदुद्धवानुपदिशति। तत्र स्वव्यापारस्य सर्वांभावेन साधनसाध्यत्वधीः सर्वथाऽन-वसरपराहतैव।

ननु भगवत्कृत्यैकसाध्यत्वायैव तत्त्यागो, न तु त्यागत्वेन तत्र साधनताऽस्तीति चेद् मैवम्, तदर्थं त्यागे त्यागत्वेन कारणता नास्तीति वचनस्य बाधितत्वात्। वस्तुतो भगवत्कृत्यैकसाध्यत्वेनैव त्यागस्य कृतिः, न स्वकृतिसाध्यत्वेन। यतो भगवत्कृत्यैकसाध्यत्वाय त्यागः स्यात्। भगवत्कृत्यैकसाध्यत्वेन त्यागस्तु नाऽधिकारि-सामान्यनियतः, किन्तर्ह्यधिकारिविशेषैकनियतः। अनधिकारिणस्तु "विनश्यत्याचरन्मौढ्याद्यथा रुद्रोऽब्धिजं विषमि"ति वाक्यात्नाश एव। ननु कृपैवाऽधिकारः?, आम्! "कृपा च मार्गरुच्या निश्चीयत" इति श्रीमदा-चार्यचरणा आहुः। मार्गरुचिश्च दाम्भिकेष्वपि दरीदृश्यते। दाम्भिकत्वादि तु लोभाद्यनर्थवत्तया सुज्ञेयम्। तदेव श्रीहरिरायैर्दुःसङ्गविज्ञानग्रन्थे निरूपितम्। तत एव गुरुलक्षणे "दम्भादिरहितमि"त्याहुः श्रीमदाचार्य-चरणाः। ततश्च दम्भादिराहित्यग्राहितयाथार्थ्यां मार्गरुचिश्चेत्कृपोन्नेया। तया च त्यागाधिकारः। कामक्रोध-लोभादिभिरभिभूतस्य प्रभुसेवाविमुखस्य मार्गरुचिचोदनात्त्यागो तु पाषण्डपर्यवसन्नः केवल आडम्बरः। किञ्च। कृपाऽधिकार इति युक्तम्, न तु मार्गोन्मुखीकरणमात्रोपक्षीणा सा त्यागाऽधिकाराय। किन्तु फलो-न्मुखीति तु निर्मत्सरेण मनसा न हीयताम्। अपि च, निबन्धे "भक्तिनिष्ठा तदा ज्ञेया यदा कृष्णः प्रसी-दति। निष्ठाभावे फलं तस्मान्नास्त्येवेति विनिश्चयः। निष्ठा च साधनैरेव न मनोरथवार्तये"त्यूचे श्रीमदा-चार्यचरणैः। प्रसादो नाम मर्यादांशत्याजनपूर्वकशुद्धपुष्टिप्रवेशेन यत् स्वस्वरूपानन्दानुभावनं तत्। तये-दाऽकुतोभयलाभरूपम्। स कदा सम्भवति। यदा भक्तिनिष्ठा। महताऽपि बाधकेनाऽचलनं निष्ठे"ति प्रथ-मस्य द्वितीये "नष्टप्रायेष्वि" त्यत्र श्रीमदाचार्यचरणाः। सा च पर्यवसानतः सर्वात्मभावादिरूपैव। तदभावे फलं नास्त्येवेत्याहुः—निष्ठाभावे फलमित्यादिना। प्रत्युताऽपराधोऽप्यन्यथाकरणेनेति ज्ञेयम्। ननु निष्ठोदयः केनेत्याकाङ्क्षायामाहुः—निष्ठा च साधनैरेवेति। तान्युक्तानि "शुश्रूषोः श्रद्दधानस्ये"त्यादिना "भक्तिर्भवति नैष्ठिकी"त्यन्तेन प्रथमस्य द्वितीये। महद्भिमृग्यभक्तियोगोपयोगीनि च साक्षाद्भगवदुक्तानि मुख्यानि तान्युप-न्यस्तानि। तेषां साधनता न साधनतेति च भूर्युपपादितम्। "प्रदानवदेव तदुक्तमि"ति न्यायादपि न सा। ननु साध्यभक्तियोगवत्साधनभक्तियोगस्याऽपि केवलभगवदधीनत्वे तुल्ययोगक्षेममुभयोरिति चेत्?, आ एवं किलैतत्। तथापि विशेषोऽस्ति। साधने पुरुषव्यापारस्य प्रवृत्तेः। तथा च स्वमार्गीयायां साक्षाद्धर्मिपरायां मर्यादायां या प्रवृत्तिः, सा न स्वकृतिसाध्या, किन्तु प्रदानवदेव भगवद्दत्तैव लभ्यते। तेन तत्प्रवृत्त्या तादृशो निरङ्कुशो भगवदनुग्रहोऽनुमेयो यद्यपि, तावता महद्भिमृग्यभक्तियोगत्वसिद्धिश्च तत्र भवत्येव। तथापि तत्र पुरुषव्यापारः। साधनत्वात्। फले तु न तथेतीयानेव विशेषः। फलात्मकश्चाऽयं त्यागः। तत्र पुरुषव्यापार-प्रवृत्तिरेव न भवतीति तदाग्रहं स्वसम्प्रदायानवबोधमूलं विधूय साक्षान्मुख्यपुष्टिरूपैव स्वमार्गीया मर्यादापुष्टि-स्थितेरुड्डीयतां नोपेक्ष्यतामित्यभिव्यक्तमेतत्।

भक्तिहंसेऽप्येतन्निरूपितम् । तद्यथा–"प्रेम्णश्च फलत्वेन सकलसाध्यत्वेन च न विहितत्वं सम्भवति, किन्तु तस्याऽनुवाद एव । "य एतस्मिन्महाभागाः प्रीतिं कुर्वन्ति मानवाः ।" "माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चाऽन्यथा ।" तृतीयस्कन्धे च–"देवानां गुणलिङ्गानामानुश्रविककर्मणाम्"इत्यादि । 'मद्गुणश्रुतिमात्रेण"इत्यादि । साधनरूपा श्रवणादिलक्षणा तु "तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम्"इत्यादिवाक्यैर्विधीयत एवेति सर्वमनवद्यमिति दिक्" इति ।

इयमेव भक्तितरङ्गिणी "प्रेम्णश्चेति । स्तःपदार्थीभूतपुरुषसाधने यथा पुरुषव्यापारस्तथाऽत्रापीति भावः । स्नेहरूपायाः फलत्वेनाऽविधेयत्वम्, साधनरूपायाः श्रवणाद्यात्मकत्वेन विधेयत्वमिति विवेके य एतस्मिन्नित्यादिना ज्ञापित" इति । विद्वन्मण्डनेऽप्येतत्सन्निदर्शनमुपपादितम् । तथाहि–"स च चिरकालोपस्थमुदितप्राचीननिरतिशयकृपाफलसारनिरुपधिनिजचरणकमलानुरागविलासाऽभिलाषवर्ती जासु ततो निजपरिजननिरोधतः प्रियावलोकननिमित्तं कृतप्रतिक्षणविविधव्याजजनितगतागतकर्षितासु ततो दिवा प्रियवनगमनजनितविरहतरणितापतप्यमानान्तःकरणकेदारासु ततो निशामुखे प्रियागमनसम्भ्रमेऽवलोकनसेचनजनितहर्षितवलितविकसितरक्तचिरविलोचनयुगलविहितविविधनिरवधिरसभावाङ्कुरासु ततोऽतिविपुलकलिन्दजापुलिननभोवलयगतनिजमुरलिकाकलनिनदगर्जितानन्दितास्वेव कासुचिद्भूमिषु श्रीमन्नन्दराजकुमारो नवजलदो निजानन्दसुधां ववर्षेति तथैव सर्वत्र वर्षिष्यतीति न ज्ञातुं शक्यते । अतो मर्यादया तद्भजनमेव सर्वेषां कर्तव्यत्वेन स्थितम्, तेनैव सर्वमिति दिक्" इति ।

इहेदं सुवर्णसूत्रम् "अतिशयितानुग्रहमात्रसाध्यतामुदाहरणप्रदर्शनेन स्फुटीकुर्वन्ति–स चेत्यादि । अत्र "रामेण सार्द्ध"मित्यादीनि वाक्यान्येवंविधानीतराण्यपि प्रमाणत्वेनानुसन्धेयानि । स्थितमिति । सूत्रादौ निर्णीतम् । तर्ह्यनुग्रहविशेषेप्सोः का गतिरित्यत्र आहुः–तेनेत्यादि । बीजसत्तायामेतदेवाङ्कुरसाधनम् । अग्निकुमारादिभिस्तथैव कृतत्वादित्यर्थः" इति । एवा चेह हरितोषिणी–"कासुचिदित्यनेन बाहुल्याभावः सूचितः । अत एव ज्ञानमार्गेऽपि श्रीभगवता गीतायामुक्तम् "कश्चिन्मां वेत्ति तत्त्वत" इति । ननु सर्वत्र वर्षिष्यतीत्यनेन साधनं विनैवेदं भगवत्कृत–कृपया भविष्यतीति ज्ञायते । अत एव "निस्साधनफलात्माऽयं प्रादुर्भूतोऽस्ति गोकुले" इति निबन्धोक्तं सङ्गच्छते । एवं सति साधने यत्नो न कर्तव्य इत्यायातमित्यत आहुः–मर्यादयेति । स्थितमिति । सर्वत्र सूत्रे भाष्ये चोक्तमित्यर्थः । तेनैवेति । एवकारेण तदतिरिक्तं साधनं नास्तीति सूचितमि"ति ।

ननु श्रीमदाचार्य्यचरणकृपाबलमेव केवलं पुष्टिस्थानां प्रबलं विश्वासबीजम् । तेन प्रदानवदेव पुष्टिमार्गस्थितिर्जीवस्य । तदेकानुग्रहाधीना हि सा । तथा च तत्कृपाबलेन चोदनादित्यागोऽस्माकमस्तीति चेत्,? भद्र! किमत्र नवीनमुल्लिखसि! तथैव हि वस्तुस्थितिः निःसाधनफलात्मकस्य केवलभावात्मकस्य शुद्धपुष्टिमार्गस्य प्रवर्तनायोद्युक्तानां श्रीमदाचार्य्यचरणानां सम्प्रदाये फलदशापन्नमहद्भिर्गम्यभक्तियोगशालिनामेवाऽतिशय आवश्यकः । फलार्थमेव मार्गप्रवृत्तिरिति । ततश्च तादृशफलाभिलाषोपजननाय फलस्वरूपादिविवेचनपरत्वाधिचारोऽपि भूयानिवाऽपेक्षितः । अन्यथाऽन्यत्रोत्कर्षबुद्धयुदयेन तत्राऽप्रवृत्तिः सुलभेति । एवञ्च फलानुभवोपकार्य्यर्थं चोदनादित्यागोऽपि तेषु नूनमावश्यक एव । कस्तावत्प्रमूढस्तं तादृशं प्रतिषेधतु । श्रीमदाचार्य्यचरणकरुणातारुण्यमेव च सर्वत्राऽत्र मूलम् । न चैतावता मार्गरुचेरपि यथावदनुष्ठाने तादृशफलशालिनामनुसरणेनाऽन्येषु तत्त्यागः फलांशको न भवति । तस्माद्यथाशास्त्रमेव वर्तितव्यं फलेप्सुभिः । न मनोरथवार्तया फलसिद्धिः, किन्तु विनाश एवोच्छास्त्रत्वकृत इति नैतद्विस्मार्य्यम् । ननु श्रीमदाचार्य्यचरणकरुणाबलविश्वासेन न विनङ्क्ष्यति? न विनङ्क्ष्यति! तथापि कोऽयं विश्वासप्रकारो येन तदुक्तावश्रद्धा तत्करुणाबले च निर्भरत्वमिति । तदिदं महदेव शाठ्यं नाऽनुगतत्वरूपं भक्तत्वं यदुत कथनाननुष्ठानम् । तत्रापि विरुद्धाचरणम् । तथापि स्वोद्धाराय तेष्वेव दूषणैकसब्रह्मचारी विश्वासोऽपि । वस्तुतो विश्वासकथनाडम्बरेण मुग्धान् व्यामोह्य पाषण्डप्रव-

र्तनार्थमेवाऽयं धर्मप्नजिलपर्य्यवसन्नो वाचःपेद्यो, न तु तादृशविश्वासे सति तरणितारम्भे तिमिरस्येव सकलम- र्यादोच्छेदेन स्वैराचारस्यांऽशतोऽपि सर्वथा सम्भवो यतः। तस्माधूक्तं श्रीमदाचार्य्यचरणैः–"निष्ठा च साधनै- रेव न मनोरथवार्त्तये"ति । श्रीमत्प्रभुचरणाश्च विज्ञप्तिष्वाहुः–"शास्त्रं नियामकं तावद्यावत्पूर्णा कृपा न ते। कृपया ते सुपूर्णस्य नैव कोऽपि नियामक" इति। पूर्णा कृपा च पूर्णमार्गरुच्या निधेया। एवं सति भगवता तत्प्र- कटितैः श्रीमदाचार्य्यचरणैश्च दर्शितया सरण्या पूर्णा कृपा यावद्भवति तावत् तदन्यथाऽऽचरणं चोदनादित्यागरूपं दोषायैवेति। तदुक्तं श्रीगीतासु "यः शास्त्रविधिमुत्सृज्य वर्त्तते कामकारतः। न स सिद्धिमवाप्नोति न सुखं न परां गतिम्। तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यव्यवस्थितौ। ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहाऽर्हसी"ति षोडशे। पुरुषोत्तमक्षेत्रस्थितः श्रीहरिः श्रीजगन्नाथोऽपि "एकं शास्त्रं देवकीपुत्रगीतमेको देवो देवकीपुत्र एव। मन्त्रोऽप्येकस्तस्य नामानि यानि कर्माऽप्येकं तस्य देवस्य सेवे"ति प्राह। सङ्कलितं तदर्थमाहुर्निबन्धशास्त्रार्थे श्रीमदाचार्य्यचरणाः–"शास्त्रमवगत्य मनोवाग्देहैः कृष्णः सेव्य इत्यर्थ" इति। शास्त्रं भगवद्गीता। तत एव "वेदाः श्रीकृष्णवाक्यानी"ति श्रीमदाचार्यचरणानां प्रमाणाङ्गीकारः । तत एव च "कृष्णवाक्यानुसारेण शास्त्रार्थं ये वदन्ति हि। ते हि भागवताः प्रोक्ताः शुद्धास्ते ब्रह्मवादिन" इति तदाग्रहवचनम्। "वेदमार्ग- विरोधेन येषां करणमण्वपि। ते हि पाषण्डिनो ज्ञेयाः शास्त्रार्थत्वेन वेधिण" इत्यप्याहुः सर्वनिर्णये श्रीमदा- चार्यचरणाः। स्वप्रकटिते साक्षान्मुख्यपुष्टिमार्गे तु शास्त्रविरोधो न प्रसरावसरं लभत इति चापि कण्ठरवेण- ऽऽहुः श्रीमदाचार्यचरणाः–"विरुद्धकरणं नास्ति प्रक्रिया न विरुध्यत" इति । तस्माच्छ्रीमदाचार्य्यचरणैः प्रमाणानुरुद्ध एव प्रमेयमार्गः प्रकटीकृत इत्यत्र नाऽवक्षिप्यत इदानीं स्तोकोऽपि सन्देह इत्येतत्स्फुटम्। प्रमेयबलेन तथाऽप्युद्धारावश्यकत्वाग्रहे तु भवत्युद्धारस्तेषामसुरादीनामिव, न तु भक्तानामिव तेषां सोऽस्ति, नापि मुख्यं फलम्। तस्माऽप्याग्रहे तु तदनुवर्तनादिनाऽन्येषु तदनुसरणादिना च तदनुगतेषु पाषण्डोदये सर्वस्याऽ- प्युद्धाराङ्गीकारापत्तिः। न चेष्टापत्तिः। तथा सति हा हन्त महती प्रबलैयमनवस्था श्रीमदाचार्यचरणप्रयास- विद्राविका मूलोच्छेदिनी सन्मार्गप्रमोषिणी पाषण्डताण्डविनी समस्तप्रतिष्ठोच्छ्रयसर्वङ्कषा राजनिग्रहादिप्रसङ्गेन सम्प्रदायप्रसिद्धिप्रलयङ्करी चापि प्रसजति। हा धिक्। कष्टम्। कष्टम्। वस्तुतस्तु पुष्टिपाषण्डिनामेषामुद्धारस्य का कथा, प्रत्युत सम्प्रदायविरोधेन प्रमेयविरुद्धतया परमोऽधोऽधः पात एवेति विशदमेतत्सुधियाम्।

अत्रैतत्सिद्धम्। मुख्यभक्तिमार्गे तथा तथा निरूपितोपयोगो ब्रह्मवादः, शुद्धपुष्टितत्फलप्रापिका साक्षाद्ध- र्मिपरा साक्षान्मुख्यपुष्टिमार्गरूपा स्वमार्गीया स्वेतरसर्वविलक्षणा मर्यादा, तथैव तत्फलरूपा पुष्टिपुष्टिश्चेति त्रितयमखण्ड एकः पुष्टिमार्गः, न त्वत्र वस्त्वन्तरमस्ति, नाऽप्यत्र तारतम्यमपि सगुणनिर्गुणत्वादिरूपं वा, साधनसाध्यत्वतदसाध्यत्वरूपं वा, प्रमाणोपपन्नत्वतदभावरूपं वा प्राप्नोति, किन्तु तादृशातिशयितानुग्रहैकसाध्य- फलोपलब्धिहेतवे ब्रह्मवादसाक्षाद्धर्मिपरमर्यादयोः साक्षात्तादृशानुग्रहैकाधीनस्थितिकतयैव तादृशेऽधिकारिविशेषे प्रमाणैः समुदयनिर्णयात्तत्त्रितयमेकरूपमेव। एकत्वत एवंविधात् "साकारब्रह्मवादैकस्थापक" इत्यत्रैकपदस्य तदितरव्यावर्तनपरत्वेन साकारब्रह्मवादपदत एव फलात्मकपुष्टिमार्गमपि सङ्गृह्याऽभिदधुः श्रीमत्प्रभुचरणाः। एवञ्च साकारब्रह्मवादः पुष्टिमार्गश्चेति पर्य्यायाभ्यां पदाभ्यामेकस्यैव वस्तुनो व्यपदेशः, न वस्त्वन्तराभिलापः। साक्षाद्धर्मिपरा च मर्य्यादा साक्षान्मुख्यपुष्टिमार्गरूपेति साकारब्रह्मवादपदेनैव तदभिधानमपि। साकारब्रह्मवा- दश्चैवंविधो, नाऽन्यरूप इति सोऽपि साक्षान्मुख्यपुष्टिमार्गरूप एव । ततश्च तथा तथा विभक्तत्वेन तदुपपादनं साधनफलरूपत्वादिविशेषावबोधद्वारा बाल्युत्पादनैकप्रयोजनम्, न त्वेतावता ब्रह्मवादसाक्षाद्धर्मिपरमर्यादयोः भिन्नार्थत्वमास्थाय पुष्टिपुष्टेः प्राधान्यभिलापसम्भ्रमरभसेन तत्परित्यागः श्रीमदाचार्य्यचरणसिद्धान्तबहिर्भूतः सर्वथैव फलोपघातकः स्वप्नेऽपि कर्तव्यतयाऽनुसन्धेयः। एवमेव हि श्रीमदाचार्य्यचरणसिद्धान्ते "मयि सर्व- मिदं प्रोतं सूत्रे मणिगणा इव" इति न्यायेन सकलशास्त्रसमन्वयः सिद्ध्यति। तेनैव तत्र तस्य प्रामाणिकत्वा- पाषण्डत्वादिसिद्ध्या सकलस्य श्रेयोऽर्थिनो जनस्य तत्राऽऽदरः सिद्ध्यति। तथा च निरस्तसमस्तसंशयप्रसरसम्भवं निर्मुक्तनिखिलावयं सकलकल्याणगुणगणोत्तरं प्रमेयज्ञानादिभिरप्याशास्यप्रवेशोत्सवं सर्वनिर्मत्सरविद्वद्वर्गरसनीय- रससन्दोहैकरसायनं समस्तसन्मतमौलिलालितप्रशस्तिशासनञ्च सूर्य्यवदस्तनिमञ्छनीयविद्योतमभिविद्योत-

सेतमां श्रीमदाचार्य्यचरणसम्मतं मतं दिगन्तरेष्विति तदनुसरणमेवाऽऽवश्यकं विदुषाम्। भूषणवाऽपि तेषां
तदेव। तत एव हि जगतां मङ्गलमिति। अन्यथा तु "अयमेव महामोहो हीदमेव प्रतारणम्। यत्कृष्णं न
भजेत्प्राज्ञः शास्त्राभ्यासपरः कृती"ति श्रीमदाचार्य्यचरणवचनेन तद्दुष्यवैयर्थ्यजनितो दुष्प्रसह एव तेषां, तद-
नुगानां च खेदः। तस्मादसम्भावनाविपरीतभावनाद्युत्साय पापण्डिनामसद्वादाननुसन्धाय तादृशपुष्टिपथप्रण-
योदयकृतार्थितजीवनैरेव भवितव्यं विद्वज्जनैः। भ्रान्तैश्च प्रमादपुञ्जितया श्रीमदाचार्यचरणैकशरणैस्तदुपदेशैक-
पीयूषपाणिभिः स्वपथादप्रमाद्यद्भिर्वर्तितव्यम्, न तु त्यागाद्युदयप्रवृत्त्या मार्गप्रमोषोऽनधिकारपराहतैरुप-
स्थाप्य इति।

निजैः पितृपादैः श्रीमदाचार्य्यचरणैः प्रकटितोऽयमेवेत्थम्भूत एव च स्वसिद्धान्तः श्रीमत्प्रभुचरणैः प्रका-
शितः, स एव च श्रीमद्गोकुलाधीशैस्तत्सुतरैर्विसंवादितः।

एष पुनर्विशेषः। श्रीमदाचार्य्यचरणेषु "आचिनोति च शास्त्रार्थानाचारे स्थापयत्यपि। स्वयमाचरते यस्तु
तमाचार्य्यं प्रचक्षत" इति वचनेन शास्त्रार्थाचयनं परमावश्यकम्। शास्त्रार्थाचयनञ्च साध्यसाधनेतिकर्तव्यतो-
पदेशरूपसकलशास्त्रार्थव्यवस्थापनपूर्वकं सपरिकरतन्मुख्यार्थनिर्धारणम्। तच्च व्यासप्रवृत्तिमनुसृत्य तत्तत्-
सूत्रसमाधिभाषयोर्व्याख्यानेन समस्तसंशयनिरसनपुरस्सरं वेदार्थं निर्धार्य "अधुना त्वधिकारास्तु सर्व एव
गताः कलौ। कृष्णश्चेत्सेव्यते भक्त्या कलिस्तस्य फलाय हि। सर्वेषां वेदवाक्यानां भगवद्वचसामपि। श्रौतोऽर्थो
ह्ययमेव स्यादन्यः कल्प्यो मतान्तरैरि"ति कृष्णसेवासिद्धान्तं प्रकाशयद्भिः साधितं श्रीमदाचार्य्यचरणैः। तत्र च
शास्त्रीयतत्तदर्थव्यवस्थापनप्रसङ्गे सत्फलमात्रं प्रति हेतुत्वमनुग्रहस्य व्यवस्थापितम्। सर्वासां सर्गादिलीलानां
पुष्टिरूपत्वमपि "सर्वा लीलाः पुष्टिमध्ये प्रविशन्तीति मे मतिरि"त्यादिभिर्निरणायि। शुद्धपुष्टिरूपस्य साधनतः
फलतश्च स्वतन्त्रं निर्धारितम्, तत्परिकरतया च सर्वं सिद्धान्तजातं योजितम्। आचार्य्यतया सर्वशास्त्रव्या-
ख्यानेऽपि तत्र च तत्सिद्धान्तानां पूर्वोक्तरीत्या पुष्टिरूपाणां तेषां तेषां प्रदर्शनेऽपि "तत्र तत्राऽञ्जसाऽऽयुष्मन्
भवता यद्विनिश्चितम्। पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसी"तिवत् "अतः साधोऽत्र यत्सारं समुद्धृत्य
मनीषया। ब्रूहि नः श्रद्दधानानां येनाऽऽत्मा सुप्रसीदती"तिवच्च तेषां तात्पर्यन्तु "कृष्णसेवा सदा कार्ये"-
त्यादिनोक्तसाध्यसाधनभावापन्ने शुद्धभक्तिमार्गे तदुपयोगिनि ब्रह्मवादे च। "नत्वा हरिं प्रवक्ष्यामि स्वसिद्धान्त-
विनिश्चयमि"ति वचनात् "अतस्तु ब्रह्मवादेन कृष्णे बुद्धिर्विधीयतामि"ति वचनाच्च। तेन शास्त्रार्थाचयनरूपत्वं
श्रीमदाचार्य्यचरणप्रबन्धेषु। स्थूणानिखननन्यायेन दार्ढ्याय वादिपुङ्गवानुसारितेन प्रचारसंसिद्धये च विशेषतो
वादमुद्रया तु यथोक्तनिष्पन्नतात्पर्यनिर्णायकत्वं श्रीमत्प्रभुचरणीयेषु प्रबन्धेषु।

निर्णयश्चैष साध्यसाधनभावापन्नमुख्यभक्तिमार्गस्वरूपं भक्तिहंसेन विविच्य, भक्तौ च यदसाधारणं कारण-
मनुग्रहस्तं भक्तिहेतुनिर्णयेन विनिश्चित्य, विद्वन्मण्डनेन साकारब्रह्मवादं सिद्धान्तयद्भिश्चान्वेव साध्येव च सम्पा-
दितः। तत्रापि निरोधटिप्पण्या मुख्यभक्तिमार्गं वैशद्येन व्याख्याय, तन्निष्कृष्टार्थं शृङ्गाररसमण्डनादिभिर्विव-
ष्यादिभिश्च निगमनरूपेणोपवर्ण्य, तत्राभावसम्भावाय श्रीमदाचार्यचरणपादारविन्दानुध्याननिष्ठा श्रीमत्प्र-
वोत्तमश्लोकादिभिरुपदिशद्भिः स फलपर्य्यवसायीकृतः। फलपर्य्यवसितत्वावश्यकत्वान्वेव च विद्वन्मण्डने प्राधा-
न्येन फलांशोपपादनं तदुपयोगितया च ब्रह्मवादनिरूपणम्। तत एव हि तत्र ब्रह्मवादादिना ज्ञानमार्गादि-
पर्य्यवसानमसाम्प्रदायिकसंसर्गादिना स्वीयानां मा भूदित्याशयेन श्रीमन्निजाचार्य्यमुख्यतात्पर्य्यकरः शुद्धपुष्टि-
सिद्धान्तनिगर्वो "निजमुरलिकानादाह्वानागते"त्यादिना मङ्गलश्लोकेन पृथक् स्पष्टं प्रागेवोपदर्शितः। फलैक-
पर्य्यवसितत्वायैव च पूर्वोक्तरीत्या ब्रह्मवादैकोपपाद्यत्वेऽपि तान्नुपपत्तिं विद्वन्मण्डनतः पत्रावलम्बनादितश्च
विभाव्य शुद्धं फलांशमुल्लासयन्तः शृङ्गाररसमण्डनादयो विशत्यादयश्च ग्रन्थास्तैः पृथक् प्रकटीकृताः।

तदेवं परिनिष्ठितपाण्डित्योदये उपपाद्यविषयसमुचितप्रतीकोपादानपाटवेन विदुषां ग्रन्थगहननिस्सरणं मर्मज्ञ-
जनमनोविनोदनं यथा तथैव श्रीमदाचार्य्यचरणप्रणीतग्रन्थानां सकलशास्त्रपारपारावारविलोडनेन तदर्थसद्-
लराशिसम्पादनशौण्डानां शास्त्रीयसमुचितप्रतीकावलम्बिविवेचनानां मुक्तिोदात्तगभीरश्रयविशेषाणां भाष्य-

सुबोधिन्यादीनां परमाश्चर्य्यचर्य्याणां विद्वत्समाजसपर्य्याभिः पर्य्यासितत्वम् । एवमेव च श्रीमत्प्रभुचरणग्रन्थानां श्रीमदाचार्य्यचरणप्रबन्धनिष्पन्नतात्पर्यप्रकाशनैकपाण्डित्यवरिष्ठानां तद्भावाशयवशीकारकार्मणप्रक्रियापरिष्कारशालिनां चमत्कारकारिप्रतीकौचित्यविचारचातुर्य्यचित्रीकृतविपश्चिदपश्चिमचित्तानां विषयान्तरविस्मारकत्वं सहृदयहृदयाह्लादनत्वञ्च । तदहो नु खलु भोः ! ! ! अतिरुचिररुचिरः सुमधुरमधुरो मार्मिकमनोविमोहनश्च श्रीमदाचार्य्यचरणश्रीमत्प्रभुचरणप्रबन्धानां सन्निवेशस्तेन च साङ्गोपाङ्गसम्प्रदायस्वरूपसमर्थने सम्यगेव निष्पन्ने तैः संसाधितः कोऽप्यपूर्वो महामोदोत्सवश्च विद्वन्मुकुटमणीनाम् । अस्यावर्यधाऽपि तदीयानां तदास्वादसौभाग्यशेवधिः कोऽपि ।

भवतु । एवमवान्तरप्रयोजनभेदेऽपि सिद्धान्ततोऽर्थैक्यं तद्ग्रन्थानां स्फुटम् ।

यथा शास्त्रार्थाचयनं श्रीमदाचार्य्यचरणैरनुष्ठितं विभाव्य तत्राऽप्रवृत्त्या तत्प्रबन्धसिद्धार्थदार्ढ्यादिप्रयोजनायैवाऽऽवश्यकत्वाच्छ्रीमत्प्रभुचरणानां प्रवृत्तिः, तथैव ब्रह्मवादादिसिद्धिं विद्वन्मण्डनादितो विभाव्य तदंशे प्रवृत्तिमविधाय यस्या अयमेतावान् परिकरबन्धः श्रीमदाचार्यचरणश्रीमत्प्रभुचरणानां, तस्मिन् फलांशे प्रमाणानुदयाय विशेषतस्तमेवोपपादयाञ्चक्रुः श्रीमद्गोकुलाधीशः । तथापि तदुपकरणतया प्रसक्तानुप्रसक्तन्यायेन साक्षाद्धर्मिपरां मर्य्यादामपि तत्र तत्राऽङ्गीचक्रुरेव । तदुपयोगमपि फलांशे व्यवस्थापयामासुरेव । साधनरूपत्वेऽपि फलरूपत्वं तस्या उपपादयाम्बभूवुरेव । तादृशस्नेहोदयशालिनामपि तदपरित्यागं च समनुमेनिर एव । एतत्तु तैः प्रणीतासु षोडशग्रन्थटीकासु सावहितेन मनसा विलोकयतां विद्वज्जनैः ।

तथाहि–पुष्टिप्रवाहमर्यादाभेदनिरूपणग्रन्थे "भक्तिमार्गस्य कथनात्पुष्टिरस्तीति निश्चय" इत्येतद्व्याख्यायां प्राहुः "यद्यपि भक्तिमार्गा मर्य्यादादिभेदेन बहव एव श्रीभागवतादुक्ताः सन्ति । तथा च कपिलदेवैरुक्तम्–"भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यत" इत्यादि । तथा चैकादशेऽपि योगेश्वरैर्भक्तभेदकथने भक्तिभेदा उक्ता एव । तथापि शुद्धपुष्टिमार्गाचार्य्यै"र्भक्तिमार्गस्य कथनात्पुष्टिरस्तीति निश्चय"इति यदुक्तं तस्याऽयमाशयः–तत्र कपिलयोगेश्वराद्युक्तप्रकारेषु शुद्धपुष्टिलक्षणाभावान्न शुद्धपुष्टिभक्तित्वम् । अत एव शुद्धपुष्टिलक्षणमाहुः । "माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चाऽन्यथा" इति नारदपञ्चरात्रकथनाद् यद्यपि स्नेहो भक्तिरित्येतावदेव मुख्यं भक्तिलक्षणम्, तथापि "माहात्म्यज्ञानपूर्वस्त्वि"ति विशेषणकथनस्याऽयमभिप्रायः–प्रथमत एवाऽऽचार्य्यप्रकटितभक्तिमार्गे प्रवृत्तस्य यावत् सुदृढः सर्वतोऽधिकः स्नेहो भवति, तावत् सेवादिकरणे अपराधाभावार्थं महात्म्यज्ञानस्योपयोगः । सुदृढस्नेहोत्पत्त्यनन्तरं तस्य स्वत एव निवृत्तेः । अत एव पूर्णमाहात्म्यज्ञानवतां श्रीदेवकीमातृचरणानामपि शुद्धपुष्टिमार्गस्नेहोत्पत्त्यनन्तरं माहात्म्यज्ञानतिरोभावात् "समुद्विजे भवद्धेतोः कंसादहमधीरधीरि"ति वचनम् । अन्यच्च, तत्रैव व्रजवासिनां सुदृढस्नेहवतामवस्थासाधनविरुद्धसर्वांशक्यश्रीगोवर्द्धनोद्धरणम्, तेन च क्षुत्पिपासाद्यखिलशारीरधर्मनिवृत्तिपूर्वकं सपरिकरसर्वव्रजरक्षाकरणम् । आत्मयोगानुभावेन श्रीगोवर्धनोपरिस्थितपक्षिपश्वादिरक्षाकरणरूपात्यद्भुतानिर्वचनीयमाहात्म्यं दृष्ट्वाऽपि वृष्टिनिवृत्त्यनन्तरं श्रीगोवर्धनच्छायातः सर्वान् बहिरानीय श्रीगोवर्धनं यथास्थानं सम्यक् स्थापयित्वा बहिरागमनानन्तरं दृष्टमाहात्म्यस्मरणसम्भावनारहितैर्व्रजवासिभिर्व्रजसीमन्तिनीभिश्च भगवति दध्ना तिलकं विधाय तदुपरि अक्षतान् स्थापयित्वा जलं श्रीभगवदुपरि भ्रामयित्वा तज्जलपानेन तदनन्तरमाशीर्योजनेन सुदृढस्नेहवत्त्वात् स्नेहकार्य्यमेव सर्वैर्व्रजवासिभिः कृतं, न तु माहात्म्यदर्शनजनितगौरवेण नमनविज्ञप्त्यादिकमपि । तदेवोक्तं"तं प्रेमवेगान्निभृता व्रजौकस" इत्यादिना । अतो यावत्सुदृढः स्नेहो भवति, तावदेव माहात्म्योपयोगः, न तु सुदृढस्नेहोत्पत्त्यनन्तरमपीति सर्वमनवद्यम् । एतदेव भक्तिमीमांसायां शाण्डिल्यैरपि "अथातो भक्तिजिज्ञासे" त्युक्त्वा"सा पराऽनुरक्तिरीश्वर" इत्येव भक्तिलक्षणमुक्तम् न तु महात्म्यज्ञानपूर्वकत्वमपि । अत एव यत्र परानुरक्तिस्तत्र परानुरक्तेरेव सर्वात्मना प्राबल्यम्, न तु माहाम्यज्ञानसद्भावस्याऽपि । अत एव श्रीगोकुले मृत्भक्षणप्रस्तावे श्रीमुखव्यादानानन्तरं सम्पूर्णब्रह्माण्डदर्शनानन्तरं पूर्णमाहात्म्यज्ञाने जातेऽपि श्रीमातृचरणानां परमानुरक्तिवशान्माहात्म्यज्ञानस्यैव तिरोभावः न तु पुत्रत्वभावस्याऽपि । तस्मान्माहात्म्यज्ञानाद्युपाधिरहितः साक्षाद्धर्मिस्वरूपपर्य्यवसायी सुदृढः ज्ञानादिसर्पानपनोद्यः सर्वतोऽधिकः

अगणितानन्दरूपः अतुल्यातिशयः एतादृशः स्नेह एव भक्तिपदवाच्यः एतादृग्भक्तिमार्गस्य कथनात् प्रमाणपूर्वकं निरूपणात् पुष्टिमार्गोऽस्तीति निश्चयः। यथा श्रीगोकुले। अत एव श्रीमदाचार्य्यैरुक्तम् "निःसाधनफलात्मायं प्रादुर्भूतोऽस्ति गोकुले" इति। अत एव श्रीगोवर्द्धनोद्धरणप्रस्तावे "तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहमि"त्यादिना भगवता सप्तदिवसधारणेन लोके जीवानां देवऋषिपित्रात्मात्मीयैहिकपारलौकिकेति सप्त रक्षकाः प्रसिद्धाः, तद्रक्षातः पृथक्कृत्य स्वसम्बन्धस्थापनेन स्वयमेव रक्षाकरणेन केवलस्वीयत्वसम्पादनं पुष्टिस्वरूपमिति ज्ञापनायाऽऽचार्य्यैरुक्तं–"पुष्टिरस्तीति निश्चय इती"ति।

विवक्षितभक्तिस्वरूपवैलक्षण्यमवधापयितुं भक्तिभेदान् स्मारयन्ति यद्यपीत्यादिना भक्तिभेदा उक्ता एवेत्यन्तेन। विवक्षितभक्तेरन्येष्वेवाऽन्तर्भावे शुद्धपुष्टिमार्गाचार्य्यैस्तत्कथनं प्रयोजनाभावादनुपपन्नमित्यन्यथानुपपत्तिबलात्तत्र वैलक्षण्यानुसन्धित्सामुद्बोधयन्ति–तथापि शुद्धेत्यादिना तस्यायमाशय इत्यन्तेन। वैलक्षण्यमेवाहुः–तत्र कपिलेत्यादिना न शुद्धपुष्टिभक्तित्वमित्यन्तेन। शुद्धपुष्टिभक्तिस्वरूपविवरणेन तद्वैलक्षण्यमुपपादयन्ति–अत एवेत्यादिना एतादृशः स्नेह एव भक्तिपदवाच्य इत्यन्तेन। साधनफलदशाभिप्रायेण गौणमुख्यभेदभिन्ना शुद्धपुष्टिभक्तिरुभयी चेह नारदपञ्चरात्रवाक्ये एकतन्त्रेण लक्षितेत्याहुः–यद्यपीत्यादिना माहात्म्यज्ञानस्योपयोग इत्यन्तेन। तथा च गौणभक्तिलक्षणाभिप्रायेणेह माहात्म्यज्ञानपूर्वस्त्विति विशेषणम्, न मुख्याभिप्रायेणेति स्फुटमेतत्। गौणत्वमुख्यत्वे स्फुटयन्ति–सुदृढेत्यादिना स्वत एव निवृत्तेरित्यन्तेन। तेन फलोपकार्य्यङ्गत्वे सति सुदृढस्नेहात्मकफलोपमर्दकत्वं गौणत्वम्। फलत्वे सति माहात्म्यज्ञानाभिभावकत्वं मुख्यत्वम्। यत्र फलत्वेऽपि श्रीमातृचरणादिषु फलोपकारित्वेन फलानुभवसमये तिरोहितत्वेन च माहात्म्यज्ञानस्याऽविरुद्धा स्थितिस्तत्र साधनदशावत्तु तदुपयोगाभ्यनुज्ञा सर्वथैवेत्यभिप्रायेण गौणत्वमुख्यत्वयोरित्थम्भावं सोदाहरणमुपपादयन्ति–अत एव पूर्णेत्यादिना न तु पुत्रभावस्याऽपीत्यन्तेन। तथा च माहात्म्यज्ञानस्य स्नेहात्पूर्वत्वं नाम स्नेहोपकार्य्यङ्गत्वे सति सुदृढस्नेहोपमर्दकत्वम्। एवञ्च साधनफलदशाभेदेन व्यवस्थितोदयविकल्पं यन्माहात्म्यज्ञानं तत्सहितः स्नेहो भक्तिरिति नारदपञ्चरात्रवाक्यार्थः। तेन साध्यसाधनभावापन्ना द्वय्यपि शुद्धपुष्टिभक्तिरत्र संगृह्य लक्षिता। तत्र माहात्म्यज्ञानसहितः प्रतिबन्धानुदयेन सततमभिवर्द्धमानोदयो यः स्नेहः "श्रद्धामृतकथायां मे" इत्याद्युक्तरूपाऽविच्छिन्ना मनोगतिः,–स्नेहवदनुपदेशसमुज्जीविता भगवदनुग्रहैकलभ्या मार्गरुचिः सुदृढस्नेहैकबीजरूपा, सा, साधनभावापन्ना शुद्धपुष्टिभक्तिः। इह हि सुदृढस्नेहसिद्धये सेवादिकरणेऽपराधाभावार्थं माहात्म्यज्ञानस्योपयोग उक्तः। सुदृढः स्नेहो मानसीरूपः "सा नाऽविदन्मय्यनुषङ्गबद्धधिय" इत्याद्युक्तः। तत्सिद्धये च सेवा तनुवित्तजा। सा च स्नेहवदुपदेशानुसारितया तत्स्नेहैकरसा वेदाविरुद्धतया च मर्यादापन्नेति भक्तिहंसे निर्णीतम्। तत्र शास्त्रविरोधेन स्नेहविरोधेन च वर्तनमपराधः। तत्र शास्त्रतो द्रव्यशुद्ध्याद्यनङ्गीकारः शास्त्रविरोधः। शास्त्रतो लोकतः स्वतश्च प्रियाप्रिययोर्योग्यायोग्यवस्तुनिर्धारणेन स्नेहविरोधः। अहमेतावतीं सेवां करोमि इत्याद्युल्लेखश्च शास्त्रतो लोकतश्चोभयस्मादपि विरुद्धः। एवं विरुद्धाचरणेनाऽपराधे फलासम्भवः, फलविलम्बो वा, प्रत्युत पातसम्भवोऽपि। "किमासनं ते गरुडासनाये" त्याद्युक्तरूपे माहात्म्यज्ञाने तु सर्वथैव नोत्सेकसम्भव इति नोभयविधोऽप्यपराधः, प्रत्युत नमनादिना शास्त्रस्नेहाविरोधाचरणसम्पत्तिरपि। "नमस्कृत्य हि यवीयांसमुपचरन्ती"ति श्रुतेः। "अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्य्येव मे भवेत्। भूर्य्यप्यभक्तोपहृतं न मे तोषाय कल्पते" इति भगवद्वाक्याच्च। ततश्च फलावश्यम्भावः एवं माहात्म्यज्ञानेनाऽपराधाभावेऽप्रतिहताभिवृद्ध्या सुदृढस्नेहात्मकफलरूपेण नियतं परिणंस्यमानः स्नेहः साधनदशापन्ना गौणी शुद्धपुष्टिभक्तिरिति व्यवस्थापितम्। ततः फलितां मुख्यां फलदशापन्नां तां निगमयन्ति–तस्मादित्यादिना स्नेह एव भक्तिपदवाच्य इत्यन्तेन। माहात्म्यज्ञानाद्युपाधिरहितः साक्षाद्धर्मिस्वरूपपर्य्यवसायीति विशेषणद्वयं धर्मद्वारा धर्मिपराया मर्यादातोऽस्या वैलक्षण्यार्थम्, न गोप्याः सकाशाद्वैलक्षण्यं ज्ञापयितुम्। स्नेहानुपाधित्वे सति सेवाङ्गत्वेन माहात्म्यज्ञानस्य व्यवस्थापनेन तत्सहितायाः शुद्धपुष्टिभक्तेः साक्षाद्धर्मिपरत्वस्य प्रस्फुटत्वात्। एवमतिविलक्षणं साध्यसाधनभावापन्नं स्वमार्गीयं भक्तिपदार्थं निधाप्य प्रकृतं व्याचक्षते–एतादृग्भक्तिमार्गस्येत्यादिना पुष्टिरस्तीति निश्चय इतीत्यन्तेन। प्रमाणपूर्वक-

मित्यादि । तेनाऽप्रामाणिकत्वपाषण्डत्वादिशङ्काव्युदासः । प्रमाणं श्रीभागवतपञ्चरात्रादि । तदिह दर्शितमेव । एवञ्च केवलस्वीयत्वसम्पादनलक्षणः पुष्टिमार्गः प्रमाणोपपन्न इति तत्स्वीकारिभिर्निःसन्देहैर्भवितव्यम्, न त्वप्रामाणिकत्वादिबुद्ध्या तदनङ्गीकारेणाऽऽत्महत्यादिभिरधोऽधः पातयितव्य आत्मेतीहोपदिष्टम् ।

अत्रैवं धर्मद्वारा धर्मिपराया मर्यादातो वैलक्षण्यज्ञापनेन साक्षाद्धर्मिपरायाः साधनदशापन्नाया गोप्याश्च सकाशाद्वैलक्षण्योपपादनेन शुद्धः फलांशो यद्यपि 'भक्तिमार्गो' इत्यादिना 'पुष्टिरस्तीति निश्चय' इतीत्यन्तेन प्रपञ्चकेन सर्वोत्कृष्टत्वेन सम्यगेवोपदिष्टः । तेन तत्र तत्र भक्तिपदसाधर्म्येण फलात्मकस्वमार्गत्वभ्रमो मुग्धानां नोदेष्यतीति । स एव हि पुष्टिस्थानां मुख्यो मार्गो, नाऽन्य इति । तथाप्याधुनिकानां तादृशाधिकार-राहित्येन गोप्यैव शुद्धपुष्टिभक्त्या मुख्यशुद्धपुष्टिभक्तिलाभमभिप्रेत्य स्वमार्गीयायाः साक्षाद्धर्मिपराया मर्यादायाः समादरो व्यवस्थापित एव, फलांशे तदुपयोगो बोधित एव, साधनरूपत्वेऽपि फलरूपत्वादि च शुद्धपुष्टिभक्तित्वेन तस्याः सूचितमेवेतीह नैदाघमध्याह्नवत्प्रचुरतमप्रकाशपूरपरिपूर्णं, नांऽशतोऽपि मन्दप्रकाशमित्यभिव्यक्तमेतत्सुधीजनानाम् ।

भक्तिवर्धिनीव्याख्यायाञ्च "अव्यावृत्तो भजेत्कृष्णमि" त्यत्र साधनदशापन्नायाः फलरूपत्वं व्याख्यायि । तद्यथा—"अत्र भजने कृष्णपदस्य फलवाचकत्वेनेदं भजनं मम फलरूपमिति" ज्ञात्वा भजनं कर्तव्यम्, न तु साधनबुद्ध्या । यद्यप्यग्रे "लभते सुदृढां भक्ति" मित्यनेनाऽलौकिकदेहसम्पत्तिपूर्वकं साक्षात्पुरुषोत्तमभजनस्यैव फलत्वोक्त्याऽऽधुनिकभजनस्य साधनत्वमायाति, तथापि पुष्टिमार्गे पुरुषोत्तमस्यैव भजनीयत्वाद् यद्यप्याधुनिकभजनेऽलौकिकदेहसम्पत्तिर्नास्ति तथाऽप्याधुनिकभजनस्य पुरुषोत्तमपर्य्यवसायित्वमेवेत्यस्याऽपि फलरूपत्वमिति ज्ञापनायोक्तम्—इदं भजनं मम फलरूपमिति ज्ञात्वा भजनं कर्तव्यमिति । ननु एकस्यैव साधनरूपत्वं फलरूपत्वञ्च कथं सम्भवतीति चेत्, सत्यम् । साक्षात्पुष्टिमार्गीयफलस्येतरसाधनासाध्यत्वात्पुरुषोत्तमभजनमेव साक्षात्पुष्टिमार्गीयफलसाधकम् । यथा महाराजस्य धार्य्यमपि सुवर्णरत्नादिकमेव, व्यवहार्य्यमात्राण्यपि तन्मयान्येव । अथ च कोशे सङ्ग्राह्यमपि सुवर्णरत्नादिकमेव । यतस्तस्य महाराजस्य सर्वतोऽधिकत्वात् । सुवर्णस्याऽपि सर्वधात्वपेक्षयोत्कृष्टत्वात्तथा । तद्वदस्य फलस्य सर्वोत्कृष्टत्वभावात्सर्वोत्कृष्टमेव साधनमपेक्षितम् । सर्वोत्कृष्टस्य साधनस्य विचारे क्रियमाणे भजनातिरिक्तस्य सर्वोत्कृष्टत्वाभावात्सर्वोत्कृष्टमेव साधनं सर्वोत्कृष्टफलमेवेति भजनमेव साधनं भजनमेव फलमिति नाऽनुपपत्तिः काचित्" इति ।

गुरुस्नेहवतामपि साधनदशापन्नायाः शुद्धपुष्टिभक्तेरपरित्यागमाहुः—पुष्टिप्रवाहमर्यादाभेदनिरूपणग्रन्थे "लौकिकत्वं वैदिकत्वं कापट्यात्तेषु नाऽन्यथा । वैष्णवत्वं हि सहजं ततोऽन्यत्र विपर्य्यय" इत्येतत्कारिकाव्याख्याने ।

तथाहि "ननु यदि तेषां केवलं भगवत्परत्वमेव, तर्हि श्रौतस्मार्तकर्माचरणे को हेतुरिति चेत्, तत्राऽऽहुः—लौकिकत्वं वैदिकत्वमिति । यद्यपि ज्ञानमार्गीयस्याऽपि भक्तस्य "तावत्कर्माणि कुर्वीते" त्यनेन श्रौतस्मार्तकर्माचरणस्याऽनावश्यकत्वं श्रूयते । पुष्टिमार्गीयाणामपि, "यानास्थाये" ति वाक्यात् । अत्र 'आस्थायेत्यास्थानं नाम कायवाङ्मनसां तदेकपरत्वम् । तादृशानामपि श्रौतस्मार्तकर्माचरणानावश्यकत्वेऽपि यत्कर्माचरणं तत्र को हेतुरित्याशङ्क्य हेतुमाहुः—वैदिकत्वं लौकिकत्वं कापट्यादिति । वैदिकत्वं वैदिककर्माचरणम् । लौकिकत्वं लौकिकव्यवहारादिप्रतिपालनम् । तत्तेषु कापट्यात् । कापट्याद्धेतोरित्यर्थः । कापट्यं नाम लोकसङ्ग्रहः । अत एव भगवताऽप्युक्तम् "सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत । कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसङ्ग्रहम् । न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् । जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन्नि" ति भगवद्वाक्यात्तन्मार्गीयपूर्णभक्तिमतां लौकिकवैदिककर्माचरणं लोकसङ्ग्रहार्थमेव, न तु कर्मासक्तानामिव परमपुरुषार्थरूपत्वेन । यद्यपि तेषां पूर्वोक्तकर्मकरणमनासक्तिपूर्वकं लोकसङ्ग्रहार्थमेवेत्युक्तम् । तर्हि तेषां कस्मिन् कर्मणि आसक्तिपूर्वकं करणमिति चेत्, तत्राऽऽहुः—वैष्णवत्वं हि सहजमिति । वैष्णवत्वं नाम पुष्टिमर्यादाप्रवर्तकाचार्योपदेशपूर्वकं तदुक्तप्रकारेण तन्मार्गानुवर्तित्वम् । तदेव तेषां सहजो धर्मः । स्वाभाविको धर्मः—सहजमिति । तेन तन्मार्गीया-

त्वेन धर्माणामासक्तिपूर्वकं करणम्। ततोऽन्यत्र ततो वैष्णवधर्मातिरिक्तधर्मेषु विपर्ययः पूर्वोक्तप्रकारः—अनासक्तिपूर्वकं करणम्। लोकसङ्ग्रहार्थं करणमित्यर्थ इति।

ननु कायवाङ्मनोभिर्भगवद्धर्मपराणां लोकसङ्ग्रहार्थमपि लौकिकवैदिककर्माचरणे प्रवृत्तिर्दुर्घटा। भगवद्धर्मविरोधित्वादित्याशङ्क्य तत्समाधानमाहुः—भगवद्वाक्यादित्यादि। तथा च भगवद्वाक्यबलेन लोकसङ्ग्रहाय तेषां लौकिकवैदिककर्माचरणम्, न विधिवाक्यबलेन, येन तद्विरोधः सम्भवेत्। आज्ञानुपालनस्य सेवकधर्मतया भगवद्वाक्यप्राप्तं तु भगवद्धर्मरूपमेवेति भावः।

एवञ्च यत्र स्वमार्गीयपूर्णभक्तिमतामपि लोकसङ्ग्रहार्थं लौकिकवैदिककर्माचरणमावश्यकम्। भगवद्दासत्वेन तथा तदनुष्ठानस्य सेवकधर्मत्वात्। तत्र तादृशभक्त्युदयमिच्छतां दासत्वेन तथा तदनुष्ठानस्याऽऽवश्यकत्वे किं वाच्यम्। "देशान् पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान्। देवासुरमनुष्येषु मद्भक्ताचरितानि चे" ति भगवद्वाक्येन तादृशदासाचरणाश्रयणस्याऽऽवश्यकत्वात्। फलदशापन्नभक्तिशालिनां स्वतन्त्रपुरुषार्थत्वेन लोकसङ्ग्रहरूपसेवकधर्मानुष्ठानम्। फलोदयमभीप्सतां तु परतःपुरुषार्थतया स्वमार्गीयसाधनत्वेनेति विशेष इत्यन्यदेतत्।

एतेन येषां लोकसङ्ग्रहापेक्षा, तैः कापट्याच्छ्रौतस्मार्तकर्माण्यनुष्ठीयन्ताम्। येषां च तदनपेक्षा, तैस्तु कामं तानि परित्यज्यन्तामिति ग्रन्थानारूढमेव किञ्चिदुत्प्रेक्षमाणाः प्रत्युक्ता वेदितव्याः। सेवकधर्मत्वेनैव तदनुष्ठानावश्यकतोपपादनात्।

ननु भक्तिवर्धिनीव्याख्यायां "यथा भक्तिः प्रवृद्धा स्यात्तथोपायो निरूप्यते। बीजभावे दृढे तु स्यात्त्यागाच्छ्रवणकीर्तना" दित्यत्र 'त्यागा' त्पदव्याख्यायां "एतन्मार्गीयातिरिक्तसाधनत्यागादि" त्याहुः श्रीगोकुलाधीशाः। तथैव "बीजदार्ढ्यप्रकारस्तु गृहे स्थित्वा स्वधर्मत" इत्यत्र 'स्वधर्मतः' पदव्याख्यानेऽप्याहुः—"अत्र स्वधर्मपदेन वर्णाश्रमधर्मा न विवक्षिताः, किन्तु स्वमार्गीयभगवद्धर्मा विवक्षिता" इत्यादि। तेन पुष्टिभक्तिमभीप्सुभिर्वर्णाश्रमाचारास्त्याज्या इति चेत्, सत्यम्। त्याज्याः। परमेतन्मार्गीयातिरिक्तसाधनत्वेनैव। न तु स्वमार्गीयसाधनत्वेऽपि। अस्ति च तेषां स्वमार्गीयसाधनत्वमपि। तच्च वर्णाश्रमधर्मत्वेन तदनुष्ठाने प्रयोजनाभावे सति लोकसङ्ग्रहार्थं भगवदाज्ञप्तत्वेनाऽनुष्ठाने समुद्भवतीति प्रागुक्तात्स्फुटम्। "श्रद्धाऽमृतकथायां म" इत्यादिस्वमार्गीयसाधननिरूपणसन्दर्भे "इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तप" इति श्रौतस्मार्तानां भगवदर्थं कृतानां स्वमार्गीयसाधनत्वोक्त्याऽप्येतत्स्फुटम्। "कुर्यात्सर्वाणि कर्माणि मदर्थं शनकैः स्मरन्। मय्यर्पितमनश्चित्तो मद्धर्मात्ममनोरतिरि" त्युक्त्या "मदर्थे धर्मकामार्थानाचरन् मदपाश्रयः। लभते निश्चलां भक्तिं मय्युद्धव सनातने" इत्युक्त्या "भगवदीयत्वेनैव परिसमाप्तसर्वार्था" इत्युक्त्याऽपि चैतत्तथा। किञ्च, अतिरिक्तस्य त्यागस्तदुपयोगिनश्च स्वीकारः फलमार्गोत्पत्तौ तन्त्रम्। तत एव श्रीमत्सुबोधिन्यां त्यागसमाधाने प्रकरणार्थोक्तौ "विद्यापञ्चकमत्रापी" त्येतत्कारिकाटिप्पण्यां विद्यापञ्चकव्युत्पादने तृतीयां व्युत्पादयद्भिः श्रीमत्प्रभुचरणैः—"इतरभजनं न कार्यम्। पारम्पर्यागतमपि धर्मं भगवदिच्छायां सत्यां विसृजेदिति तृतीये" ति पारम्पर्यागतधर्मत्यागः पुष्टिमार्गीयविद्यात्वेन निरूपितः। तस्मादतिरिक्तसाधनत्याग एव श्रीमद्गोकुलाधीशैस्त्यागपदार्थो व्याचक्रे, न त्वेतावताऽभक्तो सदाचारोच्छेदोऽपि तैरभिप्रेतो येन भक्तिमार्गीयत्वेनाऽपि बोधितानां लौकिकवैदिकानां त्याग आपाद्येत। स्वानभिमतमन्दार्थप्रयोजनकतया मार्गान्तरीयसाधनव्युदासः स्वाभिमतमहाफलप्रयोजनकानां स्वमार्गीयाणां मार्गान्तरीयत्वदपेक्षया "क्रयविक्रयवेलायां काचः काचो मणिर्मणिरि" ति न्यायेन परीक्षापक्षपातीनां प्रेक्षावतां परिचयस्तु परमोत्कृष्टतया सकलसाधनमूर्धाभिषिक्तानां साधनानां समादरस्तत्रापि स्वप्नेऽपि सदाचारोच्छेदसम्भावनासम्बन्धराहित्यमिति तु "अधिकं तत्राऽनुप्रविष्टं न तु तद्धानि" रिति न्यायेनाऽतितरामेव तावदुचितश्चेतश्चमत्कारीति कियदधिकमुच्यताम्। मार्गान्तरीयाच्छ्रौतस्मार्ताचरणात्स्वमार्गीयस्य तस्यैवं वैलक्षण्येऽपि तद्वैलक्षण्यं विद्वद्वबोध्यमेव। अभ्यस्याऽग्रे तूक्तं कासरसमीपे सरसवल्लकीवादनसगन्धमेव तत्सम्पद्यते। अनवबोधे च तस्याऽन्यथाग्रहणमप्यवश्यम्भावादुरपनोदम्। ततश्च तस्य पापात्मा सदाचारोच्छेदादिप्रसक्त्या महानेवाऽनर्थोदयः स्यात्। स माभूदित्येतदर्थं "न बुद्धिभेदं जनयेदि" ति वाक्यात्तेषां पुरतस्त्वेतन्निरूपणमपि न कर्तव्यम्, किन्तु कर्मासक्तैर्यथा लौकिकत्वैदिकत्वाभिमानेन तान्यनुष्ठीयन्ते, तथैव लोकसङ्ग्रहाय स्वयं भगवदेकतत्परैरनुष्ठेयानीति "लौकिकत्वं वैदिक-

त्यमि"त्येतश्लोकार्यो श्रीगोकुलाधीशैर्व्यवस्थापितम् । तेन मार्गान्तरीयतत्त्यागोऽप्यान्तर एव पुष्टिस्थसम्मत इति स्वमार्गीयतदाचरणप्रतिषेधस्त्वनवसरग्रस्त एवेत्युपरम्यते । एतेन 'स्वधर्मतः' इत्येतद्व्याख्यातं वेदितव्यम् । ननु यानि वचनानि "श्रद्धाऽमृतकथायामि"त्यादीनि स्वमार्गीयमर्य्यादाबोधकानि प्रागुपन्यस्तानि, तान्यपीह भक्तिवर्द्धिनीव्याख्यायां प्रागुपन्यस्य तदुक्तसाधनानां मर्यादात्वमुक्त्वा च तत्त्यागस्त्यागपदार्थः श्रीगोकुलाधीशैर्व्याख्यात इति साक्षाद्धर्मिपराया अपि मर्यादायाः शुद्धपुष्टिमार्गेऽनुपयोग इति चेत्, अहह महतो मोहमहिमा । वस्तुस्थितिविचारे हि साक्षाद्धर्मिपरायाः शुद्धपुष्टितत्फलप्रापकत्वव्यवस्थापनाद्विरोधाभावेन त्यागे कारणं न पश्यामः । तत एव श्रीगोकुलाधीशा यथोक्तमुक्त्वोपसंहारे 'त्यागा'त्यद्व्याख्याने "एतन्मार्गीयातिरिक्तसाधनत्यागादि"त्यूचुः । तेनैतन्मार्गीयातिरिक्तसाधनबोधकत्वाभिप्रायेणैव तेषां वचनानामुल्लेखस्तदुक्तसाधनत्यागोपदेशश्चेति स्पष्टमेवाऽवगम्यते । साध्यसाधनदशापन्नत्वञ्च शुद्धपुष्टेः स्फुटं तदभिमतम् । भक्तिवर्धिनीव्याख्यानमेव हि प्रधानं तद्गमकम् । "एतन्मार्गीयातिरिक्तसाधनत्यागादि"त्युक्त्या पूर्वोक्तमाहात्म्यज्ञानोपयोगव्यवस्थानेन च तदेतदभिव्यक्तम् । सिद्धान्तमुक्तावलीविवृतिटिप्पण्याञ्च मानस्या मानसीत्वं किंरूपमित्याकाङ्क्षायाम्—"सर्वात्मभावस्य मनोधर्मत्वात्तत्पूर्विकायास्तस्या मानसीत्वमुक्तमिति न काचित्क्षतिरि"ति फलरूपत्वं तस्याः प्रदर्श्य तत्प्राप्तये तनुजवित्तजे कार्य्ये इत्याशयेनाऽऽहुः । श्रीगोकुलाधीशाः "नन्वेवमाधुनिकैस्तादृशाधिकाररहितैस्तन्मार्गप्रवर्तकाचार्योक्तप्रकारेण क्रियमाणसेवाया अनुपयोगमाशङ्क्याऽऽहुः—उक्तसेवासाधने इति । तेषां तादृशाकाराभावेऽपि तदुक्तप्रकारेण क्रियमाणत्वात्पूर्वोक्तमेव फलं सम्भवतीत्यर्थः । यथा चैतत्तथा भक्तिहंसे विस्तृतं पितृचरणैरिति नात्र विस्तरः" इति । ततश्च साध्यसाधनदशापन्ना द्विविधा शुद्धपुष्टिस्तन्मते स्फुटा । तत्र साधनदशापन्नेषु साधनानामावश्यकतया नियतफलानुकूलतया च तत्त्यागवचनमसङ्गतमेव । तेन मार्गान्तरीयसाधनबोधकत्वाभिप्रायेणैव "श्रद्धाऽमृतकथायामि"ति सन्दर्भस्य प्रतिषेध्यपदे निक्षेपः । स्वमार्गीयसाधनबोधकत्वाभिप्रायेणाऽपि निषेधे तु प्रयोजनं नास्त्येव किमपि । ननु "श्रद्धाऽमृतकथायामि"त्यत्रोक्तानां साधनानां स्वमार्गीयत्व एव किं प्रमाणमिति चेत्, साक्षाद्धर्मिपरत्वस्यैव स्वमार्गीयत्वे तन्मयत्वात्तदेवेत्यवधेहि । किञ्च, श्रीमद्गोकुलाधीशास्तनुजवित्तजयोः श्रीमदाचार्य्यचरणोक्तप्रकारेण तत्करणे मानसीसाधकत्वमभिधाय श्रीमदाचार्य्यचरणोक्तस्तत्प्रकारः किंविध इत्याकाङ्क्षायां भक्तिहंसोक्तः स इत्याहुः— "यथा चैतत्तथा भक्तिहंसे विस्तृतं पितृचरणैरिति नाऽत्र विस्तर" इति । भक्तिहंसे तु स्नेहतन्मयः स्नेहाचारैकरसस्तत्रापि वेदाविरोधेन व्यवस्थितो मर्य्यादापन्नः स प्रकार इति निर्णीतम् । तादृशप्रकारविशिष्टा तनुवित्तजैव च स्वमार्गीया शुद्धपुष्टिरूपा शुद्धपुष्टिफलिकः च मर्य्यादा भक्तिः । सा च "श्रद्धाऽमृतकथायामि"ति सन्दर्भेणैव कृतनिरूपणेत्यपि भक्तिहंसे स्थितम् । तेन तत्सन्दर्भोक्तानां साधनानां स्वमार्गीयत्वं श्रीमद्गोकुलाधीशानामभिमतमेवेति साक्षात्तद्वचनमुपर्यैव समुज्जीवितम् । एवं सति मार्गान्तरीयसाधनबोधकत्वमेव परमतप्रसिद्धमनूद्य तदुक्तसाधनत्यागस्त्यागपदार्थः श्रीगोकुलाधीशैर्विवृतः, न स्वमार्गीयसाधनबोधकत्वमभिप्रेत्याऽपि । तस्य स्वमतसिद्धतया त्यागायोगात् । परप्रसिद्धं हि विरोधित्वात्प्रतिषेध्यं, न स्वमतसिद्धमविरोधित्वादिति । श्रीमदाचार्य्यचरणाविर्भावात्प्राग् मार्गान्तरीयसाधनबोधकत्वमेव वचनेष्वेतेषु लौकिकैर्गृहीतं स्थितम् । पुष्टिमार्गस्यैव तदानीमनाविर्भूततया तन्मार्गीयसाधनबोधकत्वस्फूर्तिस्तत्राऽसम्भाव्यैवेति । तत एव धर्मद्वारा धर्मिपराणां साक्षाद्धर्मिपरेष्वपि व्रजस्थेषु स्वाधिकारानुरूपबोधो नियमेन धर्मद्वारैव धर्मिपरत्वबोधः प्राग्निदर्शितो "ललितगतिविलासे"त्यादिश्लोकोपन्यासेन । तस्मान्मार्गान्तरीयसाधनबोधकत्वाभिप्रायेणैव तदुपन्यासादिकं भक्तिवर्धिनीव्याख्यायामिति निस्संशयमेतत् ।

एतावता श्रीमदाचार्य्यचरणश्रीमत्प्रभुचरणसिद्धान्तेन श्रीगोकुलाधीशानां सिद्धान्तस्य नीरन्ध्रमैक्यं स्फुटतरमत्रोपदिष्टमिति स्पष्टम् ।

तस्मात्तथा तथा पूर्वपक्षप्रतिपादितस्वरूपं पुष्टिपाषण्डमतमिदानीमन्यदेव लब्धप्रचारम् । तथैव च श्रीमदाचार्य्यचरणश्रीमत्प्रभुचरणश्रीगोकुलाधीशेषु वृक्षपुष्पफलन्यायेन शुचाचामीकरतचित्राळङ्कारतन्त्रसस्फलयोगन्या-

येन वेदहृदयतद्भूततात्पर्य्यन्यायेन चोत्तरोत्तरमुत्कर्षनिरूपणम् तत्र च तदैक्यप्रदर्शनप्रलोभेन जनानात्मपक्षे समाकृष्य तन्मततत्प्रवर्तकस्वरूपतारतम्यं दुर्गीतं यत्तदपि पुष्टिपाषण्डजालमेव तदुपोद्बलकमित्यतिरोहितमेतत्।

वस्तुतत्त्वविदः साम्प्रदायिकास्तु तुल्यभावेनैव तान् भजन्ते, तुल्यभावेनैव च तदुक्तीः शिरसा सम्मानयन्तीति नैतदवधानपथात्प्रच्यावयितव्यम्।

एवं तत्प्राबल्ये स्थिते स्वानुभावप्रकटनहृदयस्य श्रीमद्वृन्दावनेन्दोराज्ञया भुवि प्रादुर्भूतैरतिकरुणैस्तत्प्रकटितरसिकानन्दसन्दोहरूपस्फूर्जद्रासादिलीलामृतजलधिभराक्रान्तसर्वैः श्रीमदाचार्य्यचरणैः प्रकटितं यथोक्तस्वरूपं साक्षान्मुख्यपुष्टिमतमेतर्ह्यन्तर्धीयत इव निह्नूयत इव सर्वथैव च प्रमुष्यत इवेति किं वाच्यम्।

हन्ताऽहो श्रीमदाचार्यचरणवचनामृतैकजीविताः साम्प्रदायिका विद्वांसो धारयत धारयत सम्प्रदायप्रमोषेण रत्ननिचितकलधौतसौधशिखरात् कालगर्तेष्वधोमुखं निपतन्तमात्मानुगतं जनम्। प्रणिधत्त च विपदोऽस्या अञ्जसैव निस्तरणाय श्रीमदाचार्य्यचरणपादारविन्दावधानसुधाम्। संस्मरत संस्मरत न कदाचित्प्रमादतोऽपि विस्मरत "विद्वद्भिः सर्वथा श्राव्यं ते हि सन्मार्गरक्षका" इति सकलपाषण्डतुण्डनिर्मोटिनीं श्रीमदाचार्यचरणाज्ञाम्। संरक्षत संरक्षत च सन्मार्गमित्यभिप्रार्थयामहे।

एवमत्युद्धतरीत्या प्रवर्द्धमानसम्बाधं पुष्टिपाषण्डप्राबल्यमभिसमीक्ष्यैव तत्प्रतीकारविचारे तन्निर्हननमभीप्सुभिः स्वसिद्धान्तमुख्यग्रन्थप्रकाशनाध्ययनाध्यापनव्याख्यानानुव्याख्यानाद्येव महता वेगेन प्रवर्तनीयं नाऽन्यदिति विनिश्चित्यैव च चतुर्थपञ्चमपीठाधीश्वरैर्भुवनाभिष्टुतानुभाववैभवानां श्रीदेवकीनन्दनाचार्य्याणां सूनुभिः श्रीवल्लभाचार्य्यगोस्वामिवर्य्यैरादौ वादमुद्रया श्रीमदाचार्यचरणसमभिमतयथोक्तप्रकारकसाकारब्रह्मवादमहासिद्धान्तसंस्थापको विद्वन्मण्डनाख्योऽयमनर्घसिद्धान्तरत्नप्रवेकजालमालाविशालाशयः प्रबन्धो नानाविधानेकव्याख्याटिप्पणपरिष्कारतत्परिकरीभूतप्रस्तावनानिष्कर्षोत्कृष्यमाणप्रकाशनकृत्यः पण्डितमण्डलीमूर्धन्यमूर्धनिर्धूननदेशिकः सम्प्रति प्रकाश्यते।

तदध्ययनाध्यापनादिना अभिप्रवर्द्धतामभिप्रवर्द्धतां सकललोकश्रेयस्करः समस्तवाङ्मयसमन्वयसामर्थ्यसर्वसम्मतसमभ्यर्हितनिरस्तसाम्यातिशयसमुच्छ्रयविशेषः श्रीमदाचार्य्यचरणैकदर्शितः साकारब्रह्मवादापरपर्य्यायः पुष्टिसम्प्रदायो नाम सन्मार्ग इत्याशास्महे।

श्रीमदाचार्य्यचरणैः श्रीमत्प्रभुचरणैः श्रीगोकुलाधीशैश्च प्रदर्शितया रीत्या तत्सिद्धान्तसरणिस्वरूपसंरक्षणाय विद्वन्मण्डनोपोद्घातोऽयं विलिखित इतीमं साद्यन्तमनुशील्य भ्रान्ताः स्वभ्रममुत्सादयन्तु। अनभिज्ञविप्लुपिताः स्वचित्तकल्मषमुन्मार्जयन्तु। विद्वांसश्च निर्मत्सराः श्रीमदाचार्यचरणचरणारविन्दानुध्यानैकनिरस्तपाषण्डसंसम्नवास्तदाशयैव सर्वथा संसिद्धाधिकाराः सन्मार्गं संरक्ष्यासुरित्याशास्महे।

श्रुतिस्मृतिप्रभृतियथार्थनिर्वृतिस्त्रपातप्रशमशशाङ्कशोचिषः ।
जयन्ति ताः सहृदयहृद्रसायनं महाप्रभोर्भणितिसुधा सुधास्ताः ॥ १ ॥
श्रीमत्कृष्णास्यैराचार्य्यैर्बोधितनिजसिद्धान्तविवेकः ।
तत्प्रेरणया तज्जनतुष्ट्यै तमनूदितवान् तज्जनदासः ॥ २ ॥
श्रीमदाचार्य्यचरणाः शरणागतवत्सलाः ।
अङ्गीकुर्वन्तु कृपया कृतिमेतां समर्पिताम् ॥ ३ ॥

इति श्रीमदाचार्य्यचरणश्रीमत्प्रभुचरणश्रीगोकुलाधीशचरणरेणुकणलाभसमधिगतसर्वसौभाग्यसार्वभौम-
शेवधिना त्रिगृहोपाह्वश्रीदेवजी लालाजीत्युपाह्वश्रीदेवकीनन्दनतनुजन्मना भट्टश्रीवल्लभद्रशर्म-
कविकाव्यरत्नाकरकविचूडामणिशुद्धाद्वैतभूषणकविरत्नमहामहोपदेशकविद्यालङ्कार-
वेदान्तविद्यानिधिना विनिर्मितो विद्वज्जनावर्जनं नाम विद्वन्मण्ड-
नोपोद्घातः सन्मार्गसंरक्षणापरपर्य्यायः सम्पूर्णः ।

श्रीकृष्णार्पणमस्तु ।

---

# आदर्शपुस्तकानि ।

विद्वन्मण्डनस्य पुस्तकद्वयं मूलमात्रं 'मूलचन्द्र तुलसीदास' तेलीवाले बी. ए. एल् एल् बी, वकील हाईकोर्ट' इत्येतस्माल्लब्धम्। तत्रैकमौदीच्याचार्येण कृष्णतनयेन मुरारिणा १६४७ वैक्रमवर्षे शुचिसितत्रयोदश्यां दिवाकरवारे लिखितं सूक्ष्माक्षरमत्यन्ताशुद्धं च। प्राय एतदनुसारेणैव पाठो विद्वन्मण्डने निवेशितः। मुद्रापणीयादर्शपुस्तकस्य (प्रेसकोपी) लेखनावसरे यत्र क्वचनैतदीयपाठो विस्मृत्य मूले न निवेशितस्तत्र पाठभेदपङ्क्तौ प्रा-पु- इति सङ्केतेन संसूच्यैतदीयपाठः प्रादर्शि। अपरमपि १७३९ वैक्रमवर्षे••मासे द्वादश्यां चन्द्रवासरे लिखितम्, कियदशुद्धं च। इदं मण्डनमुद्रणोत्तरमुपनतमित्येतदीयपाठाः ग्रन्थान्ते पृथक् प्रदर्शिताः सन्ति।

तृतीयं पुस्तकं सटीकं श्रीदेवकीनन्दनाचार्यपुस्तकालयस्थम्। इदं १८९१ वैक्रमवर्षे इषे मासि सिते द्वितीयायां केनचन रामचन्द्रनाम्ना विदुषा लिखितं शुद्धं च। एतदनुसृत्यैव मुद्रापणीयपुस्तकादर्शोऽलेखि। इदं 'क'-संज्ञकम्।

चतुर्थं पुस्तकं सन् १९६१ वर्षे मेडिकलहाल्नाम्नि यन्त्रालये मुद्रापितं मूलमात्रम्। इदं कियदशुद्धम्।

पञ्चममपि वाराणस्यां सन् १९०४ वर्षे मुद्रितं सटीकं च। इदं कियदधिकमशुद्धम्।

मूलचन्द्रमहाशयेनापि स्वयं मोहमय्यां सप्तदशशतके लिखितस्य कस्यचन पुस्तकस्य साहाय्येन विद्वन्मण्डनमूलं संशोधितमिति तत्सम्मताः पाठाः प्राचीनपुस्तकपाठान्तराणीति नाम्ना ग्रन्थान्ते पृथक् प्रदर्शिताः सन्ति।

एवमादर्शपट्कसाहाय्येन समशोधि विद्वन्मण्डनमूलम्।

सुवर्णसूत्रमप्यस्माभिरादर्शपुस्तकपट्कसाहाय्येन शोधितम्। तत्रैकं श्रीदेवकीनन्दनाचार्यपुस्तकालयस्थं मूलानुगतं प्रत्नं प्रमादपरिहीणं च। इदं 'क' संज्ञम्।

द्वितीयमपि श्रीदेवकीनन्दनाचार्यपुस्तकालयस्थं प्राचीनं च, परन्तु कियदशुद्धम्। इदं 'ख' संज्ञम्।

तृतीयं शुद्धम्, परन्तु खण्डितम्। इदमपि श्रीदेवकीनन्दनाचार्यपुस्तकालयस्थम्। इदं 'ग' संज्ञम्।

चतुर्थं जर्जरितपत्रमव्यक्ताक्षरम्, परन्तु शुद्धम्। इदमपि श्रीदेवकीनन्दनाचार्यपुस्तकालयस्थमपूर्णं च। इदं 'घ' संज्ञम्।

पञ्चममर्वाचीनं चिक्कणपत्रम्, परन्तु बहुत्र विपर्यस्तपाठम्। इदं 'ङ' संज्ञम्।

षष्ठं सन् १९०४ वर्षे वाराणस्यां रत्नगोपालभट्टैः संशोध्य मुद्रापितम्। इदं मु० पु० इति सङ्केतेन पाठभेदपङ्क्तौ सूचितम्।

हरितोषिण्याः शोधः पुस्तकद्वयसाहाय्येन विहितः।

तत्रैकं पुस्तकं श्रीदेवकीनन्दनाचार्यपुस्तकालयस्थम्, १९१६ वैक्रमवर्षे शुचिश्यामदले प्रतिपदि लिखितम्। इदं व्यक्ताक्षरम्, परन्तु कियदशुद्धम्।

द्वितीयं श्रीमद्बालकृष्णपुस्तकालयस्थं 'श्रीमद्बलभद्रलालजी' महोदयतः प्राप्तम्। इदं गुम्फाक्षरं शुद्धं च। एतेन कियदनन्तरमुपनतेनापि बहूपकृतम्।

मग्नलालशास्त्रिमुद्रापितानि कियन्ति हरितोषिणीपत्राणि 'हरिकृष्ण वीरजीभाई' शास्त्रितो लब्धानि। प्रमादाद् हरितोषिण्यामपतितः सुवर्णसूत्रस्य भूयान् भाग एषु तथैव संरक्षित आसीदित्येतैः संशोधनविधौ कियदपकृतमपि।

मण्डनप्रकाशापरपर्यायाया गङ्गाधरभट्टीया एकमेवादर्शपुस्तकमुपनतम्। तदिदं श्रीदेवकीनन्दनाचार्यविद्याविभागीयं मोहमय्यामासीत्। इदमशुद्धिभूयिष्ठम्। यथाकथञ्चित्प्रभुदत्तमल्ला पर्यशोधि। सर्वांशशुद्धिस्तु न जाता।

सिद्धान्तशोभाया अप्येकमेव पुस्तकं नाथद्वारतः प्राप्तम् । तदप्यशुद्धिभूयिष्ठम् । ग्रन्थश्चायं प्रयासप्रत्येय-तात्पर्यः । अतो महताऽऽयासेनाप्यस्य सर्वांशशुद्धिः कर्तुमशक्यतेति सुधियः स्वयं संशोध्य वाचयन्तु ।

अस्य द्वितीयमपि पुस्तकं मुद्रणोपक्रमणोत्तरं श्रीमद्-'मूलचन्द्र' महाशयतः प्राप्तम्, परन्त्वेतन्नाथद्वारीय-पुस्तकमवलम्ब्य केनचन मन्ददृशा लेखकेनालेखीति ततोऽप्यतिशयिताशुद्धि ।

## उपकारस्मरणम् ।

निःसाधनजनैकजीवनस्य भगवतः श्रीगोकुलेन्दोः, संसारसिन्धुसांयात्रिकेषु कैवर्तायितकरुणाकणानां तुरीय-पथमपीठपरिवृढ-गोस्वामिकुलकलानिधि-श्रीवल्लभाचार्यचरणानां च कलात्मना परिणतं कारुण्यविलसितमेतद-दस्य विष्वद्रीचीं श्रेयःप्रयोजनतां वहता विवृतिप्रभृतिसकलसाहित्येनोपास्यमानस्य ग्रन्थरत्नस्य प्रकाशनम् । अतः सर्वतः प्रथमं सर्वैः साम्प्रदायिकसाहित्याभ्युदयप्रणयिहृदयैः कृतज्ञतावेदितानुसन्धानं सप्रणमस्मरणेन समर्हणीयोऽयमनुग्रहः ।

शब्दवारिधि-महामहोपदेशक-मदीयसद्गुरु-श्री ६ श्रीवामनाचार्यशास्त्रिचरणैः स्वयमाहूय कर्तव्योपदेशपुरः-सरमिहकार्ये प्रवर्तितोऽस्मि, संशोधनाभिवर्धनानुमतिदानादिभिश्चातिमात्रमनुगृहीतोऽस्मि । किं बहुना, इह मयोपलब्धं सर्वमपि साफल्यमेषामेव निरुपधिकृपायाः फलम् ।

अस्मत्सतीर्थ्याः क० का० क० शु० म० श्रीमद्वल्लभदत्तशर्मवेदान्तविद्यानिधयः साम्प्रदायिकमर्यादाऽवम-र्दिवर्तमानोपप्लवप्रशमननितान्तोपयुक्ताश्रुतपूर्वनानानिर्णयरमणीय-'मण्डन'महिमपरिचायिमहीयःप्रस्तावनाप्रणय-नेन, निष्कर्षद्वयविस्पष्टीकरणेन, हरितोषिणीपुस्तकप्रदानेन च भूयः साहाय्यं व्यधिषतेति कृतज्ञताऽऽनताः स्मः ।

पणशीकरोपाह्व-श्रीवासुदेवशास्त्रिणो निर्णयसागरस्था दृष्टिदोषावशिष्टाशुद्धिनिरसनेन, कतिपयापरिचितश्रुति-संशोधनेन च नितान्तमुपकृतवन्त इत्येभ्यः शतशो धन्यवादा उपह्रियन्ते ।

मूलचन्द्र तुलसीदास महोदयः अत्यन्तोपयुक्तग्रन्थपुस्तकप्रदानेन, स्वयं मूलग्रन्थस्य कियत्संशोधनेन च बहूपकृतवानिति चिरमविस्मरणीयमिदमौदार्यममुष्य ।

हरिकृष्णशास्त्रिणोऽपि कतिपयहरितोषिणीमुद्रितपत्रप्रदानेनोपकृतवन्त इति स्मरणार्हाः ।

भट्टगदाधरशास्त्रिणां चरितमेतत्तनयकृष्णगोविन्दशास्त्रिभिः काशीनाथभट्टैर्विलिख्य प्रहितमिति प्रमातामहगुरु-गौरवानुरागमेषां धन्यवादैरभिवर्धयामहे ।

जगन्नाथ कृष्णलाल शास्त्री ।

---

श्रीगोकुलेन्दुर्जयति ।

# विवक्षितम् ।

इदमस्तु विदां विदितं, यथागनगाश्वनगाष्टमितवैक्रमवर्षे (१९७८) श्रीविट्ठलेश्वरप्रभुचरणप्रादुर्भावमहोत्सववासरे सम्प्रदायसंरक्षणकृतक्षणैः सामयिकविशेषावेक्षणविलक्षणविचक्षणैश्चतुर्थपञ्चमपीठपरिवृढ–गोस्वामिकुलकलानिधिश्रीवल्लभाचार्यचरणैः साम्प्रदायिकसाहित्यप्रचुरप्रचारविचारणया स्वनामधन्य–विद्वन्मूर्धन्य–निष्प्रतिममहिममहनीय–स्वपितृचरणनित्यलीलास्थ–गोस्वामिश्रीदेवकीनन्दनाचार्यचरणानां पुण्यस्मृतये कृतोपक्रमायां 'श्रीदेवकीनन्दनाचार्यग्रन्थरत्नमालया–'मादौ श्रीमद्विट्ठलेश्वरप्रभुचरणप्रणीतं 'विद्वन्मण्डनं' नाम निबन्धरत्नं निवेशनार्हमिति निश्चित्य यथोपनतसम्पन्नविवृतिप्रभृतिसाहित्यसमवायसहचरं मुद्रापयितुं प्रारभ्यत । तदिदं वन्दारुवृन्ददयादारदस्य भगवतः श्रीगोकुलेन्दोः, श्रीमदाचार्यचरणानां, श्रीविट्ठलेशप्रभूणां च कृपाप्रभावतोऽन्तरा दुरन्तान्तरायपरम्परासम्पातेऽपि सम्प्रति सम्प्रतिपन्नमुद्रणावसानमिति विवृतावसरतयैतद्विषयविशिष्टवैशिष्ट्यांशनिर्देशायात्मानं व्यापारयितुं प्रस्तुमः ।

'भवतु भगवद्भक्तिर्द्वैतं विना पुरुषोत्तमे'

इति नारायणभट्टः ।

श्रीशङ्करमते प्रतिपन्नमद्वैतम्, परन्तु तद्भक्तौ नोपयुज्यते, प्रत्युत भजनीयमहिमावमर्दपुरःसरमामूलमुन्मूल्य दूरं निरस्यति भक्तिम् । श्रीरामानुजस्वामिमुखैराचार्यैर्द्वैरवस्थामुपानीयत भगवद्भक्तिर्भवनम्, परन्तु तद्भित्तिभूतस्वत्वविवेकः सर्वात्मनाऽस्पृष्टाद्वैतगन्ध एवोररीचक्र इत्युभयत्रापि निगमागममर्मस्पृशां शास्त्रदृशामाससमास हृषिसङ्कोचः । सोऽयं वैश्वानरापरावतारैः श्रीमद्वल्लभाचार्यचरणैर्विष्णुस्वामिप्रभृतिप्राचीनाचार्यचेतश्चरमद्वैतभगवद्भक्त्योः समन्वयं तदनुरूपमेतयोः स्वरूपं च प्रमाणोपपत्तिभ्यां प्रसाध्यापदर्शित इत्यनन्यसमसन्तोषः श्रुतिमर्मज्ञुषां विदुषाम् । तदिदमद्वैतं श्रीशङ्कराचार्याभीकृताद्वैतनो व्यवच्छेत्तुं 'शुद्ध' पदेन व्यशिष्यतेति शुद्धाद्वैतमित्युच्यते । भक्तिश्च पुष्टिशब्दापरपर्यायभगवदनुग्रहैकलभ्येति पुष्टिभक्तिरित्युच्यते । इदं द्वयं श्रीमदाचार्यचरणवत्तद्वितीयतनयैः श्रीविट्ठलेश्वरप्रभुचरणैरप्युपदेशनिबन्धनिर्माणादिना पर्यपोषि पर्यस्कारि प्राचारि च ।

श्रीमत्प्रभुचरणाः ।

अखण्डसच्चिदानन्दं भक्तग्राहिकया परम् ॥
ब्रह्म को दर्शयेदत्र विना श्रीविट्ठलेश्वरम् ॥ १ ॥
श्रीविट्ठलपदाम्भोजे राजमाने महीतले ॥
वैकुण्ठगमनोत्कण्ठा कुण्ठा वैकुण्ठसेविनाम् ॥ २ ॥

इति 'महादेवभट्टः' ।

इत्येवं सबहुमानमाम्नायमानमहिमानः श्रीविट्ठलेश्वरप्रभुचरणा नयननगेषुशशिसंख्ये वैक्रमे वर्षे पौषकृष्णनवम्यां पूर्वेद्युपर्वपुरोधसि वासरचरमयामे गुरुसर्गानुग्रहाय व्यक्तीकृतविग्रहा इति नाल्पमप्यप्रतीतं पुष्टिपथपथिकानां सांप्रतिकविपश्चिताम् । एतां सर्वातिशायिवैदुष्यवैभवेनाप्राकृतप्रभावभूम्ना च गृहीतमतयो भूयांसः समसामयिका वसुमतीपतयो विद्वांसश्च श्रद्धाभक्तिसगद्गदेन मनसा शिष्यभावं भेजिरे । संप्रति कलिकवलितविवेकालोकोऽपि लोकः केवलमेषां निरवधिकृपाप्रकाशवशेनैव सत्पथं परिचिनोति । भगवन्निदेशवशेन परिहृतात्मप्रकाशैः श्रीवल्लभाचार्यचरणैः परिशेषितमशेषमप्याचार्यविधेयमेत एव निर्वर्तयाञ्चक्रुः । अत एव श्रीवल्लभाचार्यचरणानिव सांप्रदायिकसुधिय एनानपि मूलाचार्यभावेन सभाजयन्ति । यथाऽऽहुर्गोस्वामिनः श्रीद्वारिकेशाः–'यद्वा फलमत उपपत्ते'रित्यारभ्य भाष्यकर्तृत्वेनाचार्यत्वम् । अत एवास्मिन् मार्गे आचार्यद्वयम् ।'

एतैः स्वतन्त्रा विवृतिरूपाश्चानेके निबन्धा निरमीयन्त । तेषु बहवस्तु लब्धपरिचयाः सुधियाम् । कतिपये च कालेन कवलितकलेवरा इति क्वचन केवलं नाम्ना परिचीयन्ते । एष्वेव सिद्धान्तशोभापरिचायितः 'अधिक-

रणमीमांसा'नामा निबन्धः स्यादिति तर्क्यते। ये सांप्रतमुपलभ्यन्ते तेषु सर्वेष्वपि मायावादविद्रावणैकप्रवणोऽयं 'विद्वन्मण्डन'नामा निबन्धः सर्वथा सांप्रदायिकसाहित्यशिरोमण्डनमेव।

## तुलना।

अद्वैतसिद्धान्ते यथा श्रीहर्षरचितं 'खण्डन'मधिगतप्रतिष्ठापरभागम्, तथाऽयं शुद्धाद्वैतसिद्धान्ते तत्प्रतिभटतया प्रथतामित्यभिप्रायेण श्रीप्रभुचरणैरयं निबन्धः प्रणीत इति. कतिपयविशेषदर्शनतो निर्धीयते। यथा तत् खण्डनम्, इदं मण्डनम्। तत्र मङ्गलश्लोके 'वन्देऽनुमयाऽपि तमधिगतम्' इत्यनुमानविषयत्वं शिवस्य वर्णितम्। अत्र 'असदृशां विषयः सदा' इति श्रीकृष्णस्य प्रत्यक्षविषयत्वम्। तत्र 'मानापनोदनविनोदे'ति द्वितीयमङ्गलश्लोके मानजन्यो विप्रलम्भो वर्णितः। अत्र मङ्गले 'प्रभुः प्रकटीभवन् प्रतियुवति संभेदने'ति सम्भोगो वर्णितः। तत्र 'धीरा यथोक्तमपि कीरवदेतदुक्त्वा' इति ग्रन्थस्य शुकवत्पठनमुपदिष्टम्। अत्रापि 'यथोक्तं कण्ठे वा शुकव'दित्यनेनेदमेवोपदिष्टम्।

## ग्रन्थस्वरूपम्।

श्रीमद्भक्तिसुधाब्धिवर्द्धनविधौ संपूर्णचन्द्रायितं
दुर्वादोत्कटकुम्भिदम्भदलने शार्दूललीलायितम्॥
पादाब्जं भजतामशेषविदुषां मस्तेषु मालायितं
यैर्वाचो विसरा जयन्ति रुचिरास्ते विट्ठलेशप्रभोः॥ १॥

अत्र ग्रन्थे निर्गुणसगुणाख्यब्रह्मरूपद्वयविमर्शमुखेन परोपस्थापितविप्रतिपत्तिपरम्परापरिहारपूर्वकं जडजीवब्रह्मस्वरूपाणि, तत्सम्बन्धिन आविर्भावतिरोभावांशत्वगुणत्वनित्यलीलादयो धर्माश्च निरूपिताः। क्वचनैकैकस्या विप्रतिपत्तेः परिहाराय पञ्चाधिकान्यपि समाधानानि सन्तीत्यतिमात्रं प्रशंसनीया प्रौढिरमुष्य। प्रायोऽणुभाष्यनिविष्टा अशेषा अपि विषया इह विशेषविस्तारपुरःसरं प्रमाणोपपत्तिनिकषधा निरूपिताः, यथा न पुनस्तयागतयुक्तयथानुयायिनां प्रत्यवस्थानं भवेत्। निरूपणे चेह श्रुतिसूत्रप्रभृतिप्रमाणानामेव प्राधान्यम्, युक्तीनां तु तदनुयायित्वमेव। अयमर्थः स्वयं श्रीप्रभुचरणैर्ग्रन्थप्रारम्भे 'श्रुतिसूत्रादिमणिभिः' इति पद्येन श्रुतिसूत्रादिषु, युक्तिषु च यथाक्रमं मणिशुक्त्युपमार्पणेन स्वीकृतः। एवं प्रतिज्ञातानुरूपप्रमाणोपपत्तिसन्निवेशशालितयैवास्य निबन्धस्य न केवलं साम्प्रदायिकग्रन्थेषु, अपि तु परत्रापि भूयान् भागः प्रमाणतया समुद्धृत्य समुपन्यस्तः प्रतितन्त्रमपश्रितमतिभिरपि। यथा उज्ज्वलनीलमणिविवृतौ चन्द्रिकायाम्—'श्रीमद्विट्ठलनाथगोस्वामिचरणैरेवमेव गुणकर्मनामरूपादीनां विद्वन्मण्डननाम स्वग्रन्थे प्रतिपादितम्। तद्यथा, गुह्यग्रामनपुराणे गीयते उत्तरस्थाने गिरीशे च भृग्वादीन् प्रति ब्रह्मणो वाक्यानि 'षड्विंशद्गुणी'त्यादि। एतेन ग्रन्थस्यास्य निरतिशयः प्रामाण्यप्रकर्षः प्रमाणीक्रियते।

अत्र ग्रन्थेऽधिजिगांसूनां विषयावधानसौकर्यसिद्धये मध्ये २ सविस्तरं मीमांस्यमाना विषयाः संक्षिप्य कतिपयाभिः कारिकाभिरप्युपनिबद्धाः सन्ति।

विषयसन्निवेशे चेह चतुर्लक्षणीलक्षित एव क्रमः प्रामाणिकतया समुपात्तः। परिशिष्टनिविष्टया सिद्धान्तसोभया च क्रियांस्तदनुसारी प्रकरणविभागोऽपि प्रादर्शि। तथा चैतावदीयपद्यम्—

'तथा चायं प्रकरणविभागः—'सर्वे वेदा यत्पद'मित्येतत्पर्यन्तं समन्वयाध्यायविषयः। आविर्भावप्रकारभेदास्सर्वसमाधाने सर्वाविरोध आविर्भावप्रकरणे। लीलानित्यत्ववादात्पूर्वं साधनाध्यायविषयः स्फुटीभविष्यति। लीलाशास्त्रार्थः फलमिति।'

अस्य प्रदर्शितप्रकरणविभागस्योपपत्तिस्त्वेवम्—

'सर्वे वेदा यत्पद'मिति श्रुतेरुपादानमेतच्छ्रुतिगर्भतृतीयप्रपाठकसमाप्तेरुपलक्षकम्। अतो 'नन्वस्ति ब्रह्मे'त्यतः पूर्वं समन्वयाध्यायस्य विषय इत्युक्तं भवति। इयद्वधि सगुणनिर्गुणयोरुपक्षितानुपक्षितयोः कर्तृत्वादितद्धर्माणां च विचारः प्रचारितोऽस्ति। प्रमाणतयोपन्यस्तानि सूत्राण्यपि सर्वाणि समन्वयाध्यायस्यैव सन्ति। अतोऽयं समन्वयाध्यायविषय इति निर्विचिकित्सम्।

'नन्वस्ति सन्नति'रिति तुरीयप्रपट्कआरम्भ एव 'जगदप्रतीतिप्रसङ्गात्' इत्यादिना प्रपञ्चस्वरूपपर्यालोचनायाः सूत्रपातः कृतोऽस्ति । इतः कियत्परं 'ननूपलब्धिमात्रेणे'त्यादिना प्रपञ्चो वासनासमुद्भूत इति' साक्षात्प्रपञ्चस्वरूपपर्यालोचना समुपक्रान्तैव । इतः परं प्रतिबिम्बाभासवादो जीवविचारः । आविर्भावतिरोभावविचारश्च मुख्यतया जडजगत्सम्बन्धी । कियतांशेन जीवविचारेऽप्युपयुज्यते । जीवधर्मभूतांशत्वाणुत्वनिर्णयो जीवविचारान्तर्गत एव । अयं सर्वोऽपि जडजीवविचार उपर्युक्ततुरीयप्रपट्कादारभ्योनत्रिंशत्तमप्रपट्कपर्यन्तं (१९४ पृष्ठपर्यन्तं) विद्यते । अविरोधांशे विशेषत उपयुक्ततयाऽऽविर्भावप्रकरणमेव शोभायामुपात्तम्, परन्तु तद्ग्रहणमस्य सर्वस्याप्युपलक्षकम् । अतोऽयमुपरि परिचायितः सर्वो जडजीवविचारोऽविरोधाध्यायस्य विषयः । अविरोधाध्यायप्रथमपादस्थे'तदनन्यत्व'मित्यधिकरणे ब्रह्माभिन्नत्वसत्यत्वादिकथनमुखेन जडजगत्स्वरूपं पर्यालोचितम् । तृतीयपादस्थे दशसूत्रे 'उत्क्रान्तिगत्यागतीनाम्' इत्यधिकरणे, एकादशसूत्रे 'अंशो नानाव्यपदेशात्' इत्यधिकरणे च जीवस्वरूपं पर्यालोचितम् । अयं स्थालीपुलाकन्यायेन केवलं दिङ्निर्देशः । सूक्ष्मदृशाऽवधारणेऽवान्तरसूक्ष्मविषया अपि प्रतिभासन्ते ।

त्रिंशत्तमप्रपट्कादारभ्य त्रयश्चत्वारिंशत्तमप्रपट्कपर्यन्तमुपास्यस्वरूपपर्यालोचनापुरस्कारेणोपासना विचारिता । ग्रन्थारम्भे प्रपञ्चितोऽपि सविशेषनिर्विशेषवादविषयः पुनरिहाधिकांशानुप्रवेशनपूर्वकं विच्छित्तिविशेषेण प्रपञ्चितः । अयं सर्वोऽपि साधनाध्यायद्वितीयपादस्थानां 'उभयव्यपदेशात्' 'अरूपवदेव' 'प्रकृतैतावत्त्वम्' इत्यादिसूत्राणां विषयः । अत एवास्य स्वल्पद्वयेऽपि प्रपञ्चनमुचितम् । विरुद्धधर्माश्रयत्वम'प्युभयव्यपदेशा' दित्यादेर्विषयः । ब्रह्मधर्माणां भिन्नाभिन्नत्वव्यवस्थापनं 'प्रकाशाश्रयवद्वे'त्यस्य । दृश्यत्वादृश्यत्वनिर्णयः 'अपि संराधने' इत्यस्य । एवं चैषां साधनाध्यायविषयत्वे न संशयलेशोऽपि । यद्यपि क्वचन प्रसङ्गवशेन 'अन्तस्तद्धर्मोपदेशात्' 'आकाशस्तल्लिङ्गात्' इत्यादीनि प्रथमाध्यायसूत्राण्यप्युपन्यस्तानि सन्ति, विचारनिरपेक्षाश्च कतिपये साधनाध्यायविषयाः परित्यक्ता अपि, परन्तु नैतावता प्रकरणभङ्गः ।

लीलायाः फलरूपतयैतत्सम्बन्धिविचारः सर्वोऽपि फलाध्यायविषय इति स्वतुफसिद्धमेव । अत्रापि नित्यत्वविचारः पद्सूत्रस्य जगद्व्यापारवर्जाधिकरणस्य 'अविभागो वचनात्' इत्यस्य च विषयः ।

फलाध्यायस्य कियान् विषयः पूर्वप्रकरणेऽपि प्रविष्टः । यथा 'संपद्याविर्भाव' इति सूत्रस्य १७५ पृष्ठे 'क्रीडार्थं साक्षाद्योग्यास्त एव भवन्तीति तानप्यवतारयती'त्यादि ।

एवमस्य निबन्धस्य सिद्धान्ततः क्रमतश्चाणुभाष्यभूषिततत्तत्सूत्रसंवादित्वेऽपि क्वचन सूत्राणामक्षरार्थप्रदर्शनेऽणुभाष्योपदिष्टप्रकारस्य परित्यागोऽपि दृश्यते । यथा ईक्षत्यधिकरणमणुभाष्येऽशब्दतानिरासमुखेनोपहितकर्तृत्वं प्रतिषिध्य शुद्धब्रह्मणः कर्तृत्वं समर्थ्यते । अत्र तु केवलमुपाधिभूतायाः प्रकृतेः कर्तृत्वं प्रतिषेधति । 'आत्मपदमुपचारादुपाधिपरमेवे' त्याशङ्कायां पुनराह 'तन्निष्ठस्य मोक्षोपदेशा'दिति मूलपङ्क्तयैवमेव प्रत्याय्यते । सुवर्णसूत्रकृद्भिरप्येतन्मूलविवरणे प्रकृतिकर्तृत्वप्रत्यादेशपरतयैवेक्षत्यधिकरणं योजितम् । परन्त्वेवं योजनमपि भाष्यपौर्वापर्यपर्यालोचनया श्रीमदाचार्याणां संमतमिति निश्चीयत इति मादृशाः किंवक्ति । अतो नात्र भाष्यविरोधावधारणं लब्धावसरं भवितुमर्हति ।

'अंशो नानाव्यपदेशात्' 'कृतप्रयत्नापेक्षस्तु' इति सूत्रद्वये यो व्याख्याप्रकारभेदः, स तु मूले व्यक्त एव । 'कृतप्रयत्नापेक्ष' इत्यत्र तु भाष्याविरोधोऽपि स्वयं मूलेनैव समर्थितः । एवमन्यत्रापि तात्पर्यभिदाऽभावं विभाव्याऽविरोधोऽवधारणीयः ।

लेखशैली ग्रन्थस्यास्य प्रायोऽपेक्षानुकूलसरलविरलानुप्रासपदकदम्बबन्धा नातिविततवाक्यविन्याससुभगा, क्वचित्क्वचिल्लोकोक्तिमती चास्ति । यद्यपि क्वचन प्रकरणस्य प्रारम्भे विरामे च विषयसंक्षेपसिद्धये स्वल्पसव्यपेक्षवाक्यविन्यासेनानुत्तानतात्पर्यांऽपि प्रतीयते, तथापि ससमाधिधिया कियत्पूर्वापरपङ्क्तिवाचनेऽचिरादेव व्युत्पत्तिमन्मतिना प्रतिपत्तुं प्रभूयते तात्पर्यमिति नैकान्ततः शेमुषी क्लिश्नाति । किंबहुना वादग्रन्थे यदि क्वचन विषयगाम्भीर्यवशेन, वाक्यविन्यासवैषम्येण वा तात्पर्यतलस्पर्शः प्रज्ञाप्रयाससव्यपेक्षो भवेदपि, तथापि

तद्दूषणमेव । अथापि श्रीमदाचार्यचरणवचनरचनायामिव नेह समधिकप्रज्ञाप्रयासोऽपेक्ष्यते । अहं त्वियत्यपि सारल्यं श्रीमत्प्रभुचरणकारुण्यैकमूलकमिति मन्ये । अन्यथा एवंविधे निबन्धे सारल्यलेशोऽपि ।

एवं परवर्तिविपश्चितामनुचितमपि पर्येयति सारल्येऽनस्थापितेऽपि नाधुनावधि सोपयोगानुरूपपठनपाठनप्रचारसौभाग्यमधिगतमनेन ग्रन्थेन कदाचिदपीति साम्प्रदायिकानां परं विषादास्पदं लज्जास्पदं च । अस्येदृशीं दशां निवेदयन्त्येव प्रतिप्रकरणमुपलभ्यमानाः परस्परमसमानाकाराः परश्शतपाठापभ्रंशाः, अत्यासमस्तापिपर्यस्तांशतया दुष्प्रापस्वरूपपरिचयामविधेयव्यवस्थामात्मनो दुरवस्थामनुभवन्त्यत्रिचतुरा विवृतयश्च । उक्तं चैतद्गोस्वामिश्रीमथुरानाथैरपि चतुःश्लोकीविवृतौ 'एतदर्थः प्रपञ्चितः श्रीविट्ठलेश्वरैर्विद्वदाभरण इति नाम्नास्माभिरत्र विस्तारणीयस्तथापि तदध्ययनमाधुनिकानां सर्वेषां दुर्घट' मित्यादिना ।

अत्र ग्रन्थे कियन्तो विषया दुरवगमतादूरीकरणाय, ग्रन्थान्तरसमाधानेऽप्युपयोगिताप्रख्यापनायाधीयतां विशेषावधानसिद्धये चासकृदावर्तिताः सन्ति । अतो न पुनरुक्तिदोषः शङ्कनीयः ।

ग्रन्थस्यास्य कियान् विषमांशो निर्णयार्णवे लालूभट्टैः (बालकृष्णभट्टैः) विशदीकृत इति सोऽप्यवश्यं दृश्यो विदुषाम् ।

## निर्माणसमयः ।

श्रीमत्प्रभुचरणानां यः प्रकटलीलाकालः, स एवास्य निर्माणकाल इति व्यक्तमेव, तथाप्यवान्तरसमयनिश्चयायेह किञ्चित्प्रपञ्च्यते—

साम्प्रदायिकसुधीभिर्भाष्यशेषे सुबोधिनीटिप्पण्यां च विद्वन्मण्डननामोपलम्भनमेव स्यात्, तेन भाष्यशेषटिप्पणीप्रणयनतः पूर्वमेतन्निर्मितिरिति शक्यं प्रतिपत्तुम् ।

किञ्च भाष्यशेषपूर्तेः पूर्वमेतन्निर्मितिरित्यर्थं कस्यचिदभियुक्तस्यैतानि पद्यान्यपि वदन्ति । तथाहि—

श्रीवल्लभपदाम्भोजयुगलं विगलन्मधु ।
नत्वा सत्याश्रयया मत्या यदाश्यत्यादरादिदम् ॥ १ ॥
सूत्राध्यायद्वयव्याख्यां सटीकं च निबन्धनम् ।
कृत्वा तदग्रे करणानुज्ञां दत्त्वा निजात्मजे ॥ २ ॥
संन्यस्तं वल्लभाचार्यैर्भगवद्वाक्यकोविदैः ।
ततस्तदीयग्रन्थाभिप्रायमालोच्य तत्सुतैः ॥ ३ ॥
व्याख्यातं विट्ठलेशार्यैः सूत्राध्यायद्वयं तथा ।
निबन्धतुर्यस्कन्धार्थटीकाऽग्रेतनपद्धतिः ॥ ४ ॥
समारब्धा सामिकृता हरिवंशानुशासनात् ।
स्वमेदैकसमाम्नायोऽभिप्रायो विट्ठलेशितुः ॥ ५ ॥
तत्सामिरचितग्रन्थत्वाच्च तत्र स्वनामभृत् ।
पूर्वं विद्वन्मण्डनं तु कृतं तैर्विसमञ्जसम् ॥ ६ ॥
सूत्रभाष्यानन्तरं शोधितमित्यविरोधि तत् ।
अतस्तदीयग्रन्थेषु न विरोधोऽस्ति कश्चन ॥ ७ ॥
इतीन्दिरेशदासस्य कृतिपुष्पाञ्जलिर्हरौ ।

एतानि पद्यान्यस्मन्मित्रैर्नाथद्वारस्थपुरुषोत्तमचतुर्वेदैः कल्याणरायजीप्रणीतकृष्णाश्रयस्तोत्रप्रकाशपुस्तकस्योपर्यावरणपृष्ठे लिखितानि लब्धानि । इयतैव कल्याणरायप्रणीतानीति तु नावधारयितुं क्षमम्, परन्तु 'इन्दिरेशदासस्ये'ति चरमचरणवर्तिना पदेन 'इन्दिरेश' भट्टकृतानि स्युरिति कथञ्चन शक्यसंभवम् । सन्तु वा येन केनापि प्रणीतानि, परन्त्वेषु कियाननुभूतपूर्व इतिहासांशोऽपि विद्यते, सोऽयं सविमर्शं दृश्यतां सम्प्रदायविदुरैः । प्रकृते तु 'पूर्वं विद्वन्मण्डनं विसमञ्जसं कृतं, सूत्रभाष्यानन्तरं च शोधित'मितीयानंशो विद्वन्मण्डन-

निर्मितेर्भाष्यशेषपूर्तिपौर्वकालिकतां कथयति । पूर्वं विद्वन्मण्डनस्य विषमप्रसीकृतिषु प्रस्तावनायामिदं पूर्वं प्रदर्शितः सूत्रव्याख्याविभेद एव स्यादिति तर्क्ये, यतः सूत्रभाष्यानन्तरं शोधनं तत्संमतसूत्रार्थप्रदर्शनमित्येव विशेषतः शक्यसंभवम् ।

अत्र ग्रन्थे स्वयं श्रीमत्प्रभुचरणा अपि 'परात्तु तच्छ्रुते'रित्यधिकरणे निरूपयिष्याम इति प्रतिजानते । एते नापि भाष्यशेषपूर्तिपौर्वकालिकता प्रतीयत एव । ये च वदन्ति श्रीमत्प्रभुचरणैः स्वकृतिगोपनाय श्रीमदाचार्य-ग्रन्थगर्भप्रविष्टस्वकृतौ भाष्यशेषादौ स्वनाम नोपन्यस्तमिति, तदप्येतेन प्रत्युक्तं वेदितव्यम् ।

सिद्धान्तशोभाविवृतौ तु निर्माणसमयनिर्णायकोऽन्योऽपि विशेषो दृशोर्विषयो भवतीति कियत्यस्तत्पङ्क्तय इह प्रदर्श्यन्ते—

प्रभुप्रोक्तनयाः प्रत्यवतिष्ठन्ते 'निर्विशेषं निरूप्यत' इति ।

श्रीमदाचार्यसिद्धान्तं सिद्धाञ्जनेन सङ्गोप्य वदतां श्रीगोकुलनाथानामुक्तिमुपदर्शयन्ति 'यागादिकरणस्ये'ति । 'तर्हि' त्यारभ्य 'चे' दिति पर्यन्तं रघुनाथवर्याणां पूर्वपक्ष इत्याहुः ।

'अत्रासिधाराव्यूहे निवेशिताः केचित्पौत्रप्रभृतयस्त एव यादिनं पर्यनुयुञ्जते ।'

एताः सिद्धान्तशोभापङ्क्तयो रूपकादितद्भावनाकल्पिता न चेत्, श्रीमत्प्रभुचरणैः स्वस्य पुरः पुत्रपौत्रैः प्रतिपादितं प्रश्नोत्तरग्रन्थमपि सन्निवेश्य मण्डनं निर्मितमित्यर्थप्रमाणीकरणेन पुत्रपौत्रस्थितिसमसामयिकता मण्डननिर्माणस्य सिध्यति ।

एतेन कियत्यंशे श्रीगोविन्दप्रभुप्रणीतनित्यकृत्यसंग्रहोऽपि संवदति । तथा चैतदीयपङ्क्तयः—

अत एव विद्वन्मण्डनप्राकट्ये श्रीगोस्वामिमुखादेकः शब्दो व्याकरणासिद्ध इव निःसृतः, तदा श्रीगिरिधरैर्विज्ञप्तिः कृता, शब्दोऽयमशुद्ध इव भातीति, तदा श्रीगोविन्दरायानाकार्योक्तम् 'कथमयं शब्दः सिध्येत्? । तदा यद्व्याकरणे सिद्धस्तद्रीत्या साधितः' ।

## निर्माणप्रयोजनम् ।

श्रीमदाचार्यचरणैस्त्रिर्दिग्विजयं संपाद्य परितः प्रचारितयोरपि मुख्यभक्तिमार्गतदुपयोगिब्रह्मवादयोः प्रभाववैभवे लीलासंवृतितः परत्र काले निखिलमपि जगन्निकायं मायातनयं मन्यमानानां मनीषिणां वचःप्रपञ्चैर्निम्लोचमयति सति मायिकमतसन्तमसनिरासाय प्रणीयतायं प्रबन्धः श्रीमत्प्रभुचरणैः । अत एवात्र विविच्य विशेषविस्तरतो मायिकमतमेव निरस्तम् । ग्रन्थावसानेऽपि 'प्रच्छन्न—बौद्धास्तु ते' इति सदुपपदवीप्रदानेनैतन्मतमन्तार एव परिचायिताः । 'धुनुत रिपुपक्षाभिधतमः' इति रिपुपक्षक्षपणोपदेशोऽप्येतानुद्दिश्यैव विहितः ।

श्रीगोस्वामिपुरुषोत्तमा अपि सुवर्णसूत्रे भक्तिमार्गब्रह्मवादयोस्तात्कालिकोऽप्रचार एव मण्डननिर्माणप्रयोजक इति वदन्ति । तथा चैतदीया पङ्क्तिः—'श्रीमत्प्रभुचरणा मुख्यभक्तिमार्ग—तदुपयोगिब्रह्मवादाप्रचारजनितखेदमसहमाना' इति । एतदप्रचारे बीजं चोपर्युपन्यस्तमूलअन्तिमपद्यदर्शनेनोक्त एव सिद्ध्यति ।

## विवृतयः ।

अस्य विद्वन्मण्डनस्य संप्रति पञ्च विवृतयः समुपनता अस्माभिः । तत्रैका 'विद्वन्मण्डनवाक्यार्थ'नाम्नी कियन्ति मूलपदानि परावर्त्य यथास्थितमूलपाठमेवावर्तयति, न तु मूलविषमाशयं विशदीकरोति, विशेषं वदति वा । अतोऽनुपयुक्ततया न समगृह्यत । तत्र वर्तमान उपयुक्तांशष्टिप्पणे निवेशितः । चतस्र इह मुद्रापिताः सन्ति । तत्रैतास्वपि प्रामाण्यप्रकर्षवशेन सुवर्णसूत्रविवृतिः सर्वतः प्रथमं सन्निवेश्य सभाजिता ।

## श्रीपुरुषोत्तमचरणाः ।

अस्याः प्रणेतारः श्रीपुरुषोत्तमचरणाः १७२४ वैक्रमे वर्षे भाद्रसुदि दशम्यां प्रादुरभवन् । एषां वैदुष्यं शास्त्रीयाशेषांशस्पर्शि प्रौढप्रतिवादिविद्वत्प्रतिभाऽभिभावकं चासीत् । एतैरणुभाष्यनिबन्धविद्वन्मण्डनप्रभृतिमहानिबन्धेषु सेवाफलप्रभृतिप्रकरणग्रन्थेषु च विवृतयो निर्मिताः सन्ति । प्रद्युम्नपण्डितकरमिन्दिपालप्रभृतयो भूयांसः स्वतन्त्रा वादग्रन्था अप्येतैर्वितेनिरे । अल्पीयान् महान् वा न कश्चिदप्येवंविधः सम्प्रदायसम्बन्धी विवे-

घनासव्यपेक्षो विषय उदीरितो यदर्थमेतैर्न परिश्रान्तं भवेत्, परन्तु साम्प्रदायिकानां नियतिविपर्ययेणैतत्प्रणीताः कतिपये दशोपनिषद्भाष्यसदृशा महानिबन्धा अपि समेषां चरमविश्रामभागन्यनन्तकालकुहरे चिरायापुनरावृत्तये प्रविष्टा इति न कस्यापि लोचनगोचरीभवन्ति। दार्शनिकदृष्ट्या नितान्तमुपयुक्तस्याप्येतत्प्रणीतप्रस्थानरत्नाकरस्य शेषोंऽशः संप्रतिपर्यन्तमपि न केनापि पूरित इति सोऽयं परवर्तिविपश्चितां वैदुष्यमाननिदर्शनं सत्यमयत्येव। समस्तचरितमेतेषां पुष्टिभक्तिसुधादौ परिचितप्रायं सांप्रदायिकैरिति नात्राधिकं निवेद्यते।

## सुवर्णसूत्रम्।

एतन्निर्मिता सुवर्णसूत्रविवृतिः श्रुतिसूत्रादिमणीन् सुरुचिमुक्ताधानुरूपविधया यथास्थानमवस्थापयति, परकल्पिताक्षेपान् प्रतिक्षिप्य तेषु निष्कम्पतामापादयतीति सर्वथा स्वनामान्वर्थमस्त्येव। इयं परमतस्वरूपं साङ्गोपाङ्गमुपपाद्य मूलोक्तसमाधानस्य विशदीकरणाय समर्थनाय च भूयोविशेषान् निर्दिशति। क्वचन मूलासद्धान्यपि परमतानि दर्शयति खण्डयति च। यथा १२९ पृष्ठे रामानुजमतम्। १५१-१५२ पृष्ठयोर्भास्कराचार्यमतं भिक्षुमतं, शैवमतं च। यो मूलाशय एतया प्रतिपाद्यते, स पूर्वत्र परत्र च प्रकृतग्रन्थेन ग्रन्थान्तरेण च नाणुमात्रमपि कथंचन विरुध्यते। एतदविरोधसिसाधयिषयैव क्वचनापाततः प्रतीयमानो मूलार्थः परित्यज्यते, क्वचन च विकल्पकुक्षौ निक्षिप्यते। यथा ११९ पृष्ठे 'अथैतदिच्छाप्रकारस्त्वापद्यमाना' मिति मूलस्य विवरणे पूर्वमुक्तमाविर्भावलक्षणमात्माश्रयदोषग्रस्तं मा भवत्वित्येतदर्थं 'यद्वे'ति विकल्प उपन्यस्तः। एवमुपपत्तिमत्ताप्रभावत एव 'प्राभञ्जनो'ऽपि बहुशैतवीयाशयमादायैव परोपस्थापितकुतर्कचक्रं निरास्थत्। एवं सर्वथैवमीदृग्वादग्रन्थगौरवानुगुणैव। लेखोऽप्यस्याः सरलपदप्रयोगसुभगत्वदोऽखिलविवेकमानुकूल्यम्।

एवं सर्वविधसौभगे सत्यपि सर्वात्मना सारल्ये बद्धश्रद्धानां सामयिकसुधियां सन्तोषाय नेयं पर्याप्नोतीत्येतदर्थं कृतावतारा हरितोषिणी विवृतिरिह निवेशिताऽस्ति।

## श्रीगिरिधरचरणाः।

एतस्या निर्मातारः श्रीगिरिधरचरणाः श्रीप्रभुचरणात्मजश्रीयदुनाथश्रीमहाराजानां वंशे १८४९ वैक्रमाब्दतः कियत्परं श्रीमद्वल्लभाचार्यचरणेभ्यः पुरुषगणनया नवमीं संख्यां विभूषयन्तः श्रीगोपालगोस्वामिभ्यः कृष्णावत्यां प्रादुरभूवन्। एते श्रीद्वारकानाथगोस्वामिभ्यो व्याकरणवेदान्तादीनध्यगीषत। निरवधिभक्तिवैभवप्रभावतः श्रीमन्मुकुन्दरायप्रभुभिः श्रीनाथद्वारतः काश्यां सन्निधायैषां शिरसि विरेजे। श्रीमन्मुकुन्दरायसन्निधानोत्तरमेते रेकादशवर्षाणि भूतलमलञ्चक्रे। अस्मिन्नेवैकादशवर्षात्मके समये शुद्धाद्वैतमार्तण्डः, बालप्रबोधिनी, भाष्यविवरणम्, हरितोषिणी, श्रुतिरहस्यम्, ऊर्ध्वपुण्ड्रमार्तण्डश्चेत्येते ग्रन्था क्रमशो निर्ममिरे। एते सर्वेऽपि समयासमुद्रणाः कृतपरिचयाश्च प्रायः संप्रदाये विदुषाम्। प्रश्नित्तसमर्थनादयः कतिपये अमुद्रिता अपि सन्ति। हरितोषिण्यां छिन्नस्थलेषु सुवर्णसूत्रखण्डनाय मनोरमादिटीकाग्रन्थांशोपन्यासेन शब्दशास्त्रे प्रावीण्यमेषां परिणततममासीदिति प्रतीयते। मुकुन्दरायप्राप्तिप्रभृतिसमस्तचरितचर्चैषां मुकुन्दरायवार्तादिषु सविस्तरमुपन्यस्ताऽस्तीति नात्र पुनरुक्तिमापाद्यते।

## हरितोषिणी।

एतद्रचिता दीपिकापरपर्याया हरितोषिणी मूलस्थपदानां पर्यायपदप्रदर्शनेन मूलाक्षरार्थौचित्यभावधिकमुपयुज्यते। क्वचन प्रकरणाशयमपि विशदीकरोति। परन्त्वेतया छिन्नस्थलेषु सुवर्णसूत्राशयो दूषितः। आविर्भावतिरोभावप्रकरणे च सुवर्णसूत्राशयमदूषयित्वैव मूलं प्रकारान्तरेण व्याख्यातम्। एतन्निर्माणसमये श्रीगिरिधरचरणैर्मण्डनस्य शुद्धं ग्रन्थपुस्तकं नोपनतमिति प्रतीयते, यतो बहुशेतरग्रन्थविवृतिदर्शनतः समुचिता अपि मूलपाठा नैतस्यां परिगृहीताः। यथा १४१ पृष्ठे 'ब्रह्मस्वरूपं च श्रुतिगम्य'मिति पाठमभ्युपेत्य चकाराज्जीवस्वरूपमिति विवृतम्। 'ब्रह्मस्वरूपं जीवस्वरूपं चे'ति सर्वसंमतपाठश्च नादृतः। एतद्दर्शनवशेनास्माभिरपि पाठनिर्णये भ्रान्तम्, परन्तु शुद्धिपत्रे पुनः पर्यशोधि।

## भट्टगङ्गाधरशास्त्रिणः ।

एते बुन्देलप्रान्तपतिछत्रसालनरपालेभ्यः समुपलब्धसम्मानानां कविकुलकलानिधीनां गौरीलालभट्टानां वंशे लब्धजन्मानः कन्हैयालालापरनामककृष्णगोविन्दभट्टानां पितृपादाः । एते श्रीगोविन्दप्रभूणां दयाच्छायामवष्टभ्य दीर्घकालं नाथद्वारे निवसन्तः श्रीविट्ठलनाथसंस्थानाश्रित 'रमेश्वर' प्रभृतीन् बहूनन्तेवासिनोऽध्यापिपन् । न्यायवेदान्तादिविविधशास्त्रपरिचयेऽपि क्षोदक्षमं वैदुष्यमेषां शब्दशास्त्र एवासीत् । एतैः शब्दशास्त्रे नागेशनिरूपितभाष्यैकदेशोक्तिपरिहारपरः कश्चन निबन्धोऽपि निर्मित इति 'नागेशेन निरूपिताः परिहृता भाष्यैकदेशोक्तयः' इति श्रीवल्लभदिग्विजयस्थ-कृष्णगोविन्दपद्येन प्रतीयते ।

## गङ्गाधरभट्टी ।

एतैर्विहिता मण्डनविवृतिरस्माभि 'र्गङ्गाधरभट्टी'ति नाम्ना परिचायिताऽस्ति । यद्यपि 'मण्डनप्रकाश'इति नामास्याः स्वयं ग्रन्थकर्तृभिरेवावसाने समसूचि, परन्त्वेतदीयं लिखितमादर्शपुस्तकं प्रारम्भेऽस्माभिर्नोपलतम्, केवलं मगनलालशास्त्रिमहाशयमुद्रापितपत्रप्रामाण्यप्रत्ययेनैव मुद्रापणं प्रारब्धमिति तत्र वर्तमानस्य 'गङ्गाधरभट्टी'ति नाम्न इहापि निवेशः समजनि ।

इयं विवृतिष्टिप्पणीवभितान्तं तन्वी, तथापि संक्षिप्तस्वरूपे प्रयासप्रत्येयप्रकरणाभिप्रायः प्रेक्षणीयश्चेद्, इयं पुरस्क्रियताम् । अदीर्घदर्शिदृशा शब्दशास्त्रानुग्रहमपेक्षमाणानां कतिपयमूलपदानां शुद्धिरपीह साधीयसी प्रत्यपादि । क्वचन सुवर्णसूत्रसाहाय्यमपि सम्यग् व्यधायि । मूलोक्तसमाधानस्वरूपमांसलीकरणाय कुत्रचिन्निबन्धान्तरीयवचनान्यपि प्रादर्शिषत । वाक्यरचनाऽप्यस्य सपरस्तात्पर्यप्रत्यायिनी । एवमियति सौकर्ये कृतेऽपि क्वचिदेतस्यां मतान्तरीयविवृतिसंस्कारवशेन मूलं सुवर्णसूत्रं च सम्यगनालोच्यैव कियान् श्रुत्यंशोऽन्यथा विवृत इव प्रतिभाति । क्वचिन्मूलोक्ते श्रुतिविवरणेऽप्यरुचिरसूचीव । यथा ३०३ पृष्ठे 'इत्यर्थो युज्यत' इति प्रतीकविवरणे 'पूर्वोक्तार्थे उपपत्तिस्तु पदपाठे नञ्पाठाभाव' इति नञ्प्रक्षेपपक्षेऽरुचिः ।

## सिद्धान्तशोभाकारः ।

सिद्धान्तशोभाया रचयिता कश्चन तुरीयपञ्चमगृहसम्बन्धी विद्वान्, यतोऽयं द्विस्त्रिः श्रीगोकुलनाथं श्रीगोकुलेन्दुं च स्मरति । विवृतावेतस्य न क्वापि नामोपनतम्, केवलमेतन्निर्मितानां कतिपयनिबन्धानां नामान्युपनतानि । एतैरपि कदाचन कश्चन परिचिनुयादेनमित्याशयेन विविदिषूणां पुनःसंग्रहप्रयासपरिजिहीर्षया चैनानीह निवेद्यन्ते—

'भक्तिहेतुव्याख्या' 'पत्रावलम्बनव्याख्या' 'आनन्दमीमांसा' वेदान्तनिरुक्तिः 'क्रोडपत्राणि' ।

अस्य शोभाकारस्य न्यायवेदान्तदर्शनयोर्निष्प्रतिद्वन्द्वि वैदुष्यमासीत् । अनेन साभिमानं 'अस्मच्छायगुरवरित्व'त्येवं स्वन्यायगुरवो बहुत्र परिचायिताः । वचनरचनाविचारणया साहित्येऽप्ययं कृतमतिः स्यादिति वक्तुं शक्यते । एतदीयवैदुष्ये विशेषं विविदिषुभिरामूलमौलि 'शोभा' निभालनीया ।

## सिद्धान्तशोभा ।

एतदीयादर्शपुस्तकस्योपर्यावरणपृष्ठे 'लेश'इति नाम लिखितमासीत् । टिप्पण्यामपि 'लेश' इति नाम्नैवेयं निर्दिष्टा । परन्तु वाचनावसरे 'अस्यां सिद्धान्तशोभायां विशदीकरिष्याम' इति ग्रन्थकृत्प्रतिज्ञापङ्क्तिरस्मन्नयनाध्वनीना समजनीति तामेतां प्रमाणीकृत्य 'सिद्धान्तशोभे'ति नामान्तरं निरदेशि । इयं विवृतिर्मूलार्थावबोधे नाधिकमुपकुरुते, केवलं मूलखण्डस्थवादोपयोगिविषयानेव विशदीकरोति विशेषयति च । कतिपयस्थलेषु प्रसक्ततया वर्द्धमानोपाध्यायपक्षधरश्रीहर्षमधुसूदनादिपरमतप्रसिद्धसुधियां मतानि तत्तन्नामनिर्देशपुरःसरं प्रदर्श्य दूषयति । क्वचन कलिस्टपुंसां प्रत्ययपात्रीभवितुमनर्हं दिव्यमपि वक्ति । उत्प्रेक्षारूपकसमासोक्तिसुभगानि वाक्यानि विद्वत्सकर्णेत्रातिथीभवन्ति । इयत्तु निर्विवादम्, यदियं श्रद्धाधनानां न्यायवेदान्तसाहित्यमर्मविदां विदां समुचितसन्तोषमवश्यमाधास्यति, परन्त्वेतया क्वचन व्यक्तं प्रतीयमानः प्रत्ययानुरूपोऽपि मूलार्थो विपर्ययेण विवृतः । यथा–१५२ पृष्ठे 'तर्कसाचैव्यानुपपत्ति' रिति मूलस्यार्थः । इयमपूर्णाऽशुद्धि-

पूर्णा च सगुणता, नानुरूपेति परं विषादास्पदम्। इयं कियन्मूलग्रन्थस्येति प्रतीकग्रहणपुरस्सरतः प्रलेयम्। एतया विद्वन्मण्डने सन्निविष्टः श्रीगिरिधरप्रभृतिप्रभुचरणात्मजानां पूर्वोत्तरपक्षग्रन्थः पृथक् २ प्रादर्शित इयं तत्समसमये कियत्तदुत्तरसमये वा निर्मिता स्यादिति सुलभसम्भवम्, परन्तु गवेषणापरायणैरपि श्रीपुरुषोत्तमचरणैः कथमियमसौ न समाराधि, कथं च नामापि न प्रत्यायीत्यनुपपत्तिं प्रतिसन्धाय हृदयं सन्दिग्धे।

## टिप्पणी।

एकोनविंशशतकावसानेऽजीर्यद्दुष्प्रावलेपविपर्यस्तमतिना सदानन्दनाम्ना केनचन यतिना 'शुद्धाद्वैतमार्तण्ड'-'विद्वन्मण्डन'योश्चिखण्डिषया सद्सद्ग्रन्थो जग्रन्थे। तत्र प्रमाणाभासभूयानिबन्धनैर्भूयोनिर्दोषतामारोपितेयं ग्रन्थद्वयी। एतदाक्षेपेऽनिहेलिधूलिप्रक्षेपकल्पेऽपि विवेकवैकल्यवशेन कतिपयाँस्तत्रवतश्रमानान् कतिपयाँश्च क्लिश्यमानानपेक्ष्यानुचिकम्पिषया 'कोटा'-पत्तनस्थप्रथमपीठपरिवृढैर्विद्वद्भिःस्वामिभिः श्री १०८ श्री गिरिधरनाथमहाराजैः 'सद्सद्ग्रन्थ-' खण्डनपरः प्रागल्भनामिधो निबन्धो निबबन्धे। अत्र पुनर्भारतमार्तण्डमहाभागैःमूलगिलितारिवलवचनानां पूर्वापरप्रकरणसन्दर्भादिप्रदर्शनपुरःसरं सिद्धान्तसंमतार्थानां समर्थयित्री मादृशधिक्कारिसुलभा महती व्याख्या रचयाञ्चक्रे। एताभ्यां 'प्रागल्भ-' 'मार्तण्डप्रभा'भ्यां सुवर्णसूत्रस्य मूलस्य भूयान् भागो भ्रमानपनोद्य विशदं विनियते, अतो 'विद्वन्मण्डन'गभीरतां दृष्टेवावतरणाद्युपदिद्यासया यदेन-योराश्रयेन 'सेम्पुल' कल्पेयं टिप्पणी प्राणायि। पदार्थानां परिष्कृततत्त्वप्रतिपत्तये 'प्रस्थानरत्नाकर'तोऽप्युपात्तः कियानंशः। कार्यान्तरकालातिपातसम्पाते त्वरयाऽरचीयमित्यनुपपन्नोंऽशोऽपि कियानिह कृतप्रवेशः स्यादिति शक्यसम्भवम्। अतः करुणापूर्णया सौशील्यशिशिरया च दृशा निरवकरीकृत्य निरीक्षणीयेति विज्ञा विज्ञाप्यन्ते।

## निष्कर्षद्वयी।

चतुर्थपञ्चमपीठाधीश्वर-गोस्वामिवंशगुरवांशुर्भा १०८ श्रीवल्लभाचार्यचरणानां निदेशं शिरःशेखरीकृत्योपरिप्रदर्शितसकलसाहित्यसचिवस्य निबन्धस्यास्य तात्पर्यमुपादाय हिन्दीविदामानन्दाय मया हिन्दीनिष्कर्षो निर्मितः। अयं भावानुवादो, न तु शब्दार्थानुवादः। अनभ्यासेन पुनर्दुष्प्रवर्णेन वार्धक्येन वा व्यापारान्तरपारतन्त्र्येण वा हिन्दीगन्धमजिघ्रतामान्ध्रवर्गीयानवाञ्चिदां, मद्रासिदेशीयानां द्विजानां च परिचयाय सरलसंस्कृतेनानुवादि। इदं द्वयं यदपि यथामतिर्यथाशक्ति विधिवदेव समपादि, तथाप्ययं विदुषां दृगध्वनीनं चेत्प्रणेतुः प्रथमपरिश्रममिममनुसन्धाय क्षमेरन्निमम्। अविज्ञातसरन्तु वर्णनप्रस्तावपरिहारपूर्वकं पूर्वपक्षोत्तरपक्षरूपेण मूलविवृतिगतसकलविषयसमावेशनिद्धये बहुत्र मूलविवृतिपौर्वापर्यविपर्ययेण सदभिप्रायोपन्यासः, क्वचन संक्षेपविस्तरविपर्ययश्चापरिहार्यतयाऽनुपपन्नेऽपि मतिपूर्वकं प्रतिपन्न एवेति नायं प्रज्ञाऽपराधतयाऽवधारणीयः। मायावादिमाध्वादितत्तन्मतवादिवाचिशब्दोपन्यासेन ते ते कदाचनावमानमिव मन्येरन्निति मनसिकृत्य पूर्वपक्षी सिद्धान्तीति सामान्यशब्दावेवोपन्यासिषाताम्।

एवं यथामनीषोन्मेषं सर्वविधसामञ्जस्ये सम्पादितेऽपीह सर्वात्मना हेयोपादेयांशविमर्शो निरवकाश इति तु नाभ्युपेतुं क्षममित्येतद्विषये विदुषां पुरः क्षमायाचनमेव शरणम्। तदिदं मद्गुरुवरजन्मा ६ श्रीरामनाचार्यशास्त्रिणां करुणापूर्णेन साहाय्येन गुणावल्लभोचीनां श्रीमत्प्रभुचरणानां समासादने दयैवोत्कर्षगौरवविनिर्मितैश्च सरलीकृत्य समयोपयुक्तविशेषैरलङ्कृत्य च कृतप्रसादं श्रद्धाभिनम्रेण मनसा श्रीगोकुलेन्दुचरणारविन्दयोर्निवेदितं 'श्रीदेवकीनन्दनाचार्यग्रन्थरत्नमालायाः' प्रथमं ग्रन्थरत्नं विद्वन्मण्डनं नाम विद्वद्वृन्दारकाणाममन्दानन्दोदयाय भूयादिति विशदहृदयेनाशासे।

सरलसरसैः सानुप्रासैर्वचोविसरैररसौ समुचितपरामर्शोन्मेषप्रदर्शनसौभगः।
सहृदयविदामानन्दार्थं सुधाद्वयसोदर-प्रभुपदगिरां कालापेक्षो विशेष इहोदितः॥

विनयावनतः-

**जगन्नाथ कृष्णलाल शास्त्री।**

# श्रीमद्विद्वन्मण्डनस्थविषयाणां सूचीक्रमः ।

समाप्तः सूचीक्रमः ।



श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

# विद्वन्मण्डनम् ।

## सुवर्णसूत्र-हरितोषिणी-गङ्गाधरभट्टी-टिप्पणी-संवलितम् ।

---

### सुवर्णसूत्रम् ।

नमामि श्रीबालकृष्णं यशोदोत्सङ्गलालितम् ।
पूतनाऽसुपयःपानरक्षिताशेषबालकम् ॥ १ ॥
नमामि श्रीमदाचार्यचरणान् करुणार्णवान् ।
सुधानिधिरभूदाविर्यतः श्रीविट्ठलेश्वरः ॥ २ ॥
यद्वक्त्रोदितमुज्ज्वलद्युति लसन्नानाश्रुति व्यासवाक्-
संमिश्रं रसपूरितं विजयते पीयूषमत्यद्भुतम् ।
यस्सत्यानृतवादिभिः खलु समं पेपीयमानं मुहुः
पूर्वान्निन्दयतीतरान् क्शयति[1] द्रागेव नैजैर्गुणैः ॥ ३ ॥

### हरितोषिणी ।

श्रीनाथं[1] च नमस्कृत्य नवनीतप्रियं[2] तथा ।
मथुरेशं[3] विट्ठलेशरायं[4] श्रीद्वारिकाधिपम्[5] ॥ १ ॥

### गङ्गाधरभट्टी ।

श्रीहरये नमः । श्रीवल्लभं हरिं नत्वा विट्ठलं पुरुषोत्तमम् ।
प्रकाशयामि विबुधां मण्डनं खलखण्डनम् ॥ १ ॥

---

### टिप्पणी ।

निगमागमयोगानां तदगम्यं श्यामलं धाम ।
यदुदितदिशा दशोः स्याद्विषयस्तान्देशिकान्वन्दे ॥ १ ॥

---

१ द्राघयति ।

१ श्रीमद्वल्लभाचार्याणां सेव्यस्वरूपं स्वयम्भूरूपं साम्प्रतं नाथद्वाराख्यनगरे विराजमानम् । २ श्रीमद्विठ्ठलेश्वराणां सेव्यस्वरूपं सांप्रतं नाथद्वाराख्यनगरे विराजमानम् । ३ श्रीमद्विठ्ठलेश्वरप्रथमसूनुश्रीगिरिधराणां सेव्यस्वरूपं कोटाग्रामे साम्प्रतं विराजमानम् । ४ श्रीमद्विठ्ठलेश्वरद्वितीयसूनुश्रीगोविन्दानां सेव्यस्वरूपं साम्प्रतं नाथद्वाराख्यनगरे विराजमानम् । ५ श्रीमद्विठ्ठलेश्वरतृतीयसूनुश्रीबालकृष्णानां सेव्यस्वरूपं सांप्रतं कङ्करपत्तनीस्थम् ।

सुवर्णसूत्रम् ।

तत्करुणार्णवदर्शितसरणिः पुरुषोत्तमस्तनुते ।
विद्वन्मण्डनयुक्तौ सुवर्णसूत्रं सदा प्रणतः ॥ ४ ॥

इह हि [3]प्रभुचरणाः, स्वीयानां [2]मुख्यभक्तिमार्ग—तदुपयोगिब्रह्मवादाप्रचारजनितखेद-

हरितोषिणी ।

श्रीमद्गोकुलनाथं च सर्वकामार्थपूरकम् ।
नमस्कृत्याथ तं नित्यं यः श्रीगोकुलचन्द्रमाः ॥ २ ॥
श्रीमन्मुकुन्दरायाख्यं श्रीमन्मर्दनमोहनम् ।
नमामि श्रीबालकृष्णं श्रीमन्नटवरं तथा ॥ ३ ॥
श्रीमन्मुकुन्दरायं त्वच्चरणसरोजे मन्मनोभृङ्गः ।
वासं करोतु सततमतस्त्वां पतिं विभुं नौमि ॥ ४ ॥
श्रीमद्गोपाललालस्य पातुः संसारसागरात् ।
हृदये कलयाम्येतत्पादपद्ममहर्निशम् ॥ ५ ॥
नानामतेषु प्रविवेककारि श्रीपुष्टिमार्गप्रवहप्रदर्शि ।
श्रीवल्लभाचार्यपदारविन्दं स षट्पदीभूतमना नतोऽस्मि ॥ ६ ॥

गङ्गाधरभट्टी ।

सुवर्णसूत्रमस्त्येव सुधियां मोदवर्द्धनम् ।
गङ्गाधरोऽपि यतते यथा तारा सुधाकरे ॥ १ ॥

---

१ ग. ङ. पुस्तकयोः क्वचेति पाठः । २ ग. ङ. पु. मुख्यै इति पाठः । ३ ग. ङ. पु. श्रीमत्प्र-भुचरणा इति पाठः ।

१ श्रीमद्विठ्ठलेश्वरचतुर्थसूनुश्रीगोकुलनाथानां सेव्यस्वरूपं श्रीगोकुले विराजमानम् । २ श्रीमद्विठ्ठलेश्वर-पञ्चमसूनुश्रीरघुनाथानां सेव्यस्वरूपं साम्प्रतं काम्यवनस्थम् । ३ श्रीमद्विठ्ठलेश्वरषष्ठसूनुश्रीयदुनाथवंश्यैर्हरि-तोषिणीकारैः श्रीगिरिधरगोस्वामितिलकश्रीदामोदरेभ्यः श्रीगोपालमन्त्रदक्षिणात्वेन श्रीनाथोत्सङ्गस्थं प्राप्तं वारा-णस्यां विराजमानम् । ४ श्रीमद्विठ्ठलेश्वरसप्तमसूनुश्रीघनश्यामानां सेव्यस्वरूपं साम्प्रतं काम्यवने विराजमानम् । ५ श्रीमद्विठ्ठलेश्वरषष्ठसूनुश्रीयदुनाथमहाराजेभ्यो दायभागतया दीयमानं, विरहरसममत्वाच्च तैरनङ्गीकृतं, तृतीयसूनुश्रीबालकृष्णेभ्य एवाधिकतया दत्तं,पूर्वं तत्सेव्यस्वरूपश्रीद्वारिकाधीशोत्सङ्गे विराजमानं, साम्प्रतं सुरतनगरे विराजमानम् । ६ श्रीमन्मथुरेशोत्सङ्गस्थम्, साम्प्रतं अमदाबादाख्यनगरे विराजमानम् । ७ श्रीहरितोषिणीकार-श्रीगिरिधरैः श्रीदामोदरमहाराजेभ्यो (दाऊजी) दक्षिणात्वेन प्राप्तं निजसेव्यस्वरूपमेतत् । ८ मु. पु. यास्य इति पाठः । ९ श्रीमुकुन्दरायप्राप्तेः प्राक् श्रीहरितोषिणीकाराणां सेव्यस्वरूपस्य । १० श्रीवल्लभाचार्याः श्रीमदा-चार्यचरणाः स्तम्भंपाटीयाख्यनामकश्रीलक्ष्मणभट्टदीक्षितात्मजाः । ११ विवृतिकृतां तनयाः श्रीपन्नगेन्द्रशास्त्रिणो मङ्गलश्लोकमिममेकमधिकं दर्शयन्ति—

मदनविवेकविदग्धः सागरसुखदो नु गोपतिः श्रीमान् ।
गङ्गाधरभजनीयो जयतितरां बालकृष्णेन्दुः ॥ १ ॥

**निजमुरलिकानादाह्वानागतव्रजसुन्दरी-**
**निरुपमनवस्नेहाम्भोधेर्विचित्रतरोर्मिभिः ।**

सुवर्णसूत्रम् ।

मसहमानास्तन्निरासाय विद्वन्मण्डनं कुर्वन्तः स्वमार्गस्यातिगोप्यत्वं सकलप्रमाणमूर्धन्यश्रुतिसिद्धत्वं च ज्ञापयन्तस्तदभिज्ञापकं मङ्गलवाक्यं ग्रन्थारम्भे शिष्यशिक्षायै निबध्नन्ति—निजमुरलिकेति । निजा स्वीया चासौ मुरलिका निजमुरलिका तस्या नादेन निजेन वा मुरलिकानादेन [1]नादात्मकशब्देन यदाह्वानमाकारणं तेनागता या व्रजस्य 'अक्षण्वतं

हरितोपिणी ।

श्रीमद्विट्ठलनाथपादयुगलं सर्वार्थसंसाधकं
नत्वा श्रीयदुनाथपादकमलद्वन्द्वं मनोहारि यत् ।
तद्वच्छ्रीमधुसूदनस्य चरणौ तापत्रयोन्मूलने
दक्षौ सर्वगुणाश्रयावतितरौ नौमि प्रभूतार्थदौ ॥ ७ ॥
श्रीमत्प्रभुभ्रचरणौ विट्ठलेशाङ्घ्रियुग्मकम् ।
नौमि प्रभुभ्रपादाब्जं सर्वैश्वर्यसुखप्रदम् ॥ ८ ॥
श्रीमद्विट्ठलनाथस्य नमामि चरणद्वयम् ।
सकलार्थप्रदं नृणां पुष्टिमार्गप्रसाधकम् ॥ ९ ॥
श्रीमद्गोस्वामिगोपालपितुश्चरणपङ्कजम् ।
श्रीमन्मातुः पादयुगं कृष्णावत्या नतोऽस्म्यहम् ॥ १० ॥
गुरोर्गोस्वामिनः श्रीमद्द्वारिकानाथशर्मणः ।
पादारविन्दयुगलं प्रणमामि पुनः पुनः ॥ ११ ॥
श्रीनन्दबालं कलिकालकालं भवाब्धिकूलं घनवत्सुनीलम् ।
श्यामाङ्गसंशोभितपीतचैलं गोपाललालं हृदि भजे रसालम् ॥ १२ ॥

गङ्गाधरभट्टी ।

निजेति । निजेन मुरलिकानादेन अव्यक्तशब्देन, अव्यक्तत्वं च पुंसामबोधकत्वे सति सुन्दरीणामेव बोधकत्वम् । तेन यदाह्वानं तेनागता या व्रजसुन्दर्यः 'न स्त्रियो व्रज-

---

१ ग. ङ. पु. गानात्मकशब्देन ।

१ श्रीमद्विट्ठलनाथाः आचार्यचरणानां द्वितीयसूनवो विद्वन्मण्डनादिकर्तारः । २ श्रीयदुनाथाः श्रीमद्विट्ठलनाथानां षष्ठसूनवः । ३ श्रीमधुसूदनाः श्रीयदुनाथानां सूनवः । ४-५-६-७ श्रीयदुनाथवंश्याः । ८ हरितोषिणीबालबोधिनीत्यादिग्रन्थकर्तॄणां पितृचरणाः ।

सुवर्णसूत्रम् ।

निशि शयान'मितिवाक्यात्सर्वथा स्वीकृतस्य गोकुलस्य संबन्धिन्यः सुन्दर्यस्तत्स्थास्तस्मान्न भिन्नाः । एतास्तु "न स्त्रियो व्रजसुन्दर्य" इत्यादिश्रुतिपुराणप्रतिपादितास्तासां निरुपम उपमाया निष्क्रान्तो रहितो यो नवस्नेहो भक्तिः । 'स्नेहो भक्तिरिति प्रोक्त' इति वाक्यात् । सोऽम्भोधिरिव स्नेहाम्भोधिः । 'उपमितं व्याघ्रादिभि'रित्युपमितसमासः । तस्य विचित्रतरोर्मयः विशेषेणाधिक्येन चित्रा 'नानाविधव्यभिचारिभावमिश्राः । तादृशत्वं सोपमायां मर्यादाभक्तावप्यस्तीति ततोऽतिशयबोधनाय तरप् । तादृशा या ऊर्मयस्तरङ्गाः 'तरङ्ग ऊर्मिर्वा स्त्रिया'मित्यमरः । नाना मनोरथाः । स्नेहस्य समुद्रत्वकथनादूर्मिपदेन निगीर्याध्यवसानेन मनोरथलाभः । 'पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शरा' इत्यादाविव

हरितोषिणी ।

श्रीमद्गोस्वामिगोपालसुतो गिरिधरः सुधीः ।
श्रीविद्वन्मण्डनव्याख्यां करोमि हरितोषिणीम् ॥ १३ ॥

अथ किमियमारभ्यते ? श्रीमद्गोस्वामिपुरुषोत्तमनिर्मितव्याख्यानान्तरसत्त्वादिति चेत्, न; अस्याः सुबोधत्वात्, प्रेक्षावतां सुखेन प्रवृत्त्यर्थमयमारम्भः । ननु दुरितंजन्यविघ्नसत्त्वे तद्ध्वंसाय मङ्गलं युक्तम्, अथ वा 'विघ्नशङ्कया तदाचरणात्तथैव शिष्टाचारा'दिति वाक्यप्रामाण्यात् तत्संशये वा मङ्गलकरणं युक्तम्, तदुभयमपि न सम्भवति । 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यह'मिति गीतावाक्येन श्रीमत्प्रभुचरणानां भगवदवतारत्वाद्दुरिताभावः, सर्वज्ञत्वात्संशयाभावश्चेति व्यर्थं मङ्गलाचरणमिति चेत्, न; तथापि सम्पूर्णमस्याध्ययनं भवत्वितीच्छावतां शिष्याणां प्रसङ्गतो मङ्गलसिद्ध्यर्थं ग्रन्थादौ तन्निबध्नन्ति—निजमुरलिकेति । निजः स्वसम्बन्धी यो मुरलिकानादः । सम्बन्धोऽस्य जन्यजनकभावः । न तु निजा या मुरलिका तस्या नाद इत्येवं समासः । तथा चान्यगोपेन मुरलीं गृहीत्वा नादे कृते सुन्दर्याह्वानं जातमित्यश्रवणान्नादे साक्षात्स्वजन्यत्वमेवाह्वानजनकतावच्छेदकं वक्तव्यमिति भावः । अत एव, गोस्वामिश्रीपुरुषोत्तमचरणैः,—निजा या मुरलिका तस्या नाद इति पक्षे इदमेवास्वरसं हृदि निधाय निजेन मुरलिकानादेनेति पक्षान्तरमुक्तम् । तेन नादेन यदाह्वानम्, नादस्य गानात्मकत्वा-

गङ्गाधरभट्टी ।

सुन्दर्य' इति वक्ष्यमाणस्वरूपास्तासां—निरुपमो यो नवः स्नेहाम्भोधिः भक्तिसमुद्रः 'स्नेहो भक्तिरिति प्रोक्त' इत्युक्तेः । उपमितसमासः । तस्य विचित्रतरा नानाविधव्यभिचारिभावमिश्रा ऊर्मयो नानामनोरथाः, स्नेहे समुद्रत्वारोपे मनोरथेषूर्मित्वारोपणम् । अत एव परम्परितरूपकमलङ्कारः, 'नियतारोपणोपायः स्यादारोपः परस्य यः । तत्परम्परित'-

किमपि परितश्चार्द्रार्द्रोऽस्तु प्रभुः प्रकटीभवन्
प्रतियुवतिसंभेदेनाऽस्मदृशां विषयः सदा ॥ १ ॥

सुवर्णसूत्रम् ।

ताभिः किमपि अनिर्वचनीयं यथा स्यात्तथा । परितस्तासां बहुत्वात् सर्वतश्च । आर्द्रार्द्रः अतिशयेनार्द्रः । समुद्रोर्म्युपगूढस्य तथात्वमतिशयितस्यास्यैव भवति । सा च बहुकाल-स्थितेस्तेयं बहुकालमंतत्सूचनेन तासु कृपावत्वं भगवतः सूचितम् । यत एवमार्द्रार्द्रः अत एव प्रतियुवतिसंभेदेन प्रकटीभवन् । प्रतिर्लक्षणे । युवतिं युवतिं लक्ष्यीकृत्य यः संभेदः सङ्गमः 'कृत्वा तावन्तमात्मानं यावतीर्गोपयोषित' इति वाक्योक्तस्नेहहेतुना प्रक-टिततावद्रूपः । प्रभुः । स्वयमिति पाठे मूलरूप इत्यर्थः । अस्मदृशां धृतिरूपज्ञानानां नेत्राणां वा सदा सर्वकालं विषयः गोचरोऽस्त्विति प्रत्याशीः । अत्र विषयपदस्य यौगि-

हरितोषिणी ।

दाह्लानजनकत्वं सुलभमिति भावः । तेनागता या व्रजसुन्दर्यः स्त्रियः, तथा च 'सुन्द-रीहृदयानन्द' इतिवाक्याद्विलक्षणानन्दजनकत्वं भगवत इति ध्वनितम् । तासां सुन्दरीणां निरुपमो यो नवो विलक्षणो यः स्नेहो भक्तिः स एवाम्भोधिः, एतावता भक्तेरत्याधिक्यं सूचितम, तस्याम्भोधेः विचित्रतरोर्मिभिः अत्यन्तं विचित्रा इति विचित्रतरा व्यभिचा-रिभावादयः तद्युक्ता या ऊर्मयो मनोरथाः, भगवत्सम्बन्धित्वादात्यन्तिकत्वं तेषाम्, एता-दृशैरूर्मिभिः कृत्वा किमपि अनिर्वचनीयं यथा भवति तथा 'यतो वाचो निवर्तन्ते अ-प्राप्य मनसा सह'ेति पूर्वानुवाकं प्रक्रम्योत्तरं 'रसो वै स' इति वाक्यादनिर्वचनीयत्वं रस-स्येति बोध्यम । परितः सर्वतः आर्द्रार्द्रः अतिशयेनार्द्रः सन्, अत एव प्रतियुवतिसं-भेदेन प्रकटीभवन् युवतिं युवतिं प्रति इति प्रतियुवति यः संभेदः सङ्गमस्तेन हेतुना प्रकटीभवन् प्रकटिततावद्रूप एतादृशः स प्रभुः अस्मदृशां सदा विषयोऽस्तु । इदं चा-

गङ्गाधरभट्टी ।

मिति मम्मटोक्तेः । ऊर्मिभिः परितः सर्वतः किमपि अनिरुक्तं यथा स्यात्तथा आर्द्रार्द्रः अत्यार्द्रः प्रतियुवतिसंभेदेन, प्रतिर्लक्षणे वीप्सायां वा । संभेदः सङ्गमः 'कृत्वा तावन्त-मात्मानं यावतीर्गोपयोषितः' इति श्रीभागवतात् । प्रकटीभवन् प्रकटिततावद्रूपः, स्वय-

---

टिप्पणी ।

मूले मङ्गलाचरणे आर्द्रार्द्र इत्यत्र । मायावादिनो हि निर्गुणं निर्विकारमप्रत्यक्षं ब्रह्मेति वदन्ति, तदेतत्त्रयमिह विशेषणत्रयेण निरस्यते—आर्द्रार्द्र इत्यनेन निर्विकारत्वम्, प्रतियुवति-संभेदेन प्रकटीभवन्नित्यनेन निर्गुणत्वम, अस्मदृशां विषय इत्यनेनाप्रत्यक्षत्वम् ।

## सुवर्णसूत्रम् ।

कार्योऽपि रूढार्थोपोद्बलकतया विवक्षितः । विशेषेण सिनोति बध्नातीति विषयः । आसेचनकदर्शने नेत्रयोस्तथात्वस्यानुभवसिद्धत्वात् । तथा च 'इन्द्रियैर्विषयाकृष्टै'रिति न्यायेन भगवतैवान्तर्बहिरिन्द्रियाकर्षेणे या सर्ववृत्तिगोचरता तस्या आशास्यत्वं व्यज्यते । नचेदं रूढ्या प्राप्यते, स्वरूपसम्बन्धवैशिष्ट्य[बोधेन]मात्रेणैव कृतार्थत्वात् । नापि योगेन, विशेषाणां बहुत्वात् । अतो व्यञ्जनयैवेति निश्चयः । नेत्रपक्षे तु भगवतस्तावद्रूपस्य दर्शने नेत्रद्वयस्य पर्याप्तत्वं न भवतीति तद्बहुत्वस्याप्याशास्यत्वं व्यज्यते । उभयमपीदं वरणैकलभ्यमेतन्मनोरथोऽपि तथेति तत्सूचनेन स्वस्य वृतत्वमपि ध्वन्यते । व्यञ्जना च तात्पर्यवृत्तिरेव, नत्वतिरिक्ता ॥ (अर्थगताया लक्षणाया इव वक्तृगतस्य तात्पर्यस्यापि शब्द आरोपाच्छब्दवृत्तित्वव्यवहार इत्यादिकं प्रस्थानरत्नाकरे व्युत्पादितमस्माभिः) । वस्तुतस्तु बुभुत्सितावाचकत्वेऽपि तत्प्रतीतिजनकत्वमेव तात्पर्यमतो न कोपि सन्देहः । अनिर्वाच्यत्वं तु रसरूपस्यैव । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'त्यत्रानिर्वाच्यत्वं यद्यपि ब्रह्मणः श्रावितं तथापि 'रसो वै स' इति रसरूपत्वं पूर्वानुवाके प्रकृत्य तदुत्तरमेतस्य श्रावितत्वात्तादृशस्यैव तथात्वं, न त्वीश्वरादिरूपस्य । 'तं त्वौपनिषदं पुरुषं पृ-

## हरितोषिणी ।

शीर्वादात्मकं मङ्गलम्, 'आशीर्नमस्क्रिया वस्तुनिर्देशो मङ्गलं त्रिधे'ति वाक्यात् । स्नेहस्य समुद्रसाम्यं तु तस्यानन्तत्वबोधाय, तद्धि 'नान्तोस्ति कामस्य न समुद्रस्ये'ति श्रुत्या बोध्यम् । स च स्नेह आत्मधर्मो मनसो वा, न तु इच्छामात्रम्, तस्मिन् प्रीणामि स्निह्यामीच्छामि नेत्यनुव्यवसायात् । न हि ज्ञानस्वरूपः, शत्रोरपि ज्ञानात्, तत्र स्नेहाभावात् । स्नेहे वैलक्षण्यरूपवत्त्वं नवत्वं च भगवदतिरिक्ते देहगेहादौ तस्याभावाद्बोध्यम् । इदं च

## गङ्गाधरभट्टी ।

मितिपाठे मूलरूप इत्यर्थः । अस्मद्दृशामिति ज्ञानसामान्ये दृशिः । सर्वज्ञानानां सदा विषयोऽस्त्विति प्रत्यगाशीरूपमङ्गलम् । एतेनैतादृश्या आशंसाया एव परमपुरुषार्थत्वमिति व्यज्यते । अत एव निरुपमकिमपीत्यादिपदानि । अनेन विषयोऽप्युक्त इति दिक् ॥ १ ॥

---

## टिप्पणी ।

तोषिणीमङ्गलाचरणे विठ्ठलेशरायमित्यत्र राजशब्द एवापभ्रंश्य रायरूपमापेति प्रतीयते । यजुर्वेदिनो मैथिलाश्च वेदाध्ययनकालिकसंस्कारवशेन लोकेऽपि यकारजकारौ सदृशमुच्चारयन्ति । एवंविधचिरव्यवहारवशेन केचन शब्दा अपभ्रष्टरूपेणैव तत्तद्वस्तुबोधने

---

१ उपबृंहकतया ग. पुस्तके । २ ग. ड. पु. कर्षणेन । ३ एतच्चिह्नितकोष्ठकान्तर्गतः पाठो मुद्रितपुस्तके नास्ति । ४ ग. पु. एतच्चिह्नितकोष्ठकान्तर्गतः पाठो नास्ति ।

## सुवर्णसूत्रम् ।

च्छामि' 'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' 'सर्ववेदान्तप्रत्यय'मित्यादिश्रुतिस्मृतिन्यायविरोधात् । परित आर्द्रार्द्रत्वकथनेन यत्कृपावत्त्वं सूचितं तदपि लीलानित्यत्ववादे समाप्तौ व्युत्पाद्यम् । एकादशे 'रामेण सार्ध'मित्यादिसंदर्भेण तासां स्तुतिपूर्वकं सर्वात्मभावोपदेशेन, ततश्चाभयप्राप्तिकथनेन, तत्प्रीतिकभावेन भजत्स्वपि भगवतः कृपालुतासूचनार्थमपि तदिति ज्ञेयम् । लुप्तोपमया स्नेहस्याऽम्भोधितुल्यत्वसूचनमपि तस्यानन्तत्वाय ('समुद्र इव हि कामः नैन्तोऽस्ति कामस्य न समुद्रस्ये'ति श्रुतेः, न तु स्वरूपतुल्यत्वार्थं )। तेन निरुपमत्वोक्तेर्न विरोधः । स्नेहश्चात्मनो मनसो वा योग्यो धर्मविशेषः, न त्विच्छा । तस्मिन् स्निह्यामि, प्रीणाम्यनुरज्यामि, नेच्छामीत्यनुव्यवसायात् । अत एव न ज्ञानमपि, तस्य द्विष्टादावपि तुल्यत्वाच्च । तस्य नवत्वश्च इतरत्र तदप्रकटनात्, न तु जन्यत्वात् । वाक्यान्वयाधिकरणे तथैव सिद्धेः । निरुपमत्वं च मोक्षसुखादप्याधिक्यबोधनाय, लिङ्गभूयस्त्वाधिकरणे तथैव व्युत्पादनात् । 'प्रजातिरमृतमानन्द इत्युपस्थ' इत्यत्र मोक्षेऽपि केचिदुपमाया व्याख्यानाच्च । मुरलिकायां स्वीयत्वं चात्र तात्कालिको यो भगवदधरसम्बन्धस्तद्वत्वं, न तु तत्स्वामिकत्वमात्रम् । 'क्रीडार्थमात्मन इदं त्रिजगत्कृतं' इत्यादिवाक्यैः सर्वस्यैव तथात्वेनाविशेषापातात् । नाप्यभिमानिकचाटकसम्बन्धित्वं, भगवतो निरभिमानित्वात् । नापि प्रातीतिकाभिमानविषयत्वं, तदीयमुरलिकाया अन्येन वादने तदागमनाद्यश्रवणात् । तस्मादुक्त एव सम्बन्धोऽत्र विवक्षितः । तन्नादस्य तु साक्षात्कृतत्वमेव निजत्वम् । अत्र च वाक्ये स्फुटः पर्यायोक्तमलङ्कारः । तल्लक्षणञ्च 'पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रय'मिति । स च 'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष' इति 'परोक्षवादा ऋषयः परोक्षं च मम प्रिय'मिति श्रुतिभगवद्वाक्याभ्यां तथा कथनस्य भगवत्प्रियत्वावगमादत्र तथा कथनायादृतः । किञ्चात्र 'वंशस्तु भगवान् रुद्र' इति तापनीयश्रुतेर्मुरलिकाया रुद्रात्मकत्वम् । नादश्च वर्णात्मकस्य शब्दस्य

## हरितोषिणी ।

वाक्यान्वयाधिकरणे स्पष्टम् । मोक्षसुखादप्याधिक्यान्निरुपमत्वं स्नेहस्य बोध्यम् । इदं लिङ्गभूयस्त्वाधिकरणे स्पष्टम् । मुरलिकाया रुद्ररूपत्वं, नादस्य वेदरूपत्वमित्यत्र प्रमाणं सुवर्णसूत्रे स्पष्टम् । ग्रन्थश्रवणप्रयोजकानां विषयप्रयोजनाधिकारिसम्बन्धानां स्पष्टत्वात्तत्राप्रदर्शनमिति दिक् । इदं दण्डान्वयेन व्याख्यातम् । खण्डान्वयस्तु—प्रभुः अस्मदृशां वि-

---

१ ग. पु. न्यायेषु तस्य प्रतिपादनात् । एतेन विरुद्धधर्माश्रयत्वं बोधितं भवतीति पाठान्तरम् । २ एतच्चिह्नान्तर्गतः पाठो मुद्रितपुस्तके नास्ति । ३ ङ. पु. नो चेहास्ति कामस्यान्तो न समुद्रस्येति श्रुतेः इति पाठः । ४ ग. पु. किञ्चिदुपमाया इति पाठः । ५ मानस्वात् इति मु. पु. पाठः ।

सुवर्णसूत्रम् ।

पूर्वावस्था, आह्वानरूपात्कार्यादुत्तरावस्थामपि सूचयन्ती 'वेदः शिवः शिवो वेद' इति वाक्येनैकरूपसामानाधिकरण्याद्वेदं सूचयति । 'इतिहासपुराणं वेदानां पञ्चमो वेद' इति श्रुतेस्तेन रूपेण पुराणमपि संगृह्णाति । नादश्चाव्यक्तः शब्दस्तेन तदर्थस्य दुर्ज्ञेयत्वं, तेन यदाह्वानं तद्विचारं विना न भवतीति तत्कथनादत्र भगवच्चिन्तात्मकव्यासावतारसूचनम्, साष्टशाह्वानस्य भगवद्वाक्यत्वाच्च गीतासूचनम्, एवं समभिव्याहारेण तेषां परस्पराविरोधसूचनम्, एवमाह्वानान्तेन प्रमाणं सूचितम् । आगवेत्यारभ्योर्मिमिरित्यन्तेन सर्वात्मभावात्मकसाधनकथनम् । अग्रिमार्द्धेन प्रमेयम्, आशास्यतया फलम्, तदनुभवप्रकारश्चोक्तः । एवमत्र चतुर्लक्षण्युक्तं चतुष्टयमपि संगृहीतम् । तावता विषयप्रयोजनयोः सिद्धौ प्रतिपाद्यप्रतिपादकभावः सम्बन्धोऽपि ग्रन्थार्थयोः सिद्धः । आशंसयैव च तदाशंसुरधिकार्यपि बोध्यते । एतदेव समाप्तौ 'तस्माद्स्माभिरेवोक्तपद्धत्ये'ति श्लोके स्फुटं वक्तव्यम् । एवमेतेन श्रोतुर्ग्रन्थश्रवणे प्रवर्तनाय यदुपयुज्यते तत्सर्वमुक्तम् । 'सिद्धार्थं सिद्धसम्बन्धं श्रोतुं

हरितोषिणी ।

पयः सद्य अस्तु । किं भूतः—निजेत्यादि, आर्द्रार्द्रः सन् प्रतियुवतिसंभेदेन प्रकटीभव-

---

टिप्पणी ।

शक्ता भवन्तीति तेषां तथाविधत्वं जानन्तोऽपि 'वितेनुरिङ्गालमिवायशः परे' इत्यादाविङ्गालादिशब्दवत्तांस्तथैव प्रयुञ्जते । असाधुत्वमसन्तोषमावहति चेन्, कर्मघञन्ताभ्यां 'रा दाने आदाने च, रय गतौ' इत्येताभ्यां निष्पादनीयः ।

श्रीगोकुलेन्दोरनन्तरं श्रीमुकुन्दरायाणां नतिः संप्रदायप्रसिद्धेषु सप्तस्वरूपेषु पद्मा इम इति ज्ञापयितुम् । मुख्यतयाऽग्रे चतुर्थपद्येन पृथङ् नुतेः । इदं तोषिण्यां तृतीयपद्ये । सुवर्णसूत्रे तोषिण्यां च वाक्यान्वयाधिकरणे स्पष्टमिति । अयं भावः—ब्रह्ममीमांसायां प्रथमाध्याये चतुर्थपादे 'वाक्यान्वया'दित्यारभ्य चतुःसूत्रं वाक्यान्वयाधिकरणमस्ति । तत्र 'न वारे पत्युः कामाय पतिः प्रियो भवति' 'तेन सर्वं विदितम्' 'इदं सर्वं यदयमात्मेत्ये'वमादीनि मैत्रेयीब्राह्मणस्थानि विषयवाक्यानि प्रदर्श्योभयलिङ्गदर्शनेन संशय्योपक्रमे 'न वारे पत्युः कामाय' इति जीवात्मनिरूपणेन जीवप्रकरणमित्याशङ्क्य, तत्रोक्तम्—नेदं जीवप्रकरणं, किन्तु ब्रह्मप्रकरणम् । सर्वस्मिन्नेवेदरूपे महावाक्ये ब्रह्मण एव कारणत्वेनान्वयादर्शनात्, इदमपि मैत्रेयीब्राह्मणं तत्रैवान्वेति । यच्चोपक्रमे जीवनिरूपणम्, तत्र जीव-

---

१ ध्वस्ता इति मु. पु. पाठः । २ रत्व इति मु. पु. पाठः ।

पितृचरणान् नत्वाऽहं हरिरतिमार्गाम्बुजातमार्तण्डान् ।
तदनुग्रहतः किंचिल्लिखामि यत्नाद् यथाबुद्धि ॥ २ ॥

सुवर्णसूत्रम् ।

श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजन' इति । ग्रन्थश्च सम्बन्धप्रयोजनज्ञानाधीनशुश्रूषाजन्यश्रुतिविषयः सन्दर्भविषय इति दिङ्मात्रमुक्तम् ॥ १ ॥

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन' इति श्वेताश्वतरश्रुतेर्गुरौ भगवतीव बुद्धिरावश्यकीति श्रीमदाचार्यान् नमस्यन्तो ग्रन्थकरणं प्रतिजानते—पितृचरणानिति । 'त्वं हि नः पिता योऽस्माकमविद्यायाः पारं तारयसी'ति प्रश्नश्रुतेः, पातीति पितेति योगोऽत्रापि ग्राह्यः । 'मृतेण्ड एष एतस्मिन् यदभूत्ततो मार्तण्ड इति व्यपदेश' इति पञ्चमस्कन्धे मार्तण्डपदनिर्वचनम् । तेन श्रीमदाचार्यैर्भक्तिमार्गप्रकाशनेऽकृत एतस्य जगतो मृतप्रायत्वं द्योतितम् । तदेव श्रीवल्लभाष्टके 'नाविर्भूयाद्भवानि'ति श्लोके व्युत्पादितम् । तदेतन्मस्कृततद्विवृतिटिप्पणाद्यवगन्तव्यम् ॥ २ ॥

हरितोषिणी ।

त्रिति ॥ १ ॥ एवं श्रीभगवत्स्वरूपनित्यलीलाविनोदरूपवस्तुनिर्देशपूर्वकाशीर्वादात्मकमङ्गलानन्तरं श्रीमत्प्रभुचरणाः पितृचरणनत्यात्मकं मङ्गलमाचरन्ति—पितृचरणानिति । अहं विठ्ठलः हरेः रतिर्यस्मिन् सः एतादृशो यो मार्गः पुष्टिमार्गः स एवाम्बुजातं कमलं तस्य मार्तण्डान् सूर्यवत्प्रकाशकानितियावत् । एतादृशान् पितृचरणान्नत्वा तदनुग्रहतः श्रीमत्प्रभुचरणानुग्रहाद् यथाबुद्धि किञ्चिल्लिखामि । लेखे ह्यल्पत्वबोधनेन ग्रन्थे प्रेक्षावतां

गङ्गाधरभट्टी ।

विट्ठलः सुधीरिति । विदा ज्ञानेन ठान् शून्यान् लात्यनुगृह्णातीति दयालुत्वं, सुधीरिति

---

टिप्पणी ।

त्वेन, किन्तु प्रियत्वेन प्रियत्वं च सुखधर्मः, सुखं च 'यो वै भूमा तत्सुखम्, नाल्पे सुखमस्ती'तिश्रुतेर्ब्रह्मैवेति । इत्थं च स्नेहापरपर्यायस्य प्रियत्वस्येह वाक्यान्वयाधिकरणे ब्रह्मधर्मताप्रतिपादनान्नित्यत्वमायाति । नित्ये चाचिरजातत्वरूपं नवत्वं न संभवतीति 'निरुपमनवस्नेहाम्भोधे'रित्यत्र नित्ये स्नेहे भगवदतिरिक्तदेहगेहाद्यविषयत्वरूपमेव नवत्वं प्रतिपत्तव्यम् ।

मङ्गलश्लोकविवृतौ सुवर्णसूत्रे लिङ्गभूयस्त्वाधिकरणे स्पष्टमित्यत्र—सर्वात्मभावरूपाया मुख्यभक्तेर्वरणैकलभ्यत्वं पूर्वाधिकरणे प्रोक्तम्, तत्र कालस्वभावादीनां प्रतिबन्धकानां सत्त्वेन तदभावोऽपि कारणत्वेनावश्यको, न तु केवलं वरणमेव कारणमिति पूर्वपक्षे सिद्धान्तितं 'लिङ्गभूयस्त्वात्तद्धि बलीय' इति । सर्वात्मभावरूपा मुख्या भक्तिर्वरणं

**श्रुतिसूत्रादिमणिभिर्जटितं युक्तिमौक्तिकैः ।**
**ग्रथितं कुरुते विद्वन्मण्डनं विट्ठलः सुधीः ॥ ३ ॥**

सुवर्णसूत्रम् ।

एवं ग्रन्थकरणं प्रतिज्ञाय तस्य विद्वदुपयोगित्वं वदन्तो, विदा ज्ञानेन ठाः शून्यास्तान् लातीति स्वनामयोगस्मारणेन स्वस्य दयालुत्वमपि बोधयन्ति—श्रुतीति। आदिपदेन १गीतादिस्मृतिग्रहणम् । मणिमृष्टस्यापि मण्डनस्य मुक्ताभिः शोभाऽतिशयादत्र तदनुकूलतन्मूलकयुक्तीनां तथात्वम् ॥ ३ ॥

हरितोषिणी ।

सुखेन प्रवृत्तिर्भविष्यतीति बोधितम् ॥ २ ॥ नामकरणपूर्वकं ग्रन्थकरणं प्रतिजानते—श्रुतीति । सुधीः विट्ठलः 'विदा ज्ञानेन ठान् शून्यान् लाति गृह्णाति यः स्वयम् । तेनायं विट्ठलः प्रोक्तः' एतेनास्यत्वदयालुत्वं व्यज्यते। श्रुतिसूत्रादिमणिभिः श्रुतिर्वेदः सूत्राणि व्याससूत्राणि, आदिशब्देन श्रीभागवतं गीता चेति । एतेन 'वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि । समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयमि'ति निबन्धोक्तं संगृह्यते । जटितमेतादृशप्रमाणचतुष्टयेन युक्तम्, मण्डनसादृश्यार्थं मणिजटितग्रथितमौक्तिकपदादीनां ग्रहणम्। किञ्च युक्तिमौक्तिकैर्ग्रथितम्, एतादृशं विद्वन्मण्डनं विद्वन्मण्डननामकं ग्रन्थं कुरुते । विदुषां मण्डनरूपस्य ग्रन्थस्याध्ययनरूपधारणेन सभायां विजयो भविष्यतीति शोभेति भावः ॥ ३ ॥

गङ्गाधरभट्टी ।

सर्वज्ञत्वं च सूचितम्, तेन भगवत्त्वमित्यन्यत्र प्रपञ्चितम् । सूत्रादीत्यादिपदेन गीतास्मृत्यादिः ॥ २ ॥ ३ ॥

---

टिप्पणी ।

विना न भवतीति सा जाता सती वरणमनुमापयतीति वरणस्य लिङ्गम्, तस्य सर्वात्मभावरूपलिङ्गस्य भूयस्त्वात्सर्वतोऽधिकत्वात् तत् कारणभूतं वरणं बलीयः बलिष्ठम्, न कालादिना बाध्यत इत्यर्थः । यस्य कार्यमेव सर्वतोऽधिकं तस्य कालादितः प्रबलत्वे किं वक्तव्यमिति कैमुतिकन्यायसिद्धमेतत् । अत्राधिकरणे वरणलिङ्गभूतायाः सर्वात्मभावभक्तेः सर्वाधिकत्वकथनान्मोक्षसुखादप्याधिक्यं सिद्धमेवेति युक्तमुक्तं निरुपमनवस्नेहेत्यत्र स्नेहभक्तेर्निरुपमत्वम् । इदं लिङ्गभूयस्त्वाधिकरणमुत्तरमीमांसायां तृतीयाध्याये तृतीयपादेऽस्तीति विस्तरस्ततोऽनुसंधेयः ॥

---

१ न्ति श्रुतीति मु. पु. पाठः ।　२ बोधितम् इति मु. पु. पाठः ।

१ मौक्तिकोपमया युक्तेः शुद्धत्वमपि व्यज्यते ।

इह हि विविधवृजिनतापोपतप्यमाननिखिलजनापवर्गाय श्रुतिपुराणेषु श्रवणादयः प्रतिपाद्यन्ते । तेषां विषयश्च ब्रह्मैवोच्यते । तन्निर्धर्मकं सधर्मकं चेति भवति विप्रतिपत्तिर्जिज्ञासूनाम् । उभयरूपत्वेनापि श्रूयमाणत्वात् ।

सुवर्णसूत्रम् ।

एवं ग्रन्थोपयोगमुक्त्वा तमारभमाणा विषयं संशयञ्च स्फुटीकुर्वन्ति । इह हीत्यादि । आपाततः प्रतीतः संदिग्धोऽर्थो विषयः स चात्र ब्रह्मैव । विप्रतिपत्तिरिति । विरुद्धं ज्ञानम् । तथा चोभयरूपत्वेन श्रूयमाणत्वाद्विप्रतिपत्तिस्ततश्च जिज्ञासूनामुक्तरूपः संशय इत्यर्थः ।

हरितोषिणी ।

ननु कस्मिंश्चिद्विषये संशयनिराकरणार्थं ग्रन्थकरणं युक्तम्, तदत्र को वा विषयो यस्मिन् संशये सति तन्निराकरणं कर्तव्यमित्यत आहुः—इह हीति । इह संसारे विविधं यद् वृजिनं दुःखम्, विविधत्वोक्त्या अनेकजन्मादिदुःसहसन्तापजनकत्वं बोध्यम् । तज्जन्यो यस्तापः तेनोपतप्यमानाः ये निखिला जनाः तेषां अपवर्गाय मोक्षाय श्रुतिस्मृतिपुराणेषु 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादिश्रुतिषु, तथा च 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदन'मित्यादिपुराणेषु विषय इति सन्देहविषयीभूतः सामान्यः प्रतीतोऽर्थ इत्यर्थः । उच्यते इत्यन्तेन विषयो दर्शितः । एतादृशविषये संशयमाहुः—तन्निर्धर्मकमिति । विप्रतिपत्तिरिति । संशयजनकविरुद्धोभयकोट्युपस्थित्यात्मकं ज्ञानम् । श्रूयमाणत्वादिति । श्रुताविति शेषः ।

गङ्गाधरभट्टी ।

विषयश्चेति । आपाततः प्रतीतः सन्दिग्धोऽर्थः सः । विप्रतिपत्तिः विरुद्धं ज्ञानम् । संशयमाह—उभयेत्यादिना ।

---

टिप्पणी ।

तोषिण्यां पञ्चमपद्ये गोपाललालपदारविन्दे हृदि निधायापि पुनरुत्तरत्र 'गोपाललालं हि भजे रसाल'मिति गोपाललालं भजन्ते । तत्रेदं निमित्तं तर्कयामः—पञ्चमपद्ये हि क्रमप्राप्ततया पादपद्मकलनम्, उत्तरत्र तु स्वस्य गोपालमन्त्रानुष्ठायकतया करिष्यमाणग्रन्थार्थस्फूर्तिसिद्धये ध्येयभगवद्गोपालस्वरूपस्य भजनमिति ॥

तत्रैव षष्ठे मङ्गलश्लोके प्रवहप्रदर्शीति । यथा अरविन्दं सौरभद्वारा प्रवहं जलप्रवाहं दर्शयति सूचयतीत्येवमाचार्यपदारविन्दमपि पुष्टिमार्गप्रवाहं दर्शयतीति प्रवहशब्दप्रयोगश्चेतसीयानाशयः स्फुरति ॥

(१) तथाहि—'अथात आदेशो नेति नेति' 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' 'स होवाचैतद्वै तदक्षरं गार्गि ! ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमस्पर्शमगन्धमरसमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखमनामाऽगोत्रमजरम-

विप्रतिपत्ति-विषयवाक्य-प्रदर्शनम् ।

सुवर्णसूत्रम् ।

(१) अथात इति । बृहदारण्यके मूर्तामूर्तब्राह्मणे श्रूयते । एतदर्थस्त्वग्रे स्वयमेव वक्तव्यः । अपाणीति । श्वेताश्वतरे तृतीयेऽध्याये श्रूयते । एतदग्रिमार्धं तु 'स वेत्ति वेद्यं न च तस्यास्ति वेत्ता[1] तमाहुरग्र्यं पुरुषं महान्त'मिति । अर्थस्तु—ज्ञानसाक्षित्वेन गच्छतीव भातीति जवनः । एवमग्रेऽपि । स सर्वं जडं वेत्ति । तस्य वेत्ता ग्राहको ज्ञाता अन्यो नास्ति,

हरितोषिणी ।

(१) कस्यां श्रुतौ स्मृतौ च श्रूयते इत्यतस्तदुभयबोधकवाक्यान्याहुः—तथाहीत्यादिना । विचारे विषयसंशयपूर्वपक्षसिद्धान्ता इति चतुष्टयमपेक्षितम् । तत्र विषयसंशयौ तूक्तौ, मायावादिकृतपूर्वपक्षस्तु—मध्यस्थेन किमत्र युक्तमिति प्रश्ने कृते निर्विशेषमेवेत्यारभ्य सर्वं समञ्जसमित्यन्तम् । सिद्धान्तस्तु—स्वमतरीत्या अत्र ब्रूम इत्यादिनोच्यते । इदं चानुपद-

गङ्गाधरभट्टी ।

(१) अथात इति मूल एव व्याख्यायते । अपाणीति । श्वेताश्वतरे तृतीयाध्याये । उत्तरार्द्धं तु—'स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्त'मिति । अज्ञानसाक्षित्वेन गच्छतीव भातीति जवनः । अस्थूलमिति । द्वितीये गार्गीब्राह्मणे । न स्थूलमिति पर्युदासः, न स्थूलमस्मिन्निति प्रसज्यप्रतिषेधो वा । अस्थूलादिपदचतुष्टयेन द्रव्यत्वप्रयोजकपरिमाणनिषेधः । लौहित्यनिषेधेनाग्निभिन्नत्वम् । स्नेहनिषेधेन जलभिन्नत्वम् । छाया दीप्तिः, तमो ध्वान्तं, तदुभयातिरिक्तम् । अवाय्वनाकाशमित्यमूर्तद्रव्यद्वयनिषेधः । असङ्गमितिवासनात्वस्य । अस्पर्शमित्यादिभी रूपादीनाम् । अचक्षुष्कमित्यादिनेन्द्रियाणाम् ।

---

टिप्पणी ।

तत्रैव सषट्पदीति । षट् पदानि पद्यानि श्रीनाथं चेत्यादिनानामतेष्विच्छन्तानि तदर्थभावनया तदात्मकीभूतेन, अरविन्दपक्षे च तन्मरन्दरिरसिषया षट्पदीभूतेन भ्रमरीभूतेन मनसा सह वर्तत इति । अथवा स इति पृथक्कृत्याध्याहृतेनाहंपदेन, अस्मीत्यहमर्थकेनाव्ययेन वा सह योजनीयम् । पदशब्दस्य पद्यवाचकत्वं तु 'इति षट्पदी मदीये' इतिशङ्कराचार्यषट्पद्यामपि दृष्टम् ॥

---

१ 'न च तस्य वेत्ता' इति मु. पु. पाठः ।

**मरमभयममृतमरजोऽशब्दमविवृतमसंवृतमपूर्वमनपरमनन्तरमबाह्यम्'**

सुवर्णसूत्रम् ।

तं पुरुषं तादृशमाहुरिति । स होवाचेति । बृहदारण्यके द्वितीये गार्गीब्राह्मणे । अत्र न स्थूलमस्थूलं स्थूलाद्भिन्नमिति पर्युदासगर्भोऽर्थः । न विद्यते स्थूलं यस्मिन्निति प्रसज्यप्रतिषेधगर्भो वार्थः । अत्र स्थूलादिपदचतुष्टयेन द्रव्यत्वप्रयोजकपरिमाणनिषेधेन द्रव्यत्वनिषेधः । लौहित्यनिषेधेनाऽग्निभिन्नत्वम् । स्नेहनिषेधेन जलभिन्नत्वम् । छाया दीप्तिस्तमो ध्वान्तम्, तदुभयभिन्नत्वेन किञ्चिदतिरिक्तत्वशङ्काऽपाकृता । अवाय्वनाकाशमित्येताभ्याममूर्तद्रव्यत्वस्य निषेधः । असङ्गमित्यनेन वासनात्वस्य । अस्पर्शमित्यादिभी रूपादीनाम् । अचक्षुष्कमित्यादिनेन्द्रियाणाम् । अतेजस्कमिति वृत्तिरूपज्ञानस्य । अनामेत्यादिभि-

हरितोषिणी ।

मेव वक्ष्यते । इदानीं संशये मूलमपेक्षितमिति संशयजनककोटिद्वयोपस्थापकश्रुतिवाक्यान्युच्यन्ते । तत्र प्रथमं निर्विशेषबोधकवाक्यान्याहुः—अथात आरभ्य निर्विशेषं ब्रह्म प्रतिपाद्यत इत्यन्तेन । 'अथात आदेश' इतिवाक्यं बृहदारण्यके मूर्तामूर्तब्राह्मणे पठितम् । अयमभिप्रायः—'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चे'त्युपक्रमानन्तरं 'अथात' इति वाक्यं पठितम्, तत्र 'नेति नेती'त्यनेन प्रपञ्चे मूर्तामूर्तत्वमितिरूपद्वयं तस्य निषेधः प्रतिपाद्यते ब्रह्मणि । एवं चेद्ब्रह्मसद्भावे प्रमाणाभाव इति न वक्तव्यम् । 'न ह्येतस्माद्ब्रह्मणः परमस्ती'ति श्रुतिरेव तत्सत्वं वदति । सूत्रेपि 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय' इति बादरायणोऽप्याह । तथा चानया श्रुत्या निर्विशेषं प्रतिपाद्यते । किं च तत्रैव मैत्रेयीब्राह्मणेप्युक्तम्—अथात इत्यारभ्य 'न्यदेव तद्विदितादथोऽविदितादि'त्यादिना । न च कदाचिदभावरूपमेव भवेदिति शङ्क्यम् । अत एव चित्स्वरूपत्वं वदति श्रुतिः—'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'ति । श्वेताश्वतरे निर्विशेषप्रतिपादकमपरं वाक्यमाहुः—अपाणीति । जवन इति । अज्ञानसाक्षित्वेन गच्छतीव भातीत्यर्थः । उत्तरार्द्धं तु 'स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्त'मिति । बृहदारण्ये द्वितीयाध्याये गार्गीब्राह्मणोक्तमपरं वाक्यमाहुः—स होवाचेति । अस्थूलमिति । स्थूलाद्भिन्नम् । अस्थूलादिपदचतुष्टयेन परिमाणनिषेधः । लौहित्यस्नेहनिषेधेनाऽग्निजलभिन्नत्वम् । वाय्वाकाशनिषेधेनामूर्तभिन्नत्वम् । असङ्गमिति वासनात्वनिषेधः । अस्पर्शादिपदैः रूपादीनां निषेधः । अग्रेऽप्येवमेवोह्यम् । अमुखमित्यादिना शरीरराहित्यम् । अनन्तरमिति । न विद्यते अन्तरं छिद्रं यस्येत्यर्थः ।

गङ्गाधरभट्टी ।

अतेजस्कमितिवृत्तिरूपस्य ज्ञानस्य । अनामेत्यादिभिस्तदुपलक्षितशरीरस्य । अनन्तर-

'न तदश्नोति कश्चन' 'न तदश्नोति कश्चन' 'दिव्यो ह्यमूर्तः पुरुषः स-

सुवर्णसूत्रम् ।

त्तदुपलक्षितशरीरस्य । अनन्तरमिति च्छिद्रस्य । व्यस्तयानन्त्येन प्रत्येकप्रतिषेधाशक्त्या भोक्तृभोग्यात्मना तदेकीकृत्य निषेधति—न तदित्यादि । अश्नोतीत्यत्र विकरणव्यत्ययः । अश्नातीत्यर्थः । दिव्य इति । मुण्डके श्रूयते । एतदग्रे "अप्राणो ह्यमनाः शुभ्रोऽक्षरात्परतः परः" इति । अत्रैतयोर्मध्ये श्रुत्यन्तरलिखनममूर्ताऽशरीरपदयोरैकार्थ्येन शरीरराहित्यस्या-ऽनेकश्रुत्युक्तत्वबोधनायेति ज्ञेयम् । अर्थस्तु—दिव्यो द्योतनवान्, दिवि स्वात्मनि भवोऽ-लौकिको वा । हि यस्मादमूर्तः पूर्वमूर्तिवर्जितः । पुरुषः पूर्णः पुरिशयः । सबाह्याभ्य-न्तरः सह बाह्याभ्यन्तरेण वर्तत इति । अजः स्वतोन्यस्य जन्मनिमित्तस्याभावाच्च न कुत-श्चिज्जायते । तावता भावविकाराः सर्वे निषिद्धाः, तेषां जन्यत्वात् । अजत्वेन जरामरण-क्षयभयादिकमुपलक्षणतया निवर्तितम् । यद्यपि देहाद्युपाधिभेददृष्टीनामविद्यावशाद्देहभे-देषु सप्राणमनःप्रभृतिमान् भाति, तथापि परमार्थदृष्टीनां स्वतस्तद्रहित एवेत्यर्थः । एव-

हरितोषिणी ।

भोक्तृभोग्यात्मकं सर्वमेकीकृत्य निषेधति—न तदश्नोतीति । अत्र विकरणव्यत्ययः । अ-श्नातीत्यर्थः । निर्विशेषबोधकमपरं मुण्डकवाक्यमाहुः—दिव्य इति । अत्र स्वमतरीत्यार्थस्तु —दिव्यः अलौकिकः अमूर्तः परिमाणशून्यः सः लोकवेदप्रसिद्धः बाह्याभ्यन्तरः बहि-रन्तर्विद्यमानः । अस्य परमतरीत्यार्थस्तु—सुवर्णसूत्रे उक्तः । विस्तरभयात्प्रकृतानुपयुक्तत्वाच्च

गङ्गाधरभट्टी ।

मिति च्छिद्रस्य । न तदश्नोतीति भोक्तृभोग्यात्मनैकीकृत्यानुक्तसर्वनिषेधः । विकरणव्य-त्ययादश्नातीत्यर्थः । दिव्य इति मुण्डके । एतदग्रे 'अप्राणो ह्यमनाः शुभ्रोऽक्षरात्परतः परः' इति । दिव्योऽलौकिकः, तत्र हेतुः—बाह्याभ्यन्तर इति । न चाकाश इत्याह—स पुरुष इति । पुरा आसेति निरुक्तौ हेतुरज इति । जीवव्यावृत्त्यर्थं तृतीयः पादः । अक्ष-रात् लोकादिस्थानीयात् परः परं ब्रह्मेति 'उत्तमः पुरुषस्त्वन्य' इति स्मृतेरिति । अग्रे स्प-

टिप्पणी ।

तोषिण्यां सप्तमे मङ्गलपद्ये अतितराविति । अतितरौ पूजितौ श्रेष्ठाविति यावत् । चरणविशेषणतया द्रव्यप्रकर्षाभिधानान्मासुः ॥

तत्रैव द्वादशे रसालमिति । यद्यप्ययं सहकारसिद्धकादिषु प्रसिद्धस्तथापीह प्रकरणव-शेन रसेनानन्देनालते शोभते, रसं भक्तानां लौकिकामिलाषमलति वारयतीति वा यौगि-कार्थो ग्राह्यः । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति गीतोक्तेः ॥

१ ग. पु. निषेधाशक्त्या ।

बाह्याभ्यन्तरो ह्यजः' । 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति' 'अप्राणो ह्यमनाः शुभ्रः' 'असङ्गो ह्ययं पुरुष' इत्यादिश्रुतिभिः । 'अव्यक्तोऽयमचिन्त्योऽयम्'

सुवर्णसूत्रम् ।

मत्र फरणनिषेधः । शुभ्रः शुद्धो, नामरूपजीवोपाधिलक्षितस्वरूपात्क्षरात्परमक्षरं, तद्रहितमव्याकृताख्यमीश्वरोपाधिरूपं, तस्मात्परो निरुपाधिः पुरुष इत्यर्थः परमते । सिद्धान्ते तु अव्याकृतमक्षरं परं लोकादिस्थानीयं तस्मात्पर ईश्वर एव । अमूर्तः इयत्तावच्छिन्नपरिमाणरहितः । स इति भिन्नं पदम् । लोकवेदप्रसिद्ध इत्यर्थः । बहिरन्तर्विद्यमान इत्येवं ज्ञेयम् । अशरीरमिति । इदं कठवल्लीस्थम् । अर्थस्तु—अशरीरं स्वरूपेणाकाशकल्पं, शरीरेषु देवतिर्यगादिरूपेष्वनवस्थेष्ववस्थितिरहितेषु नश्वरेष्ववस्थितं वर्तमानम् । तथा च नित्यमविकृतमित्यर्थः । महत्त्वस्यान्याऽऽपेक्षिकत्वाद्विभुं व्यापकम् । आत्मानम् । आत्मग्रहणं स्वतोऽनन्यत्वप्रदर्शनार्थम् । आत्मशब्दः प्रत्यगात्मविषय एव मुख्यः । तमीदृशमात्मानं मत्वा अहमिति ज्ञात्वा धीरो धीमान्, न शोचति शोकनिर्मुक्तो भवतीत्यर्थ इति

हरितोषिणी ।

विरम्यते । अन्यदपि कठवल्लीस्थं वाक्यमाहुः—अशरीरमिति । तत्रापि स्वमतरीत्यार्थस्तु—न विद्यते लौकिकं शरीरं यस्मिन् नित्यस्वात्मकधर्मकम्, अनवस्थेषु अवस्थितिरहितेषु तिरोभावशालिष्विति यावत् । अवस्थितं वर्तमानं । महान्तं न तत्समः कश्चित्, विभुं व्यापकम्, आत्मानं चिदेकरसम् । अन्यदपि मुण्डकवाक्यमाहुः—अप्राण इति । शुभ्रः शुद्धः । एतदग्रे 'अक्षरात्परतः पर' इति वाक्यं पठितम् । तदर्थस्तु—अव्याकृतमक्षरं लोकादिस्थानीयं, तस्मात्पर ईश्वरः । ननु 'दिव्य' इति 'अप्राण' इति मुण्डकवाक्यद्वयं पठितम्, तयोर्मध्ये कठवल्लीस्थं वाक्यं पठितमित्यवधेयम् । असङ्ग इति । बृहदारण्यके ज्योतिर्ब्राह्मणे जीवप्रकरणे । स्वप्ने स्त्रीसङ्गे जाते तज्जनितपापेनाननुलिप्त इत्यर्थः । श्रुतिभिरिति । प्रतिपाद्यते इत्यग्रिमेणान्वयः । एवं श्रुतिवाक्यान्युक्त्वा स्मृतिवाक्यान्याहुः—अव्यक्तो-

गङ्गाधरभट्टी ।

ष्टम् । अशरीरमिति कठवल्ल्याम् । अशरीरमाकाशकल्पम्, अनवस्थेषु नश्वरेषु, महत्त्वस्यापेक्षिकत्वाद् विभुं व्यापकमात्मानं जीवं मत्वा अयमहमिति ज्ञात्वा इत्यर्थ इति परे । तन्न; 'गौणश्चेन्नात्मशब्दा'दिति सूत्रे ब्रह्मपरत्वस्य मुख्यतया प्रतिपादनेनात्मशब्दस्य प्रत्यगात्मपरत्वे गौण्यापत्तेः, 'सर्वे वेदा' इति ब्रह्मप्रतिपादनव्यवधाना जीवप्रकरणाभावाच, अशरीरमहद्विभुपदानामेकार्थत्वाच । तस्माद्ब्रह्मपरमिदम् । शरीरं विशरणशीलं, तद्रहितं नित्यस्वात्मकधर्मकं महान्तं गुणादिभिः, 'न तत्समश्चाभ्यधिकश्चे'ति श्वेताश्वतरात् । असङ्ग

---

१ ह. पु. पूर्वत्र कार्यरूपशरीरनिषेधः इत्यधिकः पाठः । २ स्याऽऽपेक्षिकत्वादिति मु. पु. पाठः ।

'न सत्तन्नासदुच्यते' । 'स वै न देवाऽसुरमर्त्यतिर्यङ् न स्त्री न पण्ढो न पुमान् न जन्तुः । नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेष' इत्यादिपुराणवाक्यैश्च निर्विशेषं ब्रह्म प्रतिपाद्यते । 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसं-

सुवर्णसूत्रम् ।

परमते । सिद्धान्ते तु 'येयं प्रेते' इति जीवप्रश्नोत्तरं श्रुत्वा 'अन्यत्र धर्मा'दित्यनेन प्रश्नान्तरे कृते 'सर्वे वेदा यत्पदमामनन्ती'त्यादिना तदुत्तरकथनात् प्रकरणभेदेन नास्य शारीरैक्यम् । अतस्तद्व्यतिरिक्तमत्र ब्रह्मोच्यते । अत एव पूर्वत्र 'हर्षशोकौ जहाती'त्युक्तम् । अत्र तु शोकमात्रत्यागः । अर्थस्तु—अशरीरं,—न विद्यते शरीरं विशरणस्वभावं यस्मिन् तादृशं नित्यस्वात्मकधर्मकम् महान्तं,—सर्वप्रकारैर्न तत्समः कश्चिदिति । विभुं व्यापकमिति । पूर्वत्राशरीरमहद्विभुपदानामेकार्थबोधकत्वाद्वैयर्थ्यमपुष्टार्थत्वं वा बोध्यम् । असङ्ग इति । बृहदारण्यके ज्योतिर्ब्राह्मणे श्रूयते । इदञ्च जीवप्रकरणम् । अत्र स्वप्ने रमणादिकमुक्त्वा ततो जागरणदशायां स्वाप्निकेन पुण्यपापफलेनानुविद्धत्वादसङ्गत्वं जीवस्य वक्ति 'स यत्किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष' इति । अयमर्थः सिद्धान्तेऽपि तुल्यः । अव्यक्तोऽयमिति । गीतायां जीवप्रकरणे । न सदिति । गीतायां ज्ञेयं प्रकृत्योक्तम् । सत् नामरूपाभ्यां व्याकृतम् । असत्ताभ्यामव्याकृतमित्यर्थः । स वै इति । अष्टमस्कन्धे गजेन्द्रवाक्यम् । अत्र देवादिनिषेधेन तद्रूपता निषिद्धा । न जन्तुरित्यनेन लिङ्गत्रयशून्यं प्राणिमात्रं निषिद्धम् । किन्तु सर्वनिषेधे अवधित्वेनावशिष्यत इति निषेधशेषः, मायया अशेषात्मकश्चेति परमतेऽर्थः । स्वत एव विरुद्धधर्माधारत्वात् सर्वात्मक

हरितोषिणी ।

य'मिति । गीतायामिदं वाक्यम् । अन्यदपि वाक्यमाहुः—'स वा' इति श्रीभागवते गजेन्द्रस्तुतौ । निषेधशेष इति । सर्वनिषेधे सति यः अवधित्वेन शिष्यते स निषेधशेषः । मायया सर्वात्मक इति परमतरीत्यार्थः । स्वमते तु विरुद्धधर्माश्रयत्वेन सर्वात्मकः । एवं निर्विशेषब्रह्मप्रतिपादकवाक्यान्युक्त्वा सविशेषप्रतिपादकानि वाक्यान्याहुः—यतो वा इति । तैत्तिरीये । अनेन वाक्येन सृष्टिरुच्यते । येन जातानीति । जातानि भूतानि येन ब्रह्मणा जीवन्ति प्राणान् धारयन्ति । एतेन स्थितिमुक्त्वा प्रलयमाहुः—यत्प्रयन्तीति । यद्ब्रह्म प्रयन्ति प्रतिगच्छन्ति । अभीति । तादात्म्यं प्रतिपद्यन्ते । इदं च स्वमते परम-

गङ्गाधरभट्टी ।

इति बृहदारण्यके जीवप्रकरणं परमते, जीवब्रह्मणोरभेदाय तत्रोक्तम् । अव्यक्त इति गीतायां जीवप्रकरणे । 'न स'दिति तु ज्ञेयप्रकरणे । 'स वा' इति अष्टमस्कन्धे । न जन्तुरिति लिङ्गत्रयशून्यप्राणिमात्रनिषेधः । सर्वनिषेधे अवधित्वेन शेषस्याप्यशेषत्वं सर्वात्मत्वं ब्रह्मणो

विशन्ति' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादि। 'स ईक्षां

सुवर्णसूत्रम् ।

इति तु सैद्धान्तिकोऽर्थः । यतो वेति । आनन्दाद्धीति । तैत्तिरीये भृगुप्रपाठके ब्रह्मप्रकरणे ब्रह्मलक्षणमिदम् । यतो यस्मादिमानि ब्रह्मादितृणस्तम्बान्तानि जायन्ते, येन जातानि तानि जीवन्ति, प्राणान् धारयन्ति, विनाशकाले च यद्ब्रह्म प्रयन्ति प्रतिगच्छन्ति, अभिसंविशन्ति तादात्म्यं प्रतिपद्यन्ते । तथा च भूतानि उत्पत्तिस्थितिप्रलयकालेषु यदात्मतां न जहति तदेतद्ब्रह्मलक्षणमित्यर्थः । इदं मतान्तरे उपहितस्योपादानत्वात् परब्रह्मणस्तटस्थलक्षणम् । सिद्धान्ते तूपादानलक्षणं परस्यैवेति विशेषः । स ईक्षां चक्र इति । एषा श्रुतिः प्रश्नोपनिषदि षोडशकलमुपक्रम्य पठिता । 'स आत्मानमि'ति शाखान्तरस्थः पाठः । बृहदारण्यके 'सोऽहेय'मिति पठ्यते, 'तदात्मान'मित्येवं च पठ्यते । अर्थस्तु—स प्रजापतिः, अहेयं यथा स्यात्तथा ईक्षां ईक्षणं विचारं चक्रे इति । इतः पूर्वं 'सोऽबिभेत् तस्मादेकाकी बिभेती'ति श्रवणात् । अग्रे 'यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाये'ति तत्वज्ञानेन भयनिवृत्तिश्रावणात्तस्य संसारित्वं परमते । सिद्धान्ते तु 'आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्य'दित्युपक्रमे आत्मशब्दादनुवीक्षायामन्यदर्शननिषेधाच्च ब्रह्मैवात्रोच्यते । मध्ये भयकथनं तु अग्रे एकाकिनो भयबोधनार्थमेवंप्रकारेण भयोत्पत्तिकथनार्थम् । अन्यथा 'आत्मेत्येवोपासीते'ति 'तदेतदृषिः पश्यन् वामदेवः प्रतिपेदे' इत्यादिनोक्तं सर्वभावार्थकमुपासनं वेदनं चोत्कृष्टं न स्याद्, विषयस्य संसारित्वात् । अतो यथा 'सोऽकामयते'त्यादौ कामोत्पत्तिरुच्यत एवमिह भयोत्पत्तिरुच्यत

हरितोषिणी ।

ह्मण उपादानलक्षणम् । प्रश्नोपनिषत्स्थं वाक्यमाहुः—स ईक्षामिति । सः प्रजापतिः ईक्षां ईक्षणं विचारं चक्रे; विचारानन्तरं सः आत्मानमेवावैत् ज्ञातवान् । ज्ञानाकारमाहुः—अह-

गङ्गाधरभट्टी ।

विरुद्धधर्माधारत्वात् । 'यतो वे'ति 'आनन्दाद्धी'ति च तैत्तिरीये भृगुप्रपाठके । प्रयन्ति प्रतिगच्छन्ति । अभिसंविशन्ति तादात्म्यं प्रतिपद्यन्ते । 'स ईक्षा'मिति प्रश्नोपनिषदि । 'स आत्मान'मिति शाखान्तरे । बृहदारण्यके तु 'सोऽहेयमीक्षां चक्रे, तदात्मान'मित्यादि पाठः । अहेयं यथा स्यात्तथा ईक्षां विचारमिति संसारिनिरूपणम्, पूर्वं 'एकाकी बिभेती'तिश्रुतेः, उत्तरत्र 'यन्मदन्यन्नास्ति कस्मान्नु बिभेमी'तिश्रुतेश्चेति परे । तन्न; 'आत्मेत्येवोपासीते'ति 'तदेतदृषिः पश्यन्वामदेवः प्रतिपेदे' इत्येवमादिनोक्तस्य सर्वभावार्थकस्योपासनस्य निकृष्टत्वापत्तेः, विषयस्य संसारित्वात्, 'आत्मैवेदमग्र आसीदि'ति ब्रह्मप्रक-

१ व्याख्यायते मु. पु. पाठः ।

चक्रे स आत्मानमेवावैदहं ब्रह्मास्मीति' । 'सर्वस्य वशी, सर्वस्येशानः' । 'यः सर्वज्ञः सर्वशक्तिः' । 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैः, द्यावाभूमी जनयन् देव एकः' 'सर्वकामः सर्वगन्धः सर्वरस' इत्यादिश्रुतिभिः । 'सर्वतःपाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति' 'निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकश-

सुवर्णसूत्रम् ।

इत्येव युक्तमिति । सर्वस्य वशीति । बृहदारण्यके शारीरब्राह्मणे । वशमस्यास्तीति वशी । तथा च सर्वनिष्ठं यदधीनत्वं तदेतन्निरूपितमस्तीत्यर्थः । वस्तुतस्तु सर्वशब्दस्य 'स वा अयमात्मे'ति पूर्वेण सम्बन्धः । 'अहमात्मा गुडाकेश सर्वभूताशयस्थित' इति गीतास्मृतेः । 'यः सर्वज्ञः सर्वशक्ति'रिति शाखान्तरस्थम् । श्वेताश्वतरे 'यः सर्वज्ञः सर्ववि'दिति पाठात् । विश्वत इति । तैत्तिरीये श्वेताश्वतरे च किञ्चित्पाठभेदेन वर्तते । अर्थस्तु— आब्रह्मतृणस्तम्बान्तानां चक्षूंषि अस्येति विश्वतश्चक्षुः । उत अपि । एवमग्रेऽपि । सर्वेन्द्रियोपलक्षणमेतत् । संधमति संयोजयति । पतत्रैः पतनसाधनैः पादैः पक्षैर्वा । सिद्धान्तेऽपि तुल्यमेतत् । मूलरूपं तथेति वा । सर्वकाम इति । छान्दोग्ये शाण्डिल्यविद्यायाम् । सर्वत इति । गीतावाक्यं त्रयोदशे । अग्रे विवरणीयम् । निर्दोषेति । नारद-

हरितोषिणी ।

मिति । बृहदारण्यके शारीरब्राह्मणस्थं वाक्यमाहुः—सर्वस्येति । स्पष्टम् । शाखान्तरस्थं वाक्यमाहुः—य इति । श्वेताश्वतरे तु 'यः सर्वज्ञः सर्ववि'दिति । तैत्तिरीयस्थं वाक्यमाहुः— विश्वत इति । उतेत्यप्यर्थकः धमति संयोजयति पतत्रैः पादैः पक्षैर्वा, अन्यत्स्पष्टम् । छान्दोग्ये शाण्डिल्यविद्यास्थं वाक्यमाहुः—सर्वकाम इति । श्रुतिभिरिति । इदं च सविशेषं प्रतिपाद्यत इत्यनेनान्वितम् । एवं सविशेषब्रह्मप्रतिपादकश्रुतिवाक्यान्युक्त्वा स्मृतिवाक्यान्याहुः—'सर्वत' इति । इदं च गीतायां त्रयोदशाध्याये । नारदपञ्चरात्रस्थं वाक्य-

गङ्गाधरभट्टी ।

माह । अतो यथा सोकामयतेत्यादौ कामोत्पत्तिरुक्ता, एवमिह भयोक्तिरेकाकिनो भयबोधनार्थमिति युक्तं ब्रह्मपरत्वम् । सर्वस्येति । शारीरब्राह्मणे । तत्र 'सर्वस्ये'ति 'स वा अयमात्मे'ति पूर्वेण सम्बध्यते । 'अहमात्मा गुडाकेश सर्वभूताशयस्थित' इतिगीतोक्तेः । सर्वशक्तिरिति शाखान्तरे । श्वेताश्वतरे तु 'सर्ववि'दिति पाठः । विश्वत इति तैत्तिरीये । श्वेताश्वतरे तु किञ्चित्पाठभेदः । आब्रह्मस्तम्बान्तानि चक्षूंषि अस्येति विश्वतश्चक्षुः, इति एवमग्रे । संधमति संयोजयति पतत्रैः पतनसाधनैः पादैः पक्षैर्वा । सर्वकाम इति । छान्दोग्ये शाण्डि-

रीरगुणैश्च हीनः । आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा' इत्यादिस्मृतिभिश्च सविशेषं प्रतिपाद्यते ॥

किमत्र युक्तम् ? निर्विशेषमेवेति । कुतः ?

(२) उपजीव्यत्वतः श्रौतवाक्यैश्चान्यपरत्वतः ।
अन्तरङ्गत्वतश्चापि निर्विशेषं निरूप्यते ॥

सुवर्णसूत्रम् ।

पञ्चरात्रे । एवमत्र विषयसंशययोर्बोधनाय श्रुत्यादिवाक्यान्युपन्यस्तानि ।

(२) पूर्वपक्षं वक्तुमनुयुञ्जन्ति—किमिति । पूर्वपक्षं संगृह्णाति—उपजीव्यत्वत इत्यादि । उपजीव्यत्वं निर्वाहकत्वम् । निर्वाहश्च वृत्त्यविघातः । वृत्तिस्तु क्वचित् स्वरूपस्थितिः, क्वचिदक्लिष्टस्थितिः, क्वचित्कार्यजननसामर्थ्यमित्यननुगता तत्र तत्र बोध्या । तथा च विशेषनिरूपकश्रुतिवृत्त्यविघातसाधकत्वेनेत्यर्थः । उपजीव्यत्वत इत्यादौ सार्वविभक्तिकस्तसिः ।

हरितोषिणी ।

माहुः—निर्दोषेति । एवं निर्विशेषसविशेषब्रह्मप्रतिपादकवाक्यकथनेन विषयो दर्शितः ॥

(२) एवं च संशये सति मध्यस्थेन विचारं कर्तुं प्रश्नः क्रियते—किमत्रेति । तत्र निर्विशेषब्रह्मस्वीकर्तृणां मायावादिनां मतं पूर्वपक्षकोटौ निवेशयितुमाहुः—निर्विशेषमिति । कुत इति । कस्माद्धेतोरिति मध्यस्थप्रश्नः । तदनन्तरं पूर्वपक्षी हेतुवाक्यैः स्वमतं दृढीकर्तुं कारिकामाह—उपजीव्यत्वत इति । निरूप्यत इत्यनेनान्वयः । अत्र पञ्चम्यन्तं तसिल्प्रत्ययान्तं हेतुत्रयमाहुः—उपजीव्यत्वत इति । निर्वाहकत्वादित्यर्थः । धर्मनिरूपणस्य धर्माधारनिरूपणं विना असंभवात् तत्र तस्य निर्वाहकत्वान्निर्विशेषनिरूपणमावश्यकमिति भावः । श्रीगोस्वामिपुरुषोत्तमास्तु—तसिलः सार्वविभक्तिकत्वं स्वीकृत्य उपजीव्यत्वत इति तृतीयान्तमग्रिमहेतुद्वयं पञ्चम्यन्तमाहुः । मया तु विशेषाभावात् स्वयं कारिकाव्याख्यानावसरे पञ्चम्यन्तत्वोक्त्या च हेतुत्रयस्य पञ्चम्यन्तत्वमुक्तम् । द्वितीयं हेतुमाहुः—श्रौतवाक्यैश्चेति । उपासनाबोधकश्रौतवाक्यैरित्यर्थः । चकारेण स्मृतिवाक्यानां समुच्चयः ।

गङ्गाधरभट्टी ।

स्यविद्यायाम् । सर्वत इति । गीतावाक्यम् । अग्रे विवरिष्यते । निर्दोषेति । नारदपञ्चरात्रे ।

(२) उपजीव्यत्वत इत्यादौ सार्वविभक्तिकस्तसिल् । विशेषनिरूपकश्रुतिवृत्त्यविघातक-

---

टिप्पणी ।

(२) गङ्गाधरभट्टीविवृतौ उपजीव्यत्वत इति कारिकाव्याख्याने 'एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यती'तिशाब्दिकन्यायादित्यत्र—उपजीव्यत्वतः, अन्य-

**तथा हि—सविशेषवादिनाऽपि विशेषाधारत्वेनावश्यं ब्रह्मस्वरूपमप्यङ्गीकर्तव्यम् । अन्यथा कुत्र विशेषा निरूपिताः स्युः । तथा चाऽऽधारनिरूपिका श्रुतिराधेयनिरूपिकया नान्यथयितुं शक्या, उपजीव्यत्वात् । न च धर्मिस्वरूपं निरूप्य धर्मनिरूपणेनोभयसार्थकत्वमिति वाच्यम् । अस्थूलाद्युक्त-**

निर्विशेषप्रतिपादकवाक्यविचारः ।

**-सुवर्णसूत्रम् ।**

अत्र पूर्वश्चकारः स्मार्तवाक्यसमुच्चायकः । द्वितीयश्चकारो युक्तिसमुच्चायकः । अपिर्वाद्यन्तरगर्हायाम । निरूप्यत इति । श्रुत्यादितात्पर्यगोचरतयोच्यत इत्यर्थः । कारिकां व्याकरोति—तथा हीत्यादि । उपजीव्यत्वादिति । एतेनान्तरङ्गत्वमपि बोध्यते । तेन यथा आमिक्षाधिकरणे उत्पत्तिशिष्टाया आमिक्षाया यागस्वरूपघटकतयान्तरङ्गत्वम्, तथात्र स्वरूपनिरूपकाणां धर्मस्वरूपनिर्वाहकतयाऽन्तरङ्गत्वमिति । यथा तत्र न वाजिनेनामिक्षाबाधस्तथाऽत्र न धर्मैर्निर्विशेषस्य बाध इत्यर्थः । इयमेव युक्तिरन्तरङ्गत्वतश्चेति चकारेण बोध्यते । ननु धर्माणामागन्तुकत्वाङ्गीकारे पाश्चात्यत्वान्न तैः स्वरूपबाधनमिति तदन्यथाकरणशङ्काया एवानुदय इति शङ्कां हृदि कृत्वाऽऽह—न चेत्यादि । अस्थूलेत्यादि । यदि निषेधो न स्यात्तदा तथा स्यात्, न तु तस्मिन् जाग्रतीत्यर्थः ।

**हरितोषिणी ।**

अन्यपरत्वत इति । धर्मबोधकवाक्यानामिति शेषः । तथा च तादृशवाक्यानामुपासनापरत्वादित्यर्थः । तृतीयं हेतुमाहुः—अन्तरङ्गत्वत इति । आधारनिरूपणस्याऽऽधेयनिरूपणापेक्षया प्राथमिकत्वेन धर्मिणः अन्तरङ्गत्वादित्यर्थः । अत एवान्तर्भूतनिमित्तकत्वं पूर्वोपस्थितिरूपं चान्तरङ्गत्वमिति तत्र तत्रोक्तं संगच्छते । कारिकार्थमाहुः—तथा हीत्यादि । तत्र प्रथमं उपजीव्यत्वत इतिं हेतुं व्याकुर्वन्ति—सविशेषेति । नान्यथयितुमिति । नान्यथाकर्तुमित्यर्थः, निर्विशेषश्रुतेर्निर्वाहकत्वादपवादो न भविष्यतीति भावः । कारिकायां तसिल्प्रत्ययान्तं हेतुं पञ्चम्यन्तत्वेन स्वीकुर्वन्ति—उपजीव्यत्वादिति । निर्वाहकत्वादित्यर्थः । परस्परं बाध्यबाधकभावो नास्ति, कुतः? अस्मन्मते ब्रह्मणो विरुद्धधर्माधारत्वस्वीकारादित्याशयेन सिद्धान्ती शङ्कते—न चेति । उत्तरयन्ति—अस्थूलेति । तथा च निषे-

**गङ्गाधरभट्टी ।**

धेनेत्यर्थः । चद्वयं स्मृतियुक्तिसमुच्चये । उपजीव्यत्वादिति पञ्चमी हेतौ हेतुतृतीयया समानार्था । न त्वनेनोपजीव्यत्वत इत्यत्र पञ्चम्यन्तात्तसिल् शङ्क्यः । 'एकस्या आकृतेश्चरितः

---

**टिप्पणी ।**

परत्वतः, अन्तरङ्गत्वत इति हेतुत्रयं पञ्चम्यन्तात्तसिलि निष्पन्नमिति तोषिणीकृद्भिरभ्युपेयते; तन्न साधीयः । यथा गोष्वश्वेषु च स्वामीत्यत्र 'स्वामीश्वराधिपति' इतिसूत्रेण षष्ठीसप्तम्योर्वि-

श्रौतवाक्यैर्धर्मनिषेधश्रवणात् । ननु निर्विशेषब्रह्मनिरूपिका श्रुतिर्धर्मान् विना न तन्निरूपयितुं शक्ता । तथा हि–निरूपणं हि लक्षणैः, तानि चासाधारणधर्मरूपाणि । अत्र च धर्माभावात् तन्निरूपणपूर्वमभावमुखेनाऽस्थूलादिवाक्यैर्निरूपयन्त्या धर्मनिरूपिका श्रुतिरुपजीव्या, अभावस्य प्रतियोगिनिरूपणाधीननिरूपणत्वात् । तथा च श्रौतत्वोपजीव्यत्वयोरविशेषादन्यतरबाधो न युक्तः, विरोधात्; तथाकरणे

सुवर्णसूत्रम् ।

अभावस्येत्यादि । अभावनिरूपणं धर्मिप्रतियोगिनिरूपणाधीनमिति धर्मिणो ग्र-

हरितोषिणी ।

धस्य विद्यमानत्वादुभयसार्थकत्वं नास्तीत्यर्थः । अत्र सिद्धान्ती पुनः शङ्कते–नन्विति मैवमित्यन्तम् । निरूपणासम्भवं विशदयन्ति–तथा हीति । धर्मरूपाणीति । असाधारणधर्मो हि लक्षणमित्यभियुक्तोक्तेः । प्रकृते कथमित्यत आहुः–अत्र चेति । अत्र च निर्विशेषब्रह्मणि च । तन्निरूपणेति । धर्मनिरूपणपूर्वकमित्यर्थः । निरूपयन्त्या इति । निर्विशेषब्रह्म निरूपयन्त्याः श्रुतेरित्यर्थः । उपजीव्येति । तथा च सविशेषनिरूपकश्रुतिं विना निर्विशेषश्रुतिः निरूपणं कर्तुं न शक्नोतीति निर्विशेषश्रुतिनिर्वाहकत्वरूपमुपजीव्यत्वं सविशेषश्रुतेरागतमितिभावः । ननु कुतो न शक्नोतीत्यत आहुः–अभावस्येति । कस्याभाव इत्याकाङ्क्षाया अनिवृत्तेः धर्मनिरूपणं विना धर्माभावनिरूपणं न सम्भवतीत्यभावमुखेन निरूपणं कर्तुं न शक्नोतीति भावः । एवं च सिद्धान्ती स्वमतं स्थापयितुमाह—तथा चेति । त्वन्मते आधारनिरूपणं विना धर्मनिरूपणं न जायत इति उपजीव्यत्वं निर्विशेषश्रुतेः, मन्मते प्रतियोगिनिरूपणं विना अभावनिरूपणं न सम्भवतीति सविशेषश्रुतेरुपजीव्यत्वमित्युभयमतेऽप्यविशेषः। श्रुत्युक्तत्वमप्युभयत्रास्तीति अन्यतरबाधाभा-

गङ्गाधरभट्टी ।

प्रयोगो न द्वितीयस्या' इति शाब्दिकन्यायात् । न चायमनित्यः, अगतिकगतित्वात् । अयं भावः—आमिक्षा वैश्वदेवीत्यधिकरणे यथा—उत्पत्तिशिष्टामिक्षाया उत्पन्नशिष्टेन वाजिन-

टिप्पणी ।

धानेऽपि न गोष्वश्वानां च स्वामीति प्रयोक्तुं शक्यम्, अश्वानां स्वामी गोषु तिष्ठतीत्यर्थान्तरबोधोदयेन प्रकृतार्थप्रतीतये प्रकरणाद्याश्रयणे प्रतिपत्तिगौरवात्, तथेहापि श्रौतवाक्यैरितितृतीयान्तहेतूपादानेन शिष्टानां पञ्चम्यन्तत्वे श्रौतवाक्यैरन्यपरत्वादित्यत्र श्रौतवाक्यै-

१ वैकमिति ग. पु. पाठः ।

तूभयबाधो युक्तः, उक्तयुक्तेः । तथा च शून्यवाद आपद्येतेति वृश्चिक-भिया पलायमानस्य विषमाशीविषमुखे निपातः । न चैवमपि वक्तुं शक्यम् । "असन्नेव स भवति असद्ब्रह्मेति वेद चे"दिति निन्दाश्रुते-रिति चेत्, मैवम् । न हि श्रुतिसिद्धा धर्मा निषिध्यन्ते, किन्त्वनुवाद-पूर्वं लौकिकाः स्थौल्यादयः । तथा च क धर्माणां श्रौतानामुपजीव्यत्वम् । न चैवं निषेधस्य भिन्नविषयत्वाद् विरोधाभावेनैकतरबाधो न युक्तः, तथा चोभयवत्त्वं सिद्धमिति सांप्रतम् । श्रौतानामप्यर्थानां श्रोतव्य-त्वादीनां 'यतो वाचो निवर्तन्ते' इत्यादिना निषेधात् । न चोपजीव्यत्व-

सुवर्णसूत्रम् ।

ह्मण इव प्रतियोगिनां धर्माणामप्युपजीव्यत्वादित्यर्थः । उक्तयुक्तेरिति । सूचिताभ्यामुप-जीवकत्वबहिरङ्गत्वाभ्यामित्यर्थः । उपजीव्यत्वबाध इति । उपजीव्यत्वप्रयुक्तो बाध

हरितोषिणी ।

बात्तदुभयधर्मवत्त्वं सिद्धमिति भावः । तथाकरणे अन्यतरबाधकरणे । उक्तयुक्तेरिति । उभयत्र श्रौतत्वोपजीव्यत्वयोरविशेषाद्विनिगमकाभावादित्यर्थः । तथा च उभयबाधस्वी-कारे च । विषमेति । विषमश्चासौ आशीविषः सर्पश्चेत्यर्थः । न चैवमपि । न हीत्यर्थः । शून्यवादस्वीकारे श्रुत्युक्तं दूषणमाहुः—असन्नेवेति । 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु'रितिश्रुतेरित्यर्थः । इयं च तैत्तिरीयोपनिषदि । अत्र मायावादी समाधानमाह—मैवमिति । स्पष्टम् । पुनः सिद्धान्ती शङ्कते—न चैव-मिति । मायावादी उत्तरयति—श्रौतानामिति । निषेधाद्भिन्नविषयत्वं नास्तीति भावः । सिद्धान्ती शङ्कते—न चेति । अभावस्य प्रतियोगिनिरूपणाधीनत्वाद् धर्मनिरूपणे उपजी-

गङ्गाधरभट्टी ।

गुणेन न बाधः, यागस्वरूपघटकत्वेनान्तरङ्गत्वात्, उपजीव्यत्वाच्च । एवं प्रकृतेऽपि ।

---

टिप्पणी ।

रन्यपरत्वप्रतिपादनादित्यादेराशयस्यापि स्फूर्तिसंभवेन प्रकरणादिना निर्णये प्रतिपत्तिगौ-रवात्सर्वेषां हेतूनां तृतीयान्तत्वमेव युक्तमित्येकस्या इति परिभाषया सिद्ध्यतीति भावः । अस्या अर्थस्तु—एकस्या आकृतेः स्वरूपस्य विभक्त्यादिरूपस्य प्रयोगश्चरितः कृतः, अतो द्वितीयाद्याकृतेः प्रयोगो न भवितुमर्हतीति । अत्र विस्तरः परिभाषेन्दुशेखरादवेयः । यत्तु मूलकृद्भिः, उपजीव्यत्वत इत्यादेरर्थं प्रदर्शयद्भिरुपजीव्यत्वात्, अन्यपरत्वात् इतिपञ्चम्यन्त-पदं उपन्यासिषाताम्, तत्तात्पर्यप्रदर्शनाभिप्रायेण केवलमिति सर्वं समञ्जसम् ॥

बाधः। एवंविधस्य तस्याऽप्रयोजकत्वात्। अन्यथा अभावनिरूपणोच्छेदप्रसङ्गात्। नन्विदमसंगतम्। न हि लोके यस्मिन् यदा ये धर्माः सत्त्वेन निरूपितास्ते तस्मिन्नेव तदैव निषेद्धुं शक्याः, विरोधात्। कालभेदेन तु शक्या निषेद्धुम्। पूर्वं श्यामत्वेन निरूपिते पाकरक्ते घटे श्यामत्वस्येव। न चैवं ब्रह्मणि संभवति, सदैकरसत्वात्। अतः कथं धर्मनिरूपणं, कथं वा निषेध इति तत्संदंशपतितो मिथ्यावादीति चेत्,

सुवर्णसूत्रम्।

इत्यर्थः। एवंविधस्येत्यादि। अभावप्रतियोगितानियन्त्रितस्योपजीव्यत्वस्य स्वकार्याक्षमत्वादित्यर्थः। इदमिति। एकस्मिन् ब्रह्मणि तत्तदभावनिरूपणमित्यर्थः। अविद्याकल्पितत्वेनाङ्गीकारादिति। ल्यब्लोपे पञ्चमी। तथा च तेषां तथात्वमङ्गीकृत्य निषेधतीत्यर्थः। उदाहरणं तु यथा श्वेताश्वतरे 'विश्वतश्चक्षु'रित्याद्युक्त्वा, ततो यदुत्त(रत)रं

हरितोषिणी।

व्यत्वम्, तस्य निषेधे उपजीव्यत्वस्य बाधः स्यादित्यर्थः। मायावादी उत्तरयति—एवंविधस्येति। एतादृशस्य उपजीव्यत्वस्य अप्रयोजकत्वात् कार्याजनकत्वात्। तथा च बाधस्य स्वीकारादित्यर्थः। अन्यथा स्वीकाराभावे। अत्र सिद्धान्ती शङ्कते—नन्विति। असङ्गतमिति। अभावनिरूपणोच्छेद इति यदुक्तं, तदसङ्गतमित्यर्थः। यद्वा ब्रह्मणि तत्तदभावनिरूपणम्। असङ्गतत्वमेवोपपादयन्ति—नहीति। शक्या इति। न हीति पूर्वेणान्वयः। श्यामत्वस्येवेति। तथा च कालभेदेन श्यामत्वतदभावयोः सत्त्वादभावनिरूपणं संगच्छते इति भावः। ननु मयापि कालभेदेन ब्रह्मणि एवं वक्तुं शक्यत इत्यत आहुः—न चैवमिति। न हीत्यर्थः। सदैकरसत्वादिति। सार्वकालिकैकरसत्वादित्यर्थः।

गङ्गाधरभट्टी।

धर्मिस्वरूपमिति। अग्निहोत्राद्युक्त्वा दधिदुग्धादिगुणविधिवत्। उक्तयुक्तेरिति। उपजीव्यत्वादेः। एवंविधस्य तस्येति। अभावप्रतियोगितानियन्त्रितस्योपजीव्यस्य स्वकार्याक्षमत्वादित्यर्थः। पूर्वोक्तान्निषेधतीति। यथा श्वेताश्वतरे 'विश्वतश्चक्षु'रित्याद्युक्त्वा ततो यद-

---

टिप्पणी।

न च धर्मिस्वरूपं निरूप्येत्यस्य गङ्गाधरभट्टगामग्निहोत्राद्युक्त्वा दधिदुग्धादिगुणविधिवदित्यत्र—'अग्निहोत्रं जुहोती'त्यनेनाग्निहोत्रे विहिते यागस्य द्रव्यदेवतात्मकतया द्रव्या-

---

1 कोष्ठकान्तर्गतमक्षरद्वयं मु. पु. नास्ति।

न। धर्मनिरूपिकायाः श्रुतेरन्यपरत्वात्। तथाहि—सोपधि ब्रह्म निरूपयति धर्मनिरूपिका श्रुतिरुपासनार्थम्, तया चित्तशुद्धौ सत्यां निर्विशेषं ब्रह्म प्रतिपत्स्यते इति तात्पर्येण। ततस्तादृशब्रह्मज्ञापनाय पूर्वोक्तान् निषेधति, तेषामविद्याकल्पितत्वेनाङ्गीकारात्। अतोऽपवादार्थं कर्तृत्वाद्युक्त्वा निषेधतीति कल्पने सर्वं समञ्जसमिति चेत्?

सुवर्णसूत्रम्।

तदरूपमनामयमिति। यथा च बृहदारण्यके मूर्तामूर्तलक्षणं रूपद्वयमुक्त्वा 'अथात आदेशो नेति नेती'ति। एवमन्यदपि द्रष्टव्यम्॥

हरितोषिणी।

एवं च कालभेदो न वक्तुं शक्यः। अत इति। कालभेदाभावादित्यर्थः। एकस्मिन्नेव काल इति शेषः। अत्र मायावादी द्वितीयं अन्यपरत्वत इति हेतुं पुरस्कृत्य समाधानं वदति—धर्मेति। अन्यपरत्वमेव व्युत्पादयति—तथा हीत्यादिना। उपासनार्थमिति। निरूपयतीति पूर्वेणान्वयः। तया उपासनया। प्रतिपत्स्यते प्राप्नोति। तेषां धर्माणाम्। अविद्याकल्पितत्वेनाङ्गीकारादिति। अविद्याकल्पितत्वमङ्गीकृत्य निषेधतीत्यर्थः। तथा च वस्तुगत्या ते धर्मास्तत्र न सन्तीति भावः। तथा च यत् सिद्धं तदाहुः—अत इति। कर्तृत्वादीति। अविद्याकल्पितकर्तृत्वादीत्यर्थः। इदं च बृहदारण्ये मूर्तामूर्तब्राह्मणे रूपद्वयमुक्तम्। पश्चान्निषेधति 'अथात आदेशो नेति नेती'ति। सर्वं समञ्जसमिति। कोपि श्रुतिविरोधो नास्तीति भावः॥

गङ्गाधरभट्टी।

नन्वदं 'तदरूपमनामयमि'ति। बृहदारण्यके च मूर्तामूर्तलक्षणमुक्त्वा 'अथात आदेशो नेति नेती'ति दिक्।

---

टिप्पणी।

काङ्क्षायां 'दध्ना जुहोती'त्यनेन दधि तदङ्गतया विधीयत इति प्रधानविधिगुणविध्योर्यथा सार्थकत्वं, तथा निर्विशेषश्रुतिभिः प्रथमं धर्मि निरूप्यते, तत्किंधर्मकमित्याकाङ्क्षायां सविशेषश्रुतिभिर्धर्मा निरूप्यन्त इत्युभयसार्थकत्वमिति भावः॥

अत्र ब्रूमः।

उपादितक-
र्तृत्वनिरासः। (३) अभेदादनुपाधित्वाज्जगदप्रत्ययासितः।
सर्वाधारत्वतस्तावच्छक्तित्वान्नास्य बाधनम्॥

सुवर्णसूत्रम्।

(३) सिद्धान्तं संगृह्णते—अभेदादित्यादि। अत्र प्रथमतस्तदुक्तसर्वहेतुसाधकमन्यपरत्वत इति हेतुं दूषयितुमन्यं निषेधन्ति—अभेदादिति। सविशेषनिर्विशेषयोर्भेदाभावादित्यर्थः। अत्र हेतुः—अनुपाधित्वादिति। तथा सति धर्माभावमुखेनेव धर्ममुखेन

हरितोषिणी।

(३) एतावत्पर्यन्तं निर्विशेषवादिमतमुपन्यस्य स्वमतसिद्धान्तमाहुः—अत्र ब्रूम इति। उपासनार्थं धर्मं निरूपयति श्रुतिरित्युक्तम्, तदेव खण्डयन्ति—अभेदादिति। सविशेषनिर्विशेषब्रह्मणोरेकत्वेन भेद एव नास्तीत्यर्थः। एतेनान्यपरत्वत इति प्रबलो हेतुर्निरस्तः। ननु सोपाधिकं ब्रह्म भिन्नं, निरुपाधिकं ब्रह्म भिन्नमिति भेदस्य सत्त्वादत आहुः—अनु-

गङ्गाधरभट्टी।

(३) अथान्यपरत्वत इति दूषयन्ति—अभेदादिति। सविशेषनिर्विशेषयोर्भेदाभावात्। तत्र हेतुः—अनुपाधित्वादिति। तथा च धर्मनिरूपकश्रुतेरपि ब्रह्मपरत्वादुपजीव्यत्वा-

टिप्पणी।

(३) अभेदादितिकारिकाव्याख्यायाम्—'एताभ्यां श्रौतवाक्यैरिति तदुक्तो हेतुर्दूषित इति श्रीपुरुषोत्तमाः। अयमाशयः—उपजीव्यत्वत इत्यस्य विशेषनिरूपकश्रुतिपूर्वत्वविपातकत्वेनेति पर्यायं प्रदर्श्य उपजीव्यत्वत इत्यादौ तसिलन्तत्रये न पञ्चम्यन्तात्तसिलिति प्रमाणीकर्तुं 'एकस्या आकृते'रिति शाब्दिकन्याय उपन्यस्तो गङ्गाधरभट्टेयाम्। संगतिश्चास्यास्यैव टिप्पण्यां प्रदर्शितेन प्रकारेणेत्यत उपजीव्यत्वत इति कारिकायां हेतुचतुष्टयं गङ्गाधरमतेन सिद्ध्यति। इदं श्रीपुरुषोत्तमानामप्यभिप्रेतमिति 'एताभ्यां श्रौतवाक्यै'रित्यनेनोन्नीयते। नैवं चेत्कथं तदुक्तो हेतुर्दूषित इति वदेयुः। परंत्वत्रेदमवधेयम्—श्रीपुरुषोत्तमैरिव तोषिणीकृद्भिरपि 'एतेन श्रौतवाक्यैरिति हेतुः प्रयुक्त इत्युक्तम्। उपजीव्यत्वत इति व्याख्यावसरे च तैस्तसिलन्तं हेतुत्रयमित्यभिहितम्। श्रौतवाक्यैश्चान्यपरत्वत इत्येकीकृत्य उपासनाबोधकश्रौतवाक्यैर्धर्मबोधकवाक्यानामुपासनापरत्वादिति च व्याख्यातम्। अत एतत्पूर्वापरविरोधपरिहृतये 'अन्यपरत्वत' इत्यनेनान्वीयमानो गर्भहेतुः श्रौतवाक्यैरित्ययमित्यभ्युपेयम्। गर्भहेतुत्वमादाय 'एकस्या' इति न्यायोऽपि संगमयितुं शक्यः। यतस्तृतीया हेत्वर्थसामान्यमपेक्षते, न तु तद्विशेषम्॥

यद्व तोषिणीकृद्भिरुपजीव्यत्वत इति तृतीयान्तात्तसिद्, अन्यपरत्वत इत्यादौ पञ्च-

अत्र मिथ्यावादी प्रष्टव्यः,—जगत्कर्तृत्वेशितृत्वादिविशिष्टनिर्विशेषयोर्भेदमङ्गीकरोष्युताऽभेदम्? । भेदपक्षेऽपि तात्त्विकमतात्त्विकं वा? न तावदाद्यः, 'सर्वत्र प्रसिद्धोपदेशा'दित्यधिकरणविरोधात् ।

सुवर्णसूत्रम् ।

निरूपयन्त्या अपि श्रुतेर्ब्रह्मपरत्वतौल्यादुपजीव्यत्वतोऽन्तरङ्गत्वत इति हेतुद्वयं दूषितम् । अनु॰..धित्वे हेतुरग्रिमः । मिथ्यावादिरीत्या सोपाधित्वे जगदप्रत्ययापत्ति इत्यर्थः । अबाधने एव हेत्वन्तरं—सर्वाधारत्वत इति । परस्परविरुद्धसर्वधर्माधारत्वादित्यर्थः । अत्र हेतुः—तावच्छक्तित्वादिति । तावती विरुद्धधर्माधारत्वसाधिका शक्तिर्यस्य तादृशत्वादित्यर्थः । एताभ्यां श्रौतवाक्यैरिति तदुक्तो हेतुर्दूषितः । अस्येति । सविशेषत्वस्य ।

पूर्वं कारिकोक्तमभेदमुपपादयितुं मिथ्यावादिनोऽसंभाव्यत्वबोधनाय सभ्यं प्रत्याहुः—अत्रेत्यादि । अत्र सविशेषनिर्विशेषयोर्भेदाऽभेदविचारे, मिथ्यावादी विशेषाणां शुक्तिरजतवदविद्याकल्पितत्वं वदन् वादी त्वया मध्यस्थेन प्रष्टव्य इत्यर्थः । सर्वत्रेति ।

हरितोषिणी ।

पाधित्वादिति । ब्रह्मण्युपाधिरेव नास्तीत्यर्थः । तथा च ब्रह्मधर्माणामभावमुखेन निरूपणं यथा, तथा जगत्कर्तृत्वादिरूपधर्ममुखेनापि निरूपणं करोति श्रुतिः । तथा चैकमेव ब्रह्मेत्यर्थः । तथा च धर्मिनिरूपिका श्रुतिः अन्तरङ्गा, अथ च उपजीव्येति विचार एव नास्तीति भावः । एतेनान्तरङ्गत्वत उपजीव्यत्वत इति हेतुद्वयं निरस्तम् । ननु जगत्कर्तृत्वरूपोपाधेः सत्वात्कथमनुपाधित्वमत आहुः—जगदिति । तस्योपाधिरूपत्वे वास्तविकत्वाभावाज्जगत उत्पत्त्यभावात् प्रतीतिरेव न स्यादित्यर्थः । ननु भवतु, तथाप्युभयोर्विरुद्धत्वात्सविशेषत्वस्य बाधो भविष्यतीत्यत आहुः—सर्वाधारत्वत इति । विरुद्धधर्माश्रयत्वादित्यर्थः । अत्र हेतुमाहुः—तावदिति । तावती शक्तिर्यस्य । विरुद्धधर्माश्रयत्वसाधिका काचिदचिन्त्यशक्तिरपि तत्रास्तीति भावः । एतेन श्रौतवाक्यैरिति हेतुः प्रत्युक्तः । अस्येति । सविशेषत्वस्य बाधनं नेत्यर्थः । कारिकां व्याकुर्वन्ति—अत्रेति । प्रष्टव्यः । प्रष्टव्य इति मध्यस्थं प्रत्युक्तिर्मिथ्यावादिनोऽसंभाव्यत्वात् । न तावदिति । पूर्वमित्यर्थः । आद्यः, वा-

गङ्गाधरभट्टी ।

न्तरङ्गत्वे दूषिते । अनुपाधित्वे हेतुर्जगदिति । सर्वाधारत्वे हेतुः—तावच्छक्तित्वादिति । परस्परविरुद्धसर्वधर्माधारत्वसाधकशक्तिमत्त्वादित्यर्थः । एताभ्यां श्रौतवाक्यैरिति दूषितम् ।

---

टिप्पणी ।

म्यन्तादिति गोस्वामिपुरुषोत्तमानां मतमुपन्यासि । तत्रोच्यते—श्रीपुरुषोत्तमैः कण्ठरवतस्तु कश्चिदपि न परहेतुद्वयस्य पञ्चम्यन्तत्वमुक्तम् । यन्मूलकङ्क्रिरिदं हेतुद्वयं पञ्चम्यन्त-

अस्यार्थस्तु–सर्वत्र वेदान्तेषु प्रसिद्धस्य ब्रह्मण एवोपास्यत्वेन उपदेशान्मनोमयत्वादिविषयवाक्योक्तधर्मविशिष्टं ब्रह्मैवास्मिन् वाक्ये

सुवर्णसूत्रम् ।

चतुःसूत्रमिदमधिकरणमुत्तरत्वप्रथमाध्यायद्वितीयपादारम्भेऽस्ति । विरोधबोधनार्थमाहुः –अस्यार्थ इत्यादि । मनोमयत्वादीति । छान्दोग्ये पञ्चमप्रपाठके शाण्डिल्यविद्यायाम् । 'सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त उपासीत, अथ खलु क्रतुमयः पुरुषो, यथाक्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति, स क्रतुं कुर्वीत, मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्त' इत्यादि विषयवाक्यम् । अस्मिन् वाक्ये उच्यत इति । मन्तव्यत्वेनोपदिश्यते । अयमर्थः–वाक्योपक्रमे सर्वस्य ब्रह्मत्वं प्रतिज्ञाय, जायते लीयते अनिति जलान् तस्मिन् जलान् तज्जलान् । इदं सर्वं खलु सर्वावस्थासु तस्मिन्, अतः सर्वं ब्रह्मेत्युपासीतेति जडस्य ब्रह्मत्वेनोपासनं विहितम् । अतः परमथेत्यग्रिमे वाक्ये 'क्रतुं कुर्वीते'त्यनेन किं जीवोपासनमुपदिश्यते, उत ब्रह्मोपासनमिति सन्देहः । तत्र 'मनोमय' इत्यादिना लिङ्गशरीरकथनात्तादृशशरीरवर्ती जीव एवोच्यते । अग्रे सत्यसंकल्पादिलिङ्गं तु ब्रह्मत्वेनोपासनार्थम् । शाखान्तरे 'विज्ञानं ब्रह्म चेद्वेदे'ति तस्य तथोपासनस्योक्तत्वात्। अतः कार्यकारणयोरभेदाद्यथा पूर्वोपासना तथेयमपीति पूर्वपक्ष उच्यते–सर्वत्रेति । एकपदमिदं सूत्रम् ।

हरितोषिणी ।

स्तविकः । सविशेषनिर्विशेषयोर्भेदो नास्तीत्यर्थः । ननु कुतो नास्तीत्यत आहुः–सर्वत्रेति । प्रसिद्धं व्याससूत्रं प्रथमाध्याये द्वितीयपादारम्भे । एकपदमिदं सूत्रम् । अस्यार्थ इति । प्रसिद्धस्येति । आनन्दमयः प्राणशरीररूपः परमपुरुषः य एकः, स एवास्मिन् वाक्ये उपास्यत्वेनोपदिश्यते, एतावता किं ज्ञायते ? तादृशस्य व्यासचरणैः सर्ववेदान्तप्रसिद्धत्वमुक्तम् । अतः सविशेषनिर्विशेषयोस्तात्त्विकभेदो नास्तीति भावः । सामवेदान्तर्गतच्छान्दोग्यस्य पञ्चमप्रपाठके शाण्डिल्यविद्यात्मकस्य सूत्रस्य विषयवाक्यमाहुः–मनोमयत्वादीति । 'सर्व

गङ्गाधरभट्टी ।

अस्येति । सविशेषत्वस्य । सर्वत्रेति । प्रथमाध्यायद्वितीयपादे । विरोधादिति । सर्वे-

---

टिप्पणी ।

तया व्याख्यातम्; तदस्य तृतीयान्तपर्यायपदप्रदर्शनेन पञ्चम्यन्तता प्रतिषिद्धा न हीत्यतः साऽभ्युपेतेति तोषिणीकृतां तर्कः स्यात्, 'अप्रतिषिद्धमनुमतं भवती'ति न्यायात् । परन्तु मम तु यथा 'एकस्या' इतिन्यायमुपन्यस्यतां गङ्गाधराणां, सर्वेषां हेतूनां तृतीयान्त-

उच्यते इत्येतत्सर्वं व्याससूत्रभाष्ये विस्तृतं पितृचरणैर्विस्तरभियाऽत्र न लिख्यते। किञ्चैवं, जीवे नितरां तथाऽऽयातमिति 'तत्त्वमसी'त्याद्य-भेदबोधकश्रुतिविरोधः । ब्रह्मानेकत्वापत्त्या चैकमेवेत्यादितद्विरोधः । तथा त्वयाऽनङ्गीकाराच। येऽप्य(त्व)ङ्गीकुर्वन्ति, तेषां मते वेदान्तानां तादृ-

सुवर्णसूत्रम् ।

तथा च पूर्वोपासनया परमशान्तस्य मननात्मा सर्ववेदान्तप्रसिद्धब्रह्मोपदेश एव युक्तो, न तु जीवोपासनोपदेशः । एवं भगवत्स्वरूपलाभान्, सारूप्यलाभाद्वा यथा सङ्कल्पं प्रेत्यापि तथा भाव उपपद्यते । अत्यणुत्वातिमहत्त्वादिसत्यसङ्कल्पादिकर्मत्वध्येयत्वप्रा-प्यत्वव्यपदेशोऽपि युज्यते । मनोमयत्वन्तु 'स एप जीव' इति भगवद्वाक्याद्वेदेऽपि । न तु जीवलिङ्गैकान्तम् । वेद एव च ब्रह्मणि प्रमाणं तत्कार्यश्च । अतस्तदभेदोपचारः । तस्मादानन्दमयः प्राणशरीररूपः परमपुरुष एव वाक्यार्थः । तथा च यदि सविशेष-निर्विशेषयोर्भेदः स्याद्व्यासचरणैः सर्ववेदान्तप्रसिद्धत्वं तादृशस्य नोच्येताऽतस्तद्विरोध इति भावः । नितरामिति । अज्ञत्वादिवैशिष्ट्यात्तथेत्यर्थः । येऽप्यङ्गीकुर्वन्तीति ।

हरितोपिणी ।

सर्वंखल्विदं ब्रह्म तज्जलानिति शान्त उपासीते'त्यारभ्याग्रे 'स क्रतुं कुर्वीत मनोमयः प्राणश-रीररूपः सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा' इत्यादिविषयवाक्ये मनोमयत्वप्राणशरीर-त्वादिधर्मविशिष्टं ब्रह्मैवोपास्यत्वेनोच्यत इत्यर्थः। तादृशोपासनया भगवत्स्वरूपस्य सारूप्यस्य वा लाभः, तेन च जीवस्य प्रेत्यापि भगवद्भाव इत्युपासनाफलमिति भाष्ये अणुभाष्ये मयापि भाष्यविवरणे विस्तरेणोक्तमिति विस्तरभयाद्विरम्यते। दूषणान्तरमाहुः—किं चैवमिति। एवं धर्मविशिष्टस्य तात्त्विकभेदस्वीकारे। नितरामिति। अज्ञत्वादिविशिष्टत्वादित्यर्थः। तथा भेदत्वम्। नन्वस्तु भेदत्वम्, का हानिरित्यत आहुः—तत्त्वमसीति। ननु माध्वमते भेदाङ्गीकारोस्तीत्यत आहुः—ये त्विति। तादृगिति। अभेदभावनापरत्वमित्यर्थः। तादृश-

गङ्गाधरभट्टी ।

वान्तप्रसिद्धस्य ब्रह्मणो मनोमयत्वादिधर्मविशिष्टत्वप्रतिपादनान्न ततः पृथङ् निर्विशेषं ब्रह्मेति भावः। नितरामिति । अज्ञत्वादिवैशिष्ट्यात् । येऽपीति । माध्वादयः । तादृगिति । अभेदेत्यर्थः ।

---

टिप्पणी ।

तैषामभिप्रेता तथा श्रीपुरुषोत्तमानामपीति प्रतिभाति । यतो नास्ति बीजं किमपि, येनैकस्य तृतीयान्तता, द्वयोः पञ्चम्यन्तताऽभ्युपेयेत । 'अप्रतिषिद्ध'मिति न्यायस्तु लोकसिद्धोऽसा-

ग्भावनापरत्वमेव, न तु वस्तु तादृशमित्युच्यते । तदग्रे निराकरिष्यते । न द्वितीयः, स तूपाधिकृत एव सम्भवति, घटादिकृत इवाकाशस्य । प्रकृते तादृश उपाधिः कः? सोऽप्यनादिः सादिर्वेति विचारणीयम् । अ-

सुबसूर्णत्रम् ।

माध्वादयो जीवब्रह्मणोस्तात्त्विकं भेदमङ्गीकुर्वन्ति । तादृग्भावनेति । अभेदभावना । अग्र इति । जीवस्वरूपविचारे । अतात्त्विकभेदपक्षं दूषयन्ति—न द्वितीय इति । उपाधिकृत इति । प्रयोजककृतः । घटादिकृत इत्यत्रादिपदेन दर्पणादिसंग्रहादव- च्छिन्नपक्षः, प्रतिबिम्बपक्षश्चेति द्वावपि दूषणायोपक्षिप्तौ ज्ञेयौ । तत्र मायाऽविद्ययोरभे- दमङ्गीकृत्य बिम्बितत्वं चोपहितत्वमिति ये वदन्ति तद्दूषयितुमाहुः—अविद्येति । त्रिगु- णात्मकं भावरूपाज्ञानम् । अनादिरिति । 'जीव ईशो विशुद्धा चिद्विभागस्त्वनयोर्द्वयोः ।

हरितोषिणी ।

मिति अभिन्नमित्यर्थः । ननु कथमिदं संगच्छते इत्यत आहुः—अग्र इति । जीवस्वरूपवि- चारे । अतात्त्विकभेदपक्षं दूषयन्ति—न द्वितीय इति । अतात्त्विक इत्यर्थः । उपाधिकृत इति । प्रयोजककृत इत्यर्थः । अत्र दृष्टान्तः,—घटादीति । आदिपदेन दर्पणादीनां संग्रहः । तत्र मायावच्छिन्नं चैतन्यं सविशेषब्रह्मशब्दवाच्यम्, अविद्यावच्छिन्नं जीवशब्दवाच्यम्, मायायां प्रतिबिम्बितमीशपदवाच्यम्, अविद्यायां प्रतिबिम्बितं जीवशब्दवाच्यम्, अव- च्छिन्नपक्षः, प्रतिबिम्बपक्षः, इतिपक्षद्वयमपि तन्मते सिद्धं, तद्दूषयितुमुपाधिर्माया वाऽवि- द्यावेति सादिर्वाऽनादिर्वेति विचारयितुमाहुः—प्रकृत इति । विचारणीयमिति मध्यस्थं प्रत्युक्तिः । तत्र मायाऽविद्ययोरैक्यम् अनादित्वं चेति पक्षं दूषयन्ति—अविद्येति । एवका- रेण भावरूपस्याऽज्ञानस्य, त्रिगुणात्मिकाया मायाया ऐक्यं सूचितम् । अनादीति । 'जीव ईशो विशुद्धा चिद्विभागस्त्वनयोर्द्वयोः । अविद्या तत्कृतो बन्धः षडस्माकमनादय' इति वच-

गङ्गाधरभट्टी ।

अग्र इति । जीवप्रकरणे । द्वितीय इति । अतात्त्विको भेदः । घटादिकृत इत्यत्रा- दिपदाद् दर्पणादिसङ्ग्रहादवच्छिन्नपक्षः प्रतिबिम्बपक्षश्च दूषणायोपक्षिप्तः । अविद्येति । त्रिगुणात्मकं भावरूपमज्ञानम् । अनादिरिति । 'जीव ईशो विशुद्धा चिद्विभागस्त्वनयो- र्द्वयोः । अविद्या तत्कृतो बन्धः षडस्माकमनादय' इत्युपगमात् । तत्राविद्यात्वे-

टिप्पणी ।

वैत्रिकश्च । मूलकृद्व्याख्यानविरोधस्तु न । तात्पर्यमादाय तथा व्याख्यानात् । विरोधस्तु श्रौतवाक्यैरित्यस्य उपासनाबोधकश्रौतवाक्यैरित्येवं व्याख्याने विद्यते । मूलकृद्भिरस्थूलाणु- कश्रौतवाक्यैरिति विवरणात् ॥

विद्यैवोपाधिः, सा चानादिरेवेति पक्षस्त्वसंगतः। तथा हि—उभयोरप्यनादित्वेन उपहितस्याप्यनादितया तादृशस्यैव च त्वन्मते कर्तृत्वेन अविरतं सर्गः स्यान्न जातु प्रलयः । श्रुतौ ब्रह्ममात्रस्यैवेच्छाविशिष्टस्य कारणत्वोक्त्या कारणान्तरानपेक्षणात् । स्मार्तमतमवलम्ब्य गुणापेक्षाकथने तु गुणानां पौर्वापर्येणाविर्भावे हेतोरवश्यवाच्यत्वे तदिच्छैव ता-

सुवर्णसूत्रम् ।

अविद्या तत्कृतो बन्धः षडस्माकमनादयः' इत्युपगमादनादिः । असङ्गतिं व्युत्पादयन्ति—तथा हीत्यादि । किमत्राविद्यात्वेनैवोपाधित्वमिष्टमुत तस्यास्त्रिगुणत्वात्तत्तद्गुणत्वेनेति विकल्प्याद्यं दूषयन्ति—उभयोरिति । उपाध्युपाधेययोरविद्याब्रह्मणोः । तादृशस्येति । अविद्योपहितस्य । कारणान्तरानपेक्षणादिति । सहकार्यन्तरानपेक्षणात् । द्वितीयं दूषयन्ति—स्मार्तमिति । 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्त' इत्यादि पुराणवाक्यम् । गुणानामिति । जडत्वेन स्वतः कर्तुमसमर्थानाम् । हेतोरवश्यवाच्यत्व इति ।

हरितोषिणी ।

नाद्यनादिपक्षः स्वीक्रियते चेत्, सोपि पक्षस्त्वसङ्गत इत्यर्थः । असङ्गतत्वं व्युत्पादयन्ति तथा हीति । मायायास्त्रिगुणात्मकत्वान्मायात्वेनोपाधित्वं तत्तद्गुणत्वेन वेति, आद्यं पक्षं दूषयन्ति—उभयोरपि । अविद्याब्रह्मणोरित्यर्थः । तादृशस्य मायोपहितस्य न जातु न कदाचिदपि । ननु इच्छारूपसहकारिकारणसमवधानं यदा तदा सृष्टिरित्युच्यमाने निरन्तरं सृष्टिरिति दोषो न भविष्यतीत्यत आहुः—श्रुताविति । 'बहु स्या'मिति श्रुतावित्यर्थः । तथा च मन्मते यदा सृष्टीच्छा तदा सृष्टिरित्युक्त्या निरन्तरं सृष्टिरिति दोषाभाव इति भावः । स्वमते लाघवमप्याहुः—कारणान्तरेति । सहकारिकारणान्तरेत्यर्थः । द्वितीयं पक्षं दूषयन्ति—स्मार्तमतमिति । सांख्यमतमित्यर्थः । गुणानामिति । जडत्वेन स्वतः क्रमासमर्थानाम् । आविर्भाव इति । सृष्टावित्यर्थः । पूर्वं सत्त्वगुणोपहितत्वं यदा

गङ्गाधरभट्टी ।

नोपाधित्वमिष्टं तद्गुणत्वेन वा । नाद्य इत्याहुः—उभयोरिति । नान्त्य इत्याहुः—स्मार्तमतमिति । 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्यादिभिर्हरिविरञ्चिहरेति संज्ञा' इति पौराणं मतम् । गुणानामिति । जडत्वात् क्रमेऽसमर्था-

---

१ ग. पु. केचित्तु "जीवेशावाभासेन करोति । माया चाविद्या च स्वयमेव भवती"ति नृसिंहोत्तरतापनीये मायाऽविद्ययोर्भेदश्रवणात् । शुद्धसत्त्वप्रधाना माया । तदवच्छिन्नं चैतन्यमीश्वरः । मलिनसत्त्वप्रधानाऽविद्या । तदवच्छिन्नं चैतन्यं जीव" इत्याहुः ।

२ ङ. पु. पटादिवत्स्वतःक्रियाऽसमर्थानाम् ।

दृशी वाच्या । तथा सति तद्धेतोरेवेति न्यायेनेच्छैव तथास्तु, कृतं गुणैः । न चैवमपि त्वन्मते वक्तुं शक्यम् । उपहितस्येच्छाक्रमे हेत्वपेक्षायां तस्योपाध्यधीनतया इच्छायामपि तद्गुणा एव हेतुत्वेन वाच्याः । गुणानां क्रमे चैवं स्वभाव एव हेतुर्वाच्यः । तथा च तादृक्स्वभावविशिष्टा गुणा

सुवर्णसूत्रम् ।

हेत्वनुक्तावनादीनां त्रयाणां युगपदुपाधित्वे अनेकेश्वरापत्तेस्तदभावाय तथात्वे 'कृतं गुणै'-रित्यत्र काकुः । तथाच गुणग्रहणात्पूर्वमिच्छाप्राप्त्या सिद्धे सविशेषत्वे सिद्धान्तभङ्गात्तैः किमपि न कृतमिति गुणानामप्युपाधित्वमसङ्गतमित्यर्थः । ननु पूर्वमविषयैवेच्छोत्पद्यते, ततस्तत्तत्कार्यार्थं तांस्तान्गुणानुपाधीकृत्य तत्तत्करोतीत्याशङ्कायामाहुः—नचेत्यादि । भवतु तथेच्छा, तथापि तस्या गुणसाम्यरूपत्वेन तया कार्यत्रयविषयकेच्छासामान्यमुत्पादनीयं, न तु तत्क्रमो नियन्तुं शक्यः । साम्यरूपत्वात् । अतस्तत्क्रमे हेत्वपेक्षायां तस्योपाध्यधीनतया सामान्येच्छायामपि तद्गुणा एव हेतुत्वेन वाच्याः, तत्क्रमे च तत्स्वभावस्तथेति । तथा च सति क्रमिकाविर्भावस्वभावानां तेषामेव कारणत्वापत्त्याऽनीश्वरवादप्रसक्तेरिति वेदान्तित्वाभिमानिनस्तव मते एवं न वक्तुं शक्यमित्यर्थः । ननूपाधेर्जडत्वेन चेतनापेक्ष-

हरितोषिणी ।

तदा सृष्टिस्तदनन्तरं रजोगुणोपहितत्वं यदा तदा स्थितिः, एवं प्रलयोऽपि; तथाऽनेकेश्वरापत्तिमियैकदैव गुणत्रयोपहितत्वं वक्तुं न शक्यत इति पौर्वापर्यमपेक्षितम्, गुणानां च जडत्वात् स्वातन्त्र्याभावात् पौर्वापर्ये कारणं नास्तीति तत्र भगवदिच्छैव तादृशी पौर्वापर्येणाविर्भावे कारणीभूता वाच्येत्यर्थः । इष्टापत्तौ दूषणमाहुः—तथा सतीति । इच्छायाः कारणत्वे स्वीकृते इत्यर्थः । कृतमिति । गुणैः किमपि न कृतमित्यर्थः काका प्रदर्शितः । तदा चेच्छारूपविशेषस्य सत्त्वात् सविशेषब्रह्मसिद्धौ मन्मतप्रवेशे गुणैः किं कृतमिति भावः । न चैवमिति । एवं प्रकारेणेच्छायाः कारणत्वम् । त्वन्मते तत्तद्गुणोपहितस्य कारणत्वस्वीकर्तृमते । ननु मयैवं स्वीक्रियते,—प्रथममविषयेच्छोत्पद्यत इत्यत आहुः—उपहितस्येति । या इच्छा उत्पद्यते, सा सामान्यतः कार्यत्रयविषयिणी वक्तव्या, न तु क्रमविषयिणी । अविद्याया गुणसामान्यरूपत्वात् । तथा च क्रमेणोत्पत्तौ इच्छायाः प्रथमं सर्गः, अनन्तरं स्थितिरित्येवं क्रमविषयत्वस्यावश्यं वाच्यत्वात् तादृशक्रमे च सामान्यतोऽविद्यायाः कारणत्वाभावेन तत्तद्गुणोपहितस्य ब्रह्मणः कारणत्वं वक्तव्यम्, एवं च तद्धेतो-

गङ्गाधरभट्टी ।

नाम् । कृतं गुणैरिति काकुः । ननूपाधेर्जडत्वेन चेतनापेक्षणादुपहित ईश्वरः सिद्ध्यती-

१ मता इति मु. पु. पाठः ।

एव कारणानि सन्तु, कृतं तदधीनब्रह्मणेत्यनीश्वरवादः प्रसज्येत । 'सदेव सौम्येदमग्र आसी'दिति श्रुतिविरोधश्च । एवकारेण सतो ब्रह्मणोऽन्यस्य व्यवच्छेदात् । न च कालवाचकाग्रपदेन तस्याऽप्युक्तत्वाद् एवकारो नान्ययोगव्यवच्छेदकः, किन्तु तदानीमपि ब्रह्माऽऽसीदेवेत्ययोगव्यवच्छेदक इति वाच्यम् । बोधनार्थमेव तथोक्तेः । अन्यथा 'सोऽनुवीक्ष्य नान्यदात्मनोऽपश्य'दिति श्रुतिविरोधः । एतच्छ्रुत्यनुरोधेन अग्र-

## सुवर्णसूत्रम् ।

णाद्युपहितेश्वरसिद्धेर्न तथेत्यत आहुः—सदेवेत्यादि । एवकारेणेति । विशेष्यान्वितेन तेन । तथा चानाद्युपाधिपक्षे एवकारव्याकोप इत्यर्थः । एवकारस्यान्यार्थत्वशङ्कां निषेधन्ति—नचेत्यादि । किन्त्विति । विशेष्यान्वयापेक्षयाऽग्रपदान्यथानुपपत्तेर्वैलिष्टत्वादित्यर्थः । निषेधने हेतुः—बोधनार्थमिति । अस्याः श्रुतेः सर्वतः पूर्ववृत्तान्तबोधकत्वात्तत्रैवकारेण सदितरयावद्व्यवच्छेदे प्रमाणान्तरस्यापि व्यवच्छेदादग्रपदस्यानुवादकतया वक्तुमशक्यत्वेन तत्प्रतिपादकताङ्गीकारे वाक्यभेदप्रसङ्गेन च कालसत्ताया अशक्यवचनत्वे केवलसतोऽपि निरूपणाशक्यतया वाक्याऽबोधकत्वे प्रसक्ते सृष्ट्युत्तरव्यवहाराऽनुसारेण सर्वाधारतया प्रतीयमानकालोपरञ्जनतया पूर्ववृत्तान्तबोधनार्थमित्यर्थः । अत्र गमकमप्याहुः

## हरितोषिणी ।

रेवेति न्यायेन गुणा एव हेतवो वाच्या इत्यर्थः । ननु गुणानां क्रमे कस्य हेतुत्वमित्याकाङ्क्षायामाहुः—स्वभाव एवेति । नन्वेवं चेत्का क्षतिरित्याशङ्कायामाहुः—तथा चेति । तादृगिति । क्रमिकाविर्भावस्वभावेत्यर्थः । प्रसज्येतेति । इयमेव महती क्षतिरित्यर्थः । ननु गुणानां जडत्वात्प्रेरकचैतन्यापेक्षणादुपाधिविशिष्टेश्वरसिद्धिरित्यत आहुः—सदेवेति । एवकारेणेति । विशेष्यपदान्वितेन अन्ययोगव्यवच्छेदकेनेति यावत् । अन्यस्येति । गुणादेरित्यर्थः । एवकारेणानाद्युपाधिपक्षस्य दुष्टत्वं बोधितम् । एवकारस्यायोगव्यवच्छेदार्थकत्वं स्वीकृत्य शङ्कते—न चेति । तस्यापि कालस्यापि । तथा चैवकारस्यान्ययोगव्यवच्छेदार्थकत्वे अन्यस्य निषेधेन केवलं ब्रह्मण एव सत्त्वं स्यात्, तथा नास्तीति भावः । उत्तरमाहुः—बोधनार्थमिति । पूर्ववृत्तान्तबोधनार्थमेवेत्यर्थः । तथोक्तेरिति । अग्रपदेन कालोक्तेरित्यर्थः । एवं च निरूपणं कालसत्तां विना न संभवतीति सर्वाधारत्वेन कालस्योपरञ्जकत्वं, न तु सोपि पूर्वमस्तीत्यत्र तात्पर्यम्, अन्यथा वाक्यस्याऽबोधकत्वप्रसक्तिः स्यादिति भावः ।

## गङ्गाधरभट्टी ।

त्यत आह—सदेवेति । नान्ययोगेति । न विशेष्यान्वयीत्यर्थः । अयोगेति । क्रियान्वयीत्यर्थः । बोधनार्थमिति । सृष्टेः प्रागपि भविष्यद्व्यवहाररीत्येत्यर्थः । अस्मदादिबोध-

पदेन च यदि कालस्यापि ब्रह्मत्वमेव मनुषे; तदोमिति ब्रूमः। अत एव 'कालोस्मी'ति भगवद्वाक्यम्। 'कालरूपोऽवतीर्ण' इत्याद्यपि। इदमेवोपक्रम्य 'सन्मूलाः सौम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठा' इत्यादिश्रुतिभिः सत एव कर्तृत्वोक्तेश्च॥

किञ्च, त्वन्मतेऽप्युपहितस्योपाध्यधीनतया स्वातन्त्र्याभावात् कर्तृत्वा-

सुवर्णसूत्रम्।

—अन्यथेत्यादि। श्रुतिस्तु बृहदारण्यके पुरुषविधब्राह्मणस्था। इत्याद्यपीति। आदिपदेन 'विद्याऽविद्ये मम तनू' इत्यस्य संग्रहः। नन्वियं श्रुतिः शाखान्तरस्थेति नास्या उक्तार्थगमकत्वमित्यत आहुः—इदमित्यादि। इदमिति। सदेव सौम्येति वाक्यमेव। तथा च यद्युपाधिरनादिः स्यात्तदा ब्रह्मणस्तद्विशिष्टस्यैव सर्वकर्तृत्वं वदेदित्यर्थः। न च सच्छब्देनोपाधिविशिष्टमेव ब्रह्मोच्यत इति वाच्यम्। विनिगमकाभावात्, 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति गीतावाक्यविरोधाच्च।

ननु 'सदेव सौम्येदमग्र आसी'दित्यस्याग्रे एकमेवाद्वितीयमिति वाक्यशेषादेकपदस्य मुख्यत्वार्थाङ्गीकारे मुख्याऽद्वितीयतया ब्रह्मस्थितिः पूर्वमभिप्रेता श्रुतौ, न केवलाऽद्वितीयतया। तथैव श्रुत्यन्तरेऽपि मुख्यान्यदर्शननिषेधोऽपि। अन्यथाऽनुपसर्गविरोधात्, तदानीं सृष्टानां सत्त्वात्। अतो न सांख्यवन्मम श्रुतिविरोध इत्यत आहुः किञ्चेत्यादि। तथा चेदं तु दूषणं तवानुद्धार्यमित्यर्थः। नन्वितरेतरसापेक्षत्वाद्रूढा-

हरितोषिणी।

ननु पूर्वं ब्रह्मसत्त्वबोधनार्थमग्रपदम्, न तु कालस्यापि पूर्वं सत्ता अपेक्षितेत्यत्र किं गमकमित्यत आहुः—अन्यथेति। पुरुषविधब्राह्मणे बृहदारण्यके इयं श्रुतिः। ओमितीति। स्वीकारवाचकम्। इत्याद्यपीति। आदिपदेन 'विद्याविद्ये मम तनू' इत्यस्य ग्रहणम्। नन्वियं श्रुतिः शाखान्तरस्थेति नास्या उक्तार्थगमकत्वमत उपष्टम्भकान्तरमाहुः—इदमेवेति। 'सदेव सौम्ये'ति वाक्यमेव। सत एवेति। न तूपाधिविशिष्टस्येत्यर्थः। 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति गीतावाक्यात्॥

दूषणान्तरमप्याहुः—किञ्चेति। कर्तृत्वे स्वातन्त्र्यमेव प्रयोजकम्। 'स्वतन्त्रः कर्ते'ति पाणि-

गङ्गाधरभट्टी।

नार्थमेव श्रुतिप्रवृत्तेरिति भावः। सोन्विति। बृहदारण्यके पुरुषविधब्राह्मणे। सत एवेति। न च सच्छब्द उपाधियुक्तस्यैव वाचकः, विनिगमकाभावात्, 'ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति गीतोक्तेश्च॥

ननु सदेवेत्यस्याग्रे 'एकमेवाद्वितीय'मिति वाक्यशेषादेकपदस्य मुख्यार्थस्याङ्गीकारे मुख्याद्वितीयतया ब्रह्मस्थितिः प्रागुक्ता, न केवलाद्वितीयतया। एवमेव श्रुत्यन्तरे। अन्यथा-

नुपपत्तिः । भवेद्वा, उपाधावेव स्यान्न तूपहिते घटक्रियेव । एवमस्त्विति चेत्, न; 'यतो वा इमानि भूतानि' 'सन्मूलाः सौम्ये'ति 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' 'अहं सर्वस्य प्रभवः' 'जन्माद्यस्य यतः' इत्यादिश्रुतिस्मृतिन्यायव्याकोपात् । न चायमुपचार एव सर्वत्रेति वाच्यम्, मुख्ये संभवति तथा कल्पनस्यायुक्तत्वाद्, मुख्याबाधाच्च । अत

सुवर्णसूत्रम् ।

दीनां राजाधीनत्वेऽपि कर्तृत्वदर्शनाच्च स्वातन्त्र्याभावो न कर्तृत्वबाधक इत्याशङ्कायामाहुः—भवेद्वेति । तत्र तेषां स्वस्वकार्ये स्वातन्त्र्येण कर्तृत्वस्य सिद्धत्वाद्युद्धादौ तदभावेऽपि न तद्बाधनम् । प्रकृते तु केवलस्याकाशतुल्यत्वान् कर्तृत्वं न सिद्धमेवेति, यथा घटाकाशश्चलतीत्यत्र घटे क्रिया तथाऽत्रोपाधावेव स्यादित्यर्थः । एवं सांख्यतुल्यतायामापादितायामप्यनादीश्वराङ्गीकारान्न कार्येश्वरानीश्वरवादापत्तिरितीष्टमापादयति—एवमित्यादि । तत्रापि दूषणमाहुः—यतो वेत्यादि । एतेषु केवलस्यैव कर्तृत्वप्रतिपादनेन तद्व्याकोपादित्यर्थः । अयमिति । कर्तृत्वकथनरूपः । तथा चोपाधिगतमेव कर्तृत्वं राजा युध्यतीतिवदुपहितप्रशंसार्थमुच्यत इत्यर्थः । दूषयन्ति[1]—मुख्य इत्यादि । मुख्य इति । अनुपहिते । यदि

हरितोषिणी ।

निसूत्रादिति भावः । ननु भटादीनां स्वातन्त्र्याभावेऽपि कर्तृत्वं दृश्यत इत्यत आहुः—भवेद्वेति । स्वस्वकार्ये भटादीनां स्वातन्त्र्येण युद्धादौ स्वातन्त्र्याभावोऽपि न कर्तृत्वबाधकः, नैवं ब्रह्मणि, केवलाकाशकल्पत्वान् । अत्र दृष्टान्तमाहुः—घटक्रियेवेति । घटस्य चलनेनाकाशश्चलतीति व्यवहारः । तत्र घटे क्रिया, न त्वाकाशे, एवमुपाधावेव कर्तृत्वं स्यादित्यर्थः । अत्र वादी इष्टापत्तिमाह—एवमिति । अनादीश्वराङ्गीकारेण सांख्यवदनीश्वरवादापत्तिर्नास्तीति भावः । अत्र श्रुत्यभिप्रायमाश्रित्य दूषणमाहुः—'यतो वे'त्यादिना । ब्रह्मणि श्रुत्युक्तं कर्तृत्वं प्रतिपाद्य स्मृत्युक्तं प्रतिपादयन्ति अहमिति । तथा च तत्रोपाध्यभावविशिष्टब्रह्मण्येव कर्तृत्वं प्रतिपाद्यत इति तद्विरोध इति भावः । अत्राशङ्कते—न चेति । यथा लोके भटगतं युद्धकर्तृत्वं राज्ञि उपचर्यते, तथा श्रुतावुपाधिगतं कर्तृत्वं ब्रह्मण्युपचर्यत इत्यर्थः । समाधानमाहुः—मुख्य इति । उपाध्यविशिष्टे शुद्धे ब्रह्मणीत्यर्थः । ननु शुद्धे

गङ्गाधरभट्टी ।

नूपसर्गविरोधात्तदानीं सृष्टानां सत्त्वादतो न सांख्यवन्मम श्रुतिविरोध इत्यत आहुः—किञ्चेति । भवेद्वेति । स्वातन्त्र्याभावेपि राजभृत्यानां कर्तृत्वं दृष्टम्, राजभृत्ययोः पृथक्त्वात् । प्रकृते तु न तथा, उपाधेरुपहितस्य च पृथक्कर्तृत्वस्यादर्शनात् इत्याह—उपाधावेवेति । एवमस्त्विति । अनादीश्वराङ्गीकाराच्च न कार्येश्वरानीश्वरवादः । मुख्याबाधा-

---

1 तद्दूषयन्ति मु. पु. पाठः ।

एव व्यासोऽपि इममर्थमसूत्रयत्–'गौणश्चेन्नात्मशब्दा'दिति। श्रुतावात्मपदमप्युपचारादुपाधिपरमेवेत्याशङ्कायां पुनराह–'तन्निष्ठस्य मोक्षोपदेशा'दिति। यदात्मशब्देनोक्तं तन्निष्ठस्यैव श्रुतौ मोक्षोक्तेनौपचारिक-

सुवर्णसूत्रम्।

चानुपहितस्याशरीरत्वादसंभवो विभाव्यते, तदाप्युपाधेर्जडत्वेन चेतनाधीनत्वाल्लोके शरीरिण इवात्रापि ब्रह्मण एवेच्छाविशिष्टस्य कर्तृत्वं पर्यवस्यतीत्याशयेनाहुः—मुख्याबाधाच्चेति। युक्तेः समूलत्वायाहुः–अत एवेत्यादि। गौण इति। सूत्रार्थस्तु—ईक्षतेर्नाशब्दमित्यत्र चेतनधर्मेणेक्षणेन निरस्ते प्रकृतेः कर्तृत्वे, पुनः सांख्येन, 'तत्तेज ऐक्षते'त्यादौ कूलं पिपतिपतीतिवदीक्षतेर्गौणप्रयोगदर्शनात् तत्प्रायपठितस्य सदीक्षणस्याऽपि तथात्वे शङ्किते सूत्रं पठ्यते—गौण इति। ईक्षतिप्रयोगो गौण इति चेत्। न; कुतः? आत्मशब्दात्, 'सेयं देवतैक्षत हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी'ति देवताजीवस्याऽऽत्मशब्देनाऽभिधानात्। यद्यचेतनं प्रधानं गुणवृत्त्येक्षणकर्तृ स्यात्तदा प्रकृतत्वात्तदेव परामृश्येत, न तु देवताजीवमात्मशब्देनाभिदध्यात्। अत ईक्षितर्यात्मशब्दादीक्षतिप्रयोगो न गौण इत्यर्थः। उपचारादिति। यथा सर्वार्थकारिणि भृत्ये 'ममात्मा भद्रसेन' इति प्रयुज्यते, तद्वद्भोगापवर्गाभ्यां पुरुषोपकारिणि प्रधाने आत्मपदप्रयोग उपचारादित्यर्थः। यदाऽऽत्मशब्देनेत्यादि। यत्पूर्वं प्रकृतं सदणिमरूपं तदेव 'स आ-

हरितोषिणी।

कर्तृत्वबाधः स्यादित्यत आहुः–मुख्येति। यथा लोके शरीरविशिष्टस्य जीवस्य कर्तृत्वं, तथा इच्छाविशिष्टस्य मुख्यस्यैवेश्वरस्य कर्तृत्वं श्रुतौ स्वीक्रियत इत्यर्थः। अत्र श्रीव्यासवचनं प्रमाणमाहुः–अत एवेति। इममर्थमिति। मुख्यनिष्ठं कर्तृत्वरूपमर्थमित्यर्थः। सूत्रमाहुः—'गौण' इति। ईक्षतिप्रयोगो गौण इति चेत्, न; कुतः? आत्मशब्दात्। 'सेयं देवता ऐक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति। अत्र देवताजीवस्यात्मशब्देनाभिधानादित्यर्थः। तथा च ईक्षणकर्तरि आत्मपदप्रयोगो दृश्यत इति कृत्वा ईक्षतिशब्दो गौणे उपाधौ नास्तीति भावः। यथा पालनेन प्रधानोऽयं राजा संवृत्त इतिवद् भोगापवर्गप्रदे प्रधानेऽपि आत्मशब्द उपचर्यते इत्याहुः–श्रुताविति। तन्निष्ठस्येत्यस्यार्थमाहुः–यदात्मेति। यत्पूर्वं प्रकृतं सदणिमरूपं तदेव 'स आत्मे'ति श्रुतावात्मशब्देनोक्तमित्यर्थः। तन्निष्ठस्यैव चेतनस्यैव श्वेतकेतोः श्रुतौ 'आचार्यवान् पुरुषो वेद' 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुतौ मोक्षोपदे-

गङ्गाधरभट्टी।

दिति। न चानुपहितस्याशरीरत्वात्कर्तृत्वासम्भवः, नित्येच्छादिविशिष्टस्यैव ब्रह्मणः कर्तृत्वाभ्युपगमात्। तत्र मानम्—अत एवेति। गौण इति। 'कूलं पिपतिपती'त्यादौ जडेऽपि

मात्मपदं, किन्तु शुद्धब्रह्मपरमेवेत्यर्थः । किञ्च, त्वन्मते उपहितस्य जीवत्वेन पुत्रादितुल्यतया तद्धेयत्वोपदेशवन्मुमुक्षुसाधनोपदेशेषु तस्यापि तथात्वं वदेन्न तु तदुपासनाम् । इतोऽपि हेतोर्निर्गुणमेव ब्रह्म जगत्कारणमित्याशयेन हेत्वन्तरमाह सूत्रकारः–'हेयत्वावचनाच्चे'ति । किञ्च

सुवर्णसूत्रम् ।

त्मे'त्यत्रात्मशब्देनोक्तम्, तन्निष्ठस्यैव श्वेतकेतोश्वेतनस्य श्रुतौ 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य' इत्यनेन मोक्षोक्तेस्तथेत्यर्थः । यदि हि सच्छब्दवाच्यमचेतनं तदसीति ग्राहयेत्तदा मुमुक्षुं चेतनं श्वेतकेतुमचेतनोऽसीति ग्राहयच्छास्त्रं विपरीतवादित्वादप्रमाणमेव स्यादतस्तथेति भावः । तथा चोपहितेश्वरवादेऽपि कर्तृत्वस्य नोपाधौ पर्यवसानं, किन्तूपहिते । तच्च तस्य तदैव सिद्ध्येद्यदीच्छादिमत्त्वेन तस्य स्वतन्त्रतया मुख्यत्वं स्यात् । अतोऽनिच्छतोऽपि शुद्धब्रह्मण इच्छादिविशेषवत्त्वापत्तेः, सविशेषनिर्विशेषयोरभेद एव सिद्ध इ'त्यन्यपरत्वत' इत्यसंगतमित्यर्थः । नन्वेवमभेदापादनेऽपीच्छावच्छरीरस्यापि निर्वाहकत्वात् कर्तृत्वमुपहित एव सिद्ध्यति, न शुद्ध इत्यत आहुः—किञ्च त्वदित्यादि । निगदव्याख्यातमेतत् । नन्विदं सूत्रं भवद्भिरेवं व्याख्यायते, नास्माभिः, प्रकृतिवादनिरासार्थत्वात् । तथा च यदि सच्छब्दवाच्यं प्रधानं स्यात्, तदा 'स आत्मा न त्वमसीति' इहोपदिष्टं स्यात् । पूर्वं सत उपदिष्टतया तच्छ्रवणेनाऽनात्मज्ञतया तन्निष्ठानिवृत्त्यर्थं मुख्यमात्मानमुपदिदिक्षुस्तस्य हेयत्वं वदेदतस्तदवचनान्न प्रधानं सच्छब्दवाच्यमिति

हरितोषिणी ।

शादित्यर्थः । इदं पुनरिहावधेयम्,—भवतां मते उपाधिविशिष्टे ब्रह्मणि कर्तृत्वं, नोपाधौ साङ्ख्यमतप्रवेशात् । अतस्तस्य कर्तृत्वं स्वातन्त्र्यसिद्ध्यर्थमिच्छादिमत्त्वरूपं मुख्यत्वं स्वीकर्तव्यम्, तयैवरीत्या शुद्धब्रह्मण्यप्यस्तीति निर्विशेषमविशेषयोस्तव मतेप्यैक्यं सिद्ध्यतीति । नन्वस्त्वभेदस्तथापि कर्तृत्वमुपाधिविशिष्टे एव स्वीक्रियते, न तु शुद्धे इत्यत आहुः—किञ्चेति । तद्धेयत्वेति । पुत्रादिहेयत्वेत्यर्थः । तस्यापि उपहितस्यापि । तथात्वं हेयत्वम् । 'हेयत्वावचनाच्चे'ति । तथा च निर्गुणमेव, सगुणं नास्त्येवेति भावः । नन्वयं सूत्रार्थ एव नास्ति, किन्तु यदि प्रधानं सच्छब्दवाच्यं स्यात्तर्हि आत्मोपदिदिक्षुस्तस्य हेयत्वं वदेदतस्तदवचनान्न प्रधानं सच्छब्दवाच्यमिति । एतेन साङ्ख्यमतनिरास उक्तः । एवं चोपहितस्य कर्तृत्वं नास्तीति न सिद्धमित्यत आहुः—किञ्चेति । तच्चेति । जगज्जन्मादिकर्तृत्वं

गङ्गाधरभट्टी ।

कर्तृत्वादिवत् । नन्विच्छाविशिष्टस्यापि उपहितत्वमेवात आह—किञ्चेति । हेयत्वेति । ननु प्रकृतिवादनिरासार्थत्वादस्य सूत्रस्य न भवदभिमतोऽर्थः, किन्तु यदि सच्छब्दवाच्यं प्रधानं स्यात्तदा तस्य हेयत्वात् स आत्मा न त्वमसीति वदेत्, न तु तत्त्वमसीत्यत आहुः

'अथातो ब्रह्मजिज्ञासा' इत्यत्र निर्गुणब्रह्मजिज्ञासां प्रतिज्ञाय, किंलक्षणं तदित्याकाङ्क्षायां 'जन्माद्यस्य यत' इत्यवदत्। तच्च सगुणनिरूपकमिति वदन् व्यासस्य प्रतिज्ञाहान्युपक्रमविरोधावपश्यन् हृदयशून्यो भासि। किञ्चैवं 'सर्वे वेदा यत्पदमामनन्ति', 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृ'-दित्यादिश्रुतिस्मृतिविरोधोऽपि। अतो भेदपक्षस्त्वसंगत एव। द्वितीयस्तु स्यात्। न स्याद्विरोधादिति चेन्मैवम्। अस्थूलादिवाक्यैर्जडजीवधर्मा

सुवर्णसूत्रम्।

व्याख्यानात्। अतो नानेनोपहितस्य कर्तृत्वनिरास इत्याशङ्कायामाहुः—किञ्चाथेत्यादि। तथा चोपहितकर्तृत्ववादो व्यासाशयविरुद्ध इति पूर्वोक्तं त्वदभिमतं व्याख्यानमप्यसंगतमित्यर्थः। ननु विचार एव मुख्योऽतो व्यासवाक्यविरोधो न दोषाय। अथानुरोध आवश्यकस्तदा गौणे त्वनन्याय्यकल्पनेति न्यायेन जन्मादिसूत्रं तटस्थलक्षणतया नेयमित्यत आहुः—किञ्चैवमित्यादि। तथा चैतच्छ्रुत्यादावेकस्यैव सर्ववेदवेद्यत्वकथनात् तादृश्यं च सगुणनिर्गुणयोर्भेदापत्त्यैतद्विरोधो दुर्वार इत्यर्थः। सिद्धमाहुः—अत इत्यादि। अनाद्युपहिताङ्गीकारेण सांख्यतौल्यनिरासेऽप्युपाधिसम्बन्धकृतदूषणानुद्धारात्तथेत्यर्थः। एवं कारिकोक्तं हेतुं दृढीकृत्य सिद्धान्तमाहुः—द्वितीयस्तु स्यादिति। उपाध्यनङ्गीकारेण ब्रह्मणः स्वतन्त्रतया यथेच्छं सर्गादिकरणादौ केवलस्य स्वस्यैव नियामकत्वादविरतसर्गापत्त्यनीश्वरवादापत्त्येवकारानुवीक्षणकर्तृत्वविरोधानामुपधानप्रयुक्तदोषाणां चाभावादभेदपक्षः स्यादित्यर्थः। एवमुपाधेस्तदनादित्वस्य च निरासेन दूषितेऽप्यनादिकभेदपक्षे उपाधिस्वरूपस्याऽदूषितत्वात् पर्यनुयोक्ष्यन् मिथ्यावादी प्रत्यवतिष्ठते—न स्यादित्यादि। तत्तद्भावयोः

हरितोषिणी।

चेत्यर्थः। तथा चास्मन्मते निर्गुणविषयिणी प्रतिज्ञा जगज्जन्मादिरपि तत एवेति न विरोध इति भावः। ननु मन्मतेऽपि सगुणनिर्गुणयोर्भेदपक्षं स्वीकृत्य व्याससूत्रं संगमनीयमित्यत आहुः—किञ्चैवमिति। अहमेवेत्येवकारेण द्वितीयो नास्तीति सूचितम्। तथा च ब्रह्मद्वयस्वीकारे विरोध इति भावः। अत इति। एतादृशविरोधादित्यर्थः। सिद्धान्तमाहुः—द्वितीयस्त्विति। अभेदपक्ष इत्यर्थः। तथा चात्रोपाधेरस्वीकाराद् ब्रह्मणः स्वतन्त्रतया इच्छयैव सर्गस्थितिप्रलयकरणेन पूर्वोक्तानामविरतसर्गापत्त्यनीश्वरवादापत्त्यादिरूपाणामनेकदोषाणामभाव इति भावः। अत्र मायावादी पुनः शङ्कते—न स्यादिति। अभेदपक्षो

गङ्गाधरभट्टी।

—अथात इति। ननु श्रुतिविरोधात्सूत्रं तटस्थलक्षणपरमेवास्त्वत आह—किञ्चैवमिति। सगुणनिर्गुणयोर्भेदस्य श्रुतिस्मृत्योरनुक्तत्वम्, एकस्यैव सर्ववेद्यत्वकथनात्। द्वितीय इति।

---

१ गुणे मु. पु. पाठः। २ ण. मु. पु. नास्ति। ३ स्यात्पुनः मु. पु. पाठः।

एव ब्रह्मणि निषिध्यन्ते, न श्रुतिसिद्धा जगत्कर्तृत्वादयः । तथा सति 'प्रक्षालनाद्धी'ति न्यायेन प्रतिपादनवैयर्थ्यापातात् । किञ्च, ब्रह्मनि-

सुवर्णसूत्रम् ।

सहानवस्थानेन सविशेषनिर्विशेषत्वयोरेकत्र विरोधात् पूर्वं, नन्विदमसंगतमित्यादिना यस्त्र-प्रसंदंशपातो मां प्रत्युक्तः, स एव त्वां प्रत्युपागादतो न स्यादित्यर्थः । तत्र समादधते—मैवमित्यादि । तथाचोक्तवाक्य एवाग्रे 'एतस्य वा अक्षरस्य प्रशासने गार्गि! द्यावापृथिवी विधृते तिष्ठत' इत्यादिना सर्वप्रशासितृत्वद्रष्टृत्वादीनां श्रावणात्तदनिषेधाच्च न तत्र धर्मसा-मान्यनिषेधो येन तद्दूषणं स्यादपितु तद्विशेषनिषेध इति निषेधविषयविवेकेन तत्तदभाव-योरेकत्राभावान्न विरोध इत्यर्थः । नन्वेवमत्रास्तु, न तु सर्वत्रैवं वक्तुं शक्यम् । श्रोतव्य-त्वादीनां श्रौतानामपि 'यतो वाच' इत्यादिना निषेधादित्यत आहुः—तथा सतीत्यादि । तथाच तत्रापि वाचो मनश्च लौकिक्योऽशुद्धं च ग्राह्यमित्यर्थः । ननु यथाधर्मनिरूपिका मया

हरितोषिणी ।

न भवतीत्यर्थः । अत्र हेतुमाह—विरोधादिति । यथा घटतदभावयोर्विरोधादेकत्र स्थिति-र्नास्ति, एवं श्रुत्युक्तानां कर्तृत्वाकर्तृत्वादिधर्माणामेकत्र समावेशासंभवादित्यर्थः ।

अत्र समाधानमाहुः—मैवमित्यादिना । जगत्कर्तृत्वादय इति । एवं च धर्ममात्रस्य निषेधो नास्तीति सूचितम् । अत एवास्मिन् वाक्ये अग्रे 'एतस्य वा अक्षरस्य प्रशासने गार्गि ! द्यावापृथिवी विधृते तिष्ठत' इत्यनेन सर्वप्रशासनकर्तृत्वमुक्तम् । यथा नीलघटवति भूतले घटत्वावच्छिन्नाभावो नायाति, परन्तु पीतघटाभाव आयाति, तथाऽत्राऽपीति भावः । ननु न श्रुतिसिद्धा इति वक्तुं न शक्यते । कुतः ? 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यनेन श्रोतव्यत्वं श्रुतिसिद्धमपि 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'त्यादिना निषिध्यते इत्यत आहुः—प्रक्षालनाद्धीति । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर'मिति न्यायेनेत्यर्थः । एवं च 'यतो वाच'इत्यत्र लौकिकवागग्राह्यत्वं 'मनसा सहे'त्यत्राशुद्धमनसेत्यर्थः । 'अनृतं वै वाचा वदति अनृतं मनसा ध्यायती'ति श्रुतेः । ननु सोपाधिब्रह्मपरत्वेन यथा मया धर्मनिरूपिका श्रुतिरुक्ता, तथा 'यतो वाचो'

गङ्गाधरभट्टी ।

अभेदपक्षः । स्यादिति । उक्तदोषाणामभावात् । विरोधादिति । सविशेषनिर्विशेषयोः छायातपवद्विरोधाज्जीवधर्मा एवैतेन निषिद्धाः, न श्रुतिसिद्धा इति सामान्यधर्मनिषेधाभाव उक्तः । 'एतस्य वा अक्षरस्य प्रशासने गार्गी'ति प्रशासितृत्वद्रष्टृत्वादीनुक्त्वा तदनि-षेधात् । ननु श्रौतस्यापि वाच्यत्वादेर्यतो वाच इति निषेधस्तत्राह—तथा सतीति । तथा

---

१ रेकत्रैव काले इति पाठः ।

रूपकमहावाक्ये त्वन्मते सृष्टिनिरूपकाणि वाक्यानि असंगतानि स्युः, तदनिरूपकत्वात् ॥

(४) नन्वस्ति संगतिरध्यारोपापवादलक्षणा । तथाहि—शुद्धब्रह्मणो दुर्ज्ञेयत्वेन तज्ज्ञापनाय जगज्जननमुक्त्वा, तत्कर्तृत्वभोक्तृत्वे प्रतिपाद्य, तद्द्वारा सोपाधिके ब्रह्मणि बुद्धौ सिद्धायां शाखाऽरुन्धतीन्यायेन पूर्वोक्तमपोह्य कर्तृत्वाद्यपेतं ब्रह्म

अध्यारोपापवादविचारः

सुवर्णसूत्रम् ।

संकोच्यते, तथा तन्निषेधिका त्वयेति तौल्यमित्यत आहुः किञ्चेत्यादि । तदनिरूपकत्वात् । ब्रह्मानिरूपकत्वात् । तथा च त्वन्मते दोषबाहुल्यान्न तौल्यमित्यर्थः ॥

(४) ब्रह्मानिरूपकत्वं परिहर्तुं संगतिं व्युत्पादयति—नन्वित्यादि । तथा चैवं तेषां तटस्थब्रह्मपरत्वान्नाऽसंगतिरित्यर्थः । तान् दूषयन्ति—नैव मित्यारभ्य, न कर्तृत्वनिषेधो ब्रह्मणि शक्यनिरूपण इत्यन्तेन ग्रन्थेन । एवमिति । उक्तरीत्या ब्रह्मणि कर्तृत्वा-

हरितोषिणी ।

इत्यादि निषेधकश्रुतीनां लौकिकपरत्वेन त्वयापि वक्तव्यम्, एवं च सङ्कोचस्तूभयत्रापि तुल्य इत्यत आहुः—किञ्चेति । महावाक्ये इति । 'ब्रह्मविदाप्नोति पर'मित्यादावित्यर्थः । सृष्टिनिरूपकाणीति । 'तस्माद्वा एतस्मादात्मन आकाशः संभूत' इत्यादीनीत्यर्थः । असङ्गतानीति । पूर्ववाक्यानि ब्रह्मनिरूपकाणि, उत्तरवाक्यानि सृष्टिकर्तृत्वनिरूपकाणी त्यसङ्गतानीत्यर्थः । तदनिरूपकत्वादिति । ब्रह्मानिरूपकत्वादित्यर्थः । तथा च भवन्मते दोषाणामाधिक्यमित्यर्थः । एतेन कारिकोक्तः 'अभेदादनुपाधितया'दिति हेतुः प्रसाधितः ।

(४) इदानीमध्यारोपापवादखण्डनार्थं 'जगद्भ्रमयामिति' इति कारिकोक्तं हेतुं साधयितुमाहुः—नन्वस्तीति । अध्यारोप्य पुनरपवादः क्रियते श्रुतिवाक्यानामसङ्गतत्वव्युदासार्थम्, अध्यारोपापवादो लक्षणं स्वरूपं यस्याः सा एतादृशी सङ्गतिरस्तीत्यर्थः । सङ्गतिमेव विशदयन्ति—तथा हीति । जगदिति । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादि वाक्येनोक्त्वेत्यर्थः । बुद्धौ सिद्धायामिति । एतादृशजगत्कर्तृत्वविशिष्टं ब्रह्मास्तीति बुद्धावित्यर्थः । अत्र दृष्टान्तमाहुः—शाखेति । अरुन्धती सूक्ष्मनक्षत्रं झटिति

गङ्गाधरभट्टी ।

च तत्र लौकिकवागादिनिषेध एवेति भावः । नन्वेवं धर्मनिरूपिका मया संकोच्यते तन्निषेधिका त्वयेति तौल्यमत आहुः—किञ्च ब्रह्मेति ॥

(४) अन्यथानुपपत्तिरिति । अनुवादान्यथानुपपत्तिः । तथा चेति । 'न तत्र रथा न रथयोगा' इत्यत्रैव 'सन्मूला' इत्यत्रापि भ्रमसिद्धानुवाद इति भावः । उपपत्तिरिति ।

पश्चाद् बोध्यते इतिचेत्, नैवं वक्तुं युक्तम् । जगदप्रतीतिप्रसङ्गात् । तथा हि—न हि जगत्प्रतीतिः श्रुतिसिद्धा, येन पूर्वं बोधयति, पश्चान्निषेधतीत्युच्येत । किन्तु लोकसिद्धा । तथा च तत्र कर्त्रपेक्षायां कर्तारमेवोपदिशतीति वक्तुं युक्तम्, न तु लोकसिद्धमेव जगदनूद्य, तत्कर्तृत्वं बोधयित्वा, पश्चान्निषेधतीति । तथा सति कार्यस्य प्रतीतिसिद्धत्वेन कर्त्रन्तरस्याभावाच्च जगत एवासंभवेन अनुवादो बाधितविषयः स्यात् । स्वारूढशाखाछेदनवन्माता वन्ध्येतिवाक्यवच्च सर्वार्थतत्त्वप्रतिपादिका श्रुतिः कथमेवं वदेत् । सर्वतो बलवती ह्यन्यथानुपपत्तिः । ननूपलब्धि-

सुवर्णसूत्रम् ।

दिराहित्यम् । तथा सतीत्यादि । कर्तृनिषेधे सति । कार्यस्य जगतः प्रतीतिसिद्धत्वेन शुक्तिरजतवद्भ्रमसिद्धत्वेन सर्वज्ञत्वादिगुणके सोपाधिके ब्रह्मणि तदयोगेन तस्याऽकर्तृत्वात्तथेत्यर्थः । अन्यथानुपपत्तिरिति । अनुवादान्यथानुपपत्तिः । अन्यथानुपपत्तिं पूर्वपक्षी समाधत्ते—ननूपलब्धिमात्रेणेति । लोकसिद्धत्वेनेनोक्तेन । तेन सिद्धमाहुः—

हरितोषिणी ।

परिदृश्यमानं न भवति, शाखा तु परिदृश्यमाना । तदा केनचित् शाखास्थेयमरुन्धतीत्युक्तं चेत्, तद्द्वाराऽरुन्धतीदर्शनं जायते, तदनन्तरमियमरुन्धती शाखास्था न भवतीति पश्चाद् यथा ज्ञाप्यते, तथा वेदेन परिदृश्यमानजगत्कर्तृ ब्रह्म भवतीति ज्ञाप्यते, तदनन्तरं कर्तृत्वविशिष्टसोपाधिकब्रह्मणि बुद्धिसिद्धिर्जायते तदनन्तरं जगत्कर्तृत्वं दूरीकृत्य केवलं ब्रह्मपदार्थानुभवो ज्ञाप्यत इत्यर्थः । अध्यारोपापवादं खण्डयन्ति—नैवमित्यारभ्य न कर्तृत्वनिषेधो ब्रह्मणि शक्यनिरूपण इत्यन्तेन सन्दर्भेण । एवमध्यारोपापवादं स्वीकृत्य ब्रह्मणि कर्तृत्वनिषेधनं वक्तुं न युक्तमित्यर्थः। कथं न युक्तमित्यत आहुः—जगदिति। न क्रियत इत्यत एवम । तदेव विशदयन्ति—तथा हीत्यादिना । लोकसिद्धत्वे किं सम्पन्नमत आहुः—तथा चेति । कर्त्रपेक्षायामिति । कार्यं तु दृश्यते, कर्ता न दृश्यत इत्यतः कर्त्रपेक्षायामित्यर्थः । उपदिशतीति । श्रुतिरिति शेषः । निषेधतीति । न त्विति पूर्वेणान्वयः । तथा सति सोपाधिके ब्रह्मणि कर्तृत्वनिषेधे सतीत्यर्थः । बाधितविषय इति । यथा शुक्तौ रजतं दृश्यते परन्तु वास्तविकं तन्नास्ति, तथा कर्तारं विना कार्यस्याभावात्तत्प्रतीतिः रजतप्रतीतिवद्भ्रमात्मिका स्यादित्यर्थः । तथा च लोकसिद्धं बाधितं यज्जगत्तस्यानुवादः श्रुत्या क्रियते, पुनश्च तत्कर्तृत्वं प्रतिपाद्य निषिध्यते इति प्रामाणिकेन कथं वक्तव्यम्, किञ्च ब्रह्मणः सर्वज्ञत्वेन बाधितजगद्विषयकभानाभावात् तत्कर्तृत्वस्यासंभवादेवं कथं श्रुतिर्वदेदिति भावः । ननु श्रुत्या कुतो न वक्तव्यमित्यत आहुः—सर्वत इति । जगतोऽसत्त्वेनानुवादो न संभवतीत्यनुवादान्यथानुपपत्तिरधिकबलवतीति कृत्वा श्रुत्यैवं

मात्रेण न वस्तुसत्त्वं वक्तुं शक्यम्, स्वप्नादिषु तथा प्रसङ्गात्। तथा च निषेधिकायाः श्रुतेः प्रपञ्चासत्त्वमेवाभिप्रेतमिति चेत्। तर्हि प्रतीतिमुपपादयतु देवानांप्रियः। न तावद्वासनयेति वक्तुं शक्यम्, तस्या अनुभवजन्यत्वेन जगतश्चासत्वेन पूर्वमनुभवाऽसंभवात्। न चानादित्वेन तदुपपत्तिः, सर्वेषामनुभवानां वासनाजनकत्वाऽनियमेन कदाचित्

सुवर्णसूत्रम्।

तथा चेत्यादि। 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत' इत्यत्रेव 'सन्मूला' इत्यादावपि भ्रमसिद्धानुवादो निषेधकश्रुतिबलादुपगम्यत इति नानुपपत्तिरित्यर्थः। समाधिमुपगम्य तद्दूषयन्ति—तर्हीत्यादि। यद्यसत्यमभिप्रेतं तर्हीत्यर्थः। स्वप्नादिप्रतीतिसामग्र्याऽत्रापि प्रतीतिरित्यत आहुः—नेत्यादि। पूर्वमनुभवेति। प्राथमिकाऽनुभव इत्यर्थः। अनादित्वेनेति। वासनासन्तानाऽनादित्वेन। वासनाजनकत्वाऽनियमेनेति। संस्कारं प्रत्युपेक्षान्यसंशयान्यज्ञानस्यैव हेतुत्वात्त-

हरितोषिणी।

नोच्यत इत्यर्थः। अन्यथानुपपत्तिं परिहरति पूर्वपक्षी—नन्विति। स्वप्नादिष्विति। आदिना शुक्त्यादौ रजतत्वादिप्रतीतिपरिग्रहः। तथा प्रसङ्गादिति। सत्त्वप्रसङ्गादित्यर्थः। स्वप्ने हि 'न तत्र रथा न रथयोगा' इति श्रुतिः पदार्थासत्त्वं प्रतिपादयतीति भावः। अभिप्रेतमिति। 'अथ रथान् रथयोगा' नित्यत्र स्वाप्निकपदार्थानुवादः श्रुत्या यथा क्रियते, एवं 'सन्मूलाः सौम्येमाः प्रजा' इत्यत्रापि भ्रमविषयपदार्थानुवादं कृत्वा भ्रमनिरासकश्रुत्या निषेधः क्रियते इति निषेधकश्रुतिबलात्स्वीक्रियते इति भावः। समाधानमाहुः—तर्हीति। प्रपञ्चासत्त्वं यदि स्वीक्रियते, तर्हीत्यर्थः। असत्पदार्थस्य प्रतीतिरेव नास्तीत्यभिप्रायेण मूर्खवाचकदेवानांप्रिय इत्युक्तम्। 'देवानां प्रिय इति च मूर्खे' इति पाणिनिवाक्यात्। स्वाप्निकपदार्थभासकसामग्र्या असत्पदार्थभासकत्वं स्वीक्रियत इत्यत आहुः—न तावदिति। तस्या वासनायाः। पूर्वमिति। असत्पदार्थस्य प्रथममनुभव एव न जायत इत्यर्थः। हट्टपट्टनादौ दृष्टस्य रजतस्य शुक्त्यधिष्ठाने संस्कारवशाद्भ्रमो भविष्यति, अत्र तु दर्शनाभावात् संस्कार एव नोदेतीति भावः। एतादृशी वासना स्वीक्रियते, यस्याः पूर्वं प्रत्यक्षापेक्षैव नास्तीत्याशयेन शङ्कते—न चेति। अनादित्वेनेति। वासनायाः सन्तानस्याऽनादित्वेनेत्यादिः शेषः। तदुपपत्तिरिति। तया वासनया च जगत्प्रतीत्युपपत्तिरित्यर्थः। तथा च पूर्वमनादिवासनया जगति विद्यमानानां पदार्थानां भ्रमात्मकानुभवो जायते, तदनन्तरं पुनस्तज्जन्यवासनया पुनस्तत्तत्पदार्थानुभवो जायत इत्येवं वासनासन्तानजन्योयं जगद्विषयकोऽनुभव इति भावः। एवं च जगति योऽपूर्वः

कस्यचिदर्थस्याप्रतीतिप्रसङ्गात् । नियमे वा, सर्वदा तदुद्बोधानियमेनापि तथा प्रसङ्गः । उद्बोधकं च न दृष्टम्, अन्योन्याश्रयप्रसङ्गात् । नाप्यदृ-

सुवर्णसूत्रम् ।

ष्टेत्यर्थः । अप्रतीतिप्रसङ्गादिति । व्यावहारिकप्रमाया अपि तव मते वस्तुतो भ्रमत्वात्तद्विषयकमुपेक्षाज्ञानं प्रागासीत्तद्विषयकवासनाया अभावेन तस्य तथात्वादित्यर्थः । ननूपेक्षाविज्ञानोत्तरमपि कालान्तरे किञ्चिदंशस्मरणदर्शनेन सर्वांशोपेक्षायां प्रमाणाभावात्तेषां वासनाजनकत्वं नियतमेवेति नोक्तदोष इत्यत आहुः—नियमेत्यादि । ननु कालोपाधेरपि सहकारित्वादुद्बोधस्याऽपि नियम एवेत्यत आहुः—उद्बोधकमित्यादि । अन्योन्याश्रयेति । वासनया तद्विषया प्रतीतिः, प्रतीतस्य तद्वासनोद्बोधकत्वमित्यन्योन्या-

हरितोषिणी ।

पदार्थो दृश्यते, स तु अनादिवासनासन्तानजन्यः; यस्तु स एव पुनर्दृश्यते, स तु भ्रमीयवासनयेति हृदयम् । उत्तरयन्ति—सर्वेषामिति । घटपटकुड्यविषयकाः सर्वेप्यनुभवा जातास्तत्र घटांशे अपेक्षा, पटांशे संशयः, कुड्यांशे उपेक्षा यदा, तदा घटविषयकसंस्कार एव जायते, न त्वन्यविषयक इत्यनुभवादुपेक्षान्यसंशयान्यानुभवस्यैव वासनाकारणत्वं, न तु सर्वविषयकानुभवस्येत्यर्थः । एवं च प्रकृते दोषः को वेत्यत आहुः—कदाचिदिति । संशयोपेक्षादिसत्त्वे इत्यर्थः । कस्यचिदर्थस्येति । पटादिरूपार्थस्येत्यर्थः । तथा च मन्मते इन्द्रियादिसन्निकर्षादिघटितसामग्रीसत्त्वे घटादिसर्वविषयिणी प्रतीतिर्जायते, तव मते संस्कारस्य प्रतीतिजनकत्वात् तस्य च पटाद्यंशे उपेक्षादिसत्त्वेन केवलं घटविषयकत्वात् पटादिप्रतीत्यभावप्रसङ्ग इति भावः । ननु किञ्चिदंशे उपेक्षासत्त्वे स्मरणं जायते, सर्वांशोपेक्षासत्त्वे प्रमाणं नास्तीति सर्वानुभवानां वासनाजनकत्वं स्वीक्रियते इत्यत आहुः नियमे वेति । तथा प्रसङ्ग इति । संस्कारे उद्बोधकसमवधानमपेक्षितम्, तस्य तु नियमो नास्तीति कदाचित् कस्यचिदर्थस्याप्रतीतिरित्यर्थः । ननु 'जन्यानां जनकः काल' इति वचनात् कालोपाधेः सर्वदा सत्त्वादुद्बोधकनियमोऽस्तीत्यत आहुः—उद्बोधकमिति । कालोपाधेः सहकारिकारणत्वमेव, न तूद्बोधकत्वम्, तथा चोद्बोधकं दृष्टं वा अदृष्टं वेति वक्तव्यम्, तदुभयमपि नास्तीति खण्डयन्ति—न दृष्टमिति । अन्योन्याश्रयेति । दृष्टं च

गङ्गाधरभट्टी ।

मरुमरीचिकावदुपवादानुभवश्च । अनियमेनेति । संस्कारं प्रत्युपेक्षान्यसंशयान्यज्ञानस्यै हेतुत्वात् । नियमे वेति । उपेक्षाविज्ञानोत्तरमपि किञ्चिदंशस्मरणदर्शनात् । अन्योन्य

ष्टम्, दृष्टसामग्रीसंपादनद्वारैव तस्य कारणत्वात् । 'वैधर्म्याच्च न स्वप्नादिव'दिति तत्त्वसूत्रविरोधश्च ।

## सुवर्णसूत्रम् ।

अथ इत्यर्थः । (अन्योन्याश्रयपदं चक्रकात्माऽऽश्रयस्यापि संग्राहकम् ।) ननु प्रतीतिवासनाव्यक्तीनां भेदान्नान्योन्याश्रयः, अनादिप्रवाहाच्च नाऽनवस्थापि दोषायेत्यत आहुः—'वैधर्म्या'दित्यादि । सूत्रार्थस्तु—जगत्स्वप्नमायाभ्रमवदसन्न । कुतः ? वैधर्म्यात् । पूर्वदृष्टस्य स्तम्भादेः सम्वत्सरोत्तरमपि तथैव दर्शनेनैं तद्वैधर्म्यात् । चकारेण मोक्षसाधने प्रवृत्त्यनुपपत्तेश्चेति । तथा च यदि श्रुत्यभिप्रायः प्रपञ्चासत्त्वे भवेत्तदा श्रुतीर्विचारयन् व्यास एवं न वदेदित्यर्थः ॥

## हरितोषिणी ।

प्रमाविषयं भवति, वासनया दृष्टविषयिणी प्रतीतिर्जायते, प्रतीतस्य दृष्टस्य वासनाजनकत्वमित्यन्योन्याश्रय इत्यर्थः । नाप्यदृष्टमिति । दृष्टसामग्रीसंपादनेत्यनेनानवस्था सूचिता । ननु प्रतीतिर्भिन्ना वासना भिन्नेति कृत्वा अन्योन्याश्रयदोषो नास्ति; अथ च वासनया प्रतीतिः, प्रत्यक्षानन्तरं पुनर्वासनेत्यनादिप्रवाहादनवस्थादोषो नास्तीत्यत आहुः—'वैधर्म्याच्चे'ति । इदं च सूत्रं द्वितीयाध्याये द्वितीये पादे पठितम् । तदर्थस्तु—जगत्स्वप्नादिवदसन्न; आदिशब्देन मायाभ्रमयोः सङ्ग्रहः । कुतः ? । वैधर्म्यात् स्वप्नादिवैधर्म्यात् । स्वप्ने दृष्टस्य पुनस्तदेव तथैव स्वप्नान्तरे दृश्यत इति नास्ति, जाग्रदवस्थायां तु दृष्टस्य गृहादेः पुनर्दशवर्षोत्तरमपि तस्य तथैव दर्शनमस्तीति स्वप्नाद्यपेक्षया वैलक्षण्यमिति भावः । किञ्च स्वप्नादौ साधनस्य जाग्रदवस्थोपयोगाभावाज्जगति साधनस्य मोक्षोपयोगादि वैधर्म्यमन्यदूहनीयम् । अधिकं च मयाऽणुभाष्यविवरणे स्पष्टं प्रपञ्चितमिति तत्रानुसन्धेयम् ॥

## गङ्गाधरभट्टी ।

श्रयेति । वासनया तद्विषया प्रतीतिः, प्रतीतस्य च तद्वासनोद्बोधकत्वम् । आत्माश्रयचक्रकेऽप्यत्रोह्ये । ननु प्रतीतिवासनाव्यक्तीनां भेदान्नान्योन्याश्रयोऽनादिप्रवाहान्नानवस्थापि दोषोऽत आहुः—'वैधर्म्या' दिति । स्वप्ने पदार्थोऽन्यथा भवति, न जागरणे इति भावः । इदं द्वितीयाध्याये विस्तृतम् ॥

---

१ वृत्तचिह्नान्तर्गतः पाठः ङ. ग. घ. पुस्तकेषु नास्ति । २ नास्ट मु. पु. पाठः । ३ भिन्नेति मु. पु. पाठः ।

(५) ननु जीवाविद्यैव जगत्प्रतीतौ हेतुः । तथा हि—जीवब्रह्मणोरभेदबोधकश्रुत्या, भेदस्य च तत्रैव ज्ञाननिवर्त्यत्वोक्त्या भेदस्यातात्त्विकत्वम्, अज्ञानकृतत्वं च निरूपितम् । यतः परमार्थतो भिन्नस्याऽभेदासंभवो, ज्ञानमप्यज्ञानस्यैव निवर्तकम् । तथा च अनादिरविद्यैवाज्ञानरूपा 'अहमज्ञ'इत्यनुभवसिद्धा भा-

अविद्याकृतं सर्वमिति विचारः ।

सुवर्णसूत्रम् ।

(५) एवं जगत्प्रतीत्युपपादक एकस्मिन् पक्षे दूषिते पक्षान्तरेण प्रत्यवतिष्ठते—नन्वित्यादि। जीवाऽविद्येति । ब्रह्मणः सकाशाज्जीवस्य व्यावर्तकं मूलाज्ञानम् । अभेदबोधकश्रुत्येति । नृसिंहतापनीयनवमखण्डरूपया, महावाक्यरूपया च । एवं च 'जीवब्रह्मभेदः अतात्त्विकः । अज्ञानकृतत्वात् । अज्ञानकृतः । ज्ञाननिवर्त्यत्वात् । यदेवं तदेवं शुक्तिरजतव'दिति श्रुतिसिद्धाऽनुमानेन भेदस्याज्ञानकृतत्वसिद्धौ साध्यतावच्छेदकतया, श्रुतार्थापत्त्या चाभेदकारणीभूताज्ञानस्य सिद्धिरिति प्रमाणं दर्शितम् । प्रमाणान्तरमाह—तथा चेत्यादि।

हरितोषिणी ।

(५) एतावता जगत्प्रतीतिजनकाध्यारोपापवादखण्डनं कृतमिदानीमविद्यया जगत्प्रतीतिवादं खण्डयितुमादौ मायावादिमतानुरोधेन पूर्वपक्षमुद्धाटयन्ति—नन्विति । हेतुरिति । अहं ब्रह्म न भवामि, किन्तु अमुकोहमित्याकारकं ज्ञानमविद्या, सैव जगत्प्रतीतौ कारणमित्यर्थः । इदमेव विशदयन्ति—तथा हीत्यादिना । श्रुत्येति । 'तत्त्वमसि श्वेतकेतो' इति श्रुत्येत्यर्थः । नन्वनेककोटिब्रह्माण्डनायकस्य सर्वज्ञस्य ब्रह्मणः साकं किञ्चिज्ज्ञेनाऽसमर्थेन जीवेनाभेदः श्रुत्या वर्णितोऽपि मनसि नायातीत्यत आहुः—भेदस्येति । इदानीं परिदृश्यमानस्य भेदस्येत्यर्थः । तत्रैव श्रुतावेवेत्यर्थः । निरूपितमिति । तथा चेदानीमज्ञानदशायां तथा मनसि नायाति चेदपि न दोष इति भावः । ननु ज्ञानमज्ञाननिवर्तकमित्युक्त्याऽज्ञानस्याऽभावरूपत्वं प्रतीयते, अभावस्य बन्धकत्वं कथमित्यत आहुः—तथा

गङ्गाधरभट्टी ।

(५) अभेदबोधकेति । 'तत्त्वमसी'त्यादिश्रुतिभिरभेद उक्तः । एवं च भेदोऽतात्त्विकः, अज्ञानकृतत्वात्, तत्त्वं च, ज्ञाननिवर्त्यत्वात्, शुक्तिरजतवदिति प्रयोगः । प्रत्यक्षमप्याह—तथा चेति । 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठ'मिति पातञ्जलसूत्रभाष्येपि व्यासपादैः पुराणस्वारस्येन पञ्चपर्वाऽविद्या, प्रथमपर्वरूपतमसः स्वरूपाज्ञानस्य अन्यपर्वमूलत्वमुक्तम् । भावरूपेति । यथा अमित्रो न मित्राभावः, अपि तु तद्विरुद्धसम्पन् । तदवच्छेदिका जीवव्यावर्तिका । अनादित्वादिति । अविद्या अनादिर्भावरूपा च, अनादिबन्धरूपकारणीभूतविभागरूपभावकार्यजनकत्वाद्ब्रह्मवत् । यन्नैवं तन्नैवम्, घटाद्यज्ञानवत् ।

वरूपा तदवच्छेदिका मन्तव्या। जीवब्रह्मविभागस्यानादित्वात् । 'बन्धोऽस्याविद्ययाऽनादि[1]'रिति वचनात् । तथा च विचित्रपरिणामशीलया

सुवर्णसूत्रम् ।

इत्यनुभवसिद्धेति । 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठ'मिति पातञ्जलसूत्रभाष्ये व्यासपादैः पुराणस्वारस्येनाविद्या पञ्चपर्वा व्याख्याता । तमो मोहो महामोहस्तामिस्रमन्धतामिस्रमिति । तत्राऽविद्याख्यं तमोऽपरपर्यायं स्वरूपाज्ञानं तस्याः प्रथमं पर्व, तदेवाऽन्येषां मूलम् । तेषाऽध्यासरूपत्वाद्भावरूपाः । तथा च यथा अमित्रो न मित्राभावः, किन्तु तद्विरुद्धसंपन् । तथेयं ज्ञानविरुद्धमिथ्याऽज्ञानरूपा । माया च 'तमोरूपाऽनुभूते'रिति तापनीये श्राविता, उक्तरूपानुभवसिद्धा, उक्तरीत्या भावरूपा, तदवच्छेदिका जीवव्यावर्तिका, मन्तव्या श्रुत्युक्तानुभवेनाप्यङ्गीकार्येत्यर्थः । एवं प्रत्यक्षेणापि निश्चित्य तस्या अनादित्वं साधयति—जीवेत्यादि । साऽनादिर्भावरूपा च, अनादिबन्धकारणीभूतविभागरूपभावकार्यजनकत्वात् । यदेवं तदेवं, ब्रह्मवत् । यन्नैवं तन्नैवं, घटाद्यज्ञानवदित्यनुमानेनाप्यनादिभावरूपत्वसिद्धिः । यद्यपि बन्धस्यानादित्वमुक्तम्, तथापि विभागात् पूर्वं बन्धे कृत्स्नस्य ब्रह्मणो बद्धत्वापत्तिरित्यगत्या विभागोत्तरकालीनत्वमाद्रियते । एवं तस्या भावरूपत्वे दोषरूपत्वे च सिद्धे तस्याः प्रत्यायकत्वमाह—तथा चेत्यादि । नन्वस्तु

हरितोषिणी ।

चेति । एतादृश्याममविद्यायामनुभवं प्रमाणयन्ति—अहमज्ञ इति । तदवच्छेदिकेति । जीवावच्छेदिकेत्यर्थः । जीवधर्म इति यावत् । तथा च भावरूपा अविद्या अज्ञानमिति भावः । इयमविद्या पञ्चपर्वा, तमो मोहो महातमस्तामिस्रमन्धतामिस्रमिति भेदात् । तत्र स्वरूपाज्ञानरूपं तमोऽपरपर्यायमविद्याया यत्प्रथमं पर्व, तदेवान्येषां मूलम्, ते चाध्यासरूपत्वाद्भावरूपाः । इदं च सर्वं 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठ'मिति पातञ्जलयोगसूत्रे स्पष्टमुक्तं, व्याख्यातं च भाष्ये व्यासचरणैः । एवमनुभवसिद्धाया मायाया अनादित्वं व्यवस्थापयन्ति—जीवेति । जीवस्यैव बद्धत्वमाह—बन्ध इति । ननु बन्धस्यानादित्वं न वक्तव्यम्, तथा सति जीवब्रह्मणोरेकत्वाद्ब्रह्मणि बद्धत्वं स्यादिति चेत्, न; विभागानन्तरमेव बद्धत्वस्वीकारात्, विभागस्य चानादित्वात् । चिरन्तनत्वमेवानादित्वं, न तु तत्त्वादिरेव नासीति नार्थ इत्यलमप्रस्तुतविचारेण । इदानीं भावरूपाया अविद्यायाः जगत्प्रतीतिजनकत्वमाह—तथा चेति । प्रतीयत इति । यथा दोषेण शुक्तौ रजतप्रतीतिः, एवं मायया विचित्रजगत्प्रतीतिरिति भावः । तथा च मायापि नास्ति जगदपि नासी-

---

1 पाऽनादि मु. पु. पाठः ।

अविद्ययैव दोषरूपया विचित्रं जगत् प्रतीयते । युक्तं चैतत् । कार्यस्य तुच्छत्वेन तत्कारणेनापि तादृशेनैव भवितव्यम् । कारणसजातीयत्वात् कार्यस्य । यथा च मुखसम्बन्धमात्रेण दर्पणादिकं बिम्बप्रतिबिम्बभेदनिमित्तं, तथा चिद्रूपब्रह्मसम्बन्धमात्रेण तद्भेदनिमित्तं सा । तत्कृततदध्यासवशात् स्वस्मिन्नज्ञत्वं, कर्तृत्वभोक्तृत्वे, मन्यमानो जीवो विधिनियोज्यादिभावं मनुते । ततः शमदमादिभिर्गुरूपसत्तितदुपदेशश्रवणमनननिदिध्यासनैश्चाविद्याधिष्ठानरूपस्वात्मनोऽद्वैतकूटस्थचिदेकरसत्व-

सुवर्णसूत्रम् ।

दोषरूपत्वं, भावरूपत्वं च, तथापि विचित्रपरिणामशीलत्वं कथमित्यत आह—युक्तमित्यादि । एतदिति । विचित्रपरिणामशीलत्वम् । तथा च जगत्तुच्छकारणकं, तुच्छत्वात् । यद्यादृशं तत्तादृशकारणकम्, घटादिवदिति सामान्यव्याप्त्या जगतस्तथात्वसिद्धौ तत्र साध्यतावच्छेदकतया सिद्ध्यन्ती विचित्रपरिणामशीलतया सिद्ध्यतीत्यर्थः । एवं तस्या एकं कार्यमुक्त्वा कार्यान्तरमाह—यथा चेत्यादि । दर्पणादिकमित्यत्रादिपदं घटादिसंग्रहाय । एवं भेदस्याऽतात्त्विकत्वे जीवावच्छेदकतायां च प्रकार उक्तः । तेन जीवब्रह्मभेदस्तस्या नैमित्तिकं कार्यम्, जगत्तूपादेयकार्यम् । उभयोः फलमाह—तत्कृतेत्यादि । भेदकृतो यः प्रतिबिम्बात्मत्वाध्यासस्तद्वशात् प्रतिबिम्बरूपेऽवच्छिन्नरूपे वा स्वस्मिन्नज्ञत्वादिकमध्यस्यन्

हरितोषिणी ।

त्युभयोस्तुच्छत्वमाह—युक्तमिति । मायाया जगद्रूपं तुच्छं कार्यं युक्तम् । इदानीं दृष्टान्तेनान्यदप्याह—यथा चेति । दार्ष्टान्तिके योजयन्ति—तथेति । सम्बन्धमात्रेणेति । मायाया इति शेषः । तद्भेदेति । जीवब्रह्मभेदनिमित्तमित्यर्थः । सा माया । तथा च मायायाः कार्यद्वयम् । एकं जीवब्रह्मभेदरूपं नैमित्तिकं कार्यमपरं विचित्रजगद्रूपमुपादेयकार्यमित्यर्थः । जीवस्य जगतश्च परस्परं भोक्तृभोग्यादिसम्बन्धरूपं मायाकार्यस्य फलमाह—तत्कृतेति । मायाजनितजीवब्रह्मभेदकृतेत्यर्थः । तदध्यासेति । प्रतिबिम्बरूपे जीवेऽहममुक इति यः आत्मत्वाध्यासस्तद्वशादित्यर्थः । स्वस्मिन् । प्रतिबिम्बरूपे जीवे । यद्वशात् संसारस्तं प्रथममाहुः—अज्ञत्वमिति । कर्तृत्वभोक्तृत्वे इति । अहं यागकर्ताऽहं तत्फलभोक्तेत्यादि मन्यमान इत्यर्थः । विधीति । 'स्वर्गकामो यजेते'त्यादिविधिना नियोज्यते प्रेर्यते इति विधिनियोज्यः, तस्य भावमहमिदं न करोमीति चेन्मम दोषो भविष्यतीत्याकारकं मनुते ॥ नन्वेतादृशी मायारूपा अविद्या बलवती चेत्, जीवस्य कदाचिदपि मोक्ष एव न स्यादित्यतस्तत्र वेदोक्तमुपायमाहुः—तत इति । निदिध्यासनैरिति ।

१ प. पु. पु. नास्ति ।

लक्षणस्वरूपज्ञानेन अज्ञाननिवृत्त्या तत्कार्यरूपप्रपञ्चस्यापि निवृत्तेः 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिनिरूपितो मोक्षः संपद्यते । रज्जुस्वरूपज्ञानेन प्राचीनसर्पाऽनुभवतत्कृतभयनिवृत्त्या स्वास्थ्यमिव । ननु ब्रह्मणः सर्वज्ञस्याविद्यासम्बन्धोऽशक्यवचनः, अज्ञत्वाऽऽपादकत्वात् । न च जीवाश्रयैव सेति वाच्यम्, ऐक्याङ्गीकारात्तयोः । एतेनैव जीवस्या-

सुबसूर्णत्रम् ।

जीवः स्वस्मिन् शास्त्रद्वारा विधिनियोज्यत्वं तत्फलभोक्तृत्वं चान्यथाध्यस्यति । एवमनर्थपरम्परारूपं तस्याः फलमुक्त्वा शास्त्रान्तरद्वारा तन्निवृत्तिमाह—तत इत्यादि । अज्ञाननिवृत्त्येति । ज्ञानेन स्वरूपाऽज्ञानरूपे तस्याः प्रथमपर्वणि नाशिते तन्मूलानि मिथ्याज्ञानरूपाणि पर्वान्तराण्यपि नश्यन्तीत्येवं मूलाऽविद्यानिवृत्तौ तत्कृताऽध्यासनिवृत्त्या । तथा च शास्त्रीयसाधनानां मोक्षप्रतिबन्धकीभूताऽज्ञाननिवर्तकत्वेन मोक्षजनकत्वोपचारः । न तु मोक्षो जन्यः, ब्रह्मरूपत्वात् । अतः स्वत एव संपद्यत इत्यर्थः । एवं यावत्सम्बन्धं तस्या अनर्थकारित्वे निरूपिते अवच्छेदिकेत्यनेनाऽवच्छिन्नवादस्यापि संगृहीतत्वात्तद्वादाय शङ्कते—नन्वित्यादि । तथा च मायाऽविद्ययोरभेदस्वीकारादेकस्या एव सम्बन्धेन शुद्धचिद्रूपे ब्रह्मणि कथं विरुद्धस्वरूपद्वयमित्यर्थः । एवमवच्छिन्नवादे आक्षिप्ते तद्विहाय माया-

हरितोषिणी ।

स्वरूपज्ञानेनेत्यनेनान्वयः । अविद्येति । अविद्याया अधिष्ठानमाश्रयरूपं यत् स्वात्मनः अद्वैतकूटस्थचिदेकरसत्वं, तल्लक्षणं यत्स्वरूपं तस्य ज्ञानेनेत्यर्थः । अज्ञानेति । अहं ब्रह्म न भवामि, किन्तु अहममुकशर्मेत्यज्ञाननिवृत्त्येत्यर्थः । एवमविद्यायाः प्रथमं पर्व तमस्तस्य नाशे सति तन्मूलपर्वान्तरस्य नाशः । एवमविद्याया नाशे तत्कार्यस्य नाशमाह—तत्कार्येति । संपद्यत इति । ब्रह्मरूपो मोक्षः स्वत एव संपद्यते इत्यर्थः । तथा च साधनानामज्ञाननिवर्तकत्वमेव, न तु मोक्षजनकत्वम्, तस्याजन्यत्वादिति भावः । अत्र दृष्टान्तमाह—रज्जुस्वरूपज्ञानेनेति । सर्पभ्रमाधिष्ठानं रज्जुस्तस्या यत्किञ्चित्प्रकाशेन ज्ञाने जाते यथा भयादिकं नश्यति, तद्वदत्रापीत्यर्थः । इदानीं मायाविद्ययोरैक्यमित्याशयेन सिद्धान्ती शङ्कते—नन्विति । अविद्यासम्बन्धाज्जीवत्वं चेत्तस्य सम्बन्ध एव न घटत इत्याह—अज्ञत्वेति । तयोः जीवब्रह्मणोः । इदानीं बिम्बप्रतिबिम्बभावेन जीवेश्वरौ, न तु मायाव-

गङ्गाधरभट्टी ।

अनादिर्बन्धश्च विभागोत्तरकालिक एव । पूर्वं बन्धे कृत्स्नस्य ब्रह्मणो बद्धत्वापत्तेः । अज्ञाननिवृत्त्येति । मूलाज्ञाननाशे पर्वान्तराणामपि नाशात् । तदवच्छेदिकेत्यनेनावच्छिन्नप-

ऽप्यज्ञत्वमनुपपन्नमिति चेत् । न, जपाकुसुमाऽरुणस्फटिकस्तम्भश्रेणिगतपुरुषप्रतिबिम्बस्यारुणत्ववज्जीवस्याज्ञत्वावभासोपपत्तेः । तद्बिम्बस्योज्ज्वलतेव, ब्रह्मणः सर्वज्ञत्वोपपत्तेः । अविद्याश्रयत्वेन नाभेदानुपपत्तिरिति ॥

### सुवर्णसूत्रम् ।

ऽविद्ययोर्भेदं चाङ्गीकृत्य प्रतिबिम्बवादेन समाधत्ते—जपेत्यादि । अविद्याश्रयत्वेनेति । अज्ञत्वादेस्तथात्वेन । तथा च मायाऽविद्ययोरवान्तरभेदान्मायावच्छिन्नं, तस्यां प्रतिबिम्बितं वा चैतन्यमीश्वरः । अविद्यायां तत्प्रतिबिम्बो जीव इति पक्षे न कोपि दोष इत्यर्थः । एवमत्र पुरुषप्रतिबिम्बदृष्टान्तेन तटस्थस्य ब्रह्मणो व्यवधानपुरःसरः सम्बन्धः । बिम्बोज्ज्वलत्ववत् सर्वज्ञत्वम् । ताटस्थ्येऽपि मायाकृतं मायावच्छेदकृतं वा । जीवस्त्वविद्यायां प्रतिबिम्ब इति तदज्ञत्वादिकं सर्वमविद्यायामेवेति तादृशस्य जगत्प्रतीतिरविद्यात एवोपपन्ना । एवं जगत्प्रतीतौ सिद्धायामुपाधेः सिद्धौ सविशेषनिर्विशेषयोरवास्तवो भेद इत्यपि श्रुतार्थापत्त्यैव सिद्धमित्युभयोरनादित्वेनेत्यादीनि दूषणानि श्रुतिमूलकत्वाभावादेव निरस्तप्रायाणि । तथा सति सच्छब्दस्योपहितवाचकत्वेन च 'यतो वाच' इत्यादीनामपि न विरोधः । एवं सति मुख्ये बाधात्कर्तृत्वमप्यौपचारिकमेव । तथा सति 'गौणश्चे'दित्यादीनि सूत्राण्यपि प्रधाननिरसनपराणीति न तेषामपि विरोधः । तटस्थलक्षणत्वाच्च न प्रतिज्ञाऽऽदिविरोधोऽपि । 'सर्वे वेदा' इत्यादौ च वृत्तिः संकोच्येति न कोऽपि दोष इति ॥

### हरितोषिणी ।

च्छिन्नं चैतन्यमीश्वरशब्दवाच्यम्, अविद्यावच्छिन्नं चैतन्यं जीवशब्दवाच्यमित्याशयेन मायावादी समाधत्ते—जपाकुसुमेति । जपाकुसुमेनाऽरुणा या स्फटिकस्तम्भश्रेणिस्तद्गतः शुद्धपुरुषप्रतिबिम्बस्तस्य—यथा अरुणत्वम्, एवमविद्यायां ब्रह्मप्रतिबिम्बस्य जीवत्वं, तस्य पुनः अज्ञत्वं चेत्यर्थः । तयोः पुनरभेदं प्रतिपादयति—अविद्येति ॥

### गङ्गाधरभट्टी ।

श्रुत्याद्युक्तत्वात् । अत्रैव शङ्कते—नन्विति । जपेत्यादि । अयमर्थः, मायाविद्ययोरवान्तरभेदान्मायावच्छिन्नं तस्यां प्रतिबिम्बितं वा चैतन्यमीश्वरः, अविद्यायां तत्प्रतिबिम्बो जीवः, तस्य च जगत्प्रतीतेरविद्ययोपपत्तौ सविशेषनिर्विशेषयोरवास्तविके भेदे च सिद्धे श्रुतिसूत्रादीनि मद्रीत्यैव नेयानीति ॥

---

१ भेदवादमङ्गीकृत्य मु. पु. पाठः । २ घ. पु. प्रतिबिम्बः स्वातत्म्याटस्थ्येऽपि बिम्बोज्ज्वलत्ववत्सर्वज्ञत्वं मायाकृतमिति पाठः । ३ रप्य मु. पु. पाठः ।

एवं प्राप्ते ब्रूमः।

(६) पूर्वं जीवस्वरूपं विचारणीयम्, यस्य सा शक्तिः। तत्र न तावद् ब्रह्मप्रतिबिम्बो जीव इति पक्षो युक्तिसहः। तथा हि—ब्रह्मणो नीरूपत्वेन प्रतिबिम्बाश्रयस्याऽज्ञानस्य च अस्वच्छत्वेन कस्य प्रतिबिम्बः स्यात्। रूपवत एव प्रतिबिम्बनियमात्। दृष्टानुसारिणी हि कल्पनोचिता। अन्यथा वायुदारुणोरपि बिम्बत्वप्रतिबिम्बाश्रयत्वप्रसङ्गात्। ननु दर्पणादावाकाश-

जीवस्वरूपविचारोपक्रमे बिम्बप्रतिबिम्बभावखण्डनम्।

सुवर्णसूत्रम्।

(६) एवं जगत्प्रत्यये प्राप्ते तद्दूषयितुं, ब्रूम इति प्रतिज्ञाय भ्रान्तिस्वरूपे उपालभन्ते—पूर्वमित्यादि। सेति। जगद्भ्रमोत्पादिका। तद्रूपं मयोक्तमेवेत्युत्तरे तन्निषेधन्ति—तत्र नेत्यादि। तन्नयुत्पादयन्ति—ब्रह्मण इत्यादि। नीरूपत्वेनेति। दर्पणसन्निधौ मुखस्येवाऽविद्यासन्निधावस्तु प्रतिबिम्बत्वमात्राभिमानो द्रष्टुः। न तु तस्याः सामर्थ्यं बिम्बगतधर्मकरणे। अत आयसदर्पणस्थमुखरूपान्यथात्ववदविद्यास्थेश्वरजीवयोः सर्वतःपाणिपादत्वाङ्गुष्ठमात्रत्वादिधर्मा अपि शुद्धब्रह्मणि रूपे सत्येवोपपद्येरन्नान्यथेति भावः। ननु रूपसंयोगक्रियाणां प्रतिबिम्बदर्शनान्नायं नियम इत्याशङ्कायामाहुः—अन्यथेत्यादि। तथा च वायुसंयोगादेरप्रतिबिम्बात् तत्रापि रूपमेव प्रयोजकमिति न नियमभङ्ग इत्यर्थः। अविद्याया एकतः स्वच्छत्वमङ्गीकृत्य नियमभङ्गमाशङ्कते—नन्वित्यादि। तद्दूषयन्ति—ने-

हरितोषिणी।

(६) इदानीं परोक्तमतं दूषयितुं बिम्बप्रतिबिम्बभावं खण्डयन्ति—पूर्वमिति। सा जगद्भ्रमजनिका अविद्या। प्रतिबिम्बो जीव इति पक्षं निराकुर्वन्ति—तत्र नेति। युक्त्यभावं विशदयन्ति—तथाहीत्यादिना। स्यादिति। बिम्बे ब्रह्मणि रूपं नास्ति, अज्ञानरूपायामविद्यायां स्वच्छता नास्तीति प्रतिबिम्बजीवप्रसक्तिरेव नास्तीति भावः। अन्यथा दृष्टानुसारिकल्पनाया अभावे। नियमभङ्गं शङ्कते—नन्विति। दृश्यत इति। तथा चाविद्यायाः स्वच्छता मया स्वीक्रियते, तत्र रूपवत एव प्रतिबिम्बो जायते इत्ययं नियमो न स्वीक्रियते, दर्पणे रूपरहितस्याकाशस्य प्रतिबिम्बादिति भावः। दूषयन्ति—नेत्यादिना।

गङ्गाधरभट्टी।

(६) रूपवत एवेति। ननु रूपसंयोगक्रियाणां प्रतिबिम्बोऽस्तीत्यत आह—अन्यथेति। तत्रापि रूपमेव प्रयोजकमिति भावः। न चास्ति वायुदारुणोः प्रतिबिम्बः, न तु तत्प्रत्यक्षं रूपाभावादिति वाच्यम्। अरूपिणः प्रतिबिम्बस्वीकारे गौरवान्मानाभावाच्च। ननु नीरूपस्य

१ घ. पु. अस्वच्छत्वेनेति। साम्यावस्थायां गुणविवेकाभावेन शुद्धसत्त्वादिप्राधान्यस्याभावस्वच्छत्वादस्वच्छत्वेनाधारदोषादपि तथेत्यर्थः इत्यधिकः पाठः।

प्रतिबिम्बो दृश्यते । न । तावद्देशीयप्रभामण्डलस्यैव रूपवत्त्वेन प्रतीतेः । किञ्च, यत्र यदस्ति तत्र तन्न प्रतिबिम्बते, दर्पणरेखावत् । तथा च सर्वगतस्य ब्रह्मणोऽविद्यायामपि सर्वगतायां सत्त्वेन कथं प्रतिबिम्बः स्यात् । न च संयोगसम्बन्धेन तत्र वर्तमानत्वमप्रतिबिम्बे प्रयोजकम्, एतयोश्च

सुवर्णसूत्रम् ।

त्यादि । तथा च प्रभायामेवाकाशप्रतिबिम्बाभिमान इति न नियमभङ्ग इत्यर्थः । ननु तत्र सर्वेषां प्रभां प्रतीम इत्यप्रतीतेरवकाशो दृश्यते इति प्रतीतेश्च नायमभिमानः, किन्तु प्रतिबिम्ब एवेति शङ्कायां तद्विहाय वृत्तिविचारेण दूषणान्तरमाहुः—किञ्चेत्यादि । वस्तुतस्त्ववकाशोऽपि प्रभासहित एव प्रतिबिम्बत इति स्वरूपसंबन्धविशेषेण रूपसत्ताया एव प्रयोजकत्वमिति भावः । तथा प्रतीतेरिति । प्रतिबिम्बितत्वप्रतीतेः । प्रतिबिम्बादिति । तादृशप्रभायामसंयुक्तांशस्याऽशक्यवचनत्वात् संयोगेन वृत्तिर्नाऽप्रतिबिम्बे प्रयोजिका, किन्तु व्याप्यवृत्तित्वमेव तथेति संयोगस्याऽव्याप्यवृत्तित्वेन प्रभाया अपि तथात्वेन प्रति-

हरितोषिणी ।

तावद्देशीयेति । आकाशगतप्रभामण्डलस्यैव प्रतिबिम्बस्तस्य तु रूपवत्त्वमस्त्येव । आकाशो दर्पणे प्रतिबिम्बते इत्ययमभिमान इति भावः । आकाशस्यैवायं प्रतिबिम्ब इति सार्वजनीनप्रतीतेर्नायमभिमान इत्यतो दूषणान्तरमाहुः—किञ्चेति । सत्त्वेनेति । अविद्यायां

गङ्गाधरभट्टी ।

रूपस्य प्रतिबिम्बान्नायं नियमः, सत्यम्; रूपसमवायोस्तु प्रतिबिम्बे प्रयोजकः । रूपस्य स्वप्रतिबिम्बे स्विष्टापत्तिरेवास्तु । धर्मपुरस्कारेणैव धर्मिबोधात् । प्रतिबिम्बिताम्रतरुचलनादि तु नैव प्रतिबिम्बते, क्रियायास्त्वप्रत्यक्षत्वात् । किन्तु देशान्तरे रूपोपलम्भेन क्रियानुमीयते । *अथवा दृग्विषयस्यैव प्रतिबिम्ब इति तात्पर्यम् । तेन संयोगादीनामपि प्रति-

---

टिप्पणी ।

* अथवा दृग्विषयस्यैव प्रतिबिम्ब इति गङ्गाधरभट्टी । निबन्धे 'रूपस्पर्शादियुक्तस्य द्रव्यस्य रूपमात्रोपलम्भः प्रतिबिम्बः, क्रियायाश्चे'ति मूलेऽभिहितम् । आवरणभङ्गे च,—चकारः संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसमुच्चायकः । तथा चोक्तविधधर्मिसंबन्धि यद्दर्पणादिसंबन्धेन रूपक्रियासंख्यादिज्ञानं स प्रतिबिम्बः । तेन च पदार्थान्तररूपमायिकज्ञानात्मा सिद्ध्यती'त्युक्तम् । इत्थं च सिद्धान्ते संयोगविभागादीनां क्रियायाश्च प्रतिबिम्बस्वीकारात् केवलं रूपरूपवतोरेव तदभ्युपगमः क्रियायास्त्वप्रत्यक्षत्वादित्यादिकथनं च न समुचितमिति पक्षान्तरमिदमुक्तम् ॥

न संयोगो, विभुत्वात्तो नानुपपत्तिरिति वाच्यम् । संयुक्तस्यापि प्रभामण्डलस्य तथा प्रतीतेः । न च यदंशे संयोगस्तदंशे न तथेति वाच्यम् । बिसिनीसूत्रमात्रान्तरिताङ्गुलीतलभागस्थप्रभाया अपि दर्पणे

सुवर्णसूत्रम् ।

बिम्बादित्यर्थः । एवं च *तस्या गुणत्वपक्षेऽपि गुणसत्वे द्रव्यसत्वस्य नियामकत्वात्तत्रापि किरणसत्वेन तत्संयोगस्याऽपि सत्वात्प्रभायाश्च रूपत्वेन किरणव्याप्यवृत्तित्वात् संयुक्तसमवायेन वृत्तिरिति तत्रापि संयोगस्यैव प्रयोजकतेति (ज्ञेयम्) । (तथा च व्याप्यवृत्तिरेव प्रतिबिम्बाऽप्रयोजिकेति न संयोगेन वृत्तिरिति भावः) । ननु 'गुणाद्वाऽऽलोकवत्'दिति सूत्रे तस्या द्रव्याधिकदेशवृत्तित्वाङ्गीकाराद्द्रव्यसंयोगस्य तत्राभावेन स्वरूपादेव व्याप्तेर्व्या

हरितोषिणी ।

ग्रहणः सत्वेनेत्यन्वयः । पुनः शङ्कते—न चेति । प्रयोजकमिति । †दर्पणरेखा तु संयोगसम्बन्धेन दर्पणेऽस्तीति न तस्याः प्रतिबिम्ब इति भावः । नानुपपत्तिरिति । मुखेनाविशायां ब्रह्मप्रतिबिम्बो भविष्यतीति भावः । खण्डयन्ति—संयुक्तस्यापीति । तथा प्रतीतेः प्रतिबिम्बप्रतीतेः । प्रभामण्डलं संयोगसम्बन्धेन सर्वावच्छेदेन दर्पणेऽस्ति, तस्य पुनस्तत्र प्रतिबिम्बोऽपि दृश्यत इति न किञ्चिदेतदित्यर्थः । पुनः शङ्कते—न चेति । अस्तु नाम सर्वावच्छेदेन संयोगः, किञ्चिदवच्छेदेन विद्यमानस्य प्रभामण्डलस्य दर्पणे प्रतिबिम्बो नास्तीत्यर्थः । उत्तरयन्ति—बिसिनीति । बिसिनी कमलिनी तत्सूत्रमात्रान्तरिता या

गङ्गाधरभट्टी ।

बिम्बसिद्धिः । प्रभामण्डलस्यैवेति । एवं तमस्यपि तमस एव प्रतिबिम्बः । श्यामरूपत्वेन तमसो ग्रहणात् । प्रतिबिम्बादिति । एवं च व्याप्यवृत्तित्वमेवाप्रतिबिम्बप्रयोज-

---

टिप्पणी ।

* तस्या गुणत्वपक्षेऽपीति सुवर्णसूत्रम् । 'गुणाद्वे'त्यस्याणुभाष्ये स्पर्शानुपलम्भात्प्रभा गुण इत्युक्तम् । सूत्रे प्रभासामान्यवाचकालोकपदे सत्यपि, मणिप्रवेककान्तिर्बहुदेशं व्याप्नोति तद्वदिति प्रभाविशेषोपादानमनायासेन वादिधीसमाधये । यतस्तत्र स्पर्शानुपलम्भो निर्विवादः । भानुप्रभादौ स्पर्शोपलम्भस्तु तत्स्थतैजसावयवविषयः ॥

† दर्पणरेखा तु संयोगसम्बन्धेनेति तोषिणी । खातरूपाया रेखाया आकाशे, मष्यादिजन्याया धराम्भसोरन्तर्भावेन च द्रव्यत्वमेवेति संयोगो नानुपपन्नः ॥

---

१ द्रव्यद्वारा तस्या अपि संयोगेनैव वृत्तित्वमिति न तस्याः प्रतिबिम्बप्रयोजकत्वमिति शेषः ।
२ एतचिह्नान्तर्गतः पाठः ग. ह. पु. नास्ति । ३ रूपादेर्व्याप्यवृत्तित्व ।

प्रतिबिम्बात् । किञ्च 'द्वा सुपर्णा सयुजा', 'गुहां प्रविष्टौ परमे परार्द्धे' 'गुहां प्रविष्टावात्मानौ हि तद्दर्शना'दित्यादिश्रुतिन्यायनिर्णीता जीवपरमात्मनोरेकत्र स्थितिर्बिम्बप्रतिबिम्बपक्षे न संगच्छते । तयोर्लोके त-

सुवर्णसूत्रम् ।

प्यवृत्तित्वमपि नाऽप्रतिबिम्बे[1] प्रयोजकं, किन्तु तद्वृत्तित्वे[2] तस्स्वच्छत्वाच्छादकत्वमेव[3] तथेति, प्रकृते तदभावान्न दोप इत्याशङ्कायां दूषणान्तरमाहुः—किञ्च द्वा इत्यादि । स्थितिरिति । इतरेतरविलक्षणा स्थितिः । तथा चाऽऽम्नायां श्रुतौ द्वित्वादेरेकनूण्णीकृत्वाऽपरक्रिययोः[4] कथनाद्द्वितीयस्यां छायातपत्वोक्तावपि व्यासेनात्मानाविति निर्णीतत्वाद् द्वयोः प्रवेशस्योक्तत्वाच्च तेषां विरोधो दुर्वार इत्यर्थः । यत्तु नीरूपस्य प्रतिबिम्बे *'रूपं रूपं प्रतिरूपो बभूवे'ति श्रुतिरेव मानमिति कश्चिन । तन्न । ब्राह्मणोपक्रमे सर्वात्मकत्वप्रतिपादनोत्तरं 'पुरश्चक्र' इति मन्त्रेण पुःकरणप्रवेशयोरुक्तत्वात्तेन प्राप्तस्य भेदस्य निवारणार्थमेतन्मन्त्रस्य प्रवृत्तत्वेन

हरितोषिणी ।

अङ्गुली तत्र विद्यमाना या प्रभा तस्याः संयोगः किञ्चिदवच्छेदेन दर्पणेऽस्तीति तस्याः प्रतिबिम्बो दृश्यत इत्यर्थः । दर्पणे अङ्गुल्याः संयोगे जाते अङ्गुल्याः संयोग एव तत्र भविष्यति, न तु अङ्गुलीस्थप्रभासंयोग इत्येतदर्थं बिसिनीसूत्रमात्रान्तरितेत्युक्तम् । दर्पणे प्रभासंयोगस्याव्याप्यवृत्तित्वसूचनार्थमङ्गुलीग्रहणम् । रात्रावन्धकारे प्रतिबिम्बो न दृश्यते इति किरणसंयोगसूचनार्थमङ्गुलीस्थप्रभाग्रहणम् । अस्तु सर्वोप्ययं युक्तिप्रचार इति स्वारस्याभावाद्दूषणान्तरमाहुः—किञ्चेति । 'द्वा सुपर्णा' इति 'गुहां प्रविष्टावि'ति च श्रुतिवाक्यद्वयमुक्त्वा व्याससूत्ररूपां स्मृतिमाहुः—गुहां प्रविष्टावात्मानौ हीति । तयोरिति ।

गङ्गाधरभट्टी ।

कम । संयोगस्य प्रभायाश्चाव्याप्यवृत्तित्वात्प्रतिबिम्बः । प्रभाया गुणत्वेन तत्रापि द्रव्यसत्त्वे किरणसत्त्वेन तत्संयोगोप्यस्तीति संयोगस्यैव प्रयोजकत्वेपि न क्षतिः । 'ननु गुणाद्वा लोकव'दि'ति सूत्रे प्रभाया द्रव्याधिकदेशवृत्तित्वाङ्गीकाराद्द्रव्यसंयोगस्य तत्राभावाद्व्याप्यवृत्तित्वं नाप्रतिबिम्बे प्रयोजकम् । तद्वृत्तित्वे सति तत्स्वच्छत्वाच्छादकत्वमेव तथेति चेत्तत्राह— द्वा सुपर्णेति । स्थितिरिति । इतरेतरविलक्षणा । आम्नायां श्रुतौ द्वित्वादेरेकतूष्णी-

टिप्पणी ।

* 'रूपं रूपं प्रतिरूप' इति सुवर्णसूत्रे,—'इदं वै दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचद्रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय इन्द्रो मायाभिः

१ ग. पु. नाप्रतिबिम्बप्रयोजकम् । २ घ. पु. तद्व्याप्यवृत्तित्वे सति । ३ ग. पु. स्वच्छत्वापादकत्वमिति पाठः । ४ घ. पु. परत्वक्रिययोरिति पाठः ।

सुवर्णसूत्रम्।

'अयं वै हरय' इत्यादिना विवृतत्वेन चात्र, रूपं रूपयित्वा प्रतिरूपः प्रतिपुत्तलन्यायेन मूलरूपो बभूवेत्यर्थस्य विवक्षिततया तस्याः प्रतिबिम्बबोधकत्वे मानाभावात्।

गङ्गाधरभट्टी।

कत्वापरक्रिये उक्ते। द्वितीयस्यां छायातपत्वोक्तावपि व्यासेनात्मानाविति निर्णीतम्। अत्र परेषां षण्मतानि—अनादिरनिर्वाच्या मूलभूतप्रकृतिर्माया चिन्मात्रसम्बन्धिनी तस्यां चित्प्रतिबिम्ब ईशः, तस्या एव परिच्छिन्नानन्तप्रदेशेषु आवरणविक्षेपशक्तिमत्स्वविद्याख्येषु चित्प्रतिबिम्बो जीव इत्येकम्। सैव प्रकृतिः शुद्धसत्वप्रधाना माया, तत्र चित्प्रतिबिम्ब ईशः, मलिनसत्त्वाविद्यायां चित्प्रतिबिम्बो जीव इति द्वितीयम्। ननु सत्वस्याक्रियत्वमिति चेद्विक्षेपशक्तौ मायाया आवरणशक्तावविद्यायाः प्रतिबिम्बाभासो जीव इति तृतीयम्। त्रिष्वपि ईश एव, तस्यैव रूपान्तरं वा परमात्मेति। तत्र दर्पणरूपाविद्यासम्बन्धाभावः स्फुटः। एवमविद्यायां चित्प्रतिबिम्ब ईशः, अन्तःकरणे जीव इति तुरीयेपि ईशस्य सर्वज्ञत्वादिनिर्वाहाय तूलाविद्या तत्र नेत्यभ्युपेयम्। घटाकाशजलाकाशमहाकाशमेघाकाशवत्कूटस्थजीवब्रह्मेशा इति चिद्वातुर्विध्यमते ब्रह्माश्रितमायातमसि स्थितासु सर्वप्राणिनां धीवासनासु प्रतिबिम्ब ईशः, स्थूलसूक्ष्मदेहावच्छिन्नचैतन्यस्थिते मायाकल्पितेऽन्तःकरणे प्रतिबिम्बो जीव इति पञ्चमम्। अत्रापीशपरमात्मनोरैक्यान् तथा। अन्तःकरणावच्छिन्ना चिदीशो बिम्बभूतः,अज्ञाने तत्प्रतिबिम्बो जीवः,अज्ञानपरिणामोन्तःकरणं जीवस्य विशेषाभिव्यक्तिस्थानमिति षष्ठम्। अत्रापि तथेति दिक्। यच्चीरूपस्य प्रतिबिम्बे 'रूपं रूपं प्रतिरूपो बभूवे'ति श्रुतिरेव मानम्, तन्न; उपक्रमे सर्वात्मकप्रतिपादनात् तन्मध्ये 'वै हरय'

टिप्पणी।

पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासन'मिति संपूर्णा श्रुतिः। 'इयं पृथिवी सर्वेषां भूताना'मित्यारभ्य 'ब्रह्म सर्वानुभूरित्यनुशासन'मित्यन्तं बृहदारण्यकस्थं पञ्चमब्राह्मणम्। अत्रोपक्रमे 'इयं पृथिवी'ति श्रुतौ 'योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्व'मिति ब्रह्मणः सर्वात्मकत्वमुक्तम्। उपसंहारे च 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभू'रित्यत्र 'तदेतद् ब्रह्मे'ति जडस्य 'अयमात्मा ब्रह्मे'ति जीवानां च ब्रह्मत्वबोधनेन ब्रह्मणः सर्वरूपता प्रतिपादिता। इत्थमुपक्रमोपसंहाराभ्यामिह ब्रह्मप्रकरणावगमान्न मध्ये 'रूपं रूप'मित्यस्य जीवप्रतिबिम्बत्वबोधकता युक्तेति तत्त्वम्॥

१ घ. पु. विवक्षितत्वादिति बोध्यम्।

थाऽदर्शनात् । अपरं च, अविद्यायां ब्रह्मप्रतिबिम्बो जीव इति, मोक्ष-

सुवर्णसूत्रम् ।

ना'प्येकधा बहुधे'ति श्रुतिबलात् प्रतिबिम्बो वक्तुं युक्तः । तत्र चन्द्रदृष्टान्तेनांशप्रवेशद्वारा तस्य विवक्षितत्वेन रूपवत्तायामेव तस्याऽभिप्रेतत्वात् । त्वया तदनङ्गीकारात् । तस्या ब्रह्मप्रकरणस्थत्वेन ब्रह्मनानाप्रतीतावेव दृष्टान्तपर्यवसानाच्च । एवं '*जीवेशावाभासेन करोती'त्यत्रापि ज्ञेयम् । तस्य कार्यजीवेश्वरपरत्वाद्वा । जीवो जीवं विहाय मां, 'जीवो जीवेन निर्मुक्त' इत्येकादशे कार्यजीवस्याऽपि स्वीकारात् । हिरण्यगर्भादीनां कार्येश्वरत्वाच्च । अतस्ता अप्यादाय न भवदभिमतजीवस्वरूपस्य सिद्धिरित्यर्थः नन्वविद्याया अघटितघटनापटीयःस्वभावत्वाद्बिम्बप्रतिबिम्बरूपयोः परमात्मजीवयोरेकत्र स्थितिरपि नाऽनुपपन्नेति शङ्कायां दूषणद्वयमन्यदाहुः—अपरं चेत्यादि । जीवस्येत्यादि च । तथा

हरितोषिणी ।

एकत्र स्थितयोरित्यर्थः । अदर्शनादिति । बिम्बप्रतिबिम्बभावादर्शनादित्यर्थः । ननु अघटितघटनापटीयस्या लौकिकविलक्षणया मायया एकत्रस्थितयोरपि बिम्बप्रतिबिम्बभावो भविष्यतीत्यत आहुः—अपरं चेति । बिम्बप्रतिबिम्बभावपक्षे महती हानिरित्याहुः—अ-

गङ्गाधरभट्टी ।

इति तद्विवरणाद्रूपं रूपमिति णमुलन्तं, रूपयित्वा रूपयित्वा प्रतिरूपः, प्रतिपुत्तलकन्यायेन मूलरूपो बभूवेत्यर्थात् । ब्रह्मबिन्दूपनिषदि 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रव'दित्यस्य तु भूते भूते प्रतिदेहमंशेन व्यवस्थितः । यथा जले चन्द्रः अंशुरूपेणांशेन स्थितः, एकधा चन्द्ररूपेण, बहुधानेकसंस्थापन्नादिविशिष्टरूपेण च दृश्यते, तथात्मा एकधा जीवरूपेण, बहुधा इन्द्रियादिवैशिष्ट्येनेत्यर्थः । अत एव दशधेति पाठान्तरम् । उभयोरपि श्रुत्योर्नीरूपस्य प्रतिबिम्ब इति न शब्दगोचरोर्थः, प्रत्युत रूपिचन्द्रादिपदाद् रूपवत एवेति त्वन्मतेपि स्यात् । 'जीवेशावाभासेनकरोती'ति श्रुतावपि पूर्वं 'वटबीजवदेषा माया स्वाव्यतिरिक्तानि परिपूर्णक्षेत्राणि दर्शयित्वे-'

---

टिप्पणी ।

* 'जीवेशावाभासेन करोती'ति सुवर्णसूत्रम् । इयं श्रुतिर्नृसिंहोत्तरतापनीयनवमखण्डस्था । तत्र प्रारम्भे 'देवा ह वै प्रजापतिमब्रुवन्निममेव नो भगवन्! ओङ्कारमात्मानमुपदिशे'ति देवैः पृष्टे 'तथेत्युपद्रष्टानुमन्तैष आत्मा सिंह' इत्योङ्कारवाच्यं ब्रह्मोपदिश्योपसंहारे 'तस्मादात्मन एव त्रैविध्यं सर्वत्र योनित्वमपी'ति सर्वयोनिभूतं ब्रह्मैवोपदिष्टमिति ब्रह्मनानाप्रतीतावेवास्याः श्रुतेस्तात्पर्यम्, न स्वाभासत्वबोधने प्रतिबिम्बत्वबोधने वा ॥

---

१ ष. ह. पु. तामप्यादाय ।

श्वाविद्यानाश इति वदतस्तव मते जीवस्वरूपनाश एव मोक्ष इति संपद्यते । तथा च 'आत्महानमपुरुषार्थं' इति मोक्षस्यापुरुषार्थत्वमापद्येत । जीवस्यालीकत्वमपि स्यात् । तथा सति कोऽपि पारलौकिकप्रयत्नं न कुर्यात् । तथा हि–मुमुक्षुर्हि मोक्षस्वरूपं, बद्धत्वेन स्वस्वरूपं च ज्ञात्वा तत्साधने यतिष्यते । तथा चोक्तोभयस्वरूपज्ञाने सर्वं मिथ्येति ज्ञात्वा,

सुवर्णसूत्रम् ।

याऽघटितघटनापटुत्वेपि मोक्षजीवस्वरूपयोः साधुत्वसत्त्वाऽऽपादनसामर्थ्यस्य कल्पनाविरुद्धत्वेनाऽनुद्धार्यत्वात्तादृशस्वभावाङ्गीकारेऽपि न भवदभीष्टसिद्धिरित्यर्थः । एवं तन्मतं दूषयित्वा तस्याऽऽसुरत्वबोधनाय पूर्वोक्तदूषणाभ्यामापद्यमानं दूषणान्तरं वदन्ति व्युत्पादयन्ति च–तथा सतीत्यादि । तथा हीत्यारभ्योच्छिद्येतेत्यन्तम् । ननु कर्मफलदोषदर्शनात्प्रवृत्तिरिति चेन् तत्राहुः तूष्णीमित्यादि । तथा च संसारहेतुत्वेनैहिकयाः, स्वरूपहानिहेतुत्वेनाऽन्यस्या इत्येवं द्वयोरपि फलदोषं पश्यन्न किञ्चिन् कुर्यादिति सर्वप्रवृत्तिप्रति-

हरितोषिणी ।

विद्यायामित्यादिना । निबन्धेऽप्युक्तं—'जीवहानिस्तदा मुक्तिरि'ति । तथा चेति । जीवस्वरूपनाशस्यैव मोक्षत्वे चेत्यर्थः । अथ सर्वमविद्याया एव जालं मिथ्येति स्वीकर्तुर्मम मते मोक्षस्यापुरुषार्थत्वमस्तु, जीवस्यालीकत्वमप्यस्त्वित्यत आहुः तथा सतीति । जीवस्यालीकत्वे सतीत्यर्थः । कुतो न कुर्यादित्यतो विशदयन्ति–तथा हीति । तत्साधन इति । मोक्षसाधन इत्यर्थः । तथा चेति । भवदुक्तरीत्या चेत्यर्थः । उक्तोभयेति । जीवस्वरूपनाशो मोक्षः, जीवस्तु अलीक इत्युभयेत्यर्थः । एतादृशोभयस्वरूपज्ञाने किं बाधकमत आहुः–सर्वमिति । कुतोपि न निवर्ततैवेति । असन्मार्गान्निवृत्तिः केषामपि न

गङ्गाधरभट्टी ।

त्युक्तत्वात् करोतिर्दर्शनकरणार्थः । मायाया अपि भगवदभिन्नशक्तित्वेन नित्यत्वाद्वटबीजदृष्टान्तस्यापि सत्यत्व एव संगतिः । मिथ्यात्वप्रदर्शकत्वे तु इन्द्रजालादिकमेव दृष्टान्तत्वेन स्यात् । यद्वा 'जीवो जीवं विहाय मां', 'जीवो जीवेन निर्मुक्त' इत्यादौ श्रीभागवते कार्यजीवस्य हिरण्यगर्भादेः कार्येश्वरस्य स्वीकारान्न दोषः । इदं च निबन्धावरणभङ्गसृष्टिवादादौ विस्तृतम् । नन्वविद्याया अघटितघटनापटीयस्याः स्वीकाराद्बिम्बप्रतिबिम्बयोरेकत्र स्थितिरत आहुः—अपरं चेति । तूष्णीं वा तिष्ठेदिति । ननु 'न हि कश्चित्क्षणमपी'तिवाक्यात्प्रवृत्तिस्तत्राहुः—निषिद्धेति । प्रच्छन्नेति । ननु 'नानुध्यायाद्बहून् शब्दा'निति श्रुतेः वेदस्य तथात्वं ब्रवीमीति चेन्, न अनया श्रुत्या प्रामाण्यं परित्यक्तम् । 'यत्र वेदा अवेदा' इत्यपि बुधदहनवज्ज्ञानिनो वेदेन न प्रयोजनमित्येवाह, नान्यत् ।

प्रवृत्तिश्चाविद्याध्यासकृतैवैहिकी पारलौकिक्यपीति ज्ञात्वा च, परमैहिक्येव, न तु पारलौकिकी, स्वरूपहानिहेतुत्वादिति सर्वाप्रवृत्तौ निवृत्तिमार्ग एवोच्छियेत । तूष्णीं वा तिष्ठेत् सर्वोऽपि । निषिद्धविहितयोश्चाविशेषात् कुतोऽपि न निवर्ततैवेति सन्मार्गमात्रोच्छेदनायेदृशं मतं प्रवर्तयन्, व्यवहारमात्रे वेदमपि प्रमाणत्वेनोररीकुर्वन् प्रच्छन्नबौद्धोऽसि । वेदमपि स्वाज्ञानकल्पितं ब्रुवन्नतिधृष्टोऽसि । नन्वखिलप्रपञ्चस्यैव

सुवर्णसूत्रम् ।

रोध इत्यर्थः । ननु 'न हि कश्चि'दिति वाक्याद्गुणैरेव प्रवृत्तिरिति चेत्तत्राहुः—निषिद्धेत्यादि । तथा च तस्मिन् संदर्भे यज्ञार्थकर्मव्यतिरिक्तकर्मप्रवृत्तेरेव तद्गुणजन्यत्वबोधनात्तत्तदननुसन्धायैवं दुष्कल्पनां कल्पयतस्तवाऽऽसुरत्वमेव निश्चीयत इत्यर्थः । ननु वेदस्य व्यवहारमात्रे प्रामाण्यं न मदाग्रहसिद्धं, किन्तु 'नानुध्यायाद्बहूञ्छब्दान्' 'जिज्ञासायां संप्रवृत्तो नाद्रियेत्कर्मचोदना'मित्यादि श्रुतिस्मृतिसिद्धमतो न मम दोष इत्यत आहुः—वेदमपीत्यादि । तथा च यदि प्रमाणसिद्धमेव सर्वं ब्रूषे तर्ह्यत्रापि प्रमाणं वद । यदि न वदसि, तदा तत्तात्पर्याऽज्ञानेन पूर्वोक्तमपि धार्ष्ट्यादेव, वेदस्य परोक्षवादत्वेन व्यवहारे तात्पर्याभावादित्यर्थः ॥ एवमुपालम्भे स्वस्य वेदतात्पर्यज्ञत्वाभिमानेनाह—नन्वित्यादि ।

हरितोषिणी ।

स्यादित्यर्थः । व्यवहारमात्रे इति । मौञ्जीबन्धनादिव्यवहारे इत्यर्थः । किञ्चिदंशे वेदस्य प्रमाणत्वस्वीकारादाहुः—प्रच्छन्नेति । 'मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते' इति पद्मपुराणवाक्यात् । अज्ञानेन कल्पितं सर्वमिति तेषां मतं, तत्खण्डयन्ति—वेदमपीति । शङ्कते—नन्विति । समाधानमाहुः—बाढमिति । वेदस्य स्वाज्ञानकल्पितत्वखण्डनं युक्तिं विशदयन्ति—तथा हीत्यादिना । फलादानायेति । फलानां ग्रहणार्थमित्यर्थः । कश्चिदिति । न हीति । पूर्वेणान्वयः । दार्ष्टान्तिके व्युत्पादयन्ति—एवमिति । तथात्वम् कल्पितत्वम । तदुक्तेति । वेदोक्तेत्यर्थः । शङ्कते—नन्विति । उत्तरयन्तिसत्यमिति । दृष्टचरीति । तदा स्वप्नावस्थायां सत्यमेवेति विदुषः प्रवृत्तिर्दृष्टचरीत्यर्थः । न त्विति । स्वप्नं पश्यामि न सत्यमेवं स्वप्न एव जानतः पुरुषस्य प्रवृत्तिर्न तु दृष्टचरीत्यर्थः । एवं वेदं कल्पितत्वं जानतः पुरुषस्य तदुक्तकर्मणि प्रवृत्तिर्न भविष्यतीति भावः । पुनः शङ्कते—नन्विति । विशेषदर्शनस्येति । दूरत उच्चैस्त्वविशिष्टः कश्चित् पुरुषाकारो दृष्टः, तत्र स्थाणुत्वभ्रमो जातस्तदनन्तरं किञ्चित्समीपे आगते पुरुषत्वव्याप्यहस्तपादादिमानयमित्याकारकं विशेषदर्शनं जायते, न तु स्थाणुत्वव्याप्यवक्रकोटरादिमानयमित्याकार-

१ वेति मु. पु. पाठः ।

तथात्वात्तन्मध्यपातित्वेन वेदेऽपि तथात्वं ब्रवीमि; यादं ब्रवीषि; निरङ्कुशत्वात् ते तुण्डस्य, न तु युक्तियुक्तं ब्रवीषि। तथाहि—न हि प्रतिबिम्बिताम्रतरुकदम्बफलादानाय प्रसारितबाहुः प्रतिबिम्बितत्वं जानन् दृष्टचरः कश्चित्। एवं वेदे तथात्वं जानन्, तदुक्तस्वर्गाऽपवर्गादिफलकयागसंन्यासादिषु बह्वायाससाध्येषु सर्वबन्धुपरित्यागेन सर्वसुखवैमुख्येन च को वा प्रवर्तेत। ननु स्वप्ने स्वाप्निकफलार्थं प्रवृत्तिर्दृष्टचरी। सत्यम् दृष्टचरी? तदा तत् सत्यमेवेति विदुषो, न तु स्वप्नमिमं पश्यामि, न पारमार्थिकमिति स्वप्न एव विदुष इति गृहाण। ननु विशेषदर्शनस्य स्वसजातीयस्यैव भ्रमस्य निवर्तकत्वात् प्रकृते च प्रापञ्चिकभ्रमस्यापरोक्षरूपत्वाच्छाब्दं ज्ञानं न तन्निवर्तनसमर्थमिति प्रवृत्तिरुपपद्यत इति चेद्,

सुवर्णसूत्रम्।

प्रपञ्चस्याज्ञानकल्पितत्वं ब्रह्माभेदबोधकश्रुत्यभिप्रायसिद्धम्। प्रपञ्चः स्वनामरूपभेदेन द्विधेति नामप्रपञ्चरूपे वेदे तथात्वं तात्पर्यज्ञानादेव ब्रवीमीत्यर्थः[1]। तदपि दूषयन्ति—बाढमित्यादि। तथा च श्रुतार्थापत्तेः शब्दत्वाऽभावेन युक्तित्वायुक्त्यन्तरविरोधे तया तथा कल्पनं न शक्यमित्यर्थः। ननु मूलाभावे युक्त्यन्तरं निर्बलमिति शङ्कायां तद्बलं व्युत्पादयन्ति—तथा हीत्यादि। तथा च यस्मान् सर्वः प्रवर्तते तस्मान्न वेदे तथात्वज्ञानमतो यथा तस्यामर्थापत्तावेका श्रुतिर्मूलत्वेन त्वयाभिसन्धीयते, तथाऽस्यां दृष्टार्थापत्तौ सर्वा श्रुतिर्मूलमितीयं युक्तिस्ततः प्रबलेत्यर्थः। एतस्या युक्तेर्निर्मूलत्वाय प्रकारान्तरेण प्रवृत्तिमुपपादयति—ननु स्वप्नेत्यादि। तदुपगम्य दूषयन्ति—सत्यमित्यादि। तथा चात्र वेदस्याऽज्ञानकल्पितत्वेन मिथ्यात्वं त्वया प्रतिपाद्यत इति तद्विपरीतज्ञानान्न त्वदुक्तरीत्या प्रवृत्त्यु-

हरितोषिणी।

कम्। ततो नायं स्थाणुः, किन्तु पुरुष इत्याकारकं प्रमात्मकं ज्ञानं जायते, तत्र भ्रमोऽपि प्रत्यक्षात्मकः, विशेषदर्शनमपि प्रत्यक्षात्मकमिति विशेषदर्शनस्य स्वसजातीयभ्रमनिवर्तकत्वमुपपन्नम्। प्रकृते प्रापञ्चिकभ्रमः, अहममुक इत्याकारकोऽपरोक्षः प्रत्यक्षरूपः, तस्य वेदजन्यं शाब्दं विशेषदर्शनं न निवर्तकम्। प्रत्यक्षशाब्दयोर्वैजात्यादित्यखण्डार्थः। समाधा-

गङ्गाधरभट्टी।

बाढमिति। अर्थापत्त्या साधितस्याप्रामाण्यस्य दुर्बलत्वं प्रत्यक्षशब्दापेक्षयेति भावः। दृष्टचरीति। 'भूतपूर्वे चरट्'। टिस्वान्ङीप्। टाबन्तपाठस्तु लेखकप्रमादात्। यद्वा दृष्टं दर्शनं चरो वि-

---

१ ग. पु. प्रपञ्चश्च नामरूपभेदेनेति पाठः। २ बंग मु. पु. पाठः।

नैतत् सारम्[1] । प्रतिबिम्बत्वेनानुमिताऽसत्त्वानामपि तरूणां चाक्षुषप्रतीतिवत्, शाब्दज्ञानानन्तरमपि प्रपञ्चप्रतीतिरास्तां नाम, न तु जातु प्रवृत्तिः । अन्यथा तत्फलार्थापि प्रवृत्तिः स्यात् । प्राग् जातस्य च यागब्रह्मज्ञानयोः स्वर्गमुक्तिफलकत्वज्ञानस्य पश्चाज्जातेन तन्मिथ्यात्वज्ञानेन बाधे बाधकाभावः, उभयोरपि शाब्दत्वात् । ननु द्वैतप्रतीतिरेवानर्थ-

## सुवर्णसूत्रम् ।

पपत्तिरित्यर्थः । पुनरपि प्रवृत्तिमुपपादयति—नन्वित्यादि । शाब्दमिति । प्रपञ्चमिथ्यात्वबोधकशब्दजन्यम् । तद्दूषयन्ति—नेत्यादि । तथा च तादृशविशेषज्ञानस्य भ्रमाऽनिवर्तकत्वात्तस्य फलार्थप्रवृत्त्युपपादकत्वं दुर्घटमेवेत्यर्थः । ननु भ्रमाऽनिवृत्तौ कदाचित्प्रवृत्तिरपि संभाव्यत एवेत्यत आहुः—प्रागित्यादि । इदं दूषणं तुष्यतु दुर्जनन्यायेन तदुक्तमुपगम्य दत्तं ज्ञेयम् । विशेषदर्शने विजातीयभ्रमनिवर्तकत्वस्याऽपि दर्शनाद्, वल्मीकादौ जातस्य घट इति चाक्षुषभ्रमस्य रात्रौ वल्मीकस्पर्शनेन निवृत्तेः, क्षौमादौ जातस्य कार्पासमिति स्पार्शनभ्रमस्य दिवा तच्चाक्षुषेण तदभिज्ञवाक्येन च निवृत्तेः सर्वलोकप्रसिद्धत्वात्, मणि-

## हरितोषिणी ।

नमाहुः—नैतदिति । प्रतिबिम्बत्वेनेति । धूमभ्रान्त्या धूलीपटलेन यथा वह्न्यनुमितिः, एवं प्रतिबिम्बत्वेन जले वृक्षासत्त्वानुमितिरित्यर्थः । शाब्दज्ञानानन्तरमिति । उपनिषदर्थज्ञानानन्तरमित्यर्थः । अन्यथा एवं प्रपञ्चमिथ्यात्वज्ञानानन्तरं प्रवृत्तिस्वीकारे । तत्फलार्थेति । प्रतिबिम्बितवृक्षफलार्थापीत्यर्थः । ननु प्रतिबिम्बितवृक्षाणां तत्फलानामपि प्रतीतिसमय एवासत्त्वबोधान्न प्रवृत्तिः, प्रकृते तु तथाऽभावादित्यत आहुः—प्राग् जातस्येति । पूर्वमध्ययनकाले जातस्येत्यर्थः । पश्चाज्जातेनेति । मनननिदिध्यासादिना जातेन तत्त्वज्ञानेनेत्यर्थः । तन्मिथ्यात्वज्ञानेनेति । वेदोक्तयागादिफलानामित्यर्थः । विशेषदर्शनस्य स्वसजातीयभ्रमनिवर्तकत्वमिति परोक्तनियमस्य स्वीकारादाहुः—उभयोरिति । वस्तुतस्तु तवाभिमतनियम एव नास्ति । मणिपरीक्षादौ चाक्षुषकाचत्वभ्रमे जाते पश्चात् स्पार्शनेन, पट्टाम्बरे स्पार्शनेन कार्पास इत्ययमिति भ्रमस्य चाक्षुषेण तज्ज्ञवचनेन च वल्मीकघटादौ चाक्षुषभ्रान्तेर्वल्मीकस्पार्शनेन च भ्रमनिवृत्तेर्दृष्टत्वादिति बोध्यम् । अत्र मिथ्यावादी प्रवृत्तिमुपपादयति—नन्विति । अनर्थरूपेति । बाधितार्थेपि प्रवृत्तिरित्यनर्थरूपेत्यर्थः ॥

## गङ्गाधरभट्टी ।

पयो यस्याः सा । दृष्टिगोचरेत्यर्थः । नैतदिति । विशेषदर्शने विजातीयभ्रमस्यापि निवृत्तेः, वल्मीकादौ जातस्य घट इति चाक्षुषस्य भ्रमस्य वल्मीकस्पार्शनेन निवृत्तेः, क्षौमादौ कार्पासमिति स्पार्शनभ्रमस्य दिवा अभिज्ञचाक्षुषेणापि निवृत्तेश्च । अभ्युपगम्याप्याहुः—प्रतिबिम्बत्वेनेत्यादि ।

---

१ क. पु. नैतत्सारमिति ।

रूपा, तन्निवृत्तिश्च अपरोक्षब्रह्मज्ञानं विना न भवतीति तदर्थं प्रवृत्तिरिति चेत्॥

(७) अत्र मिथ्यावादी प्रष्टव्यः,—तदनर्थस्यैतत्कार्यकारणभावावगतिस्तव कुत इति। श्रुतित इति यदि ब्रूयात् तदा स वक्तव्यः। 'निश्वसितमस्य वेदाः' 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै' 'वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुमः' 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद् वेदविदेव चाहम्' इत्यादिस्वस्मृतिविरुद्धं भवद्ज्ञानकल्पितत्वं स्वस्य लौकिकवाक्यावैशिष्ट्यापादकं कथं श्रुतिर्वक्तुमर्हतीति स्वयमेव विचारय। किञ्च, पूर्वं वेदानां पारमार्थिकसत्त्वं ज्ञात्वा तदौदासीन्येन वा तच्छ्रवणे प्रवृत्तस्त्वदुक्तरीत्या च श्रुतेस्तदुक्तसाधनानां च अज्ञानकल्पितत्वं श्रुत्वा

मायिकसिद्धान्तरीत्या न वैधप्रवृत्तिः संभवतीति।

सुवर्णसूत्रम्।

परीक्षायामपि तथा निश्चयायेति। एवं युक्तिविरोधेऽपि श्रुतार्थापत्त्यैव फलानुसन्धानेन पुनः प्रवृत्तिमुपपादयति—ननु द्वैतेत्यादि॥

(७) तद्दूषयन्ति—अत्रेत्यादि। नन्वर्हति नार्हति वेति वादान्तरम्, तथापि प्रवृत्तिस्तूपपन्नेत्यत आहुः—किञ्चेत्यादि। तथा च प्रवृत्त्यनुपपत्तिस्तदवस्थैवेत्यर्थः। पुनः प्रका-

हरितोषिणी।

(७) समाधानमाहुः—अत्रेति। तदनर्थस्येति। द्वैतप्रतीतेरनर्थरूपत्वम्, बाधितार्थप्रवृत्तिं प्रति द्वैतप्रतीतिः कारणमित्येतत्कार्यकारणभावावगतिरित्यर्थः। स्वस्मृतीति। स्वसम्बन्धिनी स्मृतीत्यर्थः। सम्बन्धश्च स्वप्रतिपाद्यार्थबोधकत्वम्। लौकिकेति। शुक्ताविदं रजतमिति लौकिकं यद्भ्रमबोधकं वाक्यं, तद्यथा अवैशिष्ट्यापादकं शुक्तौ रजतत्वस्य यत् अवैशिष्ट्यं असम्बन्धस्तस्यापादकं वैशिष्ट्येन बोधकम्, तदभाववति तत्प्रकारत्वबोधकमिति यावत्। तथा तादृशं भ्रमात्मकं वाक्यं कथं श्रुतिर्वक्तुमर्हतीत्यर्थः। यद्वा लौकिकवाक्याद्वेदवाक्ये वैशिष्ट्यमाधिक्यं सर्वप्रमाणमूर्द्धन्यत्वं तस्यापादकं बोधकं न, लौकिकत्वसंपादकमिति यावत्। एतादृशं वाक्यं कथमित्यर्थः। सत्कर्मणि लोकानां प्रवृत्तिरेव न भविष्यतीति दूषणान्तरमाहुः—किञ्चेति। तदौदासीन्येनेति। तदा पार-

गङ्गाधरभट्टी।

(७) अवधारणेन वेति। निश्चयेनेत्यर्थः। यत एवेति। अभेदबोधकश्रुतेः। पाद्मादाविति। आदिना वाराहः।

---

१ यदज्ञानेति क. पु. पाठः।

स्वाप्निकभोजनेन परमार्थतस्तृप्तिवदसत्तुल्यैर्गुरुतद्वाक्यैः कथं परमार्थसद्रूपं ब्रह्म फलिष्यतीति शङ्कया अवधारणेन वा न कश्चित् प्रवर्तेत । ननु यत एवावधारणं तत एव प्रवृत्तिरपीति चेत्, मैवम् । पूर्वं तथाऽवधारणेऽपि तादृशानामेव तदुक्तसाधनानामतादृशब्रह्मफलकत्वं श्रुत्वा उक्तदृष्टान्तन्यायेन बाधितार्थत्वं जानन्नेकतरबाधोऽप्यशक्यः, श्रुतित्वाविशेषादित्यपि जानंस्तदर्थे संदिहानस्तन्निर्णयार्थं प्रवृत्तो 'निःश्वसित'मिति 'यो ब्रह्माण'मिति 'नामरूपे व्याकरवाणी'ति 'ऐतदात्म्यमिदं सर्वं' 'तत्सत्य'मिति 'तदात्मानꣳस्वयमकुरुत' 'तत् सत्यमित्याचक्षते' 'कथमसतः सज्जायेते'ति, 'वेदो नारायणः' 'वेदैश्च सर्वैः' 'अहं सर्वस्य प्रभवः' 'तेने ब्रह्म हृदा' 'आनन्दमात्रकरपादमुखोदरादिः' 'जन्माद्यस्य यतः' 'आनन्दमयोऽभ्यासा'दित्यादिश्रुतिस्मृतिन्यायसहस्रैर्बाधितत्वावधारणात् त्वदुक्तरीत्या न विचारकस्य प्रवृत्तिः संभवति । संप्रति तु विचारकाणामप्यासुरसर्गोत्पन्नत्वेन भगवन्मायामोहितानां न बाधज्ञानं पूर्वोक्तमिति तथैव प्रवृत्तिः । अत एव 'ज्ञानिनामपि चेतांसि

सुवर्णसूत्रम् ।

रान्तरेणोपपादयति—ननु यत इत्यादि । यत इति । अभेदबोधकश्रुतेः । तदपि दूषयन्ति—मैवमित्यादि । उक्तदृष्टान्तन्यायेनेति । स्वाप्निकभोजनदृष्टान्तन्यायेन । बाधितत्वावधारणादिति । उक्तश्रुतिस्मृतिभिः प्रपञ्चद्वयस्यापि ब्रह्मकर्तृकत्वे 'आनन्दमात्रे'ति—स्मृत्या कर्तुः स्वभावादेव साकारत्वे चावधारिते प्रपञ्चद्वये जीवाज्ञानकल्पितत्वस्य बाधितत्वावधारणात् । नन्वाधुनिकविचारकप्रवृत्तिदर्शनान्नेदं युक्तमिति शङ्कायामाहुः—संप्रतीत्यादि । विचारकाणां मोहितत्वे मानमाहुः—अत एवेति । विचार-

हरितोषिणी ।

मार्थिकसत्त्वज्ञानानन्तरमुदासीनतयेत्यर्थः । अवधारणेन वेति । निश्चयेनेत्यर्थः । शङ्कते —नन्विति । यत एव वेदादेवेत्यर्थः । तथा च श्रवणेन ब्रह्मज्ञानं श्रवणे प्रवृत्तिः कर्तव्येत्युभयमपि वेदादेवेति भावः । समाधानमाहुः—मैवमिति । पूर्वमिति । वेदे बाधितार्थत्वज्ञानात्पूर्वमित्यर्थः । प्रवृत्त इति । तस्येति शेषः । तस्य पुरुषस्य न्यायसहस्रैर्बाधितत्वावधारणादित्यग्रिमेणान्वयः । बाधितत्वावधारणादिति । तव मते इति शेषः । तथा च भवदुक्तरीत्या विचारतः पुरुषस्य श्रवणादिषु प्रवृत्तिर्न संभवतीति भावः । स्वाप्निकभोजनदृष्टान्तन्यायेन । नन्विदमयुक्तम्, आधुनिकानां विचारकाणां प्रवृत्तिर्दृश्यते इति लोकदृष्ट्या प्रवृत्तिः संभवतीत्यत आहुः—संप्रतीति । मार्कण्डेयेनेति । विचारकाणामासुरत्वादेव मोहो जायत इति भावः । नन्विदं किमर्थं कर्तव्यं माययेत्यत आहुः—यत इति ।

देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छती'ति मार्कण्डेयेनोक्तम् । यतस्तथैव हरीच्छा । तदुक्तं पाद्मादौ—'द्वापरादौ युगे भूत्वा कलया मानुषादिषु । स्वागमैः कल्पितैस्त्वं च जनान् मद्विमुखान् कुरु । मां च गोपय येन स्यात् सृष्टिरेषोत्तरोत्तरे'त्यादि । फलं च तेषामन्धंतम एव । 'मामप्राप्यैवे'तिवचनादित्यलमतिप्रसङ्गेन ॥

(८) अपरं च लोके हि द्रष्टुरेव दर्पणादिदोषसम्बन्धात् प्रतिबिम्ब-

सुवर्णसूत्रम् ।

काणामासुरत्वादेव । हरीच्छायां मानमाहुः—तदुक्तमित्यादि । पाद्मादावित्यादि । आदि पदेनवाराहसंग्रहः ॥

(८) ननु जीवस्येश्वरप्रतिबिम्बरूपत्वात्तत्क्रियायाश्च लोके बिम्बाधीनत्वाल्लोके तत्क्रियेवात्र बिम्बेच्छयैव प्रवृत्तिरिति शङ्कायां पुनर्दूषणान्तरमाहुः—अपरञ्चेत्यादि । अत्रायमर्थः—प्रतिबिम्बवादिनां षण्मतानि । अनादिरनिर्वाच्या मूलप्रकृतिर्माया चिन्मात्रसम्बन्धिनी, तस्यां चित्प्रतिबिम्ब ईश्वरः । तस्या एव परिच्छिन्नानन्तप्रदेशेष्वावरणविक्षेपशक्तिमदविद्याभिधानेषु चित्प्रतिबिम्बो जीव इत्येकम् । त्रिगुणात्मिकाया मूलप्रकृतेः शुद्धसत्त्वप्रधाने मायाख्ये रूपे चित्प्रतिबिम्ब ईश्वरः । तस्या एव रजस्तमोऽभिभूतमलिनसत्त्वप्र-

हरितोषिणी ।

एतादृश्यां हरीच्छायां प्रमाणमाहुः—तदुक्तमिति । पाद्मादावित्यत्रादिपदेन वाराहपुराणेऽप्युक्तमिति बोध्यम् । द्वापरादाविति । द्वापरः आदौ यस्यासौ द्वापरादिः कलिस्तस्मिन् कलियुग इत्यर्थः । दूषणपञ्चके दूषणत्रयमुक्तम् ॥

(८) अवशिष्टं दूषणद्वयमाहुः—अपरञ्चेत्यादिना । तव मते माया भिन्ना अविद्या भिन्ना मायायां चित्प्रतिबिम्ब ईश्वरः, अविद्यायां चित्प्रतिबिम्बो जीवः । एवं रीत्या पक्षषट्कमस्ति । तत्र सर्वपक्षोपपादनं, तत्र दूषणं च सुवर्णसूत्रे श्रीपुरुषोत्तमैर्व्युत्पादितम् । मया तु ग्रन्थविस्तरभयान्नात्र प्रदर्शितम् । दोषसम्बन्धादिति । चाकचक्यतादिरूपदोषसम्ब-

गङ्गाधरभट्टी ।

(८) ननु जीवस्येश्वरप्रतिबिम्बस्य बिम्बभूतेश्वरेच्छयैव प्रवृत्तिर्लोक इष्यत आहुः—अपरञ्चेति । द्रष्टुरेवेत्यादि । 'द्रष्टा श्रोता मन्ता, य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति,

१ 'पूर्वं जीवस्वरूप'मित्यादि 'रूपत्वेन प्रतीते'रित्यन्तमेकं दूषणम् । 'किञ्च यत्र यद्वस्ती'त्यादि 'दर्पणे प्रतिबिम्बादि'त्यन्तं द्वितीयं दूषणम् । 'किञ्च द्वा सुपर्णे'त्यादि 'लोके तथाऽदर्शना'दित्यन्तं तृतीयं दूषणम् ।

प्रकारान्तरेण बिम्बप्रतिबिम्बभावखण्डनम् ।

दर्शनं दृश्यते । तथा च परमात्मन्यविद्यासम्बन्धानङ्गीकाराज्जीवद्द्रष्टृत्वं तस्य न स्यात् । तथा सति श्रुतिर्द्रष्टृत्वनियामकत्वबोधिका बाधितविषया स्यात् । एतदनुरोधेन द्रष्टृत्वाङ्गीकारे पूर्वोक्तन्यायेन अविद्यासम्बन्धित्वे जीवतुल्यता-

सुवर्णसूत्रम् ।

धानेऽविद्याख्ये रूपान्तरे चित्प्रतिबिम्बो जीव इत्यपरम् । विक्षेपशक्तिप्राधान्येन मायाशब्दितायां मूलप्रकृतावेव चित्प्रतिबिम्ब ईश्वरः । आवरणशक्तिप्राधान्येनाविद्याशब्दितायां तस्यामेव चित्प्रतिबिम्बो जीव इति तृतीयम् । एतेषु त्रिषु पक्षेषु ईश्वरस्तस्यैव रूपान्तरं वा परमात्मेति तत्र दर्पणरूपाऽविद्यासम्बन्धाभावात्स्फुट एव तूलाऽज्ञानरूपाऽविद्यासम्बन्धानङ्गीकारः । अविद्यायां चित्प्रतिबिम्ब ईश्वरः । अन्तःकरणे चित्प्रतिबिम्बो जीव इति तुरीयम् । अत्रापीश्वरस्य सर्वज्ञत्वादिनिर्वाहार्थं तूलाऽविद्यासम्बन्धानङ्गीकार(आवश्यकः)। एवं घटाकाशजलाकाशमहाकाशमेघाकाशवत् कूटस्थजीवब्रह्मेश्वरभेदेन चैतन्यचातुर्विध्यवादिनां मते ब्रह्माश्रितमायातमसि स्थितासु सर्वप्राणिनां धीवासनासु प्रतिबिम्बितं चैतन्यमीश्वरः । स्थूलसूक्ष्मदेहावच्छिन्नचैतन्यस्थिते मायाकल्पिते अन्तःकरणे प्रतिबिम्बितं चैतन्यं जीव इति पञ्चमम् । अत्रेश्वरः परमात्मा चैक एवेत्यत्रापि तथा । एवं जीवोपाधिनाऽन्तःकरणादिनाऽवच्छिन्नं चैतन्यमीश्वरो बिम्बभूतः । अज्ञाने तत्प्रतिबिम्बो जीवः तत्राप्यज्ञानपरिणामभूतमन्तःकरणं जीवस्य विशेषाभिव्यक्तिस्थानमिति षष्ठम् । अस्मिन् बिम्बेश्वरवादिमतेऽपि तथैवेति सर्वेषु पक्षेषु दोषतौल्यम् । तथा चाऽविद्यासम्बन्धाभावेन तद्दर्शनाभावे तत्प्रवर्तनेच्छाया अप्यभावान्न प्रवृत्त्युपपत्तिरित्यर्थः । एतेन संपद्यमानं दूषणान्तरमाहुः—तथा सतीत्यादि । द्रष्टृत्वनियामकत्वबोधिका श्रुतिस्तु 'अदृश्यं द्रष्टृ' 'क्षरात्मानावीशते देव एक' इत्यादिरूपा ज्ञेया । पूर्वोक्तन्यायेनाविद्यासम्बन्धित्व-

हरितोषिणी ।

न्धादित्यर्थः । दृश्यत इति । लोके इति । पूर्वेणान्वयः । द्रष्टुर्दर्पणसम्बन्धोऽस्ति, दार्ष्टान्तिके तु तव मते ब्रह्मणोऽविद्यासम्बन्धो नास्त्येवेति जीवद्द्रष्टृत्वं तस्य परमात्मनो न स्यादित्यर्थः । ननु मास्त्वित्यत आहुः—तथा सतीति । श्रुतिः 'नान्योऽतोऽस्ति द्रष्टे'ति श्रुतिः । अतः परमात्मनोऽन्यो द्रष्टा नास्तीत्यर्थः । पूर्वोक्तेति । पूर्वोक्तदर्पणन्यायेनेत्यर्थः । ननु प्रतिबिम्बद्रष्टुर्भ्रान्तत्वं यथा नास्ति, तथा अविद्यासम्बन्धेऽपि परमात्मनो

गङ्गाधरभट्टी ।

क्षरात्मानावीशते देव एक' इत्यादि । ननु प्रतिबिम्बं पश्यतो दर्पणादिदोषसम्बन्धेप्यज्ञत्वं

१ रोधात मु. पु. पाठः । २ नेम० मु. पु. पाठः ।

पत्तिरिति महद्व्याख्यानकौशलं प्रच्छन्ननास्तिकस्य। किश्चैवं 'गुहां प्रविष्टा'विति श्रुत्यर्थबाधः। जीवाज्ञानकल्पितत्वात् गुहायाः, परमात्मनस्तदर्शित्वेन सहप्रवेशानुपपत्तिः। जीवन्मुक्त्यनुपपत्तिश्च। तथाहि—अन्तःकरणे अविद्यायां वा त्वया प्रतिबिम्बो वाच्यः। अन्तःकरणपक्षे जीवन्मुक्तस्य तत्सत्त्वे संसारित्वमेव स्यात्। तदसत्त्वे परममुक्तिरेवेति क्व जीवन्मुक्तिः? अविद्यापक्षस्तु सुतरामसङ्गतः। तस्य अपरोक्षब्रह्मज्ञानवत्त्वेन अज्ञानस्य निवृत्त्या तत्प्रतिबिम्बरूपजीवरूपस्यापि निवृत्त-

सुवर्णसूत्रम्।

इति। अनुपदोक्तेन लौकिकद्रष्टृन्यायेन दर्पणस्थानीयाऽविद्यासम्बन्धित्वे। ननु प्रतिबिम्बं पश्यतो दर्पणादिदोषसंम्बन्धेऽप्यज्ञत्वं भ्रान्तत्वं च नोच्यत इत्येतादृशाविद्यासम्बन्धेऽपि न जीवतुल्यतापत्तिरित्यतो दूषणान्तरमाहुः—किश्चेत्यादि। तथा चाऽज्ञानकल्पितगुहादर्शित्वे शुक्तिरजतद्रष्टृवद्भ्रान्तत्वं, तदर्शित्वे चोक्तं दूषणमित्यर्थः। पूर्वं 'द्वा सुपर्णे'त्यादिना सहस्थित्यनुपपत्तिर्दूषणत्वेनोक्ता, इह तु सहप्रवेशानुपपत्तिरिति न पौनरुक्त्यम्। एवमेतेषु दूषणेषु नीरूपत्वप्रयुक्तः प्रतिबिम्बाऽसम्भवो, बिम्बत्वसंभवो, विभुत्वहानिर्बिम्बप्रतिबिम्बवैजात्यं, शुद्धब्रह्मणः स्वप्रतिष्ठतापरित्यागे द्वैतभावश्चेति दूषणानि प्रतिबिम्बेश्वरवादेऽपि समानीति सोऽप्यनेनैव दूषितो ज्ञेयः। एवं ब्रह्मस्वरूपविचारेण दूषयित्वा जीवावस्थाविचारेण दूषणान्तरमाहुः—जीवदित्यादि। तत्सत्त्वे संसारित्वमेवेति। शुद्धेऽप्यन्तःकरणे प्रतिबिम्बरूपताया जीवे तुल्यत्वात्कामसङ्कल्पाभावेन लिङ्गेन ममत्वाभावेऽप्यहन्तायाः सत्त्वादन्तःकरणसत्त्वे संसारित्वमेवेत्यर्थः। अविद्यापक्षस्याऽसङ्गतत्वं व्युत्पादयन्ति—तस्येत्यादि। तस्येति। जीवन्मुक्तस्य स्पन्दव्युत्पादनमनुवदन्ति—न चेत्यादि। सर्वमिति। जीवस्वरूपस्थितिदेहस्पन्दभिक्षाटनादि च। दूषयन्ति—ब्रह्मेत्यादि।

हरितोषिणी।

जीवतुल्यत्वं न स्वीक्रियत इत्यतो दूषणान्तरमाहुः—किश्चेति। गुहा तु जीवाज्ञानकल्पिता तदर्शित्वे भ्रान्तत्वं परमात्मनः स्यादित्यतो दर्शित्वपक्षे दूषणमाहुः—सहप्रवेशेति। जीवस्य ब्रह्मप्रतिबिम्बत्वे दूषणान्तरमाहुः—जीवन्मुक्तीति। अनुपपत्तिं विशदयन्ति—तथा हीत्यादिना। तत्सत्त्वे अन्तःकरणसत्त्वे। सुतरामित्युक्तम्, तदेव विशदयन्ति—तस्येति। जीवन्मुक्तस्येत्यर्थः। अज्ञानस्येति। जीवावस्थाकारणीभूताज्ञानस्येत्यर्थः।

गङ्गाधरभट्टी।

भ्रान्तत्वं च नोच्यत इत्यरुच्याहुः—किश्चेति। पूर्वं 'द्वा सुपर्णे'त्यादिना सह स्थित्यनुपपत्तिर्दूषणत्वेनोक्ता। इह तु सह प्रवेशानुपपत्तिरिति न पौनरुक्त्यम्। एतेन प्रतिबिम्बेश्वरवादोऽपि प्रत्युक्तः, नीरूपस्य प्रतिबिम्बासंभवात् विभुत्वहानेर्बिम्बप्रतिबिम्बवैजात्याच्च शुद्धब्रह्मणः

त्वाज्जीवन्मुक्तस्य देहः स्पन्दितुमप्यसमर्थः स्यात् । न च प्रारब्धमात्रशेषाऽविद्या तदाऽस्तीति सर्वमुपपद्यते इति वाच्यम् । ब्रह्मसाक्षात्कारैकनाश्यायास्तस्यास्तस्मिन् सति वक्तुमशक्यत्वात्, प्रतिबन्धकाभावात् । तेनानिवृत्तौ कदाप्यनिवृत्तिप्रसंगश्च । भोगैकनाश्यं तदिति चेत् । तर्ह्यविद्यातत्कार्यातिरिक्तं तदिति किं वक्तुमुद्यतोऽसि । न हि रज्जुज्ञानानन्तरं केनाप्यंशेन तस्मिन् सर्पज्ञानं, तत्कृतभयादिकं चानुवर्तते । अनुवर्तते कम्पादिरिति चेद्, अनुवर्ततां नाम पूर्वकारणजः स्वरूपसन्कम्पो, नतु तेनाऽन्यत् किञ्चित् कर्तुं शक्यम् । एवं प्रारब्धेनापि देहविद्यमानतैव संपादयितुं शक्या, न तु भोगादिरपि अध्यासाभावात् । सुषुप्तौ तथोपलम्भात् । अपरश्च, सर्पज्ञानजनितः कम्पो वेगाख्यसंस्कारवशा-

सुवर्णसूत्रम् ।

तेनानिवृत्तावित्यादि । जीवन्मुक्तत्वसंपादकं ज्ञानं यद्यदृढं, तदा अध्यासाऽनिवर्तकत्वान्न तां संपादयेत् । अतो दृढं तद्वाच्यम्; तेनापि चेदनिवृत्तिस्तदा तथेत्यर्थः । तदिति । प्रारब्धम् । दूषयन्ति—तर्हीत्यादि । तथा च भोगैकनाश्यत्वाङ्गीकारे तव सिद्धान्तभङ्ग इत्यर्थः । सिद्धान्तभङ्गनिरासायाविद्यातत्कार्यनिवृत्तावपि जीवन्मुक्तिसाधनायाऽविद्याकार्यकार्यानुवृत्तिमाह—अन्वित्यादि । तदुपगम्य दूषयन्ति—अनुवर्ततामित्यादि । तथा च भोगाद्यभावे प्रारब्धनाशाभावेन तादृशस्य परममुक्तिः कदापि न स्यादित्यर्थः । ननु मास्तु परममुक्तिः, तथापि जीवन्मुक्त्यनुपपत्तिरूपं दूषणन्तु निवृत्तमित्याशङ्कायामाहुः—अप-

हरितोषिणी ।

ज्ञानस्येत्यपि पाठः । जीवन्मुक्तिदशायां प्रारब्धनाशो नास्तीत्याशयेन शङ्कते—न चेति । समाधानमाहुः—ब्रह्मेति । तस्या इति । अविद्याया इत्यर्थः । अभावादिति शेषः । तस्मिन्निति । ब्रह्मसाक्षात्कारे सतीत्यर्थः । प्रतिबन्धकेति । अविद्यायां सत्यां प्रारब्धनाशो न जायत इति प्रारब्धनाशं प्रति अविद्या प्रतिबन्धिकेति तदभावादित्यर्थः । तेनेति । जीवन्मुक्तिसंपादकब्रह्मज्ञानेनेत्यर्थः । अनिवृत्ताविति । प्रारब्धनिवृत्त्यभाव इत्यर्थः । शङ्कते—भोगैकेति । तत् प्रारब्धम् । समाधानमाहुः—तर्हीति । तदिति । अविद्याकार्यप्रपञ्चातिरिक्तं, प्रारब्धमित्यर्थः । न हीति । अनुवर्तते इत्यनेनान्वयः । शङ्कते—अन्विति । समाधानमाहुः—अनुवर्ततामिति । तथोपलम्भादिति । भोगाभावोपलम्भादित्यर्थः । दूषणान्तरमाहुः—अपरश्चेति । संस्काराभावादिति । भोगजनकसं-

गङ्गाधरभट्टी ।

प्रतिबिम्बस्वीकारे द्वैतभावाच्च । स्यादिति । ममत्वाभावेऽप्यहन्तायाः सत्त्वादिति भावः । नाश्यं तदिति । प्रारब्धम । ननु मास्तु परममुक्तिस्तथापि जीवन्मुक्तिस्तु सिद्ध्येन्न आहुः—अप-

दनुवर्तते । प्रकृते चाज्ञानकार्ये प्रारब्धे संस्काराऽभावात्, ज्ञाननाश्यतावश्यंभावाच्च, ज्ञाने सति कथं तदनुवृत्तिर्भवेत् । प्रवचनानुपपत्तिश्च । जीवन्मुक्तिनिरूपकश्रुतिस्मृतिपुराणविरोधात् सा नास्तीति न वक्तुं शक्यम् । तस्मात्प्रतिबिम्बो जीव इति पक्षोऽसङ्गतः ॥

सुवर्णसूत्रम् ।

रथ्येत्यादि । प्रारब्धस्यादृष्टरूपत्वे, *कर्मरूपत्वेऽपूर्वरूपत्वे वा द्रव्यत्वाभावेन वेगाख्यसंस्कारस्य वक्तुमशक्यत्वात् तस्य द्रव्यधर्मत्वानङ्गीकारेऽप्यज्ञानकार्यत्वेन ज्ञाननाश्यत्वावश्यंभावाच्चेत्यर्थः । ननु रिक्तीकृतघृतघटस्थघृतशेषवदनुवृत्तिरिति चेत्तत्राहुः—प्रवचनेत्यादि । प्रवचनमध्यापनम् । तथा चैवमङ्गीकारेऽपि तेन शेषेण कार्यान्तराऽभाववदध्योपदेशाऽऽदिरूपकार्याभावात् सम्प्रदायोच्छेदोऽपि स्यादित्यर्थः । न चायं दोषः सिद्धान्ते शङ्कनीयः । ब्रह्मभूतानां सर्वात्मभावेन 'प्राणन्नेव प्राणो भवती'ति सर्वोपपत्तेरिति । ननु मास्तु जीवन्मुक्तिः, 'शुको मुक्तो वामदेवो मुक्त' इति तु प्रवादमात्रमिति वादिनं प्रत्याहुः—जीवदित्यादि । तेषां भूतार्थवादत्वेन स्वार्थे प्रामाण्यस्याऽवश्यकत्वात्प्रवादमात्रोपगमस्याऽसंगतत्वादित्यर्थः ॥

हरितोषिणी ।

स्काराभावादित्यर्थः । तदनुवृत्तिरिति । भोगजनकप्रारब्धानुवृत्तिरित्यर्थः । तथा च प्रारब्धस्य भोगैकनाश्यत्वं स्वीकर्तुं न शक्यते, किन्तु ज्ञाननाश्यत्वमेव । ज्ञाने सति सुखदुःखसाक्षात्काररूपभोगाभावादिति भावः । ननु जीवन्मुक्तानां तादृशं तत्त्वज्ञानं नास्ति, येन भोगजनकप्रारब्धनाशो भवेत्, अत एव देहविद्यमानताऽस्तीत्यत आहुः—प्रवचनेति । प्रवचनमध्यापनम् । यदि तेषां तत्त्वज्ञानं नास्ति चेत्, ज्ञानाभावादध्यापनं शुकादिभिः कर्तुं न शक्यते इति सम्प्रदायोच्छेद इति भावः । ननु जीवन्मुक्तिरेव नास्ति, शुको मुक्तो वामदेवो मुक्त इति तु प्रवादमात्रमित्यत आहुः—जीवन्मुक्तीति ॥

गङ्गाधरभट्टी ।

रथ्येति । संस्काराभावादिति । प्रारब्धस्यादृष्टरूपत्वे कर्मरूपत्वेऽपूर्वरूपत्वे वा द्रव्यत्वाभावादिति भावः । तस्य द्रव्यधर्मत्वानङ्गीकारेऽप्याहुः—ज्ञान इति । ननु रिक्तीकृतघटस्थघृतशेषवदनुवृत्तिस्तेनाहुः प्रवचनेति । सा नास्तीति । सा जीवन्मुक्तिः ।

---

टिप्पणी ।

* कम्पो वेगाख्यसंस्कारवशादित्यस्य सुवर्णसूत्रे कर्मरूपत्वेऽपूर्वरूपत्वे वेति । 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्' इतिश्रुतेर्यागहोमादिकर्मणामेव धर्मत्वम् । जगदीश्वरोऽस्मत्कृतं कर्मापेक्ष्य फलं ददाति लौकिकस्वामिवदिति न फलानुपपत्तिरपीत्येवंवादिनां मतेन कर्मरूपत्वे इति भावः ॥

---

१ घ. क. पु. द्रव्यरूपत्वाभावेन । २ त्रिपत्र मु. पु. पाठः ।

(९) स्यादेतत्, न वयं प्रतिबिम्बं जीवं ब्रूमः । किन्त्वङ्गुल्यादिसंपर्काच्चन्द्रादिद्वैताभासवदविद्यातो ब्रह्माप्यनेकवदवभासमानं द्वित्रादिसंख्यायोगि जीवपदवाच्यमिति । नैतद्विद्वदादरणीयम् । तथाहि—अविद्यासंबन्धाद्ब्रह्मणोऽनेकवदाभासः कस्येति विचारणीयम् । न तावद्ब्रह्मणः, तत्र भ्रमायोगात् । नापि जीवस्य, तादृश्यवभासविषयत्वात् । न हि दोषवशाद्गृहीतचन्द्राणामेवं स्वानेकत्वावभासः संभवति, चन्द्रस्य वा ।

जीवस्याभासता, तन्निरासमुपक्रम्य आभासकसम्बन्धतदनादित्वादिखण्डनम् ।

## सुवर्णसूत्रम् ।

(९) एवं दूषिते प्रतिबिम्बवादे वादान्तरमुत्थापयन्ति—स्यादेतदित्यादि । अस्मिन् पक्षे जीवस्य वस्तुतो ब्रह्मत्वे भेदभानस्य जीवपदवाच्यतायाश्च दुष्टत्वम्, न तु स्वरूपालीकत्वम्, न वा मोक्षस्यापुरुषार्थत्वम्, न वा पारलौकिकप्रयत्नप्रतिरोधः । दोषवशात्सिद्धे द्वित्वे सहप्रवेशैकत्रस्थित्योर्नियामकत्वस्य च नानुपपत्तिः । वस्तुतो मुक्तत्वाज्जीवन्मुक्तेरपि नानुपपत्तिः । नीरूपत्वकृत आभासासंभवस्तु 'जीवेशावाभासेन करोती'ति श्रुतिबलादेव निरस्त इत्ययं पक्ष आदरणीय इत्यर्थः । एवं दोषेषु परिहृतेष्वपि द्रष्टृत्वासंभवस्याप-

## हरितोषिणी ।

(९) इदानीमविद्यावशाद्ब्रह्मानेकत्वाभासवादं खण्डयितुं पूर्वपक्षमुत्थापयन्ति—स्यादेतदिति । ब्रह्मापीति । एकमेव ब्रह्माऽविद्यासंपर्कादनेकवदाभासमानं ज्ञायमानं सद्द्वित्वादिसंख्याविषयं जीवपदवाच्यमपि भवतीत्यर्थः । अत्र पूर्वस्मिन् पक्षे प्रतिबिम्बकारणीभूतादर्शाद्यपसारणेन यथा प्रतिबिम्बस्यालीकत्वं, तथा जीवस्याप्यलीकत्वं, तेन च यज्ञादिना परलोकप्राप्तिबोधकश्रुतिविरोधः, जीव एव नास्तीति चेत्, कस्य मोक्षः कस्य वा जीवन्मुक्ततेत्यादिदूषणानि संभवन्ति । अस्मिन् पक्षे तु तस्यालीकत्वाभावादेव तानि निरस्तानि । अविद्यातो द्वित्वं तु सिद्धमेवेत्यतो 'द्वा सुपर्णे'ति 'गुहां प्रविष्टौ परमे परार्द्धे' त्यादिश्रुतिविरोधोपि नास्ति । सहस्थितिसहप्रवेशयोरनुपपत्त्यभावोऽपीति बोध्यम् । यद्यपि ब्रह्मणो रूपाभावादाभासो न सम्भवति, तथापि 'जीवेशावाभासेन करोती'ति श्रुत्या रूपासत्त्वेप्याभासः स्वीक्रियते इति यथाश्रुते दोषाभावे समर्थितेऽप्यस्मिन् पक्षेऽपि दूषण-

## गङ्गाधरभट्टी ।

(९) मतान्तरं—स्यादिति । तत्र मते जीवरूपस्यालीकत्वेन च पारलौकिकप्रयत्नप्रतिषेधः । सिद्धे द्वित्वे सहप्रवेशैकत्रस्थितिनियामकत्वानां च सम्भवः । वस्तुतो मुक्तत्वाज्जीवन्मुक्तिरुपपन्ना, नीरूपत्वादाभासासंभवस्तु 'जीवेशावाभासेन करोती'ति श्रुतिबलान्नि-

---

१ सु. ठ. भिन्न पाठः । २ कप्रतिरोध इति ग. पु. पाठः ।

तेषामलीकत्वात्, द्रष्टरि सत्येव तेषां भानाच । दोषासम्बन्धादेव न तस्य । किञ्चैवं, जीवात्मनियामकत्वस्य परमात्मन्यसंभवः । तथा च 'य आत्मानमन्तरो यमयती'त्यादिश्रुतिर्बाधितविषया स्यात् ॥

अपरञ्च, अविद्याब्रह्मणोः कः सम्बन्धः? । न तावत् संयोगः, तयोर्विभुत्वेन तदनङ्गीकारात् । नाप्यध्यासः, तस्याऽप्यभावात् । नापि स्वरूपलक्षणः, मुक्तात्मन्यपि तत्सम्भवेन संसारित्वापादकत्वप्रसंगात् ।

सुवर्णसूत्रम् ।

रिहृतत्वात्तदादाय दूषयन्ति—नैतदित्यादि । आभास इति । करणसंस्थानैकमुख्यत्वान्यतरविघटकेन वाह्यदोषेण जायमानो भ्रमः । अवभासविषयत्वादिति । आभासमानस्यैव जीवपदवाच्यत्वाङ्गीकारात्तथेत्यर्थः । न तस्येति । आभासस्य चन्द्रस्य ब्रह्मणश्च न । तथा च द्रष्टृभावादसंभवग्रस्तोऽयं पक्ष इत्यर्थः । स्वरूपविचारेण दूषणान्तरमाहुः—किञ्चेत्यादि । एवमिति । ब्रह्मत्वेनैक्ये ॥

आभासकसम्बन्धविचारेण तृतीयदूषणमाहुः—अपरञ्चेत्यादि । मुक्तेत्यादि । एकमु-

हरितोषिणी ।

माहुः—नैतदिति । दूषणं व्युत्पादयन्ति—तथा हीत्यादिना । आभासविषये जीवे आभासो नास्तीति दृष्टान्तरीत्या घटयन्ति—न हीति । स्वेति । स्वं चन्द्रः । चन्द्रानेकत्वावभास इत्यत्र चन्द्राणां चन्द्रस्य वा; तत्र चन्द्राणां वक्तुं न शक्यते इत्याहुः—द्रष्टरीति । द्रष्टरि सत्येव बहुत्वं भासत इत्यर्थः । तेषामिति । चन्द्राणामित्यर्थः । चन्द्रस्यापि न संभवतीत्याहुः—दोषेति । न तस्येति । चन्द्रस्य नेत्यर्थः । एकचन्द्रे तु दोषो नास्तीति तद्वशाज्ज्ञानं न जायत इत्यर्थः । तथा च यथा दोषवशादनेकचन्द्राणामेकस्य चन्द्रस्य वाऽवभासो वक्तव्यः । स च न सम्भवति । अनेकचन्द्राणामलीकत्वात्सत्तैव नास्ति, एकस्मिंश्चन्द्रे दोषाभावादवभासो नास्ति । एवमविद्यासम्बन्धाद्ब्रह्मणोऽनेकवदवभासो वक्तव्यः । स च न सम्भवति । ब्रह्मणि भ्रमरूपाया अविद्यायाः सम्बन्ध एव नास्ति, जीवस्त्ववभासविषय एवेति तत्रावभासो वक्तुं न शक्यत इति दृष्टान्ते दार्ष्टान्तिके च तव मते युक्त्यसम्भव इति भावः । दूषणान्तरमाहुः—किञ्चैवमिति । एवमविद्यासम्बन्धजनिताभासस्यैव जीवत्वे यथाऽऽभासितचन्द्राणां वास्तविकचन्द्रेण नियमनं कर्तुं न शक्यम्, तद्वत् । तद्दृष्ट्या तेषामेवाभावादिति भावः । ब्रह्मणो जीवनियामकत्वाभावे का क्षतिरित्यत आहुः—तथा चेति । ब्रह्मैक्ये नियम्यनियामकभावो न सम्भवतीति श्रुतेर्बाधितविषयत्वमिति भावः ॥

सम्बन्ध एव न सम्भवतीत्याशयेन दूषणमाहुः—अपरञ्चेति । विभुत्वेनेति । सुवर्ण-

गङ्गाधरभट्टी ।

रत्नः । किञ्चैवमिति । वस्तुतो ब्रह्मत्वेनैक्ये । मुक्तात्मनीति । एकमुक्तावपि सर्वमुक्त्य-

१ ख. पु. 'अजत्वेने'ति पाठः । २ स्यामलदेकत्वा० ग. पु. पाठः । ३ आभासतथा मिथ्यात्वे च इत्य० पाठः ।

आस्तां वा यः कश्चित् सम्बन्धः, सोऽप्यनादिर्वाच्यः । तथा च ब्रह्माविद्यातत्सम्बन्धानामनादित्वेन जीवविभागस्याप्यनादित्वादविद्यासम्बन्धजीवविभागयोः कार्यकारणभावासंगतिः । एककालीनत्वात् । ननु श्रुतिबोधितः कार्यकारणभावः, तर्हि तन्निर्वाहाय जीवविभागस्यार्वाचीनतामूरीकुरु । 'बन्धोऽस्याविद्ययाऽनादि'रितिवाक्यात् सोऽप्यनादिरेव मन्तव्य इति चेत्, मैवम्; न हि सर्वात्मना तत्र सादित्वनिषेधः, किन्तु घटपटादिसाधारणतन्निषेधः । यथा देवेषु मरणनिषेधोऽमरनाम्ना ।

सुवर्णसूत्रम् ।

क्त्यनन्तरमपि सर्वमुक्त्यभावादविद्यायाः सत्वेनाभासजनकस्य स्वरूपसम्बन्धस्यानपेतत्वान्मुक्तात्मन्यपि तादृशसम्बन्धसंभवेन तस्य तथात्वप्रसङ्गादित्यर्थः । एवमाभासप्रयोजकसम्बन्धदूषणेन प्रतिबिम्बप्रयोजकोऽपि सम्बन्धो निवारितः । सम्बन्धाभावेन च तस्या ब्रह्मशक्तित्वमपि निवारितम् । तेन तस्या जीवशक्तित्वे दृढीभूते तत्सम्बन्धिजीवस्वरूपस्याभासप्रतिबिम्बपक्षदूषणैर्दूषितत्वात्तस्या जीवशक्तित्वमपि दूषितप्रायम् । अतः परं तदनादित्वं दूषयितुं विभागबन्धयोरनादित्वं दूषयन्ति—आस्तामित्यादि । ऊरीकुर्विति । विभागात् पूर्वं बन्धोक्तौ सर्वस्यैव ब्रह्मणो बन्धसम्भवात्तदभावाय तथेत्यर्थः । सोऽपीति ।

हरितोषिणी ।

सूत्रानुसारेण तु तयोरजत्वेनेति पाठः । तत्र संयोगस्य जन्यत्वेन अजत्वेन रूपेणानङ्गीकारादित्यर्थः । स्वरूपलक्षण इति । स्वरूपसम्बन्धस्याविद्यास्वरूपत्वं ब्रह्मस्वरूपत्वं च वक्तव्यम्, एवं चैकमुक्तौ सर्वमुक्तिरितिवादानङ्गीकाराज्जीवभेदेनाविद्याया भेदाभावादेकस्य मुक्तावप्यविद्याया विद्यमानत्वेन तत्स्वरूपसम्बन्धस्य मुक्तात्मन्यपि सत्वात् तस्य बद्धत्वापत्तिरिति भावः । इदानीमविद्याया अनादित्वमेव नास्तीति व्यवस्थापयितुं ब्रह्मणः सकाशाज्जीवस्य विभागः, अथ च बद्धत्वम्, उभयोरप्यनादित्वं नास्तीत्याहुः—आस्तामिति । एवं दूषिते बन्धाद्यनादित्वे तत्साधयितुं मायावादी प्रत्यवतिष्ठते—शङ्कते—नन्विति । समाधानमाहुः—तर्हीति । तन्निर्वाहाय कार्यकारणभावे श्रुतिप्रामाण्यनिर्वाहायेत्यर्थः । शङ्कते—बन्धोऽस्येति । सोपि बन्धोऽपि । समाधानमाहुः—मैवमिति । तत्र बन्धे । यथा देवानामपि कल्पान्ते मरणसम्भवेऽपि नाऽमरत्वव्याघातः, एवं सृष्ट्यादौ तस्योत्पत्तिसत्वेऽपि

गङ्गाधरभट्टी ।

भावादविद्यासत्वात्तत्सम्बन्धादिति भावः । एतेन प्रतिबिम्बप्रयोजकोपि सम्बन्धो नि-

---

१ क. पु. 'बन्ध' इति पाठः । २ घ. पु. 'पर' मिति नास्ति । ३ क. पु. 'भागसम्बन्ध' इति पाठः ।

अन्यथा अविद्ययेति करणत्वबोधकं तृतीयान्तं न वदेत् । तच्च बन्धलक्षणकार्यात्पूर्वकालीनत्वं विनाऽस्या न निर्वहति ॥

ननु बन्धनैकस्वभावायास्तस्या जीवस्य चानादित्वे किञ्चित्कालं न बन्ध इत्यत्र को हेतुः । तदा जीवस्वरूपं कीदृशमित्यपि विचारणीयम् । मुक्तमिति तु न वक्तुं शक्यम्, साधनाभावादग्रे बन्धाच्च । न वा बद्धम्, तस्य भावित्वात् । एतदुभयातिरिक्तावस्था चाप्रसिद्धेति नैवं वक्तुं

सुवर्णसूत्रम् ।

विभागोऽपि । तत्रेति । बन्धे । अन्यथेति । अनादित्वस्यासंकुचितवृत्तित्वे । तथा चानादिबन्धाङ्गीकारे श्रुतिविरोधो दुष्परिहर एवेत्यर्थः ।

एवं दूषिते बन्धाद्यनादित्वे तत्साधयितुं प्रत्यवतिष्ठते—नन्वित्यादि । तथा च बन्धाभावहेत्ववचने सिद्धमेव तदनादित्वम् । प्रकारान्तरेणापि साधयति—तदेत्यादि । कीदृशमिति । ब्रह्मरूपं जीवरूपं वा । यदि ब्रह्मरूपं तदा मुक्तं वक्तव्यम्, यदि जीवरूपं तदाऽनादिबद्धमेवावश्यं वक्तव्यम्, तदुभयमप्यसङ्गतमतः किमवस्थं किंप्रकारकं चेति विचार्य मदुपरि दूषणं देयम्, नाविचार्येत्यर्थः । तद्दूषयन्ति—नेत्यादि । एवं हेत्वादिप्रश्नमात्रेण बन्धाद्यनादित्वं न सिद्ध्यतीत्यर्थः । बन्धस्य कादाचित्कत्वे अवस्थायां च हेतुं वदन्तोऽवि-

हरितोषिणी ।

चिरन्तनत्वात्माऽनादित्वहानिरिति श्रुतितात्पर्यमिति भावः । अन्यथा एतादृशश्रुतितात्पर्याभावे । करणत्वबोधकेत्यादि । करणस्य कारणविशेषत्वेन कारणस्य च कार्यप्राग्वर्तित्वमिति सर्वथाऽनादित्वे तन्न वदेदिति भावः । न वदेदिति । श्रुतिरिति शेषः । तथा च बन्धस्याविद्याकृतत्वादनादित्वं न सम्भवतीति भावः । तदेवाहुः—तच्चेति । तत्करणत्वम् । अस्या अविद्यायाः ॥

बन्धस्य जीववदनादित्वं नास्तीत्युक्तम्, तत्र शङ्कते—नन्विति । बन्धनैकेति । स्वभावस्याऽपरिहार्यत्वादिति भावः । को हेतुरिति । अत्र हेतुरेव नास्तीत्यर्थः । तथा च हेत्वभावे बन्धस्यापि जीववदनादित्वमागतमिति भावः । किञ्चित्कालं न बन्ध इत्यत्रैकं दूषणमुक्त्वा दूषणान्तरमुत्थापयति—तदेति । किञ्चित्काले । विचारणीयमिति । जीवस्यानादित्वात्तदानीमपि जीवस्य सत्त्वादिति भावः । साधनेति । साधनं विना मोक्षो नास्ति, मुक्तस्य पुनर्बन्धनं नास्तीत्यभिप्रायः । तस्य बन्धस्य । समाधानमाहुः—नैतत्साधु

गङ्गाधरभट्टी ।

त्वः । सम्बन्धाभावात्तस्या ब्रह्मशक्तित्वमपि गतम्, । न चैवं जीवशक्तित्वम्, आभासप्रतिबिम्बयोरसंभवेन जीवस्वरूपस्याप्यसंभवात् ॥

युक्तमिति चेत्; नैतत्साधु । 'श्रिया पुष्ट्ये'तिवाक्ये मुख्यासु द्वादशशक्तिषु गणनादविद्याया भगवच्छक्तित्वेन तदिच्छाधीनत्वात् । तथा च यद्बन्धने तदिच्छा तमेव सा बध्नाति, नान्यम् । अत एव शुकसनकादीनां सर्वदा मुक्तैव । तेषु तथेच्छाभावात् । अत एव श्रुतिरपि-

सुवर्णसूत्रम् ।

द्याया जीवशक्तित्वं निरस्यन्ति—श्रियेत्यादि । तथा च यथेदानीं शुकादीनां मुक्तता, तथान्येषां बन्धात्पूर्वमपीति बन्धे, तदभावे, पुनर्बन्धे, मोक्षे, चेच्छैव हेतुरिति न त्वदुक्तरीत्या बन्धानादित्वस्याविद्यानादित्वस्य च सिद्धिरित्यर्थः । ननु शुकादीनां योगचालितत्वात्प्राचीनसाधनानामेव मुक्तिहेतुत्वं, नेच्छाया इत्याशङ्कायामाहुः—अत एव श्रुतिरित्यादि । तथा च साधनान्यपि तदिच्छां नातिवर्तन्त इति यथा तत्र *सव्यापारेच्छा कारणं, तथात्र निर्व्यापारा सेति पूर्वोक्तं निर्बाधमित्यर्थः । एवं च मुक्तित्वेन जीवकृतसाधनसाध्यत्वेन व्याप्त्यभावबोधनात्तदुक्तं साधनाभावरूपं दूषणं परिहृतम् । इच्छाप्राधान्यबोधनेनाग्रे

हरितोषिणी ।

इति । तव मतं समीचीनं न भवतीत्यत्र हेतुमाहुः—श्रियेति । यथा राजा सेवकेन सर्वं कार्यमिच्छया करोति, तथा भगवान् द्वादशशक्तिभिरिच्छया सर्वं करोति । तथा चाविद्याया भगवच्छक्तित्वाज्जीवाधीनं बन्धमोक्षादिकं किमपि नास्तीति भावः । नन्वेवं चेत् श्रुतौ साधनादिकथनं, साधनेन मोक्ष इति कथनं च व्यर्थं स्यादित्यत आहुः—अत एवेति । श्रुतिरपीति । आहेत्यग्रेणान्वयः । भगवानपि यस्य जीवस्य मोक्षेच्छां करोति, तेन साधनानि कारयित्वा मोक्षं ददातीत्यपि श्रुत्योक्तत्वात्साधनमोक्षयोः कार्यकारणभावव्याघातो नास्ति, साधनकथनस्य व्यर्थतापि नास्तीत्यर्थः । तथा च बन्धनस्यानादित्वं नास्तीति भावः । तथा च जीवब्रह्मभेदात्पूर्वं ब्रह्मणो 'बहु स्या'मितीच्छयाऽनेकभावापन्नत्वं, तदनन्तरमविद्यया बद्धत्वाज्जीवभावत्वं, तदनन्तरं साधनेन मुक्तत्वं शुकादीनां, साधना-

---

टिप्पणी ।

* सव्यापारेच्छेति । बन्धमोक्षयोर्भगवदिच्छैव हेतुः । विद्याऽविद्ययोस्तु मध्ये व्यापारत्वमेव । व्यापारत्वं च न तज्जन्यत्वविशिष्टतज्जन्यजनकत्वरूपम् । विद्याऽविद्ययोर्भगवच्छक्तित्वेन नित्यत्वात् । किन्तु करणरूपमेव । अत एव मूले 'अविद्यये'ति करणत्वबोधकं तृतीयान्तमित्युक्तम् । बन्धमोक्षयोर्विद्याऽविद्यारूपव्यापारविशिष्टेच्छा कारणम्, 'एष उ एवे'त्यादिश्रुतिबोधितसाध्यसाधुकर्मकारणे तु केवलेच्छेति विशेषः ॥

---

१ 'श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया । विद्ययाऽविद्यया शक्त्या मायया च निषेवित'मिति ।

'एष ह्येव साधु कर्म कारयति तं, यमेभ्यो लोकेभ्य उन्निनीषति, एष उ एवासाधु कर्म कारयति तं, यमेभ्यो लोकेभ्योऽधो निनीषती'ति तदिच्छाऽधीनत्वमेवाह । जीवस्वरूपं चाग्रे वक्ष्यामः ॥

अन्यच्च, अविद्यासम्बन्धमात्रेण जीवभावं वदतः, शुद्धब्रह्मण्येव च

सुवर्णसूत्रम् ।

बन्धस्यापि प्राक्कालीनमुक्तताविघातकत्वं च परिहृतम् । तेन जीवस्वरूपं विभागात्पूर्वं ब्रह्मरूपमेव, तदुत्तरं तु सदामुक्तबन्धयोग्यमुक्तबद्धभेदेन त्र्यवस्थं चतुरवस्थं चेति बोधितम् । पूर्वं कीदृशमिति प्रश्ने बन्धाभावदशायामविद्यासम्बन्धाभावाद्वच्छिन्नरूपत्वस्याप्यभावेन किंप्रकारकमिति यत्पृष्टं तत्राहुः—जीवेत्यादि । तथा च बन्धात्पूर्वं विभागादुत्तरं यादृशं तदग्रे वक्ष्याम इत्यर्थः ॥

एवं जीवानादित्वं दूषयित्वा देवामरन्यायदार्ढ्याय जीवादित्रयानादित्वसाधकाविद्यासम्बन्धानादित्वं दूषयन्ति—अन्यच्चेत्यादि । अविद्यायाः सर्वगतत्वाङ्गीकारात्तस्या अनादिसम्बन्धो यदि सार्वदेशिकः, तदा कृत्स्नस्य ब्रह्मणो जीवत्वापत्तिः, अथ प्रादेशिकस्तदा अविद्याया विभुत्वहानिः । तत्तन्मतीयविभूनां निरवयवत्वस्यैवोपगमात् । अतस्तथेत्यर्थः । एतेन विशुद्धचिदीशयोरनादित्वमपि दूषितम् । अविद्यानादित्वं तु प्रागेव दूषितमिति ॥

हरितोषिणी ।

भावेन सदा बद्धत्वं तदन्यजीवानाम् । एवं च तत्र सर्वत्र भगवदिच्छायाः प्राधान्यान्मुक्तता बन्धात्पूर्वमप्यस्तीति भावः । ननु 'न स पुनरावर्तते' इति श्रुतिप्रामाण्यान्मुक्तस्य बद्धत्वं पुनर्नास्तीति चेत्, न; 'न स' इत्यनेन जीवबोधनाद्बद्धजीवस्य साधनेन मुक्तौ पुनर्बद्धता नास्ति; बन्धात्पूर्वं ब्रह्मणो नित्यमुक्तस्वभावत्वान्मुक्ततेति न कोपि दोषः । ब्रह्मणः स्वेच्छया बद्धत्वं मुक्तत्वं च, मायाया इच्छाधीनत्वादिति बोध्यम् । अत एवोक्तं श्रीमद्भागवते 'बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः । गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धन'मिति । ननु बन्धात् पूर्वमविद्यासम्बन्ध एव नासीति जीवस्वरूपं कीदृशमिति प्रश्नः कृतस्तत्रोत्तरमाहुः—जीवस्वरूपमिति ॥

अनाद्यविद्यासम्बन्धस्वीकारे दूषणमाहुः—अन्यच्चेति । जीवभावमिति । ब्रह्मण इति शेषः । तत्सम्बन्धमिति । अविद्यासम्बन्धमित्यर्थः । जीवभावानापत्ताविति । ब्रह्मणो जीवभावस्य या अनापत्तिः अप्राप्तिस्तत्र हेतोरभावादित्यर्थः । तथा च त्वया ब्रह्मणः सर्वांशेनाऽविद्यासम्बन्धे स्वीक्रियमाणेऽपि तस्य जीवभावाप्राप्तौ हेतुं न पश्याम इति ब्रह्मणो जीवत्वापत्तिरिति भावः । ननु किञ्चिदंशे अविद्यासम्बन्धः स्वीक्रियते, तथा च

---

१ ग. पु. 'मुक्तसाधनविद्या' इति पाठः । २ मु. पु. अवस्थं चतुरवस्थमिति पाठः । ३ मु. पु. साधिकामविद्यासम्बन्धानादितामिति पाठः ।

तत्सम्बन्धं वदतस्तव मते जीवभावानापत्तौ हेत्वभावान्निरवयवत्वाच्चां-शभेदेन तथात्वस्य वक्तुमशक्यत्वाच्च सर्वज्ञत्वादिविशिष्टपरमात्माऽसिद्ध्या सर्वश्रुत्युपप्लवः ॥

किञ्च, जीवपरमात्मनोरनादिसिद्धं भेदं वदन् पारमार्थिकं कुतो न ब्रूषे । यतः श्रुतिरनयोरभेदं बोधयति, स च परमार्थतो भिन्नयोर्न सम्भवतीत्यवास्तवो भेदोऽत्र वाच्यः । तादृशश्च भेदो बिम्बप्रतिबिम्बयोराभासतदाश्रययोश्च दृष्टचरो लोके इति तथाऽत्रापि ब्रवीमि । अत एव महावाक्ये भागत्यागलक्षणापि । बाढं ब्रवीषि, परं पूर्वाऽपरालोचनरहितः ।

सुवर्णसूत्रम् ।

एवं 'षडस्माकमनादय' इति तत्प्रतिज्ञां दूषयित्वा अनादिसिद्धजीवपरमात्मभेदोपपादकप्रमाणमाभासीकर्तुं प्रतिवादिनं प्रति तादृशाभ्युपगमे हेतुं पृच्छन्ति—किञ्चेत्यादि । तद्दूषयितुं प्रमाणस्याभासत्वं साधयन्ति—बाढं ब्रवीषीत्यादि । स्यादेतदेव-

हरितोषिणी ।

यदंशे अविद्यासम्बन्धो नास्ति, तदंशे ब्रह्मत्वमस्त्येवेत्यत आहुः—निरवयवत्वादिति । अशक्यत्वादिति । तव मते अविद्याया विभुत्वेन निरवयवत्वे स्वीक्रियमाणे किञ्चिदंशेनाऽविद्यासम्बन्धस्य वक्तुमशक्यत्वादित्यर्थः । सर्वज्ञत्वादीति । अविद्यासम्बन्धो यत्र तत्र किञ्चिज्ज्ञत्वमेवेति भावः ॥

'षडस्माकमनादय' इत्यनेन जीवपरमात्मनोरनादिसिद्धं भेदं वदन्ति, तत्र प्रश्नं कुर्वन्ति—किञ्चेति । न ब्रूष इति । तथा चार्द्धजरतीयं किमर्थमिति प्रश्नः । मायावादी तत्रोत्तरमाह यत इत्यादि, ब्रवीमीत्यन्तेन । स च अभेदश्च । तस्य प्रसिद्धिमाहुः—तादृशश्चेति । दृष्टचर इत्यग्रिमेणान्वयः । अवास्तवश्चेत्यर्थः । आभासेति । दर्पणे सूर्यतेजः पतितम्, तस्याभासो भित्तौ पतितः । स, अथ च तदाश्रयं दर्पणान्तःपतितं तेजः, अ-

गङ्गाधरभट्टी ।

अतःपरं तदनादित्वं दूष्यते—आस्तामिति । वाच्य इति । 'जीव ईशो विशुद्धा चिद्विभागस्त्वनयोर्द्वयोः । अविद्या तत्कृतो बन्धः षडस्माकमनादय' इति तदुक्तेः ॥

न बन्ध इत्यत्र को हेतुरिति । तथा चानादिबद्धत्वं सिद्धम् । नैतत्साधु इति । जीवस्वरूपस्य त्वया निरूपयितुमशक्यत्वात् । स्वमते त्वाहुः—श्रियेत्यादि । ननु शुकादीनां योगचालितत्वात्प्राचीनसाधनानामेव मुक्तिहेतुत्वं, नेच्छाया इत्याहुः—अत एवेति । एवं च जीवस्वरूपं सदामुक्तबन्धयोग्यमुक्तबद्धभेदेन चतुर्लक्षणम् ॥

१ ख. पु. श्रेति नास्ति । २ महत्त्व मु. पु. पाठः ।

तथा हि,–स्यादेतदेवम्, यदि 'तत्त्वमसी'त्येतन्मात्रं महावाक्यं स्यात्। न त्वेवम्, किन्तु संपूर्णः प्रपाठकः। तत्रोपक्रमे 'अपि वा तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात'मित्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम्। तदेकमेव चेत् सर्वं भवेत्, तदोपपद्यते। यथा सुवर्णखण्डाः सुवर्णकार्यं च सर्वं सुवर्णमिति सुवर्णज्ञानेन तज्ज्ञातं भ-

सुवर्णसूत्रम्।

मिति। स्याद्वास्तवो भेदो भागत्यागलक्षणा चेत्यर्थः। किन्त्विति। तावता प्रतिज्ञापूर्त्यसम्भवात्। सम्पूर्णः प्रपाठक इति। छान्दोग्ये श्वेतकेतूपाख्यानरूपः। महावाक्यं यदि तावत् सर्वार्थसङ्ग्राहकतयोपदेशत्वेनाभिप्रेतं, यदि वा वाक्यसमुदायत्वेन, उभयथापि 'ऐतदात्म्य'मित्यादेरष्टादशाक्षरस्य सम्पूर्णस्य वा तथात्वम्, न चतुरक्षरस्येति। भागत्यागलक्षणाया अयुक्तत्वमुपक्रमविरोधादिति वक्तुमाहुः–तत्रेत्यादि। यथा सुवर्णे-

हरितोषिणी।

नयोरित्यर्थः। लक्षणेत्यन्तं मायावादिमतं तत्रोत्तरमाहुः–अत एवेति। जीवपरमात्मनोरवास्तवभेदादेवेत्यर्थः। तथा च त्वंपदवाच्यार्थो बुद्धिप्राणाद्यहङ्कारविशिष्टः प्रत्यगात्मा, तत्पदवाच्यार्थः सर्वज्ञत्वादिविशिष्टः सच्चिदानन्दरूपः परमात्मा, एवं च प्रतीयमानो भेदो वस्तुतो न भवतीति विशेषणांशं परित्यज्य विशेष्यांशे लक्षणां कृत्वा अभेदः प्रतिपाद्यते, स च पूर्वापरग्रन्थपर्यालोचनेन न सम्भवतीति भावः। पूर्वापरग्रन्थं व्युत्पादयन्ति–तथा हीत्यादिना। एवमिति। भागत्यागलक्षणा अवास्तवो भेदश्चेत्यर्थः। प्रपाठकः। छान्दोग्ये श्वेतकेतूपाख्यानरूपः। संक्षेपेण प्रपाठकार्थमाहुः–तत्रेति। तत्र प्रपाठके। उपक्रम इति। प्रतिज्ञातमित्यग्रेणान्वयः। तदिति। विज्ञानविषयीभूतम्। एकविज्ञानेन सर्वविज्ञाने दृष्टान्तमाहुः–यथेति। अत इति। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञातः। निरूपितमिति। जीवस्यांशत्वं जगतः कार्यत्वं चोक्त्वा सर्वस्य ब्रह्मरूपत्वं निरूपितमि-

गङ्गाधरभट्टी।

स्वरूपं चेति। बन्धात्प्राग्विभागानन्तरं यथेत्यर्थः॥

निरवयवत्वाच्चेति। तदभ्युपगमेन। एतेन विशुद्धचिदीशयोरनादित्वमपि दूषितम्॥

न त्वेवमिति। तावता प्रतिज्ञापूर्त्यसंभवात्। संपूर्ण इति। छान्दोग्ये श्वेतकेतूपाख्याने। अयमर्थः–यदि सर्वार्थसंग्राहकतया महावाक्यत्वं, यदि वा वाक्यसमुदायतया, नोभयथाप्येतच्चतुरक्षरस्य तत्, किन्त्वष्टात्रिंशाक्षरस्यैवेति भागत्यागलक्षणा त्वयुक्तेति तदाहुः–यथेति। 'यथा सौम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद्वाचा-

1 ख. पु. ज्ञानमिति पाठः।

वति। अतो ब्रह्मविज्ञानेन सर्वविज्ञानं वक्तुं सर्वस्य ब्रह्मरूपत्वं 'सदेव सौम्ये'त्यारभ्य निरूपितम्। तत्र 'ऐतदात्म्यमिदं सर्वम्' इति जडस्य सर्वस्यापि तदात्मकत्वमुक्तम्। ततो जडस्य विनाशित्वदर्शनेन अत्र-

सुवर्णसूत्रम्।

त्यादि। 'यथा सौम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्य'मिति श्रौतदृष्टान्तात्। लोहः सुवर्णम्, दार्ष्टान्तिके खण्डा जीवाः, कार्यं जगदिति फलिष्यति। एवं ब्रह्मपरिणामत्वबोधनात्तस्या विचित्रपरिणामशीलत्वं निरस्तं भविष्यति। तत्रेति। प्रपाठकार्थसंग्राहके 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्यस्मिन्नुपदेशवाक्ये। इदं हि नवकृत्व उपदिष्टम्। अर्थस्तु–'सदेव सौम्येद'मित्यादिना असतः सत्तां कण्ठतो युक्तिपूर्वकं निराकृत्य 'तदैक्षत बहुस्यां प्रजायेये'तीक्षोक्तिपूर्वकं तस्मात्सतस्तेजआदिक्रमेण सृष्टिमुक्त्वाऽग्रे वदति–'स य एषोणिमैतदात्म्य'मित्यादि। इदं परिदृश्यमानं सर्वमैतदात्म्यम्-एतत् आत्मा एतदात्मा। मयूरव्यंसकादिसमासः, न तु बहुव्रीहिः। एतदात्मा यस्य सर्वस्य तदेतदात्मं तस्य भाव ऐतदात्म्यमित्युक्तौ श्रूयमाणसर्वपदवैयर्थ्यापत्तेः। अत उक्त एव समासः। एतदात्मनो भाव ऐतदात्म्यम्। मृल्लोहकार्ष्णायसदृष्टान्तस्योपक्रम उक्त्वा-

हरितोषिणी।

त्यर्थः। तथा च दृष्टान्ते सुवर्णखण्डा इत्यनेन जीवस्यांशत्वं, सुवर्णकार्यमित्यनेन जगतः कार्यत्वं बोधितम्। तेन ब्रह्मपरिणामो बोधित इति भावः। तत्रेति। प्रपाठकार्थसंग्राहके 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्युपदेशवाक्ये। ऐतदात्म्यमिति। एतत् आत्मा एतदात्मा। मयूरव्यंसकादित्वात्समासः। एतदात्मनो

गङ्गाधरभट्टी।

रम्भणं विकारो नामधेयं लोहमित्येव सत्य'मितिश्रुतेः। लोहः सुवर्णं, दार्ष्टान्तिके जीवाः खण्डाः, कार्यं जगद्ब्रष्टव्यम्। श्रुत्यैव ब्रह्मणः परिणामबोधनान्मायायाः पक्षो निरस्तः। 'स य एषोणिमा ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति प्रपाठकार्थसंग्राहकम्। एतत्सत् आत्मा एतदात्मा। कर्मधारयः। एतत्पदेन सत एव परामर्शः। उपक्रमे 'सदेव सौम्ये'त्युपक्रमात्। सत एव तेजआदिसृष्टयुक्तेश्च। यत्तु एतदात्मा यस्य सर्वस्येति बहुव्रीहिः, तन्न; सर्वपदवैयर्थ्यात्। भावप्रत्ययानन्वयाच्च।

---

१ ख. पु. 'सर्वस्य' इति नास्ति। २ मु. पु. 'सर्वं' पाठः। ३ क. पु. 'तद्भाव' इति पाठः। ४ घ. पु. 'सर्वपदासंगत्यापत्ते'रिति पाठः। ५ घ. पु. 'ऐतदात्मकमित्यर्थं' इत्यधिकः पाठः। ६ ऐतदात्म्यमिदं सर्वमित्यत्र एतत् आत्मा यस्य सर्वस्य तत् एतदात्मं तस्य भावः ऐतदात्म्यमित्युक्तौ श्रूयमाणसर्वपदवैयर्थ्यापत्तेः।

सत्यत्वशङ्कानिरासायाह–'तत्सत्यम्' इति । तेनाविर्भावतिरोभावावेव श्रुत्यभिमतौ, नाशोत्पत्तिप्रतीती भ्रान्ते । तथा च विष्णुपुराणे प्रथमेंऽशे –'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवदि'ति ॥

आविर्भाव-तिरोभावख-ण्डनम् ।

(१०) नन्वाविर्भावतिरोभावौ नित्यावनित्यौ वा? नाद्यः, सततं घटोपलम्भानुपलम्भप्रसङ्गाभ्यामनिर्वाच्यतापत्तेः ।

सुवर्णसूत्रम् ।

तद्वत्सन्मयमित्यर्थः । तत्सत्यमिति । तत् पूर्वोक्तं सत्यं सर्वकालं सदित्यर्थः । तेन वैनाशिकार्द्धवैनाशिकप्रतिपन्ने असत्त्वविनाशित्वे मायावादिप्रतिपन्नं मायिकत्वं च निरस्तम् । 'स आत्मा' इत्यनेन सर्वस्यानागन्तुकानारोपितं रूपं स इत्युक्तम्[1] । 'तत्त्वमसी'त्यनेन जीवस्य तदात्मकत्वमुक्तम्, तस्य भावस्तत्त्वमिति । तेन जीवानामंशत्वम्, जगतः कार्यत्वम्, उभयोरपि ब्रह्माभेदात् प्रतिज्ञादिपूर्तिः । तमेतमर्थं विवृण्वन्ति–तत्रैतदात्म्यमित्यादि ॥

(१०) अत्र मध्ये वैनाशिकवादनिरासं श्रुत्वा प्रत्यक्षस्य प्रमाणज्येष्ठत्वादग्रे बाधाभावादुत्पत्तिनाशप्रतीत्योरभ्रान्तत्वं सांख्यप्रतिपन्नयोराविर्भावतिरोभावयोः प्रतिबन्दिपर्यवसितत्वेन तद्साधकत्वं च मन्वानो नैयायिकादिः प्रत्यवतिष्ठते–नन्वित्यादि । सर्वजनीनां प्रतीतिमनादृत्य जडस्य सर्वदा सत्त्वसाधनाय यावाविर्भावतिरोभावावङ्गीक्रियेते तौ सांख्यमते अभिव्यक्तितद्भावात्मकत्वाज्ज्ञानविषयसंबन्धतद्भावात्मकौ पदार्थान्तररूपौ । तथा च ज्ञानतद्भावसमनियतौ । अतस्तयोर्नित्यत्वे ज्ञानतद्भावयोरपि नित्यत्वमावश्यकम् ।

हरितोषिणी ।

भाव ऐतदात्म्यमिति । तथा च सुवर्णदृष्टान्तेन सर्वमात्ममयमिति भावः । तत्सत्यमिति । तत् जगत्सत्यमविनाशि । ननु एवं चेत्, उत्पत्तिविनाशौ दृश्येते इत्यत आहुः–तेनेति । अत एव वक्ष्यन्ति–'आविर्भावतिरोभावौ शक्ती वै मुरवैरिण' इति ॥

(१०) अत्र नैयायिकः शङ्कते–नन्विति । आविर्भावतिरोभावौ सांख्यमतसिद्धाभिव्यक्तितद्भावात्मकौ । अनिर्वाच्यतापत्तेरिति । इदमित्थतया वक्तुमयोग्यत्वापत्तेरित्यर्थः । नितरामिदमित्थतया वक्तुं योग्यं निर्वाच्यम् । 'अर्हे कृत्यतृचश्चे'त्यनुशासनेन ण्यत् ।

गङ्गाधरभट्टी ।

मम तु विकारो भावप्रत्ययार्थः । मृल्लोहकृष्णायसदृष्टान्त्वात् । तत्सत्यमिति । त्रिकालाबाध्यम् । नाशोत्पत्तीति । मिथ्यात्वादेरुपलक्षणम् ॥

(१०) नैयायिकादिः शङ्कते–नन्विति ।

---

१ घ. पु. स्वरूपमुक्तमिति पाठः ।

सुवर्णसूत्रम् ।

तथा सति सततं तदाधारभूतघटोपलम्भानुपलम्भप्रसङ्गाभ्यां ( तयोरभिव्यक्त्याधारात्मकत्वेन निष्कष्टुमशक्यतया तदाश्रयस्य ) घटादेश्चोपलब्धोऽनुपलब्ध इति निष्कष्टुमशक्यतया तयोस्तस्य चानिर्वाच्यतापत्तेः । अत्राहुं क्लो ण्यत् । नितरामिदमित्थतया वक्तुं योग्यत्वं निर्वाच्यत्वम्, तदभावः अनिर्वाच्यत्वम् । प्रकृते च कम्बुग्रीवत्वादिना निर्वाच्यत्वेपि सततमुपलम्भानुपलम्भाभ्यां तथात्वमापद्यते । यदि तौ नित्यौ स्याताम्, तदाधारो घटादिः सामग्रीसमवधाने सदोपलम्भानुपलम्भविषयः स्यात्, यदि तथा स्यात्, ताभ्यां निर्वाच्यो न स्यादिति । तर्के ह्यापादकापाद्ययोर्व्याप्तिः । यथा—निर्वह्निः स्यान्निर्धूमः स्यादित्यत्र वह्न्यभावधूमाभावयोः । प्रकृते यद्यपि नित्यत्वसदोपलम्भानुपलम्भविषयत्वयोर्धर्मनित्यत्वधर्म्यनिर्वाच्यत्वयोश्च नं व्याप्तिः । *नित्यद्रव्येषु व्यभिचारात् । तथाप्याविर्भावादिनित्यत्वतदाश्रयानिर्वाच्यत्वयोः सा निराबाधा । यद्यपि सामान्यव्याप्तौ सर्वस्य पक्षे निवेशात्सपक्षाभावेन व्याप्तिग्रहाभावे तर्कस्य मूलतः शैथिल्यम् । तथा विशेषव्याप्तावपि । तथाहि—घटः अनित्याविर्भावतिरोभाववान्; कादाचित्कोपलम्भानुपलम्भविषयत्वात् । यत्र यत्र कादाचित्कोपलम्भानुपलम्भविषयत्वम्, तत्र तत्र अनित्याविर्भावतिरोभाववत्त्वम् । यथा घटे । व्यतिरेके तु, यत्र यत्र नित्याविर्भावतिरोभाववत्त्वम्, तत्र तत्र सदोपलम्भानुपलम्भविषयत्वमिति । घटः कादाचित्कोपलम्भानुपलम्भविषयः । कालविशेषे ताभ्यां निर्वाच्यत्वात् । यदेवं, तदेवं, पटवत् । व्यतिरेके तु यत्र यत्र सदोपलम्भानुपलम्भविषयत्वम्, तत्र तत्र सदा तदाभ्यामनिर्वाच्यत्वम् । अनयोर्व्यतिरेकव्याप्त्योरप्रसिद्धत्वान्मूले शैथिल्यमनिवार्यम्, तथापि 'प्रसञ्जकं तु स्वानिष्टं परानिष्टं प्रसज्यते । विपर्यये पराभीष्टं स्वाभीष्टे पर्यवस्यती'ति तर्के जयोपायस्यामियुक्तैरुक्तत्वात् पूर्वपक्षी स्वानिष्टं नित्यत्वं, परानिष्टं सदोपलम्भानुपलम्भविषयत्वमनिर्वाच्यत्वं चापादकापाद्यीकृत्य सिद्धान्तिनं जेतुं तथोक्त-

हरितोषिणी ।

तदभावोऽनिर्वाच्यम् । तस्य भावोऽनिर्वाच्यत्वम् । अयमाशयः—आविर्भावः अभिव्यक्तिः ज्ञानघटादिरूपविषययोः सम्बन्धरूपः, एवं तिरोभावस्तादृशसम्बन्धाभावरूपः । एवं च तयोर्नित्यत्वे स्वीक्रियमाणे सर्वदा सत्त्वमपेक्षितम् । तच्च न संभवति । उभयोर्विरोधात् । तथा चायं घटः सर्वदा कम्बुग्रीवत्ववानिति यथा निर्वक्तुं शक्यते, तथायं घटः सर्वदोपलब्धः सर्वदाऽनुपलब्धः इति निर्वक्तुं न शक्यत इति सर्वपदार्थानां ताभ्यामनिर्वाच्य-

टिप्पणी ।

* नित्यद्रव्येष्विति । अणुत्वविभुत्वादीनां नित्यत्वेऽपि न परमाण्वाकाशादीनामनिर्वाच्यत्वमिति व्यभिचारः ॥

१ कोष्ठकान्तर्गतः पाठो मु. पु. नास्ति ।

**तयोर्धर्मत्वेन विरोधात् । तादृग्धर्म्यसिद्धौ तयोरपि वक्तुमशक्यत्वेन शून्यवादश्चापद्येत । साधने प्रवृत्तिश्चानुपपन्ना स्यात् ॥**

सुवर्णसूत्रम् ।

वानिति बोध्यम् । एतावताऽपि तर्कदोषानपायाद्दूषणान्तरमाह—तयोरित्यादि । तथा च मास्त्वनिर्वाच्यत्वमुक्तरीत्या, तथापि जडगतोत्पत्तिनाशस्थाने तयोरङ्गीकाराचौ धर्मत्वेन निश्चितौ । तयोर्विरोधप्रयोजकं च न धर्मत्वम्, रूपरसादौ व्यभिचारात् । नापि भावाभावरूपत्वम्, घटतदभावसमूहालम्बनाभावप्रसङ्गात् । किन्तु भावाभावरूपत्वे सत्युभयनित्यत्वम् । तदोत्पत्तिनाशवत्कालभेदेन स्थिरभावात्तद्धर्मिभूतस्य जडस्य विरुद्धधर्माधारत्वमभ्युपगन्तव्यम् । तच्चैतन्नित्यत्वाधीनम्, नित्यत्वं च तादृग्धर्मिसिद्ध्यधीनमित्यन्योन्याश्रययोश्चासिद्धौ शून्यवादापत्तिरिति सत्कार्यवादस्थापनाय प्रवृत्तस्य वैनाशिकमतापत्तिरित्यर्थः । उक्तदूषणस्य व्यावहारिकत्वाल्लोकव्यवहारस्य गुणसन्निपातजन्यत्वेनाप्रामाणिकत्वात् सिद्धस्य दूषणस्याप्रयोजकत्वमित्याशङ्क्य लोकवेदसाधारणं दूषणान्तरमाह—साधन इत्यादि । साधने घटयागब्रह्मज्ञानादौ । प्रवृत्तिस्तत्करणोद्यमः । सापि वस्तुमात्रनित्यत्वेन तत्फलस्यापि तथात्वादनुपपन्ना स्यात् । सिद्धसाधनदोषप्रसक्ता विधिविशेषविचारजन्यत्वादीना च स्यात् । तथा च श्रुतितात्पर्य्योद्घाटनाय प्रवृत्तस्य श्रुतिविरोध इति महदेव दूषणमित्यर्थः ॥

हरितोषिणी ।

त्वापत्तिरिति । दूषणान्तरमाहुः—तयोरिति । तयोराविर्भावतिरोभावयोः । तादृग्धर्म्यसिद्धौ आविर्भावतिरोभावविशिष्टधर्म्यसिद्धौ । तयोरपि धर्मरूपयोराविर्भावतिरोभावयोरपि । शून्यवाद इति । नास्तिकैकदेशिवैनाशिकमतमापद्येतेत्यर्थः । अयं भावः—तथा च जडस्य जगत आविर्भावतिरोभावौ धर्मरूपौ, लोके धर्मेण च धर्मिसिद्धिः । प्रकृते च धर्मयोः परस्परविरोधेनैकत्र स्थिरभावाज्जगद्रूपधर्म्यसिद्धिः । न च धर्मिणो नित्यत्वेन विरुद्धधर्माश्रयत्वं स्वीक्रियत इति वाच्यम् । नित्यत्वस्य विवादास्पदत्वादसिद्धेः । तथा च धर्म्यसिद्धौ धर्मस्यासिद्ध्या शून्यवादापत्तिरिति । दूषणान्तरमाह—साधन इति । भवन्मते वस्तुमात्रं नित्यमिति यागजन्यफलस्यापि नित्यत्वं वक्तव्यम्, तथा च सिद्धस्य साधनापेक्षाया अभावात्तत्र प्रवृत्त्यनुपपत्तेरित्यर्थः ॥

गङ्गाधरभट्टी ।

तयोरित्यादि । दूषणान्तरम् । अयमर्थः—विरुद्धे अपि उत्पत्तिविनष्टी भिन्नकालिक्यौ न विरुद्ध्येते । एतयोस्तूभयोः समानकालिकतया विरोधाद्धर्मिण एवासिद्धिः । विरुद्धधर्माधारधर्मिसिद्धिस्तु एतन्नित्यत्वाधीना, एतदसिद्धिर्धर्मसिद्ध्यधीनेत्यन्योन्याश्रये शून्यवादः स्यादिति ॥

---

१ तर्कदौषिल्यानपायाद । २ घ. पु. 'श्चापि' इति पाठः ।

**किंच, वर्तमानस्य वस्तुनो दर्शनयोग्यतातदयोग्यतात्मकौ हि तौ, । तथा सति क भगवच्छक्तित्वम् । एवं सति घटोपलम्भानुपलम्भयोः कादाचित्कत्वे हेतावुच्यमाने तत्तत्कारणस्तोमपरंपरयोस्तथात्वं तथेति**

सुवर्णसूत्रम् ।

एवं धर्मविचारेण दूषयित्वा तयोर्विरोधदृढीकरणाय स्वरूपविचारेण दूषयिष्यन् स्वरूपस्यानुक्तत्वाच्चद्बोधयितुं तौ लक्षयति—किञ्चेत्यादि । योग्यता च बाधाभावः, बाधश्च शून्यत्वस्वरूपोऽभावात्मेति तदभावरूपाया योग्यताया भावरूपत्वम् । एवंलक्षणकत्वे सिद्धान्तापघातरूपं दूषणमाह—तथा सतीत्यादि । वस्तुधर्मत्वे सति वक्ष्यमाणवाक्येनाङ्गीक्रियमाणं भगवच्छक्तित्वसिद्धान्तमपह्नोष्यतीत्यर्थः । वाक्यस्या(नुक्तत्वात्तथाऽ)नङ्गीकृतौ नोक्तं दूषणमित्यतो दूषणान्तरमाह—एवं सतीत्यादि । मास्तु भगवच्छक्तित्वम्, तथापि प्रत्यक्षानुरोधेन वस्तुधर्मत्वं तु तयोरङ्गीकार्यम् । एवं सति लोकवेदसाधारणघटोपलम्भानुपलम्भकारणस्तोमपरंपरयोः कादाचित्कत्वरूपमर्यादाया निर्वाहाय घटादेराविर्भावादेश्च नित्यत्वेऽपि उपलम्भादिकादाचित्कत्वहेतौ विचार्यमाणे तत्तत्कारणस्तोमपरंपरयोरुपलम्भकारणभूता या घटस्य विषयता, चक्षुरादिसन्निकर्षश्च, तादृशविषयताया अपि कारणं रूपादिमत्त्वम्, सन्निकर्षस्य च कारणमिन्द्रियमनःसंयोगः, तत्कारणमात्मनः संयोगः, सूर्यपरिस्पन्दः, क्षणविशेषसम्बन्धश्च । एवमनुपलम्भे अविषयत्वादिकम्, तेषां स्तोमस्य परंपरायाश्च कादाचित्कत्वमुपलम्भादिकादाचित्कत्वे हेतुरिति वाच्यम् । तत्र सर्वकारणभूताया

हरितोषिणी ।

स्वरूपविचारेण दूषणान्तरमुद्भावयितुं तयोर्लक्षणमाह—किञ्चेति । तौ आविर्भावतिरोभावौ । तथा च यस्मिन्नुद्भूतरूपं तस्य प्रत्यक्षता जायते इति कृत्वा उद्भूतरूपात्मिका हि योग्यता, सा च वस्तुधर्मस्तदभावश्चायोग्यता सा च अभाव इति भावः । नन्वेवं चेत् को दोष इत्यत आह—तथा सतीति । आविर्भावतिरोभावयोर्वस्तुधर्मत्वे सति । क्वेति । तथा च वस्तुधर्मौ, न तु भगवद्धर्म इति भावः । ननु आविर्भावतिरोभावयोर्वस्तुधर्मत्वमेवास्तु, मास्तु भगवच्छक्तित्वमित्यतो दूषणान्तरमाह—एवं सतीति । वस्तुधर्मत्वे स्वीक्रियमाणे सति । हेतावुच्यमान इति । योग्यतातदभावात्मकयोराविर्भावतिरोभावयोर्नित्यत्वाद्घटोपलम्भानुपलम्भयोः सर्वदा सत्त्वमपेक्षितम्, तथा तु नास्तीति तयोः कादाचित्कत्वे कारणापेक्षायां कारणत्वे वक्तव्ये सतीत्यर्थः । तत्कारणेति । उपलम्भानुपलम्भकारणसमुदायपरंपरयोरित्यर्थः । तथा चोपलम्भे कारणसमुदायस्तु घटादिरूपो विषयः, इन्द्रियं चक्षुरादि, सन्निकर्षः, तत्र कारणमिन्द्रियमनःसंयोगः, तत्रापि आत्ममनःसंयोगः । एवमनुपलम्भे अविषयत्वाद्यार-

---

१ एतच्चिह्नान्तर्गतः पाठः मु. पु. नास्ति । २ मु. पु. प्रत्यर्थं वाक्यस्याकाङ्क्षाऽनुरोधेनेति पाठः ।

वाच्यम् । एवमीश्वरेच्छापर्यन्तं धावने तस्या अपि नित्यत्वेन न पूर्वोक्तदूषणोद्धारः, अपसिद्धान्तश्च । न चेतरसहकार्यभावान्नोक्तदूषणमिति वाच्यम् । उक्तरीत्या तस्यैव निरूपयितुमशक्यत्वात् । नाप्युक्तयोग्यतात्मकत्वं तत्त्वमिति वक्तुं शक्यम् । वाय्वाद्यव्यापकत्वात् । न च दर्शनपद-

सुवर्णसूत्रम् ।

ईश्वरेच्छायाः कारणत्वमपि वाच्यम् । तथा सति तस्या नित्यत्वेन तत्कृतसूर्यपरिस्पन्दादीनामपि तथात्वेन सदोपलम्भाद्यापत्तौ, न घटानिर्वाच्यतापत्तिशून्यवादयोरुद्धारः । 'यद्भूतं यच्च भाव्य'मिति श्रुत्युक्तभूतादिव्यवहारोच्छेदापत्त्यापसिद्धान्तश्चेत्यर्थः । ननु सहकारिसमवधानाभावेनोपलम्भादेः कादाचित्कत्वोपपत्तौ नानिर्वाच्यतापत्तिशून्यवादावित्यत आह—न चेति । यः कोपि सहकारित्वेनाभिमन्तव्यः, तस्य सर्वस्यापि स्तोमान्तःपातित्वेन कारणकोटावेव निवेशात्तदतिरिक्तस्य तस्य तथात्वादित्यर्थः । सहकारिणोऽपि धर्मित्वेन तस्याप्याविर्भावतिरोभावयोर्वक्तव्यत्वे तत्कादाचित्कत्वहेतुत्वनिर्वाच्यत्वेन तथात्वादिति यार्थः । एवं पूर्वोक्तदूषणस्थापनेन तयोर्वस्तुधर्मत्वं दूषयित्वा तत्स्वरूपं दूषयितुं तल्लक्षणं दूषयति—नापीत्यादि । वाय्वादीत्यादिपदेन कालदिगाकाशाद्याः । अव्यापकत्वादिति ।

हरितोषिणी ।

भ्यात्ममनःसंयोगाभावान्तं कारणम् । एवंरीत्या उभयोः कारणस्तोमपरंपरयोरित्यर्थः । तथात्वम् । कादाचित्कत्वम् । तथेतीति । उपलम्भादिकादाचित्कत्वे हेतुरित्यर्थः । एवमिति । सर्वकारणीभूतेत्यर्थः । न पूर्वोक्तेति । घटादीनां सर्वदोपलम्भानुपलम्भप्रसङ्गेनानिर्वाच्यत्वं शून्यवादो वेति दूषणोद्धारो न भवतीत्यर्थः । अपसिद्धान्तश्चेति । सर्वदा वर्तमानत्वाद् 'यद्भूतं यच्च भाव्य'मिति व्यवहाराभावेन पुरुषसूक्तविरोधादपसिद्धान्त इत्यर्थः । ईश्वरेच्छाया नित्यत्वेपीतरसहकारिकारणाभावादुपलम्भादेः कादाचित्कत्वेन नानिर्वाच्यत्वं शून्यवादश्चेत्याशयेन स्वयमेव शङ्कते—न चेति । समाधानमाहुः—उक्तरीत्येति । यः सहकारित्वेनाभिमतस्तस्याऽऽप्याविर्भावादिकं निरूपयितुं न शक्यत इत्यर्थः । एतावता तयोर्वस्तुधर्मत्वं दूषितम् । इदानीं तल्लक्षणं दूषयति—नापीति । वर्तमानवस्तुविषयकदर्शनयोग्यत्वमाविर्भावत्वं न वक्तुं शक्यमित्यर्थः । तत्र हेतुमाह—वाय्वादीति । आदिपदेन कालाकाशदिशां सङ्ग्रहः । जगद्रूपेण भगवत आविर्भावः, तस्येदं लक्षणम्, तच्च जगदन्तःपातिवाय्वादौ नास्तीत्येकदेशावृत्तित्वरूपाव्यापकत्वादित्यर्थः । स्वयमेव शङ्कते—

गङ्गाधरभट्टी ।

अपसिद्धान्त इति । 'यद्भूतं यच्च भाव्य'मित्यादिश्रुतिविरुद्धत्वान्मतस्येति भावः ।

---

१ ग. पु. तत्काकादावेव निवेशात्तदतिरिक्तस्य । २ मु. पु. स्वर्यः इति पाठः ।

**मनुभवपरमिति वाच्यम् । अतीतानागतयोरपि चाक्षुषत्वप्रसङ्गात् । एवं सति तिरोभावोच्छेदश्च ।**

**किञ्च, तौ प्रतिव्यक्ति भिन्नावभिन्नौ वा ? नान्त्यः, युगपत् सकलोपल-**

सुवर्णसूत्रम् ।

आविर्भावलक्षणस्य वाय्वादावभावेन तथेत्यर्थः । चाक्षुषत्वप्रसङ्गादिति । अनुभवसामान्यमध्ये चाक्षुषस्यापि प्रवेशात्तथेत्यर्थः । नन्वनुभवपदं विभागेन तत्र तत्र तत्तदनुभवपरमित्यतो न दोष इति चेत्तत्राह–एवं सतीति । अनुभवयोग्यत्वस्याविर्भावलक्षणत्वेन अतीतानागतातीन्द्रियविप्रकृष्टव्यवहितानामाविर्भूतत्वे सति ॥

एवंलक्षणं दूषयित्वा तयोर्भगवच्छक्तित्वं दूषयितुं भेदाभेदविकल्पेन तौ दूषयति–किञ्च तौ प्रतीत्यादि । युगपदिति । वस्तूनां सर्वेषां नित्यत्वेन तद्धर्मस्याविर्भावस्यैकत्वेनैकोपलम्भसमये तथात्वादित्यर्थः । एवमेकानुपलम्भदशायां सर्वानुपलम्भोऽपि तिरोभावविचारेण बोध्यः । ननु यथैकसमवायवादिमते घटनिरूपितसमवायस्य तन्तुषु सत्त्वेऽपि न घटे तन्तुसमवेतत्वप्रसङ्गः प्रतीतिर्वा । अवच्छेदभेदात्, तथा आविर्भावस्यैकत्वेऽप्यवच्छेदभेदान्न युगपत्सकलोपलम्भप्रसङ्ग इति चेत्तत्राह–न चेत्यादि । सदोपलम्भ

हरितोषिणी ।

न चेति । अनुभवपरमिति । तथा च वाय्वादौ प्रत्यक्षयोग्यत्वमस्त्येवेति नाव्यापकत्वमिति भावः । उत्तरयति–अतीतेति । अनुभवसामान्यान्तश्चाक्षुषस्यापि प्रवेशेनाऽतीतघटस्याप्यनुभवसत्त्वेन तस्य चाक्षुषत्वप्रसङ्गादित्यर्थः । ननु तत्र सन्निकर्षाभावान्न चाक्षुषत्वमतो दूषणान्तरमाह–एवं सतीति । अनुभवयोग्यताया आविर्भावलक्षणे निवेशे सति । तिरोभावोच्छेद इति । अतीतानागतेन्द्रियविप्रकृष्टानां कुड्यादितिरोहितानां पदार्थानां दर्शनयोग्यतायाः सत्त्वेनाविर्भावलक्षणाक्रान्तत्वेन तिरोभावोच्छेदापत्तिरित्यर्थः ॥

एतावता लक्षणं दूषयित्वा तयोर्भगवच्छक्तित्वं दूषयति–किञ्चेति । अन्त्यपक्षे विचारबाहुल्यात्तमेव प्रथमं दूषयति–नान्त्य इति । युगपदिति । एकस्मिन् समये एकस्य प्रत्यक्षमन्यस्मिन्नन्यस्येत्येव व्यवहारोस्ति, आविर्भावस्यैकत्वे तु एकदैव सकलोपलम्भप्रस-

गङ्गाधरभट्टी ।

चाक्षुषत्वेति । अनुभवसामान्यमध्ये चाक्षुषस्यापि प्रवेशादित्यर्थः । नन्वनुभवपदं विभागेन तत्तदनुभवपरमतो न दोष इत्यत आह–एवं सतीति । अतीन्द्रियाणामाविर्भूतत्वलक्षणाक्रान्तत्वे सति ॥

सकलोपलम्भेति । आविर्भावाभिप्रायेण तिरोभावे सकलानुपलम्भोप्युक्तप्रायः ।

म्भप्रसङ्गात्। न चावच्छेदकभेदान्न तत्प्रसङ्ग इति वाच्यम्। विचाराक्षमत्वात्। तथाहि—अवच्छेदको हि घटादिः। तथा च तत्तदवच्छिन्न आविर्भाव इत्यागतम्। तथा चावच्छेदकस्य नित्यत्वात्सदोपलम्भः स्यात्। अनुपलम्भो वा। न च तत्तत्कालोपाध्यवच्छेदभेदान्न तत्प्रसङ्ग इति वाच्यम्। तस्यापि त्वन्मते घटतुल्यत्वात्। न ह्येकदोपलभ्यमानानां तथा-

सुवर्णसूत्रम्।

इत्यादि। तथा च तत्कादाचित्कत्वमर्यादाभङ्गः, प्रत्यक्षविरोधश्चेत्यर्थः। नन्ववच्छेदकस्य घटादेर्नित्यत्वेऽपि अवच्छेदकान्तरस्य कालोपाधेरनित्यत्वेन तदवच्छेदभेदान्न सदोपलम्भप्रसङ्ग इति चेत्तत्राह—न च तदित्यादि। तुल्यत्वादिति। घटवन्नित्याविर्भावधर्मकत्वात्। ननु दिनरात्र्यादिभेदस्योपलभ्यमानत्वात्तन्नित्यत्वमनुपपन्नमिति चेत्तत्राह—नहीति। नित्यत्वं हि सर्वकालवर्तमानत्वम्, तथैकदोपलभ्यमानानां घटकालाविर्भावानां वर्तमानत्वेन सिद्धे सत्ये उत्पत्तिनाशयोरनङ्गीकारान्नायुक्तम्। अतः कालस्यापि घटतुल्यत्वे सिद्धे नोक्तदूषणस्य परिहार इत्यर्थः। नन्वस्त्वेवम्, तथाप्याविर्भावीयाविर्भावाभावान्नोक्तदोष इति

हरितोषिणी।

ङ्गादित्यर्थः। स्वयं शङ्कते—न चेति। अवच्छेदकभेदादिति। घटावच्छेदेनाविर्भावकाले घटस्यैवोपलम्भः, न तु पटस्य, आविर्भावावच्छेदकघटपटादीनां भेदात्तो न युगपत्सफलोपलम्भ इत्यर्थः। यथा समवायस्यैकत्वेपि घटनिरूपितसमवायस्य तन्त्वावभावान्न तन्तुसमवेतो घट इति प्रतीतिस्तथात्रापीत्यर्थः। तत्रोत्तरमाह—विचारेति। विचाराशक्यत्वमेवाह—तथा हीत्यादिना। तिरोभावेप्याह—अनुपलम्भो वेति। उत्पत्तिविनाशाधिकरणतत्तत्कालोपाध्यवच्छेदकत्वस्वीकारेण शङ्कते—न चेति। न तत्प्रसङ्गः न सदोपलम्भत्वप्रसङ्गः। परिहरति—तस्यापीति। तत्तत्कालोपाधेरपि। घटेति। नित्यत्वादित्यर्थः। ननु कालोपाधेर्दिवसस्य रात्रौ विलोपो दृश्यत इति कृत्वा कथं नित्यत्वमित्यत आह—नहीति। उपलभ्यमानानामिति। पदार्थानामिति शेषः। तथात्वं नित्यत्वम्। तथा च य एकदोपलभ्यमानः पदार्थो जातः कालादिस्तस्यापि भवन्मते घटतुल्यत्वेन नित्यत्वात् सदोपलम्भापत्तिरूपं दूषणमस्तीति भावः। नन्वाविर्भावावच्छेदकयोर्घटकालयोर्नित्यत्वेन सर्वदाविर्भावस्य विद्यमानत्वात् सर्वदा पटादीनामुपलम्भापत्तिरूपदूषणं दुरुद्धरम्। न चेष्टापत्तिरिति वाच्यम्। घटपटादीनां कदाचिदुपलम्भो जायते, कदाचिन्नेति प्रत्यक्षवि-

१ ह्र. पु. 'तथा चे'ति नास्ति। २ क. पु. 'सदोपलम्भनमिति। ३ क. पु. 'सर्वदा' इति। ४ ग. घ. ह्र. पुस्तकेषु 'यद्याविर्भावाभावान्नोक्त' इति। ५ ननु अवच्छेदकस्य घटादेर्नित्यत्वेऽप्यवच्छेदकान्तरस्य कालोपाधेरनित्यत्वेन तदवच्छेदभेदान्न सदोपलम्भप्रसङ्ग इति चेत्तत्राह।

त्वमनुपपन्नम् । आविर्भावस्याविर्भावस्तत्तदवच्छेदेनेति न वक्तुं शक्यम् । तत्राप्युक्तविकल्पैरनवस्थापातात् । तिरोभावोऽप्येतेन व्याख्यातः । नाद्यः, 'आविर्भावतिरोभावौ शक्ती वै मुरवैरिण' इतिवाक्यविरोधात् ।

सुवर्णसूत्रम् ।

चेत्तत्राह—आविरित्यादि । तत्तदवच्छेदेनेति । तत्तत्कालावच्छेदेन । तत्रापि तस्मिन्नाविर्भावाविर्भावेऽपि । उक्तविकल्पैस्तन्नित्यत्वप्रतिव्यक्त्यभिन्नत्वतदवच्छेदककालनित्यत्वविकल्पैर्दोषतादवस्थ्ये पुनस्तस्यापि तस्यापीत्येवमनन्ताविर्भावकल्पनेऽनवस्थापातादित्यर्थः । एतद्दूषणं तिरोभावेऽप्यतिदिशति—तिरोभावोऽपीति । तिरोभावस्य नित्यत्वे सदानुपलम्भापत्तौ तन्निवारणाय तिरोभावस्य तिरोभावस्तदानीं कल्पनीयः । तस्मिन्नपि नित्यत्व—प्रतिव्यक्त्यभिन्नत्वतदवच्छेदककालनित्यत्वविकल्पैः सदोपलम्भापत्तितिरोभावोच्छेदापत्तिदूषणग्रासात्सोऽप्येतेनाविर्भावदूषणेन दूषित इति तदर्थं पुनः संरम्भो न क्रियत इत्यर्थः । एवमभेदपक्षदूषणेन वस्तुधर्मतादृढीकरणात्तयोर्भगवच्छक्तित्वं दूषितम् । एतदेव द्रढयितुं भेदविकल्पेनापि साक्षात्तद्दूषयति—नाद्य इति । ननु 'पराऽस्य शक्तिर्विविधैवे'त्यादिश्रु-

हरितोषिणी ।

रोधादिति चेत्, न., एतादृशप्रत्यक्षविरोधादेवाविर्भावस्याप्याविर्भावः कल्प्यते । स च यत्कालावच्छेदेनाविर्भावस्तत्कालावच्छेदेन नैवास्तीति सर्वदा घटोपलम्भापत्तिर्नास्तीत्येवं रीत्या दूषणोद्धारमाह—आविर्भावस्येति । तत्तदवच्छेदेनेति । तत्तत्कालावच्छेदेनेत्यर्थः । न वक्तुं शक्यमिति । आविर्भावान्तरं कल्पयित्वा दूषणनिरसनं न वक्तुं शक्यमित्यर्थः । ननु कुतो न वक्तुं शक्यमित्यत आह—तत्रापीति । आविर्भावान्तरेऽपि । उक्तविकल्पैरिति । इदमाविर्भावान्तरं नित्यमनित्यं वा, प्रतिव्यक्ति भिन्नं वाऽभिन्नं वा, तदवच्छेदकः कालो नित्योऽनित्यो वेत्यादिविकल्पैरित्यर्थः । अनवस्थापातादिति । उक्तविकल्पेषु नित्यत्वपक्षादरणे सदोपलम्भापत्तिदूषणभिया पुनराविर्भावस्वीकारेणानवस्थेत्यर्थः । एतद्दूषणं तिरोभावेऽपि बोध्यमित्याह—तिरोभावोऽपीति । तिरोभावस्य नित्यत्वं स्वीकरणीयम्, तेन च सर्वदानुपलम्भापत्तिस्तदनन्तरं तिरोभावस्यापि तिरोभावः स्वीकार्यः । तत्राप्युक्तविकल्पादिकं दूषणं तिरोभावेऽपि बोध्यमित्यर्थः । तौ प्रतिव्यक्ति भिन्नावभिन्नौ वेति पक्षद्वयेऽन्त्योऽभेदपक्षो दूषितः । इदानीं भेदपक्षं दूषयति—नाद्य इति । वाक्यविरोधादिति । 'शक्ती वै' इत्यत्र द्विवचनविरोधादित्यर्थः । ननु भगवतोऽनन्तशक्तिमत्त्वं

गङ्गाधरभट्टी ।

अनवस्थेति । आविर्भावीयाविर्भावे उक्तविकल्पैर्दूषणे प्राप्ते तत्परिहाराय तृतीयाविर्भावकल्पने तत्राप्युक्तदोषाप्तौ चतुर्थादिकल्पनादनवस्थापातात् । नाद्य इति । तौ प्रतिव्यक्ति

---

१ क. पु. न दृश्यते ।

**न चानन्तशक्तिमत्त्वेन तदुपपत्तिः । एकजातीयकार्यकरणे एकयैव सम-**

सुवर्णसूत्रम् ।

तेर्भगवतोऽनन्तशक्तित्वात् प्रतिव्यक्तिभेदो न तद्बाधक इत्यत आह—न चेत्यादि । *अनन्तशक्तिमत्त्वेनेति । अत्रानन्तश्चासौ शक्तिमांश्चेति समासः । अनन्ताश्च ताः शक्तय-

हरितोषिणी ।

स्वीक्रियत इत्यत आह—न चेति । न हीत्यर्थः । अनन्तशक्तिमत्त्वेनेति । अनन्ताश्च ताः शक्तयश्चानन्तशक्तय इति समासः, ता विद्यन्ते यस्मिन्नित्यनन्तशक्तिमान् तस्य भावोऽनन्तशक्तिमत्त्वं तेनेत्यर्थः । ननु कर्मधारयोत्तरं मत्वर्थीयप्रत्ययो न भवति, 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर' इति न्यायेन निषेधश्रवणादिति चेत्, न; वृत्तिद्वयकल्पनापेक्षया वृत्त्येककल्पनं लघीय इति लाघवमूलकोऽयं न्याय इति । तत्र 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुप' इति सूत्रेऽसुब्बत इति भाष्यप्रयोगेण लाघवानादरस्यापि बोधनेनाऽनित्योऽयं न्यायः । कारकशब्दरत्ने स्फुटमेतत् । न चासुब्बत इत्यत्र नञ्समासोत्तरं मतुप् प्रत्ययो, न तु कर्मधारयोत्तरमिति वाच्यम् । कर्मधारयपदस्य बहु-

गङ्गाधरभट्टी ।

भिन्नौ न संभवत इत्यर्थः । तदुपपत्तिरिति । 'परास्य शक्तिर्विविधैव' त्यादिश्रुतेर्भगवतोऽनन्तशक्तिकत्वेन प्रतिव्यक्तिभेदो न तद्बाधक इत्युपपत्तिः । श्रुतिबलाद्बहिलतया गौर-

---

टिप्पणी ।

* अनन्तशक्तिमत्त्वेनेति सुवर्णसूत्रम् । अत्रानन्तपदस्य नानारूपत्वमर्थः । शक्तिमत्पदस्य च तत्तच्छक्तिमत्त्वमर्थः । नीलत्वोत्पलत्वयोरिव सामानाधिकरण्यरूपाभेदेन कर्मधारयसमासः । तथा चेदमुक्तं भवति—भगवतो घटपटादिनानारूपेण परिणततया प्रतिरूपं तच्छक्तिद्वयमित्यर्थस्य विवक्षितत्वेन द्विवचनं पूर्वोक्तवाक्यस्थमुपपद्यते । अयमाशयः 'तथा च ब्रह्मवादे भगवतः सर्वरूपत्वात्तत्तच्छक्तिमत्त्वाद्वे' तिपुरस्तनपङ्क्त्या व्यक्तीभवति । तोषिणी त्विह नानाशक्तित्वमेवार्थः सुवर्णसूत्रकृतामाशयगोचर इति मत्वा कर्मधारयसमासे शक्त्यानन्त्यं नायातीति दूषणमुक्तवती । तत्तथार्थोऽन्वयो ननु परात्वेत्यवतरणस्थानन्तशक्तित्वादितिपदोक्तिनिबन्धनः । तत्तस्योपर्युक्ततात्पर्यमभिप्रयद्भिः सर्वभवनसामर्थ्यादिकमर्थान्तरं परिकल्प्यम् । अनन्तशक्तित्वादित्यस्य नानाशक्तित्वादित्यर्थेऽपि प्रतिव्यक्ति भेदो न तद्बाधक इत्यग्रिमग्रन्थासंगतिः । तद्बाधक इत्यत्र तच्छब्देन 'आविर्भावे' ति वाक्यं द्विवचनं द्वित्वं वा विवक्षणीयं स्यात् । तत्र हि नानाशक्तित्वमात्रकथनेनैषामन्यतमस्य प्रतिव्यक्तिभेदाबाध्यता संभवति । अर्थान्तरे तात्पर्याद्विरोधाभावेनाबाध्यतेति चेत्, फले केनचिदंशेन साम्येऽपि प्रतिपत्तिलाघवं शक्त्यानन्त्यं नायातीतिदूषणोद्धारश्चेतीयान् विशेषः । अत उपर्युक्ताशयोऽपि शोभनः ॥

वति सत्यनेकतत्कल्पने मानाभावाद्, गौरवाच्च । उक्तरीत्या कादाचित्कत्वहेतुरपि न निरूपयितुं शक्यः । न द्वितीयः, उक्तविरोधात् । भगवद्धर्माणां नित्यत्वात् । तथा सति उत्पत्तिस्तयोर्वाच्या । तर्हि घटादीनामेव तामङ्गीकुरु, किमन्तर्गडुभ्यामेताभ्याम् । अपसिद्धान्तश्च । तदुत्पादकं

सुवर्णसूत्रम् ।

श्चेति समासे कर्मधारयान्न मत्वर्थीय इति परिभाषासु निषेधान्मतुबभावापत्तेः । तथा च ब्रह्मवादे भगवतः सर्वरूपत्वात्तत्तच्छक्तिमत्त्वाच्च नोपपत्तिः । अनन्तशक्तित्वेनेति पाठे तु न कश्चित्सन्देहः । तत्र हेतुः—एकेत्यादि । तावतापि श्रुतेः कार्यस्य चोपपत्तावनेकतत्कल्पने श्रुत्यन्तरादेर्मानस्याभावात् । व्यसनमात्रेण कल्पनेऽपार्थनानापदार्थकल्पनागौरवाचेत्यर्थः । उक्तश्रुतेरेव प्रहिलतया तत्रापि प्रामाण्याङ्गीकारे दूषणान्तरमाह—उक्तेत्यादि । अनित्यविकल्पस्यावशिष्टत्वात्तेनापि दूषयति—न द्वितीय इत्यादि । अनित्यत्वपक्षो नेत्यर्थः । अपसिद्धान्त इति । प्रपञ्चमध्यपातिनोस्तयोरुत्पत्तिमत्त्वेनाब्रह्मत्वप्रसक्तौ सर्वस्य ब्रह्मात्मकत्वमिति सिद्धान्तहानिरित्यर्थः । अस्मिन्पक्षे तयोः स्वरूपासत्वं व्युत्पादयति—तदुत्पादकमित्यादि । सर्वपक्षसाधारणं दूषणान्तरमाह—तिरोभाव इत्यादिना ॥

हरितोषिणी ।

श्रीहीतरसमासपरत्वात् । इदं च गुणशिरोमणौ दीधितिकारैः कण्ठरवेणोक्तत्वादिति । श्रीसुवर्णसूत्रकारैस्तु—परिभाषाविरोधादनन्तश्चासौ शक्तिमांश्चेति समासः स्वीकृतः । परन्त्वत्र शक्त्यानन्त्यं नायातीति मूलविरोधान् अनन्तशक्तित्वेनेति पाठान्तरं स्वीकृतमित्यलं पल्लवितेन । अनन्तशक्तिमत्त्वस्वीकारे दूषणमाह—एकजातीयेति । तत्कल्पन इति । शक्तिकल्पने इत्यर्थः । ननु 'परास्य शक्तिर्विविधैव श्रूयते' इति वेदप्रामाण्यमस्ति । अथ च श्रुतिप्रामाण्याद् गौरवं दोषाय न भवतीत्यतो दूषणान्तरमाह—उक्तरीत्येति । एवं सति घटोपलम्भानुपलम्भयोः कादाचित्कत्वे हेतावुच्यमाने इति रीत्येत्यर्थः । आदावाविर्भावतिरोभावौ नित्यावनित्यौ वेति पक्षद्वयमुक्तम् । तत्रैतावता प्रबन्धेनाऽऽद्यः पक्षो दूषितः, इतः परं द्वितीयपक्षं दूषयितुमाह—न द्वितीय इति । विरोधादिति । भगवद्धर्माणां नित्यत्वेन स्वमतविरोधादित्यर्थः । अपसिद्धान्त इति । भवन्मते सर्वस्य ब्रह्मरूपत्वेन नित्यत्वम्, अनयोरनित्यत्वे स्वमतसिद्धान्तभङ्ग इत्यर्थः । ननु भगवच्छक्तिभ्यामाविर्भावतिरोभावाभ्यां घटस्तद्ध्वंसश्च जायत इति तयोरावश्यकत्वमित्यत आह—तदुत्पादक-

गङ्गाधरभट्टी ।

वाङ्गीकारेप्याह—उक्तरीत्येति । न द्वितीय इति । अनित्यपक्षो नेत्यर्थः । अपसिद्धान्त इति । प्रपञ्चमध्यपातिनोस्तयोरुत्पत्तिमत्त्वेनाब्रह्मत्वप्रसक्तौ सर्वस्य ब्रह्मात्मकत्वमिति सिद्धान्तहानिरित्यर्थः ॥

---

१ मुद्रितपुस्तके उक्तेति नास्ति । २ ग. पु. त्वेनापीति पाठः, शु. पु. त्वात्तमपि ।

च दण्डमुद्गरादिकमेव त्वया वाच्यम्, तच्च घटतद्ध्वंसोत्पादकमेव। तिरोभावश्च घटादेर्न वक्तुं शक्यः। तथा सति वस्तुसत्त्वया लौकिकप्रत्यक्षाविषयत्वेऽपि ध्वस्तो घटो योगिनोपलभ्येत । रूपवतः सतो योगिप्रत्यक्षविषयत्वनियमात् । न चैवम्, प्रमाणाभावात्, 'प्रजाश्च तुल्यकालीना नाधुना सन्ति कालिता' इति श्रीभागवतवाक्याच्चेति प्राप्ते—

१२ (११) अत्रोच्यते तत्स्वरूपं तच्छ्रुत्वाऽपास्य संशयान् ।
ब्रह्मवादे कृतात्मानः प्राप्नुवन्तु हरिं बुधाः ॥

अनुभवविषयत्वयोग्यता आविर्भावः । तदविषयत्वयोग्यता

सुवर्णसूत्रम् ।

(११) एवं पूर्वपक्षेण तयोर्निःस्वरूपतया खपुष्पतुल्यत्वे साधिते प्रथमतः खपुष्पतुल्यतां निराकर्तुं तत्स्वरूपनिरूपणं प्रतिजानते—अत्रोच्यते तत्स्वरूपमित्यादिना । संशयानिति । पूर्वोक्तश्रुतितद्विरुद्धयुक्तिकृतान् । कृतात्मानः । कृतबुद्धयः । तत्र पूर्वोक्तदूषणासंचाराय पूर्वं तयोर्लक्षणमाहुः—अनुभवेत्यादि । अत्रानुभवपदं साक्षात्कारपरम् ।

हरितोषिणी ।

मिति । घटतद्ध्वंसोत्पादकमित्यर्थः । त्वया वाच्यमिति । दण्डेन कृत्वा घटो जायत इति दृश्यते, अथ च मुद्गरेण कृत्वा घटध्वंसोपि जायत इति भगवच्छक्त्योः कारणतावादिना त्वयापि दण्डमुद्गरादिकं कारणमवश्यं वाच्यमित्यर्थः । ननु तदप्यस्तु, भगवच्छक्तिद्वयमप्यस्त्वित्यत आह—तच्चेति । दण्डमुद्गरादिकं चेत्यर्थः । तथा च भगवच्छक्त्योः स्वीकारे किं प्रयोजनमिति भावः । युक्तिसिद्धमपरं दूषणमाह—तिरोभावश्चेति । तथा सतीति । तिरोभावस्वीकारे सति । वस्तुसत्त्वयेति । तिरोभावे पदार्थनाशो न जायत इति भावः । न चैवमिति । ध्वस्तघटस्य योगिप्रत्यक्षविषयत्वं नास्तीत्यर्थः । ननु कुतो नास्तीत्यत आह—प्रमाणाभावादिति । प्रत्यक्षादिप्रमाणाभावादित्यर्थः । ध्वंसानन्तरं पदार्थसत्त्वं नास्तीत्यत्र प्रमाणमाह—प्रजाश्चेति । एतावता पूर्वपक्षेणाविर्भावतिरोभावयोर्वन्ध्यापुत्रवद्वस्तुसत्त्वैव नास्तीति साधितम् ॥

(११) इतः परं तत्सत्त्वां साधयितुं सिद्धान्तमाहुः—अत्रोच्यत इति कारिकादिना । अत्र तत्स्वरूपमुच्यते; तत् श्रुत्वा बुधाः संशयानपास्य कृतात्मानः कृतः ब्रह्मणि निश्चितः आत्मा अन्तःकरणं येषामेतादृशाः सन्तः हरिं प्राप्नुवन्तीत्यन्वयः ॥

आविर्भावतिरोभावयोरलीकत्वनिवारणार्थं तल्लक्षणमाहुः—अनुभवेति । अनुभवामी-

गङ्गाधरभट्टी ।

(११) कृतात्मान इति । कृतबुद्धयः । अनुभवविषयत्वरूपयोग्यतेत्यर्थः । अत्रानुभवपदं प्रत्यक्षमात्रपरम् । एतेनानुभवत्वस्यानुमित्यादिसाधारणतयाऽनुभवविषयत्वस्यानाविर्भू-

१ मु. पु. ग्वि इति पाठः । २ मु. पु. तत् पाठः ।

आविर्भावतिरोभावयोर्लक्षणनिरूपणमुखेन मण्डनम्।

[1]तु तिरोभावः। ते च वस्तुसत्त्वेनैवावच्छिद्येते। न *अलीके ते संभवतः, तयोर्धर्मत्वेन निराश्रयत्वासंभवात्॥

सुवर्णसूत्रम्।

तदन्यज्ञानोत्तरमनुभवामीत्यनुव्यवसायाभावात्। विषयत्वं विषयविषयिणोः सम्बन्धरूपं पदार्थान्तरम्। अविषयत्वं †तदभावस्तद्विरुद्धमर्थान्तरं वा। योग्यतापदं तु तदुक्तार्थनि-[2]ष्कर्षार्थमनुवादमात्रम्, ‡[3]तद्रूपा योग्यतेति। तथा च साक्षात्कारविषयत्वमाविर्भावः, तदविषयत्वं तिरोभाव इत्यर्थः। तत्स्वरूपमुक्त्वा ताभ्यां वस्तुसत्तां साधयन्ति—ते चेत्यादि॥

हरितोषिणी।

त्यनुव्यवसायाभावादनुभवपदेन साक्षात्कार एव गृह्यते। तद्विषयत्वं विषयताविशेषः, स्वरूपसंबन्धरूपं पदार्थान्तरं वेत्यन्यदेतत्। योग्यता च तद्वत्त्वम्। तथा च साक्षात्कारविषयतावत्त्वमाविर्भावः, तदभाववत्त्वं च तिरोभाव इत्यर्थः। एतेन तौ पदार्थावेव न भवत इति निरस्तम्। एवं च धर्मरूपयोरेतयोर्धर्म्यपेक्षाऽऽवश्यकीत्याहुः—ते चेति। एतेन तिरोभावेपि वस्तुसत्ताया विद्यमानत्वेनैतयोरेकधर्मिणि सत्त्वेन विरुद्धत्वं निरस्तम्॥

गङ्गाधरभट्टी।

तपदार्थेऽपि सत्त्वात् तत्राविर्भूतत्वव्यवहारापत्तिरित्यपास्तम्। ततो योग्यतापदं स्वरूपानुवादार्थे। तेन प्रत्यक्षविषयत्वयोग्यताया अनाविर्भूतपदार्थे सत्त्वेऽपि नातिव्याप्तिः। अत एव प्राकट्यापरनामा पदार्थविशेषो ज्ञाततैवाविर्भाव इति भाट्टाः। यत्त्वनुभवविषयत्वयोग्यता अनुभवविषयतानियामिका शक्तिराविर्भावः। अन्यत्र सिद्धायाः शक्तेराविर्भूतपदार्थेष्वपि सम्बन्धकल्पनान्नातिरिक्तकल्पनापि। न चैवं घटत्वोच्छेदः। दण्डादिरूपाविर्भावसामग्रीजन्यतावच्छेदकत्वेन तस्यापि सिद्धेः। जन्यत्वं चाविर्भावगर्भमेवेति। तन्न; लाघवेन घट-

टिप्पणी।

* अलीक इति सप्तम्यन्तम्।

† तद्विरुद्धमिति। अविषयत्वं विषयताऽभावश्चेत्स्वसिद्धान्ते अभावानां तिरोभावानतिरिक्ततया अनुभवविषयत्वाभाव इति तिरोभावलक्षणस्य अनुभवविषयत्वतिरोभाव इति फलितोऽर्थः स्यात्। एवं च तिरोभावलक्षणे तिरोभावप्रवेशादात्माश्रयः। अतः पक्षान्तरमुक्तम्—तद्विरुद्धमिति। अधर्मासुरशब्दादाविव 'अविषयत्वे'तिमूलस्थपदे विरोधरूपो नञर्थो ग्राह्यः। तथा च अनुभवविषयत्वविरोधित्वं तिरोभावत्वमिति फलति। तद्विरोधि वस्तु किमिति वादिनो विशेषजिज्ञासायां विशेषविवेचनस्य परस्तात्प्रस्तोष्यमाणतया वादिविप्रतिपत्तिशमनसौकर्याय सामान्यत उक्तम्—अर्थान्तरं वेति॥

‡ तद्रूपा योग्यतेति। अनुभवविषयत्वरूपा योग्यतेत्यर्थः।

१ शु. पु. तु० नास्ति। २ घ. पु. निष्कर्षार्थं इति नास्ति। ३ च. पु. दः इति।

**किञ्च, भावित्वेन भूतत्वेन च व्यवह्रियमाणयोर्वस्तुनोः सत्ता स्वयाऽप्युररीकार्या, तयोर्घटादिधर्मत्वेन तदभावे निराश्रयत्वप्रसङ्गात् ।**

सुवर्णसूत्रम् ।

एवं विवक्षया पूर्वोक्ते लक्षणे स्वरूपे चाङ्गीकृते तिरोभावदशायामपि वस्तुसत्तोपगमेन तद्धर्मभूतयोरेतयोर्विरुद्धत्वस्यानपेतत्वेन वस्त्वनिर्वाच्यत्व–शून्यवादापत्ति–साधनप्रवृत्त्यनुपपत्त्युपलम्भादिकादानिरूपत्वानुपपत्त्यपसिद्धान्ता अवशिष्यन्ते । तेषु पूर्वं शून्यवादापत्तिं परिहर्तुं यादिनं प्रत्यनिर्वाच्यतापत्तिं प्रतिपन्था वदिष्यन्तो भूतभावित्वदशायामद्वैतेनाशिकेनानङ्गीक्रियमाणां वस्तुसत्तां, गलेपादुकान्यायेनाङ्गीकारयन्ति—किञ्चेत्यादि । स्वयेति । वर्तमानकाले वस्तुसत्तामुपगच्छताऽद्वैतेनाशिकेन । तत्र हेतुः—तयोरित्यादि । भावित्वं यदि कारणेन सम्बद्धं, तदा वर्तमाने कपाले भावि कपालमिति प्रतीतिः स्यात् । *अथाजन्यं तद् घटत्वादिवत्कार्येणैव सम्बध्यते, न कारणेनेति चेन्, तदा अजन्यभावत्वेन नित्यत्वात्कारणव्यापारोत्तरं तदनाशेन कदापि घटादिकार्ये सत्तासम्बन्धो न स्यादिति शून्यवादापत्तिः । प्रत्यक्षविरोधश्च । अतो घटादीनां सत्ता आवश्यकी । तथा सति भावित्वमनित्यम्, अनित्यभावत्वाच्च जन्यम्, जन्यत्वाच्च न पूर्वकाले इति कारणव्यापारात्पूर्वं घटादिसत्ताङ्गीकार्या । सा चेन्नाङ्गीक्रियते तदा भावित्वस्य निराश्रयत्वम् । एवं भूतत्वमपि कारणसम्बद्धं चेद्वर्तमाने कपाले ध्वस्तं कपालमित्यापत्तिः । अतस्तदापि घटादिसत्ताङ्गीकार्या । अतस्तयोर्धर्मत्वेन वृत्तिमत्त्वेन, तदभावे प्रागभावध्वंसाधिकरणकाले

हरितोषिणी ।

ननु मया तिरोभावदशायां वस्तुसत्ता न स्वीक्रियत इत्यत आहुः—किञ्चेति । उररीकार्येति । स्वीकार्येत्यर्थः । भावी घटो भूतो घट इति व्यवहारस्तु त्वया स्वीक्रियते; घटसत्ता तु वर्तमानकाल एव स्वीक्रियते इत्यत आहुः—तयोरिति । भावित्वभूतत्वयोरित्यर्थः । धर्मत्वेन वृत्तिमत्त्वेन । तदभावे इति । भाविभूतकाले, अथवा घटप्रागभा-

गङ्गाधरभट्टः ।

त्यादेरेव तादृशविषयतानियामकत्वसंभवात् । दाहादिकार्यान्तरनियामकत्वेनान्यत्र सिद्धायाः शक्तेस्तत्र सम्बन्धे, घटादीनां दाहकत्वापत्तेः, अनन्तशक्तीनां कल्पने गौरवात् । अथ श-

टिप्पणी ।

* अजन्यमिति । यथाऽजन्यं घटत्वपटत्वादि स्वाश्रयघटपटादिनाशेऽपि न नश्यति, न च कपालादितत्कारणकलापमाश्रयति, किन्तु निराश्रयमेव तिष्ठतीति न्यायनये, तथाऽजन्यं भावित्वं कार्येण घटपटादिनैव संबध्यते, स्वसत्तादशायां तस्यासत्त्वेन निराश्रयं च तिष्ठतीति भावः ॥

१ मु. पु. रेतयोरिति नास्ति । २ क. पु. प्रतिपदिष्यन्त इति पाठः ।

**एतेन वर्तमानप्रागभावप्रतियोगित्वं भावित्वम्, वर्तमानध्वंसप्रतियोगित्वं ध्वस्तत्वमिति निरस्तम् । न च कालोपाधिरेव तदाश्रय इति वाच्यम् । तत्र तद्वैशिष्ट्यप्रतीतिप्रसङ्गस्य दुर्निवारत्वात् ॥**

सुवर्णसूत्रम् ।

घटादिसत्ताभावे । तथा च नित्यत्वपक्षे वर्तमानवस्त्वनिर्वाच्यत्वापत्तिर्यथा मम, तथा वस्त्वनित्यत्वपक्षे भूतभाविवस्त्वनिर्वाच्यत्वं तवापीति तौल्यान्न वयमत्र पर्यनुयोज्या इत्यर्थः । ननु भावित्वे भूतत्वे च निरुक्ते भाविभूतवस्तूनां निर्वाच्यत्वस्यानायाससिद्धत्वान्न तौल्यमित्यत आहुः—एतेनेत्यादि । एतेन निराश्रयत्वप्रसङ्गरूपेण दूषणेन । तथा चोक्तदूषणस्य निरुक्तयनन्तरमपि तादवस्थ्यान्न तौल्यपरिहार इत्यर्थः । वर्तमानकालोत्तरकालोत्पत्तिकत्वं भावित्वमिति लक्षणेऽपि दूषणतादवस्थ्यं बोध्यम् । ननु प्रागभावाद्यवच्छेदकस्य सूर्यपरिस्पन्दादिरूपकालोपाधेर्भावित्वाद्याश्रयत्वाङ्गीकारान्न पूर्वोक्तदूषणावकाश इत्यत आहुः—न चेत्यादि । स कालोपाधिर्भावी भूतो वर्तमानो वा ? । *यद्याद्यौ, तदा दोषतादव-

हरितोषिणी ।

वाधिकरणकाले ध्वंसाधिकरणकाले घटसत्ताऽभावे इत्यर्थः । अन्यदेव भावित्वं भूतत्वं चोच्यत इत्यत्र दूषणमाहुः—एतेनेति । निराश्रयत्वप्रसङ्गादिति दूषणेनेत्यर्थः । निरस्तमिति । तथा च भावी घटो भूतो घट इति व्यवहारविषयत्वं भावित्वं भूतत्वं नोच्यते, किन्त्वेतादृशप्रतियोगित्वरूपमुच्यते । तस्यापि वस्तुधर्मत्वेन भाविभूतघटाभावे निराश्रयत्वं स्यादिति भावः । एतेन भाविभूतवस्तूनामनिर्वाच्यत्वं निरस्तम् । शङ्कते—न चेति । कालोपाधिरिति । प्रागभावाद्यवच्छेदकसूर्यपरिस्पन्दरूप इत्यर्थः । तदाश्रय इति । भूतत्वाद्याश्रय इत्यर्थः । समाधानमाहुः—तत्रेति । तत्र कालोपाधौ । तद्वैशिष्ट्येति । भूतत्वादिवैशिष्ट्यप्रतीतिप्रसङ्गस्येत्यर्थः । अयं भावः—कालोपाधिस्त्रिविधः—भावी भूतो वर्तमानश्चेति । तत्र यदि भाविरूपस्तदा तत्र भूतत्ववैशिष्ट्यप्रतीतिप्रसङ्गः, यदि भू-

गङ्गाधरभट्टी ।

किंभिरेव निर्वाहे पृथग् घटत्वादिधर्मो नाङ्गीकर्तव्य इति चेन्, न; मण्यादिनौष्ण्यानुपलम्भेऽपि वह्नित्वोपलम्भात् । अत एव 'तां शक्ती मुरवैरिण' इति निबन्धे । घटत्वमिति घटगतो धर्मः कश्चिदस्त्सद्भावाद् घटपदवाच्यता धर्मिण इति पत्रावलम्बने चोक्तम् । स च

---

टिप्पणी ।

* यद्याद्यावित्यादि । कालोपाधिर्भावी भूतो वा चेद् भावित्वभूतत्वव्यवहारकाले वादिना तत्सत्ताऽनभ्युपगमेन तद्धर्मभूतभावित्वादेर्निराश्रयताप्रसङ्गरूपो दोषस्तदवस्थ इत्याशयः ॥

**ननु यथा तन्त्वधिकरणकपटनिरूपितसमवायस्य काले सत्त्वेऽपि त-
त्समवेतत्वेन न पटे प्रतीतिः। तेन सम्बन्धेन तत्रासत्त्वात्। तथात्र त-**

सुवर्णसूत्रम्।

स्थ्यम्, यद्यन्यस्तदा वर्तमाने प्रागभावावच्छेदके तस्मिन् भाविभूतप्रतीतिप्रसङ्ग इत्युभ-
यतः पाशपात इत्यर्थः ॥

उक्तदूषणं वारयितुं प्रयतते—**नन्वित्यादि**। **तेन सम्बन्धेनेत्यादि** । तेन सम्ब-
न्धेन **तत्रासत्त्वात्** काले समवायस्योदासीनतया सत्त्वेन पटवृत्त्यनियामकतया पटस्य

हरितोषिणी।

स्वरूपस्तदा भावित्वाश्रयत्वस्य तत्र सत्त्वाद् भावीतिव्यवहारप्रसङ्गः, यदि वर्तमानरूप-
स्तदा वर्तमानकालेऽपि उत्तरसूर्यपरिस्पन्दस्य प्रागभावः, पूर्वसूर्यपरिस्पन्दस्य ध्वंसः, तत्र
प्रागभावावच्छेदकसूर्यपरिस्पन्दादिरूपवर्तमानकालोपाधौ भूतत्वप्रतीतिः, एवं ध्वंसावच्छे-
दकतादृशकालोपाधौ भावित्वप्रतीतिप्रसङ्गो वारयितुमशक्य इति बोध्यः ॥

शङ्कते—**नन्विति**। **काले सत्त्वेऽपीति**। अवयवावयविनोः समवायात् पटनिरूपि-
तसमवायस्तन्तौ वर्तमान इति कृत्वा स तन्त्वधिकरणको जातः, तस्याश्रयः कालोऽपि
जातः, कालस्य जगदाधारत्वादिति वाक्यात्, तस्य काले सत्त्वेऽपीत्यर्थः । तत्समवेतत्वे-
**नेति**। कालसमवेतत्वेनेत्यर्थः । यथा तन्तुसमवेतः पट इति प्रतीतिस्तथा कालसमवेतः
पट इति न प्रतीतिरित्यर्थः । कुतो न प्रतीतिरित्यत आह—**तेन सम्बन्धेनेति** । सम-
वायसम्बन्धेनेत्यर्थः । तत्र काले । **तथात्रेति** । प्रागभावप्रतियोगित्वं स्वरूपसम्बन्धेन

गङ्गाधरभट्टी।

ब्रह्मसत्तातो नातिरिच्यते, *भावव्युत्पत्तेः। एवं च हरिशक्तित्वमपि सिद्धम्। अत्र वदन्ति
अनुभवविषयतानियामकक्षणसम्बन्ध आविर्भावः। कार्यमात्रनियामकत्वेन क्षणस्यानुभव-
विषयतानियामकत्वस्यापि कल्पनात्। इन्द्रियसंयोगस्यानुभवविषयतानियामकत्वाभ्युपगमेपि
इन्द्रियसंयोगनियामकक्षणसम्बन्ध आवश्यक इति परम्परया क्षणसम्बन्धोऽस्त्येव। आद्यक्षण-
सम्बन्ध उत्पत्तिः। आविर्भावस्तु स्थितिकालसाधारण इति भेद इति दिक्प्रदर्शनम् ॥

**ननु यथेति**। अयमर्थः—तन्तुषु समवायसम्बन्धेन पटोऽस्तीति कृत्वा तन्तुषु समवेतः

टिप्पणी।

* भावव्युत्पत्तेरिति गङ्गाधरभट्टी। घटस्य भावो घटत्वमिति व्युत्पत्तिः। भावश-
ब्दश्च भूधातुनिष्पन्नतया सत्तावाचकः। एवं च घटसम्बन्धिनी सत्तेत्यर्थः। सा चेयं सत्ता
चिदानन्दयोस्तिरोहितत्वेऽपि ब्रह्मणो घटपटादिषु जडेषु सत्त्वेनानुवृत्तत्वाद्ब्रह्मण एवे-
त्याशयः ॥

त्प्रतियोगित्वाभावान्न तथा प्रतीतिरिति चेत्, न । प्रतियोगित्वस्य स्वरूपसम्बन्धविशेषत्वेनाङ्गीकारात् । तस्य च स्वरूपद्वयात्मकत्वात्, तस्य चात्रापि सत्वात् ॥

सुवर्णसूत्रम् ।

कालिकविशेषणतया काले सत्त्वमिति समवायसम्बन्धेन काले अवर्तमानत्वात् । तथात्र तत्प्रतियोगित्वाभावाद्येन सम्बन्धेन प्रागभावादिप्रतियोगित्वं घटादौ तेन सम्बन्धेनात्र प्रागभावाद्यधिकरणकाले तत्प्रतियोगित्वाभावान्न तथा प्रतीतिः—न प्रागभावाद्यधिकरणकाले भावित्वादिवैशिष्ट्यप्रतीतिरित्यर्थः । एतां युक्तिं दूषयन्ति—नेत्यादि । त्वदुक्तरीत्या काले भावित्वादिवैशिष्ट्यप्रतीत्यभावो नोपपद्यते । कुतः ? पटस्थले पटस्वरूपस्य तत्र तत्र तद्वृत्तिनियामकसम्बन्धयोश्च भेदान्न पटे कालसमवेतत्वप्रतीतिः । प्रकृते तु प्रतियोगित्वस्य स्वरूपसम्बन्धविशेषत्वेनाङ्गीकारात् तस्य च स्वरूपद्वयात्मकत्वात् । '*अभावविरहात्मत्वं वस्तुनः प्रतियोगिते'ति प्राचीनलक्षणस्य *भेदप्रतियोगि-

हरितोषिणी ।

पटे, न तु काल इति तत्र तत्प्रतियोगित्वाभावादित्यर्थः । न तथा प्रतीतिरिति । प्रागभावाधिकरणकाले भावित्वादिवैशिष्ट्यप्रतीतिर्नेत्यर्थः । अत्र दूषणमाहुः—नेति । प्रतियोगित्वं समवायवदतिरिक्तं न भवतीत्याशयेनाहुः—प्रतियोगित्वस्येति । प्रतियोगित्वं स्वरूपसम्बन्धविशेष इति नैयायिकैरुक्तत्वादित्यर्थः । तस्य चेति । स्वरूपसम्बन्धविशेषरूपप्रतियोगित्वस्य चेत्यर्थः । स्वरूपद्वयात्मकत्वादिति । प्रागभावादिस्वरूपप्रतियोगिस्वरूपद्वयात्मकत्वादित्यर्थः । तस्य चेति । स्वरूपसम्बन्धस्य चेत्यर्थः । अत्रापि कालेऽपि । तथा च स्वरूपद्वयं—प्रागभावस्वरूपं, प्रतियोगिस्वरूपं च । एवं च प्रतियोगिस्वरूपमादाय प्रतियोगिनि यथा सम्बन्धसिद्धिः, तथा प्रागभावे कालस्वरूपतारूपसम्बन्धसिद्धिरिति भावः ॥

गङ्गाधरभट्टी ।

पट इति प्रतीतिः । काले तु पटः समवायेन नैवास्ति, किन्तु कालिकसम्बन्धेनेति कृत्वा काले समवेतः पट इति नास्ति प्रतीतिः । तथात्र काले वर्तमानप्रागभावध्वंसप्रतियोगित्वं नास्तीति काले भावित्वादिवैशिष्ट्यप्रतीतिर्नेति चेत्, नेति । तस्य चात्रापीति । प्रतियोगित्वं स्वरूपसम्बन्धविशेषः । स च घटप्रागभावैतद्द्वयात्मकः । एवं कालप्रागभावैतद्द्वयात्मकोऽपि वक्तुं शक्यः, स्वरूपद्वयस्य कालेपि सत्त्वादित्यर्थः ॥

---

टिप्पणी ।

* अभावविरहात्मत्वमिति । अभावाभावत्वं प्रतियोगित्वमित्यर्थः । भेदप्रतियोगीत्यादि । घटभेदाभावः प्रतियोगितावच्छेदकघटत्वादिस्वरूपो न तु घटस्वरूपः । तथात्वे

---

१ कालिकत्वम् इ० पु० पाठः । २ इ० पु० वैशिष्ट्याभावो नोप० इति पाठः । ३ ग. पु. योगेनेति पाठः ।

नतु तत्सत्त्वेऽपि स विशेषो नात्रेति चेत्, हन्त? स को वा? यत्रेदृशी तव श्रद्धा । न दृष्टः, प्रमाणाभावात् । ननु तद्द्वयसत्त्वेऽपि वैशिष्ट्या-

सुवर्णसूत्रम् ।

घटादावव्याप्तेस्तद्धर्मे घटत्वादावतिव्याप्तेश्च दुष्टतया प्रतियोगित्वस्य स्वरूपसम्बन्धविशेषत्वेन नव्यैरङ्गीकारात्तस्य प्रतियोगित्वस्यानुयोगिज्ञानाधीनज्ञानकत्वेनानुयोगि (स्वरूपद्वयात्मकत्वात् ।) तस्य स्वरूपद्वयस्यात्रापि कालस्थलेऽपि सत्त्वात् । तथा चात्र स्वरूपद्वये विचार्यमाणे प्रागभावादिस्वरूपं प्रतियोगिस्वरूपं चेति वक्तव्यम् । तथा सति यथा तत्र प्रतियोगिस्वरूपमादाय सम्बन्धसिद्धिस्तथात्र कालस्वरूपमादायेति सम्बन्धस्य स्वरूपस्य च तौल्येन तस्य स्वरूपसम्बन्धस्यात्र कालेऽपि सत्वान्न समवायदृष्टान्तेनेष्टसिद्धिरित्यर्थः ॥

स विशेष इत्यादि । प्रतियोगिनि प्रतियोगिस्वरूपकृतः सम्बन्धः, काले कालस्वरूपकृत इति सम्बन्धघटकीभूतस्वरूपभेदाद्यो विशेषः प्रतियोगिनि, स न काल इति तादृशप्रतीत्यभाव उपपद्यत इत्यर्थः । तं विशेषं निर्णेतुं पृच्छन्ति—हन्तेत्यादि । प्रतियोगि-

हरितोषिणी ।

शङ्कते—नन्विति । तत्सत्त्वेपीति । स्वरूपसम्बन्धस्य काले सत्त्वेऽपीत्यर्थः । स विशेष इति । प्रतियोगिनि प्रतियोगिस्वरूपकृतः सम्बन्धः । काले कालस्वरूपकृतः सम्बन्धः । एवं च सम्बन्धद्वयघटकीभूतं स्वरूपं भिन्नम् । तत्र काले यो विशेषः स प्रतियोगिनि नास्ति, प्रतियोगिनि यो विशेषः, स काले नास्तीति तादृशप्रतीत्यभावोपपत्तिरित्यर्थः । समाधानं कर्तुं विशेषं पृच्छन्ति—हन्तेति । हन्त इति खेदे । विशेषपर्यन्तानुधावने वादिपक्षस्यात्यन्तदौर्बल्यं सूचयितुं हन्तेत्युक्तम् । विशेषो दृष्टो वा कल्प्यो वेति पक्षद्वये आद्यं दूषयन्ति—न दृष्ट इति । प्रतियोग्यपेक्षया अन्यो न दृष्ट इत्यर्थः । द्वितीयं दूषयितुं शङ्कते—नन्विति । प्रतियोगिसत्त्वे अभावप्रतीतिर्न जायत इत्यविवादम् । एवं

गङ्गाधरभट्टी ।

ननु तद्द्वयेति । अयमर्थः—काले स्वरूपद्वयसत्त्वेपि भावित्वादिवैशिष्ट्यं न प्रतीयते,

टिप्पणी ।

तु कपाले घट इतिवत् कपाले घटभेदो नास्तीत्यपि प्रतीयेत । न च घटभेदो नास्तीति प्रतीतेर्घटत्वविषयतायां मानाभावः । अवच्छेदकतया सिद्धेन घटत्वेनैव तदुपपत्तौ पदार्थान्तरविषयत्वकल्पने गौरवात् । अतः अभावाभावस्य प्रतियोगिस्वरूपत्वम्; अन्योन्याभावाभावस्य प्रतियोगितावच्छेदकस्वरूपत्वमिति नियमद्वयमेव युक्तम् । इदमेवाभिप्रेत्य भेदप्रतियोगिनि घटादावव्याप्तेस्तद्धर्मे घटत्वादावतिव्याप्तेश्चेत्युच्यते ॥

१ मु. पु. 'योगिनः' । २ मु. पु. कोष्ठकान्तर्गतः पाठो नास्ति ।

प्रतीत्यन्यथानुपपत्त्या सम्बन्धान्तरमन्तरेण विशिष्टप्रत्ययजननयोग्यत्वलक्षणः [1]स कल्प्यते इति चेद्, मैवम्। उक्तरूपस्यापि काल एव सत्त्वं

सुवर्णसूत्रम्।

स्वरूपकृतः, ([2]अभावनिरूपकत्वरूपो वा) अन्यो वा, सोऽपि दृष्टः कल्प्यो वेति विकल्प्याद्यं द्वयं दूषयन्ति—नेत्यादि। प्रमाणाभावादिति। प्रतियोगिनोऽन्यस्य चासत्त्वेनाविषयतया तदभावादित्यर्थः। कल्प्यत इति। स्वरूपसम्बन्धस्य स्वरूपात्मकत्वात्तत्र *सखण्डोपाधिसामान्यरूपोऽनियतपदार्थ[3]धादित्वात्कल्प्यत इत्यर्थः। तं दूषयन्ति—मैवमित्यादि। कस्य स्वरूपे कल्प्यते? प्रतियोगिनो वा, नि[4]रूपकस्य प्रागभावादेर्वा, कालस्य

हरितोषिणी।

च यत्र घटो वर्तते तत्र घटाभाववत्ताबुद्धिर्न जायते। इदं तु सामान्यतो घटोत्पत्त्यनन्तरमनुभवसिद्धम्। यदा घटोत्पत्तेः पूर्वमपि घटसत्त्वं स्वीक्रियते, तदा तत्र घटोऽपि वर्तते, कालोऽपि वर्तते, इति घटकालरूपप्रतियोगिद्वयसत्त्वेऽपि अयं घट इति भूतले संयोगरूपस्य, कपाले समवायरूपस्य, घटवैशिष्ट्यस्य भानं न जायते इति वैशिष्ट्यप्रतीतिरवश्यं स्वीकर्तव्या। एवं च तादृशवैशिष्ट्यप्रतीत्यन्यथानुपपत्त्या घटविशिष्टप्रतीतिजनकत्वरूपो विशेषो घटे वर्तते, काले नास्तीति कल्प्यते। एवं च तादृशविशेषाभावान्न तथा प्रतीतिरित्यर्थः। सम्बन्धान्तरमन्तरेणेति। संयोगसम्बन्धेन भूतले घटरूपप्रतियोगिसत्त्वे संयोगसम्बन्धेन घटवैशिष्ट्यप्रतीतिर्जायते, सम्बन्धान्तरेण न जायत इत्यत उक्तम्—सम्बन्धान्तरमन्तरेणेति। इत्थं च घटोत्पत्तेः पूर्वं कालिकादिसम्बन्धेन घटसत्त्वेऽपि संयोगसम्बन्धेन घटवैशिष्ट्यप्रतीतिर्न जायत इति घटोत्पत्त्यनन्तरमेव तादृशप्रतीतिसत्त्वेन[5] तादृशप्रतीतिजननयोग्यत्वलक्षणो विशेषः स्वीकर्तव्यः। तदभावे घटकालोभयसत्त्वे वैशिष्ट्यप्रतीतिर्जायते, सा न स्यादित्यनुपपत्तिरिति ध्येयम्। दूषयन्ति—मैवमिति। उक्त-

गङ्गाधरभट्टी।

ततोऽन्यथानुपपत्त्या एवं कल्प्यते—स्वरूपसम्बन्धविशेषादितरसम्बन्धं विना विशिष्टप्रतीतिजनकः घटादौ भावित्वादिवैशिष्ट्यप्रतीतिजनकः, कालादौ वैशिष्ट्यप्रतीतिव्यावर्तकः स्वरूपसम्बन्धविशेष एवेति। दण्डीत्यादौ संयोगेन दण्डवैशिष्ट्यप्रतीतिर्दृष्टा, सम्बन्धं विना

---

टिप्पणी।

* सखण्डोपाधिसामान्यस्वरूप इति। सम्बन्धान्तरमन्तरेणेत्यादेर्विशेषस्वरूपस्य बहुपदार्थघटिततया सखण्डोपाधित्वम्॥

---

१ सु॰ पु॰ 'स' नास्ति। २ कोष्ठकान्तर्गतः पाठः क्वचिन्नास्ति। ३ क॰ पु॰ घादिना॰। ४ निरूप्यस्येति घ॰ पु॰ ख॰ पु॰ पाठः। ५ सम्भवेन।

त्वया वाच्यम् । तथा चोक्तदूषणभिया तत्समवायस्य प्रयोजकत्वं वा-
च्यम् । तथा च तदा समवाय्यभावेन उक्तयोग्यत्वसमवायस्य कुत्रापि
वक्तुमशक्यत्वात् कालाश्रयत्वस्याप्यसिद्धेः । जन्यभावस्यान्यत्र समवे-

सुवर्णसूत्रम् ।

वा । नाद्यः, तस्यैवासत्त्वात् । न द्वितीयः, निरूपके निरूप्यधर्माधारत्वस्य काप्यसिद्ध-
त्वात् । वर्तमाने तस्मिन् भावीत्यादिप्रतीत्यापत्तेश्च । अतः परिशेषात्काले तत्सत्त्वं वाच्यम् ।
( * तथा च तद्वृत्तिनियामकसम्बन्धविचारे वैशिष्ट्याप्रतीत्यन्यथानुपपत्तिभिया तस्य जन्य-
भावत्वात्तत्समवायस्य तथात्वं वाच्यम् ।) तथा सत्युक्तरीत्या तदसिद्धेरित्यर्थः । तत्र हेतुः
—जन्यभावस्येति । नश्वरभावत्वेन जन्यत्वेन व्याप्तेर्भावित्वप्रतीतिजनकस्य तस्य जन्य-

हरितोषिणी ।

रूपस्यापीति । उक्तरूपस्य विशेषस्यापीत्यर्थः । काल एवेति । एवकारेण घटप्रागभाव-
योर्व्यवच्छेदः । घटस्य त्वन्मते पूर्वमभावात्तत्र विशेषः स्थातुं न शक्यते । नापि निरूपके
प्रागभावेऽपि । तत्र घटनिष्ठविशेषाभावात् । ननु अस्तु काले सत्त्वं, को दोष इत्यत आहुः
—तथा चेति । उक्तदूषणभिया वैशिष्ट्याप्रतीत्यन्यथानुपपत्तिभिया तत्समवायस्य
उक्तयोग्यत्वसमवायस्य तदा घटोत्पत्तेः पूर्वं समवाय्यभावेन घटाभावेन उक्तयोग्य-
त्वसमवायस्य विशिष्टप्रत्ययजननयोग्यत्वसमवायस्य । वक्तुमशक्यत्वादिति । तथा च
तस्याऽप्रसिद्धत्वमिति भावः । अप्रसिद्धस्य कालाधारत्वं कुतो न स्वीक्रियते इत्यत आहुः
—जन्यभावस्येति । जन्यभावस्य घटादेः अन्यत्र मृत्तिकादौ । यत्र जन्यत्वं तत्र

टिप्पणी ।

* तथा च तद्वृत्तीत्यादि । तद्वृत्तिनियामकसम्बन्धविचारे सम्बन्धान्तरमन्तरेणे-
त्यनेन कल्प्यमानस्य विशेषस्य स्वरूपसम्बन्धेन भावित्वादिविशिष्टप्रतीतिजनकत्वं पूर्वमु-
क्तम् । तदिदानीं विशेषस्य काले सत्त्वापादनेन पूर्वोक्तसम्बन्धेनास्य तथात्वं चेत्सम्बन्धस्यात्र
काले सत्त्वेन विशिष्टप्रत्ययः स्यात् । न भवतीत्यतो भावित्वादिविशिष्टप्रतीतिजनको न
स्वरूपसम्बन्धः, किन्त्वन्य इति विचारे, वैशिष्ट्याप्रतीत्यन्यथानुपपत्तिभिया काले वा
भावित्वादिवैशिष्ट्याप्रतीतिः, सा भावित्वादिविशिष्टप्रतीतिजनकसम्बन्धान्तरस्वीकारं विना
नोपपद्यत इतिभिया तस्य विशेषस्य जन्यभावत्वात् तत्समवायस्य भावित्वादिविशिष्ट-
प्रतीतिजननयोग्यस्वरूपविशेषनिरूपितसमवायस्य तथात्वं भावित्वादिवृत्तिनियामकत्वं वा-
च्यम् । तथा सति उक्तविशेषनिरूपितसमवायस्य वृत्तिनियामकत्वे सति उक्तरीत्या
निराश्रयत्वदोषप्रसक्तिकथनरूपया तदसिद्धेः घटादेः समवायिनोऽभावेन उक्तविशेषनिरू-
पितसमवायस्य समवेतस्य तस्य चासिद्धेः ॥

१ क. पु. निरूप्ये निरूपकधर्माधारत्वस्येति पाठः । २ कोष्ठकान्तर्गतः पाठो मुद्रिते नास्ति ।

तस्यैव कालाधारत्वनियमात् । अन्यथा असतोऽप्याश्रयः काल इत्यङ्गीकार आपद्येत । न ह्यन्यधर्मस्य कालाश्रयत्वेनैव सिद्धिः क्वचिद् दृष्टचरी । तथा सत्यन्यधर्मत्वव्याहतेः । अतो भावित्वभूतत्वव्यवहारकालेऽपि घटादिसत्ता ऊरीकार्या ॥

सुवर्णसूत्रम् ।

त्वम्, ध्वस्तत्वप्रतीतिजनकस्य तु स्फुटमेव जन्यत्वमिति तस्यापि तथात्वं नियतमिति तस्यापि तदाश्रितत्वासिद्धिरित्यर्थः । तथा च विनष्टे घटे, ज्ञातो घट इति प्रतीतिस्थले यथा समवाय्यभावेन ज्ञाततोत्पत्तिर्दूष्यते तथात्रापि बोध्यमिति भावः । नन्वजन्यभावस्यैव जन्यभावस्यान्यत्रासमवेतस्यापि कालाधारत्वाङ्गीकारे बाधकाभावादुक्तनियमोऽप्रयोजक इति चेत्तत्राहुः—अन्यथेत्यादि । असमवेतत्वस्य नष्टघटादौ शशशृङ्गादौ चासत्तितौल्यात्तदाश्रयोऽपि कालः स्यात् । तथा सति 'प्रजाश्च तुल्यकालीनाः' इति त्वदुक्तवाक्यस्यैव विरोध इत्यर्थः । नन्वन्यथानुपपत्तेर्बलिष्ठत्वाद्वाक्यविरोधं सोढ्वाऽपि मया तथाऽङ्गीक्रियत इति चेत्तत्राहुः—न हीत्यादि । तथा च प्रसिद्धिविरोधः, पूर्वोक्तदूषणानुद्धारश्चेत्यधिकदूषणद्वयापत्तिरित्यर्थः । उक्तं निगमयितुं सिद्धमाहुः—अत इति । भावित्वादि-

हरितोषिणी ।

नश्वरत्वमिति व्याप्तेरसतो घटादेरभावान्न कालाधारत्वमिति भावः । अन्यथा असमवेतस्य कालाधारत्वाङ्गीकारे । ननु तथाङ्गीकारे को दोष इत्यत आहुः—न हीति । उपसंहरन्ति—अत इति ॥

गङ्गाधरभट्टी ।

तु न विशिष्टप्रत्यय इति । *उक्तरूपस्यापीति । विशिष्टप्रतीतिजनकस्य सम्बन्धस्य घटे इव कालेपि सत्त्वाद् भूतत्वादिवैशिष्ट्यप्रतीतिप्रसङ्गः, तद्धिया विशिष्टप्रत्ययजनकत्वसमवायस्य भूतत्वादिवैशिष्ट्यप्रतीतौ कारणत्वं वाच्यम् । समवायस्य तु कालेऽभावान्न वैशिष्ट्यप्रतीतिः, किन्तु समवायिनं विना निराश्रयस्य समवायस्य वक्तुमशक्यत्वाद् दोषस्तदवस्थः । न च स समवायः काले वक्तुं शक्यः । अन्यत्रासमवेतस्य कालेऽप्यनङ्गीकारादित्यर्थः । अन्यथेति । असमवेतस्यापि कालेऽङ्गीकारश्चेच्छशशृङ्गस्यापि शशेऽसमवेतस्य काल आधार इत्यङ्गीकारः स्यात् । तथा च कालः शशशृङ्गवान् इति प्रतीतिः स्यादित्यर्थः । न ह्यन्येति । यो यद्धर्मः स तदाश्रित एव दृष्टः । रूपादिधर्मो घटादौ यथा । यदि तु घटादिधर्मः कालाश्रितत्वेन सिध्येत्, घटादिधर्मता एव तस्य व्याहन्येतेत्यर्थः ॥

टिप्पणी ।

* उक्तरूपस्यापीति । अत्रोक्तदूषणमियेत्यादीति प्रतीकपदमुचितं प्रतिभाति ॥

१ क. पु. सति वेति पाठः । २ भावित्वादिव्यवहारसाधनस्यावश्यकत्वादित्यधिकः पाठः ।

**किञ्च, त्वदुक्तयोग्यता केनावच्छिद्यत इति पृच्छामः । तत्र चेद्यदा कदाचिद्वस्तुसत्तयैवावच्छिद्यत इति ब्रवीषि, तदा 'यदा कदाचिद्'**

सुवर्णसूत्रम् ।

व्यवहारसाधनस्यावश्यकत्वात् । ऊरीकार्येति । उक्तविशेषस्य साश्रयत्वायोरीकार्या । तथा चैवं सदा वस्तुसत्तासिद्धौ प्रागभावध्वंसयोरेवाभावात्तल्लक्षणमप्रयोजकमित्यर्थः ॥

ननु निराश्रयत्वेवद् घटादिसत्तापि तद्बाधिकेति तौल्यमेवेतिशङ्कायां घटादिसत्ताया व्यवहाराबाधकत्वं व्युत्पादयितुं तां साधयन्ति—किञ्चेत्यादि । *उक्तयोग्यता निरवच्छिन्ना किञ्चिदवच्छिन्ना वा ? । नाद्या, व्याप्यधर्मस्य किञ्चिदवच्छिन्नत्वनियमात् । यत्र पुनस्तादृशे निरवच्छिन्नत्वं कचिदुपगम्यते, तत्रावच्छिन्नत्वस्याऽनुपयोगादेव, न तु सर्वथा तदभावात् । अतो द्वितीयस्या एवादरणीयत्वात्तस्याः किञ्चिदवच्छेदकं व्यापकं वक्तव्यम् । तत्र निराश्रयत्वप्रसङ्गेन भावित्वादेर्विवादास्पदत्वादन्ततो गत्या वस्तुसत्ताया एव तथात्वं वाच्यम् । तत्रापि तादृशव्यवहारकाले वस्तुनि सत्तासम्बन्धस्याभावेन सत्तायां तादृशव्यवहारानवच्छिन्नवर्तमानकालत्वविशिष्टत्वं वाच्यमिति यदा कदाचिद्वस्तुसम्बन्धिन्या सत्तया अवच्छिद्यत इति चेद् ब्रवीषि, तदा 'यदा कदाचि'दिति सत्ताविशेषणं त्यज । तत्र हेतुः

हरितोषिणी ।

ननु उत्पत्तेः पूर्वं घटादिसत्ताऽपि भावी घट इति व्यवहारबाधिका भविष्यति, कुतः ? तदानीमपि घटस्य विद्यमानत्वादित्यत आहुः—किञ्चेति । त्वदुक्तयोग्यता विशिष्टप्रत्ययजननयोग्यता । व्याप्यधर्मत्वेन किञ्चिदवच्छिन्नत्वस्यावश्यकत्वात् पृच्छन्ति—केनेति । उत्पत्तेः पूर्वं वस्त्वभावाद् यदा कदाचिदित्युक्तम्, उत्पत्त्यनन्तरं घटे योग्यतायाः सत्ता-

गङ्गाधरभट्टी ।

**केनावच्छिद्यत इति** । कुत्राश्रितेति भावः । कादाचित्के वस्तुनीति चेत्, वस्तुनीत्येव ब्रूहि । कादाचित्कत्वं त्यज । गौरवात् । वस्तुमात्रस्य उक्तयोग्यताश्रयत्वकल्पने लाघवादिति भावः । किञ्च, यदा कदाचिदिति विशेषणस्य अप्रयोजकत्वम् । भूतभावित्वदशायां विशिष्टप्रत्ययजननयोग्यत्वस्य वक्तुमशक्यत्वात्, आश्रयस्याभावात्, सत्तासम्ब-

---

टिप्पणी ।

* उक्तयोग्यतेति । सुवर्णसूत्रम् । विशेषस्वरूपघटकीभूता भावित्वादिप्रविशिष्टप्रत्ययजननयोग्यता ॥

---

१ झु. पु. सदा इति नास्ति । २ झु. पु. स्याद् इति । ३ घ. पु. त्रानवच्छिन्नस्या इति । ४ घ. पु. तु. पाठः । ५ झु. पु. सत्तासत्त्वम्, ध्वंसस्याभावेनेति ।

इति त्यज । अप्रयोजकत्वाद्, गौरवाच्च । तथा, *सम्बन्धान्तरमन्तरेणेति च । स्वरूपस्य सम्बन्धत्वे सिद्धे सम्बन्धान्तरपदं सार्थकं भवेत् । तथा

सुवर्णसूत्रम् ।

—अप्रयोजकत्वाद् गौरवाच्चेति । सत्तायां यदा उक्तकालवैशिष्ट्यं, तदानीमुक्तयोग्यतारूपावच्छेद्याभावात् सा कामवच्छिन्द्यात् । यदा चोक्तयोग्यता, तदानीं सत्ताविशेषणीभूतकालस्याभावात्तद्विशिष्टसत्ताया अभाव इति का वा तामवच्छिन्द्यात् । अतोऽनुकूलतर्काभावादप्रयोजकं विशेषणम्, सत्ताया नित्यत्वेऽपि वैशिष्ट्यवशेन जन्यत्वाद् गुरुभूतं च, तस्मादित्यर्थः । तथा च निराश्रयत्वमेव व्यवहारबाधकं, न तु सत्तेति भावः । एवं तदुक्तमुपगम्य दूषितम् । अतः परं विशेषोपगम एवासंगत इति बोधयितुं तल्लक्षणं दूषयन्ति—तथेत्यादि । तथा चात्माश्रय इति । स्वरूपस्य सम्बन्धत्वसाधने चात्माश्रयः । स्वरूपसम्बन्धस्य स्वरूपानतिरिक्तत्वाङ्गीकारान्नष्टघटादिस्वरूपस्य सम्बन्धत्वसिद्धेर्नष्टघटादिस्वरूपसापेक्षत्वेन स्वोत्पत्त्यधीनोत्पत्तिकत्वादुत्पत्तावात्माश्रयः । यद्वा संयोगादेः केवलस्यैव विशिष्टप्रत्ययजननयोग्यत्वेन सम्बन्धान्तरमन्तरेणेतिपददानोत्तरमप्यतिव्याप्तितादवस्थ्याच्च

हरितोषिणी ।

सत्त्वाद् यदा कदाचिदवच्छिनत्त इति भावः । उत्तरयन्ति—तदेति । अप्रयोजकत्वादिति । भवन्मते पूर्वं घटस्याभावात्तत्र सत्तायाः योग्यतायाश्च स्थित्यभावेन परस्परमवच्छेद्यावच्छेदकभाव एव नास्ति । उत्पत्त्यनन्तरं तु यावत्स्थितिपर्यन्तं सर्वदा तस्य सत्त्वेन यदा कदाचिदिति व्यर्थमिति भावः । उत्पत्त्यनन्तरं यावत्पर्यन्तं घटो वर्तते, तावत्पर्यन्तमेवावच्छेद्यावच्छेदकभाव इति विशेषणदाने प्रयोजनाभावेन गौरवमिति विशेषलक्षणमेवासङ्गतमिति दूषणान्तरमाहुः—तथेति । स्वरूपस्य सम्बन्धत्वसिद्ध्यनन्तरमेव सम्बन्धान्तरपदेन स्वरूपसम्बन्धग्रहणं भविष्यतीत्याशयेनाहुः—सम्बन्धान्तरम-

गङ्गाधरभट्टी ।

न्धाभावात् । वर्तमानकाले तु कादाचित्कमेव वक्तुमशक्यमिति । सम्बन्धान्तरमित्यादि । अयमर्थः सम्बन्धान्तरं विनेत्यस्यार्थ उक्तः—स्वरूपसम्बन्धविशेषादितरसम्बन्धं विनेति ।

---

टिप्पणी ।

* सम्बन्धान्तरमन्तरेणेति । स्वरूपसम्बन्धातिरिक्तसंबन्धं विनेति साधारणार्थः । अत्र सुवर्णसूत्रे पक्षद्वयम् । प्रथमे स्वरूपसम्बन्धो घटे भावित्वादिविशिष्टप्रत्ययजनने वृत्तिनियामकत्वेनाभिमतः । द्वितीये त्विन्द्रियार्थसन्निकर्षत्वेन । परस्तान्नच षोढाप्रत्यासत्त्यभावेऽपीति वक्ष्यमाणत्वादत्रापि स्वरूपसंबन्धः प्रत्यासत्तित्वेनैवाभिमत इति द्वितीयः पक्ष उक्तः ॥

**चात्माश्रयः। न च षोढासन्निकर्षाभावेऽपि तथात्वं तदर्थ इति वाच्यम्। योगजधर्मेऽतिव्याप्तेः। न च लौकिकतज्ज्ञानजननयोग्यत्वं विवक्षितमिति वा-**

सुवर्णसूत्रम्।

श्यामाद्भावित्यादिवैशिष्ट्यप्रतीतिस्थले च संयोगादिप्रत्यासत्तीनामभावात्सम्बन्धान्तरपदे स्वरूपसम्बन्धो विवक्षणीयः। तत्र संयोगादिषु सम्बन्धत्वस्य स्वरूपसत एव कारणत्वान्न तज्ज्ञानापेक्षा। स्वरूपसम्बन्धे तु स्वरूपस्यौदासीन्ये विशिष्टप्रत्ययानुदयात्तस्य सम्बन्धत्वज्ञानमपेक्षते । सम्बन्धत्वं च न संयोगसमवायान्यतरत्वम्, विशेषणतादावव्याप्तेः। किं तु विशिष्टप्रत्ययजननयोग्यत्वमेव। स्वरूपस्य च तथात्वे ज्ञाते सम्बन्धत्वमिति सम्बन्धत्वज्ञानाधीनं सम्बन्धत्वज्ञानमिति ज्ञप्तावात्माश्रयः। तथा च सम्बन्धत्वज्ञानाभावात् सम्बन्धान्तरपदवैयर्थ्यम् । यदि तत्सार्थक्यायातिव्याप्तिवारणाय च सम्बन्धान्तरपदे षोढाप्रत्यासत्त्यभाव उपेयते, तदाप्यन्यत्रातिव्याप्तिरित्याहुः—न च षोढेत्यादि। तद्वारणार्थं क्रियमाणं विवक्षान्तरमपि दूषयन्ति—न च लौकिकेत्यादि। तत्र हेतुः—

हरितोषिणी।

न्तरेणेति। तथा चात्माश्रय इति । आत्माश्रयो द्विविधः—स्वज्ञाने स्वज्ञानापेक्षेति ज्ञप्तावात्माश्रयः, स्वोत्पत्तौ स्वोत्पत्त्यपेक्षेत्युत्पत्तावात्माश्रयः । भाविघटवैशिष्ट्यप्रत्ययस्थले स्वरूपसम्बन्ध एव सम्बन्धान्तरपदेन ग्राह्यः। संयोगसम्बन्धादीनां तदानीमभावात्। तथा च स्वरूपस्य सम्बन्धत्वेन ज्ञाने सति विशिष्टप्रत्ययो जायते, अन्यरूपेण ज्ञाने सति न जायते। एवं च सम्बन्धत्वं विशिष्टप्रतीतिजनकत्वम् । स्वरूपस्य सम्बन्धत्वज्ञानाधीनं भाविघटवैशिष्ट्यप्रतीतिजनकत्वज्ञानमिति स्वज्ञाने ज्ञानापेक्षा। एवं स्वरूपसम्बन्धस्तु स्वरूपानतिरिक्त एव। तथा चोत्पत्तेः पूर्वं घटरूपस्य स्वरूपसम्बन्धस्य सिद्धिर्न घटस्वरूपोत्पत्तिं विनेति स्वोत्पत्त्यधीनोत्पत्तिकस्वरूप उत्पत्तावात्माश्रयः। एवं च सम्बन्धत्वज्ञानमेव न जायते इति सम्बन्धान्तरपदवैयर्थ्यम्। तत्सार्थक्यार्थं विवक्षान्तरमाशङ्कते—न चेति। षोढेति । संयोग—संयुक्तसमवाय—संयुक्तसमवेतसमवाय—समवाय—समवेतसमवाय—विशेषणविशेष्यता—रूपषोढासन्निकर्षाभावेऽपीत्यर्थः । तथात्वं विशिष्टप्रत्ययजननयोग्य-

गङ्गाधरभट्टी।

तदपि त्याज्यम; आत्माश्रयदोषात्, स्वरूपसम्बन्धसाधनघटकसम्बन्धान्तरपदे स्वरूपसम्बन्धप्रवेशात्स्वज्ञाने स्वज्ञानापेक्षासत्त्वादिति भावः । षोढासन्निकर्षाभावेऽपि विशिष्टप्रत्ययज-

---

टिप्पणी ।

षोढेति। प्राचां प्रवादमनुसृत्येदम्। वस्तुतस्तु संयुक्तविशेषणतादयो भूयांसो भेदाः। एषां संयोगादिवन्नातिरिक्तत्वम्, किन्तु तत्तत्स्वरूपत्वमेव ।

---

१ ख० इदं मुद्रिते नास्ति।

च्यम् । सव्याप्तिवैशिष्ट्यज्ञानजनकसामान्यप्रत्यासत्तावतिव्याप्तेः । न च (अ)जन्यलौकिकप्रत्यासत्तिं विनापि तथात्वं तदर्थ इति वाच्यम्,

## सुवर्णसूत्रम् ।

सव्याप्तीत्यादि । सामान्यं च ज्ञायमानमेव प्रत्यासत्तिः । अन्यथा निमीलितनयनस्यापि, तेन धूमा इति ज्ञानापत्तेः । तज्ज्ञानं चेन्द्रियसम्बन्धेन । स च सम्बन्धः संयुक्तसमवायो वा, इन्द्रियसम्बद्धविशेषणता वा, तदन्यतरेण पूर्वं धूमत्वज्ञानम्, ततो ज्ञायमानेन धूमत्वेन सामान्येन यावद्धूमविषयकं धूमा इत्याकारकं ज्ञानम् । ततस्तेषु वह्निव्याप्तिवैशिष्ट्यज्ञानम्, तच्च योगजधर्मजनितानागतातीन्द्रियादिविषयकज्ञानवन्न लौकिकविलक्षणम् । इन्द्रियसम्बद्धविशेषणताजन्यतादृशज्ञानसादृश्यात् । तच्च सामान्यप्रत्यासत्तिप्रयुक्तमिति तस्यामतिव्याप्तेरित्यर्थः । एतद्वारणाय च क्रियमाणं विवक्षान्तरं दूषयन्ति—न च जन्येत्यादि । जन्या ज्ञानलक्षणसंयोगादिरूपा । लौकिकी समवायादिरूपा । तथात्वं विशिष्टप्रत्ययजननयोग्यत्वम्, न तु लौकिकतज्जननयोग्यत्वम् । तथा सति योगजधर्मेऽ-

## हरितोषिणी ।

त्वम् । तदर्थः सम्बन्धपदार्थः । दूषयन्ति—योगजेति । योगजधर्मे सम्बन्धत्वाभावेनालक्ष्यत्वात्तत्र लक्षणगमनमिति भावः । अतिव्याप्तिर्नास्तीति शङ्कते—न चेति । तज्जननेति । विशिष्टप्रत्ययजननेत्यर्थः । योगजधर्मजन्यप्रत्यक्षे लौकिकत्वाभावान्नातिव्याप्तिरिति भावः । दूषयन्ति—सव्याप्तीति । व्याप्त्या सहितः सव्याप्तिः, एतादृशो यो धूमस्तद्वैशिष्ट्यज्ञानमित्यर्थः । वह्निव्याप्तिविशिष्टधूमवैशिष्ट्यज्ञानमिति यावत् । अतिव्याप्तेरिति । वह्निव्याप्यो धूम इत्याकारकज्ञानानन्तरमिन्द्रियसम्बद्धो यो धूमस्तद्विशेषणता धूमत्वे वर्तते, इतीन्द्रियसम्बद्धविशेषणतासम्बन्धेन, अथवा संयुक्तसमवायसम्बन्धेन धूमत्वज्ञानं जायते, तदनन्तरं तादृशज्ञानविषयीभूतं यद्धूमत्वं तदेव सामान्यं तल्लक्षणा या प्रत्यासत्तिस्तस्यामतिव्याप्तेरित्यर्थः । एवं च धूमत्वसामान्यलक्षणप्रत्यासत्त्या धूमा इत्याकारकं व्याप्तिविशिष्टसकलधूमविषयकं ज्ञानं जायत इति विशिष्टज्ञानजनकत्वात् सामान्यलक्षणायामतिव्याप्तिरिति भावः । न च तदलौकिकमिति वाच्यम् । सामान्यलक्षणाजन्य-

## गङ्गाधरभट्टी ।

नकत्वं स्वरूपसम्बन्धविशेष इति न वाच्यम् । योगजधर्मेऽपि घटत्वविशिष्टो घट इति ज्ञानेऽतिव्याप्तेः । तद्वारणाय षोढासन्निकर्षाभावेऽपि लौकिकं विशिष्टप्रत्ययजननयोग्यत्वं यदुच्येत, तदा योगजधर्मस्य लौकिकत्वाभावात् तत्र नातिव्याप्तिः, किन्तु धूमे वह्निव्याप्तिविशिष्टत्वमिति ज्ञानजनिकायां धूमा वह्निय इति सामान्यप्रत्यासत्तावतिव्याप्तिः । न चाजन्येति । जन्यपदेन सामान्यप्रत्यासत्तावतिव्याप्तिर्वारिता । नञ्रहितस्तु न पाठः । पूर्वो-

योगजधर्मेऽतिव्याप्तेः । न च सामान्ययोगजधर्मज्ञानलक्षणषोढाप्रत्या-सत्त्यभावेऽपि तथात्वं तदर्थ इति वाच्यम् । असिद्धेः । न ह्युक्तत्वभावे

सुवर्णसूत्रम् ।

तिव्याप्त्यभावेन प्रन्थासङ्गत्यापत्तेः । योगजधर्मपदं सामान्यलक्षणाया अप्युपलक्षकम् । यदि च जन्यपदेन योगजधर्मोऽपि संगृह्यते, तदा सामान्यलक्षणायामेवातिव्याप्तिरिति तन्नोट्टङ्कितम् । यदि च जन्यपदं लौकिकप्रत्यासत्तिविशेषणम्, तथात्वं च लौकिकजन-नयोग्यत्वम्, तदा समवायेऽतिव्याप्तेर्ग्रन्थासङ्गतिरिति लौकिकजननयोग्यत्वं न विवक्ष-णीयम् । तदाऽपि योगजधर्मपदं समवायादेरप्युपलक्षकम् । वस्तुतस्तु, न च जन्येत्यत्र अकारः पतित इति प्रतिभाति । सामान्यलक्षणायामतिव्याप्तेरुक्तत्वात् । तद्वारणायाजन्य-पदस्यैव वक्तव्यत्वादिति । तदा लौकिकपदं षोढाप्रत्यासत्तिपरम् । योगजधर्मपदं ज्ञानल-क्षणाया अप्युपलक्षकम् । यदि चाकारं प्रश्लेष्य तथात्वपदे लौकिकत्वमपि विवक्ष्यते, तदा तु वक्ष्यमाणाऽप्रसिद्धिरेव दूषणमिति बोध्यम् । स्फुटमन्यत् । इदं च विवक्षाद्वयं मध्यतः फेनवल्लीनरूपमित्यनास्थया दूषितं ज्ञेयम् । एवंलक्षणेन (कल्पस्य विशेषस्य लक्षणदूषणेन)

हरितोषिणी ।

धूमा इत्याकारकसकलधूमविषयकज्ञान इन्द्रियसन्निकृष्टधूमस्यापि विषयत्वाल्लौकिकत्वमिति मन्तव्यम् । अत एव निमीलितनयनस्य सामान्यलक्षणाजन्यज्ञानाभावादिन्द्रियसम्बद्धवि-शेषणतेत्युक्तम् । पुनः शङ्कते—न चेति । खण्डयन्ति—असिद्धेरिति । तदभावे सामान्यादिनवप्रत्यासत्त्यभावे । तथात्वं विशिष्टज्ञानजननयोग्यत्वम् । इदं च नैयायि-कमतमवलम्ब्योक्तम् । वस्तुतस्तु मीमांसकमते सामान्यलक्षणाप्रत्यासत्त्यस्वीकाराद् वेदा-न्तविचारस्य मीमांसकमतानुसारित्वाच्चात्र शङ्कैव नास्तीत्यन्यत्र विस्तरः । एतावता विशे-षलक्षणदूषणेन स्वरूपं दूषितं भवति । ननु लौकिकालौकिकसन्निकर्षसामान्याभावेऽपि वि-शिष्टज्ञानजननयोग्यत्वं क्वचिन्न सिद्धमित्युक्तम्, तन्न संभवति; उभयवादिसिद्धभावित्व—

गङ्गाधरभट्टी ।

त्तरग्रन्थास्वारस्यात् । ज्ञानलक्षणेति । तथा हि—चन्दनखण्डे दृष्टे *सौरभज्ञानं भवति । नह्युक्तेति । उक्तचतुर्विधप्रत्यासत्त्यभावे विशिष्टप्रत्ययजननयोग्यत्वं न क्वचिद् दृष्टमित्यर्थः ।

टिप्पणी ।

* सौरभज्ञानं भवतीति गङ्गाधरभट्टी । इदं चन्दनं सुरभीत्याकारकमेकं प्रत्यक्षात्मकं ज्ञानम् । तत्र चन्दनांशे लौकिकम् । सौरभांशे त्वलौकिकम् । सौरभांशे स्मरणं तु नाङ्गी-क्रियते । एकत्र ज्ञाने परोक्षत्वापरोक्षत्वयोरनुपपत्तेः ॥

१ मु. पु. क्लिष्ट इति पाठः । २ नावलम्ब्य इति मु. पु. पाठः । ३ ग. पु. कोष्ठकान्तर्गतः पाठो नास्ति ।

तथात्वं क्वचित् सिद्धम् । विवादास्पदीभूतभावित्वादेस्तु पूर्वोक्तयुक्त्या निराश्रयत्वप्रसङ्गस्य दुर्निवारत्वेन तदाऽपि धर्मिसिद्धावनुमानादिना तज्ज्ञाने तत्समवेतोक्तप्रतियोगित्वमपि विषयीभवतीति नोक्तप्रत्यासत्त्यभाव इति सर्वमनवद्यम् ॥

सुवर्णसूत्रम् ।

स्वरूपमेव दूषितं ज्ञेयम् । ननु मास्तु विशेषादिस्तथापि भावित्वादिप्रतीतिस्तूपपादनीया, सा सामग्र्यन्तराभावाद्भावित्वादिधर्मोदेवाङ्गीकरणीया । तथा सति क्लृप्तप्रत्यासत्त्यभावेऽपि तथात्वमग्रैव सिद्धमिति नाप्रसिद्धिरित्यत आहुः—विवादेत्यादि । सत्यम्, प्रतीतिर्जायते, तथाऽपि स धर्मो निराश्रयत्वे स्वस्वरूपमलभमानो न तां जनयितुं शक्त इति तेन दूषणेन प्रयोजकेन कारणव्यापारात्पूर्वं तद्धर्मव्यवहारकालेऽपि तदाश्रयस्य घटादेर्धर्मिणः सिद्धौ, ततो भावी भूतश्च घटादिस्तादृशव्यवहारकालेऽपि सन्, अनुभूयमानधर्मकत्वात् । वर्तमानकालीनघटवदित्यादिना सांख्योक्तरीतिकाभ्यामनुमानतर्काभ्यां वा, वक्ष्यमाणागमेन वा, समुदितैर्वा धर्मिज्ञाने तत्समवेतं यदुक्तप्रतियोगित्वं वर्तमानप्रागभावादिप्रतियोगित्वं तदपि *संयुक्तसमवेतसमवायेन विषयीभवतीति भावित्वादेर्विषयत्वेनैव जनकता । प्रत्या-

हरितोषिणी ।

भूतत्वप्रतीतौ तादृशसन्निकर्षाभावेऽपि विशिष्टज्ञानजननयोग्यत्वमस्तीत्यत आहुः—विवादेति । पूर्वोक्तेति । किञ्च, भावित्वेन भूतत्वेन चेति पूर्वोक्तेत्यर्थः । तदाऽपि भावी घट इति व्यवहारकालेऽपि । धर्मिसिद्धौ भावित्वाश्रयघटादिधर्मिसिद्धौ । अनुमानादिनेति । भावी घटः भावीतिव्यवहारकालेऽपि सन्, कुतः ? अनुभूयमानधर्मकत्वात् । वर्तमानकालीनघटवदिति सत्कार्यवादिसांख्योक्तानुमानादिनेत्यर्थः । घटोत्पत्तेः पूर्वं यदि घटो न स्यात्तर्हि भावित्वस्य निराश्रयत्वेन भावी घट इति व्यवहारो न स्यादित्यादितर्कोऽप्यादिशब्देन बोध्यः । तज्ज्ञाने घटादिरूपधर्मिज्ञाने । तत्समवेतेति । घटादिसमवेतं यत् प्रागभावप्रतियोगित्वं तदपि संयुक्तसमवेतसमवायेन विषयी भवतीत्यर्थः । नो-

गङ्गाधरभट्टी ।

तत्समवेतेति । घटादिसमवेतं प्रागभावादिप्रतियोगित्वमपि सिध्यतीति संयुक्तसमवेतसमवायरूपा प्रत्यासत्तिरित्यर्थः ॥

---

टिप्पणी ।

* संयुक्तसमवेतेति । चक्षुःसंयुक्तं मृत्कपालादिरूपमुपादानकारणम्, तत्समवेतस्तत्कार्यभूतो घटः, तत्समवेतं भावित्वमिति योजना ॥

---

१ न. इत्यधिकः मु. पु. ।

सुवर्णसूत्रम् ।

सत्तिस्तु संयुक्तसमवेतसमवाय एवेति नोक्तप्रत्यासत्त्यभाव इत्यर्थः। एवं युक्त्या धर्मिसत्ता-साधनेनान्योन्याश्रये निवृत्ते आविर्भावादेरपि सिद्धा शून्यवादापत्तिः परिहृता ॥

सांख्योक्तरीतिस्तु 'असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् । शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्य'मिति कारिकाव्याख्याने वाचस्पतिमिश्रैः स्फुटीकृता । तथा हि—कार्ये हि वादिनां विप्रतिपत्तयो बहुविधाः—असतः अलीकादेव सज्जायते । श्रुतिश्च—'असद्वा इदमग्र आसीत्ततो वै सदजायते'ति बाह्याः । एकस्य सतो विवर्तः कार्यजातं, न वस्तु सदिति मायावादिनः । अन्ये तु 'सतः असज्जायत' इति । 'सतः सज्जायते' इति सांख्यवृद्धाः । तत्र नाद्यः, कार्यकारणतादात्म्यस्य लोके दर्शनात्, सुखदुःखमोहभेदशब्दाद्यात्मकस्य कार्यस्य निरुपाख्यालीकतादात्म्यानुपपत्तेः, वैलक्षण्यात्सदसतोः । न द्वितीयः, अद्वयस्य सतः नानात्वानुपपत्तेः, प्रपञ्चप्रतीतेर्भ्रमत्वापत्तेश्च । असति बाधके तस्या भ्रमत्वायोगात् । न तृतीयः, सदसतोरैक्याभावेन तादात्म्यानुपपत्तेः । अतश्चतुर्थमेव प्रतिजानीते—सत्कार्यमिति । कारणव्यापारात्प्रागपि सदित्यर्थः । न च सिद्धसाधनम्, कारणानामभिव्यञ्जकत्वात् । अभिव्यक्तिः प्राकट्यम्, स एव च कारणाद्विवेकः, सोऽपि लौकिकप्रत्यक्षविषयत्वम्, तदेवाविर्भाव इति तज्जनकत्वादित्यर्थः । न च बीजमृत्पिण्डादिध्वंसोत्तरमङ्कुरघटाद्युत्पत्तिदर्शनात्प्रध्वंसस्य कारणत्वं शङ्क्यम् । तस्याऽभावत्वेनान्यत्रापि सुलभतया बीजादिकं विनाऽपि तत्प्रसङ्गात्। अतो बीजाद्यवयवस्यैव तत्कारणत्वम् । इदमेव नियतावधिकत्वं कुसुमाञ्जलावपि प्रोक्तम्—'हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च । स्वभाववर्णना नैवमवधेर्नियतत्वत' इत्यनेन ॥

अतः परं विनाशस्य सहकारित्वम्, बीजाद्यवयवानामेव कारणत्वम्, ततोऽसतः कार्यस्य जन्मेति कणभक्षाक्षचरणमतमवशिष्यते, तद्दूषयति—असदकरणादित्यादिना । असतः कारणव्यापारात् प्रागविद्यमानस्यासद्रूपस्याकरणात् सद्रूपेण कर्तुमशक्यत्वात् । नीलरूपस्य पीतत्ववत् । सदसत्वे वस्तुनो घटादेर्धर्माविति चेत्, तथाऽप्यसति धर्मिणि धर्मस्य वक्तुमशक्यत्वात्तदनुरोधेन कारणव्यापारात् प्रागपि सत्त्वमेवाङ्गीकार्यम् । इदमेव दूषणं, भाविस्वादेर्निराश्रयत्वसाधनेन विद्वन्मण्डने प्रपञ्चितं बोध्यम् । किञ्च, असत्त्वं न कारणेन

हरितोषिणी ।

क्तेति । भावी घट इति प्रतीतौ विषयतासम्बन्धेनैव भावित्वस्य कारणता, प्रत्यासत्तिस्तु संयुक्तसमवेतसमवायोऽस्तीति नोक्तपोढाप्रत्यासत्त्यभाव इत्यर्थः । अयं सत्कार्यवादस्तु आर्यायामुक्तः । सा चेत्थं—'असदकरणादुपादानग्रहणात्सर्वसंभवाभावात् । श-

१ मु. पु. वेधक इति । २ स्यैवमवधेर्नियतत्व इत्यनेन अतत्कारणत्वमिति मु. पु. पाठः ।

### सुवर्णसूत्रम् ।

सम्बद्धं न वा तदात्मकम् । घटश्चेत्तद्धर्मवाँस्तदा कारणव्यापारोत्तरं कथं कारणात्मकः स्यात् । तस्यासत्त्वस्य स्वरूपधर्मस्यानागन्तुकत्वेनापायानर्हत्वात् । अतः सदेव कार्यमास्थेयम् । यथा तिलेषु तैलम् । दध्नि सर्पिः, तथा मृदादौ घटादिरिति । अत्यन्तासत उत्पत्तेरभिव्यक्तेश्च दृष्टान्ताभावादपि । किञ्च, उपादानग्रहणात् उपादानैः सह कार्यस्य ग्रहणात् सम्बन्धात् । कार्येण सम्बद्धस्यैव कारणस्य कार्यजनकत्वादित्यर्थः । ननु कारणासम्बद्धमसदेवोत्पद्यताम् । सम्बद्धस्यैवोत्पत्तौ नियमाभावात् । घटादेरसम्बद्धस्यैवोत्पद्यमानत्वदर्शनादिति चेत्, तत्राह—सर्वसम्भवाभावादिति । असम्बद्धस्य जन्यत्वे सर्वतः सर्वकार्योत्पत्तिप्रसङ्गादव्यवस्था । असम्बद्धत्वस्य सर्वत्राविशिष्टत्वात् । अतो घटादीनामपि सम्बन्धः कारणव्यापारात्पूर्वं वक्तव्यः, स च सत्त्व एव संभवतीति तदानीमपि कार्यं सदेवेत्यर्थः । नन्वसम्बद्धमपि कार्यं शक्तेन कारणेन जन्यते, शक्तिश्च कार्यदर्शनोन्नेया, तथा च यद्यत्र शक्तं, तेनासम्बद्धमपि तदेव जन्यत इत्यदोष इति चेत्तत्राह—शक्तस्य शक्यकरणादिति । कारणाश्रया सा शक्तिः किं सर्वं प्रति, शक्यं प्रति वा ? नाद्यः, पूर्ववदनवस्थापातात् । न द्वितीयः, शक्यस्यैवाभावेन तस्या अशक्यवचनत्वात् । अथ शक्तिस्वभाव एव कश्चित्तादृशो यः किञ्चिदेव जनयति, न सर्वमिति चेत्, न । तस्य शक्यसम्बद्धत्वे सम्बन्ध्यपेक्षया तदानीं कार्यसत्तापत्त्या भवत्सिद्धान्तहानिः । असम्बद्धत्वे सैवाव्यवस्थेति । अतः शक्तस्य शक्यकरणात्सदेव कार्यं युक्तम् । इदं च शक्त्यङ्गीकर्तृमते दूषणम्, न तु प्रागभावाङ्गीकर्तृमते । तद्दूषणं तु निबन्धविवृतौ *मत्कृते सृष्टिभेदवादे च द्रष्टव्यम् । किञ्च,

### हरितोषिणी ।

क्तस्य शक्यकरणात्कारणभावाच्च सत्कार्यम्' । अस्या व्याख्यानावसरे वाचस्पतिमिश्रैः सांख्यतत्त्वकौमुद्यां कारणव्यापारात्पूर्वं कार्यस्य सत्त्वं व्यवस्थापितम् । अर्थस्तु—असतः कारणव्यापारात्प्रागविद्यमानस्यासद्रूपस्य कार्यस्याकरणात् सद्रूपेण कर्तुमशक्यत्वात् । नीलस्य पीतत्ववत् । तिलेषु तैलं, दध्नि सर्पिर्यथा, तथा मृदादौ घटादिरिति भावः । किञ्चोपादानग्रहणात्, उपादानैः सह कार्यस्य ग्रहणात्सम्बन्धात् । कार्येण सम्बद्धस्यैव कारणस्य कार्यजनकत्वादित्यर्थः । ननु घटादेरसम्बद्धस्यैवोत्पत्तेर्दर्शनादिति चेत्तत्राह—सर्वसंभवाभावात्, असम्बद्धस्य संभव एव न भवति । अन्यथा मृदः पट उत्पद्येत । अतो घटादीनां सम्बन्धो व्यापारात्पूर्वं वाच्यः । स च घटादीनां सत्त्व एव भवतीति भावः । ननु शक्तेन कारणेनासम्बद्धमपि कार्यं जन्यत इति चेत्तत्राह—शक्तस्येति । शक्त्या-

---

### टिप्पणी ।

* मत्कृते सृष्टिभेदवादे चेति सुवर्णसूत्रम् । इदमुक्तं तत्र—कारणव्यापारात्प्रागपि कार्यं सदेव । असत्त्वे सर्वतः सर्वोऽप्युत्पद्येत । अविशेषात् । न च प्रागभावोऽस्तु निया-

सुवर्णसूत्रम् ।

कारणभावात् कार्यस्य कारणात्मकत्वात् । कारणस्य सत्त्वेन कार्यमपि सदेवेत्यर्थः ॥

अभेद[1]बोधकानुमानप्रयोगस्त्वेवं बोध्यः—पटस्तन्तुभ्यो न भिद्यते, तन्तुधर्मत्वात् । यद्यतो भिद्यते, तन्न तस्य धर्मः । यथा—गौरश्वस्येति । तथा पटस्तन्त्वभिन्नः, तन्तूपादेयत्वात् । यन्नैवम्, तन्नैवम् । घटवत् । तथा—पटस्तन्त्वभिन्नः, तन्निरूपितसंयोगरहितत्वात् । यन्नैवम्, तन्नैवम् । कुण्डबदरवत् । तथा—पटस्तन्त्वभिन्नः, अप्राप्त्यभावात् । यन्नैवम्, तन्नैवम् । हिमवद्विन्ध्यवत् । तथा—पटस्तन्त्वभिन्नः, तन्तुगुरुत्वातिरिक्तगुरुत्वानारम्भकत्वात् । यन्नैवम्, तन्नैवम् । घटवदिति । तस्मान्न तन्तुभ्योऽर्थान्तरं पट इति । न च पटस्तन्तुभ्यो भिन्नः, भिन्नप्रतीतिविषयत्वात्, ([2]भिन्नव्यपदेशकत्वात्,) भिन्नार्थक्रियाकारित्वाच्च । पटवदिति प्रत्यनुमानेन पूर्वोक्तहेतूनां सत्प्रतिपक्षत्वमिति वाच्यम् । उक्तहेतूनामनैकान्तिकत्वात् । पटस्तन्त्वभिन्नः, भिन्नप्रतीतिविषयत्वाद्, भिन्नव्यपदेशकत्वाच्च । *वने तिलका इतिवत् । भिन्नार्थक्रियाकारित्वात् । दाहक—पाचक—वह्निवदिति । न च स्वात्मनि क्रियाविरोधाद्भेदसिद्धिः । कूर्माङ्गदृष्टान्तेनाविर्भावतिरोभावाभ्यामेव तदुपपत्तेरिति । एतदग्रे आविर्भावतिरोभावयोः सत्त्वमसत्त्वं वा कारणव्यापारात् प्रागिति विचारितम् । तदेव विद्वन्मण्डने प्रपञ्चितम् । तत उत्पत्तिपक्षे प्रतिबन्दी उक्तः—सा सती असती वा ? आद्ये, कृतं कारणैः । द्वितीये, तस्या अप्युत्पत्त्यन्तरापेक्षायामनवस्था । अनपेक्षायां सत्यां सर्वदा सत्तापत्त्या का-

हरितोषिणी ।

श्रयः शक्तः, शक्त्योत्पाद्यः शक्यः । शक्तिश्च कार्याविर्भाविका । तथा च शक्तस्य मृदादेः शक्यस्य घटादेः करणात् शक्तस्य शक्यस्य सम्बन्धादसम्बद्धं कार्यं न जन्यत इति भावः । किं च, कारणभावात्कार्यस्य कारणात्मकत्वात् । कारणस्य सत्त्वेन कार्यमपि सदेवेति सूक्ष्मतया निरूपितम् । अधिकं तु सुवर्णसूत्रे द्रष्टव्यम्, अप्रकृतत्वाद्विस्तरभिया विरम्यते ॥

टिप्पणी ।

मक इति वाच्यम् । मनाऽकेन-तदसिद्धेः । न च पटो भविष्यतीति प्रतीतिर्मानम् । कार्योत्पत्त्यनुकूलकारणावस्थया तदुपपत्तेः । नापि कपाले घटो नासीदित्यसत्त्वेन प्रतीयमानत्वान्न कारणावस्थयोपपत्तिरिति प्रत्यवस्थेयम् । अस्याः प्रतीतेः संसर्गाभावमात्रविषयत्वेन तद्विशेषविषयत्वे मानाभावात् । कपाले घटप्रागभाव इति तु प्रतीतिरेव नास्ति ॥

* वने तिलका इति । शब्दत आधाराधेयभावेन प्रतीयमानतया भिन्नप्रतीतिव्यपदेशविषयताऽस्ति; परन्तु वृक्षाणां समूहो वनं, तिलकाश्च वृक्षा इति वस्तुतो न भेदः । अतो भिन्नप्रतीतिविषयत्वादि भेदानुमितिलिङ्गमिह व्यभिचरितम् ॥

1 अभेदसाधकानुमानप्रयोग इति मु. पु. पाठः । 2 कोष्ठकान्तर्गतः पाठो ध. पु. नास्ति ।

(१२) ननु मम तु यथाकथंचिद् गतिः काचन भवित्री, तव तु न काऽपि । तथा हि—त्वन्मते घटादेः सदा सत्त्वेन भावित्वं न वक्तुं शक्यम् । श्रुतिस्मृतिलौकिकव्यवहारसिद्धत्वेन नेष्टापत्तिः कर्तुं शक्या । न च लौकिकप्रत्यक्षविषयत्वगतं भावित्वं घटादावुपचर्यत इति वाच्यम् । तस्यापि घटसमान-

भावित्वानुपपत्तिपरिहारपूर्वकाविर्भावतिरोभावनिष्कृष्टलक्षणप्रदर्शनम् ।

सुवर्णसूत्रम् ।

रणवैयर्थ्यम् । अथ उत्पत्तिः पट एव, तदा पट उत्पद्यत इति न वाच्यम् । पौनरुक्त्यापत्तेः । अयं प्रतिवन्दी सर्वनिर्णये श्रीमदाचार्यैरप्युक्तो बोध्यः । तस्मादुत्पत्तिः स्वकारणसमवायो वा, स्वसत्तासमवायो वा, उभयथाऽपि नोत्पद्यते, तथाऽपि तदर्थानि कारणानि व्यापार्यन्ते । एवं सत एव पटादेराविर्भावाय कारणापेक्षेत्युपपन्नम् । न च पटरूपेण कारणानां सम्बन्धः, तद्रूपस्याक्रियात्वात् । कारणानां च क्रियासम्बन्धित्वात् । अन्यथा कारकत्वव्याहतेरिति सांख्योक्ता रीतिः प्रसङ्गाद्दर्शिता । प्रकृतमनुसरामः ॥

(१२) एवं शून्यवादापत्तिपरिहारेऽप्यनिर्वाच्यतापत्तेः प्रतिबन्द्या परिहृतत्वेन प्रतिबन्द्यादेश्चानुत्तरत्वेन तन्निरासमनन्वानोऽसत्कार्यवादी वितण्डया पुनः प्रत्यवतिष्ठते—ननु ममेत्यादि । न वक्तुं शक्यमिति । सार्वकालिकसत्ताविरोधान्न वक्तुं शक्यम् । ननु व्यवहारस्य गौर्वाहीक इतिवदुपचारेणापि सिद्धेः सुखेन वक्तुं शक्यमिति चेत्, तत्राह—न चेत्यादि । एकत्र मुख्यत्वसिद्धावन्यत्रोपचारो भवति । त्वन्मते सर्वस्यापि मुख्य-

हरितोषिणी ।

(१२) असत्कार्यवादी वितण्डया शङ्कते—नन्विति । यथाकथञ्चिदित्यनेन स्वमतास्थापनपूर्वकपरमतखण्डनरूपा वितण्डा ध्वन्यते । परमते दूषणमेवोपपादयति—तथा हीत्यादिना । सदा सत्त्वेनेति । सदासत्त्वं भावित्वप्रतिबन्धकमिति भावः । ननु मास्तु भावित्वमित्यत आह—श्रुतीति । शङ्कते—न चेति । उत्पत्तेः पूर्वं घटो वर्तते, परन्तु स लौकिकप्रत्यक्षविषयो न भवति, किन्तु भावी घट एव, एवं च मुख्यं भावित्वं लौकिकप्रत्यक्षविषयत्वे एवेत्यर्थः । समाधानमाह—तस्यापीति । लौकिकप्रत्यक्षविषयत्वस्यापीत्यर्थः । घटसमानेति । यथा घटस्य सनातनत्वं, तथा तस्यापि सनातनत्वमिति भावः । कुत

गङ्गाधरभट्टी ।

(१२) पुनः शङ्कते—नन्विति । यथा कथञ्चिदिति । *विनश्यदवस्थद्रव्यगुणानां

---

टिप्पणी ।

* विनश्यदवस्थेति गङ्गाधरभट्टी । द्रव्यनाशस्य तत्समवेतगुणनाशं प्रति हेतुत्वेन हेतोश्च नियतपूर्ववर्तित्वावश्यकतया प्रथमक्षणे द्रव्यनाशः, ततो द्वितीयक्षणे तत्समवेतगुणनाश इत्यङ्गीकारः । अत एकक्षणपर्यन्तं गुणा निराश्रया एव तिष्ठन्तीत्युक्तं भवति ।

योगक्षेमत्वात्। न हि प्रपञ्चातिरिक्तं तत्। स्वोक्तदूषणभियापि नैवं वक्तुं शक्यम्। तथा सति घटस्यापराधः को वेति न विद्मः। तथा च जीर्णतार्णपर्णाकीर्णविविधमतभवनमये वर्णपुरे स्वयमपि वसन् दूषणदहनमुद्भावयन् निजभवनदाहं किं नानुसंधत्स इति चेत्, ॥

वत्स! न वेत्सि किं, युक्तिकनकपङ्कसंघट्टितविविधनिगममहामणि-

सुवर्णसूत्रम्।

त्वेन तस्यानवकाशादिति भावः। ननु त्वयैव मया तावन्मात्रस्यासत्त्वमेवाङ्गीकार्यमिति चेत्, तत्राह—स्वोक्तदूषणेत्यादि। लौकिकप्रत्यक्षविषयत्वस्य तदानीमसत्त्वेन बद्धावित्वादेर्निराश्रयत्वप्रसङ्गभिया। तथा सतीति। तादृशविषयत्वस्यासत्त्वेऽङ्गीकृते सति। तथा चानित्यत्वाङ्गीकारे अपसिद्धान्तः, अनङ्गीकारे भूतभाविवस्त्वनिर्वाच्यत्वापरिहार इत्युभयतःपाश इत्याशयेनाह—तथा चेत्यादि।

तत्र सांख्योक्तस्य यौक्तिकत्वात् प्रतियन्धामेव पर्यवसितत्वाच्च तदनादृत्य ब्रह्मवादेनैव समादधते—वत्स न वेत्सीत्यादिना। तथा च केवलयौक्तिकवाद एवेदं दूषणं, न तु

हरितोषिणी।

इत्यत आह—न हीति। भवन्मते सर्वस्य प्रपञ्चस्यैव सनातनत्वमिति भावः। ननु मया पूर्वं लौकिकप्रत्यक्षविषयत्वमात्रस्यासत्त्वं स्वीक्रियत इत्यत आह—स्वोक्तेति। दूषणभियेति। लौकिकप्रत्यक्षविषयत्वं पूर्वं न स्वीक्रियते चेत्, तद्गतभावित्वं निराश्रयं स्यादिति स्वोक्तदूषणभियेत्यर्थः। नैवमिति। लौकिकप्रत्यक्षविषयत्वस्य पूर्वमसत्त्वं वक्तुं न शक्यत इत्यर्थः। ननु तथापि तस्य पूर्वमसत्त्वं हठेनोच्यत इत्यत आह—तथा सतीति। एवं वक्तव्ये सतीत्यर्थः। न विद्म इति। पूर्वं घटस्य तु सत्त्वं लौकिकप्रत्यक्षविषयत्वस्यासत्त्वमित्यत्र विशेषो नास्तीति भावः। घटस्य नित्यत्वं लौकिकप्रत्यक्षविषयत्वस्यानित्यत्वमित्यर्द्धजरतीयमपसिद्धान्तश्चेत्यादिदूषणमपरिहार्यमित्याशयेनाह—तथा चेति। जीर्णानि यानि तार्णपर्णानि तृणसम्बन्धिपर्णानि तैराकीर्णानि यानि विविधमतभवनानि तन्मये वर्णपुरे तस्मिन् स्वयमपि वसन्। अग्रे स्पष्टम्।

समाधानमाहुः—वत्सेति। वत्सेत्यनेनानभिज्ञता सूचिता। युक्तीति। युक्तिरेव कनकपङ्कस्तेन संघट्टितं विविधा ये निगमा वेदाः त एव महामणयस्तैर्विरचितं यद्ब्रह्मवादमन्दिरं मम तत्। न वेत्सि किमिति पूर्वेणान्वयः। तथा चैतावत्पर्यन्तं सांख्योक्तयुक्तीनामाद-

गङ्गाधरभट्टी।

नैराश्रयत्वबद्धावित्वादिव्यवहारस्यापि आश्रयणेनेत्यर्थः। स्वोकेति। लौकिकप्रत्यक्षविषयत्वस्य तदानीमसत्त्वेन भावित्वादेर्निराश्रयत्वमित्येवेत्यर्थः।

विरचितब्रह्मवादभवनं मम । तथा हि—'स हैतावानास' 'ऐतदात्म्यमिदं सर्वम्' 'तत्सत्यम्' "*पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्' इत्यादि श्रुतिभ्यः प्रपञ्चस्य ब्रह्मात्मत्वमवगम्यते । अत्र सर्वपदेनासंकुचितवृत्तिना भूतभव्ययोरपि प्राप्तावपि तदुक्तिर्या सा पुरुषस्य नित्यत्वेन तदात्मकस्य वर्तमानदशैव संभवतीति भावित्वभूतत्वव्यवहारोऽप्रामा-

सुवर्णसूत्रम्।

श्रुतिपुराणयुक्तियुक्ते वाद इत्यर्थः । तदुपपादयन्ति—तथा हीत्यादि । नन्वेवं भावित्वादिव्यवहारस्य प्रामाणिकत्वेनास्तु वक्तुं शक्यत्वम्, तथापि कथं विरोधस्य परिहार इत्यत

हरितोषिणी।

रणं मया कृतमिति तत्र दूषणानि सन्तु नाम, मदीयं तु श्रुतिसम्मतं मतमितीदानीं मया वेदादरणे क्रियमाणे दूषणलेशोऽपि नास्तीति भावः । वेदवाक्यान्याहुः—तथा हीत्यादिना। ननु भावित्वादिव्यवहारस्य प्रामाणिकत्वं कथमुपपादितमित्यत आहुः अत्रेति । अत्र पुरुष एवेति वाक्ये । असङ्कुचितेति । न सङ्कुचिता वृत्तिः शक्तिर्यस्य एतादृशेन सर्वपदेनेत्यर्थः । तदुक्तिरिति । 'यद्भूतं यच्च भाव्य'मित्युक्तिरित्यर्थः । सेति । शङ्कानि-

टिप्पणी।

* पुरुष एवेति । अत्र यद्भूतं यच्च भाव्यमिदं सर्वं पुरुष एवेति नान्वयः, वर्तमानस्य पुरुषरूपत्वबोधासंभवात् । किन्तु इदं सर्वं पुरुष एव, यद्भूतं यच्च भाव्यम् ; अत्र पुरुष एवेति पुनः संबध्यते । 'इदं सर्वं पुरुष एवे'त्येतावता सर्वस्यापि प्रपञ्चस्य पुरुषरूपत्वं बोध्यते । 'यद्भूतं यच्च भाव्य'मित्यंशस्तु भावित्वभूतत्वव्यवहारोऽप्रामाणिक इतिशङ्कानिरासायेत्यादिमूलोक्तप्रयोजनाय । नचेदंशब्दस्य शिष्टैः 'इदमः प्रत्यक्षगत'मित्यादिना प्रत्यक्षवस्तुवाचकत्वाभिधानात्प्रत्यक्षस्य च वर्तमानविषयकतया 'इदं सर्वं पुरुष एवे'त्यनेन वर्तमानस्यैव पुरुषरूपत्वं बोध्यते, न सर्वस्यापि प्रपञ्चस्य, अत एव 'यद्भूतं यच्च भाव्य'मिति भूतभविष्यतोः पुरुषरूपत्वबोधनमप्यनुरूपमिति वाच्यम् । अस्माकं प्रत्यक्षस्य वर्तमानीयविषयत्वापरिच्छिन्नत्वेऽपि वेदवक्तुर्भगवतस्तदभावात्सर्वस्यापि प्रपञ्चस्येदमर्थत्वात् । अत एव 'सर्वं खल्विदं ब्रह्म' 'ऐतदात्म्यमिदं सर्व'मित्यादौ जगद्ब्रह्माभेदबोधः संगच्छते । अन्यथा तैरपि वर्तमान एव ब्रह्माभेदो बोधितः स्यात् । यत्तु बुद्धिस्थधर्मोपलक्षितबोधकत्वं सर्वनाम्नां सहस्राक्षेणोक्तं, तत्तु ते घटा नीलरूपवन्त इतिवत् सर्वे घटा नीलरूपवन्त इत्यपि प्रमाणं स्यादित्यादिना प्राभञ्जने निरस्तम्, यत्तदोरेव बुद्धिस्थधर्मोपलक्षितबोधकत्वमिति स्थिरीकृतम् ॥

१ क्वचित् प्रमाण इति पाठः । २ मु. पु. नास्तु वक्तुं शक्यमिति पाठः ।

णिक इतिशङ्कानिरासायेति ज्ञायते । तथा धर्माणामपि ब्रह्मरूपत्वाद्घटादिषु तदात्मकतत्सत्त्वं न विरुद्धम् । स्वतःसिद्धप्रामाण्यश्रुतिवाक्ययत्नात् ॥

नन्वेवं दर्शनसमयेऽपि तद्व्यवहारापत्तिर्वैपरीत्यापत्तिश्च विरोधोच्छे-

सुवर्णसूत्रम् ।

आहुः—तथेत्यादि । धर्माणामिति । भावित्वभूतत्ववर्तमानत्वानाम् । तदात्मकतत्सत्त्वमिति । ब्रह्मात्मकभावित्वादिसत्त्वम् । विरोधो हि प्रमाणानां तुल्यबलत्वे, प्रत्यक्षादीनां त्वविद्यादिपुरुषदोषदुष्टत्वेनाप्राबल्याचद्रहितायाः श्रुतेरेव प्राबल्यम् । श्रुत्या वा भेदेऽपि धर्मधर्मिभावस्य विरुद्धधर्माश्रयत्वस्य च मूलरूपे बोधनादत्रापि सर्वस्मिन् ब्रह्मरूपत्वस्य तयोश्चैकत्वेन त्रयाणां सत्ताबोधनात्तादृशतत्सत्त्वं न विरुद्धमिति तत्परिहार इत्यर्थः ।

अत्राशङ्कते—नन्वित्यादि । एवं प्रपञ्चस्य विरुद्धतत्रयाधारत्वेन विरोधाभावे दर्शनसमयेऽपि भावीत्यादिव्यवहारापत्तिः, प्रागभावादिकाले वर्तमानत्वादिप्रतीत्यापत्तिः, सर्वदा

हरितोषिणी ।

रासायेत्यनेनान्वयः । तदात्मकस्य । सर्वप्रपञ्चात्मकस्य । ननु तेषां प्रामाणिकत्वेऽपि एकस्मिन् घटे भावित्वभूतत्वादिव्यवहारो न संभवति विरोधादित्यत आहुः—तथेति । धर्माणामिति । भावित्वभूतत्ववर्तमानत्वानाम् । तदात्मकतत्सत्त्वमिति । ब्रह्मात्मकभावित्वादिसत्त्वम् । ननु कुतो न विरुद्धमित्यत आहुः—स्वत इति ।

शङ्कते—नन्वेवमिति । एवं सकलप्रपञ्चस्य परस्परविरुद्धभूतत्ववर्तमानत्वादित्रयाधारत्वेपि विरोधाभावे । तद्व्यवहारापत्तिः भावित्वादिव्यवहारापत्तिः । वैपरीत्येति ।

गङ्गाधरभट्टी ।

तथा धर्माणामिति । भावित्वादीनाम् । भारते—'ससैन्याः सलिला'दिति । सलिलान्तादित्यर्थः । पूर्वं 'जलान्ते जनमेजये'त्युक्तेः, जलाद्विनिर्गतानां विसंप्लुतत्वाद्यापत्तेः। भूतानामात्मभाव इति । संप्रजानतां वामदेवादिसदृशां भूतेषु आत्मत्वबुद्धिर्भुत्वेत्यर्थः । 'देवानां यः प्रत्यबुध्यत स सर्वं भवती'ति श्रौतसिद्धान्तादिति भावः । अदर्शनादिति । अदर्शनं प्राप्येत्यर्थः । ल्यब्लोपे पञ्चमीति प्रभूक्तेः । आपतितः दृष्टः असौ संघातो जडत्वान्मां न वेद; अहं तु सर्वं ब्रह्मेति विद्वान् पृथक्तया संघातं न वेद्मि; अत एव वैराग्यं नेत्यर्थः । न चेदं श्रीव्यासेन शोकनिवारणार्थं दर्शितम् । तपोमाहात्म्यादेव पातिव्रत्यादिखण्डनमपि न । गङ्गास्नानाद्युपदेशोऽपि तद्विश्वासार्थमेवेति कुचोद्यं युक्तम् । प्रथमपर्वणि द्रौपद्याः स्वयम्वरे मम पुत्र्याः पञ्च पतयः कथमिति द्रुपदप्रश्ने 'ततो

---

१ मु. पु. श्चैत्वेन ।

दश्चेति चेत्, न। यथा पृथिव्यात्मक एव तस्मिन् गन्धात्मकतत्सत्ता, नापरस्मिँस्तथा यदा यस्मिन् यथा व्यवहाराभावनियमस्तदा तस्मिन्नेव तथाविधविरोधात्मकतत्सत्त्वमिति तथेति नोक्तदूषणगन्धोऽपीति बुद्ध्य-

सुवर्णसूत्रम् ।

तन्नितयसत्त्वात्तन्नितयविरोधोच्छेदश्चेत्यर्थः । अत्र समादधते—यथेत्यादि । यथा येन प्रकारेण पृथिव्यात्मके ब्रह्मण्येव गन्धात्मकब्रह्मधर्मसत्ता सर्वविधगन्धसत्त्वेऽपि तत्तद्देश-कालावच्छेदेन तत्तदुद्भवनियता सत्ता, नापरस्मिन् जलादौ नियताऽनियता वा सा, तथा प्रपञ्चात्मके तस्मिन्, यदा यस्मिन् यथा व्यवहाराभावनियमः यस्मिन् काले यस्मि-न्देशे यदवच्छेदेन भूतभाविवर्तमानादिव्यवहाराभावनियमस्तत्काले तद्देशे तदवच्छेदेन तथाविधविरोधात्मकतत्सत्त्वं भूतादिविरोधात्मकब्रह्मधर्मसत्त्वम्, इति हेतोः, तथा न 'दर्शनसमय' इत्यादिनोक्तं दूषणत्रयम्, इति अस्माद्धेतोः, नोक्तदूषणगन्धोऽपि नानिर्वाच्यतापत्त्यादीनि दूषणानीत्यर्थः । तथा चैकत्र तन्नितयसत्त्वेऽपि तत्तदुद्भूतत्वेन व्यवहारप्रतीत्योः सामञ्जस्यम्, अन्यानुद्भवेन च सहानवस्थानप्रतीत्या विरोधानुच्छेदः, एवमनुच्छिन्ने तस्मिन् देशकालाभ्यां वस्तुषु नियमाक्षेपु वस्तूनां न युगपदुपलम्भानुप-लम्भौ, नापि सदा तौ । एवं तयोः सातत्ये यौगपद्ये च निवृत्त आविर्भावतिरोभावयोरपि मानिर्वाच्यत्वमिति निःशेषदूषणनिवृत्तिरिति भावः । नन्वत्र नियमस्वरूपकथने सप्तम्यन्त-यत्तत्पदाभ्यां वस्तुनिवेशो न युक्तः, विरोधस्य सार्वत्रिकत्वात् । तथा सत्यविरोधव्युत्पाद-

हरितोषिणी ।

प्रागभावादिकाले वर्तमानत्वादिप्रतीत्यापत्तिः । विरोधोच्छेद इति । विरुद्धानामेकत्र सत्त्वे इत्यादि । समाधानमाहुः—यथेति । तस्मिन् ब्रह्मणि । तत्सत्ता ब्रह्मधर्मसत्ता । नापरस्मिन्निति । जलादावित्यर्थः । तथा च यथा सर्वात्मके ब्रह्मणि सर्वविधगन्धसत्त्वे-ऽपि तत्तद्देशकालावच्छेदेन तत्तदुद्भवनियमः, तथा यस्मिन् घटादौ यत्कालावच्छेदेन भूत-त्वभावित्वव्यवहाराभावः, तत्कालावच्छेदेन तस्मिन् घटादौ वर्तमानत्वरूपब्रह्मधर्मसत्त्व-मिति न दूषणत्रयलेशोऽपीत्यखण्डार्थः । कश्चिद्भगवदिच्छया तथा नियमो नास्तीत्याहुः—

गङ्गाधरभट्टी ।

व्यासः परमोदारकर्मा शुचिर्विप्रस्तपसा तस्य राज्ञः । चक्षुर्दिव्यं प्रददौ ताँश्च सर्वान् राजाऽपश्यत्पूर्वदेहैर्यथावत् । ततो दिव्यान् हेमकिरीटमालिनः शक्रप्र-ख्यान् पावकादित्यवर्णान् । बद्धापीडाँश्चारुरूपाँश्च यूनो व्यूढोरस्काँस्तालमा-त्रान् ददर्श । ताश्चैवाभ्यां ख्रियमतिरूपयुक्तां दिव्यां साक्षात् सोमवह्निप्रका-

---

१ मु. पु. योगेषु इति पाठः । २ मु. पु. लम्भो नापि इति पाठः ।

स्य। यत्रोक्तनियमाभावस्तत्र तु न तथा। *तथा चोक्तमाश्रमवासिके पर्वणि गान्धारीं प्रति बादरायणेन—'देवाश्च दानवाश्चैव तथा ब्रह्मर्षयोऽमलाः। त एते निधनं प्राप्ताः कुरुक्षेत्रे रणाजिरे' इत्युपक्रम्य, धृतराष्ट्रादिभीष्मान्तानां स्वरूपमुक्त्वा गान्धार्यादिदुःखनिवारणायाह—

सुवर्णसूत्रम्।

नमसङ्गतमित्यत आहुः—यत्रेत्यादि। यथा गीतायाम् 'केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गै'रित्यत्र दर्शितानां †ध्वस्तत्ववर्तमानत्वयोस्तद्ध्वंसीयभावित्ववर्तमानत्वयोश्चेति। उक्तोदाहरणस्यार्जुनमात्रदर्शनगोचरत्वात्तदनुक्त्वा सर्वजनीनं प्रमाणान्तरमाहुः—तथा चेत्यादि। अत्र च 'यथागत'मित्यन्तेन नष्टानां शरीराणां पुनरुन्मज्जनं विहारादिरूपा चेतनक्रिया चोक्ता। तत्र पुनरुन्मज्जनकथनेन ध्वंसस्य ‡ध्वंसाप्रतियोगित्वनिवारणात्तस्य ¶सामयिकात्यन्ताभावरूपतया तिरोभावरूपता बोधिता। ततो नैयायि-

हरितोषिणी।

यत्रेति। यत्र गीतायाम्। 'केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गै'रित्यनेन केषांचिद्भगवन्मुखे नाशः, सम्मुखस्थितिरपि दृश्यते अर्जुनेन। तथा च यद्दिष्टे दृश्यन्ते, ते तिरोहितप्राया एवेति अर्जुनं प्रति भगवता दर्शितम्। एवं च सर्वेषां नित्यत्वमेवाविर्भावतिरोभावौ च स्वीक्रियत इत्याहुः—तथा चोक्तमिति। च पुनस्तथोक्तमित्यर्थः। कथमुक्तमित्यत आहुः—देवाश्चेति। 'देवाश्च दानवाश्चे'त्यारभ्य, ततो

गङ्गाधरभट्टी।

शाम्। योग्यां तेषां रूपतेजोयशोभिः पत्नीं मत्वा हृष्टवान् पार्थिवेन्द्रः। स तद् दृष्ट्वा महदाश्चर्यरूपं जग्राह पादौ सत्यवत्याः सुतस्य। नैतच्चित्रं परमर्षे

---

टिप्पणी।

*तथा चोक्तमिति। 'यत्रोक्तनियमाभावस्तत्र तु न तथे'तिपूर्वपक्षौ 'न तथे'त्यंशस्य न विरोधात्मकतत्सत्त्वमित्यर्थः। तदेवाविरोधात्मकतत्सत्त्वमिद वचः कर्म। सहस्राक्षमन्थयता प्राभञ्जनेनापि 'विरोधनियमाभावो वचः कर्मे'त्युक्तम्॥

† ध्वस्तत्वेत्यादि। षष्ठ्यन्तं पदद्वयम्। न सहानवस्थानलक्षणविरोध इति शेषः॥

‡ ध्वंसाप्रतियोगित्वेति। मायावादिभिर्ध्वंसीयध्वंसः प्रतियोगिपुनरुन्मज्जनापत्तिभयान्न ध्वंसप्रतियोगिकोऽङ्गीकृतः, किन्तु घटादिप्रतियोगिकः, इह तु तदुन्मज्जनकथनेन ध्वंसप्रतियोगिकोऽपीति विशेषः॥

¶ सामयिकात्यन्ताभावेति। घटापनयनानयनाभ्यामुत्पत्तिविनाशौ भजमानोऽत्यन्ताभावः॥

'सर्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति । ततो द्रक्ष्यथ सर्वांस्तान् ये हताः स्म रणाजिर' इति । ततो धृतराष्ट्रपाण्डवादयः सस्त्रीकास्तत्र गत्वा स्नात्वा निशायां जातायां व्याससमीपं गताः । 'ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् । अवगाह्याजुहावाऽथ सर्वांल्लोकान् महामुनिः । पाण्डवानां च ये योधाः कौरवाणां च सर्वशः । राजानश्च महाभागा नानादेशनिवासिनः । ततः सुतुमुलः शब्दो जलान्ते जनमेजय[1] । प्रादुरासीद् यथा पूर्वं कुरुपाण्डवसेनयोः । ततस्ते पार्थिवाः सर्वे भीष्मद्रोणपुरोगमाः । ससैन्याः सलिलात्तस्मात्समुत्तस्थुः सहस्रश' इत्यादिना सर्वान्नामपूर्वकं निरूप्याह—'एकां रात्रिं विहृत्यैवं ते वीरास्ताश्च योषितः । आमन्त्र्यान्योन्यमाश्लिष्य ततो जग्मुर्यथागतम्' । एतच्छ्रुत्वा जनमेजयः पप्रच्छ—'कथं च त्यक्तदेहानां पुनस्तद्रूपदर्शन'मिति । तदा वैशम्पायन आह—'अविप्रणाशः सर्वेषां कर्मणामिति नि-

सुवर्णसूत्रम् ।

कादिवज्जनमेजयस्याज्ञानं बोधयितुं तत्प्रश्न उपन्यस्तः । सामयिकात्यन्ताभावो हि प्रतियोगिनित्यत्वेन भवति, तदनित्यं चागोपालपण्डितं प्रसिद्धमिति कथं तस्य सामयिकत्वमिति तदाशयः । तत्र प्रतियोगिनित्यत्वं साधयितुं तत्कारणकलापनित्यत्वं वैशंपायन आह—अविप्रणाश इति सार्द्धेन । *अत्राविप्रणाशपदेनापाततो नाशप्रतीतिर्वस्तुतस्त्वनाश इत्यु-

हरितोषिणी ।

जग्मुर्यथागत'मित्यन्तेनेत्यर्थः । आगमनं पुनश्च दर्शनं सर्वेषामुक्तम् । एतेनाविर्भावतिरोभावावेव, न तु सर्वथा नाश इति सूचितम् । नैयायिकमतमालम्ब्य जनमेजयः पृच्छति—कथञ्चेति । वैशंपायन उत्तरयति—अविप्रणाश इति सार्द्धेन । 'नशेः षान्तस्य न

गङ्गाधरभट्टी ।

त्वयीति प्रसन्नचेताः स उवाच चैन'मिति च पञ्चेन्द्रोपाख्याने । नैतच्चित्रं सर्वज्ञत्वं पदार्थयाथातथ्यदर्शकं च । अत्र हेतुः—परमर्षे इति । दशमस्कन्धे च यमं प्रति श्रीकृष्ण

टिप्पणी ।

* अविप्रणाशपदेनेत्यादि । अत्र विप्रोपसर्गयोः प्रकर्षाभिधायकतया सर्वेषां कर्मणां प्रकृष्टनाशो नास्तीत्युक्तौ स्वल्पनाशोऽभ्यनुज्ञातो भवति । स च नोपपद्यते नित्यत्वविघटकत्वात् प्रकरणस्य च नित्यत्वे तात्पर्यात् । अत आपाततस्तथाप्रतीतिमात्रे तस्य पर्यवसानं, प्रतिषेधस्य च वस्तुतोऽनाशे इत्याशयः ॥

१ इदानीं महाभारते तत्रेति पाठ उपलभ्यते ।

श्रयः । कर्मजानि शरीराणि तथैवाकृतयो नृप । महाभूतानि नित्यानि भूताधिपतिसंश्रया' दित्यादि । एतदग्रे '"अविनाशी तथा नित्यः क्षेत्रज्ञ

सुवर्णसूत्रम् ।

त्तम् । अत्र शरीराकृती कार्यभूते, कर्माणि निमित्तानि, महाभूतानि समवायीनि । तथा च यथा कटसंवेष्टनहस्तमुष्टिजनकक्रियाया वेष्टनाद्युत्तरमप्रतीयमानत्वेऽपि हस्तयोगत्यागे कटप्रसारणदर्शनाद्धस्तसंयोगरक्षिता क्रियासत्ता निश्चीयते, तथात्र †सर्वकर्मसत्ता । महाभूतनित्यत्वं तु परमाणुनित्यत्वमुपगच्छतामपि समानम् । एवं सति संघातनिमित्तभूतक्रियानित्यत्वान् संघाताकृत्योर्नित्यत्वम् । तत्र क्रियाभूतयोरेव नित्यत्वं कुत इत्याकाङ्क्षायां 'भूताधिपतिसंश्रया'दित्यनेनोभयोर्भगवदाश्रितत्वकथनाद्भगवद्धर्मत्वं हेतुरुक्तः । तेन नष्टशरीरोन्मज्जनमुपपादितम् । ततो विहारादिक्रियोपपादनाय शरीरेषु जीवप्रवेशं वक्तुं

हरितोषिणी ।

णत्व'मिति शास्त्राण्णत्वम् । विशेषेण प्रकृष्टो नाशो नास्तीति सूचितम् । तथा च नाशप्रतीतिमात्रमनेन सूचितम् । अत्र महाभूतानि समवायिकारणानि, कर्माणि निमित्तकारणानि । एतानि नित्यानि । एवजन्यानि शरीराण्याकृतयोऽपि तथैव । तत्र कार्यकारण-

गङ्गाधरभट्टी ।

उवाच 'गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम् । आनयस्व महाभाग मच्छासनपुरस्कृतः । तथेति तेनोपानीतं गुरुपुत्रं यदूत्तमौ । दत्वा स्वगुरवे भूयो वृणीष्वेति तमूचतु'रिति । अत्र हि भगवान् गुरुगेहे च्छन्दोऽध्ययनाय कतिचिद्वर्षाण्युवास । ततोऽपि पूर्वं दीर्घकालं मृतस्य पुत्रस्य तावत एवानयनं गम्यते । दीर्घकाले प्रत्यभिज्ञानासम्भवात् । तत्रैवोत्तरार्धेऽपि श्रीदेवकीमातृचरणमृतापत्यानयनेपि यावद्वयसो मृतास्तावद्वयस एवानीताः । अत एव प्रत्यभिज्ञानात् 'तान् दृष्ट्वा बालकान् देवी पुत्रस्नेहस्नुतस्तनी । परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः । अपाययत् स्तनं प्रीता सुतस्पर्शपरि-

---

टिप्पणी ।

* अविनाशीति । अविनाश्यस्तथायुक्तः क्षेत्रज्ञ इति निश्चयः । भूतानामात्मको भावो यथाऽसौ न वियुज्यते' इति पाठः संप्रति भारते दृश्यते ॥

† सर्वकर्मसत्तेति । यथा च कटसंवेष्टनेत्यादिदृष्टान्तस्तु परप्रतिपत्तिसौकर्याय । वस्तुतस्तु सिद्धान्ते कर्मणोऽक्षरब्रह्मरूपान्तरत्वेनाभ्युपगमान्नित्यत्वमविवादमेव । इदं चैकमेव । कर्मणामिति बहुवचनं तु तदंशाभिप्रायेण । लक्षणं त्वस्य—'विधिनिषेधप्रकारेण लौकिकक्रियाभिः प्रदेशतोऽभिव्यञ्जनयोग्या व्यापिका क्रिये'ति । विशेषः प्रस्थानरत्नाकरे ॥

इति निश्चयः। भूतानामात्मभावो यो ध्रुवोऽसौ संप्रजानताम्' इत्याद्य-

सुवर्णसूत्रम् ।

जीवनित्यत्वमाह—अविनाशीत्यादि। ततः प्रवेशहेतुमाह—भूतानामिति। भूतानां शरीराणामात्मभावः आत्मत्वेन ज्ञानमसौ संप्रजानतां ज्ञानिनां ध्रुवः वामदेवस्येव सर्वात्मभावरूपत्वात्, स एवार्थादज्ञानिनामध्रुवः अभिमानरूपत्वात्। तथा चानेन विद्वदविद्वत्साधारणो *देहप्रवेशहेतुरुक्तः। तेन विहारादिक्रियाऽप्युपपन्नैवेत्यर्थः। ननु यद्येवं तर्हि भवादृशां ज्ञानिनां कथं तच्छरीरेषु मृतत्वव्यवहार इत्यत आह—अदर्शनादिति। न विद्यते दर्शनं यस्येत्यदर्शनम् मूलकारणमक्षरम्। ल्यब्लोपे पञ्चमी। तत्प्राप्य इह संघात आगतः। 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ती'ति मुण्डकश्रुतेः। तथा च मूलकारणे लीनत्वात्तथा व्यवहार इत्यर्थः। अदर्शनं दर्शनाविषयत्वमित्यर्थेऽपि तत्र हेतुरक्षरे लयेन तदेकीभाव एवेति स एवार्थः। ततो विश्वासार्थं स्वस्य ज्ञानित्वयो-

हरितोषिणी।

योनित्यत्वे हेतुमाहुः—भूताधिपतीति। भूताधिपतिसंश्रयात् भगवत्संश्रयादित्यर्थः। एतावता विनाशानन्तरमपि शरीराविर्भावः सूचितः। एवं शरीरादिनित्यत्वमुक्त्वा जीवस्यापि नित्यत्वमाहुः—एतदग्र इति। जीवस्य शरीर आत्मभावो वर्तत इति कृत्वा शरीरे प्रवेश इत्याह—भूतानामिति। भूतानां शरीराणां य आत्मभावः आत्मत्वेन ज्ञानम्, असौ संप्रजानतां ज्ञानिनां ध्रुवः। तथा च वामदेवादीनां सर्वात्मभावत्वेन शरीरादिनिष्ठ आत्मभावः ध्रुवः, अज्ञानिनां तु अभिमानरूपत्वेनाध्रुवः इति भावः। ननु सर्वस्य ध्रुवत्वे मृतत्वव्यवहारो ज्ञानिनां भवादृशां कथमित्यत आह—अदर्शनादिति। अक्षरादित्यर्थः। आपतितः आगतः। तथा च गीतायाम् 'अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत। अव्यक्तनिधनान्येव तत्र का परिदेवने'ति 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गति'मित्यग्रिमवाक्यादव्यक्तमक्षरमादिः कारणं येषां तानीत्यर्थः। अदर्शनादित्यत्र नास्ति दर्शनं यस्य तददर्शनं मूलकारणमक्षरं ब्रह्मेत्यर्थः। अत्र मुण्डकश्रुतिः—'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।

गङ्गाधरभट्टी।

ष्णुते'त्यादि। वस्तूनामपीति। निरस्तमित्यपि पूर्ववदेव। यतस्तदिच्छेति। एतेन 'प्रजाश्च तुल्यकालीया नाध्यवस्यन्ति कालिता' इत्यपि व्याख्यातम्॥

---

* देहप्रवेशहेतुरिति। शरीरेष्वात्मभावः॥

---

१ अदर्शनादिति ल्यब्लोपे पञ्चमी।

नेकमुक्त्वाह—'अदर्शनादापतितः पुनश्चादर्शनं गतः । नाहं तं वेद्मि, नासौ मां, न च मेऽस्ति विरागते'ति । न चेदं *मायया प्रदर्शितं व्यासेनेति वाच्यम् । तथा वचनाभावात् । 'प्रसादात्तस्य वै मुने'रिति वाक्याच्च । पतिव्रतानां तासां स्वस्वभर्तृभिः सह विहारकथनाच्च । गङ्गास्नानादिसाधनोपदेशानुपपत्तेश्च । 'अदर्शनादापतित' इत्यत्र ल्यब्लोपे

सुवर्णसूत्रम् ।

धनायाह—नाहमित्यादि । तं संघातं शरीररूपत्वेनाहं न वेद्मि, ब्रह्मवित्त्वात्, असौ संघातो मामात्मानं न वेत्ति, चिदंशस्य तिरोहितत्वात्, च पुनर्मे विरागतापि नास्ति, ज्ञाते हि दोषे दुष्टात्पुरुषाद्विरज्यते, ब्रह्मैव सर्वमिति ज्ञाने दोषस्य कुत्राप्यदर्शनान्न मे विरागता । विगतो रागो यस्मात्सौ विरागस्तस्य भावो विरागता, सापि सर्वस्यैवात्मत्वेन प्रियत्वान्नास्तीत्यर्थः । एवं पूर्णज्ञानित्वं बोधितम् । स्फुटमग्रिमम् । तत्र †मायिकत्वे अनुपपत्तेश्चेत्यन्ताश्चत्वारो हेतवः । शेषस्तु शरीराद्यवयवस्तुसत्तायां हेतुः स्फुट एव ॥

हरितोषिणी ।

तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापि यन्ती'ति । एवं चाक्षरे लीनत्वात्तथा व्यवहार इति भावः । वैशंपायनः स्वस्य सर्वज्ञत्वबोधनार्थमाह—नाहमिति । तं समुदायं शरीररूपत्वेन ब्रह्मवित्त्वादहं न वेद्मीत्यर्थः । असौ संघातो मां न वेत्ति चिदंशस्य तिरोहितत्वादिति । च पुनः मे विरागता नास्ति । ज्ञाने, दोषश्चेत्पुरुषस्य विरागता जायते । विगतो रागो यस्मात्सौ विरागस्तस्य भावो विरागता । सापि सर्वस्यैवात्मत्वेन प्रियत्वान्नास्तीत्यर्थः । अत्र व्यासस्य कृतौ नटवन्मायिकत्वं शङ्कते—न चेति । समाधत्ते—तथेति । द्वितीयं हेतुमाह—प्रसादादिति । तृतीयं हेतुमाह—पतिव्रतानामिति । पातिव्रत्यधर्मेण मायिकत्वभङ्गः स्यादिति भावः । चतुर्थमाह—गङ्गेति । न हि तत्साधनेनासत्फलं भवतीति । मृतानां तेषां शरीरसत्तास्तीत्यत्र प्रमाणमाह—अदर्शनादिति । ल्यब्लोपेति । अदर्शनं प्राप्येत्यर्थः । इतिशब्देन सत्तायां ल्यब्लोपे

टिप्पणी ।

* मायेति । भारतविवृतिकृन्नीलकण्ठस्तु—ब्रह्मलौकिकाः सत्या एव भीष्मादयोऽनृतैर्जन्मादिभिर्भावविकारैराविर्भूय तिरोभूताः सन्तो महर्षिनियया पुनराविर्भूय रेमिर इतीह वदति ॥

† मायिकत्व इति । मायिकत्वे प्राप्ते सति तन्निरासार्थमनुपपत्तेश्चेत्यन्ताश्चत्वारो हेतव इत्यर्थः ॥

१ मु. पु. शिष्यस्तु॰ पाठः ।

२ ज्ञाते हि दोषे दुष्टात्पुरुषो विरज्यते, ब्रह्मैव सर्वमिति ज्ञाने दोषस्य कुत्राप्यदर्शनान्न मे विरागता ।

पञ्चमीति, पुनःशब्दाच्च दर्शनात्पूर्वं वस्तुसत्ता प्राप्यते। एवं सति यद्देशकालावच्छेदेन यस्य यथा प्रतीतिर्भगवतेच्छाविषयः कृताऽस्ति, तद्देशकालावच्छेदेन तथा प्रतीतिर्भवतीति सिद्धम्। इदं तु यथा तथा 'परात्तु तच्छ्रुते'रित्यधिकरणे निरूपयिष्यामः। एतेन घटोपलम्भानुपलम्भयोः कादाचित्कत्वमनुपपन्नम्, तादृशतद्धेतोर्वक्तुमशक्यत्वादिति निरस्तम्। लौकिकप्रत्यक्षाविषयत्वेऽपि वस्तुसत्तया योगिप्रत्यक्षविषयत्वं स्याद्भूतभाविनां *वस्तूनामित्यपि। यतस्तथा तदिच्छा न तत्र

सुवर्णसूत्रम्।

नन्वस्तु विरोधस्यासार्वत्रिकत्वम्, तथापि नियमतदभावौ यदि स्वाभाविकौ, तदा लोके तयोर्विरोधो नियत एवेत्यविरोधव्युत्पादनमसंगतमेवेत्यत आहुः—एवं सतीत्यादि। तथा च नियमहेतुबोधनायायमुपाख्यानोपन्यास इति विरोध ऐच्छिकत्वाद् न स्वाभाविक इत्यविरोधव्युत्पादनं सुसङ्गतमित्यर्थः। ननु तथा प्रतीताविच्छा हेतुरस्तु, क्रियायां तु चेतनस्यैव हेतुता, तथा सति विहारे पुनर्बन्धः कुतो नेत्यत आहुः—इदमित्यादि। तथा च तत्र जीवनिष्ठस्य कर्तृत्वस्यापि ब्रह्माधीनत्वेन व्यासचरणैः प्रतिपादितत्वात्तत्क्रियापि ब्रह्माधीनेति तत्रापि तादृशेच्छाया एव हेतुत्वान्न बन्धापत्तिरित्यर्थः। एवमत्र हेतुनिरूपणेन यत्सिद्धं तदाहुः—एतेनेति। एतादृशनियमाकारव्यक्तीकरणेन। कथं निरस्तमित्याकाङ्क्षायामाहुः—यत इत्यादि। ननु तादृशभगवदिच्छायां किं मानमित्याकाङ्क्षा-

हरितोषिणी।

पञ्चमीत्येको हेतुरिति सूचितम्। द्वितीयं हेतुमाहुः—पुनःशब्दादिति। ननु सर्वत्र सर्वदा तादृशप्रतीतिः कुतो न जायत इत्यत आहुः—एवं सतीति। तथा च तादृशप्रतीतेरिच्छाधीनत्वान्न सर्वदासीति भावः। ननु तैः स्वस्वस्त्रीभिः साकं विहारे कृते तेषां बन्धः कुतो नेत्यत आहुः—इदमिति। तत्र भगवदधीना जीवनिष्ठा विहारादिक्रियेति तत्र भगवदिच्छया न बन्ध इत्यर्थः। एतेनेति। यद्देशकालावच्छेदेनेति नियमकरणेनेत्यर्थः। तादृशतद्धेतोरिति। उपलम्भादिकादाचित्कत्वहेतोरित्यर्थः। तथा च सर्ववस्तूनां सनातनत्वं नास्तीति भावः। निरस्तमिति। पूर्वोक्तनियमकरणेन भगवदिच्छायास्तत्रापि सत्त्वादित्यर्थः। तत्र भगवदिच्छासत्त्वे किं मानमत आहुः—लौकिकेति।

---

टिप्पणी।

*वस्तूनामित्यपीति। पूर्वेण निरस्तमित्यनेन सम्बन्धः। तथा च प्रतीत्यप्रतीत्योर्भगवदिच्छायत्ततया ध्वंसोत्तरं सन्नपि घटो न योगिनोपलभ्यते। अतः पूर्वपक्षिणा 'ध्वस्तो घटो योगिनोपलभ्येते'त्यादिनाऽऽपादितो दोषो 'यद्देशकालावच्छेदेने'त्यनुपदोक्तेन नियमेन निरस्त इत्यर्थः॥

चकास्ति । फलबलकल्प्या हि सा । अस्तु वा तद्विषयत्वम्, बाधकाभावात् । उक्तप्रमाणैर्वस्तुसत्त्वे सिद्धे तस्य न्यायप्राप्तत्वाच्च । 'अनागतमतीतं च वर्तमानमतीन्द्रियम् । विप्रकृष्टं व्यवहितं सम्यक् पश्यन्ति योगिन' इति वचनाच्च । एवं सत्यस्मिन् कालेऽस्मिन् देश इदं कार्यमेवं

सुवर्णसूत्रम् ।

यामाहुः—फलेत्यादि । तथा च कार्यलिङ्गकानुमानमेव मानमित्यर्थः । तत्प्रयोगस्तु—भगवदिच्छा तत्तत्कार्यजननानुकूलतत्तत्प्रकारिका, तत्तत्कारणत्वात् । यद्यत्कारणं तत्तज्जननानुकूलतत्प्रकारकम्, घटकारणदण्डवत् । यद्वा, एतत्कार्यम् एतज्जननानुकूलप्रकारकभगवदिच्छाजन्यम्, भगवदिच्छाकार्यत्वात् । यद्यत्कार्यं तत्तज्जननानुकूल(प्रकारक)कारणजन्यम्, दण्डकार्यघटवदित्येवं बोध्यम् । ध्वस्तादीनां योगिप्रत्यक्षविषयत्वस्यादूषणत्वायेष्टापत्त्या तत्परिहरन्ति—अस्त्वित्यादि । इष्टापत्तेरन्यथात्वपरिहारायाहुः—उक्तेत्यादि । अप्रामाणिकत्वपरिहारायाहुः—अनागतेत्यादि । तथा चात्रानागताद्युल्लेखादपि वस्तुसत्त्वैव प्राप्यत इति *पूर्वोक्तं वाक्यं सामान्यलोकपरं, न योगिपरमिति, न प्रमाणयोरपीतरेतरविरोध इत्यर्थः । एवमुक्तदूषणानि परिहृत्य दूषणाभावं स्फुटीकर्तुं तेन सिद्धमाविर्भावादिस्वरूपमाहुः—एवं सतीत्यादि । अत्र लक्षणे कालनिवेश उपलम्भादिसातत्यवारणाय । देशनिवेशस्तद्यौगपद्यवारणाय । कार्यनिवेशो नित्यवस्त्वाविर्भावस्यैतद्विलक्षणत्वज्ञापनाय । प्रकारनिवेशः कारणाव्यवस्थावारणायेति बोध्यम् । किंच, अस्मिन् कालेऽस्मिन् देश इत्यत्र अस्मिन् कालेऽयं देशो भवत्वस्मिन् देशेऽयं

हरितोषिणी ।

न तत्र चकास्तीति । योगिप्रत्यक्षविषयत्वस्य तत्रासत्त्वादिच्छा देदीप्यमाना नास्तीत्यर्थः । अनुमानगम्यत्वं तस्या अस्तीत्याहुः—फलबलेति । ननु ध्वस्तादिषु योगिप्रत्यक्षविषयत्वेन कथमेवमिति चेदिष्टमेवेत्याहुः—अस्तु वेति । तद्विषयत्वम् । योगिप्रत्यक्षविषयत्वम् । उक्तप्रमाणैरिति । 'तदेतदक्षयं नित्यं जगन्मुनिवराखिल'मित्यादिभिर्भारतवचनैर्भावित्वभूतत्वादिव्यवहाररूपप्रमाणैरित्यर्थः । तस्य योगिप्रत्यक्षस्य । तत्र प्रमाणमाहुः—अनागतमिति । एतावता सिद्धमाविर्भावस्वरूपं दर्शयन्ति—एवं सतीति । यथा अस्मिन् काले इत्युक्तम्, तथा अस्मिन्देशे अयं कालो भवत्वितीच्छाविषयत्वमपीति विवक्षणीयम् । तेन भारतवर्षे चतुर्युगव्यवस्था, इतरत्र त्रेतायुगकाल इति पञ्चमस्कन्धोक्तं

---

टिप्पणी ।

* पूर्वोक्तं वाक्यमिति । 'प्रजाश्च तुल्यकालीया नाधुना सन्ति कालिताः' इति वाक्यम् ॥

भवत्वितीच्छाविषयत्वमाविर्भावः, तदा तत्र तथा तन्मा भवत्विती-च्छाविषयत्वं तिरोभाव इत्यपि सुवचम्। एतयोरेवोक्तयोग्यतारूपत्वात् ॥

सुवर्णसूत्रम्।

कालो भवत्वित्यपि विवक्षितं ज्ञेयम् । उदाहरणं तु यथा चतुर्युगव्यवस्था भारतवर्षे एवां नेतरत्र । यथा च पञ्चमस्कन्धे भारतवर्षव्यतिरिक्तान्यष्टवर्षाणि प्रकृत्योक्तम्—'तत्रत्यान, त्रेतायुगसमः कालः सदा वर्तते' इति । यथा चावान्तरप्रलयकाले त्रिलोकीनाश, उपरि-तनचतुर्लोकीस्थितिरित्यादि द्रष्टव्यम् । ननु पूर्वं विषयत्वयोग्यत्वस्वरूपलक्षणमुक्तमिदानीं च विषयत्वरूपमुच्यत इति स्वोक्तविरोध इति शङ्कायामाहुः—एतयोरित्यादि । *योग्यता हि बाधाभावरूपा, बाधाऽभावस्तु भगवदिच्छयैवेति †तादृशतद्विषयत्वरूपैव सा सिद्ध्यतीति न विरोध इत्यर्थः ॥

हरितोषिणी।

संगच्छते। पूर्वं योग्यत्वरूपमुक्तमिदानीं विषयत्वरूपमुच्यत इति पूर्वापरविरोधं परिहरन्ति—एतयोरिति । तादृशेच्छाविषयत्वरूपैव योग्यतास्तीति भावः । एतेन पूर्वलक्षणयोरनयोश्चैकवाक्यता सूचिता ॥

---

टिप्पणी।

* योग्यता हि बाधाभावरूपेति । अनुभवविषयत्वयोग्यता आविर्भाव इति हि पूर्वोक्तं लक्षणम् । तत्रानुभवपदस्य साक्षात्कारपरतया साक्षात्कारविषयत्वयोग्यता आविर्भाव इति निष्कृष्टम् । अथ च योग्यता बाधाभावः । बाधश्च शून्यात्मा, अभाव इति यावत् । स च समभिव्याहृतपदोपात्तस्य साक्षात्कारविषयत्वस्यैव । तदभावश्च पुनः साक्षात्कारविषयत्वरूप एव, अभावाभावस्य प्रतियोगिस्वरूपत्वनियमात् । एवं च लक्षणे योग्यतापदं मन्दप्रयोजनम् । इदमेवाभिप्रेत्य श्रीपुरुषोत्तमैस्तत्र योग्यतापदं तु तदुक्तार्थनिष्कर्षार्थमनुवादमात्रमित्याद्युक्त्वा साक्षात्कारविषयत्वमाविर्भाव इति योग्यतापदरहितं निष्कृष्टलक्षणमुक्तम् तथापि स्पष्टप्रतिपत्तिकरतया लक्षणे तद्विवक्षित्वेहार्थकथनमिति न पूर्वापरविरोधः ॥

† तादृशतद्विषयत्वरूपैव सेति । बाधाभावानुकूलभगवदिच्छाविषयत्वरूपैव योग्यतेत्यर्थः । यद्यपि 'अनुभवविषयत्वे'ति लक्षणे स्वरूपघटकतया भगवदिच्छा नोपात्ता, तथापि सिद्धान्ते कारणतया तस्याः सर्वत्राभ्युपगमात्तत्राप्यनुक्तसिद्धैवेत्याशयः । तथा च साक्षात्कारविषयो भवत्वितीच्छाविषयत्वमाविर्भाव इति पूर्वोक्तलक्षणस्वरूपं फलितम् ॥

**न च तत्तद्देशकालयोरपि नित्यत्वाद् युगपत्सकलोपलम्भप्रसङ्गोऽनुपलम्भप्रसङ्गो वा स्यादिति वाच्यम्। अस्मिन् सृष्टिकालात्मके स्थूले**

सुवर्णसूत्रम्।

ननूपलम्भादिकादाचित्कत्वे उक्तरूपनियमो हेतुत्वेनोक्तः, स चेश्वरेच्छया कृत इतीच्छाया एव हेतुत्वं तेन सिद्धम्। तत्रेच्छाशरीरे प्रविष्टौ देशकालौ चेदनित्यौ, तदा सिद्धान्तभङ्गः। यदि नित्यौ, तदा यावती सामग्र्येकैकस्योपलम्भे अपेक्ष्यते तावती सर्वाप्यस्तीति भूतभाविवर्तमानकालीनानां सर्वेषां युगपदुपलम्भप्रसङ्गः। यदि च तिरोभावस्य बाधकत्वं प्रदर्श्य स दोषो निवार्यस्तदा तथैवानुपलम्भप्रसङ्ग इत्येवं पूर्वोक्तसर्वदूषणतादवस्थ्यात्लक्षणमसङ्गतमित्यत आहुः—न चेत्यादि। तथा च लक्षणे, अस्मिन्नित्यनेन क्रमिकत्वपर्य्यन्तं कालविशेषणं संगृह्यते, एवमित्यनेन प्रकारमध्ये स सं पुरुषः संगृह्यते, इदमित्यनेन घटादिवदुपलम्भादिरूपापि सा सा कार्यव्यक्तिः संगृह्यत इति देशकालयोर्नित्यत्वेऽपि तदाविर्भावस्य क्रमवैशिष्ट्यादिपूर्वकमेव विषयत्वमिति सुखेन तत्परिहारान्नासङ्गतिरित्यर्थः। न चेदृशेच्छैवाविर्भावोऽस्तु, किं विषयतापर्यन्तानुधावनेनेति वाच्यम्। 'बहु स्यां' 'हंत तिरोसानी'ति श्रुतौ तयोर्विषयत्वेनैव सिद्धत्वात्। तयोर्भगवद्धर्मत्वेऽपि "*विश्लिष्टशक्तिर्बहुधेव भाती'ति न्यायेन सूक्ष्मतरं जगद्धर्मत्वाविरोधात्। 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्। आविर्भावतिरोभावजन्मनाशविकल्पव'दिति विष्णुपुराणेऽपि तथाङ्गीकाराच्च। न चानित्यत्वप्रसङ्गः, बोधनार्थमेवैवं कथनात्। नापि विप-

हरितोषिणी।

शङ्कते—न चेति। तत्तद्देशकालयोरिति। अस्मिन् काले अस्मिन् देशे इति लक्षणघटकीभूतयोरित्यर्थः। नित्यत्वादिति। सिद्धान्ते नित्यत्वेन स्वीकृतत्वादित्यर्थः। सकलेति। भूतभाविवर्तमानकालीनानामित्यर्थः। एकैकस्य यस्योपलम्भे या या सामग्र्यपेक्षते, सा सर्वाप्यस्ति, देशकालयोर्नित्यत्वादिति भावः। ननु तिरोभावस्य तत्र प्रतिबन्धकत्वं स्वीक्रियत इत्यत आह—अनुपलम्भप्रसङ्गो वेति। समाधानमाहुः—अस्मिन्निति। इदं च क्रमिकत्वपर्यन्तं कालस्य विशेषणं बोध्यम्। तत्त्वादिति। आविर्भावलक्षणत्वादित्यर्थः। तथा चास्मिन्देशे अस्मिन् काले अस्य पुरुषस्यास्य घटादिकार्यस्योपलम्भः क्रमेण भवत्वित्येवं निवेशे न कुत्रापि दोष इति भावः। नन्वाविर्भावलक्षणान्तर्गतक्रमिकत्वं तु तत्तत्कालोपाध्यवच्छिन्नाविर्भाव एव, तथा चाविर्भावज्ञाने आविर्भावज्ञा-

टिप्पणी।

* विश्लिष्टशक्तिरिति 'अयं हि जीवस्त्रिवृदब्जयोनि'रिति प्रारम्भे। विश्लिष्टा शक्तिर्यस्येति समासः॥

कालोपाधौ तदवयवात्मकतत्तत्कालोपाधौ क्रमिके तस्य तस्य पुरुषस्य तत्तदुपलम्भो भवत्वितीच्छाविषयत्वस्य तत्त्वात् । अत्रैतदिच्छाप्रकार-

सुवर्णसूत्रम् ।

यभेदे नानेच्छापत्तिगौरवम् । *सर्वविषयकज्ञानवदिच्छाया अप्यैक्यात्, प्रकर्षेणैव सर्वस्या निर्वोढुं शक्यत्वाच्चेति । ननु क्रमिकत्वं नाम तत्तत्कालोपाध्यवच्छिन्नाविर्भावशालित्वम्, आविर्भावस्वरूपं च तत्राप्येतदेवेति तज्ज्ञाने अन्योन्याश्रयात्माश्रयदोषापात इत्यत आहुः —अत्रेत्यादि । एतदेव । उक्तविशेषणविशिष्टमेव । तथा च तत्तदाविर्भावव्यक्तिभेदेन तज्ज्ञानभेदान्न ताविस्यर्थः । यद्वा अयमर्थः—श्रुतौ हि 'बहु स्यां प्रजायेये'तीच्छायाः प्रकारद्वयमुक्तम् । तत्र प्राथमिकप्रकारेण नानारूपाविर्भावे भगवतः सकाशात्कालदेशपुरु-षादिविभागः । द्वितीये प्रकर्षकथनात्तत्तत्प्रकारविवेकः । तथा सति प्रथमे विकारे अव-

हरितोषिणी ।

नापेक्षेत्यात्माश्रयदोष इत्यत आहुः—अत्रैतदिति । एतदिच्छेति । क्रमिकेच्छेत्यर्थः ।

गङ्गाधरभट्टी ।

तदवयवात्मकेति । वर्षदिनाद्यात्मकेत्यर्थः । तत्त्वादिति । आविर्भावस्वरूपत्वात् । तस्य चात्राभावान्न देशकालोपलम्भस्तत एव न सकलोपलम्भ इति भावः । तदेवाहुः— अत्रेति । एतदेवेति । अस्मिन्देशेऽयं कालः प्रकटोस्तु, अस्मिन् कालेऽयं देश इत्यर्थः । यथा चतुर्युगव्यवस्था भारते वर्षे, न त्वन्यत्र । यथा चावान्तरप्रलये त्रिलोकीनाशो, न सप्तलोक्याः ॥

---

टिप्पणी ।

* सर्वविषयकज्ञानवदिति । भगवतः सर्वविषयकं ज्ञानं नित्यमेकं च । 'अनुच्छित्तिधर्मे'ति श्रुतेः, नित्यानेकविरुद्धविषयकज्ञानानां सामानाधिकरण्यासंभवात् । नानाविषयत्वेऽप्येकत्वं तु समूहालम्बने दृष्टम् । तत्तत्प्रकारभेदस्यैकत्वविरोधित्वेऽपि भगवद्धर्मेषु विरोधस्याकिंचित्करत्वाल्लाघवाच्चैकत्वमेवाद्रियते । अत्र विष्णुसहस्रनामभाष्यस्था 'सर्वं पश्यति स्वाभाविकेन बोधेने'त्येकवचनेनैकत्वं वदन्ती शङ्कराचार्योक्तिरप्यनुकूला । भगवज्ज्ञानस्य ज्ञानान्तरनिर्विशेषत्वं पर्यायेण सर्वज्ञत्वं चेति त्वयुक्तम् । 'सर्वे एव हि सर्वेषां भवन्ति क्रमशो मिथः' इति भागवतोक्तरीत्या तस्य सर्वत्र सुलभत्वात् । तत्तत्काले तत्तज्जन्मज्ञानस्यार्जुनेऽपि सत्त्वेन तादृशतद्विलक्षणे 'न त्वं वेत्थ परंतपे'ति निषेधानुपपत्तेः । अतो यथेदं ज्ञानं तथेच्छापि विषयभेदेऽप्येकैवेत्याशयः । विशेषो मारुतशक्तौ ॥

---

१ क. ड. 'विवेकः' इति पाठः ।

त्वोपपन्नानां तत्तद्देशकालादीनामाविर्भावात्मकैतदिच्छाविषयत्वादेतदे-
वाविर्भावरूपं तेषामपीति बुद्ध्यस्व । भगवदाविर्भावस्य भगवच्छक्ति-
त्वमिति नानुपपत्तिः काचित्॥

सुवर्णसूत्रम्।

च्छेदकविवेकाभावान्निरवच्छिन्न एवाविर्भाव इति तदात्मिका *आविः प्रकटं भावयतीत्या- विर्भावस्तदात्मिका तत्स्वरूपिणी या एतदिच्छा तद्विषयत्वात्तेषामुक्तदेशकालादीनामप्ये- तदेव †निरवच्छिन्नानुभवविषयत्वयोग्यत्वरूपमेवाविर्भावस्वरूपमिति हेतोर्बुध्यस्व साव- धानीभूय तद्दूषणाभावमनुसंधत्स्वेत्युपालम्भः । एवं दूषणपरिहाराादाविर्भावादेर्नित्यत्वं साधितम् । नन्वस्तु नित्यत्वम्, तथापि तद्विवेकोत्तरभावित्वादाविर्भावादेर्वस्तुशक्तित्वमेव, न तु भगवच्छक्तित्वमित्याशङ्कायामाहुः—भगवदित्यादि । सर्वस्य ब्रह्मात्मकत्वेन तदा- विर्भावोऽपि भगवदाविर्भाव एवेति तस्य तथात्वमिति नानुपपत्तिः काचित् । प्रतिव्यक्ति- (भेदा)भेदकृताप्यनुपपत्तिः सर्वस्य भगवद्रूपत्वात्, शक्तेर्नानाप्रकारत्वाच्च नास्तीत्यर्थः । वस्तुतस्तु 'विश्लिष्टशक्तिर्बहुधेव भाती'त्यादिप्रमाणेन एकस्या एव विश्लेषाज्ज्ञानात्व- मिति भावः ॥

हरितोषिणी।

आविर्भावात्मकेति । पूर्वोक्ताविर्भावलक्षणा या एतदिच्छा तद्विषयत्वादित्यर्थः । एत- देवेति । पूर्वोक्तविशेषणविशिष्टमेवेत्यर्थः । तेषाम् तत्तद्देशकालादीनाम् । बुध्यस्व । दू- षणं नास्तीति जानीहि । तथा चाविर्भावलक्षणान्तर्गतत्वं देशकालादीनामतो नास्माभ्य इति भावः । ननु घटस्याविर्भावः पटस्याविर्भाव इति व्यवहारादाविर्भावस्य वस्तुशक्तित्वं प्रतिभाति, उक्तं तु भगवच्छक्तित्वम्, 'आविर्भावतिरोभावौ शक्ती वै मुरवैरिण' इति वचनादित्यत आहुः—भगवदिति । घटपटादीनामपि ब्रह्मरूपत्वात्तदाविर्भावो भग-

टिप्पणी।

* आविः प्रकटं भावयतीति । अत्र व्युत्पत्तिद्वयम् । आविर्भवनमाविर्भावः । आ- विर्भावयतीत्याविर्भावः । प्रथमव्युत्पत्तिलभ्योऽर्थस्तु घटादिकार्यनिष्ठः । द्वितीयव्युत्पत्तिल- भ्यस्तु कारणनिष्ठः । स च भगवदिच्छारूप एवेति प्रोक्तम्—तदात्मिकेति ॥

† निरवच्छिन्नानुभवेति । अनुभवपदं साक्षात्कारपरम् । साक्षात्कारो देशांशे तु निर्विवादः । कालांशे तु सिद्धान्ते ग्राह्यार्थविशेषणतया । यथेदानीं घट इत्यत्र संयुक्तवि- शेषणतया, लोहितरूपमित्यादौ संयुक्तसमवेतविशेषणतयेत्येवम् ॥

१ मापन्ना मु. पु. पाठः । २ बहुत्वामितीच्छा० मु. पु. अधिकः पाठः । ३ मु. पु. 'सर्वेषां' इतिपाठः । ४ कोष्ठकान्तर्गतः पाठो ग. मु. पुस्तकयोर्नास्ति ।

एवं सति यत्कालावच्छेदेन सर्वेषां मिथोऽनुभवाविषयत्वं भगवद-भिमतं, स प्रलयकाल इति निगद्यते। यदवच्छेदेन सर्वेषां मिथोऽनुभवविषयत्वं तथा, स सृष्टिकाल इत्युच्यते। सर्वत्र विशिष्टेच्छैव नियामिकेति सर्वमनवद्यम् ॥

आविर्भूयारविन्दाक्षे भक्तिमाविष्करोति यः।
सोऽव्यान्नः पितृपद्रेणुस्तिरोधानं च दुर्हृदाम् ॥

सुवर्णसूत्रम् ।

ननु सर्वस्य नित्यत्वमुपगच्छतः प्रलयस्याशक्यवचनत्वात्तदभावे सृष्टेरप्यशक्यवचनत्वात्पूर्वोक्तविवक्षायां सिद्धान्तभङ्ग इत्याकाङ्क्षायामाहुः—एवं सतीत्यादि। एवं सतीति सर्वस्य नित्यत्वेऽपि भगवदिच्छया तत्तन्नियमे सति, सर्वत्र स्थूलोपाधौ तदवान्तरोपाधौ, विशिष्टेच्छैव 'प्रजायेये'त्युक्तेच्छैव नियामिकेति न सिद्धान्तभङ्ग इत्यर्थः ॥

सर्वमुपपाद्य वादसमाप्तिं बोधयितुं श्लोकमाहुः—आविर्भूयेति। तिरोधानमिति। कुर्यादिति शेषः ॥

हरितोषिणी ।

सदाविर्भाव एवेति भावः। न च घटपटादीनां नानात्वात्तद्गतशक्तीनां नानात्वापत्तिरिति वाच्यम्। 'विश्लेषशक्तिर्बहुधेव भाती'त्यादिवचनादेकस्या एव बहुधा भावान्नानात्वादिभानमिति ॥

ननु सर्वस्य नित्यत्वे प्रलयकालः, सृष्टिकाल इति व्यवहारो न स्यादित्यत आहुः—एवं सतीति। सर्वस्य नित्यत्वेपि भगवदिच्छया तत्तन्नियमे सति । सर्वत्रेति। स्थलादिषु। विशिष्टेति। 'बहु स्यां प्रजायेये'तीच्छैवेत्यर्थः ॥

वादसमाप्तिं सूचयन्तो—'मङ्गलान्तानि शास्त्राणि प्रथन्त' इति व्याकरणभाष्यान्मङ्गलाय श्लोकमाहुः—आविर्भूयेति। यः पितृपद्रेणुः स्वयमाविर्भूयारविन्दाक्षे भक्तिमाविष्करोति, स नः अव्यात्, दुर्हृदां तिरोधानं च कुर्यादिति शेषः ॥

गङ्गाधरभट्टी ।

ननु जगतो नित्यत्वे सृष्टिप्रलयौ कथमत आहुः—एवं सतीति ॥

तिरोधानं चेति। करोतीत्यनुकृष्यते। अव्यादिति क्रियादित्यर्थकं वा। एतेन समाप्तपुनरात्तत्वमत्र काव्यदोष इत्यपास्तम्। तत्तिरोधानं विना भक्त्यविर्भावस्याशक्यत्वात्। निरर्थकविशेषणे एव हि स दोषः ॥

---

१ मु. ग. ङ. पुस्तकेषु 'विरोध' इति पाठः।

क्रमिकदेशकालनित्यत्वमूलकसर्वोपलम्भापत्तितत्परिहारौ।

(१३) ननु तत्तद्देशकालयोरपि नित्यत्वाद्युगपत्सकलोपलम्भप्रसङ्गोऽनुपलम्भप्रसङ्गश्च स्यादिति चेत्, ननु तत्तद्देशकालावच्छिन्नतत्तत्पुरुषवत्तद्व्यवहारावपि स्त एवेति किमनुपपन्नम्? तर्हि तावधुनाप्युपलभ्येतामिति चेत्, मैवम्; अनुपल-

सुवर्णसूत्रम् ।

(१३) एवं समापिते वादे शङ्काल्पमानी क्रमिकयोरपि देशकालयोर्नित्यत्वमनुसन्धाय पुनः शङ्कते—ननु तत्तदित्यादि । तत्तद्देशकालयोरिति । प्रागभावावस्थाभिव्यञ्जकस्य कारणात्मकस्य देशस्य क्रमिकत्वविशिष्टस्य कालोपाधेश्च नित्यत्वाद्युगपदेवैकवस्तुनिष्ठभावित्वादित्रितयोपलम्भादिः स्यादित्यर्थः । अत्र बहुवारमुद्धृतत्वात्तदुक्तं दूषणमुपेक्ष्य, तदुक्तमुपगम्यानुक्तनित्यत्वं च स्मारयित्वा समाधातुं पृच्छन्ति—नन्वित्यादि । त्वदुक्तदेशकालमात्रनित्यत्वे किं वाच्यम्, त्वदनुक्ते प्रकारकार्ये अपि स्त एव वर्तेते एवेति सर्ववर्तमानत्वाद्धेतोः किमनुपपन्नम् अस्मदुक्ते किमयुक्तम्, दूषकत्वाभिमानिनस्तवास्मदुपरि किं दूषणमवशिष्टमिति तद्धेत्वर्थः । तत्राह पूर्वपक्षी—तर्हीत्यादि । तौ देशकालप्रकारविशिष्टा(विर्भावतिरोभावकार्यात्मकौ तद्रूपौ भूतभाविना)वेकवस्तुनिष्ठभावित्वादित्रयविषयव्यवहाराव्यवहारौ अधुना वर्तमानकालेऽपि, उपलभ्येतां युगपदनुभवविषयौ क्रियेतामिति दूषणमवशिष्टमित्यर्थः । तत्र समादधते—मैवमित्यादि । वर्तमानावपि युगपन्नोपलप्स्येते । तत्र हेतुः—अनुपलम्भेति । अयमर्थः—व्यवहारोपलम्भानुपलम्भयोरेकसामग्रीकत्वं त्वदभिमतम्? उत भिन्नसामग्रीकत्वम्? यद्याद्यः, तदा अभावग्रहणार्थं योग्या-

हरितोषिणी ।

(१३) अस्य विचारस्यावश्यकत्वं सूचयितुं सिंहावलोकनन्यायेन पुनः शङ्कते—नन्विति । तत्तदिति । घटादिप्रागभावादिविशिष्टस्य देशस्य क्रमिकत्वबोधकस्य कालस्य नित्यत्वादित्यर्थः । सकलेति । आविर्भावकाले भूतभाविवर्तमानकालिकसकलवस्तूपलम्भप्रसङ्ग इत्यर्थः । अनुपलम्भेति । तिरोभावकाल इति शेषः । समाधातुं पृच्छन्ति—नन्विति । किमनुपपन्नमिति । तत्तत्कालिकपुरुषव्यवहारस्य जायमानत्वेनानुपपत्त्यभाव इत्यर्थः । पूर्वपक्षी दूषयति—तर्हीति । ताविति । भूतभाविपुरुषावित्यर्थः । अधुनापि वर्तमानकालेऽपि । समाधानमाहुः—मैवमिति । वर्तमानसन्निकृष्टपदार्थोपलम्भोऽस्माकं, कालत्रयवर्तिपदार्थोपलम्भो योगिनामित्याशयेनाहुः—अनुपलम्भेति । तेषां

गङ्गाधरभट्टी ।

(१३) अभ्युपेत्यापि समाधातुं पुनराशङ्का—नन्विति ।

१ क. पु. कोष्ठकान्तर्गतः पाठोऽधिकः ।

न्भावच्छेदककालावच्छिन्नत्वात् पुंसां तदनुपलम्भात् तत्तत्कालस्य भिन्नत्वात्तत्तदवच्छिन्नपुरुषस्यापि भिन्नत्वाद्युगपत्सत्त्वाच्च तदुपलम्भानुपलम्भयोर्युगपत्सत्त्वं न विरुद्धम् । न च योऽहं पूर्वं घटमन्वभूवं स एवाह-

सुवर्णसूत्रम् ।

नुपलब्धिं विशेषणतां च किमित्यधिकामङ्गीकरोषि । अथाङ्गीकरोषि, तदा सामग्रीभेदस्तु सिद्धः । एवं सति यथा सा, तथा 'कालभेदोऽपि सामग्रीति तद्भेदात्कालात्मकतद्विरुद्धसामग्र्यवच्छिन्नानां पुंसामस्माकं तदनुपलम्भात् युगपन्नियतयानुपलम्भादित्यर्थः । ननु कालभेदस्य सामग्रीत्वे युगपन्नियतयानुपलम्भ उपपद्यताम्, तथाप्यनुपलम्भकाले उपलम्भसत्तायां किं मानमित्यत आहुः—तत्तत्कालेत्यादि । तत्तद्व्यवहारोपलम्भानुपलम्भयोः सहावस्थानविरोधे हि तत्तत्सत्तायां मानापेक्षा, न तु घटतदभावयोरिव भावाभावविरोधेऽपि । एतयोश्च न सहावस्थानविरोधः । तत्तत्कालस्य भिन्नत्वात् उपलम्भानुपलम्भावच्छेदककालस्य भिन्नत्वात् । अनुपलम्भावच्छेदको ह्यस्माकं कालः, उपलम्भावच्छेदकस्तु योगिनां कालः, तयोः परस्परं भिन्नत्वादुपलम्भानुपलम्भयोर्युगपत्सत्त्वं न विरुद्धम् । यदि चैकस्यैव कालोपाधेः प्रतियोगिभेदेन जन्ममरणविवाहसीमन्तसुखदुःखघटोपलम्भजनकत्ववत्प्रतियोगिभेदेन भूतवर्तमानादिव्यवहारोपपादनक्षमत्वात्कालभेदो नोपेयते, तदाऽपि तत्तदवच्छिन्नपुरुषस्यापि भिन्नत्वात् । पुरुषस्येति जात्यपेक्षयैकवचनम् । तथा च तत्तत्कालोपाध्यवच्छिन्नपुरुषाणामपि भिन्नत्वात् युगपत्सत्त्वाच्च यथैकस्मिन्काले क्वचिदुदेष्यति क्वचिदुद्गच्छति क्वचिदुदित इति च सूर्ये तत्तद्व्यवहारस्य युगपत्सत्त्वं न विरुद्धमेवमत्रापीत्यर्थः । नन्वेवं पुरुषभेदेन तत्तद्व्यवहारोपलम्भानुपलम्भव्यक्त्यानन्त्यात्तयोर्युगपत्सत्त्वाविरोधो, न तन्नित्यत्वसाधकः । एकस्य पुरुषस्य योऽहं पूर्वं घटमन्वभूवं, स एवाहमधुना नानुभवामीति प्रत्यभिज्ञायां तयोर्भिन्नकालिकत्वेनानुभवात्तयोरेकपुरुषनिष्ठत्वेनै-

हरितोषिणी

पुंसामिति । अस्माकमिति शेषः । तदनुपलम्भात् भूतभाविपदार्थानुपलम्भात् । तथा चोपलम्भावच्छेदककालावच्छिन्नत्वाद्योगिनां कालत्रयवर्तिपदार्थोपलम्भो जायत इति भावः । तत्तत्कालस्य उपलम्भावच्छेदकस्यानुपलम्भावच्छेदकस्य च कालस्येत्यर्थः । तदवच्छिन्नस्य तादृशकालावच्छिन्नस्य । योगिपुरुषस्याऽस्मदादिपुरुषस्य च भिन्नत्वादित्यर्थः । ननु पुरुषाणां भिन्नत्वेपि कालत्रयवृत्तिपदार्थानां युगपदसत्त्वान्नित्यत्वं नास्तीत्यत आहुः—युगपदिति । तादृशकालयोः तादृशकालावच्छिन्नयोगिपुरुषाऽस्मदादिपुरुषयोश्च युगपत्सत्त्वादित्यर्थः । तदुपलम्भेति । घटाद्युपलम्भानुपलम्भयोरित्यर्थः । यदाऽस्मदादीनां भाविघटानुपलम्भस्तदा योगिनां भाविघटोपलम्भ इति घटतदभावयोरिव युगपत्सत्वं न विरुद्धमित्यर्थः । एवं सर्वेषां पदार्थानां युगपत्सत्त्वान्नित्यत्वमिति भावः । अत्र नैयायिकः

मधुना नाऽनुभवामीतिप्रत्यभिज्ञानुपपत्तिः । सर्वस्य ब्रह्मात्मकत्वेन तस्य चैकत्वेन तदुपपत्तेः । न चैवमतिप्रसङ्गः । उपलम्भानुपलम्भयोरपि ब्रह्मात्मकत्वात् । स्वेच्छया यत्र यदुपलम्भरूपेणाविर्भवति तत्र तथा, यत्र

सुवर्णसूत्रम् ।

ककालीनत्वसाधने च तादृशप्रत्यभिज्ञानुपपत्तेरिति चेत्तत्राहुः—न चेत्यादि । तत्र हेतुः—सर्वस्येत्यादि । एवं प्रत्यभिज्ञाया जायमानत्वेऽपि सर्वस्य ब्रह्मात्मकत्वेन, ब्रह्मणश्चैकत्वेनैतस्योपलम्भकालेऽन्यनिष्ठैतदनुपलम्भस्यानुपलम्भकाले चोपलम्भस्य चैतन्निष्ठत्वेनापि सत्त्वात्सिद्ध एकनिष्ठयौगपद्ये तयोर्नित्यत्वोपपत्तेः । प्रमाणयोस्तुल्यबलत्वे हि विरोधतदभावचिन्ता । प्रकृते तु देहात्ममानिपुरुषनिष्ठत्वात् प्रत्यक्षं दुर्बलम् । श्रुतिस्तु तद्रहितपरमाप्तपुरुषवाक्यत्वात्प्रबला । तथा च श्रुतिरूपधर्मिग्राहकमानसिद्धं नित्यत्वं यौगपद्यं च मूढास्तुभिरापातरमणीयैरनुभवशतैर्युक्तिसहस्रैश्च न प्रतिक्षेप्तुं शक्यम् । यथा त्वन्मते परमाणूनां नित्यत्वं, घटादीनां द्व्यणुकादिक्रमजन्यत्वमित्यादि, तथेत्यर्थः । नन्वेवं ब्रह्मैक्यं यथा त्वन्मते सर्वनित्यत्वोपपादकं, तथैकोपलम्भादिव्यक्तेः सर्वगतत्वेस्याप्युपपादकमित्येकस्योपलम्भाद्यवसरे सर्वेषां तदापत्त्या सर्वेषां सर्वज्ञतापत्तिरूपातिप्रसङ्गापात इत्यत आहुः—न चैवमित्यादि । आत्मसमवेतस्यापि ज्ञानस्य प्रदेशविशेषवृत्तित्वं तवाप्यभिमतम् । अस्माकं तु तद्भगवदिच्छया नियमितमिति न कथमप्यतिप्रसङ्गावकाश इत्यर्थः । एतादृश-

हरितोषिणी ।

शङ्कते—न चेति । तथा च 'पूर्वमिदानी'मितिपदद्वयेनोपलम्भानुपलम्भयोः समानकालीनत्वं नास्तीति सूचितम् । एवं च युगपत्सत्त्वाभावान्न नित्यत्वमिति भावः । परिहरन्ति—सर्वस्येति । तस्य ब्रह्मणः । तदुपपत्तेरिति । नित्यत्वोपपत्तेरित्यर्थः । तथा च ब्रह्मण एकत्वेनान्यनिष्ठोऽन्यकालिको वा, उपलम्भोऽनुपलम्भो वैकब्रह्माश्रितो भवतीत्युपपन्नं यौगपद्यमिति भावः । शङ्कते—न चेति । अतिप्रसङ्ग इति । किञ्चिज्ज्ञस्य सर्वज्ञत्वापत्तिरूपातिप्रसङ्ग इत्यर्थः । तथा च किंचिज्ज्ञस्यैकपदार्थज्ञाने एकब्रह्मगतसर्वपदार्थज्ञानात्सर्वज्ञत्वं स्यादिति भावः । समाधानमाहुः—उपलम्भेति । तथेति । उपलम्भो भवतीत्यर्थः । एवमग्रेपि । तथा च तव मते जीवात्मनो विभुत्वेऽपि तद्गतज्ञानस्य किञ्चिद्विषयकत्वं स्वीक्रियते यथा, तथा मयापि भगवदिच्छाया नियामकत्वं स्वीक्रियत इति

गङ्गाधरभट्टी ।

अनुपपत्तिरिति । त्वया पुरुषभेदाभिधानादिति भावः । अतिप्रसङ्ग इति । चैत्रीयानुभवस्य मैत्रे प्रत्यभिज्ञानापत्तिः ॥

---

१ त्वन्मते. क. पु. नास्ति । २ सु. ग. पु. त्व, इति नास्ति ।

च यदनुपलम्भरूपेणाविर्भवति तत्र तथेति नियमात् । यथा पृथिव्यामेव गन्धरूपेणाविर्भावो, न जलादिषु ॥

अत एवाचार्यैः श्रीभागवततत्त्वदीपे 'अथ वा सर्वरूपत्वान्नामलीला-

सुवर्णसूत्रम् ।

नियमे किं मानमिति शङ्कायां, यथा तव मते प्रागभावस्तथास्माकं भगवदिच्छा । फलबलकल्प्यत्वस्योभयत्रापि तौल्यात् । अस्माकं श्रुतिपुराणाद्युपष्टम्भस्याधिक्यात्तदनुसार्यनुमानमपीत्याशयेन दत्तोत्तरत्वं स्मारयन्ति—यथेत्यादि । एतेनैव नित्यकार्यविवेकाभावोऽपि दत्तोत्तरः । इदं नित्यत्वेन व्यवह्रियतामिदं कार्यत्वेनेत्यैच्छिकनियमस्य तत्रापि समानत्वात् । एवमन्या अप्यनुपपत्तयो भगवदिच्छास्वरूपविचारेणैव ब्रह्मवादे परिहरणीयाः । 'प्रजायेये'तीच्छाशरीरे प्रविष्टस्य प्रकर्षस्यातिपिचण्डिलत्वेन तस्य समाधानसमर्थत्वादिति दिक् ॥

नन्वेवमिच्छाया नियमान्मास्तु रूपप्रपञ्चेऽतिप्रसङ्गस्तथापि नामप्रपञ्चे दुर्वारः । ब्रह्मणः सर्वरूपत्वेन तत्तदभावोभयधर्मकत्वादज्ञे सर्वज्ञत्वस्य, सर्वज्ञे वाऽज्ञत्वस्य, नित्ये कार्यत्वस्य, कार्ये नित्यत्वस्य सद्भावाद्विपरीतप्रयोगेऽपि प्रामाण्यस्यानपायेन वाक्यप्रामाण्याप्रामाण्यव्यवस्थाभङ्गप्रसङ्गादित्याशङ्कायामिष्टापत्त्या समादधते—अत एवाचार्य्यैरित्यादि। यतोयमतिप्रसङ्ग इष्टः, अत एवाचार्यैस्तथा निरूपितमित्यर्थः । तदाहुः—(सर्वत्राखण्डब्रह्मभानेन विरोधांशास्फूर्त्या विरोधांशस्त्यक्त इति) । वाक्यार्थस्तु वेति पक्षान्तरे । पूर्वं विविदिषादशायां यत्प्रमाणत्वेन विवक्षितं, तत्सर्वं 'वेदाः श्रीकृष्णवाक्यानी'त्यादिनोक्तम् । अथ विद्वद्दशायां 'प्रमाणं सर्वमेव हि' वाङ्मात्रमेव प्रमाणमित्यर्थः । ननु कथं परस्परविरुद्धानां बहिरनुष्णः, परं ब्रह्म विष्णुशिवब्रह्माकारं निराकारमित्यादीनां प्रामाण्य-

हरितोषिणी ।

भावः । यथा तव मते घटप्रागभावकाले घटोपलम्भो न जायत इति घटानुपलम्भे प्रागभावस्य हेतुत्वं, तथा मन्मते भगवदिच्छाया हेतुत्वं कल्प्यते, फलबलकल्प्यत्वस्योभयत्राप्यविशिष्टत्वादिति बोध्यम् । अत्रोदाहरणमाहुः—यथेति । एवं च ब्रह्मवादेऽनुपपत्तिपरिहारो भगवदिच्छयैवेति हृदयम् । एवं रूपप्रपञ्चेऽनुपपत्तिः परिहृता ॥

नामप्रपञ्चे तु सर्वस्य ब्रह्मरूपत्वेनाज्ञे सर्वज्ञत्वस्य, सर्वज्ञेऽज्ञत्वस्य, नित्ये कार्यत्वस्य, कार्ये नित्यत्वस्य सत्त्वेन विपरीतप्रयोगेऽपि प्रामाण्यं स्यात् । तथा च प्रामाण्याप्रामाण्यव्यवस्था न स्यादित्यत्रेष्टापत्तिमाहुः—अत एवेति। यतोऽयं दोष इष्टः, अत एवाचार्यैस्तथैव निरूपितमित्यर्थः । तत्त्वदीपनिबन्धे निरूपितमित्यग्रेणान्वयः । कारिकार्थं विशदयन्ति

१ कोष्ठकान्तर्गतः पाठो मुद्रिते नास्ति ।

विभेदतः । विरोधांशपरित्यागात् प्रमाणं सर्वमेव हि' इति निरूपितम् । 'ब्रह्मणः सर्वरूपत्वेनानुष्णस्वरूपत्वेनापि, वह्निरनुष्ण'इत्यादिवाक्यान्यपि प्रमाणानि । कुतः ? यतः सर्वत्राखण्डब्रह्मभानेन विरोधांशास्फूर्त्या विरोधांशस्त्यक्त एवेति वाक्यार्थः ॥

(१४) अत एव, पूर्वमेव 'वाचारम्भणं विकार' इति निरूपितम् ।

सुवर्णसूत्रम् ।

मित्याकाङ्क्षायामाहुः—सर्वरूपत्वाद् विरोधांशपरित्यागादिति । तथा च भगवतः सर्वरूपत्वेन वह्निरूपत्वादनुष्णरूपत्वाच्चानुष्णत्ववह्नित्वयोरैकाधिकरण्याच्छियत्वादीनामप्यैकाधिकरण्याद्वह्निरनुष्णः, परं ब्रह्म ब्रह्मविष्णुशिवाकारमनाकारमित्यविरुद्धमित्यर्थः । सदेतदुक्तम्—ब्रह्मणः सर्वरूपत्वेनेत्यादिना । इदं चाग्रे व्युत्पाद्यम् । अत्र प्रकृतानुपयोगान्न व्याख्यातम् । परं तु निबन्धटीकानुसारेणोच्यते—नामलीलाविभेदत इति । रूपलीलावन्नामलीलाविभेदतः । विरुद्धांशपरित्यागात् । यथा रूपलीलायां 'पूर्ववद्वे'त्यधिकरणं निराकारमेव ब्रह्म, प्रथमं पुरुषरूपेण, ततः शक्तिरूपेण, ततः कार्यरूपेण जायत इत्युच्यते, तथा नामलीलायामपि क्रमेण तादृशतादृशवाक्यरूपेण जायत इति सर्वाणि वाक्यानि ब्रह्मबोधकत्वादविरुद्धानीति वाक्यात्रं प्रमाणमित्यर्थ इति ॥

(१४) एवं प्रासङ्गिकं परिहृत्य प्रस्तुतं महावाक्यमेव निर्णेतुं कार्यदशायामपि सर्वस्य ब्रह्मत्वे श्रुतेः सम्मतिमाहुः—अत एवेत्यादि । यतः सर्वस्य ब्रह्मात्मकत्वेनैकरूपत्वमेव श्रुत्यभिप्रेतम्, न तु कार्यरूपत्वेन नानात्वम्, अत एव हेतोः प्रपाठकारम्भ एव वाचा

हरितोषिणी ।

—ब्रह्मण इति । सर्वरूपत्वेनेति । वह्नित्वरूपत्वेनानुष्णत्वरूपत्वेनेत्यर्थः । अनुष्णत्वरूपत्वेनापीति । भानादिति शेषः । अत एव सर्वस्य ब्रह्मात्मकत्वेन नामलीलायां विरोधांशाभानेन अनुष्णत्ववह्नित्वयोर्ब्रह्मान्तर्भावेन सामानाधिकरण्याद् वह्निपदानुष्णपदयोरेकार्थवाचकत्वं संगच्छते ॥

(१४) अत्र श्रुतेः प्रामाण्यमाहुः—अत एवेति । पूर्वमेवेत्यस्य निरूपितमित्यनेनान्वयः । पूर्वमेव छान्दोग्ये प्रपाठकारम्भ एव । वाचारम्भणं घटः पट इति कथनम् ।

गङ्गाधरभट्टी ।

(१४) पूर्वमेवेति । प्रपाठकारम्भे एव । वाचारम्भणं घट इत्यादिकथनं विकारो नामधेयं, न तु तेन रूपेण सत् । कारणरूपेण तु मृद्रूपेण सत्यमित्यर्थः । प्रकृतमनुसरन्ति —अपरं चेति—

१ क. ग. पु. 'भावेन' पाठः । २ ख. पु. 'नामापि' पाठः ।

महावाक्यार्थनिरूपणम् ।

ततः पूर्वोत्तरयोर्जडजीवयोः सदात्मकत्वे मध्ये हेतुमाह—'स आत्मे'ति। एवं जडस्य सदात्मकत्वमुक्त्वा जीवस्याप्याह—'तत्त्वमसी'ति। अस्योपदेशत्वान्मुहुरुक्तवान्। 'आवृत्तिरसकृदुपदेशा'दिति ब्रह्मसूत्रात् । अतः सम्पूर्णं महावाक्यमुपदेशः। तत्र यथा—'ऐतदात्म्य'मित्यत्र न भागत्यागलक्षणा सदंशे, तथा—'त-

सुवर्णसूत्रम् ।

आरम्भणं घटः पट इत्यादिकथनम्, विकारो विकृतिः, नामधेयं नाममात्रं, न तु तेन रूपेण वस्तु तत्, किन्तु मृत्तिकेत्येव कारणरूपेणैव सत्यमित्युक्तम् । तथा चाविद्वद्दशायामेव नानात्वं; न तु विद्वद्दशायामित्यर्थः । तत इति । सत्यत्वकथनोत्तरम् । 'स आत्मे'ति । स एव सर्वस्य जडस्य जीवस्य चात्मा अनारोपितानागन्तुकस्वरूपम् । अस्येति । ऐतदात्म्यमित्यादेः । उपदेश इत्युद्देश्योल्लेखः । सिद्धमाहुः—तत्रेत्यादि । 'स य एषोऽणिमे'त्येतेन जगन्मूलभूतमणुभावरूपं सत्पदार्थं परिचाय्य, ऐतदात्म्यपदार्थाद्धर्मरूपतामिदंपदार्थादाकारादिकं च त्यक्त्वा केवलसन्मात्रता न बोध्यते; तदुभयत्यागे ऐतदात्म्यसर्वपदयोर्वैयर्थ्यप्रसङ्गात्, किन्तु तत्पूर्वकमेव तथात्वं बोध्यत इति यथा सदंशे सा नाङ्गीक्रियते, तथा चिदंशेऽपि प्रायपाठबलात्, तस्य भावस्तत्त्वमिति भावार्थप्रत्ययमप्रयुज्य-

हरितोषिणी ।

विकारो विकृतिः । नामधेयं नाममात्रं, न तु घटत्वेन रूपेण तद् वस्तु, किन्तु कारणरूपेण । 'मृत्तिकेत्येव सत्यम्' । कारणमेव घटाद्यात्मना जातमिति श्रुत्यर्थः । एवं च नानात्वमविद्वद्दशायामेवेति भावः । तत इति । 'मृत्तिकेत्येव सत्य'मित्यनेन यत्सत्यत्वमुक्तं, तदनन्तरमित्यर्थः । पूर्वोत्तरयोरिति । छान्दोग्यश्रुतौ पठितयोरित्यर्थः । हेतुमाहेति । सदात्मकत्वे हेतुं मध्य आहेत्यन्वयः । स आत्मेति । स भगवान् आत्मा जडजीवयोरात्मेत्यर्थः । अनारोपितानागन्तुकं रूपमिति यावत् । अस्येति । 'ऐतदात्म्यमिदं सर्व'मित्यादेः । मुहुरिति । छान्दोग्येऽष्टमप्रपाठकेऽन्तिमखण्डेषु 'तत्त्वमसि श्वेतकेतो'इत्येवं मुहुरित्यर्थः । उपदेशे आवृत्तौ प्रमाणमाहुः—आवृत्तिरिति । केवलं 'तत्त्वमसी'त्यस्यैवोपदेशत्वं निवारयन्ति—अत इति । तेन सिद्धमाहुः—तत्रेति । तत्र सम्पूर्णमहावाक्ये । ऐतदात्म्यमिति । 'ऐतदात्म्यमिदं सर्व'मित्यत्रेत्यर्थः । तथा च 'स य एषोऽणिमे'त्यनेन वाक्येन जगत्कारणीभूतः अणिमरूपः सत्पदार्थ उक्तः, तत 'ऐतदात्म्यमिदं सर्व'मित्यनेन ऐतदात्मत्वरूपधर्मः, इदंपदार्थरूपाकारश्च बोध्यते, तत्रोभयोरबोधने केवलं 'स य एष' इत्यनेन सन्मात्रबोधने भागत्यागलक्षणा स्यात् । सा चैतदात्म्यपदसर्वपदयोर्वैयर्थ्यभिया सदंशे त्वया न स्वीक्रियते, एवं चिदंशेऽपि न स्वीकार्येति भावः । एकत्र वक्तव्यैकत्र न वक्तव्येत्यत्र दोषमाहुः—तथा चेति । ननु तत्र तद्भावगमकं पदवैयर्थ्यम्, अत्र

त्वमसी'त्यत्र चिदंशोऽपि न सेत्यवगन्तव्यम् । तथा च सर्वस्यैव ब्रह्म-वाक्यत्वात्तदेकदेश एव 'तत्त्वमसी'ति वाक्यं जीवब्रह्मणोरभेदं बोधय-तीति न वक्तुं शक्यम् । वाक्यभेदप्रसङ्गाद्, उपक्रमविरोधाच ॥

सुवर्णसूत्रम् ।

मानेऽपि युष्मच्छब्दे मध्यमपुरुषोपपत्तिं चानुसंधाय तदभावोऽवगन्तव्यः । एवं सिद्धे सर्वस्य ब्रह्मवाक्यत्वे, लक्षणां विनैव तादात्म्येन सर्वस्य ब्रह्मत्वोपपत्त्या प्रतिज्ञादिसिद्धौ सर्वस्यैव ब्रह्मावबोधकत्वं युक्तम्, न तु तदेकदेशस्य लक्षणया जीवब्रह्माभेदबोधकत्वं युक्त-मित्यर्थः । ननु यथा तत्र पदवैयर्थ्यं तदभावगमकं, तथा 'तत्त्वमसी'त्यत्र किं तदभावग-मकमित्यत आहुः—वाक्यभेदप्रसङ्गादिति । रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानवद्बुद्धिवि-कल्पितेभ्यः सदवयवेभ्यो विकारसंस्थानोपपत्तिमङ्गीकृत्य 'ऐतदात्म्य'मित्यस्य विभेदव्या-सेधकत्वं, 'तत्त्वमसी'त्यत्र भागत्यागलक्षणया जीवब्रह्माभेदबोधकत्वमित्येवमर्थभेदेन विभागे *साकाङ्क्षत्वाभावेन च तत्प्रसङ्गादित्यर्थः । नन्वेवमर्थभेदेऽपि प्रकारभेदेन ब्रह्माभेद एव बोध्यत इत्याकाङ्क्षासत्त्वादेकवाक्यतोपपत्तेर्न तत्प्रसङ्ग इत्यतो हेत्वन्तरमाहुः—उपक्रम-विरोधादिति । उपक्रमे हि 'सदेव सौम्येदमग्र आसी'दित्यादिना ब्रह्मणः सच्चिदात्म-कजडजीवोपादानता बोधिता । न हि सा †विवर्तवादे अभेदे चोपपद्यते । विवर्तोपादान-ताया अभ्युपगमैकशरणत्वात् । अभेदे त्वयापि तदनङ्गीकाराच । एवं तदुक्तमनुपगम्य दूषणमुक्तम् । एवं तापनीयेऽपि बोध्यम् । तथा हि—तत्रारोपविभूतिव्यपदेशपक्षैः प्रजा-पतिर्जीवस्य ब्रह्माभेदं खण्डाष्टकेन बोधितवान् । तदिदं रहस्यं श्रुत्वा प्रणवपदवाच्यं सिद्धं परमेश्वरं स्वात्मत्वेन जिज्ञासुभिर्देवैर्नवमखण्डे विज्ञापितः सोऽद्वयात्मस्वरूपं सिद्धं 'उप-

हरितोषिणी ।

किमित्यत आहुः—वाक्यभेदप्रसङ्गादिति । रज्जौ सर्पावभासवत्सन्मात्रे विकाररूपभे-दबुद्धेर्निरासकत्वं 'ऐतदात्म्य'मित्यस्य, 'तत्त्वमसी'त्यत्र लक्षणया भेदनिरासकत्वमित्यर्थ-भेदप्रयुक्तवाक्यभेदप्रसङ्गादित्यर्थः । न 'त्वर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागः स्या'दिति जैमिनिसूत्रेणैकवाक्यत्वोपपत्तिरुभयत्रापि प्रकारभेदेन ब्रह्माभेदबोधकत्वरूपार्थै-

टिप्पणी ।

* साकाङ्क्षत्वाभावेन चेत्यादि । 'समेषु वाक्यभेदः स्या'दितिजैमिनीयन्यायेन वा-क्यभेदप्रसङ्ग इत्यर्थः । समेषु परस्परनिराकाङ्क्षेषु ॥

† विवर्तवादे अभेदे चेति । कार्यरूपस्य जडांशस्य सतो विवर्ततया तत्रांशे विवर्त-वादः, जीवस्य ब्रह्माभिन्नतया तत्राभेद इत्याशयः ॥

१ मु. ग. ड. पु. पद इति नास्ति ।

सुवर्णसूत्रम् ।

द्रष्टाऽनुमन्ते'त्यविना व्याकुर्वन्, भेदप्रतीतेर्भ्रमत्वाय तज्जनकाऽविद्यास्वरूपं 'तमोरूपे'-त्युक्त्वा, 'तदेतज्जडं मोहात्मकमनन्तं तुच्छमिदं रूपमस्य, अस्य व्यञ्जिका नित्यनिवृत्तापि मूढैरात्मैव दृष्टा । अस्य सत्त्वमसत्त्वं च दर्शयति सिद्धत्वासिद्धत्वाभ्यां स्वतन्त्रास्वतन्त्रत्वेन, सैषा वटबीजसामान्यवदनेकवटशक्तिरेकैव । तद्यथा वटबीजसामान्यमेकमनेकान् स्वाव्यतिरिक्तान् वटान् स्वबीजानुत्पाद्य तत्र तत्र च संपूर्णं संतिष्ठत्येवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वे'त्यन्तेन जडमोहात्मकप्रपञ्चदर्शकत्वं, वटबीजदृष्टान्तेन वैलक्षण्यं चोक्त्वा, 'जीवेशावाभासेन करोति, माया चाविद्या च स्वयमेव भवती'ति तत्कार्यमुक्त्वा 'सैषा चित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्ना अङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी चैतन्यदीप्ता, तस्मादात्मन एव त्रैविध्यं सर्वत्र योनित्वमपी'-त्याद्याह । अत्र चैतन्यदीप्तत्वकथनाच्छ्रुत्यन्तरोक्तजलचन्द्रदृष्टान्तेनांशप्रवेशद्वारा कार्यजीवेश्वरकर्तृत्वम्, सप्तम्यर्थे *मत्वर्थीयेन, चैतन्यगुणसम्बन्धेन दीप्त्या आभासाभास्ययोः समानाकारत्वनियमाभिप्रायेणात्मन एव त्रैविध्यम्, योनित्वकथनेन तस्या दर्शकत्वमात्रं, न तु जनिकात्वमिति बोधितम् । अतोऽत्रापि जडजीवयोर्ब्रह्माभिन्नत्वं तादात्म्येन सिध्यति, न तु ब्रह्मणो जीवाभेदः । जननानन्तरमेव दर्शकत्वात् । भिन्नत्वजडत्वास्वतन्त्रत्वादिना दृश्यमानस्य 'स्वतन्त्रास्वतन्त्रत्वे'त्यनेन मीमांसक—सांख्य—वैशेषिकादिप्रतिपन्नस्यान्तरासृष्टिरूपत्वेन मिथ्यात्वं, न तु सर्वस्येत्यपि । तेन भेदस्य यदतात्त्विकत्वमज्ञानकृतत्वं चोक्तं, तत्स्वाभाविकत्वेनाभिमन्यमान एव तस्मिन् पर्यवस्यति, न तु तादात्म्यशरीरप्रविष्टे भेदे । एवं च व्यावहारिकः स्मार्तः प्रपञ्चः स्वापेक्षयोत्कृष्टसत्ताकप्रपञ्चपूर्वकः, मायिकत्वात् । ऐन्द्रजालिकप्रपञ्चवदितिपूर्वोक्तश्रुतिमूलकेनापि ब्रह्मात्मकजगत्सिद्धेस्तदुक्तं प्रमाणमाभासीकृतं ज्ञेयम ॥

हरितोषिणी ।

क्यस्य सत्त्वादिस्ततो दूषणान्तरमाहुः—उपक्रमेति । उपनिषदि उपक्रमे 'सदेव सौम्येदमग्र आसी'दित्यनेन, जडांशे अथ च 'सन्मूलाः सौम्येमाः प्रजा'इत्यनेन चिदंशे ब्रह्मणः उपादानकारणत्वमुक्तम् । तच्च त्वन्मते न संभवति, विवर्तोपादानतया अभेदेऽनङ्गीकारादिति । अधिकं त्वाकरे बोध्यम् ॥

टिप्पणी ।

* मत्वर्थीयेनेति । ब्रह्मविष्णुशिवरूपाण्यस्यामिति विग्रहे 'अत इनिठना'विति विहितेनेनिप्रत्ययेन । अविद्याया उक्तरूपाभासाधारतया सप्तम्यर्थ एव युज्यते, न तु षष्ठ्यर्थः ॥

१ मु. पु. 'मादि' नास्ति । २ मु. पु. 'त्रैविध्ययोनित्व' इति पाठः ।

अपरं च, त्वन्मते जीवस्याभासत्वेन अलीकत्वात् 'स आत्मे'त्यन्तेन तत्पदार्थं निरूप्य 'न त्वमसि' इत्येव वदेन्न तु 'तत्त्वमसी'ति। सत्तावा-

सुवर्णसूत्रम्।

अतः परं तदुक्तमुपगम्यापि [1]मायात्वसाधकं दूषयन्ति[2]—अपरं चेत्यादि। तथा च 'हेयत्वावचनाच्चे'त्यत्र स्वकृताध्ये सांख्यं प्रति यद्दूषणमुक्तं, तेनापि त्वदभिमतप्रमाणस्याभासतेत्यर्थः। दूषणान्तरमाहुः—सत्तेत्यादि। आभासादेरसत्त्वा[3]द्वक्तुर्निरवयत्वेन तद्दर्शनायोगाच्च तथेत्यर्थः॥

अथात्र प्रसङ्गाद्रामानुजमतं लिख्यते—चिदचिदीश्वर इति वस्तुत्रयं भिन्नस्वभावम्। तत्राचिद्वस्तुनश्चिद्वस्तुनः, परब्रह्मणश्च भोग्यत्वेन, भोक्तृत्वेनेशितृत्वेन च स्वरूपविवेकं श्रुतय आहुः—'अस्मान्मायी सृजते विश्वमेतत्' 'तस्मिंश्चान्यो मायया संनिरुद्ध' इत्याद्याः। तेन त्रयाणां भेदः सिद्धः। 'यः पृथिव्यां तिष्ठन्' 'यो रेतसि तिष्ठन्' 'य आत्मनि तिष्ठन्' इत्यन्तर्यामिब्राह्मणे पृथिव्या रेत–आदीनां पृथिवीकार्याणां च पृथगुल्लेखात् सर्वावस्थावस्थितस्याचितः, आत्मे[4]न उल्लेखाद् बद्धमुक्तोभयावस्थस्याचिद्वोक्तुश्चितश्च परमपुरुषशरीरत्वं, तेन तन्नियम्यत्वं, तेनापृथक्स्थितिं च श्रुतिर्दर्शयति। ईदृश एव सौबालवाक्ये अन्तर्यामित्वश्रावणोत्तरं 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इति परमपुरुषस्यापहतपाप्मत्वादिविशिष्टनारायणरूपेणात्मत्वं च श्रावयति। तेनाचितश्च सर्वावस्थासु तच्छरीरत्वाच्छरीर्यविनाभावः, शरीरिणश्च कार्यकारणान्यतरशरीराविनाभावः सिद्ध्यति। तथा सति गोत्ववन् शरीरशरीरिणोश्च सर्वदाऽविनाभावः। परन्तु दृष्टान्ते विशेष्यस्यानित्यत्वं, दार्ष्टान्तिके तु विशेषणस्येति विशेषः। एवं सति 'सदेव सोम्येदमग्र आसी'दित्यादौ सत्पदेन परं ब्रह्मैवोच्यते, उत अचिच्छरीरविशिष्टं तदुच्यत इति सन्देहेऽपि तादृशे सौबालवाक्ये 'अन्तः प्रविष्टो यः सृजत' इति श्रावणान्, तेन छान्दोग्यवाक्योपसंहारे अचिच्छरीरविशिष्टस्यैव परस्योपादानत्वं कर्तृत्वं च सिद्ध्यतीति कार्यावस्थकारणावस्थस्थूलसूक्ष्माचिद्वस्तुशरीरो बद्धमुक्तावस्थचिद्वस्तुशरीरश्च परमपुरुष एवेति कारणात्कार्यस्यानन्यत्वेन कारणविज्ञानात्सर्वविज्ञानमभिसंहितं समुपपन्नतरम्। अत एव च जगतो ब्रह्मोपादानकत्वम्। अत एव च सर्वेषां शब्दानां

हरितोषिणी।

दूषणान्तरमाहुः—अपरं चेति। न तु तत्त्वमसीति। त्वन्मते जीवो नास्तीति शेषः। अन्यदपि दूषणमाहुः—सत्तेति। जीवस्याभावे 'युष्मद्युपपदे समानाधिक-

---

१ मु. पु. 'त्वयात्वं' इत्यधिकः। २ मु. पु. साधयन्तीति पाठान्तरम्। ३ त्वत्वाद् मु. पु. पाठः।
४ मु. पु. तदुल्लेखादिति पाठः।

चकधातो*र्मध्यमपुरुषप्रयोगानुपपत्तिश्च ॥

(१५) किंच, अविद्यया कृत्वा ब्रह्मण्यारोपितं जगत्प्रतीयते रजतमिव शुक्तिकायामिति हि तव मतम् । तदसंभवि । आरोपे ह्यधिष्ठानज्ञानं कारणम् । अत्र च 'पराञ्चि

जगदाविद्यकत्वनिराकृतिमुखेन ब्रह्माकर्तृत्वनिरासः ।

सुवर्णसूत्रम् ।

ब्रह्मवाचिना शब्देन सामानाधिकरण्यं मुख्यवृत्तमित्यादि । अत्र यद्यपि प्रतिज्ञोपपद्यते, तथापि दृष्टान्तोपरोधो दुर्वारः । अत एव 'तदात्मान\ स्वयमकुरुते'ति श्रुतिः । 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' 'आत्मकृतेः परिणामात्' इति श्रुतिसूत्रविरोधोऽपि तथेति दिक् । एवं मध्वमतेऽपि बोध्यम् । प्रकृतमनुसरामः ॥

(१५) एवं जीवब्रह्माभेदबोधने प्रमाणस्याभासत्वं स्फुटीकृत्य तदभिमताविद्याबोधनेपि तस्याभासत्वं स्फुटीकर्तुमविद्यया जगत्प्रतीतिं दूषयन्ति—किञ्चेत्यादि । न चाप्रत्यक्षेऽऽप्याकाशे तलमलिनिमारोपवद्ब्रह्मण्यपि जगदारोपः संभवतीति वाच्यम् । अवकाशरूपेण वस्तुसामर्थ्यादेव तस्य प्रत्यक्षत्वात् । अन्यथा अवकाशाद्यभिलापोच्छेदप्रसङ्गात् । अविदुषा केनापि प्रकारेण ब्रह्मणस्तदभावादिति वैषम्यात् । ननु 'ज्ञानेन भूयोऽपि च तत्प्रलीयते, रज्ज्वामहेर्भोगभवाभवौ यथे'त्यादौ प्रपञ्चस्य ज्ञाननाश्यत्वोक्त्या तथोच्यत

हरितोषिणी ।

रण' इति पाणिनिसूत्रेण भूधातोर्मध्यमपुरुषाभावेन त्वं भवसीति प्रयोगानुपपत्तिरित्यर्थः ॥

(१५) यथा जीवाभेदबोधकश्रुतेः प्रमाणाभासत्वमेवमविद्याबोधकश्रुतेरप्याभासत्वमाहुः—किञ्चेति । अधिष्ठानज्ञानमिति । शुक्तिज्ञानमित्यर्थः । पराञ्चीति । 'पराञ्चि खानि व्यतृणत्स्वयम्भू'रित्यस्याः श्रुतेः । खानि इन्द्रियाणि स्वयम्भूः पराञ्चि पराङ्मुखानि व्यतृणत् निर्भिन्नवानित्यर्थः । तथा च शुक्त्यंशे चक्षुःसन्निकर्षात् तत्र रजतप्रतीतिः, ब्रह्मणि तु चक्षुःसन्निकर्षाभावान्न जगत्प्रतीतिः, इन्द्रियाणां बहिर्मुखत्वादिति

टिप्पणी ।

* मध्यमपुरुषप्रयोगानुपपत्तिश्चेति । तिङ्वाच्यस्य धात्वर्थकर्तुः सत्ताश्रयस्य युष्मच्छब्दवाच्यालीकेन सामानाधिकरण्यासंभवाद्युष्मच्छब्दस्य समानाधिकरणत्वानुपपत्त्या मध्यमानुपपत्तिः, अलीके सत्ताश्रयाभेदस्य बाधितत्वादिति प्रभञ्जनः ॥

१. अत्रोपलब्धेषु लिखितपुस्तकेषु 'तथापि दृष्टान्तानुपरोधात् 'आत्मकृतेः परिणामात्' इति 'श्रुतिसूत्रविरोधोऽपि' इत्येव पाठः समुपलभ्यते । अयमुपरितनपाठस्तु केवलं वाराणसीमुद्रिते । परन्तु नेदं द्वयमपि हृदयङ्गमम् ।

स्थानी'तिश्रुतेस्तस्याविषयत्वात्कारोपः? न च *ज्ञाननाश्यत्वोक्त्या, अस्य ज्ञानस्य चाज्ञानमात्रनिवर्तकत्वेनास्याप्यज्ञानकार्यत्वमुच्यत इति वक्तुं युक्तम्। विष्णुस्मरणादिना अतद्रूपाणां पापानां नाशात्॥

सुवर्णसूत्रम्।

इत्यत आहुः—न चेत्यादि। अस्यापीति। जगतोऽपि। विष्णुस्मरणादिनेत्यादिपदेन 'न मां कर्माणि लिम्पन्ती'त्यादिज्ञानसंग्रहः। अतद्रूपाणामिति। अज्ञानकार्यव्यतिरिक्तरूपाणाम्। तथा चाज्ञानमात्रनिवर्तकत्वेन नियमे तद्कार्याणां पापानां नाशाभावेन स्मृतिविरोधः।.तेपामप्यज्ञानकार्यत्वाङ्गीकारे पापनाशवत्प्रपञ्चनाशापत्त्या स्मृति-प्रत्यक्षविरोध इत्यर्थः॥

हरितोषिणी।

भावः। ननु जगतो ज्ञानैकनाश्यत्वादज्ञानकार्यत्वमित्याशयेन शङ्कते—न चेति। ज्ञाननाश्यत्वोक्त्येति। प्रपञ्चस्येति शेषः। अस्य ज्ञानस्येति। ब्रह्मज्ञानस्येत्यर्थः। अस्यापि प्रपञ्चस्यापि। खण्डयन्ति—विष्णुस्मरणादिनेति। आदिना 'न मां कर्माणि लिम्पन्ति, न मे कर्मफले स्पृहा। इति मां योऽभिजानाति कर्मभिर्न स बध्यते' इति ज्ञानस्यापि संग्रहः। अतद्रूपाणामिति। अज्ञानकार्यव्यतिरिक्तानां पापानामित्यर्थः। .तथा च ज्ञानस्याज्ञानमात्रनिवर्तकत्वं न, किन्त्वतद्रूपपापनाशकत्वमपीति भावः। अत्र पापस्याप्यज्ञानकार्यत्वोपगमे विष्णुस्मरणेन ज्ञानेन वा पापस्य नाशे अज्ञानकार्यप्रपञ्चस्यापि नाशस्वीकारे प्रपञ्चादर्शनेन बहुश्रुतिस्मृतिविरोधः स्यादिति हृदयम्॥

गङ्गाधरभट्टी।

(१५) नाश्यत्वोक्त्येति। 'ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्वामहेर्भोगभ-

---

टिप्पणी।

* ज्ञाननाश्यत्वोक्त्येति। अयमर्थः—संसारस्य ज्ञाननाशकत्वमुक्तम्। तच्च तस्याज्ञानकार्यत्व एव घटते, ज्ञानस्याज्ञानमात्रनिवर्तकत्वनियमादिति। एवं च तादृशनियमे व्यभिचारप्रदर्शनाय, स च तदा स्याद्यदि ज्ञानस्यान्यनिवर्तकत्वं प्रदर्शितं स्यात्। तथा च व्यवहारदशायां स्मरणरूपज्ञानेन पापानामज्ञानकार्यत्वेनोभयवादिसम्मतानां निवृत्तिदर्शनेन ज्ञानस्याज्ञानमात्रनिवर्तकत्वं न संभवतीति तादृशनियमानुरोधेन प्रपञ्चस्याज्ञानकार्यत्वं न वक्तुं शक्यत इत्यभिप्राय इति प्राभञ्जनः॥

---

१ प्रपञ्चस्येनाज्ञानमात्र इति क. पु.।

अस्तु वा ब्रह्मज्ञानस्याज्ञानमात्रनिवर्तकत्वम् । तच्च संसाररूपमेव, न

सुवर्णसूत्रम्।

ननु ब्रह्मज्ञानत्वेनाज्ञानमात्रनिवर्तकत्वेन व्याप्तिर्वाक्यबलादङ्गीक्रियते, न तु ज्ञानत्वेन, अतो ज्ञानान्तरस्येतरनाशकत्वेपि न दोष इत्याकाङ्क्षायामन्तरासृष्टिस्तद्विषय इत्याशयेन तदुक्तमभ्युपगच्छन्ति—अस्तु चेत्यादि । वेत्यनादरे । तच्चेत्यादि । ज्ञाननिवर्त्यभावरूपाज्ञानं च। संसाररूपमेव अभिमानात्मकमेव । 'नैवात्मनो न देहस्य संसृतिः सुविविक्तयोः । *अविवेकस्तयोर्योऽसाविह तस्यैव संसृति'रिति भगवता देहात्मानौ पृथगुक्त्वा तदविवेकस्यैव संसारकथनात् । तेन 'य एष संसारतरुः पुराण' इत्यत्रापि 'द्वे अस्य बीजे शतमूलस्त्रिनाल' इति द्विबीजस्य सांख्यप्रतिपन्नस्यैव 'मायामयं वेद स वेद वेद'मित्यनेन मायामयत्वमुच्यते । (स्वाभाविक)वास्तवभेदाश्रयणात् । तस्य अन्तरासृष्टि-

हरितोषिणी।

ननु विष्णुस्मरणेन, ज्ञानेन वा पापनाशः स्वीक्रियते; ब्रह्मज्ञानेन तु विलक्षणमज्ञानमात्रं निवर्तत इति स्वीक्रियते इति नाज्ञानकार्यप्रपञ्चनाश इत्यत आहुः—अस्तु वेति । तच्चेति । विलक्षणं भावरूपमज्ञानमित्यर्थः । संसाररूपमेवेति । अहंताममतारूपमेवे-

गङ्गाधरभट्टी।

वाभवौ यथे'त्यादिना । अस्येति । जगतः । †विष्णुस्मरणादिनेति । आदिना 'न मां कर्माणि लिम्पन्ति, न मे कर्मफले स्पृहा । इति मां योऽभिजानाति कर्मभिर्न स बध्यते' इति ज्ञानम् । तद्रूपाणां जगद्रूपाणाम् । अथवा 'यस्य स्मृत्या च नामोक्त्ये'त्युक्तं नामग्रहणमादिना गृह्यते । तथा च नामग्रहस्यापि अज्ञानकार्यत्वेन तेनाज्ञानकार्यपापनाशे त्वदुक्तनियमासिद्धिः ॥

---

टिप्पणी।

* अविवेकस्तयोरिति । तयोर्योऽविवेकः असौ संसृतिरित्यन्वयः । संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात् । अध्याहारगौरवमपि तथाकरणे ॥

† यत्तु श्रीगङ्गाधरभट्टैः 'विष्णुस्मरणादिनाऽतद्रूपाणामित्यत्र तद्रूपाणामिति पदं छित्त्वा जगद्रूपाणामित्यर्थ उक्तः, 'विष्णुस्मरणादिने'त्यत्रादिपदेन नामग्रहणं गृह्यते । तथा च नामग्रहस्याप्यज्ञानकार्यत्वेन तेनाज्ञानकार्यपापनाशे त्वदुक्तनियमाऽसिद्धिरिति चोक्तम् । तदौचित्यानौचित्ये तु 'मुद्गराभिघातस्य ज्ञानरूपत्वाभावात्तद्दोषदर्शनेऽपि न प्रकृतोपयोग' इति ग्रन्थकार एव वक्ष्यति ॥

---

१ कोष्ठकान्तर्गतः पाठो मु. पु. नास्ति । २ ब्रह्मज्ञानमज्ञानमात्रनिवर्तकमिति चेत् तत्राप्याहुः- अस्तु वेति क्वचित्कोऽयं पाठः ।

तु प्रपञ्चः । भगवत्कार्यत्वात् । तथा च स्वरूपाज्ञानदेहेन्द्रियान्तःकरणप्राणाध्यासरूपप्रपञ्चपर्वात्मकाऽविद्यानाशे *तत्कार्यरूपाहन्ताममतारूपसंसारनाश एव ज्ञानकार्यं, न तु प्रपञ्चनाशोऽपि । ब्रह्मविदः स्वपुत्रादिदर्शनाभावप्रसङ्गात् । नचैवमित्येतत्सर्वं भागवततत्त्वदीपनिबन्धे प्रपञ्चितं पितृचरणैरिति नात्र वितन्यते ॥

वस्तुतस्तु ब्रह्मज्ञानस्य नाज्ञाननिवर्तकत्वम् । 'क्षीयन्ते चास्य कर्मा-

सुवर्णसूत्रम् ।

रूपत्वात् । न तु ब्रह्मकार्यस्य तस्य तथात्वम् । एतेनैव ये एकादशस्कन्धादिषु देहं प्रकृत्य 'निरूपितेयं त्रिविधा निर्मूला भातिरात्मनी'ति, प्रपञ्चं प्रकृत्य 'त्वय्यद्वितीये भगवन्नयं भ्रम' इति, विकारं प्रकृत्य 'आद्यन्तयोर्यदसतोस्ति तदेव मध्ये' इत्यज्ञानभ्रमासच्छब्दाः प्रपञ्चे प्रयुक्तास्तेपि व्याख्याता बोध्याः । तद्धेतुमाहुः—तथा चेत्यादि । अहन्ताममतारूप इति । अहन्ताममते रूपयतीत्यहन्ताममतारूपः । अभिमत्यात्मक इत्यर्थः । न चैवमिति । न स्वपुत्रादिदर्शनाभावः ॥

एवं संसारप्रपञ्चयोर्भेदमङ्गीकृत्य तदुक्ता व्याप्तिरङ्गीकृता, अतः परं तस्या अप्रयोजकत्वं बोधयितुमाहुः—वस्तुत इत्यादि । नन्वेवं सति मिथ्याज्ञानसलिलावसिक्तायामेव हृदयभूमौ कर्मबीजप्ररोहाद् ब्रह्मज्ञानस्यैवाज्ञानकार्यनिवर्तकत्वेन व्याप्तिर्नाप्रयोजिकेत्यत

हरितोषिणी ।

त्यर्थः । 'नैवात्मनो न देहस्य संसृतिः सुविविक्तयोः । अविवेकस्तयोर्योसाविह तस्यैव संसृति'रिति भगवतैकादशस्कन्धे देहात्मनिश्राविवेकस्यैव संसारत्वकथनात् । प्रपञ्चस्याज्ञानकार्यत्वं नास्तीत्याहुः—भगवत्कार्यत्वादिति । संसारो भिन्नः, प्रपञ्चो भिन्न इत्यत्र निबन्धसंमतिमाहुः—तथा चेति । प्रपञ्चितमिति । 'संसारस्य लयो मुक्तौ न प्रपञ्चस्य कर्हिचित्' इत्यादिना प्रपञ्चितमित्यर्थः ॥

वस्तुत इति । तथा च पुण्यपापयोरपि निवृत्त्या न तथा नियम इति भावः । ननु

टिप्पणी ।

* तत्कार्यरूपेति । अविद्याकार्यरूपेत्यर्थः । ब्रह्मणः सर्वकर्तृत्वानुपपत्तिः, तत्कार्यत्वाभावात्संसारस्येति न शङ्कनीयम् । अस्याप्यविद्याद्वारा तत्कार्यत्वात् ॥

१ मु. पु. तदेतद्धिकृत्या आहुरिति पाठः ।

णी'ति श्रुतिस्मृतिवचनात्पुण्यपापयोरपि निर्वृत्तिः । एतयोरप्यज्ञानकार्यत्वं पुरस्तादेव निरस्तम् ॥

किञ्च, अविद्याया असत्त्वेनाङ्गीकारात्तन्नाशोऽप्यशक्यनिरूपणः । इतोऽपि ब्रह्मणि तत्सम्बन्धोऽप्यशक्यवचनः, सम्बन्धस्य द्विनिष्ठत्वात्, प्रकृते चासम्भवात् । तथा च कस्य केन कस्य प्रतीतिः स्यात् । विभाजिकाया एवाभावेनैव विभागस्याप्यभावात् । अत *एवासन्नेव प्रतीयत इत्युच्यते इति चेद्, अहो मूढता !! यत्स्वप्रप्रनीनतरणिकिरणतापतप्तस्य तत उत्थितस्य जागरितदशादृष्टमरुमरीचिजलधिवीचिविभ्रमैस्तदुपशमाभिमानेन सुखिताभिमानो मिथ्यावादिनः । असतोऽपि प्रत्यायिका ह्यविद्या, सा चासतीति का प्रत्याययेदिति पूर्वोक्तं श्रुत्वाप्येवं वदन् मूर्खतां नातिवर्तसे । एतेनैव कार्यानुरूपेण कारणेन भाव्य-

सुवर्णसूत्रम् ।

आहुः—एतयोरित्यादि । एतयोः पुण्यपापयोः, अज्ञानकार्यत्वम् अज्ञानपरिणामत्वम्, पुरस्तादेव प्रपञ्चस्य भगवत्कार्यत्वबोधकश्रुतिविचार एव, निरस्तम् । तथा च व्याप्तिरप्रयोजिकैवेत्यर्थः ॥

प्रकारान्तरेणापि तथात्वमाहुः—किञ्चेत्यादि । ननु कार्यस्वरूपबलात्तथाङ्गीक्रियते इति चेत्तत्राहुः—एतेनेत्यादि । तत्स्वरूपासत्त्वेन । नन्वेवं सति श्रुत्युक्तस्य तुच्छत्वस्य

हरितोषिणी ।

ब्रह्मज्ञानमज्ञानकार्यपुण्यादिनिवर्तकमित्येव व्याप्तिः स्वीक्रियत इत्यत आहुः—एतयोरिति । पुरस्तादिति । प्रपञ्चस्य भगवत्कार्यत्वविचारे एवेत्यर्थः ॥

अज्ञाननाश इत्यपि वक्तुं न शक्यते इत्याहुः—किञ्चेति । असंभवादिति । अविद्याया असत्त्वेन द्विनिष्ठत्वासंभवात् । कस्येति । कस्य पुरुषस्य । केन केन रूपेण । कस्य कस्य पदार्थस्य । विभाजिकाया इति । मायाया इति शेषः । शङ्कते—अत एवेति । उत्तरमाहुः—अहो मूढतेति । स्पष्टम् । एतेनेति । निरस्तमित्यनेनान्वयः ।

गङ्गाधरभट्टी ।

एतयोरपीति । पुण्यपापयोः । पुरस्तात् । प्रपञ्चस्य भगवत्कार्यत्वात् ॥

---

टिप्पणी ।

* असन्नेव प्रतीयत इति । अविद्याब्रह्मणोः सम्बन्ध इति शेषः ॥

---

१ क. पु. निवृत्तेः इति पाठः ।

मिति कार्यस्य तुच्छत्वेन तत्कारणं तादृश्यविद्योच्यते इत्यपि निरस्तम् । कार्यस्य तु तुच्छत्वातुच्छत्वे पश्चाद्विचारयिष्यामः ॥

संप्रति त्वद्रीत्यैव विचार्यते । कल्पना हि लोकानुसारिणी । तथा च यत्र मायाविनो नटा मणिमन्त्रादिना आम्रकदम्बतरुकदम्बं दर्शयन्ति, तत्र तद्दर्शिताम्रादिकमेवासद् दृष्टमिति ज्ञायते, *तत्क्षणमेव तददर्शनात्, न तु तन्मन्त्रादिसामर्थ्यमपि । तथा सति तद्दर्शनमपि न स्यात् । सर्वोऽपि च तथा प्रदर्शयेदविशेषात् । तस्मात्त्वदभिमताविद्यया जगत्प्रतीतिर्जीवविभागो वा न युक्तिसह इति न कर्तृत्वनिषेधो ब्रह्मणि शक्यनिरूपणः ॥

(१६) नन्वास्तां शुद्धमेव ब्रह्म जगत्कारणम्, तेन सहाभेदो जीवस्य कथं

सुवर्णसूत्रम् ।

का गतिरित्यत आहुः—कार्यस्येत्यादि । पश्चादिति । ग्रन्थसमाप्तिदशायाम् ।

इदानीं कुतो न विचार्यत इत्याकाङ्क्षायां तुच्छत्वाङ्गीकारेऽपि त्वन्मतस्य दूषयितुं शक्यत्वान्न विचार्यत इत्याशयेनाहुः—संप्रतीत्यादि । त्वद्रीत्येति । तुच्छत्वाङ्गीकारपूर्वकम् । सिद्धमाहुः—तस्मादित्यादि । तस्मादिति । अत्यन्तयुक्तिविरुद्धत्वात् ॥

(१६) एवं तुच्छत्वाङ्गीकारेऽपि जगत्प्रतीत्यादिरूपतत्कार्यासिद्धिं प्रदर्श्यानुपाधित्वादिति हेतुः साधितः । तत्र प्रमाणस्याभासतासंपादने महावाक्ये भागत्यागलक्षणामनादृत्य

हरितोषिणी ।

तादृशी तुच्छा । पश्चादिति । अन्ते ।

तद्विचारं विनैव त्वन्मतं खण्ड्यते—

संप्रतीति । लोकानुसारेण कल्पनामाहुः—तथा चेति । तस्मादिति । संसाररूपकार्यस्य तुच्छत्वात् । त्वदभिमतेति । तुच्छरूपाविद्ययेत्यर्थः ॥

(१६) इदानीं मायावादी जीवाभेदे शङ्कते—नन्विति । कथमिति । केन रूपेण

गङ्गाधरभट्टी ।

पश्चाद् ग्रन्थसमाप्तौ ॥

(१६) वचनात् एकादशीयात् । अग्रे स्पष्टम् ॥

---

टिप्पणी ।

* तत्क्षणमिति । दर्शनोत्तरक्षणे । एकस्मिन्नेव क्षणे दर्शनतदभावयोरसंभवात् । वस्तुवस्तु कोशोक्ते त्रिंशत्कलात्मके क्षणे द्वयमपि संभवतीति सहस्राक्षो नैकाक्षोऽपि ॥

---

१ मु. पु. 'तदं दर्श' इति पाठः ।

जीवब्रह्मा-भेदानुपपत्ति-प्रदर्शनपुरःसर उपहितकर्तृ-त्वविचारः ।

श्रुत्या बोध्यते । परस्परं विरुद्धधर्मत्वादुभयोः, परमार्थतो भिन्नयोरभेदासम्भवश्च । न चौपाधिकत्वेन भेदस्य, तदपगमे तत्सम्भव इति वाच्यम् । पूर्वोक्तन्यायेनोपाधेरेव निर्वक्तुमशक्यत्वात् । न च तात्त्विकभेदवतोऽपि पाथसोर्मिलने सत्यभेदप्रतीतिवत् प्रकृतेऽपि 'नद्यः प्रविष्टा इव नामरूपे' इति वचनाद् ब्रह्मसम्बन्धे सति जीवस्तस्माद् भिन्नतया न प्रतीयत इत्याशयेनाभेदः श्रुत्या बोध्यत इति वाच्यम् । तयोरनन्त्यावयविसावयव्येकजातीयद्रव्यत्वेनोभाभ्यामेकं स्वसजातीयं कार्यमुत्पाद्यत इति युक्तं तदभेददर्शनम् । प्रकृते तूभयोरपि महत्त्वे सति निरवयव-

सुवर्णसूत्रम् ।

जीवस्य ब्रह्माभेद उक्तो, जीवरूपं तु नोक्तमिति तमनुपपन्नं मन्वानस्तामादाय श्रुतार्थापत्त्यभिमानेन स्वोक्तं समर्थयिष्यन् पुनः प्रत्यवतिष्ठते—नन्वास्तामित्यादि । कथमिति । किमैक्यरूपेण, किं वा भेदाभावरूपेण, उताविभागरूपेण[1], अथवा तस्मिन् सत्यभेदप्रतीतिविषयत्वेन, अथवा तादात्म्यरूपेण, अपि वा अविनाभावरूपेण, उतोपचारेणेति । तत्राद्यं दूषयन्ति—परस्परमित्यादि । द्वितीयं दूषयन्ति—परमार्थत इत्यादि । तृतीयचतुर्थौ निराकरोति—न च तात्त्विकेत्यादि । नद्य इति । इदमेकादशस्कन्धे भगवद्वाक्यम् । 'ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदम् । यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे' इति । अत्र विदन्तीति विभक्तिविपरिणामेन योजना । तयोरिति । पाथसोः । इति युक्तमिति । अविभागादप्रतीतेर्वा हेतोर्यु-

हरितोषिणी ।

क्तमित्यर्थः । ननु आत्मत्वरूपैकधर्मेणेत्यत आह—परस्परमिति । ननु भेदाभावरूपेणेत्यत्राह—परमार्थत इति । उपाधिना भेदस्तदभावे अभेद इत्याशयेन शङ्कते—न चेति । खण्डयन्ति—पूर्वोक्तन्यायेनेति । उपाधेरविद्यायास्तुच्छत्वादित्यनेन न्यायेनेत्यर्थः । जलदृष्टान्तेन पुनरभेदं शङ्कते—न चेति । इति वचनादिति । श्रीभागवतैकादशस्कन्धीयवचनादित्यर्थः । उत्तरयन्ति—तयोरिति । जलयोरित्यर्थः । इति युक्तम् । तदभेददर्शनमित्यनेनान्वयः । अनन्त्यावयवि परमाणुरूपं, सावयवि द्व्यणुकादि महद्द्रव्यम् । उभाभ्यामिति । मिलित्वेति शेषः । कार्यमिति । महत्परिमाणविशिष्टमेकं जलरूपं

गङ्गाधरभट्टी ।

आविद्यकत्वं प्रपञ्चस्यापीति । अविद्याया इदमाविद्यं तदेवाविद्यकमिति कुत्सिते कः । आविद्यकमित्येव बहुत्र पाठः । आविद्यिकमिति पाठे 'अध्यात्मादेष्ठञ्' आकृति-

---

१ ग. पु. उताविभागरूपेणेति पाठः ।

**त्वेनारम्भकत्वासंभवाच न तथा वक्तुं शक्यम् । 'अविनाशी वाऽरे अयमात्मा अनुच्छित्तिधर्मे'ति *श्रुतेर्नाशासंभवाच ॥**

**किञ्च, जीवब्रह्मणोः कः सम्बन्धः? । न तावत् संयोगः । तयोर्विभुत्वेन तदनङ्गीकारात् । न समवायः । अनाश्रितत्वादुभयोः । नापि स्वरूपसम्बन्धः । तस्य सार्वदिकत्वेन सर्वदा जीवानुपलब्धिप्रसङ्गात् ॥**

सुवर्णसूत्रम् ।

क्तम् । ननु महत्त्वनिरवयवत्वे नारम्भबाधके, प्रकृतौ परमाणुषु च तदङ्गीकारादित्यत आह —अविनाशीत्यादि । अनुच्छित्तिधर्मेत्यत्र न विद्यते उच्छित्तिर्येषां ते अनुच्छित्तयस्तादृशा धर्मा यस्येत्यर्थो विवक्षितो, न तूच्छित्तिर्धर्मो यस्यासावुच्छित्तिधर्मा तद्भिन्नोऽनुच्छित्तिधर्मेति । अविनाशिपदेनैवार्थसिद्धेर्[1]ऽस्य वैयर्थ्यापत्तेः । तथा च पाथोमेलने एकतरस्य रूपरसोच्छित्त्या अभेदप्रतीतिसिद्धिः । प्रकृते तु तदभावात्तदभावेनाविभागोऽप्यशक्यवचन इत्यर्थः ॥

सम्बन्धस्याशक्यवचनत्वादपि तदनुपपत्तिमाह—किञ्चेत्यादि । विभुनिरवयवयोः क्रियावयवराहित्याज्जन्यः संयोगो न वक्तुं शक्य इति स्वरूपेण वाच्यः । तथा सति सोऽप्यजः स्यात् । तादृशस्य कुत्राप्यङ्गीकाराभावादित्यर्थः ॥

हरितोषिणी ।

द्रव्यमित्यर्थः । प्रकृत इति । जीवब्रह्मविषय इत्यर्थः । न तथेति । न महत्त्वारम्भकत्वमित्यर्थः । ननु निरवयवत्वमारम्भबाधकमतः प्रकृते सावयवत्वमुच्यत इत्यत आह—अविनाशीति । सावयवत्वे नाशः स्यादत्र तथा नास्तीति भावः । अनुच्छित्तिधर्मेति । न विद्यते उच्छित्तिर्येषां ते अनुच्छित्तयः, तादृशा धर्मा यस्य स इत्यर्थः ॥

उभयोः सम्बन्धे सत्यभेदः स्यात् स एव तु न संभवतीत्याह—किञ्चेति । अनाश्रितत्वादिति । गुणगुणिनोः क्रियाक्रियावतोरवयवावयविनोर्जातिव्यक्त्योः सम्बन्धः समवाय इति यथा द्रव्यत्वस्याश्रितत्वाद्, द्रव्ये तस्य सम्बन्धो युक्तो, जीवब्रह्मणोस्तु तथात्वं नास्तीति भावः । तस्य । स्वरूपसम्बन्धस्येत्यर्थः । तथा च ब्रह्मजीवस्वरूपस्य सम्बन्धस्य सर्वदिगवच्छेदेन सत्त्वाद् ब्रह्मानुपलब्धिवज्जीवानुपलब्धिप्रसङ्गादित्यर्थः ॥

गङ्गाधरभट्टी ।

गणत्वाद् दैहिकं प्रापञ्चिकमित्यादिवत् । यद्वा 'तदर्हति' 'तदस्य प्रयोजन'मिति ठञ् ।

---

टिप्पणी ।

* नाशासंभवाच्चेति । नायमारम्भकत्वासंभवे हेतुः, किन्तु जीवस्वरूपनाशेनापि नाभेदः प्रतिपादयितुं शक्य इत्यत्रेति प्राभञ्जनः ॥

---

1 क. पु. 'सिद्धार्थ' इति पाठः ।

किञ्च, अणुजीवपक्षेऽपि ब्रह्मणो व्यापकत्वात्सकलजीवसम्बन्धस्य सार्वदिकत्वात्कदापि न ते प्रतीताः स्युः । नापि ब्रह्मसाक्षात्कारानन्तरमेव जीवस्य ब्रह्मभावो 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुत्या प्रतिपाद्यत इति ज्ञातृज्ञेयभाव एव सम्बन्धो वाच्यः । पारमार्थिकभेदस्यैतदनपनोद्यत्वात् । अन्यथा देवदत्तविष्णुमित्रयोरप्यभेदापत्तिः ॥

किञ्च, सम्बन्धस्य द्विनिष्ठत्वात्संसारिणमपि जीवं ब्रह्म जानातीति ज्ञातृत्वसम्बन्धस्य तादृशो जीवेऽपि सत्वात्तस्याप्यभेदापत्तिः । ब्रह्मनिरूपितमेव तत्तद्भेदसाधकमिति चेत्, न, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' 'अदृश्यं द्रष्टृ' इत्यादिश्रुतिभिस्तस्य ज्ञेयत्वनिषेधात्॥

अभेदोऽपि जीवब्रह्मणोर्न तादात्म्यरूपः । स हि धर्मधर्मिभावे भवति, तस्यात्रासम्भवात् । पारमार्थिकभेदवतः पारमार्थिकाभेदोऽसं-

सुवर्णसूत्रम् ।

ननु जीवाणुत्वमास्थाय संयोगाङ्गीकारे न किञ्चिद्बाधकमित्यत आह—किञ्च अण्विति । सम्बन्धसत्वेऽपि तस्याप्रयोजकत्वात्तन्नेत्याह—नापीत्यादि ॥

किञ्चेत्यादि । पञ्चमं दूषयन्ति—अभेदोपीत्यादि । तस्यात्रासम्भवादिति । धर्मत्वं वृत्तिमत्त्वम्, धर्मित्वं च तदाधारत्वम् । तच कुण्डलसुवर्णवदत्र वक्तव्यम्, न तु घटपटवत् । प्रकृते त्वनागन्तुकतया भेदस्य पारमार्थिकत्वेन तदसम्भवात्, असङ्गश्रुति-

हरितोषिणी ।

ननु जीवस्याणुत्वं स्वीक्रियते, एवं चोभयोः संयोगसम्बन्ध एवास्तु, इत्यत आह—किञ्चेति । ते जीवाः न प्रतीताः स्युरित्यन्वयः । ब्रह्माप्रतीतिवज्जीवाप्रतीतिः स्यादित्यर्थः । सम्बन्धान्तरं निषेधति—नापीति । प्रतिपाद्यत इति । ब्रह्मज्ञानजन्यो ब्रह्माभेदः श्रुत्या प्रतिपाद्यत इत्यर्थः । वाच्य इति । नापीति पूर्वेणान्वयः । एतदिति । ब्रह्मज्ञानेत्यर्थः ॥

किञ्चेति । सम्बन्धस्य ज्ञातृज्ञेयभावसम्बन्धस्य । तादृशे संसारिणि । तस्यापि संसारिजीवस्यापि । शङ्कते—ब्रह्मेति । तत् । ज्ञातृत्वम् । तद्भेदेति । जीवब्रह्माभेदसाधकमित्यर्थः । ब्रह्मनिरूपितज्ञातृत्वं जीवेऽस्तीति भावः । खण्डयति—यत इति ॥

अभेदसम्बन्धं दूषयति—अभेदोऽपीति । स हीति । तादात्म्यरूपाभेद इत्यर्थः । धर्मधर्मिभाव इति । कनककुण्डलवद्धर्मधर्मिभाव इत्यर्थः । तस्य च । धर्मधर्मिभावस्य

गङ्गाधरभट्टी ।

यद्वा अवियैव अवियका 'अभाषितपुंस्काच्चे'ति पक्षे इत्वाभावे ततो विकारे 'कोपधाच्चे'त्यण् । तैन्तिडीकमितिवत् । शेषेऽपि 'प्रस्थोत्तरपदपलद्यादिकोपधादण्' । चातुरर्थिकोऽपि कोपधादण् । एवमैन्द्रियकत्वादयः साध्याः ॥

म्भावित इत्युक्तम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाऽनुपपत्तिश्च। एतेनैव चेतनत्वादिधर्मसारूप्येणौपचारिक एवाभेद उच्यत इत्यपि निरस्तम्। न च तद्विकारित्वेन प्रतिज्ञोपपत्तिः। तस्याऽविकारित्वश्रुतेः। जीवोऽपि 'न जायते म्रियते वा कदाचि'दित्यादिवाक्यैर्न विकार्यः। नापि जीवो ब्रह्मणोंऽशः। तस्य निरवयवत्वात्। 'अंशो नानाव्यपदेशा'दिति तत्त्वसूत्रादिकं त्वौपचारिकमंशत्वमाह। मुख्ये बाधकमुक्तमेव। तस्माद् ब्रह्मोपाधिरेव जीव इति मन्तव्यम्। अभेदबोधकश्रुत्यनु-

सुवर्णसूत्रम्।

विरोधेन चासम्भवादित्यर्थः। षष्ठं निराकरोति—एकेत्यादि। अविनाभावलक्षणाभेदाङ्गीकारे ज्ञानस्योभयमहिम्ना भवनाद्येनाश्रुतमित्यैकत्वव्याकोपात्प्रतिज्ञानुपपत्तिरित्यर्थः। चकारो दृष्टान्तोपरोधसमुच्चायकः। इदं दूषणमविभागपक्षेऽपि तुल्यम्। सप्तमं निराकरोति—एतेनेत्यादि। प्रतिज्ञानुपपत्तिकथनेन। ननु दृष्टान्तानुरोधात्तद्विकारमङ्गीकृत्य प्रतिज्ञोपपादनीयेत्यत आह—न च तदित्यादि। तस्येत्यादि। तस्य ब्रह्मणः। 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। अमृतस्य परं सेतुं दग्धेन्धनमिवानल'मित्यादिश्रुतिषु तथात्वश्रवणादित्यर्थः। तर्ह्यंशांशिभावमाश्रित्य प्रतिज्ञोपपादनीयेत्यत आह—नापीत्यादि। निरवयवत्वादिति। निष्कलश्रुतेस्तथात्वादित्यर्थः। नन्वेवं सति व्याससूत्रविरोध इत्यत आह—अंश इत्यादि। तथा च निष्कलश्रुतिविरोधाद्गुणभूतेषु तेष्वन्यायकल्पना न दुष्टेत्यविरोध इत्यर्थः। एवं सर्वान्प्रकारान् निराकृत्य स्वाभिमतमाह—तस्मादित्यादि। ब्रह्मोपाधिरिति। ब्रह्मविभाजकोपाधिः। एवं स्वाभिमतं जीवस्वरूपं

हरितोषिणी।

च। पारमार्थिकेति। अनागन्तुकत्वादिति शेषः। अविनाभावरूपाभेदसम्बन्धं निराकरोति—एकेति। 'येनाश्रुतं श्रुतं भवती'ति प्रतिज्ञयोभयं स्वीकार्यं, तस्यानुपपत्तिरित्यर्थः। औपचारिकाभेदं निराकरोति—एतेनेति। प्रतिज्ञायाः अनुपपत्तिकथनेन। ननु मृत्पिण्डघटवदिति दृष्टान्तेन विकारित्वं स्वीकृत्य प्रतिज्ञोपपादनं क्रियत इत्यत आहुः—न च तदिति। उत्तरमाह—तस्येति। तस्य। ब्रह्मणः। अविकारित्वश्रुतेः। 'निष्कल'मित्यादिश्रुतेः। एवं च मृत्पिण्डदृष्टान्तेनाभेद एव बोध्यते, न विकारित्वम्। दृष्टान्तस्यैकदेशित्वादिति भावः। शङ्कते—नापीति। निषेधति—तस्येति। ननु अंश इति व्याससूत्रेणांशत्वमुच्यत इत्यत आहुः—अंश इति। तत्त्वसूत्रादिकमिति। ब्रह्मप्रतिपादकव्याससूत्रादिकमित्यर्थः। औपचारिकमिति। गौणमित्यर्थः। एतावता प्रबन्धेन सर्वकल्पनानादरः कथितः, इदानीं स्वाभिमतमाहुः—तस्मादिति। ब्रह्मोपाधिरेव

१ क. पु. 'विकारत्वेन' इति पाठः।

रोधात् । न चोक्तन्यायेनाविद्याया उपाधित्वासम्भवान्नैवं वक्तुं शक्यमिति वाच्यम् । श्रौतानुपपत्तेर्बलिष्ठत्वात् । तथा चोपहितस्यैवाभेदासम्भवादभेदसिद्ध्यर्थमुपाधेरपि प्रातीतिकमेव सत्त्वमुररीकार्यम् । पारमार्थिकसत्त्वे ज्ञाननाश्यत्वासम्भवात् । तथा च, 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती'त्यादिना, अविद्यावस्थायामेव द्वैतदर्शनमुक्त्वा तदभावदशायां 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्ये'दित्यादिना च तन्निवारयति श्रुतिरित्याविद्यकत्वं प्रपञ्चस्यापि सिद्ध्यतीति, 'यतो वा इमानि' इत्यादिना च ब्रह्मकर्तृकत्वं प्रपञ्चस्य वदतीत्युभयसामञ्जस्यनिमित्तमविद्योपहितमेव ब्रह्म जगत्कारणमुच्यताम् । अत एव 'नान्योतोऽस्ति द्रष्टे'त्यादिश्रुतिरप्युपपद्यत इति ॥

## सुवर्णसूत्रम् ।

साधयित्वाऽर्थापत्त्यैवोपाधेरप्यसत्वं साधयति—तथा चोपेत्यादि । एवमेव प्रपञ्चस्याप्यसत्वं साधयन्नुपहितस्य जगज्जनकत्वमाह—तथा च यत्रेत्यादे ॥

## हरितोषिणी ।

जीव इति । ब्रह्मविभाजकोपाधिरेव जीव इत्यर्थः । शङ्कते—न चेति । उत्तरमाह—श्रौतेति । अन्यथाऽनुपपत्तेर्बलिष्ठत्वादित्यर्थः । अविद्याया अप्यस्वीकारमाह—तथा चेति । अनुपपत्तेर्बलिष्ठत्वादेव चेत्यर्थः । अभेदासंभवादिति । अविद्याविशिष्टस्याभेदाभावादित्यर्थः । प्रातीतिकमिति । शुक्तौ रजतप्रतीतिर्यथा, तथोपाधेरपि प्रतीतिरित्यर्थः । एवं च ज्ञाननाश्योपाधेरसत्त्वेनौपाधिकप्रपञ्चस्याप्यसत्त्वमाह—तथा चेति । ननु प्रपञ्चो यदि नास्ति, तदा 'यतो वा इमानि भूतानि जायन्त' इति श्रुत्या प्रपञ्चोत्पादकत्वं तस्य कथमित्यत आह—यतो वेति । उभयसामञ्जस्येति । कर्तृत्वाकर्तृत्वोभयेत्यर्थः । अत्रोपष्टम्भकमाह—अत एवेति । नान्य इति । दर्शनकर्तृत्वमपि तस्यैवेत्युपहितानुपहितब्रह्मणोरेकत्वमिति भावः ॥

---

१ नाश्याया उपाधेरसत्वे भेदस्यौपाधिकप्रपञ्चस्याप्यसत्त्वमाहेति पाठान्तरम् ।

एवं प्राप्ते ब्रूमः—

जीवांशत्वोपपादनम् । (१७) श्रुतितस्तत्त्वसूत्रेभ्यः स्मृतिभ्यश्चांश एव सः ।
स्वार्थे प्रामाण्यतस्तेषां तेभ्य एवाणुरेव च ॥

भवेदेतदेवम्, यद्याविद्यकं जीवत्वं स्यात् । न त्वेवम्, किन्तु पारमार्थिकम् । न चाभेदबोधकश्रुत्यनुपपत्तिः, अंशांशिभावेनैव तदुपपत्तेः । ननु निरवयवत्वं बाधकमुक्तमिति चेत्, सत्यमुक्तम् । तत्रैवेदं विचार्यते,—ब्रह्मस्वरूपं च श्रुतिगम्यं लौकिकप्रमाणगम्यं चेति? तत्र न द्वितीयः । तथाहि—न तावच्चाक्षुषम्, *अरूपिद्रव्यत्वात् । नापि स्पार्श-

सुवर्णसूत्रम् ।

(१७) प्राप्त इति । उपहितस्य कर्तृत्वे प्राप्ते । तन्निराकर्तुं ब्रूम इति प्रतिज्ञाय जीवांशत्वे निरवयवत्वस्याबाधकत्वं प्रमाणपुरःसरं वदिष्यन्तस्तादात्म्येन ब्रह्माभेदं च तस्योपपादयिष्यन्तः पूर्वं जीवस्वरूपादिकं कारिकयाऽऽहुः—श्रुतित इत्यादि । व्याकुर्वन्ति—भवेदेतदेवं यद्याविद्यकमिति । एतत् त्वदुक्तं भवेत् उपपद्येत एवं त्वदुक्तप्रकारेण

हरितोषिणी ।

प्राप्त इति । उपहितस्य कर्तृत्वे प्राप्ते इत्यर्थः । ब्रूम इति । तन्निराकर्तुमत्र तात्त्विकं सिद्धान्तं ब्रूम इत्यर्थः ॥

(१७) तत्रादौ जीवे ब्रह्माभेदमणुत्वं चोपपादयितुं पद्येन जीवस्वरूपं वदन्ति—श्रुतित इति । सः जीवः । तेषां श्रुत्यादीनाम् । कारिकार्थमाहुः—भवेदिति । एतत् त्वदुक्तम् । भवेत् उपपन्नं भवेत्, यद्येवं त्वदुक्तया आविद्यकं जीवत्वं स्यात्, न त्वेवमित्यन्वयः । तर्हि जीवत्वं कथमित्यत आहुः—किन्त्विति । शङ्कते—न चेति । उत्तरमाहुः—अंशांशीति । पुनः शङ्कते—नन्विति । उत्तरमाहुः—सत्यमिति । तत्र बाधके । इदं जीवब्रह्मोभयस्वरूपं विचार्यत इत्यर्थः । तत्र पक्षद्वयमाहुः—ब्रह्मस्वरूपमिति । चकाराज्जीवस्वरूपम् । प्रथमपक्षं समर्थयितुं द्वितीयं खण्डयन्ति—तत्रेति द्रूप-

गङ्गाधरभट्टी ।

(१७) श्रुतित इति । कारिका ( विमर्शे ) (१)

---

टिप्पणी ।

* अरूपिद्रव्यत्वादिति । यद्यपि सिद्धान्ते अरूपिण आकाशस्य चाक्षुषं स्वीक्रियते तथाऽपि वस्तुसामर्थ्यात्तदेव तथेति न तावता व्याप्तिः संभवति । किंच पञ्चीकरणप्रक्रियाऽऽकाशे रूपवत्त्वमपि संभवतीति न दोषः ॥

---

१ क. पु. प॰ इति ।

नम्, *तद्रहितत्वात्। नापि गन्धादिवद् घ्राणेन्द्रियादिप्रत्यक्षम्, अगुणत्वात्। नाप्यनुमानगम्यम्। परिशेषेण ज्ञानप्रयत्नाधारत्वेनात्मसाधने आवश्यकत्वाल्लाघवाच्च तादृक्प्राणसिद्धावेवार्थान्तरत्वेन तदसिद्धेः।

सुवर्णसूत्रम्।

यथाविधोपाधिकमित्यर्थः। परिशेषेणेत्यादि। परिवर्जने, वर्जितस्य शेषः, प्रसक्ते निषेधे तत्संसर्गरहितः परिशेषस्तेन। निरात्मवादिनां बाह्यानां मते चेतनाया मदशक्तिवत् पुञ्जधर्मत्वम्। यथा केवलैः खदिरचूर्णताम्बूलपर्णपूगैर्न मदः, समुदितैश्च मदस्तथा केवलपरमाणूनामचेतनत्वं, विविधपरमाणुपुञ्जस्य चेतनत्वमिति। तत्रान्ये वदन्ति—किं बाह्यः पुञ्जश्चेतनाधर्मा उतान्तरः?। तत्र बाह्यः पुञ्जः [2]शरीररूप आत्मा; ज्ञानप्रयत्नाधारत्वात्। यन्नैवम्, तन्नैवम्, घटादिवदित्यनुमानेन शरीरत्वावच्छिन्नस्य बाह्यपुञ्जस्या[3]त्मत्वसाधने, अनात्मा; तदनाधारत्वात्। मृतशरीरवदितिप्रत्यनुमानेन हेतोः सत्प्रतिपक्षत्वाच्छरीरादिकं जीवत्वेन विशेषणीयम्। तत्र जीवत्वं किमित्यपेक्षायामन्वयव्यतिरेकाभ्यां प्राणधारणप्रयत्नवत्त्वमेव जीवत्वेनावधारणीयम्। [4]तत्तद्वस्तुधारकत्वं कस्येति जिज्ञासायां, शरीररूपो बाह्यः पुञ्जो, न तद्धारकः; बाह्यत्वात्, मृतशरीरवत्, इत्यनुमानेन बाह्यस्य तथात्वे निरस्ते आन्तरस्य पुञ्जस्य तथात्वमान्तरत्वाद्वक्तव्यम्। ततः, आन्तरः पुञ्जो, न तद्धा-

हरितोषिणी।

णप्रकारमेवाहुः—चाक्षुषमिति। चक्षुर्जन्यं प्रमाणं नेत्यर्थः। तद्रहितत्वात् स्पर्शरहितत्वात्। अनुमानं निराकुर्वन्ति—नापीति। परिशेषादिति। चक्षुरादिसर्वेन्द्रियनाशेऽपि जीवकार्यस्य ज्ञानस्य, प्रयत्नस्य श्वासोच्छ्वासस्य, तत्कार्यरूपायाः क्षुधायास्तृपायाश्च सत्वेनेन्द्रियादीनां जीवत्वाभावात् परिशेषाज्ज्ञानप्रयत्नादिना आत्मत्वसाधने पदार्थान्तर आत्मसिद्ध्यपेक्षया लाघवात्प्राणस्यैव सिद्धिर्न स्वात्मनः। तादृशप्राणसिद्ध्या अर्थान्तरत्वेन अर्थान्तरसाधकत्वरूपनिग्रहस्थानत्वेनेत्यर्थः। तदसिद्धेरिति। आत्मासिद्धेरित्यर्थः।

गङ्गाधरभट्टी।

अर्थान्तरत्वेनेति। यत्साध्यते ततोऽन्यस्य सिद्धिरर्थान्तरम्। यथात्मसाधने प्राणसिद्धिरिति।

---

टिप्पणी।

* तद्रहितत्वादिति। अत्र बुद्धिस्थस्पर्शपरामर्शकत्वं तच्छब्दस्य, 'पटोलपत्रं पित्तघ्न'-मित्यत्रेव॥

---

१ शु. पु. न०। २ क. पु. इदं नास्ति। ३ स्यात्मत्वं साधनीयम्। तत्र मृतशरीरादौ तदभावेन हेतोः साध्यसमत्वादित्यधिकः पाठो ड. पुस्तके। ४ ड. पु. तादृशयत्नवत्त्वमिति।

## सुवर्णसूत्रम् ।

रकः; आन्तरत्वात् । मृतपश्वन्तरपिण्डवदित्यनेन हेतोः साधारणत्वेऽवगते देहात्मवादो दूषितो भवति । ततः चक्षुरात्मा, प्राणधारकत्वाद्, ज्ञानप्रयत्नाधारत्वाद्वा । यदेवम्, तदेवम् । श्रोत्रादिवत्, इत्येवं प्रत्येकमिन्द्रियेष्वात्मत्वसाधने विनिगमनाविरहादन्धादिष्वपि प्राणधारणप्रयत्नदर्शनेनैकैकस्मिन् व्यतिरेकव्यभिचाराच, हेतोः स्वरूपासिद्धत्वेनाभासत्वम् । ततस्तत्समुदायस्यात्मत्वसाधनेऽपि यत्र सकलगोलकहीनत्वं तादृशपिण्डेपि क्षुत्तृट्कार्यदर्शनात्तद्धारकत्वमन्तःकरणे पर्यवस्यति, न तु समुदाये । गोलकनाशेन तन्नाशात् । नापि त्वगिन्द्रियम्, अंशतस्तस्यापि नाशादिति । तत्र पुनस्तेनानुमानेन तथात्वसाधनेऽपि तत्किमणु, विभु वेति शङ्कायाम् 'ज्ञानादिकं नाणुगुणः, प्रत्यक्षत्वात्, घटरूपादिवत् । यन्नैवम्, तन्नैवम् । परमाणुरूपादिवत्' इत्यनुमानेन ज्ञानादेस्तथात्वे निश्चिते, ततो 'नाडीमनःसंयोगः कर्मजन्यः, यावत्प्रतियोगिसत्त्वेऽपि कादाचित्कत्वात्, स्थाणुपुरुषसंयोगवत् । यन्नैवम्, तन्नैवम् । स्थाण्वाकाशसंयोगवत् । मनो मूर्तं, क्रियावत्त्वात्, वायुवत्' इत्यादिना कारणत्वेन सिद्धस्य मनसो ज्ञानाद्यनाधारत्वे सिद्धे, तेनानात्मत्वसिद्धिः । ततः प्राणोऽवशिष्यते, तस्यात्मभिन्नत्वसाधनं दुर्घटम् । प्राणसत्त्वे जीवसत्त्वस्य, तदसत्त्वे तदभावस्य च दर्शनाज्ज्ञानप्रयत्नाधारत्वस्य तत्रैव पर्यवसानात् । न च सुषुप्तौ ज्ञानाभावेन तस्मिन् ज्ञानाद्यनाधारत्वे निश्चिते 'प्राण आत्मभिन्नः, ज्ञानाद्यनाधारत्वाद्, देहादिवत्' इत्यनुमानेनात्मभेदसिद्धिरिति शक्यम् । श्वासोच्छ्वासक्रियादर्शनेन तदानीमपि तस्य प्रयत्नवत्तानिश्चयात् । ज्ञानाभावस्य मनःसंयोगाभावजन्यत्वेन ज्ञानाधारत्वयोग्यताविघटनाभावात् । अतो ज्ञानाद्याधारत्वेनात्मसाधने तदभावस्यादर्शनात्प्राणस्यैवात्मत्वेन सिद्धिर्न तु ततोऽप्यतिरिक्तस्यात्मनः । देहप्राणवियोगस्यैव मृत्युत्वेन जीवद्देहे तस्यावश्यकत्वात् । अतिरिक्तात्मानभ्युपगमेन पदार्थलाघवाच्च । तथा सत्यनुमानस्यार्थान्तरसाधकत्वेन हेत्वाभासत्वम् । यदि च योगिनां श्वासनिरोधेऽपि जीवनज्ञानादिदर्शनात्तदतिरिक्त एवात्मेति विभाव्यते, तदाऽपि निरुद्धवृत्तिकप्राण(स्थितदेह)स्य(तद्देहे)सत्त्वान्न तदतिरिक्तात्मसिद्धिः । यदि च निरोधजनकस्य प्राणातिरिक्तत्वं विभाव्यते, तदाऽपि चेतनाधर्मकस्यैव तस्य सिद्धिर्न तूपनिषद्-

---

१ क. पु. ज्ञानाद्यनाधारत्वादिति ।

२ पिण्डवदिति प्रत्यनुमानेन हेतौ दूषिते इन्द्रियेषु प्रत्येकं, तत्समुदाये वा तथात्वं पूर्वोक्तानुमानेन साधनीयम् । तत्र प्रत्येकं चक्षुराद्यभावेऽप्यन्धादीनां जीवत्वदर्शनाद्धेतोः स्वरूपासिद्धत्वेनाभासत्वम् । एवं सकलगोलकनाशेन सकलबहिरिन्द्रियाभावे निश्चितेऽपि क्षुत्तृट्श्वासोच्छ्वासादिकार्यदर्शनाच्छरीरपिण्डस्य जीवत्वनिश्चयाद् इन्द्रियसमुदायरूपेऽपि पक्षे हेत्वभावात्स्वरूपासिद्धत्वेनाभासत्वम् । एवं बहिरिन्द्रियेषु तदभावे निश्चिते अन्तःकरणमवशिष्यते. ग. पु. ईदृशः पाठः ।

यथा कथंचित् सिद्धावपि नोपनिषद्विचारितरूपस्य सिद्धिः । तथा च स्वतःसिद्धप्रामाण्यैतद्विरोधेन बाधितत्वादनुमानस्य न तत्साधकत्वम् । नापि शब्दगम्यम् । तस्याप्तोक्तिरूपत्वेन तस्य च यथादृष्टार्थवादित्वेनात्मनश्चादृश्यत्वेन तदनुपपत्तेः । अत एव नोपमानगम्यमपि, किन्तु श्रुत्येकसमधिगम्यम् । 'तन्त्वौपनिषदं पुरुषं पृच्छामी'ति श्रुतेः । 'सर्वे वेदा यत्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्य' इति स्मृतेश्च । तदर्थश्च

सुवर्णसूत्रम् ।

चारितचिद्रूपस्य सिद्धिः । एतेनाहंवित्तेरप्यप्रयोजकत्वमुक्तप्रायम् । तदेतदुक्तम्—नोपनिषद्विचारितरूपस्य सिद्धिरिति । सिद्धमाहुः—तथा चेति । अत एवेति । शब्दप्रत्यक्षोपजीवकत्वादेव । एवं जीवस्वरूपस्य लौकिकप्रमाणागम्यत्वेन श्रुत्येकसमधिगम्यत्वं साधयित्वा ब्राह्मणस्तथात्वमाहुः—तन्त्वेत्यादि । इदं बृहदारण्यके शाकल्यब्राह्मणेऽस्ति । अत्र पूर्वं 'स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यत' इत्युक्तम् । तत्र यदि केवलेन्द्रियाग्राह्यत्वं विवक्ष्येत, तदा औपनिषदपदमनतिप्रयोजनं स्यादत उपनिषदितरयावत्प्रमाणावेद्यत्वमास्थेयम् । अतः श्रुत्येकसमधिगम्यमित्यर्थः । तर्हि पूर्वकाण्डवेद्यत्वमपि न

हरितोषिणी ।

यथा कथंचिदिति । योगिभिः प्राणनिरोधे कृते श्वासोच्छ्वासादिप्रयत्नो न जायते, परन्तु जीवज्ञानमस्तीति प्राणातिरिक्तमात्मत्वं सिद्ध्यति, तथापि निरुद्धप्राणकस्य योगिदेहे वर्तमानत्वेन नातिरिच्यते प्राणतः । अथ निरोधोत्पादकस्य प्राणाद्भिन्नत्वोररीक्रियते तदाऽपि चेतनात्मकस्य तस्य सिद्धिर्न तूपनिषत्प्रतिपाद्यात्मसिद्धिरित्यर्थः । तस्मात्तत्साधकमनुमानं नास्तीत्याहुः—तथा चेति । स्वतःसिद्धेति । जीवनज्ञानादिरूपस्वतःसिद्धेत्यर्थः । शब्दगम्यत्वाभावे हेतुमाहुः—तस्येति । तस्य शब्दस्य । आप्तोक्तिरूपत्वेन आप्तवाक्यत्वेन । तत्वस्य आप्तत्वस्य । यथेति । आप्तेन तु यथा दृश्यते तथोच्यते, आत्मनस्तु दर्शनं नास्तीति भावः । 'आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः स' इति चरके पतञ्जलिः । तदनुपपत्तेरिति । शब्दगम्यत्वानुपपत्तेरित्यर्थः । अत एवेति । प्रत्यक्षशब्दगम्यत्वाभावादेव । श्रुतिगम्यत्वे प्रमाणमाहुः—तमिति । औपनिषदम् । उपनिषत्प्रतिपाद्यम् । श्रुतेरिति । बृहदारण्यस्थ-

गङ्गाधरभट्टी ।

यथा कथञ्चिदिति । योगिभिः प्राणनिरोधेऽपि ज्ञानदर्शनाचेतनावदात्मसिद्धौ । नोपनिषदिति । 'तन्त्वौपनिषदं पुरुष'मिति श्रुतेः ।

---

१ तत्वस्येति जपुस्तकम् ।

न लौकिकरीत्या निर्णेतुं योग्यः, अलौकिकत्वात् । तस्य च लोकविलक्षणत्वात् । किन्तु स्वयमेव वेदव्यासं कृत्वा तन्मीमांसां च प्रतिज्ञापूर्वकं कुर्वतो वेदव्यासस्य सूत्रैः । तस्यैतदर्थाभिज्ञत्वात् । तत्र च *जीवब्रह्मसम्बन्धविचारे ब्रह्मणोंऽश एव जीव इति निर्णीतम् । 'अंशो नानाव्यपदेशा'दिति । अस्यार्थः—जीवो ब्रह्मणोंऽश एव । कुतः ? नानाव्यपदेशाद्, नानाविधो †यो व्यपदेशः । क्वचिद् ब्रह्मत्वेन, क्वचिदुत्पन्नत्वेन, क्वचिदज्ञत्वेन, क्वचिच्चिद्रूपत्वेन, क्वचिदीशितव्यत्वेन अणुत्वेन च,

सुवर्णसूत्रम् ।

स्यादत आहुः—सर्व इत्यादि । किं तेनेत्यत आहुः—तदर्थ इत्यादि । वेदव्यासमिति । वेदविभागम् । तावता जीवस्वरूपस्य कथं श्रौतत्वसिद्धिरित्यत आहुः—तत्र चेत्यादि । क्वचिद्ब्रह्मत्वेनेत्यादि । 'अयमात्मा ब्रह्म सर्वानुभूः' 'सर्व एवात्मानो व्युच्चरन्ति' 'ज्ञाज्ञौ द्वावजावीशानीशौ' 'विज्ञानघन एवैतेभ्यो भूतेभ्यः' 'क्षरात्मानावीशते देव एकः' 'एषोऽणुरात्मा चेतसा वेदितव्यः' 'तद्वज्जीवो नभोपमः' 'स वा एष महानज आत्मा योऽयं विज्ञानमय'[1] इत्यादिभिरित्यर्थः । भेदेन व्यपदेशः

हरितोषिणी ।

शाकल्यब्राह्मणवाक्यात् । पूर्वकाण्डवेदोऽपि यज्ञप्रतिपादकोऽपि ब्रह्मप्रतिपादक इत्याहुः—सर्व इति । तर्हि कथं ज्ञेय इत्यत आहुः—किन्त्विति । वेदव्यासमिति । वेदविभागमित्यर्थः । सूत्रैरिति । निर्णेतुं योग्य इति पूर्वेणान्वयः । एतावता जीवस्वरूपं तत्रैव सिद्धमित्याहुः—तत्र चेति । व्याससूत्रमाहुः—अंशो नानेति । व्यपदेशादिति । निरूपणात् । नानाव्यपदेशमेवाहुः—क्वचिदिति । 'अयमात्मा ब्रह्म सर्वानुभूः' 'सर्व एवात्मानो व्युच्चरन्ति' 'ज्ञाज्ञौ द्वावजावीशानीशौ' 'विज्ञानघन एवैतेभ्यो भूतेभ्यः' 'क्षरात्मानावीशते देव एकः' 'एषोऽणुरात्मा चेतसा वेदितव्यः' 'स वा एष महानज आत्मा योऽयं विज्ञानमय'इत्यादिश्रुतिवाक्येषु क्वचिद्ब्रह्मत्वेनेत्यादिना

गङ्गाधरभट्टी ।

वेदव्यासम् वेदविभागम् ।

टिप्पणी ।

* जीवब्रह्मसम्बन्धविचार इति । 'ब्रह्मसम्बन्धि स्वरूपमुच्यत' इत्येतत्सूत्रभाष्यम् ॥

† यो व्यपदेश इति । तस्मादिति शेषः । क्वचिद् ब्रह्मत्वेनेत्यादेषु निरूपणादितिक्रमेण सम्बन्धः ॥

१ क. पु. 'क्वन आत्मा योऽयं विज्ञानमय' इति पाठान्तरम् ।

व्यापकत्वेन च निरूपणादेकस्यैव विरुद्धधर्माश्रयत्वं *ब्रह्मातिरिक्तस्य न सम्भवतीति ब्रह्मांश एव जीव इत्यर्थः । †अथवा, नाना व्यपदेशाद्भेदेन व्यपदेशात्तथेत्यर्थः । श्रुतिश्च 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युचरन्त्येवमेवाऽस्मादात्मनः सर्वे प्राणा' इत्युपक्रम्य 'सर्व एवात्मानो व्युचरन्ती'ति '‡कपूयचरणा रमणीयचरणा' इति च ॥

सुवर्णसूत्रम् ।

कुत्रेत्याकाङ्क्षायामाहुः—श्रुतिश्चेत्यादि । तथा चात्मान इतिबहुत्वस्य, व्युचरणस्य, चरणभेदस्य च बोधनेन जीवानां परस्परं, ब्रह्मणः सकाशाच्च भेदेन व्यपदेशादंशा इत्यर्थः । चरणभेदश्रुतिश्छान्दोग्यस्था ज्ञेया ॥

हरितोषिणी ।

यथासंख्यं निरूपणादित्यर्थः । ननु विरुद्धधर्मैः कथं निरूपणमित्यत आहुः—एकस्यैवेति । जीवस्य ब्रह्मणः सकाशात्सुवर्णांशवद्भिन्नत्वकथनार्थं पक्षान्तरमाहुः—अथ वेति । भेदेन व्यपदेशे प्रमाणमाहुः—श्रुतिश्चेति । छान्दोग्यस्थां श्रुतिमप्याहुः—कपूयेति । कपूयचरणाः असदाचरणाः पापिनः, रमणीयचरणाः सदाचरणाः पुण्यवन्त इत्यर्थः । एतेन चरणभेदेन, व्युचरणेन, आत्मान इति बहुत्वकथनेन ब्रह्मणः सकाशात्परस्परं च भिन्ना इति निरूपणेनांशा एवेति बोधितम् ॥

गङ्गाधरभट्टी ।

कपूयचरणा इति छान्दोग्यम् । तत्र कपूयं पापम् ॥

---

टिप्पणी ।

* ब्रह्मातिरिक्तस्येति । ब्रह्मातिरिक्तस्य न संभवतीत्यतो ब्रह्मानतिरिक्तत्वमेव सिद्ध्यति जीवस्य, नांशत्वं, तथापि प्रकारान्तरेणानतिरिक्तत्वमनुपपन्नमिति सिद्धस्यैव तदुपपादकमंशत्वम् ॥

† अथवेति । भाष्योक्तरीतिरियम् । नानाशब्दस्य भेदरूपोऽर्थः 'विनञ्भ्यां नाऽनाञौ न सहे'ति सूत्रानुगुणोऽपि, अनेन पृथग्भावे वर्तमानान्नञः अनाञ् प्रत्ययविधानात् । पूर्वत्र पक्षे नानाविधत्वार्थोऽप्यव्ययानामनेकार्थत्वादुपपन्नः । अत्र पक्षे प्रतिपत्तिसौकर्यमपि ॥

‡ कपूयचरणा इति । अत्र चरणमाचरणम् । टीकोक्ता चरणभेदश्रुतिरपीयमेव ॥

यत्तु जीवस्य ब्रह्मोपाधिकत्वमङ्गीकृत्य विस्फुलिङ्गस्यौष्ण्यमिव चेतनत्वं साधारणो धर्मो जीवेश्वरयोरित्यौपचारिकमंशत्वं व्याख्याय नानाव्यपदेशदर्शनं श्रुतौ 'यथाग्नेः क्षुद्रा विस्फुलिङ्गाः' 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयती'त्यादेः । तत्तूपेक्ष्यं विद्वद्भिः । पूर्वापरविरोधात् । तथाहि—न हि तन्मतीयजीवस्याभासत्वेन प्रतिबिम्बत्वेन वाऽलीकस्य नियमनमतस्तस्मिन् स्थितिर्वा ज्ञानैकघनस्य परमात्मनः सम्भवति । न वा विस्फुलिङ्गौष्ण्यदृष्टान्तेन चेतनत्वं साधारणं धर्ममादायौपचारिकमंशत्वमपि व्याख्यातुं शक्यम् । तत एवांशत्वावगमप्रकारस्तु श्रुत्यैव 'यथाग्नेः क्षुद्रा' इत्यादिनोक्तः ॥

सुवर्णसूत्रम् ।

नन्वभेदश्रुतेर्बलिष्ठत्वान्निरवयवत्वस्य च बाधकत्वादुक्तसूत्रेऽप्यंशत्वमौपचारिकमेवाद्रियत इति, न भवदुक्तरीत्या निर्णय इत्याशङ्कायां अव्याख्यानदोषं वक्तुं तदाहुः—यस्त्वित्यादि । ब्रह्मोपाधिकत्वमिति । स्वार्थे कः । इत्यादेरिति पञ्चमी । वस्तुतस्तु प्रथमान्त एव पाठ इति प्रतिभाति । तस्मिन् स्थितिरिति । आत्मनि स्थितिः । तत एवेति । अलीकत्वादेव । नन्वेवं सति घटाकाशवदविद्यावच्छिन्नं चैतन्यमेव जीवोऽस्तु, तथा सत्यंशत्वमौपचारिकमेव भविष्यतीत्यत आहुः—अंशत्वेत्यादि ॥

हरितोषिणी ।

ननु सूत्रेंऽशत्वमौपचारिकं वक्तव्यम्, अभेदश्रुतेर्बलिष्ठत्वादित्येतन्मतमाहुः—यस्त्विति । इत्यादेरिति । श्रुतौ 'यथाग्ने'रित्यादिवाक्यात् । नानाव्यपदेशदर्शनमिति पूर्वेणान्वयः । खण्डयन्ति—तत्तूपेक्ष्यमिति । विद्वद्भिरुपेक्ष्यमित्यन्वयः । विरोधमेवाहुः—तथा हीत्यादिना । तस्मिन् स्थितिरिति । तस्मिन् अलीके आत्मनि । ज्ञानैकघनस्येति । न हि संभवतीत्यन्वयः । दूषणान्तरमप्याहुः—न वेति । व्याख्यातुं शक्यमित्यग्रेणान्वयः । अत्र हेतुमाहुः—तत एवेति । अलीकत्वहेतोरेवेत्यर्थः । ननु अंशत्वमौपचारिकमेव जीवस्याविद्यावच्छिन्नचैतन्यरूपत्वाद्घटाकाशवदित्यत आहुः—अंशत्वेति ॥

गङ्गाधरभट्टी ।

तत्तु । मतखण्डने । तत एवेति । अलीकत्वादेव ॥

(१८) इदमत्र ज्ञेयम्,—ब्रह्मणो निरंशत्वं सांशत्वं वा न लोकसिद्धं, येन तदनुरोधेन किञ्चिद्वक्तुं शक्यम्, किन्तु वेदैकसमधिगम्यम्। एवं सति यथैव स निरूपयति, तथैव तदिति मन्तव्यम्। अत एव 'नैषा तर्केण मतिरापनेया,' 'अलौकिकास्तु ये भावा न ताँस्तर्केण योजयेदित्यादिका श्रुतिर्लौकिकयुक्त्यैतद्बाधनं निषेधति। अन्यथा सर्वत्र लौकिकयुक्त्यनुसारिण्येवार्थे श्रुतेस्तात्पर्यवत्त्वेन 'नैषा तर्केणे'त्यादिश्रुतिर्व्यर्था विरुद्धार्था च स्यात्। लोकेऽपि यत्र वस्तुस्वभाव एव कार्यहेतुर्न तत्र युक्तिसम्भावना। यथा अयः—कान्तसन्निधौ लोहपरिभ्रमणम्। न च तत्र मणिनिष्ठा देवताऽऽकर्षिकेति वाच्यम्। तस्या अपि लोहस्यैवाकर्षणे हेत्वपे-

निरवयवत्व-सांशत्वाबाधकत्वं प्रदर्श्य तादात्म्येन जीवब्रह्माभेदोपपादनम्।

सुवर्णसूत्रम्।

(१८) ननु 'घटसंवृतमाकाशं लीयमाने घटे यथा। घटो लीयेत, नाकाशं, तद्वज्जीवो नभोपम' इति बिन्दुश्लोकोपनिषदि श्रवणादुपाध्यवच्छिन्नं ब्रह्मैव जीवः। व्युच्चरणश्रुतिस्तु बृहदारण्यके सुप्तं पुरुषमुपक्रम्य पठ्यत इति स्वाप्नानां सुषुप्त्यनन्तरं व्युच्चरणं वदिष्यति। यदि च 'य एष आकाशस्तस्मिञ्छेत' इति व्यवहितमाकाशशब्दवाच्यं ब्रह्मैव पूर्वमुक्तमिति तत एवोर्णनाभिदृष्टान्तेन व्युच्चरणमङ्गीक्रियते, तदाऽपि काण्वपाठे आत्मनामनुक्तत्वादेतदपि मनःपरतया कथंचिन्नेयम्। ब्रह्मणो निरवयवत्वस्यांशत्वबाधकस्योक्तत्वादित्याशङ्कायामाहुः—इदमत्रेत्यादि। योजयेदिति। प्रसाधयेत्। एतद्बाधनम्। श्रुत्युक्तार्थबाधनम्। तथा च वैदिकयुक्त्या यदेव संसिद्धं तदेव ग्राह्यमिति भावः। अन्यथेति। यदि लौकिकयुक्तिरप्यभिप्रेता श्रुतेः स्यात्। लौकिकयुक्तेः शिथिलत्वाय तस्या लोकेऽपि कुण्ठतामाहुः—लोकेऽपीत्यादि। भूतानां जीवानामिति।

हरितोषिणी।

(१८) ननु ब्रह्मोपनिषदि 'घटसंवृतमाकाशं लीयमाने घटे यथा। घटो लीयेत नाकाशं तद्वज्जीवो नभोपम' इति श्रवणादुपाध्यवच्छिन्नं ब्रह्मैव जीवशब्दवाच्यम्; एवं च ब्रह्मणो निरवयवत्वादंशत्वं नैव संभवतीत्यत आहुः—इदमत्रेति। तदनुरोधेन लौकिकयुक्त्यनुरोधेन। तदिति। ब्रह्मेत्यर्थः। लौकिकयुक्त्यप्रसरे प्रमाणमाहुः—अत एवेति। एतद्बाधनम् श्रुत्युक्तार्थबाधनम्। अन्यथेति। निषेधानङ्गीकारे। किञ्च लौकिकी युक्तिर्लोकेऽपि क्वचिन्न प्रसरतीति मणिस्वभावे पर्यवसानं यथा तथा ब्रह्मण्यपी-

१ मु. पु. 'भूतानि' इति पाठः। २ मु. पु. 'श्वासानामि'ति पाठान्तरम्।

क्षायां देवतास्वभावस्यैव तथात्वेन वक्तव्यत्वादावश्यकत्वाल्लाघवाच्च मणिस्वभावस्यैव तत्त्वेन वक्तुमुचितत्वात् । तथात्रापि श्रुतिबलाद् वस्त्वेव तादृशमिति मन्तव्यम्, न युक्तिरपेक्षणीया । तथा च सैव 'निष्कलं निष्क्रिय'मित्यादिना सांशत्वं निराकृत्य 'यथाऽग्ने'रित्यादिना जीवस्य ब्रह्मांशत्वमप्याह । व्यासोऽप्यत एवेममेवार्थं दृढीकर्तुं हेत्वन्तराण्याह—'मन्त्रवर्णा'दिति 'अपि च स्मर्यत' इति च । मन्त्रवर्णश्च,—'पादोऽस्य विश्वा भूतानी'ति भूतानां जीवानां पादत्वेनांशत्वमेवाह । स्मृतिश्च—'ममैवांशो जीवलोके जीवभूतः सनातन' इति जीवस्य ब्रह्मांशत्वमेवाह । अत एवाभेदश्रुतिरुपपद्यते । न हि विस्फुलिङ्गो नाग्निः । एवं जीवोऽपि ब्रह्मांशत्वाद् ब्रह्मैव ॥

सुवर्णसूत्रम् ।

'अहिंसन् सर्वभूतानि' 'न हिंस्यात्सर्वभूतानी'त्यादिप्रयोगात् । पादत्वेनेति । पादो भागोंऽश इत्येषां पर्यायत्वदर्शनात् । तथा चैतद्विरोधादवच्छिन्नवादो नाङ्गीकर्तुं शक्यत इति सा श्रुतिर्नान्यथा नेतुं शक्या । तेन नभोपम इति लयाभाव एव दृष्टान्तो, न स्वनंशत्वेऽपि, पूर्वमन्त्रे जलचन्द्रदृष्टान्तायेत्यर्थः । न चैतावता प्रतिबिम्बवादे भ्रमितव्यमित्याशयेनाहुः—अत एवेत्यादि । अंशत्वेन तादात्म्यादेव । अभेदश्रुतिः 'उपद्रष्टानुमन्तैष आत्मा सिंहश्चिद्रूप' इत्याद्या, उपपद्यते 'भेदसहिष्णुरभेदस्तादात्म्य'मिति तादात्म्यलक्षणादुपपद्यत इत्यर्थः । एवं पूर्वप्रश्नद्वयोत्तरत्वेन प्रकारः, सम्बन्धश्चोक्तः ॥

हरितोषिणी ।

त्याहुः—लोकेऽपीति । देवतास्वभावस्येति । लोहाकर्षकस्वभावस्य । तथात्वेन । लोहाकर्षकत्वेन । देवतैका स्वीकर्तव्या, तस्याः पुनरेकः स्वभावः स्वीकर्तव्यस्तदपेक्षया लाघवादाहुः—आवश्यकत्वादिति । तत्त्वेन लोहाकर्षकत्वेन । श्रुतिबलमेवाहुः—तथा चेति । सैव श्रुतिरेव । आदेत्यग्रेणान्वयः । व्यासोऽपीति । ब्रह्मांशत्वमेवादेत्यग्रेतनेनान्वयः । मन्त्रवर्णादित्यस्य सूत्रस्यार्थमाहुः—मन्त्रवर्णश्चेति । पादोऽस्येति । अंशे भागे पादप्रयोगात् पादः अंश इत्यर्थः । स्मृतिबलमाहुः—स्मृतिश्चेति । ननु बिम्बप्रतिबिम्बवाद एवास्तु, नेत्याहुः—अत एवेति । मूले क्वचिदत एवेति पाठः । अंशत्वेन तादात्म्यादेव न प्रतिबिम्बत्वेनेत्यर्थः । उपपद्यत इति । 'उपद्रष्टानुमन्तैष आत्मा सिंहश्चिद्रूप' इत्याद्या 'भेदसहिष्णुरभेदस्तादात्म्य'मिति तादात्म्यलक्षणादुपपद्यत इत्यर्थः । भेदसहितभेदमेवोपपादयन्ति—न हीति । मध्वरामानुजशैवभास्कराचार्याणां मतं, माध्वैकदेशिवनमालिदासमतं सुवर्णसूत्रे स्पष्टमुक्तं, तत्रैवावगन्तव्यमिति विस्तरभयाद्विरम्यते ॥

## सुवर्णसूत्रम् ।

अत्र तादात्म्यमनङ्गीकुर्वतां तात्त्विकभेदवादिनां रामानुजमाध्वनैयायिकादीनां नाना मतानि । तत्र माध्वा हि—'ज्ञोऽत एवे'ति सूत्रे 'नित्यो नित्यानां' 'सर्व एवात्मानो व्युच्चरन्ती'ति श्रुत्योर्विरोधे ज्ञः जीवः, अत एव परमेश्वरादेवोत्पद्यते, शब्दादेव । 'ते वा एते चिदात्मानः अविनष्टाः परं ज्योतिर्निर्विशन्त्यविनष्टा एवोत्पद्यन्ते न विनश्यन्ति कदाचने'ति कापायणश्रुतिमुक्त्वा 'उत्पद्यन्ते चिदात्मानो नित्या-नित्याः परात्मनः । उपाध्यपेक्षया तेषामुत्पत्तिरिति गीयत' इति व्योमसंहितास्मृतिमाहुः । ततः 'तद्गुणसारत्वा'दिति सूत्रे जीवस्य ब्रह्माभेदमाशङ्क्य ब्रह्मगुणसारत्वाद्ब्रह्मव्यपदेशं वदन्तो यथा 'सर्वं खल्विदं ब्रह्मे'त्यत्र परमात्मनो जगद्व्यपदेशो गौण्या, तथा जीवे ब्रह्मव्यपदेशोऽपीत्युक्त्वा, अभेदवादिना गौण्या अमुख्यत्वे दर्शिते सार्वज्ञ्यादिगुणवता ब्रह्मणा सहाभेदोऽज्ञानादिमतो न युक्त इत्यनुपपत्त्या गौणीमाद्रियन्ते । 'यथोदकं शुद्धे शुद्धमाक्षिप्तं तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति गौतमे'ति कठवल्लीश्रुतौ जीवस्य ब्रह्मणि प्रवेशे सत्यभेदप्रतीतिविषयत्वमात्रबोधनात् । नह्युदकयोस्तदानीं वास्तवोऽभेदः । गुरुत्वाधिक्याभावप्रसङ्गात् । अतो गौण एवाभेद इति । 'तत्त्वमसी'त्यत्राप्यकारप्रश्लेष इति चाहुः । एवं च तन्मते अंशा द्विधा, अभिन्नाः, करचरणादिवत् । भिन्नाः, पुत्रादिवत् । तत्राद्या मत्स्याद्यवताराः । द्वितीया जीवा इति । वनमालिदासस्तु—तद्भिन्नत्वे सति तत्सदृशत्वमंशत्वम् । यथा चन्द्रमण्डलाच्छतांशो गुरुमण्डलमिति भिन्नांशस्वरूपमाह । तेन राश्येकदेशबोधकं सादृश्याल्पत्वबोधनार्थत्वादौपचारिकं वांऽशपदमिति फलति । व्युच्चरन्तीति पदोक्तोत्पत्तिरप्युपचारादिति तूक्तमेवेति ॥

रामानुजाचार्यास्तु—'नात्मा श्रुते'रित्यस्मिन् सूत्रे 'यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्' 'प्रजापतिः प्रजा असृजत' 'यतो वा इमानि भूतानि जायन्त' इत्यादिषु सचेतनस्य जगत उत्पत्तिश्रावणाच्च जीवोऽप्युत्पद्यत इति पूर्वपक्षे, आत्मा जीवो नोत्पद्यते 'न जायते म्रियते वा विपश्चित्' 'ज्ञाज्ञौ द्वावजा'वित्यादिषु तन्निषेधश्रुतेर्नोत्पद्यते, 'नित्यो नित्याना'मित्यादिभिर्नित्यत्वं च तस्येत्यतोऽपीति व्याख्याय, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्त्यर्थं भोग्यभोक्तृनियन्तृणां विविक्तस्वभावत्वेऽपि भोग्यस्य स्वरूपान्यथाभावरूपो विकारो, भोक्तुस्तु धर्मात्मकज्ञानसङ्कोचविकासरूपः । भोग्यभोक्तारौ च नियन्तुः शरीरतया विशेषणत्वेन सिद्धौ सौबलादिवाक्येषु । अतः सर्वदा आत्माऽऽकारमेव ब्रह्म । तत्कदाचित्स्वस्माद्विभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तिष्ठति, तदा कारणावस्थम् । यदि च विभक्तनामरूपस्थूल-

---

१ सु० पु० स्वस्माविभक्तव्येति पाठान्तरम् ।

सुवर्णसूत्रम् ।

चिदचिद्वस्तुशरीरं तिष्ठति, तदा कार्यावस्थम् । तत्राचिदंशस्य कारणावस्थायां शब्दादिविहीनत्वेऽपि यदा भोग्यत्वाय कार्यावस्था तदा शब्दादिमत्तया स्वरूपान्यथाभावः, चिदंशस्य स्वकर्मा विशेषफलभोक्तृत्वाय तदनुरूपज्ञानविकासरूपो धर्मान्यथाभावः, उभयप्रकारविशिष्टे नियन्त्रंशे तु तत्तदवस्थातत्तद्विशिष्टतारूपोऽन्यथाभावो भवतीत्यङ्गीकृत्यावस्थान्तरापत्तिरूपविकारस्य प्रकारद्वये प्रकारिणि च, कारणावस्थायां विभक्तव्यपदेशानर्हत्वेनैकरूपत्वादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञां मृदादिदृष्टान्तश्चोपपादयन्ति । जीवस्य ज्ञानविकाससङ्कोचहेतुभूतदेहसंयोगवियोगाभ्यामुत्पत्तिमरणबोधकश्रुतिमचिदंशवज्जीवस्य स्वरूपान्यथाभावाभावेन जीवे तन्निषेधादिश्रुतिं, ब्रह्मण्युभयविधानिष्टविकाराभावात् 'स वा एष महानज आत्मा अजरोऽमरोऽमृतो ब्रह्म' 'नित्यो नित्याना'मित्यादिपरविषयश्रुतिं, प्राक् सृष्टेर्नामरूपविभागाभावादेकत्वावधारणश्रुतिं, सृष्ट्यनन्तरं तद्विभागान्नानात्वं चोपपाद्य, अनाद्यविद्योपाधिकजीवत्ववादिमते ब्रह्मण एव स्वयं मोहः, पारमार्थिकोपाधिकजीवत्ववादिमते ब्रह्मस्वरूपस्यैव बन्धः, सन्मात्रं ब्रह्मैव सर्वाकारेण परिणमतीति वादिमते नियन्त्रंशस्य भोक्तृत्वाभावेऽपि तस्य सर्वज्ञत्वाद्भोक्तारं स्वस्मादभिन्नमनुसंदधातीति तेन रूपेण तस्यैवेष्टानिष्टफलभोग इति दोषानुक्त्वा, अस्माकं त्वपुरुषार्था अन्यथाभावाश्च शरीरगता एव, न तु ब्रह्मणीति ब्रह्म सर्वदा निरस्तनिखिलदोषमपरिमितोदारमेवेति स्वमतगुणमाहुः । 'प्रकाशादिवन्नैवं पर' इति सूत्रे वस्त्वेकदेशत्वमंशत्वमित्युक्त्वा विशेषणांशो विशेष्यांश इति विवेचकानां व्यवहाराच्छरीरभूतजीवस्य शरीरिभूतब्रह्मांशत्वमङ्गीचक्रुः । व्युच्चरणश्रुतिं तु नोदाजह्रुः ॥

शैवस्तु—विशिष्टाद्वैतवादमेवाङ्गीकृत्य 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतेन व्याप्तं सर्वमिदं जग'दिति श्वेताश्वतरश्रुतिं 'आत्मा तस्याष्टमी मूर्ति'रिति स्मृतिं चोदाहृत्य ब्रह्मावयवत्वेन विशिष्टांशत्वं जीवस्याह । व्युच्चरणश्रुतेर्नामरूपसमुन्मेषमर्थं चाह ॥

भास्कराचार्यास्तु—वियदादिसृष्टिप्रकरणे जीवस्योत्पत्तेरनुक्तत्वात् 'जीवापेतं वाव किलेदं म्रियते, न जीवो म्रियते' 'अजो नित्यः शाश्वतोऽयं पुराणः' 'अविनाशी वा अरेऽयमात्मे'त्यादीनां भूयसीनां श्रुतीनामन्यथाकर्तुमशक्यत्वाद्बोपाधिकृतभेदाभिप्रायेण विस्फुलिङ्गश्रुतिर्विपरिणेया, सुषुप्तिप्रकरणत्वेन सृष्ट्यभिप्रायाभावादित्यङ्गीकृत्य जीवस्याणुत्वं संसारदशायां लिङ्गशरीराभिप्रायेण, मनसो लिङ्गस्याणुत्वात्, वस्तुतस्तु व्यापक इति चाङ्गीकृत्य जीवस्यांशत्वमुपाध्यवच्छिन्नत्वेनाङ्गीकृतवन्तः । तथा च ब्रह्मणो निरवयवत्वेऽपि

1 मु. पु. नियन्त्रीत्यित्वतत्तदवस्थेति पाठान्तरम् ।

(१९) तर्ह्यसार्वज्ञ्यानुपपत्तिः?। न हि विस्फुलिङ्गो न दाहकः प्रका-

सुवर्णसूत्रम्।

'यथाग्नेः क्षुद्रा विस्फुलिङ्गा' इति श्रुतौ दृष्टान्तप्रणयनेन यथाऽवकाशस्य पार्थिवाधिष्ठानावच्छिन्नं कर्णच्छिद्रं, यथा च वायोः पञ्चवृत्तिः प्राणः, यथा च मनसः कामादयो वृत्तयस्तथायमपि पराद्भिन्नाभिन्नस्वरूपः। तस्याभिन्नस्वरूपं स्वाभाविकं, भिन्नरूपमौपाधिकम्। भिन्नाभिन्नस्वरूपे च 'सोऽन्वेष्टव्यः स विजिज्ञासितव्य' इति भेदव्यपदेशो 'ब्रह्मेमे दाशा ब्रह्मेमे कितवा' इत्यभेदव्यपदेशश्च मानमित्याहुः ॥

विज्ञानेन्द्रभिक्षुस्तु–जीवानां नित्यभिन्नत्वं, व्यापकत्वं चाङ्गीकृत्याविभागलक्षणाभेदं चाङ्गीकृत्य, सजातीयत्वे सत्यविभागप्रतियोगित्वमंशत्वम्, तदनुयोगित्वं चांशित्वम्। येन च रूपेण यत्रांशता विवक्ष्यते, तेनैव रूपेण तत्र साजात्यं ग्राह्यम्। यथाऽऽत्मांशलक्षणे आत्मत्वेन, सदंशादिलक्षणे सत्त्वादिरूपेणेत्यतो नातिप्रसङ्गः। यद्वा द्रव्यत्वसाक्षाद्व्याप्यजात्या साजात्यं ग्राह्यम्। विभागश्च लक्षणान्यत्वम्। (अभिव्यक्त)अभिव्यक्तिधर्मभेद इति यावत्। अथवा संयोगविशेष एवाविभागः, स्वरूपसम्बन्धविशेषो वा। आधेयत्वादिवम्। जलस्य दुग्धे लवणस्य समुद्रे अविभागव्यवहारस्यापलपितुमशक्यत्वात्। 'न तु द्वितीयमस्ति ततोऽन्यद्विभक्त'मिति 'सति संपद्य न विदुः, सति संपद्यामह' इत्यादिश्रुत्या 'प्रकृतिः पुरुषश्चोभौ लीयेते परमात्मनी'त्यादिस्मृत्या च जीवस्यापि ब्रह्मण्यविभागकथनात्। लीङ् श्लेषणे, पदगताविल्याद्यनुशासनेभ्यश्च लयसम्पत्त्यप्ययादिशब्दानामविभागार्थकत्वात्। एवं सति यथा शरीरस्य केशादिरंशो, राशेश्चैकदेशः, पितुश्च पुत्र इति दृष्टान्तत्रयमुक्त्वा सर्वे च जीवाः पितरि पुत्रचेतना इव चिन्मात्रे ब्रह्मणि नित्यसर्वावभासके विषयभासनरूपं स्वरूपलक्षणं विहाय प्रलये लक्षणानन्यत्वं गच्छन्ति, सर्गकाले च तदिच्छया तत एव लब्धचैतन्यफलोपधाना आविर्भवन्ति, पितुरिव पुत्राः। अतो जीवा ब्रह्मांशा भवन्ति। 'आत्मा वै जायते पुत्र' इति श्रुत्या पुत्रे पितुरविभागलक्षणाभेदवज्जीवेऽपि ब्रह्मणोऽविभागलक्षणाभेदस्य 'बहु स्यां प्रजायेये'त्यादिश्रुत्या सिद्धेरिति। अतो जीवा ब्रह्मांशा मुख्या एव भवन्तीति समन्वयसूत्रे साधयित्वा वियदादिपादे व्युत्पादयामास ॥

(१९) तत्र वास्तवभेदवादिनः प्रत्यवतिष्ठन्ते—तर्हीत्यादिना। यदि सर्वज्ञेन ब्रह्मणा

हरितोषिणी।

(१९) भेदवादिनामाशङ्कामाहुः—तर्हीति। जीवोऽयं ब्रह्माभिन्नः स्यात्तर्हि सर्वज्ञः स्यात्तथा तु नास्तीत्यनुपपत्तिः। समाधानमाहुः—न हीति। भास्कराचार्यमते भेदाभेद-

गङ्गाधरभट्टी।

(१९) अत्र माध्वानां शङ्का—तर्ह्यसार्वज्ञेत्यादि ॥

१ क. दु. नास्ति।

भ्रमायनु-पपत्त्या जीव-ब्रह्माभेदख-ण्डनम्, श्रुति-सूत्रादिबलेन तन्मण्डनं च।

शक्तो वा । अल्पप्रकाशवदल्पज्ञत्वोपपत्तावपि भ्रमस्तु नोपपद्यते जातु। न च देहसम्बन्धकृतमनीशत्वादीति वाच्यम्। तस्यापि जीवभावोत्तरकालीनत्वात् । तस्मादीश्वराद्भिन्न एवानीशत्वादिधर्मविशिष्टो नित्यबद्ध एवेश्वरप्रसादजज्ञानतो मुक्तो भवतीति नांशो भवितुमर्हतीति। श्रुतिश्च प्रलयसमये भगवदुदरान्तःस्थानां जीवानां पुनः सर्गसमये ततो निर्गमनप्रकारमेवमाह विस्फुलिङ्गदृष्टान्तेन। 'नान्योऽतोऽस्ति द्रष्टे'त्यादिश्रुतिरपि जीवादिसर्वपदार्थविषयकदर्शनादिमत्त्वं सर्वदाऽन्यस्मिन्निषेधति, न तु परिच्छिन्नदर्शनादिकमपि। यथा, 'पार्थ एव धनुर्द्धर' इत्यत्र, न हि पार्थादन्यो न धनुर्द्धरः, किन्तु यथा स तथा नान्य इति, तथेहापीति चेद् ?।

सुवर्णसूत्रम्।

सह जीवस्याभेदः करादिवत्तदा असार्वज्ञ्यानुपपत्तिः । यदि भिन्नाभिन्नभास्करमतरीत्या तदा दूषणान्तरमाहुः—अल्पेत्यादि । श्रुतिश्चेति । मुण्डकबृहदारण्यकस्था प्रभवन्युच्चरणश्रुतिः । श्रुत्यन्तरविरोधं परिहरति—नान्योऽत इत्यादि। इति चेदिति। इति हेतोर्भिन्नांशत्वं वा अंशत्वोपचार एवेति चेदित्यर्थः ॥

हरितोषिणी।

तत्र जीवब्रह्मणोरभिन्नं स्वाभाविकं रूपं, भिन्नमौपाधिकमिति तत्र दूषणान्तरमाहुः—अल्पेत्यादि । जीवस्य विस्फुलिङ्गप्रकाशवदल्पज्ञत्वोपपत्तौ सत्यां जातु कदाचिदपि भ्रमात्मकोऽयं जीव इति नोपपद्यत इत्यर्थः । शङ्कते—न चेति । उत्तरमाहुः—तस्यापीति । शरीरस्यापीत्यर्थः । उपसंहरन्ति—तस्मादिति। मुक्तो भवतीति। इति अनन्तरं( मुक्त्यनन्तरं ) अंशो भवितुं नार्हतीत्यर्थः। 'न स पुनरावर्तते' इति श्रुतेरितिभावः। अत्रार्थे प्रमाणन्तरं माहुः—श्रुतिश्चेति । बृहदारण्यस्येति शेषः। जीवे परिच्छिन्नदर्शनसत्त्वेन 'नान्योऽस्ती'ति श्रुतिविरोधः । मन्मते भेदस्यौपचारिकत्वाद्दर्शनपदस्य ज्ञानमात्रवाचकत्वाज्जीवे यत्किञ्चिज्ज्ञानसत्त्वेऽपि न विरोध इत्यत आहुः—नान्योऽतोऽस्तीति । जीवादिसर्वविषयकदर्शनं दर्शनपदार्थः स च जीवे नास्तीति भावः । तथेति । यथा ईश्वरस्तथा जीवः सर्वज्ञो नास्तीति भावः । इति चेदिति । इति हेतोर्विभिन्नांशत्वमौपचारिकांशत्वं वेति चेदित्यर्थः ॥

१ मु. ख. ग. पुस्तकेषु॰ धर्मे, इति नास्ति । २ क. पु. एवाह, इति पाठः ।

बाढमेवमङ्गीकुर्मो यदि वेदार्थतामरसतरणेर्भगवतो बादरायणस्य सूत्रैः सप्रमाणनिदर्शनैः 'अंशो नानाव्यपदेशाद्' इत्यादिभिस्त्वदुक्तं न विरुध्येत । न चैवम् । किञ्च, विस्फुलिङ्गदृष्टान्तेन यद्यात्मनामेवोत्पत्तिं वदेत् तदा त्वदुक्तप्रकार उपपद्येतापि । न चैवम्; किन्तु सर्वेषां प्राणानां, लोकानां, देवानां, भूतानामपि तथैव सृष्टिमुक्त्वा 'सर्व एवात्मानो व्युच्चरन्ती'त्यवदत् । न च त्वं प्राणादीनां नित्यत्वं तथा सृष्टिं वा मनुषे, येन तत्प्रक्रमपठितानामात्मनां तथात्वमवादीः । न चात्मनां निर्गमनप्रकारमेवाह, प्राणादीनामेवोत्पत्तिमाहेत्यपि वक्तुं शक्यम् । वाक्यभेदप्रसङ्गाद्, विनिगमकाभावाच्च । यद्यपि 'यथाग्ने'रिति श्रुत्यैव जीवस्यांशत्वं तदभावो वा न निश्चेतुं शक्यः । चिन्तामणिकल्पतरुकामधेन्वादिभ्य इवापि ब्रह्मणः सकाशात् प्राणाद्युत्पत्तेः सम्भवात् । तथापि स्-

सुवर्णसूत्रम् ।

तत्रोत्तरं वदन्तस्तेषामपि व्यासाभिमतविरुद्धार्थवादित्वं बोधयन्ति—बाढमित्यादि । न चैवमित्यादि । तथा च यद्येवमभिप्रेयात् तदांऽशपदं भिन्नपदेन विशिष्यादन्यथेत्यादि च न वदेत्, तत्सदृशत्वादिति वा वदेत् । सूत्रोपदर्शितायां श्रुतौ चावयवत्वबोधकः पादशब्दो न स्यात् । स्मृतौ च ममेति पदं राश्यभिमानबोधकतामानं भगवति जीवतुल्यतामापादयेत्, एवं नेत्यर्थः । उक्तश्रुतिविरोधं दर्शयन्ति—किञ्चेत्यादि । विनिगमकाभावादिति । त्वक्ते प्रायपाठे तथात्वाद्वैपरीत्यमपि सुवचमिति तथेत्यर्थः । पूर्वोक्तं दृढीकर्तुं श्रुतेः साधारणत्वमाशङ्क्य पूर्वोक्तोपगमे बीजमाहुः—यद्यपीत्यादि । आदिभ्य

हरितोषिणी ।

उत्तरमाहुः—बाढमित्यादि । 'अंशो नाना व्यपदेशा'दित्यादिसूत्रविरोधो न स्याचेद्बाढमङ्गीकुर्म इत्यर्थः । समाधानान्तरमाहुः—किञ्चेति । वदेदिति । श्रुतिरिति शेषः । न चेति । न हीत्यर्थः । तथा सृष्टिमिति । निर्गमनरूपमित्यर्थः । तथात्वमिति । नित्यत्वमित्यर्थः । तथा च प्राणादीनां नोच्यते चेत्, केवलमात्मन एव कथं वक्तव्यमिति भावः । न चेति । वक्तुं शक्यमित्यनेनान्वयः । वाक्येऽपि निर्गमननित्यत्वरूपविधेयभेदाद्वाक्यभेद इत्यर्थः । विनिगमकेति । क्रमेणैकविधेयाभावे प्राणानां नित्यत्वमात्मनामुत्पत्तिमिति विपरीतमपि स्यादित्यर्थः । श्रुत्यांशत्वनिश्चयो न जायत इत्याशङ्कते—यद्यपीति । कामधेन्वादिभ्य इति । आदिपदाद् योगिनां संग्रहः । संभवादिति । तथा

गङ्गाधरभट्टी ।

कामधेन्वादिभ्य इति । अत्रादिना योगिनः ॥

---

१ अ. प. 'त्र' नास्ति ।

श्रेस्तदुपदर्शितश्रुतिस्मृतिभ्यश्चांशत्वमेवावगम्यते । न चैवं सार्वज्ञ्यानुपपत्त्यादिदूषणग्रासः, सर्वज्ञत्वादिधर्माणां भगवदिच्छयैव तिरोभूतत्वात् । यतः सूत्रकारोऽपीमामेवाशङ्कामपाकर्तुमेवमेव जगाद—'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति । अस्य जीवस्यैश्वर्यादि तिरोहितम्, तत्र हेतुः—पराभिध्यानात्, परस्य भगवतोऽभिनो ध्यानं स्वस्य जीवस्य (च) सर्वतो भोगेच्छा तस्माद्धेतोः । ऐश्वर्यादिसद्भावे वैचित्र्याभावाद् भोगो न भविष्यतीति जीवे तिरोभावं कृतवान् स्वधर्माणाम् । तत एव तिरोभावाद् बन्धो भगवद्धर्मविपरीतधर्मवत्त्वं चेत्यर्थः । ऐश्वर्यतिरोभावाद्दीनत्वं पराधीनत्वं च । वीर्यतिरोभावात् सर्वदुःखसहनम् । यशस्तिरोभावात् सर्वहीनत्वम् । श्रीतिरोभावाज्जन्मादिसर्वापद्विषयत्वम् । ज्ञानतिरोभावाद्देहाद्यहम्बुद्धिः, सर्वविपरीतज्ञानमपस्मारसहितस्येव । वैराग्यतिरोभावाद् विषयासक्तिः । आनन्दांशस्तु पूर्वमेव तिरोहितो येन जीवभावः । अत एव 'नेतरोऽनुपपत्तेः' 'भेदव्यपदेशाच्च' इत्यादिना जीवस्यानन्दमयत्वं न्यषेधत् सूत्रकारः ॥

सुवर्णसूत्रम् ।

इत्यादिपदेन योगिनः संगृह्यन्ते । कथं तर्हि पूर्वोक्तदूषणोद्धार इत्यत आहुः—न चेत्यादि । एवमेव जगादेति । भगवदिच्छामेव हेतुत्वेन जगादेत्यर्थः । जीवस्य सर्वतो भोगेच्छेति । जीवं सर्वप्रकारेण भोक्तुमिच्छा । दीनत्वमिति । अनौजस्त्वम् । एवमत्राज्ञत्वादीनामागन्तुकत्वप्रतिपादनेन परस्परविरुद्धधर्मत्वस्याभेदबाधकत्वं परिहृतम् । जीवभावस्यागन्तुकत्वकथनेन तात्त्विको भेदो वारितः ॥

हरितोषिणी ।

चिन्तामण्यादेः सकाशादुत्पन्नानां तदंशत्वं नास्ति यथा, तथा ब्रह्मणः प्रादुर्भूतानां ब्रह्मांशत्वं नास्तीति भावः । समाधानमाहुः—तथापीति । शङ्कते—न चेति । उत्तरमाहुः—सर्वज्ञत्वेति । एवं जगादेति[1] । भगवदिच्छयैव धर्माणां तिरोभावं जगादेत्यर्थः । सूत्रमाहुः—परेति । सूत्रार्थमाहुः—अस्येति । अग्रे स्पष्टम् । जीवस्य सर्वतो भोगेच्छेति । जीवं सर्वप्रकारेण भोक्तुमिच्छेत्यर्थः ॥

---

१ एवं जगादेति अपुस्तकम् ।

(२०) ननु कारणसाम्ये कथमेकेषां जडत्वमेकेषां चेतनत्वं, जीवे ज्ञानस्यापि तिरोहितत्वेन अल्पज्ञत्वमपि कथमिति चेद्, अत्राहुराचार्याः—सच्चिदानन्दरूपे ब्रह्मण्यस्त्यंशत्रयं स्वरूपभूतम्। 'सत्यं विज्ञानमानन्दं ब्रह्म' इतिश्रुतेः। 'यः सर्वज्ञ' इति श्रुतेर्धर्मरूपमपि ज्ञानमस्तीति मन्तव्यम्। भगवानिति नामव्युत्पत्त्या च। तत्र स्वरूपात्मकेन सदंशेन जडोद्गमः पूर्वमुक्तः। पश्चाच्चिदंशात्तादृशादेव जीवानां तद्रूपाणामेवोद्गम उक्तः। अतो जडेषु सन्मात्रकार्यत्वाच्चित्तिरोभावः। जीवे च चित्कार्यत्वेन चिद्रूपत्वात्सत्त्वेन चोपलभ्यमानत्वादानन्दांशतिरोभाव एव। एतयोः सच्चितोरपि तिरोभावे स्वरूपहानिरेव स्यात्। तिरोहितं तु धर्मरूपं भगशब्दवाच्यं ज्ञानम्। अतः सर्वमनवद्यम्। अत्र नियामिका भगवदिच्छैवेति ज्ञेयम्। एतयोर्भेदाभेदविचारमग्रे वक्ष्यामः॥

कारणैक्येन कार्यवैचित्र्यानुपपत्तिमाशङ्क्य भगवदिच्छयेतितत्समाधानम्।

सुवर्णसूत्रम्।

(२०) जीवभावादेरागन्तुकत्वं व्युत्पादयितुं चोदयति—नन्वित्यादि। अत्र प्राचां मतं प्रदर्श्य समादधते—अत्राहुरित्यादि। आचार्या इति। प्राञ्च आचार्याः। पूर्वमुक्त इति। 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा' इत्यत्र प्राणादिव्युच्चरणकथनेनोक्त इत्यर्थः। इदं यथा तथा द्वितीयस्कन्धसुबोधिन्यां सृष्टिप्रक्रियाकथने व्युत्पादितम्। इदं च 'अवस्थितेरिति काशकृत्स्न' इति सूत्रात्सिद्ध्यति। एतयोरित्यादि। एतयोर्जीवजडयोर्भेदाभेदविचारं वौ ब्रह्मणो भिन्नाभिन्नाविति विचारमग्रे वक्ष्यामः लीलानित्यतावादं समाप्तौ वक्ष्यामः॥

हरितोषिणी।

(२०) शङ्कते—नन्विति। समाधानमाहुः—अत्राहुरिति। आचार्याः। प्राञ्च इति शेषः। सर्वज्ञ इति। सर्वविषयकज्ञानवानित्यर्थः। व्युत्पत्त्या भगं ज्ञानं यस्मिन्निति व्युत्पत्त्या। पूर्वमुक्त इति। यथाऽग्नेरित्यादिना प्राणादीनामुद्गमोक्त्या। इदं च द्वितीयस्कन्धसुबोधिन्यां सृष्टिनिरूपणे उक्तम्। वेदान्तसूत्रे 'अवस्थितेरिति काशकृत्स्नः' इत्यत्र स्पष्टमुक्तम्। एतयोः स्वरूपात्मकधर्मात्मकज्ञानयोः। अग्रे लीलानित्यताविचारे समाप्तौ॥

गङ्गाधरभट्टी।

(२०) आचार्या इति। प्राञ्च आचार्याः। पूर्वमुक्त इति। 'यथाऽग्नेः क्षुद्रा' इत्यनेन। एतयोरिति। जडजीवयोर्ब्रह्मणः सकाशाद्भेदाभेदविचारम्॥

परमात्मविषये उपस्थितहान्यकृताभ्यागमप्रसुक्तदूषणविचारः।

(२१) ननु ब्रह्मस्वरूपाणामेव[1] जीवानां सहजगुणाँस्तिरोहितान् विधाय मिथ्याज्ञानादिदोषयुक्तत्वकरणे तूपस्थितहानिरकृताभ्यागमश्च प्रसज्येतेति चेत्; न। एतयोर्जीवकृतावेव, जीव[2] एव[3] च दूषणत्वात्। तत्रापि लोकेऽप्यस्वतन्त्रजीवकृतावेव। दृश्यते हि लोकेऽपि राज्ञां स्वतन्त्राणां स्वविहारार्थं प्राचीनविचित्रभवनप्राकारगोपुरादिभङ्गकरणेन तत्रैवाजिरोद्यानादिकरणम्। निजसेवकेष्वपि कदाचित् स्थितस्याप्यैश्वर्यादेर्हरणम्, पुनर्दानं च सेवया संतोषे। किं पुनः सकललोकनियामकस्य सकलजगत्कारणकारणस्य भगवतः स्वदासजीवस्यान्यथाकरणे शङ्का नाम॥

सुवर्णसूत्रम्।

(२१) एवमंशत्वेन तादात्म्यमङ्गीकृत्यैव पराभिध्यानसूत्रव्याख्याने सैव एव प्रत्यवतिष्ठन्ते—नन्वित्यादि। उपस्थितहानिरत्र नित्यसिद्धस्य धर्मस्य निवृत्तिर्न तु कृतनाशः, अकृताभ्यागमोऽकृतकर्मसम्बन्धिफलावाप्तिः, एतदुभयं भगवदिच्छया जीवे आपाद्यमानं तत्प्रयोजके ब्रह्मणि दूषणत्वेन प्रसज्येतेत्यर्थः। एवमाशङ्किते दूषणविषयं निर्धारयन्तः समादधते—नेत्यादि। अयमर्थः—किमेतयोः कृतिविषयदूषकत्वेन दूषणत्वम्, उत कृतिदूषकत्वेन, अथवा कर्तृदूषकत्वेनेति। तत्र नाद्यः, चौरादिलुण्ठितसज्जनादावपि दुष्टत्वापत्तेः। द्वितीयतृतीयौ चेत्, तदापि न तयोर्ब्रह्मणि दूषणत्वमित्याहुः—एतयोरित्यादि। तत्रापीति। जीवदूषकत्वेऽपि। लोकेऽपीति। अपिशब्दाद्वेदे। किमत्र मानमित्याकाङ्क्षायां पूर्वं लोकप्रसिद्धेस्तथात्वमाहुः—दृश्यत इत्यादि। हिर्हेतौ। एतयोर्भङ्गकरणयोर्जडविषयत्वेन दृष्टान्तवैषम्याद्यत्राकृताभ्यागमाभावाच्च द्वितीयमाहुः—निजेत्यादि। सेवयेति। कृतप्रार्थनपेक्षसेवया। दार्ष्टान्तिके योजयितुं कैमुतिकेनाहुः—किमित्यादि। सकलजगत्कारणकारणस्येति। सकलजगत्कारणं प्रकृतिपुरुषौ, ब्रह्मविष्णुमहेश्वरा वा, अव्याकृतं वा, तयोस्तेषां तस्य च कारणस्य॥

हरितोषिणी।

(२१) शङ्कते—नन्विति। उपस्थितहानिरिति। सिद्धधर्मस्य निवृत्तिर्न तु कृतनाश इत्यर्थः। अकृतेति। अकृतस्य कर्मणः फलावाप्तिः। प्रसज्येतेति। तत्प्रयोजकत्वेन ब्रह्मणि दूषणं प्रसज्येतेत्यर्थः। समाधानमाहुः—एतयोरिति। दूषणयोरित्यर्थः। जीवकृतौ जीवसम्बन्धकृतौ। तत्रापीति। जीवे दूषकत्वेऽपीत्यर्थः। लोकेऽपीति। अपिना वेदस्यापि परिग्रहः। पूर्वं लोकप्रसिद्धिं प्रमाणयन्ति—दृश्यते हीति। जडे उक्ता चेतनेष्वाहुः—निजेति। सेवयेति। निरपेक्षसेवयेत्यर्थः। कैमुतिकन्यायेनाहुः—किंपुनरिति। सकलेति। सकलजगत्कारणं पितामहस्तस्यापि कारणमित्यर्थः॥

---

१ ग. मु. 'ब्रह्मरूपाणा'मिति। २ क. पु.: 'जीव' इति नास्ति। ३ मु. पु. 'स एव' इति पाठः।
४ मु. पु. ते. पाठः।

किञ्चैवं सर्गस्थितिसंहारेष्वपि भगवत एव कर्तृत्वात् स्थितं संहृत्य पुनस्तथाकरणेऽपीमौ दोषौ प्रसज्येताम् । तथा सति जगतो नित्यत्वप्रसङ्गः, असम्भव एव वा स्यात् । यतो भगवान् स्वयमेव 'ये चैव सात्त्विका भावा राजसास्तामसाश्च ये । मत्त एवेति तान् विद्धि, न त्वहं तेषु ते मयि । त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्यय'मिति मायामोहेन स्वाज्ञानमुक्त्वा *स्वेच्छयैव च माया मोहयतीति निरूपणार्थं स्वाधीनत्वं मायायाः 'दैवी ह्येषा गुणमयी मम माये'ति निरूपितवान् । अतोऽपि भगवदिच्छाधीनतैव बन्धस्यापि । एवं सति यस्मिञ्जीवे यादृशीच्छा तदनुरूपा एवाविद्यादिशक्तयः सत्वादिभेदेन तं व्याप्नुवन्तीति महदैश्वर्यं भगवतः । अत एव 'महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्यय'मिति भगवतोक्तम् । 'भवन्ति भावा भूतानां

सुवर्णसूत्रम् ।

वेदे तथात्वमाहुः—किञ्चेत्यादि । तथा सतीति । तद्द्वया कर्तृत्वेऽनादृते सति । तथा चाद्ये मीमांसकमतापत्तिर्द्वितीये प्रत्यक्षविरोध इति तथा । वक्तुमशक्यत्वात्तयोर्न भगवत्कृतौ भगवति च दूषणत्वमित्यर्थः । एवं विपर्ययस्य भगवदिच्छाऽधीनत्वं व्युत्पाद्य बन्धस्याप्याहुः—यत इत्यादि । अतोऽपीति । अपिना 'श्रिया पुष्टे' त्यादिनोक्तं समाधानं स्मारितम् । सिद्धमाहुः—एवं सतीत्यादि । भगवत इति । भगवत्सम्बन्धस्यैव, न त्वविद्यासंसर्गकृतमित्यर्थः । उक्तार्थोपष्टम्भाय भगवद्वाक्यसम्मतिमाहुः—अत एवेत्यादि । अविद्यायास्तदधीनत्वादुपस्थितहान्यादेरत्रादूषणत्वाच्च यथायथं भगवता वाक्यान्युक्तानी-

हरितोषिणी ।

कृतहानिरकृताभ्यागमश्चेत्यनयोर्दोषत्वमेव नास्तीत्याहुः—किञ्चेति । तथा सतीति । दोषभीत्या जगतः सर्गस्थितिसंहाराकर्तृत्वे सति । एवं च संहाराभावे नित्यत्वे मीमांसकमतप्रवेशः, सर्गाभावेऽसंभव एव स्यात् । जन्यभावस्यैव प्रत्यक्षत्वनियमात् । अनेन मोक्षस्य भगवदिच्छाधीनत्वमुक्तं, बन्धस्यापि भगवदिच्छाधीनत्वमाहुः—यत इति । स्वयमेवेति । निरूपितवानित्यनेनान्वयः । भगवदिति । तथा चाविद्याकृतं किमपि नास्तीति

टिप्पणी ।

* स्वेच्छयैव चेति । स्वशब्दार्थो यतो भगवानिति पूर्वमुक्तो भगवान्न माया । चैत्रावलोकितं स्वपुत्रं मैत्रः पश्यतीत्यत्र मैत्रस्य तात्पर्यस्य तत्रैव सत्त्वात् ॥

१ शु॰ पु॰ भगवतो वाक्यान्युक्तानीति पाठः ।

मत्त एव पृथग्विधाः' 'मत्तः स्मृतिर्ज्ञानमपोहनं चे'त्यपि । अपरं च, स्वयौक्तिकेऽर्थे त्विदं दूषणमुद्भाव्यं स्याद्, येन तथैव कल्प्येत, न तु श्रुतिसिद्धे । राजाऽऽज्ञायाः पर्यनुयोगानर्हत्वात् । 'एष ह्येव साधु कर्म कारयति तं, यमेभ्यो लोकेभ्य उन्निनीषति । एष उ एवासाधु कर्म कारयति तं, यमधो निनीषती'ति श्रुतिरपीममेवार्थमाह यमवोचाम । 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयती'ति च । अत एव 'नान्योऽतोऽस्ति द्रष्टे'-त्यादिरपि संगच्छते । अन्यस्य स्वतन्त्रकर्तृत्वाभावात् । अत एव, सूत्रकारोऽपि जीवस्य कर्तृत्वं निरूप्य, तत्स्वत एवेश्वराद्वेत्याशङ्क्य 'परात्तु तच्छ्रुते'रिति सिद्धान्तमुक्तवान् । अतोऽकृताभ्यागमो जीवे न दोषाय, सर्वथा परतन्त्रत्वात् ॥

सुवर्णसूत्रम् ।

त्यर्थः । नन्वभेदपक्षे दूषणस्यादूषणत्वं कल्पनीयम्, भेदपक्षे तु जीवकर्माधीनं तदिति तत्संसर्ग इति स एव युक्त इत्यतः कल्पनाभावमाहुः—अपरं चेत्यादि । पर्यनुयोगानर्हत्वादिति । परिवर्जने । अनुयोगः प्रश्नः । वर्जनार्थकः प्रश्नः पर्यनुयोगः । आक्षेप इति यावत् । तदयोग्यत्वादित्यर्थः । श्रुतिसिद्धत्वं दर्शयन्ति—एष हीत्यादि । यमिति । सर्वस्य भगवदिच्छाधीनतया तयोरदूषणत्वरूपम् । इति चेति । इयमपि श्रुतिर्नियमनेन भगवत एव जीवप्रेरकत्वं बोधयन्ती मदुक्तमुपोद्बलयतीत्यर्थः । अत एव । जीवस्यानीशत्वासर्वज्ञत्वादीनामीश्वराधीनत्वादेव । उक्तदार्ढ्यायात्र सूत्रकारसम्मतिमाहुः—अत एव सूत्रेत्यादि । निरूप्येति । 'कर्ता शास्त्रार्थवत्त्वा'दित्यधिकरणे निरूप्य । न दोषायेति । सन्नपि श्रुतिसिद्धत्वान् सिद्धान्तिनो दोषाय नेत्यर्थः । तथा चैवमुपपत्तौ मतान्तरीयरीत्याऽन्यकल्पनं श्रुतिसूत्रादिपूपचारकल्पनमद्वैतश्रुतीनामभेदभावनापरत्वकल्पनं च न युक्तमित्यर्थः ॥

हरितोषिणी ।

भावः । अत्रार्थे सम्मतिमाहुः—अत एवेति । भगवता उक्तमित्यनेनान्वयः । इत्यपीति । भगवतोक्तमिति पूर्वेणान्वयः । अत्र काचित्कल्पनापि न कर्तव्येत्याहुः—अपरञ्चेति । पर्यनुयोग इति । आक्षेपायोग्यत्वादित्यर्थः । ननु श्रुतिसिद्धत्वं कथमित्यत आहुः—एष हीति । यमवोचामेति । यमर्थमहमुक्तवान् तमेवार्थमाहेत्यर्थः । एवं च सर्वकर्मकारयितृत्वं सर्वजीवसंयमनकर्तृत्वं च भगवत एवेति भावः । अत्र व्याससूत्रसम्मतिमाहुः—अत एवेति । जीवे स्वातन्त्र्याभावादेवेत्यर्थः । निरूप्येति । 'कर्ता शास्त्रार्थवत्त्वा'-दित्यधिकरण इति शेषः । अत इति । अतः कारणात् । अकृताभ्यागमदोषः जीवे सत्त्वेऽपि सिद्धान्ते न दोषाय, श्रुतिसिद्धत्वादित्यर्थः ॥

(२२) ये त्विमां शङ्कां परिहर्तुं पूर्वं जीवकृतधर्माधर्मसापेक्ष एवेश्वरः कारयति । अन्यथा 'स्वर्गकामो यजेत' 'ब्राह्मणो न हन्तव्य' इत्यादिविधिप्रतिषेधानर्थक्यं स्यात् । ईश्वरस्यैव प्रवर्तकस्य निवर्तकस्य च सत्त्वात् । अतो विधिनिषेधाभ्यामेव प्रवर्तमानं निवर्तमानं चेश्वरः प्रवर्तयति निवर्तयति च । कस्य चिद्विहिते प्रवृत्तिः, कस्य चिन्न, कस्य चिन्निषिद्धान्निवृत्तिः, कस्य चिन्नेत्यत्रापि पूर्वपूर्वताद्दक्कर्मैव निमित्तम् । प्रवाहस्यानादित्वात् । अतो नाकृताभ्यागमो जीव इति वदन्ति । तेषामनीश्वरवाद-

प्रवृत्तिनिवृत्त्योर्जीवादृष्टासापेक्षतां निराकृत्य भगवच्चिकीर्षितपानिबन्धनत्वमाधनम् ।

सुवर्णसूत्रम् ।

(२२) अत्र *पूर्वमीमांसकमतं दूषणायोपक्षिपन्ति—ये त्वित्यादि । प्रवर्तयतीत्यादि । विध्यादिसहकारी भवतीत्यर्थः । ताद्दक्कर्मेति । स्वदृष्टदुरदृष्टजनकं कर्म । अतो नेति । तादृशप्रवृत्त्यप्रवृत्त्यादीनां कृतफलरूपत्वात् । तथा च दोषः स्वरूपत एव नास्तीत्यर्थः । तद्दूषयन्ति—तेषामित्यादि । विध्यादिसापेक्षमीश्वरमङ्गीकृत्याऽकृताभ्यागममनुपगच्छतां

हरितोषिणी ।

(२२) अत्र पूर्वमीमांसकाः प्रत्यवतिष्ठन्ते—ये त्विति । प्रवर्तयतीति । विधिनिषेधयोः सहकारीत्यर्थः । न तु मुख्यं कारणत्वमीश्वरस्येति भावः । ननु सर्वेषामेव विहिते निषिद्धे वा प्रवृत्तिः स्यादत आहुः—कस्य चिदिति । ताद्दगिति । स्वदृष्टदुरदृष्टजनकीभूतं कर्मेत्यर्थः । अत इति । एवं चोपस्थिततद्धान्यादितः प्रवृत्तिः कर्मफलमेवेति न दोष इति भावः । तथा च स्वरूपत एवायं दोषो नास्तीति भावः । खण्डयन्ति—तेषामिति । अनीश्वरेति । तेषां मते केवलं कर्मण एव सुखदुःखादिजनकत्वं स्वीकर्तव्यम्, अतिरि-

गङ्गाधरभट्टी ।

(२२) अत्र पूर्वमीमांसकास्तदनुयायिनो वेदान्तिनश्चोपन्यस्यन्ते—ये त्वित्यादिना ।

---

टिप्पणी ।

* पूर्वमीमांसकमतमिति । पूर्वमीमांसकानां पार्थसारथिमिश्रप्रभृतीनां मतमित्यर्थः । तदन्यैरीश्वरानङ्गीकारात्तेषां मतेन 'धर्माधर्मसापेक्ष ईश्वरः कारयती'ति वक्तुमशक्यत्वात् ॥

किंच जैमिनेरपि नेश्वरोऽनभिमत इति वक्तुं शक्यम् । 'अन्यार्थं तु जैमिनिः' 'संपत्तेरिति जैमिनिः' 'परं जैमिनिर्मुख्यत्वा'दित्यादिब्रह्मसूत्रैः परमास्तिकत्वावगमात् । भारते हयशिर—उपाख्यानादिषु जैमिनये व्यासेन परमात्मतत्त्वोपदेशाच्च । तदानींतनजनाधिकारमनुसृत्य कर्मप्राधान्यबोधनायेश्वरस्य व्यक्तमनुक्तेः । केवलमपूर्वशब्देनैव तद्बोधनात् । अतो ये सूत्रविवरीतार ईश्वरं नाभ्युपायंस्त इदमाशयापरिज्ञानादेव । अत्र विस्तरः सेश्वरमीमांसाश्रुतप्रकाशिकादितो वेद्यः ॥

एवापद्यते । न च कर्मणो जडत्वेन फलसमर्पकत्वासम्भवात् तत्समर्पकत्वेनेश्वरसिद्धिः । अन्यथाऽनुपपत्त्या कल्प्यमानस्य तादृशस्यैव कर्मणः कल्पयितुं शक्यत्वात् ॥

ननु 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य' इति तत्त्वसूत्रात् तथोच्यते इति चेद्, न । तदर्थानवबोधात् । तथा हि—पूर्वोक्तन्यायेन 'परात्तु तच्छ्रुते'रिति पूर्वसूत्रेणेश्वरादेव कर्तृत्वे निरूपिते प्रवर्तकत्वेन निवर्तकत्वेन चाभिमतविधिनिषेधे वैयर्थ्यमापतितम् । तत्र न हीश्वरः साक्षात् कञ्चन प्रवर्तयति निवर्तयति वा, अतस्तद्द्वारैव तथा करोतीति तु समाधानं न संगच्छते । सर्वस्यैव सन्मार्गवर्तित्वापातात् ।

सुवर्णसूत्रम् ।

कर्मसापेक्षेश्वरकल्पनापेक्षया ईश्वरानपेक्षकर्मकल्पनस्य लघुत्वात्तथेत्यर्थः । नन्वजागलस्तनवदीश्वरो नास्माभिरिष्यते, किन्तु कर्मोपजीव्योऽङ्गीक्रियत इत्यदोष इत्यत आहुः—न चेत्यादि । तथा चैवमपि गौरवतादवस्थ्यात्कल्पनाऽप्रयोजिकेत्यर्थः ॥

अत्रैकदेशिन ईश्वरे जीवकृतिसापेक्षतामनुमन्यमानाः पूर्वोक्तस्य काल्पनिकत्वं निरस्यन्ति—नन्वित्यादि । तथा च मीमांसकोक्तः परिहारो नाप्रामाणिक इति न तत्र दोष इत्यर्थः । तन्निरसितुं प्रमाणस्य तं प्रत्याभासत्वबोधनाय तदर्थं वदिष्यन्तस्तदुक्तं निषेधन्ति—नेत्यादि । पूर्वोक्तन्यायेनेति । दृश्यते हीत्यादिना श्रुत्यादिप्रमाणोपन्यासपूर्वकमुपपादितेन भगवतः स्वतन्त्रकर्तृत्वरूपेण । एतस्य निरूपित इत्यनेन सम्बन्धः । कल्पनं

हरितोषिणी ।

क्वेश्वरकल्पनायां गौरवादनीश्वरवाद इत्यर्थः । नन्वजागलस्तनायमाने ईश्वरस्वीकारे प्रयोजनाभावेऽपि किञ्चित्कार्यार्थं स्वीक्रियत इति शङ्कते—न चेति । उत्तरमाहुः—अन्यथेति । पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र रात्रिभोजनवदीश्वरस्तु सुखदुःखादि न ददाति, जीवैस्त्वनुभूयत इति तादृशकर्मण एव कल्पनमित्यर्थः ॥

व्याससूत्रार्थमन्यथामन्यमानो मीमांसकैकदेशी शङ्कते—नन्विति । तथोच्यत इति । स्वस्वकर्मफलसमर्पक ईश्वर उच्यत इत्यर्थः । उत्तरमाहुः—नेति । तदर्थेति । कृतप्रयत्नेतिव्याससूत्रार्थाज्ञानादित्यर्थः । स्वयं सूत्रार्थं वक्तुं प्रथमं सूत्रावतरणिकामाहुः—तथा हीत्यादिना इति चेत्तत्राहेत्यन्तेन । पूर्वोक्तन्यायेनेति । दृश्यते हीत्यादिना उपपादितेन भगवतः स्वतन्त्रकर्तृत्वरूपेण न्यायेनेत्यर्थः । एतस्य निरूपिते इत्यनेनान्वयः । तेन किं जातमित्यत आहुः—प्रवर्तकत्वेनेति । विधिनिषेधवैयर्थ्यरूपपूर्वपक्षे इदं समाधानं न भवतीत्याहुः—तत्रेति । न संगच्छत इत्यनेनान्वयः । तद्द्वारैवेति । विधिनिषेध-

गङ्गाधरभट्टी ।

तद्द्वारैव तथेति । श्रुतिद्वारैव प्रवर्तयति ॥

तथा च विधिनिषेधसत्त्वेऽप्यप्रवृत्त्यनिवृत्त्योः सत्त्वेन तदुपपत्त्यर्थं पूर्वकर्मकल्पनं त्वनुपपन्नम् । प्रवाहस्यानादित्वेन पूर्वपूर्वकर्मणैव प्रवृत्तिनिवृत्त्युपपत्तौ विधिनिषेधवैयर्थ्यापातात् । एवं च सति प्रामाणिकत्वाभावेनान्धपरम्परापत्तिर्यागादिकरणस्य धर्मत्वहानिश्च । फलोद्देशाभावेन च तज्जनकत्वनिर्वाहकापूर्वकल्पने प्रयोजनाभावेनैतस्य च कर्मणो नष्टत्वेनाग्रिमकर्मप्रवृत्तिनिमित्तमपि[1] निरूपयितुमशक्यम् । एतत्समाधानाय प्रवर्तकत्वं विध्यादेरेव, ततो जानतामप्यप्रवृत्तिनिवृत्ती तु विचित्रेश्वरे-

सुवर्णसूत्रम् ।

त्वित्यत्र तुः अप्यर्थः । कल्पनस्यानुपपन्नत्वे हेतुचतुष्टयमाहुः—प्रवाहस्येत्यादि, अशक्यमित्यन्तम् । वैयर्थ्यापातः फलानुपहितत्वाज्ज्ञेयः । एवं च सतीति । अनादित्वेन कर्मण एव तदुपपादकत्वे सति । हानिश्चेति चकारेणाधर्मस्याधर्मत्वहानिः समुच्चीयते । फलोद्देशाभावेनेति । कालान्तरे फलजननाय कर्मव्यापारत्वेनापूर्वकल्पने प्रयोजिका हि तृतीया श्रुतिः, सा च तदा प्रयोजयेद्यदा विध्यादेः सर्वथा प्रवृत्तिजनकत्वेन सार्थकत्वं स्यात्, तदभावात्साप्यप्रयोजिकेति तथेत्यर्थः । तथा यागादेः पिशाचभिक्षाकल्पत्वापत्तिरिति । एवं कर्मणोऽप्रवृत्त्यनिवृत्त्युपपादकत्वं दूषयित्वा विध्यादिसहकारित्वमीश्वरस्य दूषयन्ति—

हरितोषिणी ।

च्छारैवेत्यर्थः । कुतो न संगच्छत इत्यत आहुः—सर्वस्यैवेति । ईश्वरस्तु पापिनं दण्डयतीति तस्य सत्कर्मणि प्रवर्तकत्वेन सर्वेषां सन्मार्गवर्तित्वं स्यात्, तथा तु नास्तीति भावः । तदुपपत्त्यर्थं किञ्चित्कल्पनीयं, तदपि न सं भवतीत्याहुः—तथा चेति । अप्रवृत्त्यनिवृत्त्योरिति । सत्कर्मणि अप्रवृत्तेः, असत्कर्मणि चानिवृत्तेः सत्त्वेनेत्यर्थः । कल्पनं त्विति । कल्पनमपीत्यर्थः । कुतोऽनुपपन्नमित्यत आहुः—प्रवाहस्येति । अत्र पूर्वकर्मकल्पनस्यानुपपन्नत्वे हेतुचतुष्टयम् । तत्र वैयर्थ्यापातादित्यन्त एकः । नन्वस्तु विधिनिषेधवैयर्थ्यमित्यत आहुः—एवं च सतीति । अनादिकर्मण एव तदुपपादकत्वे सति । यागादिकरणस्येति । द्वितीयो हेतुः । तृतीयमाहुः—धर्मत्वहानिश्चेति । विधिहीनत्वादिति भावः । अन्यदपि दूषणं चतुर्थहेतुभूतमाहुः—फलोद्देशेति । फलमुद्दिश्य यत्र कर्मकरणं, तत्रापूर्वकल्पनमत्र तु तथा नास्तीत्यर्थः । तथा च किं जातमत आहुः—एतस्येति । एतावता कर्मणोऽप्रवृत्त्यनिवृत्त्युपपादकत्वं नास्तीति निरूपितम् । इदानीं विधिनिषेधसहकारित्वमपीश्वरस्य नास्तीत्याहुः—एतदित्यादिना, प्रवृत्तिरित्यन्तेन । विध्यादेरेवेति ।

१ ख. ग. पु. पाठः । २ मु. पु. 'कल्पकत्वा' इति पाठः ।

च्छयेति वाच्यम् । एवमपि सत्यावश्यकत्वाल्लाघवाचेश्वरेच्छैव तथास्तु, कृतं ताभ्याम् । एवं चान्धपरम्परापि न सम्भवति । ईश्वरेच्छाजन्यत्वात् । दृश्यतेऽपि हि विधिमजानतोऽपि बालस्य नैसर्गिकी धर्मप्रवृत्तिः ॥

एवमपि सति न निस्तारः । तथा हि—न हीश्वरः स्वतन्त्रपुरुषार्थत्वेन कर्म कारयिष्यति, किन्तु स्वर्गादि साधयितुम् । तथा सति स्वस्यैव तद्दाने समर्थत्वाद् विहितनिषिद्धफलोपपत्तौ विहितनिषिद्धयोर्यागब्राह्मणहननयोर्वैयर्थ्यापत्तिः । न चाकृताभ्यागमदोषपरिहाराय तथा करोतीति वाच्यम् । स्वतो जीवस्य कर्तृत्वे हि तत्फलनिरूपणे स दोषो न स्यात् । न तु तादृशं फलं दातुं तादृक्कर्मकारणे । स्वतः सर्वथैवासमर्थत्वाज्जीवस्य कृतमप्यकृतप्रायमिति न तत्परिहार इतीश्वराधीनं जीवकर्तृत्वम् ।

सुवर्णसूत्रम् ।

एतदित्यादि, प्रवृत्तिरित्यन्तम् । एवमपि सतीति । वैयर्थ्यपरिजिहीर्षया तयोस्तथात्वेऽङ्गीकृतेऽपि मध्य ईश्वरेच्छानिवेशे सति । नन्वन्धपरंपरानिवृत्तेरेव प्रयोजनत्वान्न वैयर्थ्यमित्यत आहुः—एवं चेत्यादि । तथा च जीवकृतधर्माधर्मसापेक्ष ईश्वरोऽनुमतिदानेन कारयन् बीजानां पर्जन्यवत् सहकारिसाधारणकारणमिति युक्त्याङ्गीकारे आवश्यकत्वादिरूपयुक्त्या विध्यादिवैयर्थ्यमपरिहार्यमित्यर्थः ॥

ननु परविद्याविचारे जीवकर्तृत्वस्येश्वराधीनत्वं सिद्धमित्यपरविद्यारूपविधिनिषेधवैयर्थ्यं न दोष इत्यत आहुः—एवमपि सतीत्यादि । तथा करोतीति जीवकृत प्रयत्नापेक्षां करोति । सर्वथैवासमर्थत्वादिति । 'भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायये'ति

हरितोषिणी ।

वक्तव्यमिति शेषः । तौ जानतामपीति । विधिनिषेधौ जानतामपीत्यर्थः । एवमपीति । त्रितयस्वीकारेऽपीत्यर्थः । धर्मप्रवृत्तिरिति । तथा च वेदान्तिनामस्माकं मते पूर्वमीमांसकाभिमतविध्यादिवैयर्थ्यं न दोषायेति भावः ॥

एवं स्वीकारेऽपि दोषमाहुः—एवमपीति । केवलेच्छास्वीकारेऽपि सतीत्यर्थः । निस्ताराभावमेव व्युत्पादयन्ति—तथा हीत्यादिना । पुरुषार्थत्वेन पुरुषप्रवृत्तिनिवृत्तित्वेन । समर्थत्वादिति । स्वर्गादिप्रदत्वादित्यर्थः । फलोपपत्तावित्यनेनान्वयः । शङ्कते—न चेति । तथा करोति । जीवयत्नापेक्षां करोतीत्यर्थः । उत्तरमाहुः—स्वत इति । स दोषः अकृताभ्यागमदोषः । नत्विति । स दोषस्तादृशकर्मकारण ईश्वरे न स्यादिति न, अपि तु स्यादेवेत्यर्थः । कुत इत्यत आहुः—स्वत इति । 'भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायये'ति गीतावाक्यादसमर्थत्वादित्यर्थः । न तत्परिहार इति । ईश्वरे

तृकत्वं नोपपद्यत इति चेत्तत्राह—'कृतप्रयत्नापेक्षस्तु' इत्यादि । एतदर्थस्तु—'एकोऽहं बहु स्या'मिति प्रपञ्चे रमणेच्छया हि भगवान् क्रीडार्थं कृतप्रयत्नः । तदा हि क्रीडैव मुख्या, अन्यत्सर्वमुपसर्जनीभूतम् । तथा च तदपेक्षो भगवान् विचित्ररसानुभवार्थम्, एवं यः करिष्यति तमेवं करिष्यामीति स्वयमेव मर्यादां चकार । 'स्वकृतसेतुपरीप्सयेति' 'धर्मसेतूनां वक्ता कर्ताऽभिरक्षिते'त्यादिवाक्यश्रवणादेवमवसीयते । ततश्च स्वकृततद्रक्षणाय ज्ञापनाय च वेदं चकार । तथा च जीवोत्पादनसमय एवैनं जीवमस्मिन् देशेऽस्मिन्काले एतत्प्रयुक्तप्रवृत्तिनिवृत्तिमन्तं विधायैतदेतत्फलं दास्यामीत्यामोक्षं प्रतिजीवं विचारितवानिति तदनुसारेणैव ते तथा भवन्तीत्येवंप्रकारेण कृतो यः क्रीडार्थं प्रयत्न उद्यमो, जीवादिवैचित्र्यादिकरणे तदपेक्षस्तदधीन एव कारयति भगवान् । कुत एतत्? । यतो यागादेर्विहितस्य, प्रतिषिद्धस्य विप्रहननादेः स्वर्गनरकसाधकत्वेनावैयर्थ्यमेवमेव भवेत् । अन्यथेश्वरस्यैव कारयितृत्वे फलदातृत्वे चोक्तन्यायेन तद्वैयर्थ्यं स्यात् । आदिपदाद् विनापि कर्म तत्फलदानमपि नात एव । अत एव श्रुतिरपि कर्मकारणे फलदानेच्छामेव हेतुत्वेनानुवदति 'यमुन्निनीषत्यधो निनीषती'ति ॥

सुवर्णसूत्रम् ।

गीतावाक्येन तथात्वादित्यर्थः । ज्ञापनाय चेति । इदमेव निबन्धे भाष्ये चोक्तम्—

हरितोषिणी ।

तादृशदोषपरिहारो नास्तीत्यर्थः । इति चेदिति । इत्यन्तं सूत्रावतरणिका । तत्राहेति । इति पूर्वपक्षे प्राप्ते सूत्रकारः समाधानमाहेत्यर्थः । सूत्रार्थं विशदयन्ति—एतदर्थस्त्विति । तदपेक्ष इति । कृतप्रयत्नापेक्ष इत्यर्थः । मर्यादां विना रसानुभवरूपा क्रीडा न भविष्यतीत्यत आहुः—मर्यादामिति । तत्र प्रमाणमाहुः—धर्मसेतूनामिति । अत्र 'स कथ'मिति पूर्वं ज्ञेयम् । तद्रक्षणायेति । मर्यादारक्षणायेत्यर्थः । वेदमिति । एतदेव निबन्धे उक्तम्—'साधनं च फलं चैव सर्वस्याह श्रुतिः स्फुटम् । न प्रवर्तयितुं शक्ता तथा चेन्नरको नही'ति । वैचित्र्यादिकरण इति । क्रीडार्थमुद्यमः कृत इति पूर्वेणान्वयः । तदधीन इति । प्रयत्नाधीन इत्यर्थः । कृतप्रयत्नापेक्ष इति सूत्रांशव्याख्यामुक्त्वा विहितप्रतिषिद्धावैयर्थ्यादिभ्य इति सूत्रांशं व्याकुर्वन्ति—कुत एतदिति । वैयर्थ्यादिभ्य इत्यत्रादिपदादित्यर्थः । अत्रोपष्टम्भकमाहुः—अत एवेति । यमुन्निनीषतीति । 'एष ह्येव साधु कर्म कारयति, तं यमेभ्यो लोकेभ्य उन्निनीषति' 'एष उ एवासाधु कर्म कारयति तं, यमधो निनीषती'ति श्रुतिः ॥

---

[illegible] पुस्तके 'अयमर्थः' इति पाठान्तरम् ।

आचार्यास्तु,—यथा पुत्रं यतमानं बालं वा, पदार्थगुणदोषौ *वर्णयन्नपि यत्प्रयत्नाभिनिवेशं पश्यति, तथैव कारयति। फलदानार्थं श्रुतौ कर्मापेक्षाकथनात् फलदाने कर्मापेक्षः, कर्मकारणे जीवकृतप्रयत्नापेक्षः, प्रयत्ने तत्कामापेक्षः, स्वर्गादिकामे च लोकप्रवाहापेक्षः, कारयतीति न ब्रह्मणो दोषगन्धोऽपि। न चैवमनीश्वरत्वम्, मर्यादामार्गस्य तथैव निर्माणात्। यत्र त्वन्यथा, तत्र पुष्टिमार्गाङ्गीकार इत्याहुः। अयमपि पक्षः स्वकृतमर्यादाया एव हेतुत्वेन कथनान्मर्यादाकरणे च क्रीडेच्छामृते हेत्वन्तरस्यासम्भवादस्मदुक्तान्नातिरिच्यते। तस्मादस्मदुक्त एव मार्गो, न त्वदुक्तः। किञ्च, क्रियापूर्वकालीनात्मधर्मस्यैव प्रयत्नशब्दार्थत्वेन वक्तुमुचितत्वान्न धर्माधर्मौ तद्वाच्यौ। किञ्च, त्वदुक्तप्रकारे 'विधिनिषेधावैयर्थ्यादिभ्य' इत्येव स्यान्न तु विहितेत्यादीति दिक्॥

सुवर्णसूत्रम्।

'साधनं च स्वरूपं च सर्वस्याह श्रुतिः फलम्। न प्रवर्तयितुं शक्ता तथा चेन्नरको न ही'त्यादि। अन्यत्तु निगदव्याख्यानम्। एवं सूत्रार्थव्याख्यानेन तेषां तात्पर्याज्ञानं स्फुटीकृत्य पदार्थाज्ञानमपि स्फुटीकुर्वन्ति—किञ्च क्रियेत्यादि। किञ्च त्वदुक्तेत्यादि च॥

हरितोषिणी।

आचार्या इति। कर्मापेक्ष इति। भगवानिति शेषः। कारयतीत्यग्रेणान्वयः। सापेक्षत्वे ईश्वरत्वहानिरिति शङ्कते—न चैवमिति। उत्तरमाहुः—तथैवेति। यत्रेति। अन्यथा निरपेक्षत्वे। अयमपीति। नातिरिच्यत इत्यग्रेणान्वयः। न त्वदुक्त इत्यत्र हेत्वन्तरमप्याहुः—किञ्च क्रियेति। अन्यदपि हेतुमाहुः—किञ्चेति॥

गङ्गाधरभट्टी।

आचार्यास्त्वित्यत्र। अणुभाष्ये इति शेयम्। त्वदुक्तप्रकारे इति। प्रयत्नपदस्य धर्माधर्मपरत्वे विहितप्रतिषिद्धपदस्यापि तत्परत्वादर्थासामञ्जस्यादिति भावः॥

---

टिप्पणी।

* वर्णयन्नपीति। वर्णयतेर्भूम् समार्थकतामभ्युपेत्य 'पुत्रं' 'बाल'मित्युभयत्र 'अकथितं चे'ति द्वितीयेत्युक्तवान् प्राभञ्जनः। मम तु 'हृक्रोरन्यतरस्या'मित्यनेन कारयतियोगे द्वितीयेत्यपि सम्यक् प्रतिभाति॥

औपचारिकांशत्व-तन्निरासौ ।

(२३) ननु जीवानां नित्यभिन्नानामेव चेतनत्वादणुत्वेन चैकदेशस्थायित्वेन चांशत्वमौपचारिकमेवेति चेत्, न । मुख्ये सम्भवति गौणस्यान्याय्यत्वात् । सूत्रकृतांशत्वप्रसक्त-

सुवर्णसूत्रम् ।

(२३) माध्वप्रभाकरादिमतेन शंङ्कते—नन्वित्यादि । 'नित्यो नित्यानां चेतनश्चेतनानाम्' 'एषोणुरात्मा चेतसा वेदितव्य' 'स वा एष आत्मा हृदी'त्यादिश्रुतिभ्यस्तथात्वात्तथेत्यर्थः । तद्दूषयन्ति—नेत्यादि । 'पादोऽस्य विश्वा भूतानी'ति श्रुत्युक्तांशत्वे 'बहु स्या'मितीच्छया सम्भवति औपचारिकत्वस्यान्याय्यत्वादित्यर्थः । भिन्नांशत्वे दूषणमाहुः—सूत्रेत्यादि । सूत्रेषु—'प्रकाशादिवन्नैवं परः' 'अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिव'दित्यादिषु प्रकाशादिदृष्टान्तेन कृतो यो जीवस्य भगवदंशत्वे तदीयेन सांसारिकदुःखभोगेनेश्वरस्यापि दुःखभोगापत्तिः । यथा पुरुषस्य पादे दुःखित्वम्, तद्वत् । किञ्च 'ऋतौ भार्यामुपेयात्' 'गुर्वङ्गनां नोपगच्छेत्' इत्याद्यनुज्ञापरिहारावपीश्वरे प्रसज्येयातामित्यादिदूषणानां, परिहारः—अहं दुःखीति या बुद्धिः सा भेद

हरितोषिणी ।

(२३) माध्वप्रभाकरमतं हृदि निधाय शङ्कते—नन्विति । नित्यभिन्नानामिति । 'नित्यो नित्यानां चेतनश्चेतनाना'मिति श्रुतेरित्यर्थः । अणुत्वेन चेति । 'एषोऽणुरात्मा चेतसा वेदितव्य' इति श्रुत्येत्यर्थः । एकदेशेति । 'स वा एष आत्मा हृदी'ति श्रुतेरित्यर्थः । खण्डयन्ति—मुख्य इति । बहु स्यामितीच्छया । अथ च 'पादोऽस्य विश्वाभूतानी'ति श्रुत्या चांशत्वं मुख्यमेव संभवतीत्यर्थः । गौणत्वे दूषणान्तरमाहुः—सूत्रकृतेति । सूत्रेषु कृतो योंऽशत्वे प्रसक्तानि यानि दूषणानि तेषां परिहारस्तस्यानुपपत्तिरित्यर्थः । सूत्राणि च 'प्रकाशादिवन्नैवं परः' 'अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिव'दित्यादीनि, तेषु, प्रकाशदृष्टान्तेन यथा पुरुषस्य पादे दुःखिते दुःखित्वं जायते, एवं जीवस्यांशत्वेऽपि तस्य सांसारिके दुःखे जातेऽपि ब्रह्मणो दुःखित्वं स्यादि-

गङ्गाधरभट्टी ।

(२३) प्राभाकरादय आहुः—नन्वित्यादि ।

दूषणपरिहारानुपपत्तिश्च स्यात् । जीवानां स्वतन्त्रभिन्नत्वे चैकविज्ञा-

सुवर्णसूत्रम् ।

एव, नत्वभेदे । परः परमात्मा नैवं न भेदबुद्धिः । तस्य हि सर्वत्रैवात्मबुद्धिरिति दुःखे-ऽपि तथा । ततश्च 'नाग्नेर्हि तापो न हिमस्य तस्यादि'तिवत्तस्मान्न तस्य दुःखमिति । शवाग्निश्चाण्डालोदकं तद्घटादिश्च परिह्रियते, उत्कृष्टं च गृह्यत इत्यंशस्य तत्सम्बन्धेन दोषो, न सर्वस्यांशिनोऽग्न्यादेः, तथा देहाध्यासवतो जीवस्यैव दुःखादयो, न परस्येत्या-विरूपः, तदनुपपत्तिरित्यर्थः ॥

यत्पुनः कालाग्निखद्योतयोस्तेजोंशयोरमृतसमुद्रमूत्रयोर्जलांशयोर्मेरुपुरीषयोः पृथिव्यं-शयोर्यथा नैकप्रकारता, किन्तु सदसत्तया विवेकः, तथा मत्स्यादीनां स्वरूपांशानां, जी-वानां भिन्नांशानां च तेजआदीनां भूतानामंशभेदेन भिन्नत्वेऽप्यभिमानिदैवतैक्येन च दृष्टान्तोपपत्तिरिति व्याख्यानम् । तस्मिन्पक्षे तु पृथिव्याः सर्वसंहत्त्वेन दोषसम्बन्धस्य च सिद्धत्वाद्दृष्टान्तविरुद्धत्वम् । तेषां राश्यभिमानित्ववदीश्वरेऽपि जीवराश्यभिमानित्वा-पत्तिः । अनभिमानित्वे स्वंशत्वस्यैवाभावः । राशिवदंशित्वे च साजात्यमात्रपर्यवसानाद्दू-षणस्यैवाभावेन परिहारस्यैव वैयर्थ्यम् । एवं पितृपुत्रभावेऽपि । न च तद्बोधकश्रुतिस्मृत्या-द्यनुपपत्तिः । अस्मद्रीत्यापि तदुपपत्तेः । किञ्चावान्तरसृष्टाविवादिसृष्टावपि पूर्वमीश्वरे जीवानां पिण्डीभाव एव वाच्यो, न त्वीश्वरैक्यम् । तथा सति तेषां भिन्नत्वेन 'बहु स्यां' 'नामरूपे व्याकरवाणी'त्याद्युक्तं स्वस्य बहुभवनं, जीवरूपेण नामादिव्याकरणमुत्तमपु-रुषप्रयोगश्चेत्युपरुध्येरन् । अभिमानित्वे जीवतौल्यं चापद्येतेत्येतत्समुच्चयार्थश्चकारः । ननु मास्तु भिन्नांशत्वमुपचारश्च, किन्तु शरीररूपत्वाद् विशिष्टांशत्वमेवास्त्विति चेत्, तत्राह —जीवानामित्यादि । ननु कारणावस्थायां विभक्तव्यपदेशानर्हत्वेनैक्यादेकविज्ञानेन

हरितोषिणी ।

त्याशङ्कायाम्,—परः ईश्वरो नैवं न भेदबुद्धिः । तस्य हि सर्वत्रैवात्मबुद्धिः । किञ्च 'ऋतौ भार्यामुपेयात्' 'गुर्वङ्गनां नोपगच्छे'दित्याद्यनुज्ञापरिहारौ प्रसज्येयाताम् । तत्र यथा शवाग्निश्चाण्डालोदकं तद्घटादिस्त्यज्यते, उत्कृष्टं गृह्यते इत्यंशस्य तत्सम्बन्धेन दोषो, न सर्वस्यांशिनोऽग्न्यादेः, तथा देहसम्बन्धाद्देहाद्यध्यासवतो जीवस्यैव, न परस्येत्यादिरीत्या दूषणपरिहारः कृतः, स च न संगच्छते, भवन्मते अंशत्वाभावेन दूषणानामप्रसक्तेरिति भावः । अधिकं तु सुवर्णसूत्रे द्रष्टव्यम् । जीवानां स्वांशत्वाभावे दूषणमाहुः—जीवाना-

गङ्गाधरभट्टी ।

दूषणपरिहारेति । 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दव्याकोपो वा' 'श्रुतेस्तु श-ब्दमूलत्वा'दित्यादीत्यर्थः ॥

---

१ जीवानां निरंशत्वादंशत्वं नोपपद्यते । अंशत्वाभावे भेदं न० इति क. पु. अधिकः । २ ह. पु. न इत्यधिकः ।

नेन सर्वविज्ञानप्रतिज्ञानुपपत्तिः । न च योगजधर्मप्रत्यासत्तिवत्तत्त्वज्ञानजनितालौकिकधर्मेणैव सर्वज्ञत्वोपपत्तिरिति वाच्यम् । 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या'दित्यादिश्रौतदृष्टान्तानुपपत्तेः । 'सदेव सौम्येदमग्र आसी'दितिश्रुतिविरोधश्च ॥

सुवर्णसूत्रम् ।

सर्वविज्ञानप्रतिज्ञायाः सुखेनोपपत्तिरिति चेत् तत्राहुः—न चेत्यादि । श्वेतकेतूपाख्याने प्रलयप्रसङ्गाभावात्तत्र कार्यावस्थायां तादृशज्ञानं विवक्षितम्, तदानीं च कारणावस्थाया अभावात्तादृशं ज्ञानं न लौकिकप्रत्यासत्त्येति तदर्थं तत्त्वज्ञानजनिताऽलौकिकी प्रत्यासत्तिः सौबालादिवाक्यानुरोधेन कल्पनीया । अन्यथा सत एवोपक्रान्तत्वेन तस्य शरीरताया अनुक्तत्वाच्छिष्यस्य तावत्पर्यन्तं ज्ञानं न स्यात् । तथा सति स्फुटैव श्रौतदृष्टान्तानुपपत्तिः । दृष्टान्ते मृत्पिण्डादिपदैः पुरःस्फूर्तिकधर्मपुरःसरज्ञानस्यैव विवक्षितत्वावगमादिति । ननु ब्रह्मणः सर्वदा आत्माकारत्वेन सिद्धत्वात्कारणशरीरस्य च नित्यत्वेन तदविनाभावाद्विवक्षितधर्मवत्त्वे सिद्धे विवक्षितप्रत्यासत्त्यैवैकविज्ञानेन सर्वविज्ञानसिद्धेर्न दृष्टान्तानुपपत्तिरित्यत आहुः—सदेवेत्यादि ॥

हरितोषिणी ।

मिति । यथा मृत्पिण्डज्ञानेन सर्वं मृन्मयं ज्ञायते, शरावादेर्मृदंशत्वात्, तथा जीवादेर्ब्रह्मांशत्वात्सर्वविज्ञानप्रतिज्ञोपपद्यते । स्वतन्त्रभिन्नत्वे मृज्ज्ञानेन पटज्ञानाभाववत्प्रतिज्ञानुपपत्तिरिति भावः । सर्वविज्ञानप्रतिज्ञोपपत्तिः प्रकारान्तरेणास्तीति शङ्कते—न चेति । यथा ज्ञानलक्षणा, सामान्यलक्षणा, योगजधर्मश्चेति नैयायिकैरलौकिकप्रत्यासत्तित्रयं स्वीक्रियते, तथा सौबलिवाक्यानुरोधेन तत्त्वज्ञानजन्याऽलौकिकी प्रत्यासत्तिः स्वीक्रियते, तयैव सर्वज्ञत्वं जायत इति भावः । परिहरन्ति—यथेति । अनुपपत्तेरिति । श्रुतौ प्रत्यासत्तिर्नोक्ता, किन्तु आत्मज्ञाने जाते घटत्वसामान्यलक्षणया सर्वघटविषयकं ज्ञानं जायते, तथैकमृन्मयज्ञानेन सर्वमृन्मयज्ञानं जायते, एवमलौकिकप्रत्यासत्त्याऽऽत्मज्ञाने सर्वज्ञत्वं जायत इति, न श्रौतदृष्टान्तानुपपत्तिरित्यतो दूषणान्तरमाहुः—सदेवेति । सुबालोपनिषदि प्रलयप्रकरणे 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयत' इत्यन्तं लयमुक्त्वा —'तमः परे देवे एकीभवती'त्येकीभाव उक्तः । लयश्च श्लेष एव, स च विभागाभाव एव, एकीभावः स्वरूपैक्य एव पर्यवस्यति, न तु नामरूपविभागानर्हत्वमात्रे । तथा सति सृष्टिप्राक्काले सदेवेत्येवकारेणान्ययोगव्यवच्छेदाद्ब्रह्मैक्य एव पर्यवस्यति, भवन्मते जीवानां नित्यभिन्नत्वेन तन्न संभवतीति श्रुतिविरोध इत्यर्थः ॥

अयमर्थः—सुबालोपनिषद्येव लयप्रकरणे 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयत' इत्यन्तं लयमुक्त्वा अग्रे 'तमःपरे देव एकीभवती'त्येकीभाव उक्तः। यतो लीङ् श्लेषण इति धात्वर्थविचारे लयः श्लेष एव। स च *विभागाभाव एव सिद्ध्यति। तथा सत्येकीभावः स्वरूपैक्यमेव, न तु विभागानर्हत्वमात्रम्, तस्य पूर्वत्रापि तुल्यत्वादिति [1]†शब्दान्तरादेवकारेण शरीरस्य शरीरभावत्यागपूर्वकं ब्रह्माभेदः सिद्ध्यति। तथा सति सृष्टिप्राक्काले एवकारोऽन्ययोगं व्यवच्छिन्दन्पूर्वोक्तैक्य एव पर्यवस्यति, न नामरूपविभागानर्हत्वमात्र इत्यवधेयम्। न चैवं सति ब्रह्मणस्तदानीं निर्धर्मकत्वापत्तिः। स्वरूपोदरधर्माणां सत्तायास्तदानीमग्रे वक्ष्यमाणत्वात्। न चैवं ब्रह्मणः परिणामे जीवस्वरूपत्वे च सिद्धे जडरूपेण स्वरूपान्यथापत्तिः, जीवस्वरूपेण तस्यैवेष्टानिष्टफलभोगावाप्तिश्चेति शङ्क्यम्। 'प्रकाशादिवन्नैवं परः' इति सूत्र एव निरस्तत्वादित्यनवद्यम्। न चैवं जीवस्यापि स्वरूपान्यथाभावापत्त्या नित्यत्वबाधः शङ्क्यः। दृष्टान्तभूतविस्फुलिङ्गरूपविचारेणैव ‡तदापत्तेर्निरस्तत्वात्। पराभिध्यानसूत्रे धर्मान्यथाभावस्यैव प्रतिपादनाच्च। तेनांशत्वाविशेषेपि सदंशानां जडानां स्वरूपान्यथाभावादनित्यत्वव्यवहारः, चिदंशानां जीवानां तु धर्ममात्रान्यथाभावान्नित्यत्वमिति सिद्धम्॥

---

टिप्पणी।

* विभागाभाव एवेति। न तु संयोगः। मिलितयोर्यत्र संख्याप्रत्ययस्तत्र संयोगः, अन्यत्र श्लेष इति भेदः। अयं 'संयुक्ता' 'अप्यङ्गुलयश्चतस्रो भवन्ती'त्यादिना प्रस्थानरत्नाकर उक्तः॥

† शब्दान्तरादिति। विभागानर्हत्वमभिप्रेतं चेत्पूर्ववाक्यद्वय इव लीयत इत्येव वदेत्। तु 'एकीभवती'ति शब्दान्तरमुपादद्यात्। अतः स्वरूपैक्यमेव॥

‡ तदापत्तेरिति। नित्यत्वबाधापत्तेः। अत्रायमाशयः—प्रपञ्चस्य भगवद्रूपतया नित्यत्वं तु जडजीवयोरुभयोरपि, परन्तु 'नित्यो नित्यानां' 'न जायते म्रियते वे'त्यादिश्रुतिस्मृतिभिर्विशिष्य तदुक्तेः प्रकारभेदोऽवश्यमभ्युपेयः। स च प्रलये जीवानां भगवदविभागमात्रं, सृष्टिसमये नामरूपव्याकरणात्पूर्वमपि स्वस्वरूपेण सत्त्वं चेत्येवंरूपः। अविभागः, स्वस्वरूपेण सत्त्वं च यथा विस्फुलिङ्गानामग्नौ व्युच्चरणात्पूर्वं, तथा। अतो न 'सदेवे'त्येवकारव्याकोपः,। अनेकविस्फुलिङ्गानामग्नौ सत्त्वेऽप्यग्निरेव, नान्यत्किंचिदस्तीति प्रतीतिर्भवत्येव। अस्य विस्तरः प्राभञ्जने॥

---

१ मु. पु. नामरूपविभागानर्हत्वमात्रम्। २ मु. पु. धात्वर्थविचारे पाठः।

(२४) ननु 'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्य' इति तत्त्वसूत्रविरोधः । एतदर्थस्तु,—आत्मा जीवो नोत्पद्यते । कुतः ? अश्रुतेः । देवदत्तो जात इति देहोत्पत्तिरेव श्रूयते, नात्मनः । किञ्च, नित्यत्वादपि नोत्पत्तिर्जीवस्य सम्भवति । कुतोऽस्य नित्यत्वमत्राह, ताभ्यः श्रुतिभ्य इतीति चेद्; अत्रेदं प्रतिभाति —'यथाऽग्नेः क्षुद्रा' इत्यादिश्रुतीर्विचारयन् स्वयमेव जीवस्यांशत्वमुक्त्वा यत्पश्चादुत्पत्तिं निषेधति सूत्रकारस्तेन विस्फुलिङ्गन्यायेन जीवस्य व्युच्चरणं नोत्पत्तित्वेन सूत्रकारस्याभिमतम् । तदा परिच्छिन्नस्य शरीरस्याभावेन तस्मिन् जीवागमनस्याप्यभावेनोत्पत्तिस्वरूपाभावात् । तदुक्तम्—'अनित्ये जननं, नित्ये परिच्छिन्ने

व्युच्चरणस्योत्पत्तित्वाशङ्का, तत्परिहाराय विस्फुलिङ्गदृष्टान्तोपवर्णनम् ।

सुवर्णसूत्रम् ।

(२४) एवं नित्यत्वेपि व्युच्चरणेनोत्पत्तेरङ्गीकारमिव बुध्वा सूत्रविरोधमाशङ्कते—नन्वित्यादि । श्रुतिभ्य इति । 'नित्यो नित्याना'मित्यादिभ्यः । एतत्समाधातुं व्युच्चरणपदार्थं विचारयन्ति—अत्रेत्यादि । उक्त्वेति । वक्तुमभिसन्धायेत्यर्थः । जीवव्युच्चरणस्योत्पत्तित्वाभावे प्राचां सम्मतिमाहुः—*तदुक्तमिति । जननं बहिर्भावहेतुको विषयसंसर्गः,

हरितोषिणी ।

(२४) एतावता ब्रह्मणः सकाशाज्जीवानां व्युच्चरणमुत्पत्तिरूपं वक्तव्यम्, तेन चानित्यत्वं प्राप्तम्, तथा च सूत्रविरोध इत्याशङ्कते—नन्विति । विरोधं स्फुटीकर्तुं सूत्रार्थं विशदयन्ति—एतदर्थस्त्विति । सूत्रोत्तरार्द्धार्थमाहुः—किञ्चेति । श्रुतिभ्य इति । 'नित्यो नित्यानां चेतनश्चेतनाना'मित्यादिश्रुतिभ्य इत्यर्थः । उत्पत्तिरूपं व्युच्चरणं न भवति, किन्तु विभागरूपमित्याशयेन समाधानमाहुः—अत्रेदमिति । नोत्पत्तित्वेनेति । उत्पत्तित्वेन जीवस्य व्युच्चरणं नेत्यन्वयः । तदेति । सृष्ट्यादावित्यर्थः । जीवव्युच्चरणमुत्पत्तिरूपं न भवतीत्यत्र प्राचीनसंमतिमाहुः—अनित्येति । पदार्थो द्विविधः—नित्योऽनि-

गङ्गाधरभट्टी ।

(२४) ताभ्यः श्रुतिभ्य इति । 'नित्यो नित्यानां' 'न जायते म्रियते वा विपश्चि'दित्यादिभ्यः ॥ नोत्पत्तित्वेनेति । किन्तु पृथग्भूतत्वेन विस्फुलिङ्गवदित्यर्थः ।

---

टिप्पणी ।

* तदुक्तमिति । विष्णुस्वामिनं प्रति भगवतोक्तमिति लेखकाराः । सेति । अभिव्यक्तिरिति प्रकाशकृतः । प्रादुर्भाव एवोत्पत्तिरिति । 'यथा अग्नेः' इत्यत्र व्युच्चरन्तीत्यस्याविर्भवन्तीत्यर्थः । स च प्रादुर्भावः प्राणादीनामनित्यत्वात्तदंशे उत्पत्तिरूपः, जीवात्मनां नित्यत्वात्तदंशे विभागरूपः पर्यवस्यतीत्यर्थः । तेन 'सकृदुच्चरित' इति न्यायेनोत्पत्तिप्रादुर्भावरूपार्थद्वयबोधासंभवेन व्युच्चरन्तीत्यावर्तनीयमिति गौरवं निरस्तम् ॥

समागमः। नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधा' इति। तथा चानित्यानां प्राणादीनां प्रादुर्भाव एवोत्पत्तिरिति तेषामेवोत्पत्तिरुक्ता। जीवानां ब्रह्मणः सकाशाद्विभागे तदंशत्वे च वाच्ये सति तद्दुर्बोधत्वं जानन्ती श्रुतिरंशत्वमंशिनः सकाशाद्विभागवत्त्वमणुत्वमंशिनोऽशान्महत्त्वं, पुनरंशस्यांशिनि प्रवेशयोग्यत्वं, प्रवेशे सत्यभेदप्रतीतिविषयत्वं, पुनर्निर्गमनयोग्यत्वं चाग्निविस्फुलिङ्गे प्रसिद्धमिति सर्वधर्मबोधसौकर्यार्थमग्निविस्फुलिङ्गदृष्टान्तेनोक्तवती। प्रकृतेऽप्येवं दृश्यते। जीवाद् ब्रह्मणो महत्त्वम्। तदुक्तम्—'अधिकं तु भेदनिर्देशा'दिति। पुनः प्रवे-

सुवर्णसूत्रम्।

समागम आगमनक्रियाहेतुकः सः, प्राकट्यमिच्छाहेतुकः स इति न पूर्वोक्ताविर्भावलक्षणस्य विरोधः। तथा चात्र विभागाज्जाते बहिर्भावे तदानीं स्वरूपधर्मयोरन्यथाभावाभावात्तस्य नोत्पत्तिरूपता। श्रीभागवतेऽपि देहं प्रकृत्य 'तन्निरोधोऽस्य मरणमाविर्भावस्तु सम्भव' इति देहवियोगयोगाभिमानमात्रस्यैव जीवमरणोत्पत्तिरूपताकथनात्तस्य तदानीं देहाभावेन तदभावाद्भवन्मत इव नास्मन्मतेऽपि सूत्रविरोध इत्यर्थः। नन्वस्त्वेवमुत्पत्त्यभावस्तथापि ब्रह्मणः सकाशाद्विभागे सति जीवत्वात्ततः पूर्वं तदभावे जीवस्य नित्यत्वं तु कुप्येतैवेत्यत आहुः—तथा चेत्यादि। उक्तेति। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' 'लोकानुत्सृजा' इति 'चतुर्दश पुरुषा अजायन्त'इत्यादिश्रुत्यन्तर उक्तत्वादत्र प्रजायतस्तज्जीवोत्पत्तिर्न वक्तुं शक्या। आत्मपदवैयर्थ्यापाताच्च। अतः केवलानामेव तेषां सोक्तेत्यर्थः। जीवानामिति। तदानीमनन्यथाभूतधर्माणाम्। तद्दुर्बोधत्वमिति। नित्यत्वस्य दुर्बोधत्वम्। उक्तवतीति। अंशत्वेन स्वरूपान्यथाभावादेव नित्यत्वं बोधितवतीत्यर्थः। उक्तेषु

हरितोषिणी।

त्यश्च। नित्यो द्विविधः—परिच्छिन्नोऽपरिच्छिन्नश्च। तत्रानित्ये जननमुत्पत्तिपदवाच्यम्, नित्ये परिच्छिन्ने जीवे सम्यगागमः आविर्भावः, नित्ये अपरिच्छिन्ने ब्रह्मणि इच्छया प्राकट्यम्। अनित्ये, नित्ये च जननाविर्भावविचारमाहुः—तथा चेति। तद्दुर्बोधत्वमिति। तस्य नित्यत्वस्य दुर्बोधत्वमित्यर्थः। श्रुतिरिति। उक्तवतीत्यनेनान्वयः। सर्वधर्मेति। अंशत्वमित्यारभ्य, पुनर्निर्गमनयोग्यत्वमित्येतदन्तसप्तधर्मसौकर्यार्थमित्यर्थः। सप्तधर्मेष्वंशत्वमंशिनः सकाशाद्विभागत्वमिति द्वयोः पूर्वमुपपादितत्वात्तृतीयस्याग्रे व्युत्पाद्यत्वाच्चतुर्थं व्युत्पादयन्ति प्रकृत इति। तदुक्तमिति। व्याससूत्र इति शेषः। सूत्रमे-

गङ्गाधरभट्टी।

प्रादुर्भाव इति। जननमित्यर्थः। जनी प्रादुर्भाव इति वचनात्।

शश्चोच्यते,—'ब्रह्मैव सन् ब्रह्माप्येति' ब्रह्मभावश्च भगवदुक्तसाधनकरणेन संतुष्टाद्भगवत आनन्दप्राकट्यात् स्वगुणस्वरूपैश्वर्यादिप्राकट्याच्चेति ज्ञेयम् । इदमेवोक्तम्—'अस्मिन्नस्य च तद्योगं शास्ती'ति सूत्रेण । अर्थस्तु—अस्मिन्नानन्दमये ब्रह्मण्यस्य जीवस्य तद्रूपस्य योगं ब्रह्मभावापन्नस्य प्राप्तिं वदति फलत्वेनेति । इदमेव 'ब्रह्मभूतः प्रसन्नात्मा, न शोचति, न काङ्क्षति । समः सर्वेषु भूतेषु' इत्याद्युक्त्वा भक्तिलाभानन्तरं 'विशते तदनन्तर'मित्युक्तं विजयरथकुटुम्बेन श्रीदेवकीपुत्रेण ॥

प्रवेशानन्तरमभेदप्रतीतिं श्रुतिराह । तथाहि—सर्वेषां हि भगव-

सुवर्णसूत्रम् ।

सप्तसु धर्मेषु द्वयोः पूर्वमुपपादितत्वात् तृतीयस्याग्रे प्रयासेन व्युत्पादनीयत्वाच्च चतुर्थमारभ्य व्युत्पादयन्ति—प्रकृत इत्यादि । पञ्चमं व्युत्पादयन्ति—पुनरित्यादि । भगवदुक्तसाधनेति । गीतैकादशस्कन्धाद्युक्तभगवद्धर्मात्मकसाधनेत्यर्थः । स्वगुणेत्यादि । न तु मायावाद्युक्तरीत्येत्यर्थः ॥

षष्ठं व्युत्पादयन्ति, वाक्यान्वयाधिकरणविषयवाक्यं मैत्रेयीब्राह्मणं प्रमाणत्वेनोपक्षिपन्ति—तथाहीत्यादि । अत्रायमर्थः—उक्तश्रुतौ ह्युपक्रमे 'येनाहं नामृता स्यां, किमहं तेन कुर्या'मित्यमृतपदघटितं वाक्यं मध्ये च 'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवती'त्यादिजीवलिङ्गयुतमग्रे चात्मज्ञानेन सर्वज्ञानाय सर्वस्यात्मरूपत्वं तत ऋग्वेदादीनां तन्निश्वसितत्वं तस्य सर्वलयस्थानत्वं च प्रतिपादितम् । तत्र जीवलिङ्गबाहुल्याज्जीवप्रकरणत्वमेतस्येति पूर्वपक्षे नानर्षिमतोपन्यासपूर्वकं वाक्यान्वयरूपोपपत्त्या ब्रह्मप्रकरणत्वं तस्य निर्णीतम् । तथा सति मध्ये यज्जीवनिरूपणं तन्मुक्तिं प्राप्स्यतो जीवस्य ब्रह्मधर्मप्राकट्ये ब्रह्मभावबोधनार्थमित्यौडुलोमिमतं, कयाचिदवस्थया अवस्थितं ब्रह्मैव जीव इति बोधनायेति काशकृत्स्नमतं वदन् आचार्यस्तु स्वमतमत्र किमप्यवदन्नग्रे 'अंशो नाना व्यपदेशादन्यथा चापी'त्यनेन भेदाभेदव्यप-

हरितोषिणी ।

बाहुः—अधिकमिति । पञ्चमं व्युत्पादयन्ति—पुनरिति । साधनकरणेनेति । गीतायामेकादशस्कन्धे च भगवता यदुक्तं साधनं, तस्य करणेनेत्यर्थः । स्वगुणेति । स्वस्य गुणाः तत्स्वरूपैश्वर्यादयः तेषां प्राकट्यादित्यर्थः । अत्र व्याससूत्रं प्रमाणयन्ति—इदमेवेति ॥

षष्ठं व्युत्पादयितुमाहुः—प्रवेशानन्तरमिति । श्रुतिरिति । वाक्यान्वयाधिकरणस्था-

गङ्गाधरभट्टी ।

भगवदुक्तेति । गीतैकादशोक्तेत्यर्थः ॥

---

१ मु. पु. मायावाद्युक्तेति पाठः ।

त्येव लयः साक्षात् परंपराभेदेनातो मोक्षस्थानं भगवानेवेति निरूपणार्थं 'यथा सर्वासामपां समुद्र एकायन'मित्युपक्रम्य 'वागेकायन'मित्यन्तं दृष्टान्तार्थं निरूप्य 'स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत' इत्यादिना च लयदृष्टान्तं निरूप्य 'विज्ञानघन एतेभ्योभूतेभ्यः समुत्थाय तान्येवानु विनश्यति, न प्रेत्य संज्ञाऽस्ती'ति लयं निरूप्य,

सुवर्णसूत्रम् ।

देशाभ्यामंशत्वं वदन्नेकदेशिमतद्वयमपि संगृह्णानोंऽशत्वबोधनायात्र तन्निरूपणमिति सूचितवान्; तदेतद्धृदि कृत्वा विवक्षितं स्फुटीकुर्वन्ति—सर्वेषामित्यादिना । उक्तरीत्या लयस्थानदृष्टान्तार्थ 'स यथा सर्वासामपा'मित्यादिकं निरूप्य 'स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेते'त्यादिना 'नाहास्योद्ग्रहणायेव स्याद्यतो यतस्त्वाददीत लवणमेवे'त्यन्तेन लयदृष्टान्तं निरूप्य स दृष्टान्तः 'यथा सैन्धवखिल्यः सिन्धुरुदकं तत्र भवं सैन्धवं लवणं तस्य खिल्यः शकल उदके जले प्रास्तः प्रक्षिप्तः सन् उदकमेवानुक्षेपाधारभूतमुदकमेव लक्षीकृत्य विलीयेत उदकभावमापद्येत, नाह न कश्चित् अस्य सैन्धवखिल्यस्य उद्ग्रहणाय उद्धृत्य पूर्ववद् ग्रहणायेव स्यात् । इवशब्दोऽनर्थकः । शक्तः स्यात्, यतो देशोऽर्थतः यस्मादुदकदेशा—दाददीत आस्वादनाय गृह्णीयात्, लवणमेव लवणरसमेवास्वादयेत्; अतो लवणभावेऽप्युदकरूपेणैव तस्य सत्ता, न तु खिल्यभावेनेति लयदृष्टान्तं व्याख्याय 'एवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ती'ति लयं निरूप्य, यथा अयं लवणदृष्टान्त, एवमेवारे मैत्रेयि इदमात्मतत्त्वं महत्त्वादिलक्षणकं ब्रह्मैव महदनवच्छिन्नं भूतं सिद्धम् अनन्तमविनाशि अपारमनादि विज्ञानघनः ज्ञप्तिमात्रस्वरूप एव सन् एतेभ्यः स्थूलसूक्ष्मशरीराकारेण परिणतेभ्यो भूतेभ्यः समुत्थाय भूसूर्यरश्म्यादिभ्यो रसः सैन्धवभावमिव पराभिध्यानाद्ब्रह्मणा विशेषफलभोक्तृभावं प्राप्य तानि विनश्यन्ति संत्यनुपश्चाद्विनश्यति भोक्तृभावं त्यजति; (न) प्रेत्य विमुच्यानन्तरं संज्ञा ( भोगानुकूलज्ञानमस्ति ) जीवादिसंज्ञा नास्ति, किन्तु ज्ञप्तिमात्रस्वरूप एव भवतीत्येवं लये संज्ञा-

हरितोषिणी ।

मैत्रेयीब्राह्मणरूपा श्रुतिरित्यर्थः । श्रुतिमेवाहुः—तथा हीत्यादिना । सर्वेषामिति । जीवानामित्यर्थः । साक्षादिति । श्रुतिर्मोक्षस्य स्थानं भगवानेवेति वक्तुं दृष्टान्तार्थं निरूप्य, लयं निरूप्य भिन्नत्वेन प्रतीतिराहित्यं न्यरूपयदित्यमेणान्वयः । सैन्धवखिल्य इति । सिन्धुरुदकं तत्र भवं सैन्धवं लवणं, खिल्यः शकलः उदके जले प्रास्तः प्रक्षिप्त इत्यर्थः । विलीयेत उदकभावमापद्येत । न प्रेत्य संज्ञेति । प्रेत्येति ल्यबन्तम् । प्रेत्य मोक्षानन्तरं संज्ञा भोगानुकूलज्ञानं नास्तीत्यर्थः, किन्तु ज्ञप्तिमात्रस्वरूपो भवतीति भावः ।

तन्निरूपणार्थं 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती'त्युपक्रम्य —'विज्ञातारमरे केन विजानीया'दित्यन्तेन लयावस्थायां लीनस्य स्वस्मिन् भगवतो भिन्नत्वेन प्रतीतिराहित्यं न्यरूपयत्। इममेवार्थं सूत्रकारोऽप्याह—'गतिसामान्या'दिति । गतिर्मोक्षः, समानस्य भावः सामान्यं तस्मात्। मोक्षे जीवब्रह्मणोरभिन्नत्वात् । अभिन्नत्वेनैव निरूप-

## सुवर्णसूत्रम्।

भावं व्याख्याय तन्निरूपणार्थं मिष्टोदके तत्प्रक्षेपे अविभागदशायामपि भेदज्ञानान्न संज्ञाया अभाव इति मैत्रेय्या मोहे सर्वात्मनाऽसंज्ञानिरूपणार्थं 'यत्र हि द्वैतमिव भवति तदितरं पश्यती'त्युपक्रम्य, जिघ्रत्यभिवदति, शृणोति, मनुते, विजानातीत्येतैर्भेदकधर्मसत्तायां द्वैतदर्शनकथनपूर्वकं 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्, जिघ्रेत्, अभिवदेत्, शृणुयान्मन्वीत, विजानीयात्, येनेदं सर्वं विजानाति तं केन विजानीयात्, विज्ञातारमरे केन विजानीया'दित्यन्तेन भेदकधर्मलये विज्ञात्रभावाद्ब्रह्मरूपतायां समुद्रे लवणस्येव ब्रह्मणि लीनस्य जीवस्य स्वस्मिन् भगवतो भिन्नत्वेन प्रतीतिराहित्यम्, अन्यस्य ब्रह्मविदोऽपि तस्मिन् जीवे तथा प्रतीतिराहित्यं न्यरूपयत्। तथा च यदि जीवानां नित्यभिन्नत्वमभिप्रेयात् तदा द्वैतदर्शनदशायामिवपदेन द्वैताभावं न सूचयेत्, आत्मभावदशायां च द्रष्टृदृश्यादिभावं न निषेधेत्, यतोऽत्रैतदुभयम्। अतो जीवा न नित्यभिन्नाः, नापि ब्रह्मैव, किन्तु भिन्नाभिन्ना ब्रह्मांशा इत्यर्थः । ननु यद्येवं तदा सूत्रकारो 'गतिसामान्या'दित्यत्र तौल्यबोधकं सामान्यपदं न वदेत्; अतो नैवम्, किन्तु 'निरञ्जनः परमं साम्यमुपैती'त्यत्र तथा श्रावणादविभागमात्रमेव स्वीकार्यं, न त्वभेदोपीति चेत्तत्राहुः—इममेवेत्यादि । तथा च समानाधिकरणसमानोदर्य इत्यादौ समानशब्दस्यैकार्थकत्वदर्शनादुक्तश्रुतौ च साम्यस्य परमत्वेन विशेषितत्वात्तादृक्षसाम्यस्य चाभेद एव संभवादस्मिन् सूत्रेऽपि सामान्यपदेनाभेद एवाभिप्रेतो, न तु

## हरितोषिणी।

तन्निरूपणार्थं सर्वात्मना लयनिरूपणार्थम् । मिष्टोदके लवणप्रक्षेप इवाऽविभागदशायामपि भेदज्ञानान्न संज्ञाया अभाव इति मैत्रेय्या मोहे सर्वात्मना लयबोधार्थं 'यत्र हि द्वैतमिवे'त्यादि न्यरूपयदिति भावः । लीनस्येति । ब्रह्मणि लीनस्य जीवस्येत्यर्थः। तथा च जीवा न नित्यभिन्ना, नापि ब्रह्मैव, किन्तु भिन्नाभिन्ना ब्रह्मांशा इति भावः । इममे-

## गङ्गाधरभट्टी।

लीनस्य स्वस्मिन्नित्यादि । स्वस्मिन् लीनस्य जगतो ब्रह्मणा भिन्नत्वेन प्रतीतिराहित्यं भगवतः कर्तुः, तथा तस्मिन् ब्रह्मणि लीनस्य जगतः भगवतस्सकाशाद्भिन्नत्वेन प्रतीतिराहित्यम्। अन्यस्य जीवस्येत्यर्थः ॥

णादित्यर्थः । तेनाद्यिमध्यावसानेषु शुद्धब्रह्मण एवोपादानत्वात् सर्वेषां वेदान्तानां ब्रह्मणि समन्वय इति तत्र फलितम् । स्वावतारसमये क्रीडार्थं साक्षाद् योग्यास्त एव भवन्तीति तानप्यवतारयतीति पुनर्निर्गमनयोग्यत्वम् । इदमेव, 'मुक्तोपसृप्यव्यपदेशा'दिति सूत्रेणोक्तम् । न च 'न स पुनरावर्तते, 'अनावृत्तिः शब्दाद्' इति श्रुतिन्यायविरोधः । एतस्य प्रमाणमार्गपरत्वात् । इदं च पुष्टिमार्गाङ्गीकारे भगवान् करोति, नोचेन्मर्यादायां प्रवेशपर्यन्तत्वमेव । तस्यातिशयितानुग्रहविशेषमात्रसाध्यत्वेनातिदुर्लभत्वात् । तदुक्तं,—'भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म, न भक्तियोग'मिति । किञ्च, संसारे पुनरनावृत्ति-

सुवर्णसूत्रम् ।

नित्यभिन्नत्वमित्यर्थः । सिद्धान्ते गतिसामान्यसूत्रस्यापीदमेव विषयवाक्यम्, तद्व्याख्याने यो विशेषः सोऽपि मत्कृतात्तद्विभागादवगन्तव्यः । अधिकरणक्रमाध्यायार्थयोर्विचारेणाप्येवमेव सिद्ध्यतीत्याहुः—तेनेत्यादि । आदौ समन्वयसूत्रे जन्मादिसूत्रे वा ब्रह्मण उपादानत्वं प्रतिज्ञायानन्दमयाधिकरणपर्यन्तं तस्यैव समर्थनेन मैत्रेयीब्राह्मणादिषु वाक्यान्वयाद्यधिकरणविषयवाक्येषु तस्यैव समर्थितत्वेन च सर्वेषां वेदान्तानां ब्रह्मण्येव समन्वय इति तत्राध्याये फलितम् । तथा चैवं तादात्म्य एव व्यासस्य तात्पर्यं न नित्यभेदे नाप्यभेदे इति नांशत्वमौपचारिकमित्यर्थः । सप्तमं व्युत्पादयन्ति—स्वावतारेत्यादि, दिगित्यन्तम् । इदम् मुक्तावतारणम् । तस्येति । अवतारणस्य । ननु श्रुतिन्याययोः सर्वसाधारणत्वादेवं निर्गमनयोग्यत्वसाधनं न प्रामाणिकमिति शङ्कायां तस्य निर्गमनस्यावृत्त्यबाधकत्वं साधयन्ति—किञ्चेत्यादि । 'एवं मानवमावर्तं नावर्तन्त' इति विशेषभाव-

हरितोषिणी ।

वेति । भिन्नाभिन्नब्रह्मांशरूपमित्यर्थः । एवं च सर्वेषां वेदान्तानामभिन्नेवार्थे तात्पर्यमित्याहुः—तेनेति । सप्तमं व्युत्पादयन्ति—स्वावतारेति । इदमेव पुनर्निर्गमनयोग्यत्वम् । शङ्कते—न चेति । उत्तरमाहुः—एतस्येति । 'न स पुनरावर्त्तत' इत्यस्येत्यर्थः । इदं च पुनर्निर्गमनं च । तस्येति । पुनर्निर्गमनस्येत्यर्थः । पुनर्निर्गमनयोग्यानामनावृत्तिरेवेत्याहुः—किञ्चेति । श्रुतिरिति । 'इमं मानवमावर्तं नावर्तन्त' इति विशेषोपादानादावर्तनमावृत्तिः, किन्तु संसारे पुनरागमनम्; तद्भक्तानां नास्तीति न श्रुतिविरोध इत्यर्थः ।

गङ्गाधरभट्टी ।

मुक्तोपसृप्येति । मुक्तानां भक्तानां पुनरवतारेण भजनीयेत्यर्थः ।

माह श्रुतिः । न हि तेषां तत्संसारः 'मुक्ता अपि *लीलाविग्रहं कृत्वा भजन्त' इति वाक्याच ॥

स च, चिरकालोप्तसमुदितप्राचीननिरतिशयकृपाफलसारनिरुपधिनिजचरणकमलानुरागविलासाभिलाषबीजासु, ततो निजपरिजननिरोधतः प्रियावलोकननिमित्तं कृतप्रतिक्षणविविधव्याजजनितगतागतकर्षितासु, ततो दिवा प्रियवनगमनजनितविरहतरणितापतप्यमानान्तःकरणकेदारासु ततो निशामुखे प्रियागमनसंपन्नेष्टावलोकनसेचनजनितहसितवलितविवशतरलरुचिरविलोचनयुगलविहितविविधनिरव-

सुवर्णसूत्रम् ।

णान्नावतरणमावृत्तिः, किन्तु संसारे पुनरागमनम्, तत्तु तेषां नास्तीति न श्रुतिन्यायविरोध इत्यर्थः । अत्र वाक्यकारसंमतिमप्याहुः—मुक्तेत्यादि ॥

अतिशयितानुग्रहमात्रसाध्यतामुदाहरणप्रदर्शनेन स्फुटीकुर्वन्ति—स चेत्यादि । अत्र

हरितोषिणी ।

मानवमावर्तम् । संसारमित्यर्थः । तदेवाहुः—न हीति । तेषाम् ब्रह्मभावापन्नानाम् । मुक्तानां शरीरधारणं स्वेच्छयेत्यत्र वाक्यकारसम्मतिमाहुः—मुक्ता अपीति ॥

विशेषानुग्रहेण साध्यत्वमुदाहरणप्रदर्शनेन स्फुटीकुर्वन्ति—स चेति । विशेषानुग्रहश्चेत्यर्थः । चिरकालेति । चिरकालं यथा भवति तथा उप्तम् । उप्तशब्देन बीजवापनम् । समुदितं च यत् प्राचीनं निरतिशयितं कृपाफलं तस्य सारभूतो यो निरुपधिः उपाधिरहितो यो निजचरणकमलानुरागस्तस्य यो विलासस्तत्राभिलाषरूपं बीजं यासु । पुनर्विशेषणान्तरमाहुः—तत इति । निजेति । निजा ये परिजनाः श्वशुरादयः, तेषां निरोधात्प्रियस्य श्रीकृष्णस्य यदवलोकनं तन्निमित्तं यत् कृतं प्रतिक्षणं विविधं व्याजं तेन जनितं यद् गतागतं तेन कर्षितासु । पुनर्विशेषणान्तरमाहुः—तत इति । दिवेति । दिवा दिवसे प्रियस्य वने यद्गमनं तेन जनितो विरहतरणितापस्तेन तप्यमानमन्तःकरणकेदारं यासु । पुनर्विशेषणान्तरमाहुः—तत इति । निशेति । प्रदोषसमये प्रियस्य श्रीकृष्णस्य यदागमनं, तेन संपन्नं यदिष्टावलोकनं, तदेव सेचनं, तज्जनितं यद्धसितं, तेन वलितं

गङ्गाधरभट्टी ।

तदेवाहुः—मुक्ता अपीति । स चेति । नन्दकुमार इत्युत्तरेणान्वितम् ॥

---

टिप्पणी ।

* लीलाविग्रहमिति । लीलार्थं विग्रहम् । एतेन जीवन्मुक्तपरताऽस्य व्यावर्त्यते, तेषां पूर्वविग्रहस्य सत्वात्, लीलाविग्रहकरणाभावात् ॥

धिरसभावाङ्कुरासु, ततोऽतिविपुलकलिन्दजापुलिननभोवलयगतनिजमुरलिकाकलनिनदगर्जितानन्दितास्वेव कासुचिद् भूमिषु श्रीमन्नन्दराजकुमारो नवजलदो निजानन्दसुधां ववर्षेति तथैव सर्वत्र वर्षिष्यतीति न ज्ञातुं शक्यते । अतो मर्यादया तद्भजनमेव सर्वेषां कर्तव्यत्वेन स्थितम्, तेनैव सर्वमिति दिक् ॥

एतच्च दशमस्कन्धविवरणे मृद्भक्षणवरदानार्थागमनादिस्थलेषु पितृचरणैरेव स्फुटं निरूपितमित्यलं विस्तरेण ॥

## सुवर्णसूत्रम् ।

रामेण सार्द्धमित्यादीनि वाक्यान्येवंविधानीतराण्यपि प्रमाणत्वेनानुसंधेयानि । स्थितमिति । सूत्रादौ निर्णीतम् । तर्ह्यनुग्रहविशेषेप्सोः का गतिरित्यत्र आहुः—तेनेत्यादि । बीजसत्तायामेतद्देयाङ्कुरसाधनम् । अग्निकुमारादिभिस्तथैव कृतत्वादित्यर्थः । तदेव स्फुटीकुर्वन्ति—

एतच्चेत्यादि । एतदिति । विशेषानुग्रहसाध्यं क्रीडार्थत्वम् ॥

नन्वेवं सन्नधर्मबोधनाय व्युचरणकथनमयुक्तम् । जीवस्य मुक्तौ ब्रह्मणि प्रवेशेनैक्यरूपे अभेदे तादात्म्यस्य निवृत्तत्वेन जीवेऽपि निरङ्कुशैश्वर्यप्रकृतिनियामकत्वादीनामसाधारणब्रह्मधर्माणामापत्त्या महानेवानय इत्याशङ्कायां तन्निरासाय पूर्वोक्तानुगुणमेव पक्षान्तरमाहुः

## हरितोषिणी ।

वलयायितं विवशं तरलेन चाञ्चल्येन रुचिरं यन्निलोचनयुगलं, तेन विहितः विविधनिरवधिरसभावाङ्कुरो यासु । प्रथमं विशेषणमाहुः—तत इति । अतिविपुलेति । अतिविस्तीर्णं यद् यमुनापुलिननभोवलयं, तत्र गतं यन्निजमुरलिकाकलनिनदगर्जितं, तेनानन्दितासु । कासुचिदित्यनेन बाहुल्याभावः सूचितः । अत एव ज्ञानमार्गेऽपि श्रीभगवता गीतायामुक्तं 'कश्चिन्मां वेत्ति तत्त्वत' इति । ननु सर्वत्र वर्षिष्यतीत्यनेन साधनं विनैवेदं भगवत्कृतकृपया भविष्यतीति ज्ञायते, अत एव 'निःसाधनफलात्माऽयं प्रादुर्भूतोऽस्ति गोकुल' इति निबन्धोक्तं संगच्छते, एवं सति साधने यत्नो न कर्तव्य इत्याशङ्क्यात आहुः—मर्यादयेति । स्थितमिति । सर्वत्र सूत्रे भाष्ये चोक्तमित्यर्थः । तेनैवेति । एवकारेण तदतिरिक्तं साधनं नास्तीति सूचितम् ॥

अत्रोपष्टम्भकमाहुः—एतच्चेति मुक्तानामपि क्रीडार्थमागमने विशेषानुग्रहसाध्यत्वं चेत्यर्थः ॥

## गङ्गाधरभट्टी ।

एतच्चेति । साक्षात्क्रीडार्थत्वम ॥

यद्वा जीवत्वादिवदंशत्वमप्येकः पृथग्धर्मो जीवे निरूप्यते श्रुत्या, अतो नानुपपत्तिः काचित् ॥

### सुवर्णसूत्रम् ।

—*यद्वेत्यादि । अयमर्थः—स्मृतौ सूत्रे चांशशब्द( उक्तः )श्रुतौ पादशब्दः । उभावपि संदिग्धौ । अंशशब्दस्यावयवे, पुत्रे, पत्न्यां, खण्डे, विशिष्टवस्त्वेकदेशे, राश्येकदेशे च प्रयोगदर्शनात् । यद्यपि पत्न्यां तथा न प्रसिद्धस्तथापि 'अर्द्धो वा एष आत्मनो यत्पत्नी'ति 'स आत्मानमेव द्वेधापातयत्ततः पतिश्च पत्नीचाभवतां तस्मादेतदर्द्धबृगलमिवे'ति श्रुतिभ्यां तथा निश्चीयते, 'पुंस्यर्द्धोर्द्धं समेंशक' इति कोशाच्च । पादशब्दोप्यवयव एकदेशे च । तत्रावयवे प्रसिद्ध एव, एकदेशे तु 'वैश्वानरः प्रथमपाद' इति । यद्यप्येतेषु यस्य कस्याप्यर्थस्य ग्रहणे लक्षणादोषसंसर्गो न भवति, तथापि श्रुता 'चूर्णनाभिस्तन्तुनोच्चरेत्' 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ती'ति दृष्टान्तद्वयपूर्वकं व्युच्चरणस्यैवोक्तत्वात्, श्रीभागवते द्वितीयस्कन्धादौ सृष्टिप्रकरण ऊर्णनाभिदृष्टान्तस्यैवोक्तत्वाच्च व्युच्चरणार्ह एवांशपदार्थो ग्राह्यः । सोऽपि तन्नित्यत्वादिश्रुत्यनुरोधादविकृतस्वरूप एवांशो ग्राह्यः । तादृशश्च खण्डावयवादिरूप एव भवितुमर्हति, न तु नित्य-

### हरितोषिणी ।

अन्यदपि पक्षान्तरमाहुः—यद्वेति । श्रुत्येति । 'पादोऽस्य विश्वाभूतानी'ति श्रुतेरर्थः । पादशब्द एकदेशे अवयवे च । श्रुता'चूर्णनाभिस्तन्तुनोच्चरेत्' 'यथाऽग्ने'रि-

### गङ्गाधरभट्टी ।

भेदवादिनां रीत्याऽऽहुः—यद्वेति । जीवभावानन्तरं पृथग्भूतानां समवेतत्वाभावाच्छिन्नकरचरणादीनामिव मुख्यमंशत्वं नास्ति, तथापि श्रुत्या निरूपणाद्गौणमपि मुख्यवृत्तमिति भावः । जीवो यावन्महाप्रलयं भिन्न एव, महाप्रलये स्वभिन्न एव जायत इति विस्तरेण निरूपितमस्माभिर्गोविन्दविलासे रामानुजाचार्यमतविचारे ॥

---

### टिप्पणी ।

* यद्वेति । पूर्वं दृष्टान्तमुखेनांशत्वं सर्वसाधारणमुक्तं, यद्वेत्यादिना दार्ष्टान्तिक एव 'सूत्रस्मृतिभ्यामंशत्वमखण्डविषयताविशेषरूपमुच्यते' इति लेखकृतः ॥

## सुवर्णसूत्रम् ।

भिन्नरूपः । *तत्त्वत्रयस्वभावविवेकस्य युष्माभिरप्यङ्गीकृतत्वेनाविभागदशायां विशेषफलभोगाभावेऽपि स्वस्मिन्नहमितरभिन्न इति तस्य प्रतीतेरर्थसिद्धत्वात् । एवं सति 'बहु स्या'मितीच्छया बहुत्ववत् 'प्रजायेये'तीच्छया पूर्वोक्तवैचित्र्याय जीवस्याणुत्वादयो यथा जीवे संपादितास्तथांशत्वमप्येकः पृथगेव धर्मः संपादित इति स इव सोपि श्रुत्या निरूप्यते । 'पादोऽस्य विश्वा भूतानी'ति । तेन प्रवेशेप्यंशत्वेन तत्रैव प्रवेशात् । 'चैत्यस्य तत्त्वममलं मणिमस्य कण्ठ' इति कौस्तुभे वा कुन्तलेषु वा प्रवेशात् । 'अर्द्धो वा एष आत्मनो यत्पत्नी'तिश्रुत्या लक्ष्म्यादीनामपि तदंशत्वेनास्य मुक्तावपि तत्रैव वा लयाद्यो-पाभावेनांशपदस्य मुख्यवृत्तत्वेऽपि श्रुत्यादौ न काचिदनुपपत्तिरित्यर्थः । एतेनाभेदो वास्तवो भेदस्त्वौपाधिक इति भास्कराचार्योक्तमपि दत्तोत्तरम् । समञ्जसे भेदस्य स्वाभाविकत्वे औपाधिकत्वोपगमस्यान्याय्यत्वादिति । एवमत्रांशत्वस्य समर्थनेन तादात्म्यं दृढीकृतम् ॥

न च सिद्धान्तमुक्तावल्यामाचार्यैः 'रात्मनि ब्रह्मरूपे तु छिद्रा व्योम्नीव चेतना' इत्यनेनावच्छेदवादस्योक्तत्वात्तादात्म्यवादे तद्विरोधः शङ्क्यः । तत्र ह्यात्मविषये निर्णय उच्यते इति प्रतिज्ञाय ब्रह्मरूपे अक्षरे चेतना जीवाः व्योम्नि छिद्रा इव । लिङ्गमविवक्ष्यम् । छिद्राणि इव । अणुत्वबोधनाय दृष्टान्त इति व्याख्यानात् । तेन व्युच्चरणोत्तरमुपाधिव्याप्त्या विपरीतधर्माणां प्रतीतिर्न ब्रह्मधर्माणाम् । उपाधिनेच्छाप्रयुक्तेन तत्तिरोधानादिति ॥

## हरितोषिणी ।

त्वादिदृष्टान्तद्वयपूर्वकव्युच्चरणस्यैवोक्तत्वात् । श्रीभागवतद्वितीयस्कन्धादौ सृष्टिप्रकरण ऊर्णनाभिदृष्टान्तस्योदितत्वाच्च व्युच्चरणादेः एवांशपदार्थो ज्ञेयः ॥

---

## टिप्पणी ।

* तत्त्वत्रयस्वभावेति । चिदचिद्ब्रह्मणां स्वरूपभेदः । विशेषफलभोगाभावेऽपीति । जीवस्येति शेषः । तस्येति । भगवतः । एवं सतीति । नित्यभेदेऽनुपपन्ने सति । अत्रायमाशयः—नित्यभिन्नस्य जीवस्य भगवति लयेऽप्यविभागमात्रं वक्तव्यम् । एवं सति तद्भेदप्रतीतेर्भगवतः स्वस्मिन् सत्त्वेन सिसृक्षतस्तस्य 'एकोऽहं बहुस्या'मिति सङ्कल्पो नोपपद्यते । अतस्तादात्म्यमेवाभ्युपेयम् । अयमाशयो द्वितीयाध्यायतृतीयपादान्ते भाष्यप्रकाशे व्यक्तः ॥

जीवप्रवेश-विषये वि-चारः ।

(२५) ननु पूर्णे पुरुषोत्तमे जीवस्य प्रवेशोऽशक्यनिरूपणः । स हि बहिःस्थस्यान्तर्गमनरूपः । तयोश्च परिच्छिन्ने एव पदार्थे संभवः । तथा च ब्रह्मणोऽपरिच्छिन्नत्वान्न संभव इति चेद्, हन्त! एवं विभागांशत्वादिकमप्यशक्यनिरूपणं जीवस्य । तत्तु श्रुतिन्यायाभ्यां निर्णीयत इति चेत्, तुल्यम् । वस्तुतस्तु यथा सर्वतः पाणयः पादा अन्ताश्चेति श्रुत्या ब्रह्मणि निरूप्यन्ते, तथा प्रवेशनिर्गमोक्त्याऽन्तस्त्वबहिष्ट्वे अपि तत्र स्त इति मन्तव्यम् । एवं सति यथेमे, तथा प्रवेशनिर्गमावपीति नोक्तानुपपत्तिः । किञ्च, उपाधिपक्षे प्रवेशः सुतरामसङ्गतः । तदोपाधेर्नाशाङ्गीकारात् कस्य प्रवेशः स्यात् ॥

## सुवर्णसूत्रम् ।

(२५) पुनर्मायावादिभट्टभास्करयोर्मतेन चोद्यमाहुः—ननु पूर्ण इत्यादि । समादधते —हन्तेत्यादि । तुल्यमिति । 'उदके प्रास्त उदकमेवानुविलीयेत नाहास्योद्ग्रहणायेव स्या'दित्यादिश्रुत्याऽस्यापि निर्णयेन परिहारसाम्यान्नायं पर्यनुयोगो युक्तः । 'यत्रोभयोः समो दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोज्यः स्यात्तादृगर्थविचारणे' इति न्यायादित्यर्थः । प्रतिबन्देरत्रोत्तरत्वेऽपि बहुप्रमाणसिद्धत्वाय श्रुतार्थापत्तिमपि प्रमाणयन्ति—वस्तुत इत्यादि । उक्तदाढर्याय वादिबाधकं तर्कमाहुः—किञ्चेत्यादि । तदेति । मुक्तदशायाम् । तथा च भवन्मते श्रुतिविरोधो लक्षणा वा, अस्माकं तु नैकोपि दोष इत्यर्थः ॥

## हरितोषिणी ।

(२५) जीवस्यांशत्वे शङ्कते—नन्विति । तयोरिति । प्रवेशनिर्गमनयोरित्यर्थः । समाधानमाहुः—हन्तैवमिति । विभागांशत्वादाविषमाशङ्का न कृतेति खेदो हन्तेत्यनेन द्योत्यते । तयोस्तु श्रुतिसिद्धत्वान्न खेद इत्याहुः—तत्त्विति । प्रतिबन्द्योत्तरमाहुः—तुल्यमिति । 'उदके प्रास्त उदकमेवानुविलीयेत नाहास्योद्ग्रहणायेव स्या'दिति बृहदारण्यश्रुतिरत्राप्यस्तीति तुल्यमित्यर्थः । प्रतिबन्दिः साम्यं सूचयतीत्यतः समाधानान्तरमाहुः—वस्तुतस्त्विति । श्रुत्येति । 'सर्वतः पाणिपादान्तं सर्वतोक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठती'ति गीतारूपश्रुत्येत्यर्थः । इमे अन्तस्त्वबहिष्ट्वे । एतावता दृष्टान्तकथनेन प्रवेशनिर्गमौ ब्रह्मणि श्रुतिसिद्धाविति त्वयाऽपि स्वीकार्यौ, तथा च त्वन्मते महती विनष्टिरित्याहुः—किञ्चेति । उपाधीति । तव मते मोक्षात्पूर्वमुपाधिः स्वीक्रियत इति पक्षे इत्युक्तम् । तदेति । मुक्तावस्थायामुपाध्यपगमे जीवो यदि ब्रह्मरूपः स्यात्तर्हि प्रवेशः कस्य स्यात्, प्रवेशस्तूक्तो वर्तते, तस्माज्जीवो ब्रह्म न भवतीत्ययं बाधकतर्कस्तव मते इति भावः ॥

ननु प्रवेशं निरूपयति श्रुतिरिति सत्यम्, परमेतद्वाक्यार्थबोध एव न संभवति, अयोग्यताज्ञानादिति चेद् । अत्रेदं विचार्यते—दोषो हि शब्दगतः श्रोतृगतो वा भवेत् । अत्र च शब्दस्यादुष्टत्वाच्छ्रोतृगत एव स वाच्यः । तथा चापगताविद्यानां ब्रह्मविदामेवानुभूतिविषयमुपदेशैकसमधिगम्यं ब्रह्म निरूपयन्ती श्रुतिरविद्यावलिप्ताल्पबुद्धीनां ग्रहणासामर्थ्येनायोग्यताज्ञानेन नान्यथयितुं शक्या । न ह्युपदेशैकगम्यं हीरकमन्त्रादेर्माहात्म्यं साधारणजनानुभवाविषय इत्युपासिततद्गुरूणामप्यविषयः । न वा पित्तदूनरसनेन्द्रियस्येदंप्रथमतया सितां भक्षयतः, सिता मिष्टेति वाक्ये अयोग्यताज्ञानं वाक्यार्थमन्यथयितुमीष्टे । न वा तस्यैव

सुवर्णसूत्रम् ।

स्वोक्तं समर्थयितुं नैयायिकादिरीत्या चोदयन्ति—ननु प्रवेशमित्यादि । उपगम्य समादधते—अत्रेत्यादि । इदमिति । बोधाभावकारणम् । दोष इति । अज्ञानकारण-

हरितोषिणी ।

'आत्मनो वपामुदक्खिदत्तामग्नौ प्रागृह्णात्ततोऽजस्तूपरः समभव'दिति तैत्तिरीयसंहितायां द्वितीयाष्टके प्रथमप्रश्ने इदं वाक्यं पठितम् । तत्र स्वीयशरीरवपोत्खननमयोग्यमित्ययोग्यताज्ञानाच्छाब्दबोधाभावेनेदं वाक्यं स्वार्थे प्रमाणं न भवतीति यथा वपाहोमे प्राशस्त्यबोधकमर्थवादरूपं, तथा प्रवेशवाक्यमपि स्वार्थे अयोग्यताज्ञानादुपाध्यपगमे जीवस्य ब्रह्मस्वरूपत्वबोधकमस्तु, तथा च न महती विनष्टिरित्याशयेन शङ्कते—नन्विति । वाक्यार्थबोध एवेति । शक्त्येति शेषः । अयोग्यताज्ञानादिति । तथा जीवो ब्रह्मस्वरूप इति लक्षणया प्रवेशवाक्याद्बोधो भविष्यतीति भावः । समाधानमाहुः—अत्रेति । प्रवेशं निरूपयति श्रुतिर्बोधस्तु न जायत इत्यत्र कारणं दोष इति बोधाभावकारणीभूतो दोष इत्यर्थः । सः दोषः । दोषस्य श्रोतृगतत्वं विशदयन्ति—तथा चेति । श्रुतिरिति । नान्यथयितुं शक्येत्यन्वयः । अत्र दृष्टान्तमाहुः—न हीति । हीरकेति । हीरकशब्देन वज्रं मणिर्वा । तथा च मणिमन्त्रादेर्माहात्म्यमित्यर्थः । अपरं दृष्टान्तमाहुः—न वेति । पित्तेति । पित्तेन दूनं दुष्टं, तेन रसनेन्द्रियेण सिता यदा भक्षिता, तदा सा तिक्ता लग्ना । अनन्तरं केनचित्पुरुषेण सिता मिष्टेति वाक्यं प्रयुक्तम् । तत्रायोग्यताज्ञानं तादृशपुरुषस्य जातम् । तेन कृत्वा तद्वाक्यमप्रमाणं न भवतीति भावः । पित्तेन सिता तिक्ता लगति, तत्र प्रमाणं नैषधे तृतीयसर्गे हंसं प्रति दमयन्तीवाक्यं—'पित्तेन दूने रसने सिताऽपि तिक्तायते हंसकुलावतंसे'ति । न वेति । तत्र सिता मिष्टेति वाक्ये

दोषापगमे सति न योग्यताज्ञानसंभवस्तत्र । अत एव, "*आचार्यवान् पुरुषो वेदे'ति श्रुतिः । अतो यथाश्रुतमेव मन्तव्यम् । अत एव सूत्रकारोऽपि जगति ब्रह्मण उपादानत्वे कृत्स्नप्रसक्त्यादिशङ्कापरिहाराय, 'श्रुतेस्तु शब्दमूलत्वा'दित्येवाह ॥

(२६) ननु प्रवेशकथने जीवस्य व्यापकत्वव्याहतिरिति चेद्, हन्तैवं शशस्यापि निजशृङ्गभङ्गभिया तनूदरकन्दराप्रवेशः ॥ जीवो नाणुरिति पूर्वपक्षिमतम् ।

सुवर्णसूत्रम् ।

भूतो दोषः । सिद्धान्तयुक्तेः पोषणाय प्रमाणमाहुः—अत एवेत्यादि । एवमत्र कारिकोक्तं अंशत्वं व्युत्पादितम् ॥

(२६) अतः परमणुत्वं व्युत्पादयितुं चोद्यमाहुः—नन्वित्यादि । इष्टापत्त्या समादधते—हन्तेत्यादि । एवं व्यापकत्वव्याहत्यापत्तौ शशस्यापि तथा तदप्रवेश आपद्येतेत्युपहासः ॥

हरितोषिणी ।

न योग्यताज्ञानसंभव इति । न वेति पूर्वेणान्वयः । तथा च दोषापगमे तस्य यथा योग्यताज्ञानं जायते, तथा आचार्य्योपदेशेन भगवत्कृपया वाऽविद्यापगमे ब्रह्मविदो योग्यताज्ञानं जायत इति भावः । अत्र प्रमाणमाहुः—अत एवेति । यथाश्रुतमेवेति । शक्त्या यथा शाब्दबोधो जायते, तथैव स्वीकर्तव्यमित्यर्थः । अत्रोपष्टम्भकमाहुः—अत एवेति । एतावता प्रबन्धेन जीवस्यांशत्वं निरूपितम् ॥

(२६) इदानीं तस्याणुत्वं स्थापयितुं प्रथमतः शङ्कते—नन्विति । उपहासपूर्वकं समाधानमाहुः—हन्तेति । तनूदरेति । तनु स्वल्पमुदरं यस्याः एतादृशी गुहेत्यर्थः । शशस्य शृङ्गमेव नास्ति, कुतस्तस्य भङ्ग इति तद्भिया तस्य यथा तनूदरकन्दरायामप्रवेशस्तथा जीवस्य व्यापकत्वमेव नास्तीति तद्भङ्गभिया जीवस्य ब्रह्मण्यप्रवेश इत्युपहास इति भावः ।

गङ्गाधरभट्टी ।

(२६) शशस्यापि निजशृङ्गेति । एतद्यथा मिथ्या, तथा जीवव्यापकत्वमपीति भावः । 'यस्मिन् प्राणः पञ्चधे'ति । एतेन लिङ्गेन आत्मा परमात्मा अणुर्द्रष्टव्य इत्यपास्तं व्याख्यानम् ॥

---

टिप्पणी ।

* आचार्यवानिति । अनया श्रुत्या न गुरूपसत्तिर्विधीयते, अपि त्वाचार्यवत्त्वस्य वेदने हेतुत्वं बोध्यते । आचार्यवतां केषांचन ज्ञानादर्शनेऽपि न कारणत्वहानिः, कारणान्तराऽसमवधानेन तथात्वसंभवात् । यथा मृदाद्यन्यतमासमवधाने घटानुत्पत्तावपि न कारणकलापान्तःपातिनामवशिष्टानां कारणत्वहानिः । आचार्यवत्त्वं चानुशासनसम्बन्धेन, 'आचार्योऽन्तेवासिनमनुशास्ती'ति श्रुतेः ॥

यतोऽणुरेव जीवः । कुत एतत्? । श्रुतित एव । तथाहि,–'आराग्रमात्रो ह्यवरोऽपि दृष्टः, 'वालाग्रशतभागस्य शतधा कल्पितस्य तु । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते, 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेशे'त्यादिभ्यः ॥

स्यादेतत्, नाणुर्जीवो वक्तुं युक्तः । श्रुतिस्मृतिविरोधात् । तथाहि— 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु', 'आकाशवत् सर्वगतश्च नित्यः', 'नित्यः सर्वगतः स्थाणु'रित्यादिषु व्यापकत्वश्रवणात् 'तत्त्वमसी'त्यादिभिर्ब्रह्माभेदनिरूपणाच, न हि तत्त्वतोऽणोर्व्यापकाभेदः संभवति ॥

किञ्च, जीवस्याणुत्वे सर्वशरीरगतचैतन्यानुपलम्भप्रसङ्गः । न च यथैकदेशस्थचन्दनबिन्दुशैत्योपलम्भः सकलशरीरव्यापकतया भवत्येवमे-

सुवर्णसूत्रम् ।

श्रुत्या व्यापकत्वे निरस्ते तस्या अनिर्णायकत्वं बोधयितुं श्रुत्यन्तरेण पुनः प्रत्यवतिष्ठते —स्यादेतदित्यादि । वक्ष्यमाणरीत्या व्यापकत्वं स्यादित्यर्थः ॥

नैयायिकादिमतेनापि जीवाणुत्वं दूषयति—किञ्चेत्यादि । 'अविरोधश्चन्दनव'दिति सूत्रोक्तमाक्षिपति—न चेत्यादि । 'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि ही'ति सूत्रोक्तयुक्त्या एकदेशस्थायित्वनिश्चयेनोक्तयुक्तिं दूषयित्वाऽनुमानेनाणुत्वं सिसाध-

हरितोषिणी ।

जीवे व्यापकत्वाभावं समर्थयन्ति—यत इति । अथ वा ननूपहासः कृतः, परन्तु वास्तविकं नोक्तमित्यत आहुः—यत इति । श्रुतीरेवाहुः—तथा हीत्यादिना । श्रुत्यर्थः स्पष्ट एव ॥

जीवस्य व्यापकत्वबोधकश्रुतिप्रामाण्यमादाय शङ्कते—स्यादेतदिति । विरोधमेवाहुः— तथा हीत्यादिना । स्मृतिमाहुः—नित्यः सर्वगत इति ॥

यदवच्छेदेन यस्य यत्र सत्वं तदवच्छेदेन तत्र तद्गुणोपलम्भ इति नैयायिकरीत्याऽपि जीवस्याणुत्वं वारयन्ति—किञ्चेति । शङ्कते—न चेति । एतेन 'अविरोधश्चन्दनव'दितिसूत्राशयो वर्णितः । तथा च चन्दनदृष्टान्तस्य सत्वान्नैयायिकरीतिरप्रयोजिकेति

गङ्गाधरभट्टी ।

स्यादेतत् । वक्ष्यमाणदूषणं न स्याच्चेदेतत्स्यादित्यर्थकमिदं प्रसिद्धम् ॥

किञ्चेत्यादि । नैयायिकरीत्या विभुत्वखण्डने ॥

कदेशस्थजीवचैतन्योपलम्भोऽपीति वाच्यम् । दृष्टान्ते एकदेशस्थाधिक्त्वस्य प्रत्यक्षतो निश्चितत्वेन दार्ष्टान्तिके च संदिग्धत्वेनोभयोर्वैषम्यात्। न च, *सर्वशरीरव्यापि चैतन्यं स्वधर्म्यधिकदेशवृत्ति; विसर्पिगुणत्वात्, शरीरैकदेशस्थचन्दनजन्यसर्वशरीरव्यापिशैत्यवदित्यनुमानेनाणुत्वं साधयितुं शक्यम्। हेत्वसिद्धेः । साध्याविशिष्टत्वाच । एकदेशवृत्तित्वे

सुवर्णसूत्रम्।

विपोरनुमानं दूषयति—न च सर्वेत्यादि । हेत्वसिद्धेरिति । हेत्वप्रसिद्धेः । साध्या-

हरितोषिणी।

भवः। समाधानमाहुः—दृष्टान्त इति । एकदेशस्थेति । शरीरैकदेशस्थेत्यर्थः । दार्ष्टान्तिक इति । जीवात्मनीत्यर्थः । संदिग्धत्वेनेति । भवन्मते अणुत्वं, मन्मते व्यापकत्वमिति विवादास्पदत्वेन संदेहविषयत्वेनेत्यर्थः । एतेन 'अवस्थितिवैषम्यादिति चेन्नाभ्युपगमाद्धृदि ही'ति सूत्रोक्तं दूषितम्। अनुमानेन अणुत्वं साधयितुं पुनः शङ्कते—न चेति। सर्वशरीरव्यापिचैतन्यं पक्षः, स्वधर्म्यधिकदेशवृत्तित्वं साध्यं, विसर्पिगुणत्वं हेतुः। स्वधर्म्येति। स्वं जीवः तस्य धर्मि हृदयं तदधिकदेशः सर्वशरीरं तद्वृत्तित्वं चैतन्ये वर्तत इति पक्षे साध्यसत्त्वम्। विसर्पीति । विसर्पि प्रसरणशीलं, तत्त्वे सति गुणत्वं हेतुः; सोऽपि पक्षे चैतन्ये वर्तत इति साध्यसामानाधिकरण्यरूपव्याप्तिसत्त्वम्। चैतन्यस्य ज्ञानरूपत्वेन गुणत्वात्तन्निष्ठं प्रसरणशीलगुणत्वं बोध्यम् । अत एव चैतन्यं ज्ञानादिकमेवेति मुक्तावल्यामुक्तम् । दृष्टान्ते साध्यहेत्वोः सत्त्वं प्रतिपादयितुमाहुः—शरीरैकेति। सर्वशरीरव्यापिशैत्ये दृष्टान्ते साध्यहेत्वोः सत्त्वमस्ति । कथं? स्वं चन्दनं, तस्याश्रयो धर्मी शरीरैकदेशस्तदधीकदेशः सर्वशरीरं, तद्वृत्तित्वं शैत्ये वर्तते, अथ च विसर्पिगुणत्वमपि वर्तत इति कृत्वा दृष्टान्तेऽपि साध्यव्याप्तिर्हेतौ गृह्यत इत्यर्थः । समाधानमाहुः—हेत्वसिद्धेरिति। चैतन्ये विसर्पिगुणत्वं वर्तत इति केन ज्ञायत इति हेत्वप्रसिद्धेरित्यर्थः।

---

टिप्पणी।

* सर्वशरीरव्यापीत्यादि । न चैवं पक्षतावच्छेदकज्ञानादेव साध्यसिद्धेः सिद्धसाधनम्। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् । संयोगसम्बन्धेनात्मशून्ये तत्तच्छरीरावयवे समवायेन स्वरूपेण वा वृत्तित्वं साध्यम्। परिच्छिन्नवृत्तिभिन्नगुणत्वं हेतुः। य एवंविधो गुणः स स्वाश्रयाधिकदेशवृत्तिरिति सामान्यतोमुखी व्याप्तिरिति लेखकाराः॥

हेत्वसिद्धेरिति। गुणस्य विसर्पित्वं स्वसमवायिभिन्नवृत्तिकत्वमेव स्वरूपेण, तचात्र चैतन्यस्यासिद्धम्, आत्मनोऽणुत्वसिद्धौ तत्सिद्धेः। एवं च हेतुतावच्छेदकस्य विसर्पित्वस्यासिद्ध्या तदवच्छिन्नहेतोरप्यसिद्धिः। स्वरूपेण स्वसमवायिभिन्नवृत्तिकत्वं स्वधर्म्यधिकदेशवृत्तित्वं चैकमेवेति साध्यमसत्त्वम्। लेखकारास्तु साध्याविशिष्टपदेन सिद्धसाधनमित्याहुः॥

सिद्धे जीवस्य चैतन्यस्य विसर्पिगुणत्वसिद्धिरेतत्सिद्ध्या च तत्सिद्धिरित्यन्योन्याश्रयत्वाच । चन्दनसूक्ष्मावयवानां सर्वदेहप्रसर्पणेनापि शैत्योपलम्भस्य संभवे दृष्टान्तासिद्धेश्च।एतेनैव चम्पकगन्धोऽपि प्रत्युक्तः। न हि गुणिनं विना गुणे क्रियासंभवः । अतिप्रसङ्गात् । चम्पकदेशाधिकदेशे गन्धग्रहस्तु तदवयवानामपि वायूपनीतानां तत्र सत्वेन । न चैवं तन्नाशापत्तिः । भोग्यादृष्टेनैव तदवयवपूरणसंभवात् । अन्यथानुपपत्तेर्बलिष्ठत्वात् । दृष्टासंभवे सत्यदृष्टकल्पनाया न्याय्यत्वात् । न च मणिप्रभावत्तदुपपत्तिः । तस्यास्तज्जनितविरलसजातीयद्रव्यान्तरत्वात् । एतेनैव प्रदीपसूर्यादयः प्रत्युक्ताः । श्रुतावणुत्वनिरूपणं तु दुर्ज्ञेयत्वाभिप्रायम् । तस्मान्नाणुर्जीवः ॥

सुवर्णसूत्रम् ।

विशिष्टत्वादिति । हेतोः साध्यसमत्वात् । 'व्यतिरेको गन्धव'दिति सूत्रोक्तं दूषयति —एतेनेत्यादि । 'गुणाद्वा लोकव'दिति सूत्रोक्तं दूषयति—न च मणीत्यादि ॥

हरितोषिणी ।

अत एव दूषणान्तरमाहुः—साध्येति । दृष्टान्ते हेतौ साध्यसामानाधिकरण्याभावादित्यर्थः । दूषणान्तरमाहुः—एकदेशेति । जीवस्य एकदेशवृत्तित्वे सिद्ध इत्यन्वयः । एतत्सिद्ध्येति । चैतन्यस्य विसर्पिगुणत्वसिद्ध्येत्यर्थः । चन्दनेति । तथा चैकदेशस्थचन्दनसूक्ष्मावयवानामेव सर्वशरीरप्रसर्पणं, न तु शैत्यस्येति भावः । प्रत्युक्त इति । चम्पकसूक्ष्मावयवानामेव दूरदेशगमनं, न तु केवलं गन्धस्येति । ननु कुतो नास्तीत्यत आहुः—न हीति । चम्पकावयवरूपद्रव्यं विना तन्निष्ठगन्धे गमनक्रिया न संभवति, कर्मणो द्रव्यवृत्तित्वेन गुणवृत्तित्वाभावादिति भावः । क्वचित्पुस्तके 'न हि गुणिनं विना गुणसंभव' इत्यपि पाठः । स समीचीनतया प्रतिभाति । अग्रे चम्पकदेशाधिकदेशे गन्धग्रहस्त्वित्यादिना गुणस्यैवोपादानात् । सिद्धान्ते 'न च गुणिनं विना गुणासंभवा'दित्युक्तत्वाच । अतिप्रसङ्गादिति । 'गन्धवती पृथिवी'ति लक्षणस्यातिव्याप्तेः । दृष्टासंभवेति । दृष्टस्यासंभवे सतीत्यर्थः । न्याय्यत्वादिति । उचितत्वादित्यर्थः । अत्र 'व्यतिरेको गन्धव'दिति सूत्रोक्तं दूषितम् । 'गुणाद्वा लोकव'दिति सूत्राशयेन शङ्कते—न चेति । तदुपपत्तिरिति । मणेः प्रभा मणिं विहायान्यत्र गच्छतीत्याशयः । समाधानमाहुः—तस्या इति । मणिस्त्वविरलः, प्रभा तु विरलत्वेनावान् विशेष इति सजातीयं द्रव्यान्तरमिति भावः । एतावता प्रबन्धेनाणुत्वं जीवस्य परमतरीत्या निराकृतम् ॥

(२७) अत्र वदन्ति

तत्वसूत्रानुसारेण वेदार्थस्य निरूपणे ।
जीवोऽणुरेव संसिद्ध्यत्यन्यथा त्वन्यथैव हि ॥

पूर्वपक्षम्निराकरणपुरःसरं जीवाणुत्वव्युत्पादनम् ।

भवेदेतदेवं, यदि 'स वा एष महा'नित्यादिभिर्जीवो निरूप्येत । तदेव तु न संभवति, ब्रह्मप्रकरणे पठितत्वात् । यतो बादरायणोऽप्याह, 'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारादि'ति । न चैवं सकलशरीरगतचैतन्योपलम्भानुपपत्तिः । चम्पकगन्धवदेवोपपत्तेः । न च गुणिनं विना गुणासंभवान्नैवमिति वाच्यम् । सम्बन्धिनं विनापि सम्बन्धस्य समवायस्याङ्गीकारो यथाऽक्षपादीयानां तथात्रापि तदुपपत्तेः । ननु रूपरसादीनामन्यत्रोपलम्भः स्यादिति चेत्, स्यादेवोपलम्भो, यदि स्वाश्रयमपहायान्यत्र तिष्ठेयुः । अथ द्रव्यं विहाय गन्धस्यान्यत्र सत्वे गुणसत्वे द्रव्यसत्त्वस्य नियामकत्वाभावाद्रसादीनामप्यन्यत्र गमनं स्याद्, अतोऽस्यावश्यं नियामकत्वेनाङ्गीकाराद् गन्धोपलब्धिस्थले चम्पकावयवानामपि सत्वमङ्गीकर्तव्यमिति चेत्;

सुवर्णसूत्रम् ।

(२७) एवं दूषितेऽणुत्वे प्राचां संमतिपूर्वकं तद्व्युत्पादयन्ति—अत्र वदन्तीत्यादि । एवमाक्षेपे प्राच्य एवमुत्तरं वदन्तीत्यर्थः । तदुक्तदूषणमनूद्य 'व्यतिरेको गन्धवदिति' सूत्रोक्तं प्रसाधयन्ति—न चैवमित्यादि । गन्धस्थलेऽवयवसत्त्वाङ्गीकारे अनिष्टमापाद-

हरितोषिणी ।

(२७) इदानीं तदेव स्वमतरीत्या व्यवस्थापयन्ति—अत्र वदन्तीति । वदन्तीत्यनेन जीवस्याणुत्वं प्राचीनैरेव व्यवस्थापितमिति भावः । तत्वसूत्रानुसारेण ब्रह्मसूत्रानुसारेण । शङ्कते—न चैवमिति । समाधानमाहुः—चम्पकेति । पुनः शङ्कते—न चेति । समाधानमाहुः—सम्बन्धिनमिति । अक्षपादीयानाम् नैयायिकानाम् । अत्रापि गन्धस्थले । शङ्कते—नन्विति । समाधानमाहुः—तिष्ठेयुरिति । तथा च केवलं गन्धस्यैव स्वाश्रयं विना दूरदेशे प्रतीतिर्जायत इति तत्रैवैवं स्वीक्रियत इति भावः । अत्र शङ्कते—अथेति । अङ्गीकर्तव्यमिति । रसादीनामन्यत्र गमनं न दृश्यत इति कृत्वा

गङ्गाधरभट्टी ।

(२७) 'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्' ब्रह्मणोऽधिकारात् । न च 'योऽयं विज्ञानमयः प्राणेष्वि'ति लिङ्गाज्जीवपरत्वं शङ्क्यम् । तस्यान्तःस्थत्ववर्णनेऽपि तस्मिन् प्राणप्रवेशावर्णनात् ।

ननु समवायस्यापि तथात्वाङ्गीकारे सम्बन्धसत्त्वे सम्बन्धिसत्वस्य नियामकत्वाभावात्संयोगादीनामप्यतिरेकापत्तौ तत्समाधानाय तस्य नियामकत्वेनाङ्गीकारात्तन्निर्वाहाय घटे नष्टेऽपि सूक्ष्मघटसत्त्वमङ्गीकुरु। ननु जन्यसम्बन्धसत्त्व एव संबन्धिसत्त्वस्य नियामकत्वमिति चेद्; अत्रापि गन्धातिरिक्त एव गुणे द्रव्यसत्वस्य नियामकत्वमिति तुल्यम् ॥

ननु सम्बन्धिनामनित्यत्वात् सम्बन्धस्य च नित्यत्वात् तदन्यथानुपपत्त्या जन्यपदोपादानम्, अन्यत्रोपलम्भानुपपत्तौ सत्यामपि तदवयवसत्त्वेनैवोपपत्तौ गन्धातिरिक्त इति व्यर्थं विशेषणं गौरवाच्चेति चेत्; न । प्रामाणिकत्वात् । दृश्यते हि विविधचर्मपुटवेष्टितस्यापि मृगमदस्य गन्धोपलम्भो वणिक्सार्थेषु । न हि तत्र तदवयवनिर्गमापूर्वतत्प्रवेशौ संभवतः । किञ्चैवं गन्धोपलम्भसमये प्रसारितमुखस्य तद्रसोपलब्धिप्र-

सुवर्णसूत्रम् ।

यन्ति—ननु समवायेत्यादि । गन्धातिरिक्त इति । इदं प्रतिबन्दित्वायोक्तं, न तु सिद्धान्तत्वेनेति ज्ञेयम् । स्यादेवेत्यादिना द्रव्याधिकदेशे गुणान्तरोपलम्भस्यापि पूर्वमभ्युपगतत्वात् । न वाऽप्रामाणिकत्वम् । शब्दस्य पृथिव्यादिपञ्चकगुणत्वेन भेर्यादिभ्योऽधिकदेशवृत्तित्वस्य दूरस्थवह्न्यौष्ण्यस्य सूर्यादिप्रभायाः निम्बविशेषच्छायास्थितिमात्रेण कटुकत्वस्यानुभवसाक्षिकत्वात् । इदं यथा तथा प्रश्नानरत्नाकरे व्युत्पादितमस्माभिः ॥

विशेषणवैयर्थ्यमनुभवबलेन परिहरन्तो गौरवस्य प्रामाणिकत्वं व्युत्पादयन्ति—दृश्यत इत्यादि । ननु मास्त्वपूर्वतत्प्रवेशः, परं निर्गमस्तु न वारयितुं शक्यः; ततो भारापगम-

हरितोषिणी ।

गुणसत्त्व इति नियमः स्वीकर्तव्यः । तेन चम्पकसूक्ष्मावयवानामन्यत्र गमनं स्वीकर्तव्यमिति भावः । इति चेन्नेत्यन्तं पूर्वपक्षः । समाधानमाहुः—समवायस्येति । कचित्पुस्तके ननु समवायस्यापीति पाठोऽस्ति । तत्र पूर्वपक्षोपरि प्रतिबन्द्या अयं पूर्वपक्ष इति ज्ञेयम् । तथात्वाङ्गीकारे सम्बन्धिनं विनाऽपि सम्बन्धसत्वाङ्गीकारे अतिरेकापत्तौ समवायवदतिरिक्तपदार्थापत्तौ तस्य सम्बन्धसत्वे सम्बन्धिसत्वस्य तन्निर्वाहाय सम्बन्धसत्त्व इति नियमनिर्वाहाय । समवायस्य नित्यत्वाभिप्रायेण शङ्कते—नन्विति । समाधानमाहुः—अत्रापीति ॥

शङ्कते—नन्विति । जन्यपदोपादानमिति । नियमे इति शेषः । समाधानमाहुः प्रामाणिकत्वादिति । अनुभवमाहुः—दृश्यत इति । दूषणान्तरमाहुः—किञ्चैवमिति ।

सङ्गः । तेषामवयवानां योग्यत्वात् । अन्यथा गन्धोऽपि नोपलभ्येत, गन्धस्योपलम्भे नियामकाभावाच । नन्वदृष्टमेव तथेति चेद्, अहो!! गौरवभीतिर्वावदूकस्य । यदवयवनिर्गमनं, पुनस्तदवयवपूरणं, तद्धेतोरदृष्टस्य च कल्पनं, रसाद्यनुभवप्रतिबन्धकादृष्टान्तरस्य च कल्पनं वदतोऽप्यसंकोचस्तुण्डस्य, गन्धातिरिक्तेतिमात्रकथने संकोचः । किञ्च, उग्रगन्धस्य कस्यचित्कुसुमस्य लशुनादेर्वा स्पर्शमात्रेऽपि ततो मुहुर्मृत्स्नया क्षालनेऽपि करस्य न तद्गन्धापगमोऽनुभूयते । स्पर्शमात्रलग्नतदवयवानां सकृत्प्रोञ्छनेऽप्यसहिष्णूनां सकृत्क्षालनेऽपि न स्थितिसंभवः, कुतस्तरां मुहुस्तथा करणे । अतो द्रव्याधिकदेशवत्त्वं गन्धस्य मन्तव्यम् । विनश्यदवस्थगुणानामनाश्रितत्वेनाङ्गीकारो यथा तव, तथा द्रव्याधिकदेशवृत्तित्वेनानुभवेऽपि कुरुष्व। अत एव सूत्रकारोऽपि सिद्धं दृष्टान्तमाहेमामेवाशङ्कां परिहर्तुमणुत्वसाधने, 'व्यतिरेको गन्धव'दिति। श्रुतिरपि, 'यथा वृक्षस्य संपुष्पितस्य दूराद् गन्धो वात्येवं पुण्यस्य क-

सुवर्णसूत्रम् ।

स्यानुभवसाक्षित्वादित्यत आहुः—किञ्चैवमित्यादि । योग्यत्वादिति । उद्भूतगुणवत्वात् । ननु मास्त्वदृष्टकल्पनं, तथापि त्रुटौ रूपवदेतेषु गन्धस्यैवोद्भूतत्वकल्पने कोपि न दोष इत्यत आहुः—किञ्चेत्यादि । ननु गुणानां द्रव्याविनाभावात्तत्रापि द्रव्यावयवसत्त्वमङ्गीकार्यमित्याशङ्क्य प्रतिबन्दिकथनमुखेनानाश्रितत्वाङ्गीकारे युक्तिं सूचयन्ति—विनश्यदित्यादि । तथा चाविनाभावस्य त्वन्मतेप्यभावाद्वियमानावस्थागुणानामुत्कटत्वं विशेषणं दत्वा तादृशानुभवेऽपि कुरुष्वेत्यर्थः । सूत्रोक्तं पुष्यन्ति—अत एवेत्यादि । ननु गौतमस्यापि महर्षित्वान्न व्यासोक्तमेकान्ततः साधीय इत्यत आहुः—श्रुतिरित्यादि । तथा

हरितोषिणी ।

तेषामिति । गन्धाश्रयीभूतानाम् । योग्यत्वात् तत्तदिन्द्रियग्राह्यगुणवत्त्वात् । यत्र किञ्चिन्नोपलभ्यते तत्रादृष्टं कल्पनीयमित्याशयेनाहुः—नन्विति । आश्चर्यं पुरस्कृत्य समाधानमाहुः—अहो इति । द्रव्यावयवं विनापि गन्धस्य स्थितावनुभवं प्रमाणयन्ति—किञ्च उग्रगन्धस्येति । ननु सर्वमिदं तदैव संभवति, गुणस्य द्रव्यं विना सत्वं चेत्, तदेव तु नास्तीत्यतस्तत्रापि द्रव्यावयवानां सत्वमङ्गीकर्तव्यमित्याशङ्कायां त्वयाऽपि विनश्यदवस्थगुणस्थले यथा स्वीक्रियते, तथा मयाऽपि द्रव्यं विना गन्धसत्त्वं स्वीक्रियत इत्याशयेनाहुः—विनश्यदवस्थेति । इदं मयैवोच्यत इति न, किन्तु बादरायणैरप्युक्तमित्याहुः—अत एवेति । गन्धवदिति । सिद्धं दृष्टान्तमाहेति पूर्वेणान्वयः । वेदैरपि श्रुतिसम्मतमेवोक्तमित्याहुः—श्रुतिरपीति ॥

र्मणो दूराद् गन्धो वाती'ति। अत्र तदवयवासत्त्वनिरूपणार्थमेव दूरपदम्। दार्ष्टान्तिके तु कीर्तेरेव गन्धत्वं *तदसाधारणधर्मत्वादिसाधर्म्येण॥

किञ्च 'हृदि ह्येष आत्मा' 'स वा एष आत्मा हृदि योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' 'गुहा प्रविष्टा'वित्यादिश्रुतिभिर्हृदयदेशे जीवसंस्थितिरुक्ता। सा त्वणुत्व एवोपपद्यते। तदनन्तरं च स्वचैतन्येन गुणेन सकलशरीरव्यापित्वं दर्शयति। 'आलोमभ्य आनखाग्रेभ्य' इति। एतेन सर्वमनवद्यम्॥

सुवर्णसूत्रम्।

च श्रुतिसिद्धत्वाद्व्यासोक्तमेव साधीय इत्यर्थः। धर्मत्वादीति। आदिपदेन तज्जन्यत्वम्॥

एतेन सर्वमनवद्यमिति। गन्धस्य द्रव्याधिकदेशवृत्तित्वस्थापनेन सर्वमालोकादेरपि तथात्वं निर्दुष्टम्। तथाह जयतीर्थः—आलोको रूपमेव। द्रव्यत्वे तु व्योम्नि वर्तमानस्य तस्य तदतिरेकेण तद्रूपग्रहणापत्तेः। किञ्चालोकः किं कार्यं द्रव्यं नित्यं वा? । नान्त्यः। तथा सति परमाणुत्वेनाप्रलयप्रसङ्गात्। आद्येऽपि किं दीपादेरन्यस्य वा? नाद्यः, कारणं विहायान्यत्र वृत्तेरनभ्युपेतत्वात्। तथाऽभ्युपगमे दीपाद्यनुविधानाभावप्रसङ्गाच्च। नेतरः; दीपप्रकाश इत्यादिप्रयोगानुपपत्तिप्रसङ्गात्। करणान्तरादर्शनाच्चेति। वस्तुतस्त्वालोकोऽत्र मणेरेव ग्राह्यः। दीपादेर्ग्रहणे प्रकाशाश्रयसूत्रविरोधापत्तेरिति॥

हरितोषिणी।

गुणानामधिकदेशवृत्तित्वं प्रसङ्गेनोक्त्वा प्रकृतमाहुः—किञ्चेति। ननु सत्यमुपपद्यते, परन्तु सर्वशरीरव्यापित्वं कथमित्यत आहुः—तदनन्तरमिति। एतेनेति। एतेन गन्धस्य द्रव्याधिकदेशवृत्तित्वस्थापनेन, आलोकरूपस्य च द्रव्याधिकदेशवृत्तित्वमित्यादिस्थापनेनेत्यर्थः। आलोकस्य रूपस्वरूपत्वमेव। द्रव्यस्वरूपत्वे तु आकाशे वर्तमानो य आलोकस्तस्य पार्थक्येन रूपस्य ग्रहणं स्यादिति मन्तव्यम्॥

गङ्गाधरभट्टी।

असाधारणधर्मत्वादीति। अत्रादिपदेन तज्जन्यत्वम्॥

---

टिप्पणी।

* तदसाधारणधर्मेति। असाधारणधर्मो 'दूराद् वाती'त्युक्तः। टीकाया 'मादिपदेन' तज्जन्यत्वमिति। तत्पदेन गन्धः। गन्धेन कीर्तिर्जन्यते। सुगन्धोऽयं वृक्ष इति। साधर्म्येणेति। सादृश्यमूलकगौण्या। इदं परमताभिप्रायेणेति लेखकृतः। वस्तुतस्तु ब्रह्मणो विरुद्धधर्माधारतया तत्प्रतिपादकेषु तात्पर्यानुपपत्त्यभावाद्गौण्यादरणमनुचितं, न सर्वत्र। अस्या लीलापरतया व्याख्यानं तु परमरमणीयमेव। परन्तु तथा व्याख्यानं यदा तदैव गौण्या अयुक्तम्॥

व्यापकत्वमाशङ्क्य तत्परिहारे विभिंगुणत्वासाधनसूत्रोऽणुत्वसाधकप्रमाणोपन्यासः

(२८) यत्तु चैतन्यस्य सर्वशरीरव्यापित्वे जीवो नाणुः स्यात् । चैतन्यमात्रस्वरूपत्वादेव तस्य । औष्ण्यप्रकाशात्मकस्याग्नेरिवेत्यग्निदृष्टान्तेन चैतन्यात्मकत्वं जीवस्य साधयन्तोऽणुत्वं बाधयन्तो व्यापकत्वं वदन्ति केचित् । न तद्विद्वदादरणीयम् । 'प्रज्ञया शरीरं समारुह्ये'ति करणत्वेन प्रज्ञायाः श्रुतौ निरूपणात्, तस्य च *भेद एव युक्तत्वात् । 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाये'ति च श्रुतौ विज्ञानस्य कर्मत्वेन निरूपणाच विज्ञानं गुण एव । अत एव सूत्रकारेणाप्युक्तं—'पृथगुपदेशा'दिति । अपि च औष्ण्यमात्रस्यैव वह्निस्वरूपत्वं न वक्तुं शक्यम् । मणिमन्त्रादिनौष्ण्यानुपलम्भेऽपि वह्न्युपलम्भात् । औष्ण्यशैत्यादेः स्प-

सुवर्णसूत्रम् ।

(२८) सांख्यादिमतेन चोद्यमाहुः—यत्त्वित्यादि । तद्दूषयन्ति—न तदित्यादि प्रज्ञयेत्यारभ्योपपद्येव इत्यन्तानि दूषणानि सौत्राण्येव ज्ञातव्यानि ॥

हरितोषिणी ।

(२८) सांख्यमतं दूषयितुमाहुः—यत्त्विति । एतेषां मते यथाऽग्नेरौष्ण्यप्रकाशात्मकत्वं तथा जीवस्य चैतन्यस्वरूपत्वम्, तद्दूषयन्ति—नैतदिति । प्रज्ञयेति । प्रज्ञया सहेत्यर्थः । प्रज्ञायाश्चैतन्यात्मकत्वात्तत्साहित्यस्योक्तत्वाद्भेद एव साहित्यं घटत इति न चैतन्यात्मकत्वं जीवस्येति भावः । अन्यदपि जीवस्य चैतन्यभिन्नत्वं उपष्टम्भकमाहुः—तदेषामिति । दृष्टान्त औष्ण्यस्वरूपत्वं वह्नेर्दूषयन्ति—अपि चेति । वह्नेः प्रकाशात्मकत्वं दूषयन्ति—

गङ्गाधरभट्टी ।

(२८) यत्त्वित्यादि । साङ्ख्यादिरीत्या ।

---

टिप्पणी ।

* भेद एवेति । 'आत्मानमात्मना हन्ती'त्यादावप्युपपत्तिरहङ्काराद्युपाधिभेदमादायैव क्रियते पाणिनीयैरिति करणत्वस्य सर्वथा भेद एव संभवः । प्रज्ञया सहेत्यर्थ इति तोषिणी तु तात्पर्यार्थकथनपरतया नेया । 'सहयुक्तेऽप्रधान' इति तृतीया तु नाभ्युपेतुं शक्या । करणत्वेनेतिमूलविरोधात् । स्पर्शधर्मवत्त्वेनेति । स्पर्शगतो धर्मः स्पर्शत्वं, तदस्ति यस्मिन् स स्पर्शधर्मवान् स्पर्शस्तत्त्वेनेति योज्यम् । औष्ण्यशैत्यादेः स्पर्शत्वेन तत्र तद्वत्ताऽनुपपत्तेः । स्पर्शः स्पृश्यः (स्पार्शनप्रत्यक्षविषय इति यावत्) यो धर्मः स्पर्शत्वरूपस्तद्वत्त्वेनेति वा ॥

र्शधर्मवत्त्वेन घटेंद्रियत्वहानिश्च । नापि प्रकाशात्मकत्वम् । तत्सचारित्वतदनुपलम्भप्रसङ्गात् । किञ्च, 'स यदास्माच्छरीरादुत्क्रामति, सहैवैतैः सर्वैरुत्क्रामति, ये के चास्माल्लोकात् प्रयान्ति, चन्द्रमसमेव ते सर्वे गच्छन्तीति तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण' इति श्रुत्युक्त्या जीवस्य देहादुत्क्रान्तिः परलोकगतिश्च पुनरागतिश्चाणुत्व एव घटते, न तु व्यापकत्वे । 'स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तते, एवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तत' इति 'स्वयं विहृत्ये'त्यादिश्रुत्युक्तपरिवर्तनविहारावप्यणुत्वमृते नोपपद्येते ॥

ननु तत्त्वमसीत्याद्यभेदबोधकश्रुत्या जीवो ब्रह्मत्वेन निरूप्यते, अणुत्वे तु तदनुपपत्तिरिति चेत्; न । औपचारिकत्वात् । अमात्ये राजपदप्रयोगवत् । न हि जीवे कश्चन स्वाभाविको गुणोऽस्ति । प्रज्ञाद्रष्टृत्वादयश्च भगवद्गुणा एव । तथा च तद्गुणैरेवास्योत्तमत्वाद् अंशत्वाच्च तद्व्य-

सुवर्णसूत्रम् ।

अत्र श्रुतार्थापत्त्या मायावादी पुनरणुत्वे प्रत्यवतिष्ठते—ननु तत्त्वेत्यादि । परिहरन्ति—नेत्यादि । औपचारिकत्वादिति । ब्रह्मत्वस्य तथात्वात् । गौण्याः प्रयोजकं व्युत्पा-

हरितोषिणी ।

नापीति । जीवस्य व्यापकत्वं खण्डयन्ति—किञ्चेति । जीवस्याणुत्वे ॥

मायावादी प्रत्यवतिष्ठते—ननु तत्त्वमसीति । अणुत्वेनेति । जीवस्येति शेषः । तदनुपपत्तिः श्रुतौ जीवस्य ब्रह्मत्वेन निरूपणानुपपत्तिः । निराकुर्वन्ति—औपचारिकत्वादिति । जीवे ब्रह्मत्वस्यौपचारिकत्वादित्यर्थः । ननु जीवे ब्रह्मपदप्रयोगो गौण इति कथं ज्ञायत इत्यत आहुः—न हीति । ननु जीवे बुद्धिरस्ति द्रष्टृत्वं चेत्यत आहुः—प्रज्ञेति । भगवद्गुणा एवेति । 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोते'त्युपनिषद्वाक्यं संगच्छते । अंशत्वादिति । यद्यपि ब्रह्मणो निर्विकारत्वात्तदंशत्वं जीवस्य न संभवति, तथापि 'ममैवांशो जीवलोके जीवभूतः सनातन' इति गीतावाक्याद्विकारं विनाप्यं-

गङ्गाधरभट्टी ।

नापि प्रकाशात्मकत्वमिति । न चौष्ण्यप्रकाशान्यतरगुणवत्त्वं तेजस्त्वं सुवचम्, गौरवात्, तमसि सुवर्णतेजसोऽप्रकाशत्वात्, अनौष्ण्याच्च । आलोकसापेक्षत्वस्य तेजोव्यतिरिक्त एवाङ्गीकारात् । औपचारिकत्वादिति । राज्ञो ज्येष्ठे पुत्रे भाविराजत्वव्यपदेशवदिति भावः । वर्तमानकालेऽपि दृष्टान्तः—अमात्ये इति ॥

पदेशः। जडवैलक्षण्यं च तत एव । ननु कथमेवावगम्यते, औपचारिकमेव तदिति चेदु, यत एव सूत्रकारोऽपि न्यरूपयत्–'तद्गुणसारत्वात्तु तद्व्यपदेश' इति। तथा चाणुपरिमाणस्यैव जीवस्य पूर्वोक्तन्यायेन ब्रह्मणः सकाशान्निर्गतस्य ब्रह्मणा स्वसेवार्थमेव निजैश्वर्यस्यं निर्विषयत्वपरिहाराय च तथा प्रकटीकृतस्यात एव सहजहरिदासस्य तदंशत्वेन ब्रह्मरूपस्य च निजनिसर्गप्रभुश्रीगोकुलनाथचरणकमलदास्यमेव स्वधर्मः। तेन चातिसंतुष्टः स्वयं प्रकटीभूय निजगुणाँस्तस्मै दत्वा *स्वस्मिन् प्रवेश-

सुवर्णसूत्रम्।

दयन्ति—न हीत्यादि। अंशत्वादिति। अविकृतांशत्वात्। तत एवेति। उक्तहेतुभ्यामेव। पूर्वं जीवस्वरूपं किंप्रकारकमित्याकाङ्क्षाया 'अग्रे वक्ष्याम' इति प्रतिज्ञातं प्रकारवैशिष्ट्यमेव निरूपितम्, तेन सिद्धमाहुः—तथा चाणिवत्यादि। 'अनुच्छित्तिधर्मे'ति श्रुत्या सहजाणुपरिमाणस्य जीवस्य प्राणधारणप्रयत्नवतः पूर्वोक्तन्यायेन विस्फुलिङ्गन्यायेन ब्रह्मणः सकाशान्निर्गतस्य ब्रह्मणा स्वसेवेत्याद्युक्तप्रयोजनद्वयार्थं तथा दीनत्वादिधर्मवत्तया प्रकटीकृतस्य। अत एव 'अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियम' इति वेदस्तुत्यादिवाक्यान्यथानुपपत्तेरेव। ततोऽधिकरसदास्येति। 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्से-

हरितोषिणी।

शत्वं संभवतीति बोध्यम्। तत इति। उत्तमस्वांशत्वादिहेतोरित्यर्थः। शङ्कते–नन्विति। कथमेवमिति। उक्तहेतुभ्यामेवमवगम्यत इति कथमित्यर्थः। एवं किमत आहुः—औपचारिकमिति। उत्तरमाहुः—यत एवेति। सूत्रादेवावगम्यत इति भावः। एतावता प्रबन्धेन पूर्वं प्रतिज्ञातं जीवस्वरूपमग्रे वक्ष्यत इति तन्निरूपितम्। इदानीमेतादृशजीवस्य भगवता स्वसेवार्थमेव निःसारितस्य भगवच्चरणसेवनमेव धर्म इति सिद्धमित्याहुः—तथा चेत्यादिना, इति निगर्व इत्यन्तेन। पूर्वोक्तेति। विस्फुलिङ्गन्यायेनेत्यर्थः। ब्रह्मणेति। प्रथमं जीवो विभक्तो जातस्तदनन्तरं स्वसेवार्थमित्यादिहेतुद्वयार्थमित्यर्थः। तथेति। दीनत्वादिधर्मवत्त्वेनेत्यर्थः। इदानीं दास्यमेव धर्म इत्याहुः—अत एवेति। यतः स्वसेवार्थं प्रकटीकृतः, अत एवेत्यर्थः। अतः स्वधर्मेण। अत एवाहुः—सहजेति। तेनेति।

टिप्पणी।

* स्वस्मिन्नित्यादि। चरणारविन्दप्रदक्षिणायमानवनमालायां नियोजयतीति लेखकृतः॥

१ मेवमेवा० इति जयपुरकम्।

यति स्वरूपानन्दानुभवार्थम् । अथवाऽत्यनुग्रहे निकटे स्थापयति ततोऽधिकरसदास्यकरणार्थमिति निगर्वः ॥

उत्क्रान्त्यादिसूत्रीयशाङ्करमतनिरासः ।

(२९) केचित्तु जीवाणुत्वासम्भगवत्प्रवेशतत्साधनभगवद्भजनाद्यसहिष्णवोऽणुत्वसाधकोत्क्रान्त्यादिसूत्रदशकं पूर्वपक्षत्वेनोक्त्वा 'तद्गुणसारत्वा'दिति सूत्रं सिद्धान्तीयत्वेन वदन्तस्तदर्थं चोपाधिगुणरूपाणुत्वादिप्रयुक्तो जीवेऽणुत्वादिव्यपदेश इति निरूपयन्तो जीवस्य व्यापकत्वं साधयन्ति । तत्रेदमुच्यते—भवेदेतदेवं, यद्यौपाधिकजीवत्वं स्यात् । तदेव तु न संभवति, श्रुतिस्मृतिन्याययुक्तिविरोधादिति पूर्वमेव निरस्तत्वात् । किञ्च, बुद्ध्युत्क्रान्त्यादिभिरेव जीवस्योत्क्रान्त्यादिव्यपदेशोऽनुपपन्नः । न ह्युपाधेः पूर्वमेवोपहितस्योत्क्रान्त्यादिः संभवति । श्रुतिश्च 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'त्यादिना जीवोत्क्रान्त्या सर्वोत्क्रान्तिं वदति । तथा च विरोधः । न चोपाधिगुणानां सारत्वं युज्यते । अनर्थरूपत्वात् । किन्तु 'भगवद्गुणा-

सुवर्णसूत्रम् ।

वनं जना' इत्यादिवाक्यादैक्यापेक्षयाप्यधिकरसदास्येत्यर्थः । निगर्वः निश्चयः । शेषं स्फुटम् । एवं च जीवपरिमाणं नैसर्गिकं, शेषगुणाः क्रियाश्चागन्तुका इति बोधितम् ॥

(२९) शाङ्करादिमतमत्राहुः—केचिदित्यादि । परिहरन्ति—तत्रेत्यादि । उत्क्रान्त्यादिसूत्राणां पूर्वपक्षरूपत्वं दूषयन्ति—किञ्चेत्यादि । तद्व्याख्यातम् । तद्गुणसारसूत्रार्थं

हरितोषिणी ।

एतादृशस्वधर्मेणेत्यर्थः । प्रवेशप्रयोजनमाहुः—स्वरूपेति निकटस्थापनप्रयोजनमाहुः—तत इति । ततः स्वरूपानन्दादधिको रसो यस्मिन्नेतादृशं यदास्यं तत्करणार्थमित्यर्थः । निगर्व इति । अयमेव व्याससूत्राशयनिश्चय इत्यर्थः ॥

(२९) अत्र शङ्कराचार्याणां मतमाहुः—केचित्त्विति । असहिष्णव इति । जीवेत्यादित्रितयासहिष्णवः शङ्कराचार्या इत्यर्थः । उत्तरमाहुः—तत्रेदमिति । उत्क्रान्त्यादिसूत्रदशकं पूर्वपक्षत्वेनोक्तं, तदेव दूषयन्ति—किञ्चेति । उपाधेः बुद्ध्यादेः । उपहितस्य जीवस्य । तैर्वर्णितो यस्तद्गुणसारसूत्रार्थस्तं दूषयन्ति—न चेति । नन्वंशत्वं जीवस्य

गङ्गाधरभट्टी ।

(२९) किन्तु भगवद्गुणानामिति । प्रज्ञाद्दृढत्वादीनामेव सारत्वम् ।

नामेव । किं बहुना, प्रस्वापादिषु विहारादिचेतनधर्मबोधक'स्वयंविहृत्ये'त्यादिश्रुतिन्यायसहस्रबाधितत्वात् केवलं भगवदाज्ञसोमापरिवृढप्रवर्तितमार्गानुसारित्वात् तत्पक्षस्य लिखनेनालम् । 'आभास एव चे'ति सूत्रं तु यथाऽनाचारिब्राह्मणे ब्राह्मणाभासप्रयोगोऽखिलब्राह्मणधर्माणामभावात्, तथाऽऽनन्दांशस्य तिरोधानाद् ब्रह्मधर्माणां सर्वेषामभावादंशत्वेन तद्रूपत्वाच्च तदाभासो जीव इतिपरं, न त्वलीक इति पूर्वमेवावोचाम ॥

(३०) स्यादेतत् । शुद्धस्यैव कर्तृत्वेऽपि निमित्तत्वमात्रमस्तु कुलाल-

सुवर्णसूत्रम् ।

दूषयन्ति—न चेत्यादि । विशेषादूषणे हेतुं बोधयन्ति—किं बहुनेत्यादि । यद्यंशत्वं व्यासोऽभिप्रेयात्तदा 'आभास एव चे'ति न सूत्रयेदिति शङ्कायां तदुक्तं पाठमुपगम्य सूत्रार्थमाहुः—आभास इत्यादि । ब्रह्मधर्माणामिति । असाधारणानां तेषाम् । अलीक इति । आभास इति शेषः । रामानुजाचार्यास्तु—आभासा इति पाठमङ्गीकृत्य जीवस्य ब्रह्माभेदसाधिका युक्तय आभासा इति व्याचक्रुः । एवं भैक्ष्येऽपि । एवमत्र सविशेषनिर्विशेषयोस्तात्त्विकातात्त्विकभेदनिरासायानुपाधित्वं दृढीकर्तुं, नन्वास्तां शुद्धमित्यारभ्यावोचामेत्यन्तेन ग्रन्थेन, श्रुतार्थापत्तिपरिहारपूर्वकं जीवस्य ब्रह्मांशत्वं निरूपितम् । तेन जीवस्य ब्रह्मतादात्म्यविभागयोः समर्थनाद्ब्रह्मणो जीवकर्तृत्वमपि समर्थितम् ॥

(३०) अतः परं सर्वाधारत्वं समर्थयितुं जडोपादानत्वे विप्रतिपत्तिं दर्शयन्ति—स्यादेतदित्यादि । सर्वाधारत्वाङ्गीकारे वक्ष्यमाणो दोषः । स्यादिति । समवायित्वमयुक्तमि-

हरितोषिणी ।

व्यासाभिप्रेतं न भवति, कुतः ? 'आभास एव चे'ति सूत्रप्रणयनादित्यत आहुः—आभासेति । तदाभासः ब्रह्माभासः । नत्वलीक इति । अलीको मिथ्या आभासो जीवो नास्तीत्यर्थः । एतावता प्रबन्धेन जीवस्य ब्रह्मांशत्वं, ब्रह्मणो जीवकर्तृत्वं च प्रतिपादितम् ॥

(३०) इदानीं ब्रह्मणः सर्वाधारत्वसिद्ध्यर्थं जगदुपादानत्वांशे शङ्कते—स्यादेतदिति । शुद्धस्यैवेति । एतेनास्मन्मते कर्तृत्वेऽपि सगुणत्वं नास्तीति सूचितम् । अत एवोक्तं निबन्धे 'कर्ता स्वतन्त्र एव स्यात्तथापि सगुणो न ही'ति । कर्तृत्वेऽपि । जगत्क-

गङ्गाधरभट्टी ।

लिखनेनेति । लिखतीति लिखः । कर्मकर्तरि इगुपधात्कः । तत 'स्तत्करोती'ति ण्यन्ताल्ल्युट् ॥ लेखनेनालमिति वा पाठः ।

विरुद्धसर्व-धर्माश्रयत्वे शङ्कापरिहारौ

न्यायेन, न तु समवायित्वमपि। तथा सति ब्रह्मणो विकृतत्वापातो मृत्पिण्डवत्। सावयवत्वापातश्च। कार्यस्यानर्थरूपत्वेन तद्रूपत्वस्य वक्तुमयुक्तत्वं चेति चेत्; मैवम्। यदि स्वबुद्धिकल्पितं ब्रह्मणः कर्तृत्वं स्याद्, न स्यात् समवायित्वम्। किन्तु श्रुतिसिद्धम्। सा च स्वतःसिद्धप्रमाणभावा। प्रमाणस्य ह्ययं स्वभावो यद् यथास्थितं वस्तु प्रमापयति, न तु स्वनिरूपकप्रकारं निर्मिमीते। तथा च श्रुतिरपि यथास्थितं ब्रह्म प्रतिपादयतीति, न पर्यनुयोगार्हा। विकृतत्वादिधर्माश्च लोके समवायिषु दृश्यन्ते। तथा चोभयरक्षार्थं ब्रह्माविकृतमेव समवायि। लोके तादृशमेव समवायित्वमिति व्यवस्था मन्तव्या। अत एव सूत्रकारो ब्रह्मणः समवायित्वं न युक्तिगम्यम्, किन्तु श्रुत्येकगम्यमित्याह 'श्रुतेस्तु शब्दमूलत्वा'दिति। ब्रह्म समवा-

सुवर्णसूत्रम्।

त्यर्थः। समादधते—मैवमित्यादि। एवं ब्रह्मणः सर्वाधारत्वं समर्थितम्। अतः परं

हरितोषिणी।

र्तृत्वेऽपि। एतेन प्रकृतिः कर्त्रीति निरस्तम्। तथा च ब्रह्मणो जगत्कारणत्वे स्वीकृते निमित्तकारणत्वाङ्गीकारपूर्वकमुपादानकारणत्वं खण्डयन्ति—निमित्तत्वमात्रमिति। न तु समवायित्वमिति। समवायसम्बन्धेनाश्रयत्वं न स्वित्यर्थः। एतेन जगदाधारत्वं नास्तीति सूचितम्। समवायित्वे दूषणमाहु—तथा सतीति। मृत्पिण्डवदिति। यथा मृत्पिण्डविकारो घटस्तथा ब्रह्मविकारं जगदिति ब्रह्मणो विकृतत्वं स्यादित्यर्थः। सावयवत्वेति। अवयवावयविनोः समवायादिति भावः। जगतो ब्रह्मरूपत्वमपि वक्तुं न शक्यत इत्याह—कार्यस्येति। अनर्थरूपत्वेन मिथ्यात्वेन। समाधानमाहुः—मैवमिति। श्रुतिसिद्धमिति। कर्तृत्वमिति पूर्वेणान्वयः। सा च श्रुतिश्च। न तु स्वनिरूपितेति। स्वेन निरूपितः प्रकारो विशेषो यस्य एतादृशं वस्तु। समवायिषु मृत्पिण्डादिषु। उभयरक्षार्थं ब्रह्मणि लौकिकत्वालौकिकत्वसंरक्षणार्थम्। तादृशमेव। विकृतमेव। एवं समवायित्वोनया सर्वाश्रयत्वं व्यवस्थापितम्। इतः परं विरुद्धधर्माश्रयत्वं समर्थयन्ति—ब्रह्मेति

गङ्गाधरभट्टी।

(२०) लोके तादृशमेवेति। विकृतत्वसमानाधिकरणम्।

---

१ निरूपितेति अपुस्तकम्।

त्यविकृतं चेत्यपि गुडजिह्विका । वस्तुतस्तु विरुद्धसर्वधर्माश्रयमपि । तथाहि,—'आत्मा वारे श्रोतव्यो मन्तव्यः' 'यतो वाचो निवर्तन्ते' 'तदेजति तन्नैजति' 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' 'सर्वतः पाणिपादान्तम्' 'अणोरणीयान् महतो महीयान्' 'अस्थूलमनण्व'त्यादिश्रुतिर्हि परस्परविरुद्धानेकधर्मवत्त्वं ब्रह्मणि प्रतिपादयति । श्रौतत्वान्नैकतरबाधो वक्तुं शक्यः । तस्मात्तादृशमेव तदिति मन्तव्यम् ॥

(३१) स्यादेतत् । अत्र नैवं निर्णयः संभवति । नह्येकं वस्तु स्वत एव

सुवर्णसूत्रम् ।

तावच्छक्तित्वं समर्थयितुमाहुः—ब्रह्मेत्यादि, मन्तव्यमित्यन्तम् । गुडजिह्विकेति । जिह्वेव जिह्विका । प्रतिकृतौ कन् । गुडयुता जिह्विका गुडजिह्विका । सा यथा बालस्यौषधपानार्थमुपयोज्यमानाऽपि न तन्मात्रतथात्वपर्यवसन्ना, तथेदं समवायित्वस्य शब्दमूलत्वाङ्गीकरणं ब्रह्मणो विरुद्धनानाशक्त्याधारतायाः श्रौतत्वबोधकं, न तु समवायित्वमात्रं तथात्वपर्यवसन्नमित्यर्थः ॥

(३१) अत्र विरुद्धधर्माश्रयत्वस्यायुक्तत्वं मन्वानो निर्विशेषवादी पुनः प्रत्यवतिष्ठते—स्यादेतदित्यादि । नैवमिति । न श्रुतिमात्रेण । तथा च श्रुतावपि युक्तिपूर्वकं निरूपण-

हरितोषिणी ।

गुडजिह्विकेति । जिह्वेव जिह्विका । 'इवे प्रतिकृतौ' वित्यनेन कन् । गुडार्था जिह्विका सर्वगुडस्य माधुर्यज्ञानार्थं जिह्वायां यत्किञ्चिद्गुडस्थापनक्रिया । तथा चाविकृतसमवायित्वं केवलं न बोधयति श्रुतिः, किन्तु विरुद्धसर्वधर्माश्रयत्वमपीति भावः । तदेव विशदयन्ति—तथा हीत्यादिना । 'श्रोतव्यः' 'यतो वाच' इति परस्परं विरुद्धधर्मबोधकं वाक्यद्वयम् । एवमग्रेऽपि बोध्यम् । तादृशमेवेति । विरुद्धधर्माश्रयत्वमेवेत्यर्थः ॥

(३१) अत्र विरुद्धधर्माश्रयत्वस्वीकारं विनैव विरुद्धश्रुतीनां समर्थनं भवतीति निर्विशेषवादिमतं, तद् 'वयं वदाम' इत्यादिना निराकर्तुमुत्थापयन्ति—स्यादेतदिति । एतद्विरुद्धधर्माश्रयत्वं स्याद्यदि वक्ष्यमाणदूषणं न स्यात् । अत्र परस्परविरोधबोधकश्रुतौ ।

गङ्गाधरभट्टी ।

गुडजिह्विकेति । गुडे जिह्वा, गुडजिह्वेव गुडजिह्विका । 'इवे प्रतिकृतौ' कः । प्रतिकृतित्वारोपेण साध्यम् । शिष्टप्रयोगात् । सर्वाधारत्वं समर्थ्य तावच्छक्तित्वं समर्थयन्ते—विरुद्धेत्यादि । नन्वित्यादित इत्येव शङ्का ॥

विरुद्धसर्वधर्माश्रयतानिरासमभिप्रेत्य निर्विशेषतासमर्थनं ब्रह्मणः।

सविशेषं निर्विशेषं चेत्यवधारयितुं शक्यम्, विरोधात्। ननु सर्वगतत्वेन पृथिव्याद्युपाधिसम्बन्धोऽस्तीति तन्निबन्धनमस्थूलत्वादिकम्। तथाहि—अस्थूलेऽस्थूलोऽनणावनणुरुचावचकर्तर्युचावचकर्तोचावचकामे चोचावचकामः पृथिव्यां सर्वगन्धो जलादावगन्ध इत्युभयरूपत्वमुपपत्स्यत इति न विरोध इति चेत्; मैवम्। न ह्यौपाधिकत्वे वस्तुस्वभावता संभवति। न हि जपाकुसुमारुणिमानं गृह्णन् स्फटिकोऽरुणो भवति। न वा पटोऽरुणश्चित्रो वा भवन् द्विरूपो भवति। तत्रावयवावच्छेदक-

सुवर्णसूत्रम्।

दर्शनाद्युक्त्यादिविरोधे श्रुतिरप्रयोजिकेत्यतस्तथेत्यर्थः। तात्त्विकोपाधिवादिकृतं समाधिमाशङ्कते—नन्वित्यादि। इतीति। उपाधिकृतत्वात्। तं दूषयन्ति—मैवमित्यादि। उपाधिसम्बन्धेनोपगम्यमानमणुत्वादिकं स्वाभाविकत्वेनोपगम्यते? उत आरोपितत्वेनाथवागन्तुकत्वेन?। क्रमेण त्रयं दूषयन्ति—नहीत्यादि, द्विरूपो भवतीत्यन्तेन। अरुणो भवतीति। उपाधायकोपाधिरूपं गृह्णन् स्वाभाविकं स्वच्छत्वं न त्यजतीत्यर्थः। द्विरूपो भवतीति। उपरञ्जकोपाधिरूपस्वकीयरूपाभ्यां तथा भवतीत्यर्थः। रूपस्याव्याप्यवृत्तित्ववादिमते औपाधिकरूपेणापि द्वैरूप्यं संभवतीति तद्वैधर्म्यं ब्रह्मण्याहुः—तत्रेत्यादि। सिद्ध-

हरितोषिणी।

नैवमिति। एवं विरुद्धधर्माश्रयत्वस्वीकारेण। विरोधादिति। तथा चात्र युक्त्यभावादिदं समीचीनं न भवतीति भावः। अत्र ब्रह्मणि तात्त्विकोपाधिं ये स्वीकुर्वन्ति तेषां मतेन समाधानं शङ्कते—नन्विति। उपाधिसम्बन्धकृतं विरुद्धधर्माश्रयत्वं विशदयन्ति—तथा हीत्यादिना। उपपद्यत इति। ब्रह्मणः सर्वगतत्वेनोपपद्यत इत्यर्थः। तथा चोपाधिकृतविरोध एव नास्तीति भावः। तन्मते दूषणमाहुः—मैवमिति। संभवतीति। तथा च श्रुतिस्तु वास्तविकमणुत्वादिकं वदति, त्वया तूपाधिसम्बन्धेनेति स्वाभाविकं तत्र न संभवतीति भावः। ननु मास्तु स्वाभाविकमारोपितमेव तदस्त्वित आहुः—न हीति। अरुणो भवतीति। तथा च तस्य वास्तवं श्वेतरूपमेवेति यथा स्फटिकोऽरुणो न भवति, तथा ब्रह्माप्यारोपितमणुत्वादिकमादाय तथा न भवतीत्यर्थः। नन्वागन्तुकत्वेन स्वीक्रियमाणमणुत्वादिकमुपाधिसम्बन्धात्तत्र भासत इत्यत आहुः—न वेति। यथा पटोऽन्यरूपस्वकीयरूपाभ्यां द्विरूपो न भवति, तथा ब्रह्माप्युपाधिगतस्वगतकर्तृत्वाकर्तृत्वाभ्यां विरुद्धोभयरूपं न भवतीत्यर्थः। ननु यथा अग्रावच्छेदेन कपिसंयोगो, मूलावच्छेदेन तदभावो वृक्षे स्वीक्रियत इति यथा संयोगस्याव्याप्यवृत्तित्वं, तथा रूपस्यापीति केषांचिन्मतं, तदादाय

रूपनया तथा वचनेऽपि ब्रह्मणि न तथा वक्तुं शक्यम्। निरवयवत्वात्। तस्मादाविद्यकत्वादुपाधीनामस्तसमस्तविशेषं तदिति प्रतिपत्तव्यम्। न च सविशेषस्यापि श्रौतत्वान्निर्विशेषस्यैव बाधो वक्तुं शक्यः। परिच्छेदापातात्। सविशेषस्य परिच्छिन्नत्वात्। तेषां प्रत्येकं भिन्नत्वेन ब्रह्मानेकत्वप्रसक्त्यै'कमेवाद्वितीय'मितिश्रुतिविरोधश्च। 'समो मशकेन समो नागेने'त्यादिषु चैकस्यैवानेकोपाधिसम्बन्धकृतपरिमाणं श्रूयते। तच्च स्वतो निर्विशेषत्वे एवोपपद्यते। अन्यथोपाधीनामव्यापकत्वेनान्यो-

सुवर्णसूत्रम्।

माह—तस्मादिति। त्रिविधस्याप्यौपाधिकधर्मस्याशक्यवचनत्वादुपाधीनां तात्विकत्वे ब्रह्मण्यनृतत्वादिदोषप्रसक्तेरुपाधीनामेवासत्वमङ्गीकृत्य ब्रह्मणो निर्विशेषत्वमङ्गीकार्यमित्यर्थः। ननूपाधीनामाविद्यकत्वे असत्वेनौपाधिकरूपनिरूपकानेकश्रुतिवाक्यबाधापत्तेर्निर्विशेषस्यैव बाधो युक्त इति चेत्तत्राह—न चेत्यादि। परिच्छिन्नत्वे को दोष इत्याकाङ्क्षायां श्रुतिसूत्रविरोध एव दोष इति बोधयितुं 'न भेदादिति चेन्न प्रत्येकमतद्वचना'दिति सूत्रार्थमाह—तेषामित्यादि। ननु 'समो मशकेने'त्यादिश्रुत्यैकस्य नानापरिमाणवत्ताश्रावणा लौकिकयुक्तेरप्रयोजकत्वेन ब्रह्मण औपाधिकानेकरूपवत्वेऽपि न ब्रह्मानेकत्वापत्तिरित्यत आह—सम इत्यादि। ननु स्वतः सविशेषत्वे कुतो नोपपद्यत इत्याशङ्कायामाह—अन्यथेत्यादि। अन्यथा स्वतः सविशेषत्वे विशेषभूतस्वपरिमाणापायस्याशक्यवचनत्वात्। उपाधीनां परिमाणान्तरप्रयोजकानां मशकनागादीनां दिक्कालादिवदव्यापकत्वे तेषां परस्पराश्रयाश्रयिभावात्तदवच्छिन्नस्य ब्रह्मणोऽपि तत्परिमाणवत्तायां सर्वपरिमाणवत्त्वं स्यादपि,

हरितोषिणी।

पटोऽपि द्विरूपो भवतीत्यत आह—तत्रेति। तत्र पटस्थले। तथेति। द्विरूपकथनेऽपीत्यर्थः। उपसंहरति—तदिति। ब्रह्मेत्यर्थः। तथा चोपाधेरविद्याकल्पितत्वेन निर्विशेषं ब्रह्मेति भावः। शङ्कते—न चेति। समाधानमाह—परिच्छेदेति। ब्रह्मण इति शेषः। दूषणान्तरमाहुः—सविशेषस्यैवेति। तेषामिति। परिच्छिन्नानाम्। ननूपाधिकृतपरिमाणभेदेन ब्रह्मानेकत्वे का क्षतिरित्यत आहुः—समो मशकेनेति। श्रूयत इति। श्रुताविति शेषः। तच्चेति। एकस्यानेकपरिमाणवत्त्वं चेत्यर्थः। अन्यथा ब्रह्मणः स्वतो विशेषत्वे। उपाधीनामिति। मशकनागादीनाम्। अव्यापकत्वेन परिच्छिन्नत्वेन। अन्योन्येति। मशकपरिमाणाश्रयत्वं नागे नास्ति, नागपरिमाणं मशके नास्तीत्युपाधिपरिमा-

गङ्गाधरभट्टी।

(३१) अन्यथोपाधीनामिति। ब्रह्मणः सविशेषत्व उपाधीनां मशकत्वादीनामित्यर्थः।

१ इंधर्षेनिजपुस्तकम्।

न्याश्रयाश्रयिभावाभावाच सर्वपरिमाणवत्त्वं भज्येतैकस्य ब्रह्मणः । किञ्च, करचरणादिविशेषाणां लौकिकत्वात् स्वरूपस्य चालौकिकत्वाद् ब्रह्मणि लौकिकनिषेधो युक्तः । अलौकिकापेक्षया लौकिकस्य जघन्यत्वात् । न च तेषामप्यलौकिकत्वात् तद्वत्त्वमिति ब्रह्मणि वक्तुं शक्यम् । तदलौकिकत्वकल्पनेन ब्रह्मणि सर्वभवनसमर्थविरुद्धसर्वाधारत्वादिरूपाऽलौकिकशक्तिकल्पनेन च गौरवात् । अस्थूलादिश्रुतिविरोधेन तत्कल्पनमप्यशक्यम् । 'सर्वत' इत्यादिनद्बलेन शक्यत्वेऽप्येतद्दौर्बल्यमप्युक्तम् ॥

सुवर्णसूत्रम् ।

इह तु तेषामव्यापकत्वेन परिच्छिन्नत्वेनान्योन्याश्रयाश्रयिभावाभावाच *तथा स्यादित्यर्थः । ननु मास्तूपाधिपक्षः, तथापि ब्रह्मणः सर्वसमर्थत्वाद्विरुद्धधर्माधारत्वाङ्गीकारे न कोपि दोष इत्यत आह—किञ्चेत्यादि । अत्र गौरवप्रदर्शनेन सर्वाधारत्वत इति हेतुद्वयमाक्षिप्तं ज्ञेयम् । अप्रयोजकत्वमपि तयोर्दर्शयति—अस्थूलेत्यादि । उक्तमिति । 'उपजीव्यत्वतः श्रौते'ति कारिकार्थव्युत्पादन एवोक्तमित्यर्थः ॥

हरितोषिणी ।

णानां परस्परमाश्रयाश्रयिभावो नास्तीत्यर्थः । एकस्येति । मशकनागाद्युपाध्यवच्छिन्नस्यैकस्येत्यर्थः । विरुद्धधर्मवत्त्वस्वीकारे गौरवमित्यलौकिकधर्मवत्त्वमेव स्वीकार्यमित्याह—किञ्चेति । जघन्यत्वादिति । तथा च निर्विशेषमेव ब्रह्मेति भावः । शङ्कते—न चेति । तेषामिति । चरणादीनाम् । अलौकिकत्वादिति । 'सहस्रशीर्षे'त्यादिश्रुत्यैवालौकिकत्वबोधनादित्यर्थः । निषेधति—तदिति । कल्पनेनेति हेतुद्वयं गौरवे बोध्यम् । सर्वेति । सर्वभवनसमर्था या अलौकिकशक्तिरित्यर्थः । प्रामाणिकगौरवस्यादोषत्वादित्यत आह—अस्थूलेति । तत्कल्पनमिति । करचरणादीनामलौकिकत्वकल्पनं सर्वाधारत्वादिकल्पनमित्यर्थः । कल्पनस्य शक्यत्वमाह—सर्वत इति । 'सर्वतः पाणिपादान्त'मित्यादिश्रुतिबलेनेत्यर्थः । एतद्दौर्बल्यमप्युक्तमिति । 'सर्वत' इत्यस्य दौर्बल्य 'मुपजीव्यत्वतः श्रौतवाक्यै'रितिकारिकार्थकथनसमय एवोक्तमित्यर्थः । तथा चास्थूलादिवाक्यानां प्रबलत्वात्तत्कल्पनं न भवतीति भावः ॥

गङ्गाधरभट्टी ।

तदलौकिकत्वकल्पनेनेति । करचरणादीनामलौकिकत्वेत्यर्थः । अप्युक्तमिति । उपजीव्यत्व इति कारिकायां 'निषेधाश्च बलीयांस' इति न्यायेन विशेषाणामविचारकल्पितत्वेनाङ्गीकारादित्युक्तम् ॥

---

टिप्पणी ।

* तथेति । सर्वपरिमाणवत्त्वं स्यादित्यर्थः ॥

अन्यच, न हि सविशेषनिरूपिका श्रुतिर्ब्रह्मस्वरूपं निरूपयितुं प्रवृत्ता। येन तन्निरूपितमस्यलौकिकत्वादिकं न कल्प्यं, किन्तु क्ल‍ृप्तमेवेति न गौरवादिदूषणग्रास इत्युच्यते। किन्तु तस्य दुर्ज्ञेयत्वे यथाकथंचित्तत्प्रवणत्वे चित्तस्य शुद्धिर्भविष्यति । ततः स्वयमेव प्रत्यग्ब्रह्मस्वरूपं ज्ञास्यतीत्यधिकारसिद्ध्यर्थमुपासनां वक्तुं भावनासुगमत्वाय च लौकिकप्रसिद्धविशेषवत्तदनुवदति । ततोऽधिकारे सिद्धे कीदृक् तदनुभूयत इत्याकाङ्क्षायां श्रुति 'रस्थूलमनणि'त्यादिना तत्स्वरूपं निरूपयति। अत एव 'अरूपवदेव हि तत्प्रधानत्वाद्' इति सूत्रकारोऽप्याह । न ह्येवं सति सविशेषरूपकश्रुतिवन्निर्विशेषरूपकाणां स्वरूपमात्रनिरूपणं विद्वा-

## सुवर्णसूत्रम्।

नन्वस्थूलादिवाक्यस्य लौकिकनिषेधपरत्वेनाविरोधात् 'सर्वत' इत्यादीनां चालौकिकधर्मविधिमुखेन ब्रह्मपरत्वाद् दुर्बलत्वाभावेन तत्सिद्धालौकिकधर्माणां कल्पितत्वाभावेन गौरवस्य प्रामाणिकत्वेनादुष्टत्वान्न कोपि दोष इत्यत आह—अन्यच्चेत्यादि । ननु सविशेषनिरूपकाणामुपासनार्थत्वम्, अस्थूलादिवाक्यानामेव च ब्रह्मपरत्वमित्यत्र किं गमकमित्यत आह—अत एवेत्यादि । अत एवेति । यतः सविशेषश्रुतिरुपासनार्था, न तु स्वरूपनिरूपणार्था अतो हेतोरेवेत्यर्थः। तस्य वृत्त्यविषयत्वादिति। वृत्तिर्ज्ञानाभिव्यञ्जको मनोधर्मः, सा नेत्रकिरणद्वारा बहिर्निर्गच्छन्ती पुरःस्थितेन घटादिना विषयेण संसृज्य तदाकारा भवति तदा तद्द्वारा निर्गतं साक्षिचैतन्यमपि तथा भवति; कुल्याद्वारा निर्गतं महासरःसलिलं केदारं प्राप्य तत्तद्वर्तोयाकारतां यथाऽऽप्नोति तद्वत् । एवं जीवचैतन्यविषयचैतन्ययोरैक्ये विषयसाक्षात्कार इत्यभेदाभिव्यक्तिपक्षः । एवं निर्गतया वृत्त्या विषयावरकाज्ञाने भग्ने विषयसाक्षात्कार इत्यावरणभङ्गपक्षः । उक्तरीत्या निर्गतायां वृत्तावुपारूढजीवचैतन्यं विषयं गोचरयति, वृत्तिद्वारको यस्तस्य संसर्गः स विषयोपराग इति चिदुपरागपक्षः । एवं प्रकारत्रयेणापि तस्य निर्विशेषस्य पूर्वोक्तवृत्त्यगोचरत्वादित्यर्थः । वृत्त्य-

## हरितोषिणी।

ननु किमिदमुच्यते अस्थूलादिवाक्यानां विरोधित्वमिति । तेषां लौकिकनिषेधपरत्वेन तत्त्वाभावात्तत्कल्पनं भविष्यति । किञ्च, करचरणादीनामलौकिकत्वकल्पनैव नास्ति, 'सर्वत' इत्यादिवाक्यानां तद्विशिष्टब्रह्मवाचकत्वेन स्वतःसिद्धत्वादित्यत आह—अन्यच्चेति । तर्हि किमर्थं सविशेषश्रुतिरित्यत आह—किन्त्विति । अनुवदति । सविशेषश्रुतिरिति शेषः । ततः उपासनानन्तरम् । सविशेषनिर्विशेषश्रुत्योर्मध्ये एका उपासनार्था, अपरा ब्रह्मपरेत्यत्र प्रमाणमाह—अत एवेति । नन्वरूपनिरूपणमित्युच्यते, ब्रह्मनिरूपणं

यान्यत्प्रयोजनं घटते । तस्य वृत्त्यविषयत्वात्, 'तत् केन कं पश्ये'दि- त्यादिश्रुतेः । अत एव निषेधमुखेनैव निरूपयति, 'अथात आदेशो नेति नेती'ति, 'अन्यदेव तद्विदितादथो अविदिता'दित्यादिना । एवं च सति निर्विषयज्ञानस्वरूपवन्निष्प्रतियोगिकाऽभावरूपत्वमेव भवेदिति तद्व्यावृ- त्त्यर्थं चित्स्वरूपत्वमाह—'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वारे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'ति ॥

सुवर्णसूत्रम् ।

विषयत्वे प्रमाणमाह—तदित्यादि । अत एवेति । वृत्त्यविषयत्वेन दुर्ज्ञेयत्वादेव । ननु निषेधमुखेन निरूपणं न विशेषबाधकं, ज्ञानदृष्टान्तेन निःप्रतियोगिकाभावरूपत्वस्यापि शक्यवचनत्वादित्यत आह—एवं च सतीत्यादि । आहेति । द्वितीयमैत्रेयीब्राह्मणे आह । तथा च केवलज्ञानरूपत्वस्यैव निरूपणान्न विशेषसिद्धिरित्यर्थः ॥

हरितोषिणी ।

कुतो नास्तीत्यत आह—तस्येति । निर्विशेषब्रह्मण इत्यर्थः । वृत्त्यविषयत्वादिति । वृत्ति- रन्तःकरणधर्मः । अत एवान्तःकरणवृत्तिरिति व्यवहारः । सा च नेत्रादिद्वारा जीवचै- तन्योपरक्ता यदा बहिरायाति, तदा विषयेण चैतन्येन च संसर्गो जायते, स विषयोप- राग इत्युच्यते । इत्थं चैतादृशवृत्त्यविषयत्वादित्यर्थः । अत्र प्रमाणमाह—तत्केनेति । अत एवेति । वृत्त्यविषयत्वेन ज्ञातुमशक्यत्वादेव । निरूपयतीति । श्रुतिरिति शेषः । श्रुतिमेवाह—अथात इति । तद्व्यावृत्त्यर्थम् । निष्प्रतियोगिकाभावस्वरूपविशेषव्यावृ- त्त्यर्थम् । तथा च चित्स्वरूपत्वं नोच्यते चेन्निषेधमुखेन निरूपणं तादृशाभावस्वरूपसविशे- षनिरूपणं भविष्यतीति भावः । विशेषासिद्ध्यर्थं केवलं ज्ञानस्वरूपमेवाह—स यथेति । इदं च बृहदारण्ये मैत्रेयीब्राह्मणे ॥

गङ्गाधरभट्टी ।

*निर्विशेषरूपकाणामिति पाठे वेदान्तवाक्यानामित्यर्थः । वृत्त्यविषयत्वादिति । चक्षुरादिवृत्तीनां रूपादिमदर्थग्राहकत्वात् । अत एवेति । दुर्ज्ञेयत्वात् । निष्प्रतियोगि- केति । शून्यरूपमित्यर्थः । मिथ्येति यावत् ॥

---

टिप्पणी ।

* इतः पूर्वं, निर्विशेषरूपिकाणामिति । श्रुतीनामित्यर्थः । इतीयान् पाठः पतितः प्रतिभाति ॥

अन्यच 'द्वे *वा व ब्रह्मणो रूपे मूर्तं चैवामूर्तं चे'त्युपक्रम्य रूपद्वयं प्रतिपाद्य पुनः पठ्यते—'अथात आदेशो नेति नेतीति' । तत्रेतिशब्दस्य संनिहितावलम्बनत्वम् 'इति ह स्मोपाध्याया ऊचु'रित्यादिषु दृश्यते। प्रकृतेऽपि पूर्वनिरूपितरूपद्वयस्य सन्निहितत्वेन तन्निषेध एव ब्रह्मणि 'नेति नेती'त्यनेन प्रतिपाद्यते । एवं सति विशेषनिरूपिकाः श्रुतयो निषेध्यकोटिनिरूपिका इति सिद्धम् । निषेधश्चैतेषामविद्याक-

सुवर्णसूत्रम्।

नतु 'नेति नेती'त्यत्रैतावत्त्वस्यैव निषेधो, न तूक्तरूपद्वयस्येत्यत आह—अन्यच्च द्वे इत्यादि। तथा च प्रसिद्धार्थविरुद्धं तथाकल्पनमित्यर्थः । प्रसिद्धार्थाङ्गीकारेण सिद्धमाहुः —एवं सतीत्यादि । यत्र न विशेषनिषेधस्तापनीयादौ, तत्रापि तं बोधयितुं श्रुत्यन्तर-

हरितोषिणी।

ननु नेति नेतीत्यनेन विशेषनिषेध एवोच्यत इति कुतः, इत्यत आह—अन्यच्चेति। इति ह स्मेति। ह स्मोपाध्याया इति ऊचुरित्यर्थः । एवं सतीति । नेति नेतीत्यस्य

गङ्गाधरभट्टी।

सन्निहितावलम्बनत्वमिति। सन्निहितार्थवाचित्वम् ।

---

टिप्पणी।

* वावेति। अयमवधारणार्थः। ब्रह्मणो द्वे एव रूपे इत्यर्थः। अथात इति। 'द्वे वा वे'त्यनेनैतत्प्रकारकत्वं 'सतो ह्येष रसः' इत्यनेनैतावन्मात्रत्वं च ब्रह्मण्यायातं, तदनेन निषिध्यते। अस्यार्थः—अथ। भिन्नप्रक्रमे। कार्यमध्यात्मादिभेदेन पूर्वं निरूपितम्, इदानीं कारणं निरूप्यते। अतः। ल्यब्लोपे पञ्चमी। उक्तरूपद्वयं हेतूकृत्य। आदेशः कार्याभ्यां ज्ञाप्यस्य ब्रह्मण उपदेशः। नेतिद्वयस्यार्थौ दुर्बोधतयाऽमेतनश्रुत्यैव स्वयं विवृतः। तत्र प्रथमस्य 'न ह्येतस्मादिति' पूर्वोक्तप्रकारं ब्रह्म न, हि युक्तोऽयमर्थः। अत्र हेतुः—'एतस्मादिति' पूर्वोक्तं पञ्चभूतात्मकं रूपमेतस्माज्जातम्। कार्यकारणयोश्च तत्तदसाधारणधर्मभेदाद्भेदः। द्वितीयस्यार्थो 'नेत्यन्यत्परमस्ति' समवायिकारणताबोधकेन रसशब्देन यत्तावन्मात्रत्वं ब्रह्मण्यायातं, तन्न। अन्यत्पूर्वोक्तरूपद्वयाद्भिन्नं परमधिकमस्ति। परं ब्रह्मास्तीति भावः। नेतिद्वये एकस्येतिशब्दस्यैवंप्रकारकत्वमर्थः। अपरस्यैतावन्मात्रत्वम्। इदं मारुतशक्तौ प्रोक्तं सिद्धान्तानुसारि व्याख्यानम्॥

---

१ उपाध्याया इत्यूचुः स्म हेतिपदन्यासः समुचितः।

ल्पितत्वे एव संगच्छते। न हि वस्तु सन्निषेधार्हं भवति । 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति श्रुत्योपासनाविषयाणामब्रह्मत्वोक्तेश्च । तस्मान्निर्विशेषमेव ब्रह्मेति मन्तव्यम्। न चैतादृशस्याविषयत्वात् 'कश्चिद्धीर' इत्यादिश्रुत्या च विषयत्वनिरूपणान्नैवमिति सांप्रतम्। पूर्वोक्तन्यायेन सर्वश्रुत्यविरोधचिन्तने प्रापञ्चिकधर्माणामविद्याकल्पितत्वावधारणेनात्रापि तत्समानयोगक्षेमत्वस्योचितत्वात्। तदा द्रष्टृदृश्यभावोक्तेर्निर्विशेषतदवगतौ च 'तत् केन कं पश्ये'दित्यादिना तन्निषेधादप्येवमवगम्यते । अविद्याकार्यस्य तद्दर्शनस्य सत्वात् तदा न सर्वात्मनाऽविद्यानाशोऽपि, येनाविद्या तदा नष्टेति तद्दृश्यत्वस्य नाविद्यकत्वमिति कथनं स्यात्। किञ्च, सविशेषस्य सूर्यदीपादिप्रकाश्यत्वकथनेन व्यवहार्यत्वेन चाक्षुषत्वेन क्रियादिमत्त्वेन च कथं ब्रह्मत्वमवधा-

सुवर्णसूत्रम् ।

माह—तदेवेत्यादि । सिद्धमाह—तस्मादित्यादि । सविशेषश्रुतीनां निषेध्यकोटिनिरूपकत्वादुपासनाविषयाणामब्रह्मत्वाच्चेत्यर्थः । किञ्चिदाशङ्क्य परिहरति—न चेत्यादि । नैवमिति । न यावद्विशेषराहित्यम्। साम्प्रतमुचितम् । पूर्वोक्तन्यायेनेति । 'उपजीव्यत्वत' इति कारिकोक्तेन न्यायेन। अत्रापीति । 'कश्चिद्धीर' इति श्रुतावपि।

हरितोषिणी ।

प्रसिद्धमूर्तामूर्तरूपद्वयनिषेधकत्वे सतीत्यर्थः । एतेषामिति । विशेषाणामित्यर्थः। न हीति। सद्वस्तु निषेधार्हं न भवतीत्यर्थः। अन्यदपि दूषणमाह—तदेवेतिश्रुत्या । उपासनेति। विशेषाणामिति शेषः । चकारेण निषेधः। अब्रह्मत्वोक्तेश्चेति हेतुद्वयमुपसंहरति—तस्मादिति । शङ्कते—न चेति । साम्प्रतं ब्रह्मणि सर्वविशेषशून्यत्वमुचितं नेत्यर्थः । परिहरति—पूर्वोक्तेति । उपजीव्यत्वत इति । कारिकोक्तन्यायेनेत्यर्थः । चिन्तने विचारे। अत्रापि। 'कश्चिद्धीर' इत्यत्रापि। तत्समानयोगक्षेमत्वात्। दृश्यस्याविद्याकल्पितत्वेन सविशेषश्रुतिसमानयोगक्षेमत्वात् । ननु कथमवगम्यत इत्यत आह—तदेति । तदा ज्ञानकाले । उक्तेरिति । 'कश्चिद्धीर' इति श्रुत्येति शेषः। तदवगतौ ब्रह्मावगतौ। तन्निषेधात् दृश्यत्वनिषेधात् । एवमवगम्यते 'कश्चिद्धीर' इतिप्रतिपाद्यदर्शनस्याविद्यकत्वमवगम्यते । ननु तदा दर्शनविषयस्य ब्रह्मत्वं कुतो नेत्यत आह—किञ्चेति । अत्र प्रमाण-

गङ्गाधरभट्टी ।

पूर्वोक्तन्यायेति । विशेषश्रुतीनां ब्रह्मानिरूपकत्वान्निर्विशेषश्रुतीनां ब्रह्मनिरूपकत्वादित्यादीत्यर्थः । अत्राऽपीति । ईक्षणविषयत्वेऽपि अविद्याकल्पितत्वम् ।

रयितुं शक्यम् । यतो 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती'ति 'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वे'ति 'यत्तदद्रेश्यमग्राह्य'मिति 'निष्कलं निष्क्रियं शान्त'मित्यादिभिः श्रुतिभिस्तद्विरुद्धं तन्निरूप्यते । अत एव सूत्रकारोऽप्याह— 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय' इति । अस्यार्थस्तु —'नेति नेती'ति श्रुतिः प्रकृतं यदेतावत् पूर्वोक्तं मूर्तामूर्तलक्षणं रूपद्वयं, तद्भावं निषेधति ब्रह्मणि । तर्हि तत्सद्भावे किं प्रमाणमत आह— ततो ब्रवीति च भूयः । ततो निषेधानन्तरं, 'न ह्येतस्माद् ब्रह्मणः परमन्यदस्ती'ति धर्मिसद्भावं श्रुतिः स्वयमेव ब्रवीतीति च भूयः । एवं सति धर्मिणोऽन्यस्याविषयकत्वं सिद्धमिति निर्विशेषमेव तदिति प्राप्ते ॥

(३२) वयं वदामः—विशेषाणामविद्याकल्पितत्वं वदन् वादी प्रष्टव्यः । का सा अविद्या ? जीवगता ब्रह्मगता वा, यत्कल्पिता

सुवर्णसूत्रम् ।

एवमिति । दृश्यत्वस्याविषयकत्वम् । धर्मिणोऽन्यस्येति । सविशेषस्य । प्राप्त इति । सर्वाधारत्वादित्यादिहेतुदूषणे प्राप्त इत्यर्थः ॥

(३२) तदुभयलिङ्गाधिकरणेन समाधातुं प्रतिजानते वयं—वदाम इति । तत्र वादिना युक्तिविरोधं प्रदर्श्य विरुद्धधर्माधारत्वं दूष्यत इति पूर्वमेव तमेतं प्रतिवक्तुं पृच्छन्ति

हरितोषिणी ।

माह—यत इति । तद्विरुद्धं सविशेषविरुद्धम् । अत्र सूत्रकारसंमतिमाह—अत एवेति । श्रुतिरिति । आहेति शेषः । तर्हि तत्सद्भाव इति । एवं चेत्तर्हि ब्रह्म सद्भावे इत्यर्थः । धर्मिणः निर्विशेषब्रह्मणः । अन्यस्य सविशेषस्य । प्राप्ते इति । विरुद्धधर्माधारत्वे दूषणे प्राप्ते ॥

(३२) समाधानमाहुः—वयं वदाम इति । व्यासचरणोक्ततदुभयलिङ्गाधिकरणानुरोधेनोत्तरं वदाम इत्यर्थः । विशेषाणां कर्तृत्वादिविशेषाणाम् । प्रथमतोऽविद्यां पृच्छन्ति —का सेति । अविद्याशब्देन अज्ञानम् । तच्च विषयावरकं जीवावरकं वा वक्तव्यम् । तत्राद्यं न संभवति । शुक्त्यां रजतत्वकल्पकं विषयावरकमज्ञानं यदि स्वीक्रियते, तदा सर्वेषां सर्वदा भ्रमः स्यात् । तादृशाज्ञानस्य सर्वसाधारणत्वात् । तस्माद्विषयावरकमज्ञानं

गङ्गाधरभट्टी ।

धर्मिणोऽन्यस्येति । विशेषस्य ॥

तदुभयलिङ्गाधिकरणमाश्रित्य पूर्वपक्षिमतनिरासः क्रियते ।

विशेषाः । न तावद्राद्यः । तस्या ब्रह्मगतधर्मकल्पने सामर्थ्याभावात् । तथाहि—कल्पना हि शुद्धब्रह्मणि वाच्या । तादृशस्य मनोवचसोरप्यविषयत्वेनाधिष्ठानज्ञानाभावाज्जीवस्य तस्याः सम्बन्धस्तु दूरदूरतरः ।

सुवर्णसूत्रम् ।

—का सेति । आद्यं दूषयन्ति—नेत्यादि । दूरदूरतर इति । अयमर्थः—शुक्तिकारजतादिस्थले विषयावरकमज्ञानं चेद्रजतकल्पकं स्यात् सर्वान् प्रति स्यात्, साधारणत्वात् । तथा सत्यदृष्टरजतस्यापि तत्र रजताध्यासः स्यात्, कस्यचिद्विशेषदर्शनदशायां तदभिभवे तस्य सर्वान् प्रत्यभिभूतत्वाद्विशेषदर्शनाभाववतोऽपि रजताध्यासनिवृत्तिश्च स्यात् । अतो विषयावरकमज्ञानं यथा तत्र न रजतकल्पकमेवं ब्रह्मावरकाज्ञानमपि । अतः परं तत्रैवात्रापि जीवावरकाज्ञानं तत्कल्पकमित्यवशिष्यते । तच्च विषयेन सम्बध्यमानमेव कल्पकम् । अन्यथा शुक्त्यदर्शनेऽपि कल्पयेत् । सम्बन्धश्च तस्य मनोद्वारक एव, मनो यदेन्द्रियेण संसृज्यते तदैव बाह्यज्ञानोदयात् । 'यतो वाच' इति पूर्वोक्तश्रुत्या च मनःसंसर्गे निवारिते द्वाराभावाज्जीवावरकलिङ्गशरीरनिष्ठायास्तस्याः सम्बन्धस्तथैवेत्यर्थः । ननु

हरितोषिणी ।

यथा रजतकल्पकं न भवति, तद्वद्ब्रह्मावरकमज्ञानं विशेषधर्मकल्पकं न भवतीति ब्रह्मगताऽविद्या वक्तुं न शक्यत इति जीवगता सा वक्तव्या; तामपि दूषयन्ति—न तावदिति । तस्याः जीवगताविद्यायाः । असामर्थ्यमेवाहुः—तथा हीत्यादिना । कल्पना हि विशेषधर्माणां कल्पना हीत्यर्थः । मनोवचसोरिति । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'ेति श्रुत्येति शेषः । अधिष्ठानेति । यत्र धर्मकल्पनं तस्यैव ज्ञानं नास्तीत्यर्थः । आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेत्येवंरीत्या सम्बन्धे सति ज्ञानं जायते । अत्र तु मनःसम्बन्धाभावेन ज्ञानमेव''''करकाज्ञानेन शुक्त्यवृत्तिरजतत्वधर्मकल्पनायां सत्यामिदं रजतमिति यथा भ्रमो जायते, एवमविद्यया ब्रह्मावृत्तिक-..........न जायत इति भावः । जीवस्य तस्या इति । जीवावरकलिङ्गशरीरनिष्ठाया अविद्यायाः सम्बन्धो दूरतर इत्यर्थः । तथा च लोके भ्रमस्थले शुक्तिज्ञाने *जाते जीवा-

गङ्गाधरभट्टी ।

(३२) तस्याः सम्बन्ध इति । ब्रह्मणि । ननु विशेषज्ञानाविषये शुक्त्यादावेव रजतादिविशेषकल्पनेति चेत्, अत्रेवाहुः—

टिप्पणी ।

* जात इत्यतः परं कियत्पङ्क्त्यंशः परिभ्रष्ट इति प्रतिभाति ॥

अपि च 'पराञ्चि खानी' त्यनेनाविद्यासम्बन्धीन्द्रियाणामविषय इत्युक्त्वा, तद्रहितेन्द्रियविषयत्वं, 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छ'न्नित्यनेन निरूप्यते । 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमान' इति श्रुतौ ज्ञानवत एव तद्दर्शनमुच्यते। न हि तदा साऽस्तीति वक्तुं शक्यम्। ज्ञाननाश्यत्वेनाभ्युपगमात्। 'यद्धि पश्यन्ति मुनयो गुणापाये समाहिता' इत्यादिस्मृतिविरोधश्च ॥

ननु तदा द्रष्टृदृश्यभावस्य सत्वान्निर्विशेषतदवगतौ, 'तत्केन कं पश्ये'दित्यादिना तन्निषेधान्न सर्वात्मना अविद्यानाश इति तत्कल्पनैव तत्रापीति चेत्, तर्हि ब्रह्मणो दृश्यत्वमप्याविद्यकं तव मनीषितम्।

सुवर्णसूत्रम्।

मास्तु मनोद्वारकः सम्बन्धो, बहिरिन्द्रियद्वारक एवास्ताम्, बहिर्विषयकज्ञाने मनसोऽपीन्द्रियाधीनत्वादतो न कल्पनानुपपत्तिरित्याशङ्कायां प्रकारान्तरेण तत्सम्बन्धाभावमाहुः— अपि चेत्यादि, विरोधश्चेत्यन्तम् । तथा चाविद्यासम्बन्धदशायामिन्द्रियाणामपि द्वारत्वाभावेन सम्बन्धाभावः, तदभावदशायां तु द्वारसत्वेऽपि कल्पिकाया एवाभाव इत्युभयथापि न तस्याः सम्बन्ध इति कुतः कल्पकत्वमित्यर्थः। पूर्वपक्षिणा निर्विशेषस्याविषयत्वं यदुपगतं तदनेन प्रत्युक्तम्। अविषयत्वश्रुतिविरोधस्त्वग्रे परिहार्यः ॥

अभावदशायां पुनस्तस्याः सत्वमाशङ्कते—नन्वित्यादि । तत्कल्पनैव तत्रापीति। तादृशस्य दृश्यत्वकल्पनैव श्रुतावपीत्यर्थः । तदानीं तत्सत्वमुपगम्यापि तदुक्तं दूषयन्ति

हरितोषिणी।

घटकर्तृत्वद्रष्टृत्वादिधर्मारोपेणाऽयं कर्तेति भ्रमः स्यात्। स तु न संभवति अधिष्ठानज्ञानाभावादिति भावः। अविद्यानाशकालेऽपि ब्रह्मणि दृश्यत्वादिधर्मसत्वान्न तस्यास्तत्कल्पकत्वमित्याशयेन दूषणान्तरमाहुः—अपि चेति। विषयत्वमिति । निरूप्यत इत्यग्रेणान्वयः। गुणापाये त्रिगुणात्मकाविद्यानाशे ॥

अत्राशङ्कते—नन्विति। तदा ज्ञानदशायामपि। निर्विशेषेति । निर्विशेषब्रह्मप्राप्तिदशायाम्। तत्कल्पनैव ब्रह्मज्ञानवतो द्रष्टृत्वदृश्यत्वकल्पनैव । तत्रापि श्रुतावपि। अस्तु ज्ञानकाले अविद्यायाः सत्वं, तथापि दूषणमस्तीत्याशयेन समाधानमाहुः—तर्हीति।

गङ्गाधरभट्टी।

अपि चेति। केचित्तु व्याचक्षते—'अविद्याया जीवस्य च सम्बन्धो दुर्वच' इति। व्याचक्षत च प्रभव एव प्राग् 'जीवस्यानेकशशाङ्कावभासवदसत्वात्। न हि दोषवशाद्दृष्टचन्द्राणामेव स्यानेकत्वाभास' इति ॥ तत्कल्पनैवात्रापीति। आविद्यकत्वकल्पनैवेत्यर्थः।

तथा सत्यविषयया ब्रह्मणि विशेषकल्पनायां दृश्यत्वं, दृश्यत्वे च सत्य-धिष्ठानज्ञाने सति तत्कल्पनमित्यन्योन्याश्रयः । 'निष्कल'मिति 'प्रत्य-गात्मान'मितिपदेन चाविद्यारहितस्यैव दर्शनविषयत्वेनोक्तेस्तद्विरो-धश्च । न च तत्र विषयस्त्वाविद्यक एव, भेदनिरूपणात्, निष्कलादि-पदं तु वास्तवरूपाभिप्रायमिति वाच्यम् । प्रकृते कर्मतानुपपत्तेः । 'क-श्चिद्धीर' इत्यत्रेक्षणक्रियाकर्मवाचकस्य प्रत्यगात्मपदातिरिक्तस्याभावा-दस्य चात्रावाचकत्वादीक्षणक्रियोत्पत्त्यनुपपत्तिश्च । किञ्चैवं, निर्विशेषब्र-ह्मदर्शनोच्छेदात् तन्निरूपकश्रुतीनां 'ब्रह्म वेद ब्रह्मैव भवति,' 'तमेव विदित्वाऽतिमृत्युमेति,' 'तस्मिन् दृष्टे परावरे,' 'कश्चिद्धीरः प्रत्यगात्मा-नमैक्ष'दित्यादीनां, 'वेदैश्च सर्वैरहमेव वेद्यः,' 'भक्त्या मामभिजानाती'-त्यादीनां स्मृतीनां चोपप्लवः ॥

सुवर्णसूत्रम् ।

—तर्हीत्यादि । अविद्यारहितस्येति । ब्रह्मण इति शेषः । पुनः किञ्चिदाशङ्क्य परि-हरन्ति—न चेत्यादि । प्रकृते कर्मतानुपपत्तेरिति । अविद्यालेशसत्तासमये वास्तव-रूपस्यागोचरत्वाद्दर्शनक्रियाकर्मत्वानुपपत्तेः । तथा चैवमुपगमेऽपि विभक्तिश्रुतिविरोधो दुर्वार इत्यर्थः । स्फुटमन्यत् ॥

हरितोषिणी ।

अधिष्ठानेति । यथा शुक्तौ रजतत्वकल्पना शुक्तिज्ञानं (रूपाधिष्ठानज्ञानं) विना न जायते, तथात्रापीति भावः । तत्कल्पनमिति । विशेषधर्मकल्पनमित्यर्थः । दूषणान्तर-माहुः—निष्कलमिति । 'निष्कलं ध्यायमान' इत्यत्र निष्कलपदेनेत्यर्थः । तद्विरोधः । श्रुतिविरोधः । शङ्कते—न चेति । तत्र 'निष्कल'मित्यादिश्रुतौ । विषयस्तु ज्ञानविषयस्तु । एव भेदेति । वास्तवावास्तवयोर्भेदे एव निरूपणं श्रुतावस्तीत्यर्थः । उत्तरमाहुः—प्रकृत इति । यत्किञ्चिदविद्यासत्ताकाले । कर्मतेति । 'प्रत्यगात्मान'मित्यत्र दर्शनक्रिया-निरूपितकर्मत्वानुपपत्तेरित्यर्थः । तथा च तत्राविद्यालेशस्य सत्त्वात्तद्रहितस्य दर्शनाविषय-त्वादिति भावः । दूषणान्तरमाहुः—कश्चिदिति । अस्य चेति । प्रत्यगात्मपदस्येत्यर्थः । वेदैरिति । स्मृतीनामित्यग्रेणान्वयः । श्रुतिस्मृत्युपप्लवरूपं दूषणान्तरमाहुः—किञ्चेति । श्रुतीनामिति । इत्यादीनामित्यग्रेणान्वयः ॥

गङ्गाधरभट्टी ।

भेदनिरूपणादिति । 'तं पश्यते' इति कर्तृकर्मभेदस्याविद्यकत्वम् । प्रकृते इति । निष्कले तस्मिन् । अस्य चात्रेति । आत्मपदार्थस्याऽकर्मत्वात् । 'तदेव ब्रह्म'त्यस्यार्थस्तु—वेदान्तप्रसिद्धमेव ब्रह्म, नेन्द्रियादिरूपमिति । प्रकरणानुरोधात् ॥

अपरञ्च, अवास्तवमिति कोऽर्थः? । वस्तुनो नैसर्गिको धर्मो वास्तवस्तद्भिन्न आगन्तुको धर्मस्त्ववास्तव इति यदि, तदा मृदः पृथुबुध्नोदराद्याकाराणामप्यविद्याकल्पितत्वमेव शुक्तिकारजतवन्न तु कुलालेन दण्डादिसहकारेण जनितत्वमित्यागतम् । तथा च प्रत्यक्षविरोधः । क्वचिद् विनापि कुलालादिकं तदुत्पत्त्यनुभवप्रसङ्गः । तेन जलाहरणमपि क्रियेत जाग्रतैव । जलाहरणार्थिनो नियमतो घटे प्रवृत्त्यनुपपत्तिश्च । न ह्यज्ञानकल्पितमरुमरीचिकापाथसः पानार्थं पिपासोर्नियमेन प्रवृत्तिः संभवति । न च दोषदशायां प्रतीयमानः स इति वाच्यम् । इदमंशस्यापि तथात्वापत्तेः । न च तत्प्रयुक्तत्वे सतीति वाच्यम् ।

सुवर्णसूत्रम् ।

यत्तेन वास्तवरूपाभिप्रायमित्युक्तम्, तत्र वास्तवरूपमितरव्यावृत्त्या निर्णेतुमवास्तवपदार्थं विचारयन्ति—अपरञ्चेत्यादि संभवतीत्यन्तम् । तथा चागन्तुकस्यापि प्रत्यक्षादिना वास्तवत्वनिश्चयान्नैसर्गिको धर्म एव वास्तव इति नियमोऽसंगत इत्यर्थः । अवास्तवमिन्नो वास्तव इति विवक्षां दूषयितुमवास्तवपदार्थं विचारयितुं विकल्पयन्ति—न चेत्यादि । स इति । अवास्तवः । इदमंशस्येति । शुक्तिरजतस्थले इदं रजतमितिप्रतीयमानस्य तस्येत्यर्थः । दोषप्रयुक्तत्वे सति दोषदशायां प्रतीयमानः अवास्तव इत्यपि दूष-

हरितोषिणी ।

अवास्तवं परिदृश्यमानं भवतीति तव मतम्; तत्रावास्तव इत्यस्यार्थं विचारयन्ति—अपरं चेति । अविद्याकल्पितत्वमेवेति । मृन्निष्ठो यो नैसर्गिको धर्मः स घटे नास्तीति घटोऽवास्तवोऽज्ञानेन कल्पितः । शुक्तिकायां यथा रजतं कल्पितम् । तथा च तादृशरजतेन किमपि कार्यं न जायते, तथा घटेनापि कार्यं न स्यादिति भावः । अज्ञानकल्पिते प्रवृत्तिर्न जायत इत्यत्र दृष्टान्तमाहुः—न ह्यज्ञानेति । अवास्तवपदार्थः पूर्वोक्तो न भवति, किन्त्वन्य एवेत्याशङ्कते—न चेति । सः अवास्तवः । तथा च शुक्तिकारजते दोषदशायां प्रतीयमानत्वमस्ति, घटे तथात्वं नास्तीति तयोर्भेद इति भावः । उत्तरयन्ति—इदमंशस्येति । शुक्ताविदं रजतमिति भ्रमो जायते, तत्र इदमंशे प्रमात्मकं, रजतत्वांशे भ्रमात्मकं ज्ञानद्वयमिति पूर्वोत्तरमीमांसकानां सिद्धान्तः । तत्र दोषदशायां प्रतीयमानत्वमिदमंशस्याप्यस्तीति तस्याप्यवास्तवत्वापत्तिः । इदमा बोधितस्य शुक्त्यादेर्वास्तवत्वादिति भावः । शङ्कते—न चेति । तत्प्रयुक्तत्वे सति दोषप्रयुक्तत्वे सति । तथा च दोषद-

गङ्गाधरभट्टी ।

प्रतीयमानः स इति । अवास्तवो धर्मः । इदमंशस्येति । इदं रजतमित्यत्र । तत्प्रयुक्तत्व इति । दोषप्रयुक्तत्व इति विशेषणीयम् ।

तिमिरोपहतनयनस्य नेत्रदर्पणाधानेन सूक्ष्मेष्वपि वर्णेषु स्थूलत्वभ्रमो वर्णप्रमा चैकेनैव जन्यत इति वर्णांशेऽपि भ्रमत्वापत्तेः । न च तस्मिन्नंशे तस्य गुणत्वमेव । अविद्यायामपि ब्रह्मांशे गुणत्वमेवाङ्गीकुरु । सर्वश्रुत्ये-

सुवर्णसूत्रम् ।

यन्ति—न च तदित्यादि । एकेनेति । नेत्रदर्पणेन । तथा च वास्तवपदार्थस्य निर्दे-तुमशक्यत्वादेषा विवक्षाऽप्यसङ्गतेति वास्तवरूपाभिप्रायमित्युक्तिरसङ्गतैवेत्यर्थः । ननूक्ता विवक्षा नासङ्गता, किन्तु नेत्रदर्पणस्य दोषत्वमेव काचित्कमतो न दोष इत्यत आहुः—न चेत्यादि । तस्येति । नेत्रदर्पणस्य । ब्रह्मांश इति । अविद्यया प्रतीयमाने ब्रह्मांशे । तथा च ''अविद्याऽप्युपकाराय विषवज्जायते नृणाम् । अनुष्ठिताभ्युपायेन ब-

हरितोषिणी ।

क्षायां प्रतीयमानं रजतशुक्त्युभयमपि भवति, परन्तु दोषप्रयुक्तत्वं रजतांशे, न तु शुक्ता-विति न तस्या अवास्तवत्वापत्तिरिति भावः । समाधानमाहुः—तिमिरेति । नेत्रदर्प-णेति । उपनेत्रस्थापनेन नेत्रदर्पणस्य उपनेत्रमिति लोके प्रसिद्धिः । तथा च निष्कलादि-पदं तु वास्तवाभिप्रायेणेति कथनमसङ्गतम् । उक्तरीत्या अवास्तवपदार्थाज्ञानादिति भावः । शङ्कते—न चेति । तस्मिन्नंशे वर्णांशे । तस्य नेत्रदर्पणस्य । तथा च विवक्षा नासङ्ग-तेति भावः । उत्तरमाहुः—अविद्यायामपीति । ब्रह्मांशे अविद्यया प्रतीतिविषयीभूते

गङ्गाधरभट्टी ।

तस्येति । नेत्रदर्पणस्य । अङ्गीकुर्विति । मार्कण्डेयपुराणे चोक्तं रौच्यान्तरे—'अविद्या-प्युपकाराय विषवज्जायते नृणाम् । अनुष्ठिताभ्युपायेन बन्धायान्यायतो हि से'ति ।

---

टिप्पणी ।

* अविद्येति । अत्रोत्तरार्द्धे 'बन्धायान्यापि नो हि से'ति संप्रति पाठभेद उपलभ्यते । अत्रेदमवधेयम्—'अविद्या पठ्यते वेदे कर्ममार्गः पितामह' इति कर्मसु रुचिनाऽकचिरा-विष्कृता, तत्पितामहैश्च 'अविद्या सत्यमेव तत्' 'किन्तु विद्यापरिप्राप्तौ हेतुः कर्मे'ति कवि-करणकारणं भणितम् । ततः परं पद्यद्वयेन विहिताकरणस्य प्रत्यवायावहत्वं प्रदर्श्य 'अवि-द्यापी'त्यपाठि । अतः प्रकरणमहिम्नेहाऽविद्या कर्मेति रम्यं प्रतिभाति, परन्त्वेवं सतीह बन्धकमपि कर्मानुष्ठितेनाभिसन्धित्यागादिरूपोपायेन चित्तशुद्धिद्वारा विद्यापरिप्राप्तिरूपो-पकाराय कल्पत इत्यर्थो वक्तव्यः । सोऽयं तत्पितृभिः 'नच बन्धाय तत्कर्म भवत्यनभि-सन्धितम्' 'विद्यापरिप्राप्तौ हेतुः कर्मे'त्यादिना पूर्वमेवोक्त इति पुनस्तत्कथने पौनरुक्त्यम् । अतोऽविद्या भावरूपाज्ञानमेव परेण वक्तुं शक्यते, न कर्म । यत्कार्यतया कर्मणां दुष्टत्वं, साऽविद्याऽपि निवृत्तानुपकरोति, किमुत कर्माणीति कैमुतिकन्यायेन कर्मणां निवृत्त्यनुकू-लत्वं बोधयितुमिदमिति न प्रकरणविरोधोऽपि । दृष्टान्तविधया सङ्गतिसंभवात्कर्मणो ग्रह-णेऽपि हानिस्तु न काऽपि । 'युक्तयः सन्ति सर्वत्र' परन्तु प्राभञ्जनाऽनुरोधादिदम् ॥

कवाक्यतार्थमिदमपि त्वद्रीत्योच्यते ॥

वस्तुतस्तु ब्रह्मधर्माः सर्वे एवानागन्तुका एव, यतो नित्याः । श्रुत्या तथैव निरूपणात् । तथाहि—'न तस्य कार्यं करणं च विद्यते, न तत्स-मश्चाभ्यधिकश्च दृश्यते' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञा-नबलक्रिया चे'ति तत्सम्बन्धि यत्किञ्चित् कार्यं जन्यं नास्ति, किन्त्व-जन्यमेव । किञ्च, तस्येति षष्ठ्या *भेदो निरूप्यते । तथा च जीववत्स्व-

सुवर्णसूत्रम् ।

न्धायान्यायतो हि से'ति मार्कण्डेये रौच्यमन्वन्तरे वाक्यात्तथा तेन कत्वादयो वास्तवा एव प्रतीयन्ते, विषेण च क्षुधादिकं, तथात्राऽपि तया दृश्यत्वं करचरणादिकं वास्तवमेव प्रतीयत इति सिद्धेरुक्तश्रुतिस्थकर्मवाचकपदे वास्तवावास्तवरूपविभागाङ्गीकारोऽसङ्गत इत्यर्थः । अस्मिन् प्रकारे धर्माणां वास्तवत्वसिद्धावपि नैसर्गिकत्वासिद्ध्या श्रुत्यन्तरविरो-धापरिहारादरुचिं सूचयन्ति—त्वद्रीत्येति । दर्शनस्याविद्यकत्वमङ्गीकृत्येत्यर्थः ॥

हरितोषिणी ।

प्रह्मांशे । एकवाक्यतार्थमिति । अङ्गीकुरु इति पूर्वेणान्वयः । अत एवोक्तं मार्कण्डे-यपुराणे रौच्यमन्वन्तरे—'अविद्याऽप्युपकाराय विषवज्जायते नृणाम् । अनुष्ठिता-भ्युपायेन बन्धायान्यायतो हि से'ति । अन्यायतः अन्यायेन । तथा च ब्रह्मणि दृश्यत्वं करचरणादिमत्त्वं वास्तवमेव प्रतीयते अविद्यया, यथा विषेण क्षुधादिकं प्रतीयते, नेत्रदर्पणेन कत्वखत्वादिकम् । एवं च निष्कलादिपदं तु वास्तवाभिप्रायेणेति कथनमसङ्ग-तम् । वास्तवावास्तवविभागस्वीकारस्य व्यर्थत्वादिति भावः । अस्मिन् पक्षे अस्वरसं दर्श-यन्ति—इदमपीति । दृश्यत्वादिधर्माणां वास्तवत्वमपीत्यर्थः । त्वद्रीत्या 'प्रत्यगात्मा-नमैक्ष'दित्यादौ दर्शनविषयत्वादिकमाविद्यकमिति त्वन्मतं स्वीकृत्य ॥

धर्माणां स्वाभाविकत्वबोधकश्रुतिविरोधपरिहारार्थं सिद्धान्तमाहुः—वस्तुतस्त्विति । सर्वे एव ब्रह्मधर्माः अनागन्तुका एवेत्यन्वयः । तन्निरूपकश्रुतीर्दर्शयन्ति—तथा हीत्या-दिना । यत्किञ्चित्कार्यमिति । कार्यत्वेन परिदृश्यमानम् । किञ्चेति । भेदे सति कुत्र निरूपणमत आहुः—तथा चेति । जीववदिति । जीवे यथा जीवातिरिक्तं चक्षुरादि-

टिप्पणी ।

* भेदो निरूप्यत इति । अत्रेदमवधेयम्—'न तस्य कार्यं करणं चे'ति श्रुतौ षष्ठ्या सम्बन्धमात्रं बोध्यते, दण्डस्य ताडनं, ब्राह्मणस्य दानमित्यादाविव । तत्र करणत्वादिक-मिव तदुपादेयत्वतत्प्रतियोगिकभेदवत्त्वविशेषौ 'आनन्दमात्रकरपादमुखोदरादि'रि-

रूपातिरिक्तं ज्ञानक्रियादिषु करणमिन्द्रियादिकमपि तस्य नास्ति। आनन्दमात्रकरपादमुखोदरादित्वात्। अथवा नित्यत्वात्तद्धेतुभूतं करणं च नास्ति । अत एव 'न तत्सम' इत्यादि । जीवानामताद्दशत्वात्। अत एव, 'सर्वस्येशान' इति श्रुतिः। अत एव तद्दासा एव जीवा इति फलितम् । परा मनोवचसामपीदमित्थतया ज्ञातुमशक्या विविधा

सुवर्णसूत्रम्।

तत्परिहाराय सिद्धान्तपक्षमाहुः—वस्तुत इत्यादि । तद्धेतुभूतमिति । करादिहेतुभूतम् । अत एवेति । आनन्दमात्रकरादिमत्त्वादेव । अत एवेति । समाभ्यधिकराहित्यादेव । अन्यथा सर्वेशानत्वं निरङ्कुशं न स्यात् । अत एवेति । निरङ्कुशेशानत्वादेव ।

हरितोषिणी।

करणं, तथात्र नास्तीति भावः। अत्र हेतुमाहुः—आनन्दमात्रेति । पक्षे हेत्वन्तरमाहुः—अथवेति । नित्यत्वादिति । ज्ञानक्रियादीनां नित्यत्वात्तद्धेतुभूतमिन्द्रियादिकं नास्तीत्यर्थः । अत एवेति । ज्ञानक्रियादीनां नित्यतया तद्धेतुभूतकरणत्वाभावादेवेत्यर्थः । अताद्दशत्वादिति। नित्यज्ञानक्रियादिमत्त्वाभावादित्यर्थः। अत एव ब्रह्मनिष्ठज्ञानक्रियादीनां नित्यत्वादेव । फलितम् 'सर्वस्येशान' इतिश्रुत्या फलितम् । 'परास्य शक्तिर्विविधैवे'ति श्रुतौ पराशब्दार्थमाहुः—परेति । श्रुतौ तु परेत्येकवचनं श्रूयते, व्याख्याने तु बहु-

गङ्गाधरभट्टी।

अत एव नेति। आनन्दमात्रकरादिमत्त्वादेव। अत एवेति। साम्याधिक्यराहित्यात् । इदमित्थतयेति। इदमित्थं भवतीति वाक्यैकदेशानुकरणाद्भावे तल् । केवलान्धन्तमोगा इत्यादिवत् । पृषोदरादित्वाद्वा साधुः । शिष्टप्रयोगात्।

---

टिप्पणी।

त्यादिना तात्पर्यग्रहतः पश्चात्प्रतीयेते । अतः फलितार्थकथनमिदम् । एवं च नेहार्थद्वयबोधानुपपत्तिप्रयुक्ता तस्येतिपदावृत्तिरपि । एवमेव देवदत्तस्य पुत्रः शिष्यश्चेत्युदाहरणानि सङ्गतानि । अथवा 'गङ्गायां घोषमत्स्या'वित्यत्रेव शक्त्योपादेयत्वं, लक्षणया च भेदो बोध्यत इति । द्वयमपि प्राभञ्जने । अनयैव कियद्रुच्याऽथवा नित्यत्वादिति पक्षान्तरमुक्तम्। न तत्सम इति । यद्वयमप्यर्थे । तत्समोऽपि न दृश्यते, तदभ्यधिकोऽपि न दृश्यत इत्यर्थः। जीवादयः सर्वे न्यूना एवेति भावः । अत एवास्य दास्यं फलिष्यति। चकारस्यानुक्तसमुच्चयार्थतया तन्न्यूनोऽपि नेति तु नार्थः । तथा सति समत्वमायातीति 'न तत्सम' इत्यस्य विरोधः। न च ब्रह्मैक्ये तात्पर्यम्। लक्षणापत्तेः। स्वाभाविकीति। स्वरूपात्मिका, 'स्वरूपं च स्वभावश्चे'ति कोषात् ॥

अनेकरूपाः शक्तयः । शक्तिस्वरूपविचारे ब्रह्मस्वरूपान्नातिरिच्यते इति ज्ञापनायैकवचनम् । तेनाचिन्त्यानन्तशक्तिमत्त्वमुक्तं भवति । सापि शक्तिः स्वाभाविकी, नत्वागन्तुकी । तथैव ज्ञानशक्तिः क्रियाशक्तिश्च स्वाभाविक्येव, न तु देहेन्द्रियव्यतिरेकेण ज्ञानक्रिये भवत इत्यर्थः। एवं सति नित्यं वस्तु सदविद्यया कल्पितमिति वक्तुं न शक्यम् । विरोधात् । तस्य किञ्चित् कार्यं कर्तव्यं नास्ति, करणमिन्द्रियादिकमपि नास्ति । अत एव 'न तत्सम' इत्यादि । यतः कर्तव्यं विनापि विविधाः शक्तयः, करणं विनापि ज्ञानादिमत्त्वं च श्रूयते । अतः सर्वा अपि शक्तयः स्वाभाविक्य इति व्याख्यानमपि नातिदुष्टम् । यद्यपि नित्यत्वेन सृष्टेः पूर्वमनन्तरं च तासां वर्तमानत्वान्न हि तदा किञ्चित् कर्तव्यमस्ति, तथापि सामान्यनिषेधपरत्वेन दुष्टमेव । ईक्षत्यधिकरणविरोधात् । तथाहि—'सदेव सौम्येदमग्र आसीद् एकमेवाद्वितीय'मित्युपक्रम्य, 'तदैक्षत बहु स्यां प्रजायेयेति' 'तत्तेजोऽसृजते'ति । तथाऽन्यत्र 'आत्मा वा

सुवर्णसूत्रम् ।

एकवचनश्रुतिविरोधं परिहरन्ति—शक्तीत्यादि । तेनेति । विविधत्वश्रावणेन । चाद्बलशक्तिः । एवं सिद्धान्तवर्त्मना श्रुतिं व्याख्याय मतान्तरीयव्याख्याने अविद्याश्रयाभावेन तदभावतस्तत्सम्बन्धाभावरूपं दूषणं बोधयितुं तत् प्रदर्शयन्ति—तस्येत्यादि । उत्तरार्द्धव्याख्यातात्पर्यमाहुः—यत इत्यादि । नन्वेवमानुगुण्ये कुतोऽस्य व्याख्यानस्य दुष्टत्वमत आहुः—यद्यपीत्यादि । अदोषे हेतुमाहुः—नित्यत्वेनेत्यादि । तदेति । प्रलयकाले । दोषे हेतुमाहुः—तथापीत्यादि । तथान्यत्रेति । ऐतरेयब्राह्मणे मिषदिति । व्यापारं

हरितोषिणी ।

वचनं श्रूयत इति कथमित्यत आहुः—शक्तिस्वरूपेति । क्रियाशक्तिश्चेति । चकारेण बलशक्तिः । एवं सतीति । एतादृशोपनिषत्प्रतिपाद्यत्वे सति । विरोधादिति । उक्तश्रुतिविरोधादित्यर्थः । अविद्यासम्बन्धाभावात्तत्सम्बन्धि किमपि नास्तीत्याहुः—तस्येति । 'नास्ती'त्यनेन लोकवैलक्षण्यं सूचितम् । तत्समः कुतो नास्तीत्यत आहुः—यत इति । नन्वेवंरीत्या व्याख्याने दुष्टत्वं कुत इत्यत आहुः—यद्यपीति । तासां शक्तीनाम् । तथापीति । विरोधमेव विशदयन्ति—तथा हीत्यादिना । तथाऽन्यत्रेति । अन्यत्र ऐतरेये ।

गङ्गाधरभट्टी ।

इत्यर्थ इति । परोक्ते, न तु युक्त इत्यर्थः । नित्यत्वेनेति । शक्तीनाम् । किञ्चिदिति । ज्ञानशक्त्यादि ।

इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्, स ऐक्षत लोकानुत्सृज इतीमाँल्लोकान् सृजत' इत्यादिश्रुतेः सृष्टेः प्राग् ब्रह्मणोऽशरीरत्वं तेजः-प्रभृतिलोककर्तृत्वं च मिथ्यावादिनाप्यङ्गीकार्यम् । अतः कर्तव्यांशसामान्यनिषेधस्तु नोपपद्यते । न हि तदा कश्चिज्जीवोऽस्ति । येन स्वाविषयया तत्कर्तृत्वलक्षणविशेषः कल्प्येत । अस्तीति चेत्, सदेवेति श्रुतिविरोधः । एवं सति यथा स्वाभाविक्यो ज्ञानादिशक्तयः श्रुतिबलेनाङ्गीकृताः अस्येति षष्ठ्या भेदेन निर्देशाद्धर्मरूपास्तथा 'सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुख'मित्यादिश्रुतिस्मृतिबलेन स्वरूपभूतानन्दमात्रकरपादादीनामपि संभवाच्च करणानामपि सामान्यनिषेध उपपद्यते । तस्मादसदुक्त एवार्थः ॥

सुवर्णसूत्रम् ।

कुर्वत् । तेजःप्रभृतिलोककर्तृत्वमिति । तेजोऽबन्नादिकर्तृत्वं लोककर्तृत्वं चेत्यर्थः । कुतो नोपपद्यत इत्याकाङ्क्षायामाहुः—न हीत्यादि, विरोध इत्यन्तम् । करणनिषेधेऽपीमामुपपत्तिमतिदिशन्ति—एवं सति यथेत्यादि । षष्ठ्या भेदेनेति । परमते भेदषष्ठीव्याख्यानादेवमुक्तम् । तस्मादसदुक्त एवार्थ इति । सामान्यनिषेधप्रतिज्ञायाः सकलप्रवृत्त्यवगुण्ठनन्यायेनापार्थत्वात्कार्यरूपकरचरणादिविशेषनिषेधरूप एवार्थ इत्यर्थः । एवमिन्द्रियादीनां श्रौतत्वव्युत्पादनेन गौरवदोषः परोट्टङ्कितः परिहृतः ॥

हरितोषिणी ।

नान्यत्किञ्चनेति । आसीदिति पूर्वेणान्वयः । मिषदिति । सः व्यापारं कुर्वन्नित्यर्थः । तेजःप्रभृतिलोककर्तृत्वमिति । तेजःप्रभृतिकर्तृत्वं, लोककर्तृत्वं चेत्यर्थः । तेजःप्रभृतिकर्तृत्वं नाम तेजोऽबन्नादिकर्तृत्वम् । तेजः, अप्, अन्नादीति—तदर्थः । नोपपद्यत इत्युक्तं, तत्र हेतुमाहुः—न हीति । करचरणादीनां निषेधो नास्तीत्याहुः—एवं सतीति । धर्मरूपा इति । 'परास्य शक्तिर्विविधैवे'ति श्रुतौ अस्येति भेदेन निर्देशोऽस्तीति धर्मरूपा इत्यर्थः । सामान्यनिषेध इति । कार्यरूपाणां करणानां निषेधसत्त्वं, न तु नित्यानाम् । अतः करणत्वावच्छिन्ननिषेधो नास्तीत्यर्थः । एतावता सर्वेषां भगवत्सम्बन्धीन्द्रियाणां वेदप्रतिपाद्यत्वं समर्थितम् ॥

गङ्गाधरभट्टी ।

तेजःप्रभृतीत्यादि । तेजःप्रभृतिश्च लोकाश्च तेषां कर्तृत्वम् ॥

(३३) किञ्च, अविद्याकल्पनपक्षे तत्प्रसादेन तत्प्राकट्यतद्दर्शनाद्यनुपपत्तिः। तदर्थं तपस्यादितत्साधनप्रवृत्त्यनुपपत्तिश्च । न हि तपस्यादिसाधनानां दोषोद्भव एव फलम् । येन तेषु क्रियमाणेष्वेतादृशो भ्रमोऽविद्यया जन्यत इत्युच्येत । तथा सति चित्तकषायशोधकत्वं साधनानां सर्वत्र श्रूयमाणं व्याहन्येत । दोषाधिक्यजनकत्वेन निन्दितत्वं च स्यात् ।

ब्रह्मणः सविशेषत्वं श्रीयाविद्याकल्पितमित्यस्य प्रकारान्तरेण खण्डनम् ।

किञ्च 'पराञ्चि खानी'ति श्रुत्याऽविद्यावदिन्द्रियाविषयत्वं, तद्रहितत-

सुवर्णसूत्रम् ।

(३३) सृष्टिसामयिकं तदीयकल्पनापक्षं पुनः प्रकारान्तरेण दूषयन्ति—किञ्चेत्यादि । तत्प्रसादेनेति । 'ज्ञानप्रसादेन विशुद्धसत्त्व' इति 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादा'दिति श्रुतेर्ज्ञानप्रसादेन भगवत्प्रसादेन वा । तत्प्राकट्येति । 'तस्यैष आत्माविवृणुते तनुं स्वा'मिति श्रावितततत्प्राकट्येत्यर्थः । तदर्थमित्यादि । तथा च कल्पनायाः सर्वकालं संभवात्तथेत्यर्थः । ननु कल्पने चिन्ताया इव तपस्यादीनामपि साधनत्वान्न तत्करणानुपपत्तिरित्यत आहुः—न हीत्यादि । तथा चाविद्यायाः ज्ञानावरकत्वेन कल्पनादशायां ज्ञानतिरस्कार एव भवेन्न प्रसादो नाप्यावरणभङ्ग इति न प्राकट्यादीत्यर्थः । ननु 'यत्र कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । सिद्धिं तत्र विजानीयात्तस्मिन् स्वप्ननिदर्शन' इति श्रुतौ यथा काम्यकर्मणस्तादृक्फलजनकत्वमेवं तपस्यादीनामपि तादृशदोषजनकत्वमेवेति चेत्तत्राहुः—तथा सतीत्यादि । तथा च काम्यस्य कषायजनकत्वेन निन्दितत्वात्तदृष्टान्तेनात्र प्रत्यवस्थानं न युक्तमित्यर्थः । ननु 'कः क्षेमो निजपरयोः कियानर्थः स्वपरद्रुहा धर्मेणे'त्यादिस्मृतौ तन्निन्दापि स्मर्यत एवेति चेत्तत्राहुः—किञ्चेत्यादि । तथा च 'तपो मे हृदयं साक्षा'दित्यादौ तत्प्रसङ्गादर्शनादुक्तनि-

हरितोषिणी ।

(३३) इदानीं कल्पनाऽविद्ययेति पक्षं प्रकारान्तरेण दूषयन्ति—किञ्चेति । तत्प्रसादेन 'धातुः प्रसादा'दिति श्रुत्या भगवत्प्रसादेनेत्यर्थः । तत्प्राकट्येति । 'तस्यैष आत्मा वृणुते तनुं स्वा'मिति श्रुतिप्रतिपाद्यभगवत्प्राकट्येत्यर्थः । प्रवृत्त्यनुपपत्तिमेव समर्थयन्ति —न हीत्यादिना । तथा सतीति । तपस्यादीनां दोषजनकत्वे स्वीक्रियमाणे सति । चित्तकषायेति । चित्तदोषेत्यर्थः । किञ्चेति । श्रुत्येति । 'पराञ्चि खानि व्यतृणत्स्व-

गङ्गाधरभट्टी ।

(३३) तत्प्रसादेनेति । ज्ञानप्रसादेन भगवत्प्रसादेन वा । 'ज्ञानप्रसादेन विशुद्धसत्त्व' इति । 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमान'मित्युभयश्रुतेः । इत एव प्रत्यर्थेनि । कल्पकाभावादेवेत्यर्थः ॥

द्विषयत्वं च प्रतिपाद्यते। श्रीमद्देवकीगर्भरत्नेनाऽपि—'नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथे'*तीतरसाधनासाध्यतोक्तिपूर्वकं, 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुने'ति भक्त्येकसाध्यत्वं दर्शनादीनां निरणायि। तथा चैवंविधश्रुतिस्मृतिविप्लवं कुर्वन् पारलौकिकसन्मार्गमात्रोच्छेदनाय प्रवृत्त आसुर एवेति सद्भिरुपेक्ष्यः। कल्पान्तकाले शरीरेन्द्रियाभावेन जीवानां भगवति प्रवेशाच्च कल्पनासामर्थ्याऽभावे सत्यपि नारायणशयनकथनाच्च। इत एव प्रलयानुपपत्तिरपि ज्ञेया॥

किञ्च 'यो ब्रह्माणं विदधाति पूर्व'मिति श्रुत्याद्युक्तप्राथमिकब्रह्मसृष्ट्यनुपपत्तिः। तदानीमीश्वरातिरिक्तस्याभावेन तत्कल्पकाभावात्। ईश्वरस्य च न कल्पकत्वं वक्तुं शक्यम्। ईश्वरत्वव्याहतेः। 'यो विदधा-

सुवर्णसूत्रम्।

न्दापि काम्यतपस्यादिविषयैवेति तदनालोचनात्तथेत्यत उपेक्ष्य एवेत्यर्थः। ननु मध्वादिविद्यायां कल्पनोपदेशस्य स्वीकारादत्रापि तदङ्गीकारे को दोष इत्याशङ्कायां पूर्वोक्तमेव दोषं पुनः प्रकारान्तरेणाहुः—कल्पान्त इत्यादि। कल्पनापक्षो न युक्त इति शेषः। तथा च सृष्टिदशायां तथाङ्गीकर्तुं शक्यत्वेऽपि प्रलयदशायां तदशक्त्या सिद्धे विशेषस्य वास्तवत्वे सृष्टिदशायामपि तदङ्गीकारो न युक्त एवेत्यर्थः। इत इति। कल्पकाभावादेव। ज्ञेयेति। कल्पनापक्षदूषणत्वेन ज्ञेया॥

दूषणान्तरमनुवदन्ति—किञ्च य इत्यादि। तथा च त्वदभिमतकल्पनानुपपत्तिरेव दोष इत्यर्थः। नन्वीश्वर एव तदानीं कल्पक इति चेत्तत्राह—ईश्वरस्येत्यादि। कल्पनायां

हरितोषिणी।

यम्भू'रिति श्रुत्येत्यर्थः। तद्रहितेति। अविचाररहितेत्यर्थः। श्रीमद्देवकीगर्भरत्नेनापीति। निरणायीत्यग्रेणान्वयः॥

इदं सर्वमविद्यया कल्प्यत इत्यत्र दूषणान्तरमाहुः—किञ्चेति। तत्कल्पकेति। ब्रह्म-

टिप्पणी।

* इतरसाधनासाध्यतोक्तीति। पूर्वं, तदर्थं तपस्यादि, तेषु क्रियमाणेष्वेवाहमो भ्रम' इत्यादिना तपःप्रभृतिसाध्यत्वं दर्शनादीनामुक्तम्, पुनरत्र च तदसाध्यत्वमित्यापातत्तो विरोधः प्रतिभाति, परन्तु तत्र तेषां चित्तशुद्धिद्वारा तद्धेतुत्वमभिप्रेतम्, अत्र तु साक्षात्तद्धेतुत्वनिषेधो भक्तेः साक्षात्तदिति वक्तुमिति न सः॥

ती'ति श्रुत्युक्तमीश्वरकर्तृत्वं चापेयात् । किञ्च, सूत्रकारः सर्वेषां वेदान्तानां ब्रह्मणि समन्वयं प्रतिज्ञाय तन्निरूपणार्थं प्रवृत्तः सन् निःसन्दिग्धतत्पराणां निश्चितत्वादेव निरूपणमकृत्वा सन्दिग्धतत्पराणामेव 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रु'रिति, 'अस्य लोकस्य का गतिराकाश इति होवाचे'त्यादि, 'कतमा सा देवता प्राण इति होवाचे'त्यादि, 'अथ यदतः परो दिवो ज्योतिर्दीप्यत' इत्यादीनाम्, 'अन्तस्तद्धर्मोपदेशात्' 'आकाशस्तल्लिङ्गात्' 'अत एव प्राणः'

सुवर्णसूत्रम् ।

व्यासाशयविरोधं च स्फुटीकुर्वन्ति—किञ्च सूत्रेत्यादि, कुर्यादित्यन्तम् । तद्धर्मोपदेशादिति । 'स एष सर्वेभ्यः पाप्मभ्य उदित' इति ब्रह्मधर्मोपदेशादित्यर्थः । तल्लिङ्गादिति । 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ती'त्यादिश्रावितात्ब्रह्मलिङ्गादित्यर्थः । अत एवेति । 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहत' इति श्रावितात्ब्रह्मलिङ्गादेवेत्यर्थः ।

हरितोषिणी ।

सृष्टिकल्पकेत्यर्थः । अपेयादिति । कल्पनासत्त्वे कर्तृत्वाभावादिति भावः । किञ्चेति । सूत्रकारः व्यासः । तत्पराणामिति । ब्रह्मपराणां सूत्राणामित्यर्थः । सन्दिग्धतत्पराणामिति । सन्देहविषयीभूतब्रह्मपराणामित्यर्थः । सन्दिग्धब्रह्मपरश्रुतीरेवाहुः—'य एषोन्तरादित्य' इति । इत्यादीनामिति । श्रुतीनामित्यर्थः । इत्यादिभिरधिकरणैरिति । अन्त इत्यादिभिः । 'य एषोन्तरादित्य' इति श्रुतावन्तःश्रूयमाणः परमात्मैव । कुतः? 'स एष सर्वेभ्यः पाप्मभ्य उदित' इति ब्रह्मधर्मोपदेशादित्यर्थः । आकाश इति । 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशे प्रत्यस्तं यन्ति' इत्यादिश्रुतौ ब्रह्मलिङ्गादाकाशो ब्रह्मैवेत्यर्थः । अत एवेति । 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहत' इति श्रावणाद्ब्रह्म (ब्रह्म) लिङ्गादेव प्राणो ब्रह्मैव ज्योतिरित्यादि । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठे'ष्वित्या-

गङ्गाधरभट्टी ।

तद्धर्मोपदेशादिति । 'स एष सर्वेभ्यः पाप्मभ्य उदित' इत्याद्युक्तत्वादपहतपाप्मत्वादिः । 'एष आत्मा अपहतपाप्मे'ति श्रुत्यन्तरात् । तल्लिङ्गादिति । 'आकाशादेव सर्वाणि भूतान्युत्पद्यन्ते' इत्यादेः । अत एवेति । ब्रह्मलिङ्गादेव ।

१ वेदानामिति पाठान्तरम् । २ वेदान्तवाक्यानामित्युचितं भाति ।

'ज्योतिश्चरणाभिधानात्' इत्यादिभिरधिकरणैर्महता प्रयत्नेन यन्नि-रूपयत्यतो यत्प्रकारकं श्रुतिर्निरूपयति तादृशमेव तद्ब्रह्मैवेति सूत्र-कारानुशय इति ज्ञायते। अन्यथा 'य एषोऽन्तरादित्य' इत्यादि-श्रुतिनिरूपितस्वरूपाणां तादृगजीवादिस्वरूपत्वे ब्रह्मस्वरूपत्वे वा तव मतेऽविद्याकल्पितत्वस्याविशिष्टत्वाद्ब्रह्मपरत्वमेवैतेषामिति न निर्णयं कुर्यात्॥

सुवर्णसूत्रम्।

चरणाभिधानादिति। 'एतावानस्य महिमा ततो ज्यायांश्च पुरुषः, पादोस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी'तिचरणाभिधानादित्यर्थः। निरूपयतीति। नि-र्णयं निरूपयति। अन्यथेति। तेषां ब्रह्मत्वे यदि सूत्रकारानुशयो न स्यात्तदेत्यर्थः। निरूपितस्वरूपाणामिति। निरूपितानि यानि स्वरूपाणि तेषाम्। तथा च मध्वादि-सूत्रेऽपि सांख्यं प्रत्येव गौण्यापादानं, पश्चशिखवृत्तौ चक्षुरधिदैवतत्वेन सिद्धस्य सूर्यस्य मधुत्वासंभवे तेनापि तत्र गौण्येवादरणीयेति तद्वद्ब्रह्मशब्देऽपि गौण्यादरणीयेति सम्बोध-नार्थत्वात्। अतस्तदुदाहृत्य प्रकृते तथाङ्गीकरणमसङ्गतमित्यर्थः॥

हरितोषिणी।

दिवाक्ये ज्योतिःशब्दवाच्यं ब्रह्मैव, कुतः? चरणाभिधानात्। 'एतावानस्य महिमा, अतो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवी'ति चरणाभिधानादित्यर्थः। इत्येवंरीत्याऽधिकरणचतुष्टयेनेत्यर्थः। सूत्रकारानु-शय इति। व्यासाभिप्राय इत्यर्थः। सूत्राणां विस्तरशोऽर्थविचारस्तु भाष्ये अस्म-त्कृततद्विवरणे च द्रष्टव्यः, ग्रन्थविस्तरभयाद्विरम्यते। अन्यथेति। तेषां ब्रह्मत्वे यदि सूत्रकाराभिप्रायो न स्यात्तदेत्यर्थः। अविशिष्टत्वादिति। समानत्वादित्यर्थः। एतेषा-मिति। सूत्राणामित्यर्थः॥

गङ्गाधरभट्टी।

चरणाभिधानादिति। 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी'त्यादेः। अनुशय इति। 'भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयो'रिति विश्वात्कृतकार्ये व्यासस्य द्वेष इत्यर्थः। अन्यथा। अनुशयाभावे॥

(३४) ननु ब्रह्मपरत्वेनैवोपासनानि तत्तत्फलसाधकानि । ईश्वरपुरुषाकाशप्राणादिरूपेष्वब्रह्मत्वेनोपासने कृते तत्तत्फलं न भविष्यतीति तेषु ब्रह्मत्वबोधनार्थं सूत्रकारेण निर्णयः कृत इति चेत्, मैवम्; वस्तुतस्तेषामब्रह्मत्वे तन्निरूपिकाणां श्रुतीनामब्रह्मपरत्वापत्त्या तन्नियमव्याहतेः, प्रतारकत्वापत्तेश्च। किञ्चाविद्याकल्पितत्वाविशेषात्प्रसिद्धार्थानेवानूद्य नैतदिति निषेधमेव कुर्यात्। समन्वयप्रतिज्ञामेव च न कुर्यात्। तेषामब्रह्मत्वेन तन्निरूपिकाणां तासामतन्निरूपकत्वात्। तथा च, 'सर्वे वेदा यत्पदमामनन्ती'तिश्रुतिविरोधः। एतेन सविशेषनिरूपिका श्रुतिर्न ब्रह्मस्वरूपं निरूपयितुं प्रवृत्तेत्यादि निरस्तम्। किञ्च, 'कृते शुक्लश्चतुर्बाहु'रित्यादिना इलावृतादिदेशविशेषेषु, 'तुरीयां तामसीं मूर्ति'मित्यादिना च नियतदेशे नियतकाले नियतानेकरूपकथनमनुपपन्नं स्यात्। एकस्या एवाविद्याया नियतसामयिकनियतवस्तुकल्पने समयान्तरे चान्यादृशकल्पने

ब्रह्मसूत्रैः सविशेषश्रुतीनामुपासनार्थं ब्रह्मपरता साध्यत इत्यस्य खण्डनम्।

सुवर्णसूत्रम्।

(३४) किञ्चिदाशङ्क्य परिहरन्ति—नन्वित्यादि, विरोध इत्यन्तम्। एवं तात्पर्यनिरूपणेन यत्सिद्धं तदाहुः—एतेनेत्यादि। तथा सविशेषश्रुतिरप्यस्थूलादिश्रुतिवत् स्वरूपस्यैव निरूपिकेति उपजीवकत्वनैयत्ययोरभावात्तस्याः यथाकथंचित् प्रतिपत्त्यर्थत्वमित्यत्र गमकस्याभावाच्च तन्निरस्तमित्यर्थः। अविद्याकल्पनपक्षे उपबृंहणविरोधं बोधयितुं दूषणा-

हरितोषिणी।

(३४) शङ्कते—नन्विति। निर्णयः कृत इति। वस्तुत उपासनाबोधकसूत्राणां तथैव निर्णयादिति भावः। परिहरन्ति—मैवमिति। तेषामिति। सूर्यान्तर्वर्तमानादिचतुर्णाम्। नियमव्याहतेरिति। उपनिषद्वाक्यैर्ब्रह्मैव प्रतिपाद्यत इति नियमव्याघातादित्यर्थः। दूषणान्तरमाहुः—प्रतारकत्वेति। अन्यदपि दूषणमाहुः—किञ्चेति। प्रतिज्ञामेवेति। चकारेण पूर्वोक्तनिषेधकरणं समुच्चीयते। अत्र हेतुमाहुः—तेषामिति। तासामिति। 'य एषोऽन्तरादित्य' इत्यादिश्रुतीनामित्यर्थः। एतेनेति। इति सूत्रादितात्पर्यवर्णनेन। सविशेषेति। यथा अस्थूलादिनिर्विशेषश्रुतिर्ब्रह्मस्वरूपं निरूपयति, तथेयं सविशेषश्रुतिर्न निरूपयतीत्यर्थः। अविद्याया ब्रह्मणोऽनेकरूपकल्पने सामर्थ्यं नास्तीति दूषणान्तरमाहुः—

गङ्गाधरभट्टी।

(३४) प्रतारकेति। 'योऽन्यथा सन्तमात्मान'मित्यादिश्रुतेः। एतेन एतैरित्यर्थः।

हेतोरशक्यनिरूपणत्वात् । न च कालादेरेव हेतुत्वं, तस्याप्येतत्तुल्यत्वात् । न च तादृक्स्वभावैव सेति वाच्यम् । अद्वैतश्रुत्यनुरोधेनासद्रूपत्वेनैव सा त्वदभिमतेति तत्स्वभावस्यापि तादृशत्वेन कस्य कारणत्वम् । ननु कार्यमपि तथैवेति यक्षबलिन्याय इति चेत्, कार्यमास्तां वा तथा, कारणेन तु सतैव भाव्यं मणिमन्त्रादिन्यायेनेति पूर्वमेवावोचाम । किञ्च, ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मत्वेन निरूपितसविशेषाणां कल्पितत्वं वदन् व्यासस्य प्रतिज्ञाहानिमपश्यन्नुन्मत्तोऽसि ॥

(३५) ननु ब्रह्मण एकरसत्वेन सविशेषाणां चानेकरसत्वेन ब्रह्मत्वा-

सुवर्णसूत्रम् ।

न्तराण्याहुः—किञ्च कृत इत्यादि । एतत्तुल्यत्वादिति । जडत्वेन तत्कार्यत्वेन च तत्तुल्यत्वात् । ननु कार्यस्यासत्त्वेऽङ्गीकृते विशेषाणामसिद्धेः किं कारणसत्त्वापादनेनेति शङ्कायामाहुः—किञ्चेत्यादि । तथा च तवोन्मत्तत्वबोधनाय तथोच्यते, न तु कार्यासत्त्वमुपगम्यत इत्यर्थः ॥

(३५) स्वस्योन्मत्तत्वं वारयितुं यतते—नन्वित्यादि । तथा च 'स यथा सैन्धवघ-

हरितोषिणी ।

किञ्चेति । कृत इति । एकादशस्कन्धे । अशक्यनिरूपणत्वादिति । अविद्याया जडत्वात्तत्कल्पने सामर्थ्याभावादिति भावः । शङ्कते—न चेति । हेतुत्वमिति । 'जन्यानां जनकः कालो जगतामाश्रयो मत' इत्यभियुक्तवाक्याद्धेतुत्वमित्यर्थः । उत्तरयन्ति—तस्यापीति । अविद्याकर्मत्वेन तत्तुल्यत्वादित्यर्थः । शङ्कते—न चेति । तादृगिति । कल्पनाकरणत्वस्वभावा सा अविद्येत्यर्थः । उत्तरयन्ति—अद्वैतेति । तादृशत्वेनेति । असद्रूपत्वेनेत्यर्थः । शङ्कते—नन्विति । कार्यमिति । कल्प्यं कार्यमित्यर्थः । तथैवेति । असद्रूपमेवेत्यर्थः । यक्षेति । 'यादृशो यक्षस्तादृशो बलि'रिति न्यायेन दोषो नास्तीत्यर्थः । उत्तरयन्ति—कार्यमिति । तथा असद्रूपम् । सता सद्रूपेण । अत्र दृष्टान्तमाहुः—मणीति । मण्यादेः सद्रूपत्वं, तत्कार्यस्यासद्रूपत्वं लोके गारुडीविद्यायां दृश्यत इत्यर्थः । ननु भवन्मते कार्यस्यापि सत्त्वं स्वीक्रियत इति कथमुक्तं कार्यमास्तां तथेत्यत आहुः—किञ्चेति । ब्रह्मत्वेनेति । 'अथातो ब्रह्मजिज्ञासे'त्यनेन प्रतिज्ञा कृता, 'अन्तस्तद्धर्मोपदेशा'दित्यनेन विशेषाणां ब्रह्मत्वेन निरूपणं कृतम्; भवद्भिस्तु तेषां कल्पितत्वमुच्यत इति व्यासस्य प्रतिज्ञाहानिरित्यर्थः ॥

(३५) स्वस्योन्मत्तत्वं वारयति—नन्विति । एकरसत्वेनेति । श्रुतौ च 'यथा सैन्ध-

गङ्गाधरभट्टी ।

एतत्तुल्यत्वादिति । कल्पितत्वात् ॥

विरुद्धधर्माश्रयतासाधनेनैकरसत्वानुपपत्तिसमाधिः ।

नुपपत्तिरिति चेत्; मैवम् । धर्मिग्राहकप्रमाणसिद्धत्वात् । तथाहि—ब्रह्म वेदैकसमधिगम्यम् । तत्र च 'सर्वकामः सर्वगन्धः सर्वरस' इति निरूप्यते । 'सर्वतःपाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति । सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् । असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च'त्यादिना भगवतैव स्वस्वरूपं प्रतिपादितम् । अत्रान्तपदेन करचरणाद्यवच्छेद उच्यते । अत एव पौगण्डलीलासामयिकं स्वरूपं यावत्परिमाणकं तावत्परिमाणकं तदेव स्वरूपं पूतनामुक्तिदानदशायामपि वर्तत इति संगच्छते । सर्वेषामपि रूपाणां

सुवर्णसूत्रम् ।

नोऽनन्तरो बाह्यः कृत्स्नो रसघन, एवं वा अरे अयमात्माऽनन्तरो बाह्यः कृत्स्नः प्रज्ञानघन एवे'त्यादिश्रुत्या ब्रह्मण एकरसस्वस्य सिद्धत्वात् सविशेषस्य ब्रह्मत्वानुपपत्तेर्नाहमुन्मत्त इत्यर्थः । अनुपपत्तिं समादधते—मैवमित्यादि । तथा च प्रमाणसिद्धत्वेनानेकरसत्वेन प्रतीयमानत्वेऽप्येकरसत्वानपायात्सुखेन ब्रह्मत्वोपपत्तेस्तवोन्मत्तत्वमनिवार्यमित्यर्थः । तथात्वमुपपादयन्ति—तथाहीत्यादि । वेदैकसमधिगम्यमिति । न निर्विशेषश्रुतिमात्रैकगम्यं तद्ब्रह्मस्वरूपं निष्कृष्टम् । श्रुतिसमानानुपूर्वीकं गीतावाक्यमुपन्यस्यन्ति—सर्वत इत्यादि । प्रतिपादितमिति । स्वस्य पुरुषोत्तमत्वं पुरुषोत्तमलक्षणादिकं च वदता आसमाप्ति प्रतिपादितम् । अत एवेति । सर्वतःपाणिपादान्तत्वादेव । संगच्छत इति । श्रीमदाचार्योक्तिः संगच्छत इत्यर्थः । नित्यत्वे सर्वदैव सर्वरूपाणि प्रतीयेरन्निति चेत्तत्राहुः

हरितोषिणी ।

वघन' इति दृष्टान्तेन ब्रह्मणः प्रज्ञानघनत्वं प्रतिपादितमित्येकरसत्वेनेत्यर्थः । समाधानमाहुः—मैवमिति । धर्मीति । एकरसत्वानेकरसत्वाश्रयीभूतब्रह्मरूपधर्मिणो ग्राहकं यत्प्रमाणं वेदस्तत्सिद्धत्वं धर्मस्येत्यर्थः । तदेवोपपादयन्ति—तथाहीत्यादिना । वेदैकेति । निर्विशेषसविशेषसकलश्रुतिगम्यमित्यर्थः । श्रुतिस्मृतिभ्यां तादृशमेव ब्रह्म प्रतिपाद्यत इति बोधयितुं भगवद्वचनान्याहुः—सर्वत इति । प्रतिपादितमिति । गीतायां समाप्तिपर्यन्तं भगवतैव प्रतिपादितमित्यर्थः । अवच्छेदो धर्मः । अत्र श्रीमदाचार्यचरणोक्तं सङ्गतं भवतीत्याहुः—अत एवेति । पौगण्डेत्यारभ्य वर्तत इत्यन्तं श्रीमदाचार्यचरणवचनम् । ननु यदि सर्वेषां रूपाणामवयवानां नित्यत्वं स्वीक्रियते चेत्तेषामेकरूपेण सर्वदा प्रतीतिः कुतो

गङ्गाधरभट्टी ।

(३५) अवच्छेद उच्यत इति । अङ्गुल्यादिभेदः सङ्गच्छत इति सुबोधिन्युक्तम् । अग्रेऽवच्छेदपदेन सम्बन्ध उच्यते ।

नित्यत्वात् । अग्रे च क्रमेण प्रादुर्भावः परम् । यतो बाल्येऽल्पदेशावच्छेदः करादीनां, पौगण्डादिषु चाधिकदेशावच्छेदो भक्तैरनुभूयते । तत्र च शुद्धब्रह्मत्वं ब्रह्मणैव विचारितम्–'तोकेन जीवहरणं यदुलूकिकायास्त्रैमासिकस्य च पदा शकटोऽपवृत्तः । यद्रिङ्गताऽन्तरगतेन दिविस्पृशोर्वा उन्मूलनं त्वितरथाऽर्जुनयोर्न भाव्य'मित्यादिना द्वितीयस्कन्धेऽपि । दशमस्कन्धेऽपि दामोदरलीलाप्रस्तावे—'न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् । पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः । तं मत्वाऽऽत्मजमव्यक्तं मर्त्यलिङ्गमधोक्षजम् । गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथे'त्युक्त्वा रज्जुन्यूनतानिरूपणेनापि पूर्णत्वं तस्यैव प्रतिपादितम् । 'त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः । उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मज'मिति वाक्येन मृत्स्नाभक्षणानन्तरीययशोदाप्रार्थितनिजवदन-

सुवर्णसूत्रम् ।

—अग्रे चेत्यादि । ननु प्रामाणिकप्रतीतिबलादनित्यमेवास्त्विति शङ्काया निवृत्त्यर्थं तत्र ब्रह्मत्वं निगमयितुं संगतिमाहुः—तत्रेत्यादि । तत्रेति । भक्तदृग्गोचरस्वरूपे । ननु ब्रह्मणा सामर्थ्यमात्रमुक्तं, न तु ब्रह्मत्वमपीत्यत आहुः—दशमस्कन्धेऽपीत्यादि । त्रय्या चेति । वाक्ये त्रय्युपनिषत्पदाभ्यां चकारद्वयेन च सर्वाः परापरविद्याः संगृहीताः, सांख्यादिपदैश्च सर्वाः स्मृतयः । मोक्षधर्मे तथा प्रतिपादनात् । सात्वतैर्वैष्णवतन्त्रैः । सत्वस्य समूहः

हरितोषिणी ।

न जायत इत्यत आहुः—अग्रे चेति । अग्रे पूतनामुक्तिदानोत्तरम् । क्रमेण वत्सलीलाक्रमेण । बाल्यपौगण्डलीलासामयिकतत्तद्रूपानुभवः कथमित्यत आहुः—परमिति । परंत्वित्यर्थः । अनुभूयत इति । भक्तानुग्रहार्थमेवैतदिति भावः । अस्मिन्नर्थे सम्मतिमाहुः—तत्र चेति । तत्र भक्तानुभवविषयीभूततत्तद्रूपे । ब्रह्मणा कुत्र विचारितमित्यत आहुः—तोकेनेत्यादिना, द्वितीयस्कन्धेऽपीत्यन्तम् । अत्र शुद्धब्रह्मत्वं नोक्तं, किन्तु तत्पराक्रमकथनमात्रमित्यत आहुः—दशमस्कन्धेऽपीति । प्रतिपादितमिति । पूर्णत्वकथनेन शुद्धब्रह्मत्वं प्रतिपादितमित्यर्थः । श्रुतिस्मृतावपि तस्यैव प्रतिपादनमस्तीत्याशयेनाहुः—त्रय्येति । ऋग्यजुःसामभिर्यज्ञस्वरूपब्रह्ममाहात्म्यप्रतिपादनमस्तीति त्रय्येत्युक्तम् । एतेन सम्पूर्णपूर्वकाण्डस्य भगवत्परत्वमुक्तम् । उत्तरकाण्डस्यापि तथात्वं वक्तुमाहुः—उपनिषद्भिश्चेति । वेदप्रतिपाद्यमाहात्म्यमुक्त्वा स्मृतिप्रतिपाद्यमाहुः—सांख्येति । त्रयाणां स्मृतावेव निवेशः । सात्वतैः सत्वस्य समुदायः सात्वं, तद्वन्तः सात्वतास्तेषां तन्त्राणि सात्वितानि, तैर्वैष्णवतन्त्रैः । वाक्येनेति । प्रतिपादितमिति पूर्वेणान्वयः । मृत्स्नाभक्षणानन्तरीयस्य व्यादा-

---

१ अपिः केवलं तोषिणीसंमतः ।

व्याख्याने प्रदर्शितसात्मव्रजसहितसकललोकावलोकनजनितवस्तुजिज्ञासायां यशोदायाः पक्षान्तरनिराकरणपूर्वकतत्त्वनिर्द्धारका'ऽथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोग' इतिवाक्येन च । एतेनैव 'यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स आत्मान्तर्याम्यमृतं' इति श्रुत्युक्तधर्मवत्त्वेनापि ब्रह्मत्वं सिद्धम् । यत एकोऽप्यसाधारणो धर्मो विद्यमानः शिष्टान् सन्दिग्धानपि ब्रह्मधर्मानेव गमयति । इममेव हि श्रुत्यभिप्रायमङ्गीकृत्य सर्वत्र ब्रह्मवाक्यनिर्णयमाह सूत्रकारः । एतत्सर्वं भागवतविवरणे तत्त्वसूत्रभाष्ये च विस्तृतं पितृचरणैरिति दिङ्मात्रं प्रदर्श्यते ॥

किञ्च, सर्वाणि यानीन्द्रियाणि चक्षुर्वागादीनि तद्ग्राह्या गुणाश्चालौ-

सुवर्णसूत्रम् ।

सात्वं वदन्तः सात्वता इति तदर्थात् । तेन सर्वविद्याप्रतिपाद्यत्वमुक्तं भवति । एतस्यार्थस्य तद्धर्माधिकरणसिद्धत्वबोधनाय 'भेदव्यपदेशाच्चान्य' इति सूत्रस्य विषयवाक्यमुदाहरन्तः सिद्धमाहुः—एतेनेत्यादि । एतेनैवेति । त्रय्याद्युपगीतत्वेनैव । अपिना श्रुतिसङ्ग्रहः । तथा च श्रुतिलिङ्गाभ्यां सिद्धमित्यर्थः । लिङ्गेन सिद्धौ प्रकारं तथाऽऽदरे बीजं च क्रमेण वदन्तस्तद्व्याप्यफक्किकामेवाहुः—यत इति । इममित्यादि । अत्र श्रीमदाचार्यसम्मतिं विशेषतः कथने बीजं चाहुः—एतदित्यादि ॥

पूर्वोक्तगीतावाक्ये निर्विशेषमेव मुख्यतया प्रतिपाद्यत इति भ्रमं व्युदसितुं 'प्राणन्नेव प्राणो भवती'तिश्रुत्यनुसारेण तदाशयं हृदि कृत्वा इन्द्रियाणि च गुणाश्च इन्द्रियगुणाः, सर्वे च ते इन्द्रियगुणाश्च सर्वेन्द्रियगुणाः, आसमन्ताद्भासत इत्याभासः प्रकाशः, स इव आभासः सर्वेन्द्रियगुणाभास इत्युपमानसमासेन तदर्थमाहुः—किञ्चेत्यादि । 'गुणवच-

हरितोषिणी ।

नेन समासः । तत्त्वनिर्द्धारकेति । अस्य वाक्येनेत्यनेनान्वयः । वाक्येन चेति । अस्य प्रतिपादितमिति पूर्वेणान्वयः । एतेनेति । 'त्रय्या चोपनिषद्भि'रिति वाक्योक्तवेदाद्युपगीयमानत्वेन । धर्मत्वेनापीति । अपिना च त्रय्या श्रुत्युक्तधर्मत्वेनापि ब्रह्मत्वं सिद्धमित्यर्थः । धर्मवत्त्वेन सिद्धौ प्रयोजनमाहुः—यत इति । शिष्टसन्दिग्धब्रह्मधर्मबोधने गमकमाहुः—इममेवेति । अत्र श्रीमदाचार्यचरणोक्तं प्रमाणयन्ति—एतदिति ॥

पूर्वोक्त 'सर्वेन्द्रियगुणाभास'मिति वाक्येन शुद्धं ब्रह्मावगम्यत इति बोधयितुं तदर्थमाहुः—किञ्चेति । सर्वाणीति । इन्द्रियाणि गुणाश्च इन्द्रियगुणाः, आसमन्ताद्भास इत्या-

गङ्गाधरभट्टी ।

सात्मव्रजेति । भगवत्सहितव्रजेत्यर्थः । एतेनैवेति । वेदैकसमधिगम्यत्वेन ॥

१ घ० नास्ति जयमङ्क ।

किकास्तथैव शुद्धमेव ब्रह्मावभासते। ब्रह्मैव कर्मेन्द्रियज्ञानेन्द्रियादिरूपेण भासत इत्यर्थः। न तु लौकिकानीन्द्रियाणि तत्र सन्ति। तदाह—'सर्वेन्द्रियविवर्जित'मिति। 'असक्त'मित्यादि स्पष्टम्। अत एव 'वैश्वानरः साधारणशब्दविशेषा'दित्यधिकरणे 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति श्रुत्युक्तप्रादेशपरिमाणवत्त्वमभितो विगतमानत्वलक्षणं व्यापकत्वं, वाजसनेयिशाखोक्तं 'स एषोऽग्निर्वैश्वानरो यत्पुरुषस्तं यो हैनमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः

सुवर्णसूत्रम्।

नानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ती'ति महाभाष्याद्विशेषणभूतस्यास्य शब्दस्यात्र नपुंसकत्वं बोध्यम्। श्रुत्यादिसिद्धं विरुद्धधर्माश्रयत्वं न्यायतोऽपि दृढीकर्तुमाहुः—अत एवेत्यादि। अधिकरणार्थस्तु—'यस्त्वेत'मित्यादिश्रुतौ वैश्वानरशब्दस्यावयवतुर्ध्वर्थेषु प्रसिद्धः। जाठराग्नौ तावत्—'अयमग्निर्वैश्वानरो येनेदं पच्यते, यदद्यत' इत्यादिषु, महाभूततृतीये च—'विश्वस्मा अग्निं भुवनाय देवाः वैश्वानरं केतुमह्नामकृण्व'न्नित्यादौ, देवतायां च—'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्री'रित्यत्र 'सम्वत्सरो वा अग्निर्वैश्वानर' इति, 'सम्वत्सरश्च प्रजापति'रित्यपि तैत्तिरीयश्रुतौ सिद्धम्। विश्वे च—'विश्वो वैश्वानरः प्रथमः पाद' इति। स च प्रजापतिरेव। छान्दोग्ये तु 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूही'त्यात्मानमुपक्रम्य पठ्यते। ततः सन्देहः। अत्र किं जाठरायन्यतमोऽभिधीयत उत परमात्मेति। अत्र जाठराग्निभूततृतीयदेवतासु 'मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूप' इत्या-

हरितोषिणी।

भासः प्रकाशः, सर्वेन्द्रियगुणा इव आभासः सर्वेन्द्रियगुणाभास इत्यर्थः। अस्य नपुंसकत्वं 'गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ती'ति महाभाष्यप्रामाण्याद्बोध्यम्। तथा च निर्गलितार्थमाहुः—ब्रह्मैवेति। विरुद्धधर्माश्रयत्वं गीतायां स्पष्टमुक्तमित्याहुः—ननु लौकिकानीति। अत एवेति। ब्रह्मणः श्रुत्युक्तविरुद्धधर्माश्रयत्वादेवेत्यर्थः। अधिकरण इति। विरुद्धधर्माश्रयत्वमुक्तमिति शेषः। संशयाद्युपपत्त्यादिकं भाष्ये मत्कृतविवरणेऽपि श्रुतिरहस्ये च। एवं च स्मृतिन्यायसिद्धमिति भावः। अधिकरणार्थं विशदयन्ति—यस्त्वेतमिति। वैश्वानरपदवाच्यं ब्रह्म। कुतः? साधारणशब्दविशेषात् साधारणशब्दायो विशेषः 'यस्त्वेतमेवं प्रादेशमात्र'मित्यादिश्रुत्युक्तं प्रादेशमात्रत्वं व्यापकत्वं च, अथ च वाजसनेयिशाखोक्तं पुरुषविधत्वं, पुरुषेऽन्तःप्रतिष्ठितत्वं च

गङ्गाधरभट्टी।

वैश्वानर इति। अयमग्निरेव कोशादिप्रसिद्धेरिति प्रथमपक्षे, उत्त- -साधारणशब्दविशेषादिति। विशेष उपपाद्यते—'यस्त्वेतमेव'मित्यादिना।

प्रतिष्ठितं वेदे'त्यनेन पुरुषत्वं, तस्यैव तद्विधत्वं, तस्मिन् प्रतिष्ठितत्वं च परस्परविरुद्धं ब्रह्मण्येव संभवति, तस्यैव विरुद्धसर्वधर्माश्रयत्वाद्, नाग्न्यादिष्विति निरूपयन् जैमिन्यादिमतोपन्यासकरणेन पक्षान्तरेष्वरुचिमुद्भाव्य सिद्धान्तमवदत्—'आमनन्ति चैनमस्मि'न्निति । अस्यार्थस्तु —एनं परमेश्वरं व्यापकमेवास्मिन् मूर्द्धचिबुकान्तराले प्रादेशमात्रे जाबालाः समामनन्ति 'य एषोऽनन्तोऽव्यक्त आत्मा योऽविमुक्ते च प्रतिष्ठित इति, सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति वरणायां नास्यां च मध्ये प्रतिष्ठित' इत्यादिना । तथा चानन्तपदाद्देशकालापरिच्छिन्नस्यैव संकुचितस्थाने श्रुतिः स्थितिं कथयतीति प्रादेशमात्रस्याप्यभिविमानत्वं संगच्छते । एतेन विरुद्धधर्माश्रयत्वं ब्रह्मणः श्रुत्यभिमतं वेदितव्यम् । अन्यथाऽनन्त इति न वदेत् । प्रयोजनाभावात् ॥

सुवर्णसूत्रम् ।

दिना श्राविता द्युमूर्द्धत्वादयो धर्मा न युज्यन्त इति विश्वात्मकः प्रजापतिर्हिरण्यगर्भ एवार्थ इति प्राप्ते, अभिधीयते—वैश्वानरः परमात्मैव, कुतः ? साधारणशब्दविशेषात् । साधारणशब्दाद्यो विशेष आधिक्यं तस्मादिति । स एव विशेषो 'यस्त्वेतमेवं प्रादेशमात्रमभिविमान'मित्यादिना श्राव्यते एव । इति विरुद्धधर्माश्रयत्वं निरूपयन् व्यासो जैमिन्यादिमतोपन्यासकरणेन 'साक्षादप्यविरोधं जैमिनिः' 'अभिव्यक्तेरित्याश्मरथ्यः' 'अनुस्मृतेर्बादरि'रित्यादिभिस्तत्करणेन पक्षान्तरेपूक्तेष्वरुचिं प्रथमोक्तोऽविरोधो विश्वसाधारणो, द्वितीयो देवतासाधारणस्तृतीय उपास्यकर्तृकरत्वात् सर्वसाधारण इत्येवंरूपामुद्भाव्य सूचयित्वा स्वसिद्धान्तमसाधारणधर्मविशेषरूपमवददित्यर्थः । स्पष्टमन्यत् । अधिकरणोपन्यासेन सिद्धमाहुः—एतेनेत्यादि ॥

हरितोषिणी ।

परस्परविरुद्धमित्येवंरूपो विशेषो ब्रह्मण्येव संभवतीत्यर्थः । अत एवाहुः—तस्यैवेति । निरूपयन्निति । 'ब्रह्मण्येव संभवति' 'नाग्न्यादिष्वि'ति निरूपयन् व्यासः स्वसिद्धान्तमवददित्यग्रेणान्वयः । 'नाग्न्यादिष्वि'ति यदुक्तं तेन श्रुत्युक्तजाठराग्न्यादीनां निराकरणम् । 'जैमिन्यादी'त्यनेन जैमिन्याश्मरथ्यबादरिमतानामुपन्यासो बोध्यः । तथाहि 'साक्षादप्यविरोधं जैमिनिः' 'अभिव्यक्तेरित्याश्मरथ्यः' 'अनुस्मृतेर्बादरि'रिति । एतत्सूत्राणामर्थस्तु भाष्ये अस्मत्कृतविवरणे च बोध्यः, विस्तरभयाद्विरम्यते । जाबालोक्तं स्वसिद्धान्तमेवाहुः—आमनन्तीति । कया श्रुत्या जाबालाः समामनन्तीत्यत आहुः—'य एष' इति । सिद्धार्थमाहुः—तथा चेति । एतेनेति । वैश्वानराधिकरणोपन्यासेनेत्यर्थः ॥

गङ्गाधरभट्टी ।

वरणायां नास्यांश्चेति । भ्रुवोर्नासायाश्चेत्यर्थः ॥

(३६) ननु मया पूर्वमेवाऽवादि सविशेषनिरूपणमुपासनार्थमिति। नन्वनुपहतकर्णेन मयाप्यश्रावि। तर्हि किमनुपपन्नम्? त्वदभिमतोपासनार्थत्वमेव। कथम्?। इत्थम्—उपासनायां तु तत्र तत्प्रकारकभावनामात्रं, न तु तद्वस्तु तादृशमिति हि तवाभिमतम्। उपास्यं चात्मत्वेनैव, न त्वनात्मत्वेन। 'आत्मेत्येवोपासीत' 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति 'न स वेद यथा पशुरेवं हि स देवानां पशु'रिति श्रुतेः। एवं च सति 'योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणे'ति श्रुत्याऽयथाकल्पनस्य निन्दितत्त्वात्तादृशमेव तद्रूपमिति मन्तव्यम्। एवं सत्यनन्तरूपत्वमेव ब्रह्मणः श्रुत्यभिमतम्। तथा चानेन रूपेणैतादृशोपासकस्यैतादृशं फलं दास्यामीतीश्वरेच्छयैव

परामिमतोपासनास्वरूपदूषणमविरोधम्युत्पादनं च

सुवर्णसूत्रम्।

(३६) निमील्य पुनराशङ्कते—नन्वित्यादि। तस्य बाधिर्यं सूचयन्तः समादधते—नन्वित्यादि। अत्र ननुर्निश्चयार्थः। एवं च सतीति। आत्मत्वेनैवोपास्यत्वे सति। एवं

हरितोषिणी।

(३६) ज्ञात्वा तूष्णीमाशङ्कते—नन्विति। उपासनार्थमिति। ब्रह्म तु निर्धर्मकमेव, तत्तद्रूपेण कथनं तु उपासनार्थमित्यर्थः। उत्तरमाहुः—नन्विति। ननु इति। निश्चयेन। अनुपहतकर्णेनेति। बाधिर्याभावविशिष्टकर्णेन्द्रियवता। एतेन तव बाधिर्यमस्तीति मदुक्तं त्वया न श्रूयते इति सूचितम्। तथा चोपासनार्थत्वं मयापि स्वीक्रियत इति भावः। तत्र वादी पृच्छति—किमिति। अनुपपत्तिमाहुः—त्वदभिमतेति। इमामनुपपत्तिं विचारयन्ति—इत्थमित्यादिना। तत्र ब्रह्मणि। तत्प्रकारकेति। विष्णुत्वादिप्रकारकेत्यर्थः। एवं चेत्तत्र विचारमाहुः—उपास्यमिति। आत्मत्वं तु जीवब्रह्मसाधारणमिति केन रूपेणोपासना कर्तव्येति शुत्यभिप्रायेणाहुः—आत्मेत्येवेति। यथा पशुरिति। मूर्ख इत्यर्थः। अत्र प्रमाणमाहुः—एवं हीति। देवानां पशुरिति। मूर्ख इत्यर्थः। तथा च प्रकृतिमाहुः—एवं च सतीति। आत्मत्वेनैवोपासनाविषयत्वे सतीत्यर्थः। कल्पनस्य तद्वस्तु तादृशं न भवतीति कल्पनस्य। एवं सतीति। आत्मस्वरूपे

गङ्गाधरभट्टी।

(३६) एवञ्चेति। काल्पनिकोपदेशस्य इत्यर्थः॥

तथैव भवतीति ज्ञापयन्ती श्रुतिरुपासनाभेदेन फलभेदमप्याह ॥

किञ्च, त्वदुक्तरीत्योपासनाविषयस्यातत्प्रकारकत्वेनाब्रह्मत्वमागतम् । तथा च तन्निरूपिकाणां श्रुतीनामब्रह्मपरत्वे प्राप्ते 'सर्वत्र प्रसिद्धोपदेशा'दिति तत्त्वसूत्रविरोधः । असद्भावनया चासदेव फलं स्यात् । तथा च 'तन्निष्ठस्य मोक्षोपदेशा'दिति तत्त्वसूत्रविरोधश्च । 'असन्नेव स भवति असद्ब्रह्मेति वेद चे'दिति श्रुतेरुपासनाविषयाणामसत्त्वं जानानस्य तथान्धन्तमःप्रवेशेनासत्त्वमेव फलमिति प्रतिजानीमः । तथा चोक्तं त्वादृशानेकासुरचमूपतीनां श्रुतिस्मृत्याचारपराणामपि निजबन्धुसुहृद्रूपा-

सुवर्णसूत्रम् ।

सतीति । आत्मस्वरूपेऽन्यथाकल्पनस्य निन्दितत्वे सति । तथैव भवतीति । तादृशाकारमेव ब्रह्म भवति । अतो 'ननु ब्रह्मत्वेनैवोपासनानी'त्यादिना यस्त्वया सूत्रकाराशय उद्घाटितः, सोऽसङ्गत इत्यर्थः ॥

दूषणान्तराण्याहुः—किञ्चेत्यादि । नन्वस्त्वेवं तथापि तद्ब्रह्मान्यदेव, कृष्णाकारं तु नानारूपेष्वन्यतमम्, वाराहपुराणे दशानामप्यवताराणां सोपानत्वेन गणनात् । अतोऽवताररूपे तथा कल्पनं न दोषायेति चेत्तत्राहुः—तथा चेत्यादि । निरूप्येति । आसुरलक्षणं निरूप्य । तथा च कृष्णाकारस्यान्यथाज्ञानेऽपि भगवताऽसुरत्वाधमगत्योः कथनात्तस्य मूलरूपत्वमेव बोध्यते, न तु सोपानतुल्यत्वम् । वाराहवाक्यं स्वंशावतारपरं, न तु मूलरूपपरम् । अन्यथैतद्वाक्यविरोधापत्तेः । अतः श्रीकृष्णाकारस्य मूलरूपत्वात्तदन्यथाज्ञानेऽपि स एव दोष इत्यर्थः । ननु यद्येवं तदा भगवता 'मानुषीं तनुमाश्रित'मिति

हरितोषिणी ।

अन्यथा कल्पनमनुचितमिति श्रुतिप्रतिपाद्यत्वे सति । तथैव भवतीति । ब्रह्मैव स्वेच्छया तादृशाकारं भवतीत्यर्थः ॥

सूत्रविरोधमप्याहुः—किञ्चेति । ननु श्रीकृष्णाकारं ब्रह्म न भवति, किन्त्वन्यदेव, अवताररूपे अन्यथाकल्पनं न दोषायेत्यत आहुः—तथा चेति । तन्निरूपिकाणामिति । तादृशोपास्यदेवनोपासनाविषयिकाणां श्रुतीनामित्यर्थः । अन्यदपि सूत्रविरोधादिरूपदूषणान्तरमाहुः—सर्वत्रेति । तैत्तिरीयोपनिषद्विरोधरूपदूषणमाहुः—असन्नेवेति । असत्यरूपे

गङ्गाधरभट्टी ।

अतत्प्रकारकत्वेनेति । निर्गुणभिन्नत्वेन ॥

प्रतिजानीम इति । उत्कण्ठापूर्वकं स्मराम इत्यर्थः । 'सम्प्रतिभ्यामनाध्यान' इत्युक्तार्थे आत्मनेपदनिषेधात् परस्मैपदम् ॥

णामपि वधाय सकलप्रमाणनिषिद्धत्वेनाधर्मबुद्ध्या तद्वधविमुखं विजयं शिक्षयता तद्वधेन सकलसज्जनान् परिपालयता श्रीदेवकीपुत्रेण । 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वर'मित्यादिनाऽऽसुराणां स्वाभजनमुक्त्वा 'महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्यय'मिति । तत्रैवाऽऽसुरभावनिरूपणे च 'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वर'मित्यादिना निरूप्य 'आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गति'मित्यन्तेन । अत्र 'मानुषीं तनुमाश्रित'मिति तज्ज्ञानप्रकारकथनं, न तु स्वरूपस्य, पूर्वोक्तयुक्तिभिरानन्दरूपत्वस्यैव निर्णीतत्वात् । यथा चैतत्तथाऽऽनन्दमयाधिकरणवि-

सुवर्णसूत्रम् ।

स्वतो भिन्नतया तनुः किमर्थमुच्यत इति चेत्तत्राहुः—अत्रेत्यादि । पूर्वोक्तयुक्तिभिरिति । 'अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् । गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानत' इतिवाक्या'द्दामोदरलीलाप्रस्ताव' इत्यादिना प्रदर्शिताभिः परिच्छेदत्रयातीतत्वसर्ववेदवेद्यत्वसकलजगदाधारत्वादिभिरित्यर्थः । ब्रह्मण आनन्दमयस्य विरुद्धधर्मा-

हरितोषिणी ।

फले प्रमाणं दर्शयन्ति—तथा चोक्तमिति । श्रीदेवकीपुत्रेणेत्यग्रेणान्वयः । यदुक्तं तदाहुः—अवजानन्तीति । आसुरलक्षणमाहुः—[*]असत्यमित्यादिना गतिमित्यन्तेन । एतेन वाराहवाक्ये सोपानतुल्यत्वं यदुक्तं तदंशावतारपरम् । 'अवजानन्ती'त्यादिवाक्यविरोधात् । श्रीकृष्णाकारपरं न वक्तव्यम् । तस्य मूलरूपत्वस्योक्तत्वादिति बोध्यम् । ननु भगवताऽत्रैवोक्तं—'मानुषीं तनुमाश्रित'मिति, तत्कथं ज्ञातव्यं मूलरूपत्वं तस्येत्यत आहुः—अत्रेति । तज्ज्ञानेति । आसुरज्ञाने 'नरतनुप्रकारकथन'मित्यर्थः । पूर्वोक्तयुक्तिभिरिति । 'अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् । गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानत' इत्यादिवचनाद्दामोदरलीलाप्रस्तावे पूर्वं कथिताभिः परिच्छेदत्र-

गङ्गाधरभट्टाः ।

पूर्वोक्तयुक्तिभिरिति । विरुद्धधर्माधारत्वादिभिर्यशोदादत्तनयस्याऽपि मुखे सर्वजगत्स्थित्यादिभिः ॥

---

टिप्पणी ।

[*] असत्यमिति । ते आसुरा जगदसत्यमाहुः, अप्रतिष्ठमाहुः, अनीश्वरमाहुरिति पृथक् २ व्याख्येयम् । प्रत्येकस्य लक्षणत्वात् । समुदितस्य लक्ष्यासंभवाच्च । इदं मारुतशर्मणो ॥

चारे निरूपितं भाष्ये पितृचरणैः । अत एवाग्रे भगवानाह—'परं भावमजानन्त' इति । परो भाव आनन्दमात्रत्वलक्षणः । एतेन विशेषाणां लौकिकत्वाद्ब्रह्मणश्चालौकिकत्वात्तन्निषेधस्तत्र युक्तः, तेषामप्यलौकिकत्वकल्पने, ब्रह्मणि च विरुद्धसर्वाधारत्वाद्यलौकिकशक्तिकल्पने गौरवमिति निरस्तम् । सर्वस्यैव प्रमाणसिद्धत्वेनाकल्पितत्वात् । स्वयुक्त्या कल्पने हि त्वदुक्तं दूषणम् । अन्यथा ब्रह्माङ्गीकारेऽपि गौरवमिति तदनङ्गीकारोऽप्यापद्येत । तथा च शून्यवाद आपद्येतेति गङ्गातरङ्गसङ्गिकमलपरागधूसरानिलसुखभिया स्ववैराग्यख्यापनाय जनतासमक्षं पलायमानस्य मायावादिकुहकनिर्विण्णस्य शूकरगर्ते निपातः ॥

सुवर्णसूत्रम् ।

धारत्वं श्रुत्यादिसिद्धमित्याह—यथा चेत्यादि । यथा ब्रह्मण आनन्दरूपत्वं तथाऽऽचार्यचरणैर्ब्रह्मवित्प्रपाठके परस्य विपश्चितो जगज्जनकस्यादौ कथनान्मध्येऽपि 'को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्' 'एष ह्येवानन्दयाती'त्यार्थिकाभ्यासेन तस्यैव परामर्शादन्ते 'एतमानन्दमयमात्मानमुपसंक्रामती'ति श्रावणादुपक्रमादिभिर्निर्णीयोक्तमित्यर्थः । सिद्धमाहुः—एतेनेत्यादि ॥

हरितोषिणी ।

यातीवत्वसर्ववेदवेद्यत्वादिभिरित्यर्थः । श्रुत्यादिप्रमाणसिद्धत्वं मूलरूपस्येत्याहुः—यथेति एतेनेति । अस्यानन्दमयत्वकथनेन । तेषां.विशेषाणाम् । गौरवमिति । उभयकल्पने गौरवमित्यर्थः । सर्वस्यैवेति । विशेषाणामलौकिकत्वस्य विरुद्धधर्माधारत्वस्य चेत्यर्थः । दूषणमेवाहु—अन्यथेति । विशेषाद्यभावे दूषणमाहुः—तदनङ्गीकारेति । तत्र दूषणमाहुः—तथा चेति ॥

---

टिप्पणी ।

* तन्निषेध इति । विशेषनिषेधः । न च 'नञ् सामान्यनिषेधकृ'दिति न्यायेन लौकिकाऽलौकिकानां सर्वेषामेव धर्माणां निषेधो युक्त इति वाच्यम् । अस्य न्यायस्याप्रमाणत्वादसार्वत्रिकत्वाच्च । बहुजनावमोचनादिस्थानेषु स्वीयं घटविशेषमनुपलभ्यैतस्ततोऽन्विष्यते जनाय तद्वृत्तं परिचिन्वता जनेन तत्र घटान्तरसत्त्वेऽपि नास्त्यत्र घट इत्युच्यते, तत्र यथा घटविशेषनिषेध एव तात्पर्यं, तथाऽत्रापि 'आसीनो दूरं व्रजति' 'अपाणिपादो जवनो ग्रहीते'त्यादिवचनविचारणया केवलं लौकिकधर्मनिषेध एवास्थूलादिवाक्यानां तात्पर्यं निश्चीयते । इदं मारुतशक्तौ ॥

किञ्च, अस्थूलादिवाक्यविरोधेन हि विशेषाणां कल्पितत्वं ब्रूषे, तत्र विरोधः कयोरिति पृच्छामः। परस्परात्यन्ताभावसमानाधिकरणयोरिति चेत् ब्रूषे, तत्रापि पृच्छामो यत्र कुत्रचित्तथात्वेऽपि सामान्यविरोध, उत यत्र तथात्वेन प्रतीतिस्तत्रैव तयोः प्रतीतौ विरोधो, नान्यत्रेति। तत्र नाद्यः, परस्परात्यन्ताभावसमानाधिकरणयोरपि निष्क्रमणत्वप्रवेशनत्वयोरेकस्मिन् कर्मण्यनुभवात्। अथ तत्र प्रमाणप्रतीतिसिद्धत्वान्न विरोध इति ब्रूषे, तदा ब्रह्मण्यप्रामाण्यशङ्काकलङ्करहितवेदसिद्धत्वादुभ-

सुवर्णसूत्रम्।

ननु मास्तु गौरवं तथाप्यस्थूलादिवाक्यविरोधस्तु दुष्परिहर इत्यत आहुः—किञ्चेत्यादि। तत्र विरोधः कयोरिति। तत्र वाक्यविरोधपरिहारार्थं तन्मूलभूते तदर्थविरोधे विचारणीये स कीदृशयोरित्यर्थः। सामान्यविरोध इति। सार्वत्रिको विरोधः। ननु निष्क्रमणत्वप्रवेशनत्वयोर्न वास्तवो भेदः। शालाया निष्क्रम्याङ्गणे प्रवेशे, एकस्मिन्नेव कर्मणि निरूपकभेदेन पुरुषाभ्यां तत्तत्प्रयोगात्। भेदप्रतीतिस्तु निरूपकभेदकृतेति नेदमविरोधोदाहरणमिति चेत्, न; एवमुपगमे दैशिकपरत्वापरत्वयोरप्यभेदापत्तेः। तत्रापि निरूपकभेदमात्रादेव भेदप्रतीतेरनुभवात्। न च तत्र द्रव्यस्य समवायिकारणत्वात् तत्रापेक्षाबुद्ध्या तौ गुणौ जन्येते इति, न तयोर्भेदः। प्रकृते तु कर्मणः समवायित्वाभावादेतयोश्च तन्निष्ठत्वेन गुणत्वाभावात् कर्मत्ववदजन्यधर्मत्वेनैक्यमेवास्थेयम्। भेदस्तु प्रतीतिनिष्ठ एव तत्रारोप्यत इति नेदमुदाहरणमिति वाच्यम्। तथा सति तयोः पर्यायत्वापत्तेः, विपरीतप्रयोगस्य साधुत्वापत्तेश्च[1]। अत एतयोर्भेद एवास्थेय इति नोदाहरणासङ्गतिरिति

हृत्तोषिणी।

'अस्थूलमनणु' इत्यादिवाक्यविरोधरूपं दूषणं परिहरन्ति—किञ्चेति। विरोधेनेति। कल्पितानामेव निषेधो युक्तो, यदि कल्पितत्वं न स्यात्, तर्हि कथं श्रुत्या निषिध्यत इति विरोधेनेत्यर्थः। तत्रेति। वाक्यार्थविरोधे हि वाक्यविरोधः। तथा च वाक्यार्थविरोधे विचारविषये प्रसक्ते कयोरर्थयोर्विरोध इत्यर्थः। ननु किमिदमुच्यते, विरोधस्तु प्रसिद्ध एवेत्याहुः—परस्परेति। गोत्वाभावसमानाधिकरणमश्वत्वमश्वत्वाभावसमानाधिकरणं गोत्वमिति तयोर्विरोधो यथा, तथैतादृशयोर्विरोध इत्यर्थः। यत्र कुत्र चिदिति। एतादृशो विरोध एकस्मिन्धर्मिण्युभयोर्दृष्टः, स सर्वत्र मन्तव्यो वा, यत्र दृष्टस्तत्रैव मन्तव्यो वेति विकल्प इत्यर्थः। तत्राद्यं दूषयन्ति—तत्र नाद्य इति। अनुभवादिति। शालाया निष्क्रम्याङ्गणं प्रवेशं कृते तादृशरूपे कर्मणि तयोरनुभवादित्यर्थः। तयोर्विरोधं परिहरति—अथेति। तुल्ययुक्त्या उत्तरमाहुः—तदेति। उपसंहारे यदिमद्धं तदाहुः—

[1] क. पुस्तके साधुत्वापत्तेश्चेति पाठः।

यधर्माणां न विरोध इति तुल्यम् । तेन द्वितीयः पक्ष एव साधुरिति मन्तव्यम् । तथा च लोक एव तथात्वेन प्रतीतेर्लौकिकेष्वेवातथात्वे विरोधो, न त्वलौकिकेषु धर्मेषु । धर्मिग्राहकप्रमाणसिद्धत्वात् ॥

(३७) ननु स्यादेवं यदि परस्परविरुद्धानेकधर्मवत्त्वमात्रं बोधयेच्छ्रुतिर्न निषेधेत्, नत्वेवम् । तथा चाखिलश्रुत्युपपत्त्यर्थं ब्रह्म निर्द्धर्मकमेव । यतो धर्मान् स्वयमेवोक्त्वा स्वयमेव तत्र निषेधति । धर्मनिरूपणं तु यथा कथंचिद्धर्मिप्रतिपत्त्यर्थम् । अन्यथा तादृशस्य निरूपयितुमशक्यत्वात्तदज्ञानेन सर्वेषां मोक्षोच्छेद एव स्यात् । ततस्तत्सिद्धौ धर्मनिषेधमुखेन शुद्धं तन्निरूपयतीति मन्तव्यमिति चेद्, बाढमेवमेव मन्तव्यं स्याद्यदि स्वोक्तधर्मानेव श्रुतिर्निषेधेत् । नत्वेवम्, किन्तु ब्रह्मधर्मनिरूपणे कृते तेषु प्राकृतत्वादिशङ्का स्यात्, तन्निवृत्त्यर्थं प्रापञ्चिकधर्मानेव ब्रह्मणि निषेधति । अन्यथाऽसत्पदार्थनिरूपकत्वेन प्रतारकत्वेन च श्रुतेरप्रामाण्यं

प्रतिपत्त्यर्थमारोप इति निरस्य ब्रह्मणोऽप्राकृतधर्मत्वप्रतिपादनम् ।

सुवर्णसूत्रम् ।

बुध्यस्व । सिद्धमाहुः—तेनेत्यादि, प्रमाणसिद्धत्वादित्यन्तम् । अतथात्व इति । प्रमाणप्रतीत्यसिद्धत्वे ॥

(३७) पुनश्चोदयति—नन्वित्यादि । निषेधतीति । 'श्रोतव्यः, 'मनसैवानुद्रष्टव्य' इत्यत्रोक्तानां 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'ति, श्वेताश्वतरेऽपि 'सर्वतः पाणिपादन्त'दित्युक्त्वा 'ततो यदुत्तरतरं तदरूपमनामय'मिति निषेधाद्विरुद्धधर्माश्रयत्वं नेत्यर्थः । तदुक्तं दूषयन्ति—बाढमित्यादि । अन्यथेति । यावद्धर्मनिषेधे । श्रुतेरिति ।

हरितोषिणी ।

तेनेति । द्वितीय एवेति । यत्र तथात्वेनेत्यादिरूपः । लौकिकेष्वेवातथात्वे इति । लौकिकेषु धर्मेषु प्रमाणप्रतीत्यसिद्धत्वे इत्यर्थः । धर्मिग्राहकेति । धर्मी ब्रह्म तद्ग्राहकं प्रमाणं वेदस्तत्सिद्धत्वादित्यर्थः ॥

(३७) शङ्कते—नन्विति । निर्धर्मकमेवेति । 'यतो वाचः' 'अस्थूल'मित्यादिश्रुत्युपपत्त्यर्थं निर्द्धर्मकमेवेति भावः । समाधानमाहुः—बाढमिति । न त्वेवमिति । स्वोक्तधर्मनिषेधः श्रुत्या नैव क्रियत इति भावः । तेषु ब्रह्मधर्मेषु । अन्यथेति । प्रापञ्चिकश्रुत्युक्तसकलधर्मनिषेधस्वीकारे । अप्रामाण्यमिति । प्रापञ्चिकधर्मास्तत्र नैव सन्ति,

गङ्गाधरभट्टी ।

अतथात्व इति । प्रमाणप्रतीत्यसिद्धत्वे इत्यर्थः ॥

स्यात् । लोकप्रसिद्धदुःखितत्वादिधर्मनिषेधेनापि निर्द्धर्मकतन्निरूपणस्य शक्यत्वात् ॥

ननु श्रुत्युक्ता अपि लौकिका एवेति चेत्, रे मूढ! कुत्र वा लोके त्वया त्वत्पित्रा वा सर्वतःपाणिपादान्तत्वादय, एकस्मिन् धर्मिणि सर्वेशितृत्वादिकं, श्रुत्युक्तमानन्दमात्रकरादिमत्वं च दृष्टं श्रुतं वा ब्रह्मातिरिक्ते, येनैतेषु लौकिकधर्मानुवाद इति ब्रवीषि । अप्रसिद्धानपि बोधनार्थं स्वयमेवोक्त्वा निषेधतीति न वक्तुं शक्यम् । दत्तोत्तरत्वात् ।

सुवर्णसूत्रम् ।

धर्मनिरूपकश्रुतेः । नन्वेवं सति 'अपाणिपादः' 'तदरूप'मित्यादेर्निर्द्धर्मकतन्निरूपणस्य कथं सामञ्जस्यमित्यत आहुः—लोकेत्यादि । तथा च 'तदरूप'मित्युक्त्वाऽग्रे 'अनामय'मिति कथनाद्दुःखितत्वसमानाधिकरणस्यैव रूपस्य निषेधस्तत्र गम्यत इत्यन्यत्रापि लोकप्रसिद्धाः प्राकृता ये पाण्यादयो दुःखितत्वसमानाधिकरणास्तन्निषेधेनैव सर्वश्रुत्युपपत्तिर्न तु त्वदुक्तरीत्या यावद्धर्मनिषेधेनेत्यर्थः ॥

पाण्यादीनामाकारे विशेषाभावमनुसन्धाय पुनश्चोदयति—नन्वित्यादि । तद्दूषयन्ति—रे मूढ इत्यादि । तथा चाकारसाम्यं न लौकिकत्वापादकमित्यर्थः । एतेनैव 'गोपरूपो हरिः साक्षा'दित्यादौ गोपरूपत्वादिकमपि सर्वेश्वरत्वनिराकारत्वादिपुरःसरमेवोच्यत इति बोद्धव्यम् । दत्तोत्तरत्वादिति । 'असत्पदार्थनिरूपकत्वेने'त्यादिना तथात्वात् । तदुक्तं

हरितोषिणी ।

श्रुत्युक्तधर्माणां तत्र निषेधस्त्वया स्वीक्रियते । एवं च धर्माणामसत्त्वं प्राप्तमिति धर्मतन्निरूपकश्रुतेरप्रामाण्यं स्यादित्यर्थः । ननु धर्मनिषेधं विना निर्द्धर्मकब्रह्मनिरूपणं कर्तुं न शक्यत इति निरूपणार्थं श्रुतिः स्वोक्तान् धर्मान् निषेधतीत्यत आहुः—लोकेति । दुःखितत्वादीति । 'तदरूपमनामय'मित्यत्रानामयत्वकथनेन दुःखितत्वाभाववत्त्वं ब्रह्मण्युपपादितं श्रुतौ, दुःखितत्वं च लोक एव प्रसिद्धम्, तन्निषेधेन ब्रह्मनिरूपणमस्ति । तथा च लोकप्रसिद्धदुःखितत्वपाण्यादिधर्मनिषेधेनेत्यर्थः ॥

'अपाणिपाद' इत्यत्र लोकवेदसिद्धपाण्यादीनामाकारे विशेषो नास्तीत्याशयेन शङ्कते—नन्विति । समाधानमाहुः—रे मूढेति । लौकिकधर्मेति । तथा चैते पाणिपादान्तत्वादय आकारसाम्येन लौकिका न भवन्ति । 'यथा गोपरूपो हरिः साक्षा'दित्यत्र सर्वेश्वरत्वानेकाकारत्वादिपूर्वकमेव गोपरूपत्वं, तथैव तेषामपीति भावः । अप्रसिद्धानपीति । लोके इति शेषः । बोधनार्थं निरूपणार्थम् । दत्तोत्तरत्वादिति । 'अन्यथाऽ-

गङ्गाधरभट्टी ।

(३७) दत्तोत्तरत्वादिति । असत्पदार्थनिरूपकत्वान ॥

तथा च तदुक्तब्रह्मण्यप्यनाश्वासप्रसङ्गेन महानेवानयो भवेत् ॥

किञ्चैवं 'जन्माद्यस्य यत' इत्यादिलक्षणकं ब्रह्म निरूपयिष्यमाणो बादरायणः पूर्वं'मथातो ब्रह्मजिज्ञासे'त्युक्त्वाऽस्थूलादिश्रुतिं विचारय- 'न्नथ ब्रह्मजिज्ञासे'ति वदेत् । एवं सति सर्वेषां वेदान्तानां ब्रह्मपरत्वं दत्ततिलाञ्जलि स्यात् । तथा च समन्वयाध्यायासङ्गतिः । सूत्रे सविशे-

सुवर्णसूत्रम् ।

पूर्वोक्तं दूषणान्तरं पुनः स्मारयन्ति—तथा चेति । असत्पदार्थनिरूपकत्वे चेत्यर्थः ॥

उक्तदार्ढ्यार्थं दूषणान्तराण्याहुः—किञ्चैवमित्यादि । वदेदिति । प्रतिज्ञान्तरं कुर्यात् । द्वितीयाध्यायस्याप्यसङ्गतिं दर्शयन्ति—सूत्र इत्यादि 'असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात्' 'श्रुतेस्तु शब्दमूलत्वात्' 'सर्वोपेता च तद्दर्शनात्' 'विकरणत्वान्नेति चेत्तदुक्त'मित्यादिसूत्रेषु 'सदेव सौम्येदमग्र आसीत्' 'असद्वा इदमग्र आसी'दिति विरोधे अव्याकृतस्वरूपधर्मान्तरेण वर्तमानतया कारणरूपस्यासद्व्यपदेशः । अत्र प्रमाणं वाक्यशेषः—'तदात्मानँ स्वयमकुरुते'ति । अतो न सदसत्कारणबोधकश्रुतिविरोधः । एवं शब्दमूलत्वसूत्रे कृत्स्नप्रसक्त्यादिदोषपरिहारः । एवं सर्वशक्तियुक्तत्वसाधनं सर्वोपेतासूत्रे । परदेवता सर्वशक्त्युपेता । कुतः ? 'सर्वकर्मा सर्वगन्धः

हरितोषिणी ।

सत्पदार्थनिरूपकत्वेन प्रतारकत्वेन चे'त्यादिनेति शेषः । पूर्वोक्तं श्रुतेरप्रामाण्यरूपं दूषणान्तरमपि स्मारयन्ति—तथा चेति । तदुक्तेति । श्रुत्युक्तेत्यर्थः । अनयः अपराधः । तथा च श्रुत्याऽप्रसिद्धार्थबोधनं कृतं चेदसत्पदार्थनिरूपकत्वं श्रुतेरागतम् । एवं च ब्रह्मण्यप्यनाश्वास इति भावः ॥

अन्यदपि दूषणमाहुः—किञ्चेति । 'अथात' इत्यनेन प्रथमा प्रतिज्ञा, तदनन्तरमस्थूलादिवाक्यविचारस्तदनन्तरं पुन'रथ ब्रह्मजिज्ञासे'ति वदेत् । प्रतिज्ञान्तरं कुर्यादित्यर्थः । नन्वस्त्वेवं को दोष इत्यत आहुः—एवं सतीति । दत्ततिलाञ्जलीति । कासांचिच्छ्रुतीनामस्थूलादिपरत्वं, कासांचिद्ब्रह्मपरत्वं स्यादिति भावः । एवं च प्रथमाध्यायासङ्गतिमाहुः—तथा चेति । द्वितीयाध्यायासङ्गतिमाहुः—सूत्रे इति । द्वितीयाध्याये 'असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषा'दिति सूत्रे । सविशेषेति । 'सदेव

गङ्गाधरभट्टी ।

'अथातो ब्रह्मजिज्ञासे'त्युक्त्वेति । 'जन्माद्यस्ये'त्यादिना ब्रह्मण्येव निरूपणात् । विचारयन्निति । तृतीयाध्यायद्वितीयपादे ॥

---

१ नवम्यादिने कथनम् । २ क. पु. इत्यधिकं पाठः ।

धनिरूपिकाणां श्रुतीनां परस्पराविरोधचिन्तनमप्यप्रयोजनकं स्यात्। निषेध्यानामविरोधे विरोधे वा विशेषाभावात्॥

ननु सूत्रेष्वपि निर्विशेषस्यैव मुख्यतया निरूपणं दृश्यते। 'अरूपवद्देव हि तत्प्रधानत्वात्' 'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय' इत्यादिभ्य इति चेत्, मैवम्; तदर्थानवबोधात्। तथाहि—तत्र[1] जडजीवधर्मा ब्रह्मणि सन्ति न वेति विचारयँस्तन्निरूपकनिषेधकश्रुतीनामन्योन्यविरोधपरिहारं विचारयन्नुभयोरपि श्रुतिवाक्यत्वेनान्यतरबाधमप्यशक्यं जानन्नौपाधिकं ब्रह्म सविशेषश्रुतिविषयो, निरुपधिस्वरूपं

सुवर्णसूत्रम्।

सर्वरसः' 'सर्वज्ञः सर्ववित्' 'एतस्यैवाक्षरस्य प्रशासने गार्गि! सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इत्यादिषु तथात्वदर्शनादित्यर्थः। एवं विकृतत्वपरिहारो विकरणत्वसूत्रे, तथाऽन्येष्वपि तत्तच्छ्रुत्यविरोधचिन्तनं, तत्सर्वं तथा स्यादित्यर्थः। निषेध्यानामिति। धर्माणां तन्निरूपकश्रुतीनां चेत्यर्थः॥

एवं समन्वयाविरोधाध्यायविरोधे प्रदर्शिते तृतीयाध्यायसूत्राभ्यां प्रत्यवस्थानं स्मारयति—ननु सूत्रेष्वित्यादि। तद्दूषयितुं सूत्रार्थं व्युत्पादयन्ति—मैवमित्यादि। औपाधिक-

हरितोषिणी।

सौम्येदमग्र आसीत्' 'असद्वा इदमग्र आसीत्' अत्र श्रुतिविरोधेऽव्याकृतत्वरूपधर्मान्तरेण वर्तमानतया कारणरूपस्यासद्व्यपदेशः। अत्र प्रमाणं वाक्यशेषः। स च 'तदात्मानꣳस्वयमकुरुते'त्यादिरूपः। एतेन सद्बोधकाऽसद्बोधकश्रुतिविरोधो नास्तीति निर्णीतम्। तथा चैतादृशविरोधचिन्तनं न कर्तव्यमिति भावः। कुतो न कर्तव्यमित्यत आहुः—निषेध्यानामिति। निषेधविषयीभूतधर्माणां तद्बोधकश्रुतीनां चेत्यर्थः॥

तृतीयाध्यायसूत्रयोराशयं परिकल्प्य शङ्कते—नन्विति। सूत्राण्येवाह—अरूपवदिति। अर्थानवबोधप्रयुक्तेयमाशङ्केति समाधानमाहुः—तदर्थेति। सूत्रार्थाज्ञानं समर्थयन्ति—तथा हीत्यादिना। परमतमनूद्य निषेधति—तत्रेत्यादिना, स्यादेतदेवमित्यन्तेन। तत्र। सूत्रार्थविचारे। विचारयन्। विचारं कुर्वन्। श्रुतीनामिति। तादृशधर्मनिरूपिकाणां तादृशधर्मनिषेधिकानां च श्रुतीनामित्यर्थः। उभयोरिति। तादृशश्रुत्योरित्यर्थः। उभयोः श्रुत्योर्व्यवस्थामाह—औपाधिकमिति। करचरणादिश्रुत्युक्तयुपाधियुक्तं ब्रह्म सविशेषश्रुति-

गङ्गाधरभट्टी।

निषेध्यानामिति। 'अन्तस्तद्धर्मोपदेशा'दित्यादीनां सूर्यादिपरत्वे शबलब्रह्मपरत्वे वा विशेषाभावः। उभयोरपि शुद्धब्रह्मत्वाभावादिति भावः॥

---

१ क. पु. 'तत्र हि' इति पाठः।

तन्निर्विशेषश्रुतेरिति मतं 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र ही'ति सूत्रेणौपाधिकत्वे तत्स्वभावत्वं ब्रह्मणो न संभवतीति तच्छ्रुतीनामब्रह्मनिरूपकत्वापत्तिरिति निरस्य, पुनरुपहितानुपहितयोर्भेदाङ्गीकारेणोभयरूपत्वं ब्रह्मणि भविष्यतीति तन्मतोपपत्तिमाशङ्क्य, 'न भेदादिति चेन्न प्रत्येकमतद्वचनात्' इति सूत्रेण, 'अपि चैवमेके' इत्यग्रिमेण चाभेदबोधकश्रुतिविरोधनिरूपणेन निरस्य, पुनराकाराणां प्रपञ्चमध्यपातित्वात्प्रपञ्चस्य जन्यत्वात्तेषामपि तथात्वात्तेषु ब्रह्माभेदबोधनमौपचा-

सुवर्णसूत्रम् ।

मिति । तात्त्विकोपाधियुक्तम् । श्रुतेरिति । विषय इति शेषः । औपाधिकत्व इति । लिङ्गस्यौपाधिकत्वे । निरस्येति । 'सर्वत्र ही'त्येतत्सूचितेन सार्वत्रिकत्वादिति हेतुना निरस्य । प्रत्येकमतद्वचनादिति । (प्रतिस्वरूपं) प्रतिवाक्यं 'चायमेव स योऽयं स

हरितोषिणी ।

विषयः । श्रुतेरिति । विषय इति शेषः । मतमिति । निर्द्धर्मकस्वरूपं ब्रह्म निर्विशेषश्रुतेर्विषय इति शङ्कराचार्यमतमित्यर्थः । तथा च निर्विशेषं सविशेषं ब्रह्मेति तेषां मतमिति भावः । तदेव निरस्येत्यन्तेन दूषयितुमाहुः—न स्थानतोऽपीति । सूत्रार्थस्तु—जडजीवधर्मा भगवति बोध्यन्ते, कुत्र चिन्निषिध्यन्ते, तत्र केचिद्विरोधमाहुः—न स्थानेत्यादि । सर्वत्र भगवानस्ति; ततश्चास्थूलेऽस्थूलः, अनणावनणुः, उच्चावचकर्तृषुच्चावचकर्ता, उच्चावचकाम उच्चावचकामः, पृथिव्यां सर्वगन्धो, जलादावगन्धः । एवं रसादिषु । एवं स्थानतः परस्य ब्रह्मण उभयलिङ्गमस्थूलाद्युभयलिङ्गमुपपद्यत इति न, कुतः ? सर्वत्र हि सर्वत्रैतादृशं रूपं भगवत उपदिश्यते । हि युक्तोऽयमर्थः । भगवत्स्वरूपप्रतिपादकानि, न त्वनुवादकानि । वैयर्थ्यापत्तेः । औपाधिकत्वे । लिङ्गस्यौपाधिकत्वे । तत्स्वभावत्वम् । उपाधिस्वभावत्वम् । निरस्येति । 'सर्वत्र ही'ति सूत्रांशसूचितो यः सार्वत्रिकत्वादिति हेतुस्तेन दूरीकृत्येत्यर्थः । सविशेषनिर्विशेषब्रह्मणोर्भेदाङ्गीकारे दूषणमाहुः—पुनरित्यादिना, निरस्येत्यन्तेन । समाधानमाशङ्क्य निराकरोति—न भेदादिति । न भवदुक्तो विरोधः संभवति, भेदात् कार्यकारणेषु सर्वत्र भेदाङ्गीकारात् । प्रपञ्चविलक्षणं ब्रह्म भिन्नं, प्रपञ्चधर्मवद्ब्रह्म भिन्नम् । 'प्रत्येकमतद्वचना'दिति । प्रत्येकं प्रतिस्वरूपमतद्वचनादभेदवचनात् । 'अयमेव सः योऽयमेवमेक' इति 'स यश्चायं पुरुषे यश्चासावादित्ये स-

गङ्गाधरभट्टी ।

न स्थानत इति । स्थानभेदेनोभयलिङ्गवत्त्वमिति चेन्न, सर्वत्रैव तथा प्रतिपादनात् ॥

न भेदादिति । पूर्वमुक्तन्न युक्तमुभयोर्भेदादिति चेत्, न; प्रत्येकवाक्येष्वभेदवचनात् । एके शाखिनः स्पष्टमेवमभेदमधीयत इत्यग्रिम सूत्रार्थः ॥

रिकम्। अतः साकारवादिन्यो न ब्रह्मनिरूपिका इति प्राप्ते आह—'अरूपवदेव हि तत्प्रधानत्वादि'ति। स्यादेतदेवम्; यद्याकाराणां प्रापञ्चिकत्वं भवेत्, न त्वेवम्। न हि प्रपञ्चे स्थितत्वेनैव प्रापञ्चिकत्वं वक्तुं शक्यम्। त्वदभिमतस्यापि तथात्वापत्तेः। अतो निराकारवादिनीष्विव साकारवादिनीष्वपि श्रुतिष्वरूपवदेव तत्प्रतिपाद्यते। रूप्यते निरूप्यते व्यवह्रियत इति रूपं सर्वव्यवहारविषयत्वं, तद्युक्तं रूपवद्विश्वं, ब्रह्म तु तद्विलक्षणमित्यर्थः। यथा चैतत्तथा मृत्स्नाभक्षणादिप्रसङ्गनिरूपणेन निरूपितम्॥

अथवा रूप्यते व्यवह्रियतेऽनेनेति करचरणाद्युच्यते। तथा च यथा लोके करादिकं भिन्नं, तद्धानभिमानी भिन्नस्तथा ब्रह्म न श्रुतौ करादिभिन्नं तदभिमानित्वेन निरूप्यते, किन्तु करादेरपि ब्रह्मत्वाद्भेदाभावाद्रूपरूपमेव निरूप्यते, न तु रूपवदित्यर्थः। ननु कुत एतदवगम्यते करादीनामपि ब्रह्मत्वमेव, न तद्भिन्नत्वमित्यत आह तद्धिनिगमकम्—'तत्प्रधानत्वा'दिति। सर्वेषां वेदान्तानां ब्रह्मैव प्राधान्येन प्रतिपाद्यं यतः। अयमर्थः—करादीनामब्रह्मत्वे तन्निरूपकाणां वेदान्तानामब्रह्मपरतया

सुवर्णसूत्रम्।

यश्चायं पुरुषे यश्चासावादित्ये स एक' इत्यादभेदवचनात्। त्वदभिमतस्येति। निर्विशेषस्य। निरूपितमिति। दशमस्कन्धेऽपीत्यादिना प्रागेवोक्तम्॥

विश्ववैलक्षण्यं सर्वेशितृत्वेनापि भगवतीत्यतः प्रकारान्तरेण व्याकुर्वन्ति—अथवेत्यादि। उच्यत इति। रूपपदेनोच्यते। ननु करादिनिरूपकाणां ब्रह्मपरिचायनार्थतया तन्निरूपकत्वेऽपि प्राधान्येन ब्रह्मनिरूपकतायाः प्रतिरोधाभावान्न करादीनां ब्रह्माभेदसि-

हरितोषिणी।

एक' इत्यादिश्रुतिष्वप्यभेदवचनादित्यर्थः। कराद्याकाराणां ब्रह्मरूपत्वं साधयितुमाहुः—पुनरिति। आकाराणाम्। करचरणादीनाम्। साकारवादिन्य इति। श्रुतय इत्यर्थः। इति प्राप्ते इति। पूर्वपक्षे प्राप्ते। सूत्रार्थं विवृण्वन्ति—स्यादिति। त्वदभिमतस्येति। निर्विशेषब्रह्मण इत्यर्थः। यथा चैतदिति। निरूपितमिति। दशमस्कन्धेऽपीत्यादिना प्रागेवोक्तम्॥

जगन्नियन्तृत्वेन विश्ववैलक्षण्यं संभवतीत्यतः प्रकारान्तरेणार्थमाहुः—अथ वेति। उच्यत इति। रूपपदेनेति शेषः। निरूप्यत इति। तथा ब्रह्म न निरूप्यत इत्यन्वयः। रूपमेवेति। रूपं करचरणादिरूपमेव श्रुतौ ब्रह्म निरूप्यत इत्यर्थः। तत्प्रधानत्वादित्यवतारयन्ति—नन्विति। सूत्रतात्पर्यं विशदयन्ति—अयमर्थ इति। करादिनिरूपिकाः

गङ्गाधरभट्टी।

त्वदभिमतस्यापीति। शुद्धब्रह्मणो व्यापकत्वादिति भावः। निरूपितमिति। 'अथो अमुष्यैव ममार्भकस्ये'त्यादिना पूर्वं दृढीकृतमित्यर्थः॥ तद्धिनिगमकमिति। तन्निश्चायकं हेतुम्

ब्रह्मपरत्वनियमव्याहृतिः । अतः करादिनिरूपकाः साक्षाद्ब्रह्मप्रतिपादका एवेति । 'सर्वत्रप्रसिद्धोपदेशात्' 'आमनन्ति चैनमस्मि'न्नित्याद्यधिकरणरूपोपपत्तिर्हिशब्देनोच्यते । 'स यथा सैन्धवघनोऽनन्तरो बाह्यः कृत्स्नो रसघन, एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'ति 'सत्यं विज्ञानमानन्दं ब्रह्मे'ति 'आनन्दमात्रकरपादमुखोदरादि'रिति 'आनन्दमयोऽभ्यासादि'त्यादिश्रुतिस्मृतिन्यायैकवाक्यतया सच्चिदानन्दरूपत्वं करादीनामवधारणीयम् । अत एवाग्रे सूत्रकारोऽप्याह —'आह च तन्मात्र'मिति । एता एव श्रुतयोऽत्रानुसन्धेयाः । त्वदभिमतव्याख्याने त्वरूपमित्येतावतैव चारितार्थ्यं स्यात् । रूपवत्त्वस्योभयवाद्यसंमतत्वेनाविवादास्पदत्वात्तन्निषेधानुपपत्तिः । रूपरूपस्य सिद्धान्त्यभिमतत्वात् । एवं सति तथा कथनादस्मदुक्त एवार्थः सूत्रकाराभिमत इति ज्ञायते ॥

सुवर्णसूत्रम् ।

ह्रिरित्यत आहुः—स यथेत्यादि । 'अनन्तरोऽबाह्य' इति । बाह्याभ्यन्तरभेदरहितः । ननु तन्मात्रसूत्रे कथं करादीनां सच्चिदानन्दत्वसिद्धिरित्यत आहुः—एता इत्यादि । ननु मदुक्तव्याख्याने को दोषो, येनैवं व्याख्यायत इत्यत आहुः—त्वदित्यादि ॥

हरितोषिणी ।

श्रुतय इति शेषः । हिशब्देनेति । 'अरूपवदेव ही'तिसूत्रस्थहिशब्देनेत्यर्थः । श्रुतिस्मृतीति । 'स यथा सैन्धवघने'त्यादिश्रुतयः, 'आनन्दमात्रे'त्यादिस्मृतिः, 'आनन्दमयोऽभ्यासा'दिति न्यायः, एतत्त्रयाणामेकवाक्यतयेत्यर्थः । 'आह चे'ति सूत्रेपि करादीनां ब्रह्मत्वं प्रतिपाद्यत इत्याहुः—एता एवेति । 'आनन्दमात्रे'तिश्रुतयः । अत्र । अस्मिन् सूत्रे । तेनास्मिन् सूत्रेऽपि करादीनां ब्रह्मत्वं प्रतिपादितमिति सूचितम् । परमतव्याख्याने दूषणमाहुः—त्वदभिमतेति । रूपवत्त्वस्येति । करचरणादिमत्त्वस्येत्यर्थः ॥

गङ्गाधरभट्टी ।

ब्रह्मपरत्वनियमेति । स च 'सर्वे वेदा यत्पदमामनन्ती'त्यादि । तन्मात्रमिति । विज्ञानरूपमात्रम् । तदाहुः—एता एवेति । 'स यथा सैन्धवघन' इत्याद्याः ।

इत्येतावतैवेति । 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर' इतिन्यायात् । कर्मधारयपदं समासान्तरोपलक्षणम् । एकयैव वृत्त्या सिद्धे वृत्तिद्वयकल्पनमन्याय्यमिति तद्भावः । उभयवादिनौ अहञ्च त्वञ्च । तेन केषाञ्चिन्मते रूपवत्त्वेऽपि न दोषः । 'अथात आदेशो नेति नेती'ति मूर्तामूर्तब्राह्मण आम्नायते । इतिशब्दः प्रकारवाची । ब्रह्म पञ्चमहाभूतानि भवति, न त्वेवंप्रकारकमिति प्रथमनञर्थः । एतदेव द्रढयति द्वितीयेनेतीत्यनेन । न भवत्येव ब्रह्म तादृशमिति तु भाष्ये स्पष्टम् ।

अपि च 'दर्शनाच्चे'त्यन्तेन श्रुतिस्मृतिप्रत्यक्षैः सर्वविरुद्धधर्माश्रयत्वेन विरोधं परिहृत्य युक्त्यापि प्रतिषेधति—'प्रकृते'ति । अस्थूलादिवाक्यैरेतावत्त्वं स्थूलत्वाणुत्वह्रस्वत्वादिकं श्रुतिर्ब्रह्मणि यत्प्रतिषेधति, तत्प्रकृतं लोके प्रकृतं वा यल्लौकिकमेतावत्त्वं तदेव प्रतिषेधति, न तु स्वोक्तान् धर्मान् सर्वेशितृत्वादीनित्यर्थः । एवमेव 'नेति नेती'त्यत्रेतिशब्दः प्रकारवाची । तथा च पूर्वं मूर्तामूर्तं ब्रह्मणो विभूतिरूपं 'य एवं वेदे'त्यन्तेन निरूप्य यस्यैतद्रूपद्वयं पूर्वमेव षष्ठ्यन्तेन पदेन निरूपितभेदस्य तस्मिन्निरूप्यमाणेष्वपि सर्वतःपाणिपादान्तत्वादिष्वेवं लौकिकत्वेन वेदनं माभू-

सुवर्णसूत्रम् ।

एवमरूपवत्सूत्रस्यार्थमुक्त्वा प्रकृतैतावत्सूत्रस्य प्रयोजनमर्थं चाहुः—अपि चेत्यादि । श्रुतिस्मृतिप्रत्यक्षैरिति । 'दर्शयति चाथो अपि स्मर्यते' इत्यत्र श्रुतिस्मृतिभ्यां, 'दर्शनाच्चे'त्यत्र प्रत्यक्षेणेत्येवं तैरित्यर्थः । युक्त्यापि प्रतिषेधतीति । अनुमानेनापि विरोधं प्रतिषेधति । एवमेवेत्यादि । यथा सूत्रे प्रकृतैतावत्त्वशब्दो लौकिकैतावत्त्ववाची, एवमेव श्रुतावितिशब्दोऽपि लौकिकप्रकारवाचीत्यर्थः । तदुपपादयन्ति—तथा चेत्यादि । पूर्वमेव षष्ठ्यन्तेन निरूपितभेदस्य तस्मिन्नित्यादि । पूर्वं 'यथा महारजनं वास' इत्यादिरूपस्य कथनात्पूर्वं 'तस्य हैतस्य पुरुषस्य रूप'मिति षष्ठ्यन्तेन पदेन मूर्तामूर्तरूपनिरू-

हरितोषिणी ।

'प्रकृतैतावत्त्वं ही'ति सूत्रार्थमाहुः—अपि चेति । सूत्रावतरणिकामाहुः—दर्शनेति । श्रुतीति । 'दर्शयति चाथो अपि स्मर्यते' 'दर्शनाच्चे'ति सूत्रत्रये ? क्रमेण श्रुतिस्मृतिप्रत्यक्षैरित्यर्थः । युक्त्यापि । अनुमानेनापि । 'प्रकृतैतावत्त्वं ही'तिसूत्रे प्रकृत एतावत्त्वं, वा प्रकृतमेतावत्त्वमिति विकल्पार्थमाहुः—तत्प्रकृत इति । एवं 'प्रकृते'ति सूत्रार्थमुक्त्वा 'नेति नेती'त्यस्याः श्रुतेरर्थमाहुः—एवमेवेति । सूत्रे प्रकृतशब्दो लौकिकवाची, एवमेव श्रुतावितिशब्दः प्रकारवाचीत्यर्थः । नन्वितिशब्दस्य प्रकारवाचित्वे किं संपन्नमित्यत आहुः—तथा चेति । पूर्वम् । 'अथात' इतिनिषेधात्पूर्वम् । यस्यैतद्रूपद्वयमिति । अस्य निरूपितभेदस्येत्यनेनान्वयः । पूर्वमेवेति । मूर्तामूर्तरूपकथनात्पूर्वमित्यर्थः । षष्ठ्यन्तेनेति । 'तस्य ह वा एतस्य पुरुषस्य रूप'मिति षष्ठ्यन्तेनेत्यर्थः । निरूपितभेदस्येति । मूर्तामूर्तरूपान्निरूपितो भेदो यस्येत्यर्थः । तस्मिन्निति । पूर्वोक्तभेदविशिष्टे ब्रह्मणीत्यर्थः । निरूप्यमाणेष्विति । श्रुत्यन्तरैरिति शेषः । वेदनमिति । लौकिकत्वप्रकारकं ज्ञानमि-

गङ्गाधरभट्टी ।

षष्ठ्यन्तेन । 'द्वे वाव ब्रह्मण' इतिपदेन निरूपितभेदस्य यस्य ब्रह्मण एतन्मूर्तामूर्तरूपं, तस्मिन् ब्रह्मणीत्यन्वयः ।

दिति भिन्नप्रक्रमेणैतत्प्रकारकं वेदनं ब्रह्मणो निषेधति 'अथात' इत्यादिना। अयमर्थः—ब्रह्मण्यपि मूर्तामूर्तरूपे 'सर्वतःपाणी'त्यादिश्रुत्युक्ते वेदितव्ये, परं त्वनेन प्रकारेण न वेदितव्ये ब्रह्मण एते रूपे इति, किन्तु ब्रह्मैवेति वेदितव्ये इत्यर्थः। अत्र विनिगमकमाह सूत्रकारः—'ततो ब्रवीति च भूय' इति। यस्मिन्नेव वाक्ये प्रकरणे वा निषेधति तस्मिन्नेव निषेधानन्तरं पुनस्तं धर्ममाह श्रुतिः। यथा 'पराञ्चि खानी'त्युक्त्वा 'प्रत्यगात्मानमैक्ष'दिति, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'त्युक्त्वा 'आनन्दं ब्रह्मणो विद्वानि'ति, अस्थूलाद्युक्त्वा 'एतस्यैवाक्षरस्य प्रशासने गार्गि। द्यावापृथिवी विधृते तिष्ठत' इत्यादि। त्वद्व्याख्याने तु प्रकृतपदं व्यर्थं स्यात्। एतावत्पदेनैव सान्निध्यतो रूपद्वयप्रतीतेः संभवात्।

### सुवर्णसूत्रम्।

षितो भेदो यस्य तस्मिन् श्रुत्यन्तरैर्निरूप्यमाणेष्वित्यर्थः। एतत्प्रकारकमिति। लौकिकत्वप्रकारकम्। मूर्तामूर्तरूपे इति। प्राणाभ्यन्तराकाशव्यतिरिक्तं मूर्तं, प्राणाभ्यन्तराकाशावमूर्तं, ते उभे रूपे इत्यर्थः। युक्तिप्रयोगस्तु—अस्थूलादिश्रुतिर्न यावद्धर्मनिषेधिका; किञ्चिन्निषिध्य तदन्यधर्मसत्ताबोधकत्वात्। यदेवं तदेवं, न पापः पुण्यवानयमित्यादिवाक्यवत्। किञ्च धर्मनिषेधिका श्रुतिः प्रसिद्धप्रकारकतद्धर्मनिषेधिका, तन्निषेधोत्तरं तत्सत्ताबोधकत्वात्। यदेवं तदेवं, 'यद्वै तं न पश्यति पश्यन् वै तद्द्रष्टव्यं न पश्यती'तिविभक्तदर्शननिषेधकश्रुतिवदिति। शेषं स्फुटम्। उक्तव्याख्यानदार्ढ्याय तद्व्याख्यानं दूष-

### हरितोषिणी।

यत्यर्थः। निषेधतीति। 'अथात आदेशो नेति नेती'त्यादिना निषेधतीत्यर्थः। पूर्वोक्तग्रन्थतात्पर्यं विशदयन्ति—अयमर्थ इत्यादिना। वेदने विशेषमाहुः—परं त्विति। कुत्र तं धर्ममाह श्रुतिरित्यत आहुः—यथेति। 'पराञ्ची'त्यादिश्रुत्या विरुद्धधर्माश्रयत्वं ब्रह्मणः समर्थितम्। अनुमानेन निषेधतीत्युक्तम्। तत्रानुमानप्रकारस्तु 'पराञ्चि खानी'त्यादिश्रुतिः यावद्धर्मनिषेधकत्वाभाववती, किञ्चिन्निषेधोत्तरं तदन्यधर्मवत्त्वबोधकत्वात्। यदेवं तदेवं, यथा न पापः पुण्यवानयमित्यादिवाक्यवदिति बोध्यः। भवदीयव्याख्यानमसमञ्जसमिति दूषयन्ति—त्वद्व्याख्यान इति। व्यर्थं स्यादिति। तव मते सर्वथा धर्मनिषेधः, मम मते लौकिकधर्मनिषेधः। तथा च प्रकृतपदं व्यर्थमिति भावः। एतदेव विवृण्वन्ति—एतावदिति। सान्निध्यत इति। श्रुतौ पूर्वं रूपद्वयस्योक्तत्वादिति भावः। रूपद्वयेति। मूर्तामूर्तरूपद्वयप्रतीतेरित्यर्थः। तथा च रूपद्वयनिषेधस्तव मते सुघट एवेति

न चैतावत्पदस्य सामान्यवाचकत्वाद्विशेषात्मकत्वं तस्येति वाच्यम्। तुल्यत्वात्। अथ वा अत्र हि 'नेति नेती'तिवाक्यं विचार्यते, निषेधः कस्येति। तत्र सूत्रे प्रकृतशब्देन 'द्वे वाव ब्रह्मण' इत्यादिनोक्तं मूर्तामूर्तलक्षणं रूपद्वयं परामृश्यत इति तवाभिमतम्। तथा च प्रकृतत्वं

सुवर्णसूत्रम्।

यन्ति—स्वद्व्याख्यान इत्यादि। तुल्यत्वादिति। अत्र विशेषणमकत्वाङ्गीकारेऽपि तव सामान्यनिषेधस्यैव सिद्धान्तत्वेन मूर्तामूर्तरूप एव पर्यवसानतस्तथात्वादित्यर्थः। 'दानव्रत' इत्यारभ्य, 'विधिर्वा धारणव'दित्यन्तग्रन्थस्तु *भाष्यपाण्डुलेखस्थो भ्रान्त्या च

हरितोषिणी।

भावः। शङ्कते—न चेति। तस्य। प्रकृतपदस्य। उत्तरमाहुः—तुल्यत्वादिति। तव मते सामान्यतो मूर्तामूर्तयोर्निषेधः, न तु लौकिकयोस्तयोः। तथा च सामान्ययोः प्रकृत-

गङ्गाधरभट्टी।

तुल्यत्वादिति। प्रकृतपदस्यापि सामान्यवाचित्वात्।

---

टिप्पणी।

* अयं भाष्यपाण्डुलेखस्थो ग्रन्थोऽत्र प्रदर्श्यते। पाण्डुलेखस्तु भाषायां मसोदाशब्दवाच्यः। 'दानव्रततपोहोमजपस्वाध्यायसंयमैः। श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यत' इति श्रीभागवतवाक्याच्च। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेने'ति श्रुतिरपि श्रद्धासहकृतानामाश्रमधर्माणां भगवज्ज्ञानसाधनत्वेनैवानुष्ठानमनुवदति। एतदग्रे चैतमेव विदित्वेत्युपक्रम्य तद्विदः सर्वत्यागं च वदति। सर्वथा वैदिकात्कर्मणो विमुखस्य प्रवर्तनार्थमेव स्वर्गादिफलकथनमन्यथा कर्ममार्गिणो न निन्देत्। तथा हि—'असुर्या नाम ते लोका' इत्युपक्रम्य 'ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः'। 'ये तद्विदुरमृतास्ते भवन्ति' 'अथैतरे दुःखमेवोपयन्ति'। इतः पूर्वमपि 'यथाकारी यथाऽऽचारी तथा भवती'त्युपक्रम्य 'तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मण' इत्यन्तेन कामिनः पुनरावृत्तिमुक्त्वा 'अथाकामयमान' इत्युपक्रम्य 'ब्रह्मैव सन् ब्रह्माप्येती'त्यन्तेन कामरहितस्य मुक्तिरुक्ता। यतः पुरुषोत्तमविदि विहितनिषिद्धयोः कर्मणोः साम्यश्रुतेस्तद्वेदनस्य न कर्मशेषत्वं संभवति। अतः प्रेमभक्त्येकसाध्यत्वात्तत्साधनमेवानुष्ठेयमिति सिद्धम्॥

ननु 'नायमात्मा प्रवचनेने'ति श्रुतौ भगवल्लाभे वरणातिरिक्तसाधनानां निषेधात्तत्साधनसाधनत्वेनाश्रमधर्मविधानमिति न वक्तुं शक्यम्। न च स्वरूपयोग्यतासंपादकत्वेन नैतेषां तथोक्तिरिति वाच्यम्। स्यादेवम्, यदि तत्साधन.................... वचनादिकं न निषिध्येत। अतस्तत्संपादकत्वमपि न वक्तुं शक्यम्। 'यमेवे'ति सामान्यवच-

प्रतिषेधतीत्येतावतैव चारितार्थ्ये सत्येतावत्पदं व्यर्थम् । तेनास्मदुक्त एवार्थो व्यासाभिमत इति मन्तव्यम् । तथा च सविशेषनिर्विशेषनिरूपिकयोः श्रुत्योर्विरोधाभावात्प्रापञ्चिकधर्मरहितं सहजानन्तधर्मयुक्तं ब्रह्मेति सिद्धम् ॥

सुवर्णसूत्रम् ।

प्रचरतीति बोद्धव्यम् । सिद्धमाहुः—तेनास्मदित्यादि । भाष्ये तु प्रकृतस्य ब्रह्मणः प्रकृते वा ब्रह्मणि एतावत्त्वं प्रतिषेधतीति तदीयव्याख्यानेऽपि 'ततो ब्रवीति च भूय', इत्यस्य वैयर्थ्यापात इति दूषणमुक्तम् । यत एतस्य सूत्रांशस्य धर्मिसत्तामानदर्शनपरत्वं तदभिमतम् । तदसंगतम् । प्रकृतपदेनैव ब्रह्मप्रमितौ सत्यां तदभावशङ्काया एवानुदयादिति । एवमुभयलिङ्गाधिकरणविमर्शे यत्सिद्धं तदाहुः—तथा चेत्यादि ॥

हरितोषिणी ।

पदेनैतावत्पदेन वा ग्रहणं भवतु, विशेषो नास्तीति तुल्यत्वमिति भावः । तेनेति । प्रकृतपदस्य व्यर्थत्वेनेत्यर्थः । स्वमते यत्सिद्धं तदाहुः—तथा चेति । धर्मयुक्तमिति । न तु निर्धर्मकमित्यर्थः ॥

गङ्गाधरभट्टी ।

एतावत्पदं व्यर्थमिति । अस्याग्रेण तेनास्मदुक्त इति ग्रन्थः । मदीयार्थे पदवैयर्थ्याभावेनेति सुन्दरस्सन्दर्भः । क्वचित्तु 'दानव्रते'त्यारभ्य 'विधिर्वा धारणव'दित्यन्तो ग्रन्थो मध्ये दृश्यते । स तु प्रक्षिप्तः प्रतिभाति । क्वचित्परं प्रतिदृश्यते । ननु प्रकृतस्य 'द्वे वाव ब्रह्मण' इतिपदेनोपक्रान्तस्य ब्रह्मणः प्रकृते वा ब्रह्मण्येतावत्त्वं प्रतिषेधतीतिव्याख्याने नोक्तदूषणमिति चेन्, न; 'ततो ब्रवीति च भूय' इत्यस्य वैयर्थ्यापातात् । धर्मिसत्तायां मानदर्शनपरमेतदिति हि त्वदभिमतम् । तथा सति प्रकृतपदेनैव ब्रह्मप्रमितौ तत्सत्ताशङ्कानुदयात् । ततो मण्डूकतुल्यं तुन्दिलमिथुनं त्वानुहरति त्वत्समाख्यानमिदमिति । तदुपरितनं टिप्पणं प्रतिभासते ॥

---

टिप्पणी ।

नान्यथा । तथा च ज्ञानसाधकत्वतदसाधकत्वनिरूपिकयोः श्रुत्योरविशेषान्नैवं निर्णय उचित इति चेन । अत्र ब्रूमः—लीलामध्यपातिनो भक्त········ न भगवत्प्राप्तिर्हि लाभः । अत एवाग्रे 'तस्यैष आत्मा वृणुते तनुं स्वा'मित्याद्य········ शब्दपरामृष्टवृतभक्तजीवात्मन एष भगवानात्मा तमधिप्राय सञ्चोक्तेति यावत् । तत्र हि ········ स्वमात्मानं त्वननुत्वेन वृणुत इत्यर्थः । अपरञ्च तस्यात्मनः का वार्ता यतस्तस्य तनु ········ स्वकीयत्वेन वृणुत इति वार्थः । वेदनं तु स्वरूपज्ञानमात्रमत उभयोर्भेदान्न विरोधः श्रुत्योः ।

(३८) यत्तु दृश्यत्वेन प्रकाश्यत्वेन चा'दृश्यमग्राह्यम्' 'न तत्र सूर्यो भाती'त्यादिश्रुतिविरोधान्न सविशेषकथनं युक्तमिति । तदसत् । दृश्यत्वस्यापि श्रुतिस्मृतिसिद्धत्वात् । तथा हि—'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' 'ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तप', 'शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः । त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुज'मित्यादि । एवञ्च सत्युभयाविरोधायादृश्यत्वादिरूपिका श्रुतिरिन्द्रियादिसामर्थ्येन दृश्य-

ब्रह्मणः स्वेच्छया दर्शनादिव्यवहारविषयत्वम्, अन्यदा तदभाव इति तदुपपादकविरुद्धश्रुतिव्यवस्थापनम् ।

सुवर्णसूत्रम् ।

(३८) किञ्च सविशेषस्येत्यादिना यत्पूर्वं चोदितं तद्दूषयितुमुपक्षिपन्ति—यत्त्वित्यादि ।

हरितोषिणी ।

(३८) अत्र परमतं दूषयितुमुपन्यस्यन्ति—यत्त्विति । प्रकाश्यत्वेन चेत्यन्तस्य, न सविशेषेत्यनेनान्वयः । अत्र हेतुमाहुः—अदृश्यमिति । दूषयन्ति—तदसदिति । दृश्यत्वस्यापीति । अपिना अदृश्यत्वसंग्रहः । अत्र प्रमाणमाहुः—तथा हीत्यादिना । श्रुतिमाहुः—कश्चिदिति । स्मृतिमाहुः—भक्त्येति । एवं च सतीति । दृश्यत्वादृश्यत्वयोः श्रुतिस्मृतिसिद्धत्वे सति । दृश्यत्वेति । दृश्यत्वं रूपयति कथयतीत्यर्थः । अवधारणीयमि-

---

टिप्पणी ।

किञ्च उक्तसाधनैर्विविदिषन्तीत्युच्यते, न तु विदन्तीति । न चानुपदमेवै'तमेव विदित्वा मुनिर्भवती'त्युक्तेः सांनिध्यादुक्तसाधनैरेवं वेदनमभिप्रेतमिति वाच्यम् । वेदानुवचनादीनां सर्वेषां वेदनसाधनत्वे सर्वेषां तत्कर्तॄणां वेदनसंभवेन 'मुनिर्भवती'त्येकत्वं तद्विदि न वदेत् । अतो ज्ञानं कस्यचिदेकस्य भवतीति ज्ञानस्य दुर्लभत्वं ज्ञाप्यते । एवं सति 'तस्यैव स्यात् पदवित् तं विदित्वे'ति श्रुते'र्भक्त्या मामभिजानाती'ति भगवद्वाक्याच्च भगवत्कृपया भक्तिलाभे तया भगवत्स्वरूपं वेत्तीति श्रुतेरभिप्रेतम् । ननु तादृशानामपि कथं भ्रान्तिर्युज्यत इति चेन्, उच्यते—'स वा अयमात्मे'त्यादिकया पूर्वश्रुत्या भगवन्माहात्म्यं श्रुत्वा यथाकथंचित्तद्वेदनौत्सुक्ये सति सत्सङ्गाभावेन भक्तिमार्गापरिचयात्कर्ममार्गमात्रमाश्रमधर्मत्वेनालौकिकार्थसाधनत्वेनापि पूर्वं ज्ञातमस्तीति तदेव भगवद्वेदनेपि साधनमिति मन्यमाना.............. एव 'नायमात्मे'तिश्रुतेः । 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्वत' इति भगवद्वाक्याच्च । 'विधिर्वा धारणवत्' ॥

त्वं निषेधति, दृश्यत्वरूपिका भगवदनुग्रहेणैव भगवतो दृश्यत्वं वदतीत्यवधारणीयम् । यतो भगवतैवोक्तम्—'मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगा'दिति । अत्रात्मयोगपदात् प्रसन्नः सन् स्वसामर्थ्यं दत्वा प्रदर्शयतीति ज्ञायते । ब्रह्माणं प्रत्यपि भगवद्वाक्यम्—'मनीषितानुभावोऽयं मम लोकावलोकन'मिति । अत एव सूत्रकारोऽप्याहादृश्यत्वपूर्वपक्षे—'अपि संराधने प्रत्यक्षानुमानाभ्या'मिति । अपीति पूर्वपक्षिगर्हायाम् । मूर्खः पूर्वपक्षीति । यतः सम्यगाराधने पश्यन्ति, कथमेवम्? प्रत्यक्षानुमानाभ्याम् 'अनेकबाहूदरवक्त्रनेत्रं पश्यामी'ति प्रत्यक्षं, ध्रुवा-

सुवर्णसूत्रम् ।

दूषयन्ति—तदसदित्यादि । मनीषितानुभाव इति । इदं द्वितीयस्कन्धे मनीषितस्याभीष्टस्यानुभावो ममैवेदमिष्टं यदयं वैकुण्ठं पश्यत्विति, तथा च मदिच्छासामर्थ्येन पश्यसीत्यर्थः । एतेन 'अदृश्यं' 'तत्केन कं पश्येद्विज्ञातारमरे केन विजानीया'दित्यादिश्रुतिविरोधः परिहृतो बोध्यः । अत्र सूत्रकारसंमतिमाहुः—अत एवेति । यतो भगवत्सामर्थ्यादेव भगवतो दृश्यत्वम्, अत एवेत्यर्थः । अनुमापकत्वमिति । दृष्टान्तत्वेनानुमापकत्वम् । पञ्चावयवे त्र्यवयवे वा सर्वेषामवयवानां तथात्वादिति, भगवत्समाराधका भगवद्द्रष्टारः, भगवद्दत्तप्रसादभाक्त्वात्, यदेवं तदेवं, ध्रुवादिवदिति प्रयोगेण तथात्वमित्यर्थः । सूत्रेऽनुमानपदाचस्य च करण एव प्रयोगाद् ध्रुवादीनां चातथात्वाद्विरुद्धं व्याख्यानमित्य-

हरितोषिणी ।

त्युक्तम्, तत्र प्रमाणमाहुः—मया प्रसन्नेनेति । ब्रह्माणमिति । द्वितीयस्कन्धे । मनीषितेति । मनीषितस्यायं मम लोकावलोकनं करोत्वितीच्छाविषयीभूतस्यानुभावः प्रभावः । तथा चेच्छया दर्शनं जायत इत्यर्थः । एतेन स्वसामर्थ्येनादृश्यत्वं तस्येत्यदृश्यत्वबोधिकाः श्रुतयः संगमनीया इति सूचितम् । अत्रोपष्टम्भकमाहुः—अत एवेति । यतो भगवदिच्छया दृश्यत्वम्, अत एवेत्यर्थः । कथमेवमिति । कथमेवं पश्यतीत्यर्थः । तत्रोत्तरं—प्रत्यक्षेति । अनेकेति । अर्जुनस्य प्रत्यक्षम् । तथा चाराधनं प्रत्यक्षसाधकं न, किन्तु 'मनीषितानुभावोऽय'मितिद्वितीयस्कन्धवचनप्रामाण्याद् भगवदिच्छैवेति भावः । अत एव ध्रुवादिभी राज्यार्थमाराधनं कृतं, प्रत्यक्षन्त्विच्छयैव जातमितीच्छैव कारणमि-

गङ्गाधरभट्टी ।

मनीषितेति । मद्विचारितेत्यर्थः । इतिप्रत्यक्षमिति । संराधकस्यार्जुनस्य स्वानुभवः ।

द्दीनामनुमापकत्वं ताभ्यामित्यर्थः। श्रुतिस्मृतिभ्यामिति वा। एवं सति मां सर्वे पश्यन्त्विति साधारणेच्छया प्रादुर्भावेन सर्वेषां दर्शनसामर्थ्यमवतारदशायाम्। अन्यदा तु 'नाहं वेदै'रिति 'भक्त्या त्वनन्यये'ति वाक्याच्च भक्त्यैवेति निर्णयः। भक्तानां त्ववतारदशायामपि भक्त्यैव, न साधारणेच्छया। तद्भक्त्यैव तदर्थमेव प्रादुर्भावात्। साधारणेच्छाऽपि यतस्तदर्थैव। लोकमध्य एव यतस्तेषां सुखजननम्। अन्यथा लोके स्वप्राकट्यं निष्प्रयोजनकं स्यात्। सर्वेषां भगवद्दर्शनेऽपि यन्मोहानपगमस्तत्र तदिच्छैव प्रतिबन्धिका। तस्य सत्यसङ्कल्पत्वात्। एवमेव भगव-

सुवर्णसूत्रम्।

त्कृपया पक्षान्तरमाहुः—श्रुतिस्मृतिभ्यामिति। 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' 'ज्ञानप्रसादेन' 'तमक्रतुं पश्यती'त्यादिश्रुतेः, 'अनेकबाहूदर' 'भक्त्या त्वनन्यये'त्यादिस्मृतेश्चेत्यर्थः। ननु सूत्रे संराधने दर्शनं निर्णीतमित्याराधनोत्तरकालीनं दृश्यत्वं न ब्रह्मत्वबाधकम्, अवतारकालीनं दर्शनं तु न संराधनहेतुकम्, शत्रुमित्रोदासीनसाधारणत्वात्। अतः सर्वदृश्यत्वं ब्रह्मत्वबाधकं भगवदवतारेष्वतथात्वं गमयतीति न पूर्वोक्तं साधीय इत्यत आहुः—एवं सतीति। 'मनीषितानुभावोऽय'मिति स्मृत्या भगवदिच्छाऽनुभावेन दर्शने सिद्धे सति। तथा चावतारदशायामपीच्छयैव दर्शनमिति न दोषलेश इत्यर्थः। नन्वेवं सति भक्ताभक्तयोर्दर्शनतौल्यात्संराधनन्यायविरोधस्तु दुष्परिहर इत्यत आहुः—भक्तानामित्यादि, स्यादित्यन्तम्। तथा च तदपि परम्परया संराधनहेतुकमेवेति न न्यायविरोध इत्यर्थः। ननु तथापि तत्र 'भिद्यते हृदयग्रन्थि'रितिश्रुत्युक्तदर्शनफलस्य शत्रुप्रभृतिष्वदर्शनादवतारेषु ब्रह्मत्वं दुर्घटमित्यत आहुः—सर्वेषामित्यादि। एवमेवेति। इच्छायाः

हरितोषिणी।

त्यनुमीयते। श्रुतिस्मृतिभ्यामिति। 'कश्चिद्धीरः' इति श्रुतिः, 'भक्त्या त्वनन्यये'ति स्मृतिस्ताभ्यामित्यर्थः। एवं सतीति। पूर्वोक्तग्रन्थेन भगवदिच्छाया दर्शनजनकत्वे सिद्धे सति। सर्वेषामिति। भक्ताभक्तानामित्यर्थः। अन्यदा अवताराभावे। ननु कथमिव साधारणेच्छया भक्ताऽभक्तयोर्दर्शनतौल्यमित्यत आहुः—भक्तानामिति। ननु तथाऽपि शत्रूणां भगवद्दर्शनं जातं, मोहाभावः कुतो न जात इत्यत आहुः—सर्वेषामिति। यन्मोहेति। यस्मात्कारणान्मोहदूरीकरणाभाव इत्यर्थः। एवमेवेति। इच्छाया विरोधित्वे-

गङ्गाधरभट्टी।

अनुमापकत्वमिति। ध्रुवादयो भगवदाराधनेन भगवन्तं प्राप्ता इति दृष्टान्तेन॥

निष्प्रयोजनकमिति। असुरसंहारस्येच्छयैव सिद्धेः। भक्तार्थमवतारस्तु भक्त्या माहात्म्यबोधनाय सेवकगृहे नृपगमनवत्। एवमेवेति। तदिच्छयैव॥

स्वरूपाज्ञानमपि । अलौकिकतेजोऽप्रदर्शनं लौकिकानुकरणं च लीलार्थमेव । अन्यथा लीलैव न संभवति । सर्वेषां च तदैव मोक्षः स्यात् । तथा सति सृष्टिमर्यादोच्छेदः स्यात् । एवमेव प्रकाश्यत्वमपि ज्ञेयम् । 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक'मिति वाक्यात् स्वतेजसा स्वस्य प्रकाश्यत्वमपि नातिविरोधि । सर्वव्यवहारविषयत्वं भगवत्कृतमेव, न तु जीवेन स्वतः कर्तुं शक्यम् । अत एव सूत्रकारोऽप्याह—'प्रकाशवच्चावैयर्थ्या'दिति । अर्थस्तु पूर्वेणाकारे प्रतिपादितेऽपि 'यतो वाचः' 'तं त्वौपनिषद'मित्यादिनिरूपितव्यवहारविषयत्वाविषयत्वविरोधो न परिहृतः, शास्त्रवैफल्यं चेत्यत आहे-

सुवर्णसूत्रम् ।

प्रतिबन्धकत्वादेव । इदमेवोक्तं ब्रह्माण्डपुराणे । तदग्रे प्रभासीयलीलाप्रसङ्गे प्रदर्शनीयम् । नन्ववतारेषु ब्रह्मत्वेऽलौकिकतेजस्तु दृश्येतेत्यत आहुः—अलौकिकेत्यादि । एवं दृश्यत्वं साधयित्वा तत्साधिकां युक्तिं प्रकाश्यत्वसाधनेऽतिदिशन्ति—एवमेवेत्यादि । प्रकारान्तरमप्याहुर्वैचित्र्यार्थ्यम्—यदेत्यादि । 'न तत्र सूर्यो भाती'ति श्रुतिविरोधे सत्यपि तेजसो भगवदीयत्वेन प्रतिपादनान्नातिविरोधीत्यर्थः । ननु व्यवहार्यत्वं तु बाधकमपरिहार्यमित्यत आहुः—सर्वेत्यादि । व्यवहारो ज्ञानकर्मेन्द्रियव्यापारस्तद्विषयत्वं तत्तथेत्यर्थः । तत्र हेतुः—नत्वित्यादि । अत्र सूत्रकारसंमतिमाहुः—अत एवेति । व्यवहार्यत्वस्येश्वरकृतत्वादेव । पूर्वेणेति । अरूपवत्सूत्रेण रूपरूपस्यैव तत्र विवक्षितत्वात्तथेत्यर्थः । इदमिति ।

हरितोषिणी ।

नेत्यर्थः । इदं च सर्वमग्रे वक्ष्यते । एवमेवेति । यथा दृश्यत्वं, तथा प्रकाश्यत्वं ज्ञेयम् । नन्ववतारदशायां सूर्यतेजसा स्वस्य प्रकाश्यत्वमस्तीति न तत्र ब्रह्मत्वम् । 'न तत्र सूर्यो भाती'तिश्रुतिविरोधादत आहुः—यदादित्येति । स्वस्येति । भगवत इत्यर्थः । एवं च ब्रह्मत्वमस्तीति न दोषः । ननु व्यवहारो ब्रह्मत्वे बाधकः स्यादित्यत आहुः—सर्वेति । ज्ञानेन्द्रियेण कर्मेन्द्रियेण च यत्क्रियते तदेव व्यवहारपदवाच्यं, तत्र कर्तृत्वं भगवत एवेत्यर्थः । अत एवोक्तं निबन्धे 'कर्ता स्वतन्त्र एव स्यात्तथापि सगुणो न ही'ति । अत्रान्यदपि प्रमाणमाहुः—अत एवेति । सूत्रावतरणमाहुः—पूर्वेणेति । पूर्वसूत्रेणेत्यर्थः । इदमिति । 'प्रकाशव'दिति सूत्रमित्यर्थः । सूत्रस्थप्रकाशवदिति दृष्टान्तं घटयन्ति—

गङ्गाधरभट्टी ।

नातिविरोधीति । आपाततो विरोधप्रतिसन्धानेऽपि वस्तुविचारे विरोधो नेत्यर्थः । पूर्वेणेति । अरूपवत्सूत्रेण । इदमिति । सूत्रम् । लौकिकवाक् च मनश्चेतिसमासाश्रयणात्

दम् । यथा सौरादिप्रकाशो व्यवहार्योऽव्यवहार्यश्च । न हि स्वतः संपादयितुं स्थापयितुं वा शक्यते । आगते तु सूर्ये मेघाद्यभावे च सांनिध्यमात्रेण व्यवहारः कर्तुं शक्यते । तथा च लौकिकवाङ्मनोभिर्न शक्यते व्यवहर्तुमीश्वरः सान्निध्ये तु शक्यत इति द्वयमाह श्रुतिः । कुत एतत् ? अवैयर्थ्यात् । अन्यथैकस्याः श्रुतेर्वैयर्थ्यापत्तेरिति । दर्शनव्यवहारस्य श्रुतिसिद्धत्वमुक्तमेव । तथा च दर्शनव्यवहारन्यायेनापरस्यापि व्यवहारस्य निर्णयः । तथा चोक्तं श्रीभागवते—'पश्यन्ति ते म' इत्युपक्रम्य 'साकं वाचं स्पृहणीयां वदन्ती'ति । 'यमेवैष वृणुते तेन लभ्य' इत्यादिश्रुत्या च ॥

ननु दर्शनं ज्ञानमेव, न तु चाक्षुषं श्रुत्या निरूप्यते, ब्रह्मणोऽरूपित्वादिति चेत्, न; 'भक्त्या त्वनन्यये'ति वाक्ये 'ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपे'ति ज्ञानदर्शनप्रवेशानां भिन्नतयैव निरूपणात् । रासादिरूपश्च व्यवहारः प्रमाणसिद्ध इति तत्र प्रसिद्धकामतद्भावरिरंसारमणादयोऽपि शुद्धब्रह्मधर्मा एवेति ज्ञेयम् । 'सर्वशक्ति'रिति श्रुतौ 'परास्य

सुवर्णसूत्रम् ।

सूत्रम् । इत्यादिश्रुत्या चेति । लभ्यत्वस्य प्राप्त्यात्मकव्यवहारविषयत्वात्मकत्वादिलतात्पर्थेत्यर्थः ॥

हरितोषिणी ।

तथा च लौकिकेति । 'यतो वाच' इतिश्रुतेर्लौकिकवागविषयत्वमर्थः । 'तं त्वौपनिषद'मिति श्रुतेरभिप्रायमाहुः—ईश्वर इति । नन्वस्तु वाग्व्यवहारः, दर्शनव्यवहारः कथम् ? इत्यत आहुः—दर्शनव्यवहारस्येति । उक्तमेवेति । 'कश्चिद्धीरः प्रत्यगात्मानमैक्ष'दितिश्रुत्योक्तमेवेत्यर्थः । अपरेऽपि सर्वव्यवहाराः संभवन्तीत्याहुः—तथा चेति । श्रुत्या चेति । निर्णय इति पूर्वेणान्वयः । तथा च दर्शनसंभाषणलाभादिसर्वव्यवहारविषयत्वं ब्रह्मण इति श्रुत्या प्रतिपादितमिति भावः ॥

अत्र शङ्कते—नन्विति । उत्तरमाहुः—भक्त्येति । निरूपणादिति । गीतायामिति शेषः । रासादिव्यवहारे संशयं दूरीकुर्वन्ति—रासादीति । ननु तेषां कथं ब्रह्मधर्मत्वमु-

गङ्गाधरभट्टी ।

'अचतुरे'त्यादिना वाङ्मनसेतिनिपातनापत्तिर्नास्ति । कामतद्भावेति । कामानन्तरं तद्भावा विभावाऽनुभावाद्याः । एकदेशिभिः 'सर्ववि'दितिपाठस्वीकारा'त्परास्य शक्ति'रित्युक्तम् । तन्नेति । 'तन्न वेद्मि कुतो गतासी'त्यष्टपदी गीतगोविन्दे ॥

शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतौ सहजानन्तशक्तिमत्त्वेन निरूपितत्वेन सर्वार्थोपपत्तेः । तेन कामसमय एवाकामोऽपि, निजचरणनखसुषमालेशजिताशेषसुरसुन्दरीणामखिलस्त्रीरत्नभूतानां व्रजवरवधूनामनवद्यहृद्यकनकाचलेषु विहरन्नप्यात्माराम एव । अत एवा'त्मारामोऽपी'ति तत्रोक्तम्। प्रियाविप्रयोगेनावमादाद्विभावं भजमानोऽपि 'तन्न वेद्मी'त्यादिवचनैरजानन्नपि व्यापक एव, परमानन्दरूप एव, सर्वज्ञ एव ॥

विरुद्धधर्माधारत्वं श्रौतमिति न तत्र लोकरीत्या दोषसंभवः ।

(३९) ननु प्रतियोग्यभावयोरेकावच्छेदेन स्थितिर्न वक्तुं शक्या, तथैव विरुद्धसर्वधर्माणामप्यतो नैवं वक्तुं युक्तमिति चेत्, न वयं वदामः, किन्त्वनुवदामः । अतो न वयमत्र पर्यनुयोगार्हाः । यदनुवादस्तां श्रुतिं चेत् पर्यनुयोक्तुमुद्यतोऽसि, महत्ते साहसं खद्योतस्येवोदयाचलशिखरैकदेशस्थितिमात्रेण सकलजगत्तमःकपाटविपाटनपटुं स्वाशक्यतया तरणिं पर्यनुयोक्तुमुद्यतस्य । अथ लोके तथाऽदर्शनात्तदनुसारेणैव च तदर्थस्य न वक्तुमुचितत्वाच्छ्रुतित्वेनोभयस्यापि तुल्यत्वात् सगुणनिर्गुणपरत्वं कल्प्यत इति चेत्, हन्त!! एवं लोकानुसारेण तदर्थनिर्णये निर्द्धर्मकपदा-

सुवर्णसूत्रम् ।

(३९) आधारत्वप्रतीतिविषयत्वादीनां निर्द्धर्मकत्वाविरोधित्वात्तदभिमानेन प्रत्यवति-

हरितोषिणी ।

पद्यत इत्यत आहुः—सर्वशक्तिरितीति । सर्वार्थोपपत्तिं दर्शयन्ति—तेनेति । निजचरणेति विशेषणद्वयं 'व्रजवरवधूना'मित्यस्य । अत एवेति । कामसमयेऽप्यकामत्वादेवेत्यर्थः ॥

(३९) अत्र लौकिकरीत्या शङ्कते—नन्विति । प्रतियोगीति । घटतदभावयोरित्यर्थः । समाधानमाहुः—न वयमिति । वयं न वदामः, किन्तु श्रुत्या यदुक्तं तदनुवदाम इत्यर्थः । न वयमिति । अत्र अस्मिन् विषये वयं पर्यनुयोगार्हा न भवाम इत्यर्थः । यदनुवाद इति । यस्याः श्रुतेरनुवादो मया कृतस्तां श्रुतिमित्यर्थः । अत्र खद्योतदृष्टान्तमाहुः—खद्योतस्येवेति । उदयाचलेत्यादि । विपाटनपटुं तरणिं स्वाशक्यतया पर्यनुयोक्तुमुद्यतस्य खद्योतस्येत्यन्वयः । पुनः स्वमतरीत्या शङ्कते—अथेति । तदर्थस्य श्रुत्यर्थस्य । समाधानमाहुः—हन्तैवमिति । सामान्यरूपसत्तायाः निर्द्धर्मकत्वं दृश्यत इत्यत आहुः—

र्थस्यापि लोकेऽदर्शनात् सत्तादीनामपि कालाद्याधारत्वसमवायादिधर्मवत्त्वात्त्वदभिमतं ब्रह्मापि न सिद्ध्येत् । श्रुतिबलेनेति तु तुल्यम् । एवं सति लोकाप्रतीतं निर्धर्मकं वस्तु चेदङ्गीकुरुषे, तदा लोकाप्रतीतामपि प्रतियोग्यभावयोरप्येकावच्छेदेन स्थितिमङ्गीकुरु । एवं सति श्रुत्यर्थो न लोकरीत्या निर्णेतुं शक्यत इति सिद्धम् । अत एव श्रुतिरप्याह—'नैषा तर्केण मतिरापनेये'ति, 'अलौकिकास्तु ये भावा न तांस्तर्केण योजये'-

सुवर्णसूत्रम् ।

दुक्तं प्रत्याहुः—अत एवेत्यादि । तथा चैवं दुर्युक्तिभिः प्रत्यवस्थानं श्रुतिरेव निषेधतीत्यकिञ्चित्करोऽयं तवाभिमान इत्यर्थः । उक्तरीतिककुयुक्त्या प्रत्यवस्थानं युक्त्या न्यायेन च परिहरन्ति—किञ्चेत्यादि । ननु दर्शनस्य न वस्तुतत्त्वनिर्णायकत्वं, गौडवार्तिके 'उपलम्भात् समाचारान्मायाहस्ती यथोच्यते । उपलम्भात्समाचारादस्ति वस्तु तथो-

हरितोषिणी ।

सत्तादीनामपीति । कालेति । काल आधारो यस्याः । एवं च कालाधारत्वं, समवायप्रतियोगित्वं सत्तायामप्यस्तीति लोके निर्धर्मकपदार्थाभावेन तदनुरोधेनार्थकरणे महती क्षतिरित्याहुः—त्वदभिमतेति । एवं सति ब्रह्मसिद्धभावे सति । एवं सतीति । प्रतियोग्यभावयोरेकत्र स्वीकारे सति । अत एवेति । लोकरीतिकवेदार्थनिर्णयाभावादेव लौकिकतर्कानुसरणं श्रुतिस्मृतिविरुद्धमिति भावः । विरुद्धधर्माश्रयत्वं ब्रह्मणि प्रत्यक्षप्रमाणसिद्धमित्याहुः

गङ्गाधरभट्टी ।

सत्तादीनामिति । सत्ताया नित्यत्वमते *कालाद्याधारत्वाभावाद्दादिपदं चिदानन्दसङ्ग्रहकमुक्तम् । इदं च †न्यायनयेनोच्यते । तेनेतरेषां समवायाभावेऽपि न दोषः ।

---

टिप्पणी ।

* कालाद्याधारत्वाभावादिति गङ्गाधरभट्टी । न्यायनये नित्याऽपि सत्ता कालिकसम्बन्धेन काले, समवायेन द्रव्यादावभ्युपेयत इति नेदं व्याप्तिनिबन्धनं वचनम् ॥

† न्यायनयेनोच्यत इति । यद्यपीह मायिकपक्षप्रतिक्षेपावसरे तन्मतेन, 'व्यवहारे वयं भाट्टा' इति तत्प्रतिज्ञानाद्भट्टमतेन वा वक्तुमुचितं, तथापि प्रत्यासन्नपराजयः प्रतिपक्षी यथाकथंचित् स्वपक्षं रिरक्षिषुः पराभिमतमपि प्रदर्शयेद् दृष्टान्तपदे कदाचिदिति न्यायनयेनाप्युच्यते । अत एव सर्वेषां दृष्टान्तोचितानां सङ्ग्रहाय 'कालादि' 'समवायादि' इत्युभयत्रादिपदमुपात्तम् । तदत्र केवलं समवायोपादानमेव न्यायनयेन, अन्येषां त्वन्यनयेनेति तत्त्वम् ॥

दिति स्मृतिश्चेति पूर्वमेवावोचाम । किञ्च भगवति श्रीयशोदास्तनन्धये सर्वे विरुद्धा धर्मा दृश्यन्ते मृत्स्नादिप्रसङ्गेषु । न हि दृष्टेऽनुपपन्नं नाम, व्याघातात् । मायादिपक्षाणां तत्रैव निरस्तत्वात् । 'अथो अमुष्यैवे'त्यनेन तद्धर्मत्वेनैव निरूपणात् । अत एव सूत्रकारोप्याह—'दर्शनाचे'ति ॥

विश्वरूपादिदर्शनं मायिकमित्यस्य खण्डनम् ।

(४०) अपि च मायया प्रदर्शयतीति वदन् वादी प्रष्टव्यः । किं मायाशब्देन भगवत्सामर्थ्यं ब्रवीष्युत तद्भिन्नाऽसद्रूपाऽसत्कार्यकर्त्रीति । आद्ये त्वोमिति ब्रूमः । न च स्वसामर्थ्येनैवासत् प्रदर्शितवानिति वाच्यम् । 'यः पृथिव्यां तिष्ठन् पृथिवीमन्तर' इत्यादिश्रुत्या ब्रह्मधर्मत्वेनैव निरूपणात् । तादृशं चेद्

सुवर्णसूत्रम् ।

च्यत' इति दर्शनादेरप्रमाणत्वकथनादिति शङ्कायामाहुः—मायादीत्यादि । तद्धर्मत्वेनैव निरूपणादिति । तथा च लौकिकप्रमाणजन्यदर्शनस्याप्रामाण्यं, न तु भगवत्कृपासाधनकस्यापीति गौडवार्तिकमप्रमाणं, लौकिकतत्परं वेति दर्शनस्य प्रामाण्यमदण्डवारितमित्यर्थः । अत्र सूत्रकारस्यापि सम्मतिमाहुः—अत एवेत्यादि ॥

(४०) न'न्विन्द्रो मायाभिः पुरुरूप' इतिश्रुतौ दर्शनस्य मायिकत्वकथनान्मायया दर्शयतीति शङ्कायामाहुः—अपि चेत्यादि । तद्भिन्नेति । भगवत्स्वरूपाद्भिन्ना । ब्रह्मधर्मत्वेनेति । विरुद्धधर्माश्रयत्वस्य तथात्वेन । तादृशमिति । स्वान्तःस्थापितपृथिव्यादित्वेन

हरितोषिणी ।

—किञ्चेति । ननु मायया प्रदर्शयतीत्यत आहुः—मायादीति । तद्धर्मत्वेनैवेति । मायाया भगवद्धर्मत्वेनैवेत्यर्थः । ब्रह्मणि विरुद्धधर्माश्रयत्वं प्रत्यक्षसिद्धमित्यस्मिन्नर्थे सूत्रं प्रमाणयन्ति—अत एवेति ॥

(४०) ननु श्रुतावपि मायिकत्वमेवोक्त'मिन्द्रो मायाभिः पुरुरूप ईयत' इत्यनेनेत्यत आहुः—अपि चेति । सामर्थ्यस्य भगवद्रूपत्वादाहुः—भगवदिति । तद्भिन्नेति । भगवत्स्वरूपाद्भिन्नेत्यर्थः । ब्रूम इति । मन्मते शक्तिशक्तिमतोरभेदादिति भावः । अत्र शङ्कते—नं चेति । असदिति । असज्जगदादिकर्तृत्वं स्वसामर्थ्यरूपमाययैव प्रदर्शितवानित्यर्थः । तथा चाकर्तर्यपि विद्यमानं कर्तृत्वं मायया दृश्यते, न तु तत्रास्ति, उभयोर्विरुद्धत्वादिति भावः । उत्तरमाहुः—'यः पृथिव्या'मिति । ब्रह्मधर्मत्वेनैवेति । आधारत्वा-

गङ्गाधरभट्टी ।

तद्धर्मत्वेनेति । भगवद्धर्मत्वेन ॥

(४०) 'इन्द्रो मायाभिः पुरुरूप ईयत' इति श्रुत्या मायिकं बहुधा दर्शनमिति चेत्त्राहुः—मायया प्रदर्शयतीति । तद्भिन्नेति । भगवतो भिन्ना । ओमित्यङ्गीकारेऽव्ययम् । ब्रह्मधर्मत्वेनैवेत्येतेन मायाव्यवच्छेदः ।

ब्रह्म न स्यात्तदैवं वक्तुमवसरः स्यात् । न त्वेवम्, उक्तयुक्तेः । असत्प्रदर्शनं चासुरेष्वेव । यतो मोहनं तेषामेव भगवता क्रियते । अत्र च तादृशानामभावान्न तथा प्रदर्शनमिति सारम् । न द्वितीयः, विकल्पासहत्वात् । तथाहि—सा किं स्वतन्त्रैव कर्त्री, उत ब्रह्माधीना । नाद्यः, जडत्वाचेतनत्वेन त्वयाऽनङ्गीकारात् । द्वितीयपक्षे तु करणत्वं स्याद्वाशीवत् । तथा च सहजानन्तशक्तिमत ईश्वरस्य स्वस्वरूपप्रदर्शने का वाऽशक्तिर्यतस्तामूरीकुर्यात् । 'स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतेः । किञ्च उक्तयुक्तिश्रुतिभ्यः सद्रूपं स्वरूपमसद्रूपया तया दर्शयतीति वक्तु-

सुवर्णसूत्रम् ।

तदाधारमित्यर्थः । उक्तयुक्तेरिति । विरुद्धधर्माश्रयत्वात् । नन्वस्तु विरुद्धधर्माश्रयत्वं, तथाऽपि तथा प्रदर्शनाङ्गीकारे को दोष इत्यत आहुः—असत्प्रदर्शनमित्यादि । इदमग्रे लीलानित्यत्ववादे व्युत्पाद्यम् । तथा च तथाऽङ्गीकारे 'इत्थं विदिततत्त्वाया गोपिकायाः स ईश्वरः । वैष्णवीं व्यतनोन्माया'मित्यादिवाक्यविरोध इत्यर्थः । अस्तु करणत्वमेवेत्यत आहुः—तथा चेत्यादि । स्वाशक्तौ वा द्रष्टुरयोग्यत्वे वा लोकेऽपि मायोरीकरणं दृश्यते, प्रकृते चोभयाभावान्नात्र तस्याः करणत्वं शक्यवचनमित्यर्थः । अशक्तिं परिहरन्ति—स्वाभाविकीति । ननु तर्हि कौतुकार्थमेव तदादरोऽस्त्वित्यत आहुः—किञ्चे-

हरितोषिणी ।

धेयस्वरूपविरुद्धधर्माश्रयत्वस्य ब्रह्मधर्मत्वेन निरूपणादित्यर्थः । तथा च कर्तृत्वमकर्तृत्वं चोभयमपि ब्रह्मनिष्ठमेवेति भावः । तादृशमिति । विरुद्धधर्माधारमित्यर्थः । तदैवं वक्तुमिति । निर्द्धर्मके धर्मा न सन्तीत्येवं वक्तुमित्यर्थः । उक्तयुक्तेरिति । 'यः पृथिव्या'मितिश्रुतौ विरुद्धधर्माश्रयत्वेन कथनादित्यर्थः । नन्वसज्जगत्प्रदर्शनं मायया क्रियत इति स्वीकारे को दोष इत्यत आहुः—असदिति । इदं चाग्रे लीलानित्यतावादे वक्ष्यते । द्वितीय इति । ब्रह्मभिन्नत्वपक्षः । विकल्पासहत्वादिति । अग्रिमेण विकल्पेनासहत्वादित्यर्थः । विकल्पमेवाहुः—तथा हीत्यादिना । वाशीवदिति । कुठारवदित्यर्थः । तथा च छिदाकरणे कुठारे कर्तृत्वाभावादिति भावः । नन्वस्तु तस्याः करणत्वं, सहायार्थं तस्याः स्वीकारो भविष्यतीत्यत आहुः—तथा चेति । अशक्तिरिति । असामर्थ्यमित्यर्थः । सामर्थ्यं नास्तीति न वक्तुं शक्यमित्याहुः—स्वाभाविकीति । विलक्षणं कौतुकरूपं जग-

गङ्गाधरभट्टी ।

उक्तयुक्तेरिति । विरुद्धधर्माधारत्वात् । असत्प्रदर्शनमिति । प्रभासीयलीलादि । अत्र चेति । 'अथो अमुष्ये'ति सन्दर्भे । तथा चेत्यादि । स्वाशक्तौ द्रष्टुरयोग्यत्वे वा मायोररीक्रियते नटादिभिः, न चेह तथेत्यर्थः ।

मशक्यम् । एतेनैव सगुणत्वमपि प्रत्याख्यातम् । तद्धि प्राकृतसत्त्वादिगुणाङ्गीकाररूपम् । तच्च स्वतःशक्तस्यानुपपन्नमित्युक्तम् । एतेनैव च ब्रह्मगताऽविद्या ब्रह्मगतविशेषकल्पिकेत्यपि पूर्वविकल्पगतद्वितीयपक्षो निरस्तः । ब्रह्मणि जीवातिरिक्ते त्वया *तथाऽनङ्गीकाराच्च । अङ्गीकारे वा तस्या उपाधिभावे प्रयोजिकेश्वरेच्छैव वाच्या । तथा च सर्वभवनसम-

सुवर्णसूत्रम् ।

त्यादि । कौतुकायापि सद्रूपयाऽसत्प्रदर्श्यते, प्रकृते तु तद्विपरीतमतो मूर्खप्रलपितमेतदित्यर्थः । ननु सगुणत्वादस्तु तदुररीकरणमित्यत आहुः—एतेनैवेति । सहजानन्तशक्तिमत्त्वस्य श्रुतिसिद्धत्वेनैवावतीर्णस्य सगुणत्वं तथेत्यर्थः । एवं शक्तस्य तादृशतद्ग्रहणस्यानुपपन्नत्वेनैव पूर्वप्रकृतस्यापि सिद्धिमाहुः—एतेनैव चेति । चकारोऽसद्रूपेत्यादिनोक्तस्य द्वितीयपक्षस्य विकल्पे यद्दूषणं तत्समुच्चायकः । ननु मायाया उपाधित्वं मयाऽङ्गीक्रियत एवेति चेत् तत्राहुः—अङ्गीकार इत्यादि । स्वत उपाधित्वे ज्ञाननाश्यत्वभङ्गापत्त्येश्वरेच्छैव तथा

हरितोषिणी ।

दृश्यत इति तदर्थमेव तस्याः स्वीकारोऽस्त्वित्यत आहुः—किञ्चेति । सद्रूपमिति । 'सर्वं खल्विदं ब्रह्मे'ति श्रुत्या सद्रूपब्रह्मस्वरूपं जगदित्यर्थः । तया मायया । वक्तुमशक्यमिति । असतः सत्प्रदर्शने सामर्थ्याभावादिति भावः । नन्वगुणस्य सगुणत्वं दृश्यत इति मायाऽऽदरोऽस्त्वित्यत आहुः—एतेनैवेति । 'स्वाभाविकी ज्ञाने'ति श्रुत्युक्तधर्माणां स्वाभाविकत्वाद्येवेत्यर्थः । प्रत्याख्यानमेवाहुः—तद्धीति । सगुणत्वं हीत्यर्थः । स्वतःशक्तस्येति । सहजानन्तशक्तिमत्त्वस्येत्यर्थः । एतेनैव चेति । स्वतःशक्तस्य प्राकृतगुणाङ्गीकारानुपपत्तिप्रदर्शनेन । द्वितीयपक्ष इति । मायाशब्देन भगवत्सामर्थ्यमुत तद्भिन्नाऽसद्रूपाऽसत्कार्यकर्त्रीति पूर्वविकल्पगतोऽसद्रूपेत्यादिद्वितीयपक्ष इत्यर्थः । तथा अविद्योपाधिमत्त्वस्येत्यर्थः । ननु मायाया विद्याऽविद्यारूपेण द्वैविध्यादविद्यारूपमायाया उपाधिरूपत्वं मया स्वीक्रियत एवेत्यत आहुः—अङ्गीकारे वेति । ईश्वरेच्छैवेति । अविद्याया उपाधिभावे प्रयोजकत्वमीश्वरेच्छाया अवश्यं स्वीकर्तव्यम् । अन्यथा तस्या उपाधिभावः स्वतः-

गङ्गाधरभट्टी ।

एतेनैवेति । ईश्वरस्य गुणापेक्षाभावेन । द्वितीयपक्ष इति । तद्भिन्नाऽसद्रूपा असत्कार्यकर्त्रीत्यर्थः ॥

---

टिप्पणी ।

* तथाऽनङ्गीकाराच्चेति । यद्यप्यविद्याया ब्रह्मगतत्वं वाचस्पतिमिश्रादिभिरेव नाङ्गीक्रियते, न सर्वैस्तथापि येऽङ्गीकुर्वन्ति ते मूलाचार्याणामाशयापरिज्ञानादेव, पूर्वाऽपरविरोधेन तस्य तदसंमतत्वावगमादिति नेह दोषलेश इति प्राभञ्जनाशयः ॥

र्थस्येश्वरस्य त्वदभिमतरीत्या तथा करणे हेत्वभावः । इच्छादीनामपि त्वन्मते तदुपाधिभावोत्तरकालीनत्वादसंभवश्च । आविद्यकत्वे स्वाभाविकत्वहान्या श्रुतिविरोधश्चेति दिक् ॥

ब्रह्मणो रसरूपतया विरुद्धधर्माधारतया च कामादिलीलाया नानुकरणता ।

(४१) ननु कामादिलीलाया अनुकरणमात्ररूपत्वेन प्रियाविप्रयोगतज्जनितक्लेशादयः पूर्णे ज्ञानैकघने परमानन्दस्वरूपे न वक्तुमुचिता इति चेत्, सत्यम्! नोचिता एव स्युर्यदि विप्रयुक्तत्वादिना पूर्णत्वादिकं भज्येत, न त्वेवम्। तत्तूक्तं प्रादेशमात्रस्यैवाभिविमानत्वादिनिरूपणेन ।

सुवर्णसूत्रम्।

वाच्या । तथा सत्युक्तरीत्या हेत्वभावः । अशक्तिद्रूप्रयोग्यत्वकौतुकान्यतमस्य प्रयोजकताया वक्तुमशक्यत्वात्तथेत्यर्थः । असंभव इति । उपाध्यसंभवः ॥

(४१) किञ्चिदाशङ्क्य परिहरन्ति—नन्वित्यादि । तत्तूक्तमिति । पूर्णत्वाद्यभङ्गसाधकं विरुद्धधर्माश्रयत्वं तु प्रागेव निर्णीतमित्यर्थः । ननु ब्रह्मणः पूर्णकामत्वेन कामलीलाप्रयो-

हरितोषिणी ।

सिद्धश्चेत् कदाचिदपि नाशो न स्यात् । तथा च मोक्षो न संभवतीति भावः । तथा चेति । अविद्याया इच्छाधीनत्वे च । तथा करणे । असज्जगत्करणे । हेत्वभाव इति । तथा च कारणं न पश्याम इति भावः । नटवत्कौतुकमेव कारणमस्त्वित्यत आहुः—इच्छादीनामिति । असंभव इति । त्वन्मत इच्छायाः पूर्वमसत्त्वेन कारणाभावादुपाधेरुत्पत्तिरेव न भविष्यतीत्यर्थः । इच्छाशक्तेरविद्याधीनत्वे दूषणमाहुः—आविद्यकत्वे इति । इच्छाया इति शेषः । श्रुतिविरोधश्चेति । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी'त्यादिश्रुतिविरोध इत्यर्थः ॥

(४१) अत्युच्चैवाशङ्कते—नन्विति । क्लेशादय इति । न वक्तुमुचिता इत्यनेनान्वयः । समाधानमाहुः—सत्यमिति । न त्वेवमिति । पूर्णत्वहानिर्न जायत इत्यर्थः । कुतो न जायत इत्यत आहुः—तत्तूक्तमिति । निरूपणेनेति । उक्तमिति पूर्वेणान्वयः । तथा

गङ्गाधरभट्टी ।

(४१) न वक्तुमुचिता इति । दुःखित्वापादकत्वादिति भावः । तस्मादनुकरणमेव वाच्यमिति हृदयम् । ननु 'सर्वकामः सर्वगन्ध' इत्याद्यनेकधर्मदर्शनेन धर्मिणो विशेषणम् । अतो बहुव्रीहिरेव, तत्कुतो रसरूपत्वं, तत्राहुः—'रसो वा' इति । अत एव 'कामिनां दर्शयन् दैन्य'मित्यत्र टिप्पण्यां 'रसात्मको रसवांश्च भगवा'निति कण्ठरवेणैवोक्तम् ।

अनुकरणमात्रत्वं लीलाया असङ्गतम् । तथा हि—भगवत्स्वरूपं हि श्रुत्येकसमधिगम्यम् । तत्र च 'सर्वकामः सर्वगन्धः सर्वरस' इत्यनेन सर्वकामरूपत्वं, तद्रूपत्वं च, सर्वरसरूपत्वं, तद्रूपत्वेन सर्वरसभोक्तृत्वं च प्रतिपाद्यते । तैत्तिरीयकेऽपि 'रसो वै सः' 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती'ति

सुवर्णसूत्रम् ।

जनाभावादुपपादनसापेक्षविप्रयोगादिकेशाङ्गीकारापेक्षया तदनपेक्षं कामलीलाया अनुकरणमात्रत्वमेव न्याय इत्यत आहुः—अनुकरणेत्यादि । कुतो न सङ्गतमित्याकाङ्क्षायां रसवत्त्वस्य बाधकस्य विद्यमानत्वात्तथेति वक्तुं रसवत्वं रसत्वं चोपपादयन्ति—तथा हीत्यादि । पूर्वश्रुतौ सर्वगन्ध इति मध्ये श्रावणाचेतनधर्मव्यवायाद्गुणविशेष एव तत्रोच्यते । तथा च बहुव्रीहिणा कामवत्त्वरसवत्त्वयोरेव सिद्धिर्न कामादिरूपत्वस्यापि, समासद्वयाङ्गीकारे च वाक्यभेदापत्तिरित्याशङ्कानिवृत्त्यर्थं द्वितीयश्रुतिमाहुः—तैत्तिरीयकेऽपीत्यादि । तथा चानया रसत्वे सिद्धे तस्य कामरूपत्वे पर्यवसानात् कामरूपत्वस्यापि सिद्धिरित्यर्थः । अत्र पूर्वश्रुतौ रसत्वमात्रश्रावणेन तत्स्वरूपसन्देहानपायात्तदर्थमग्रिमां श्रुतिमाहुः—रसमित्यादि । अत्रायमर्थः—'रसो वै स' इति श्रुत्या हि 'असद्वा इदमग्र आसी'दित्यादिनोपक्रान्तस्य ब्रह्मण एव रसत्वं बोध्यते । रसशब्दश्च रसनाग्राह्ये गुणे, द्रवद्रव्ये, सारभूतेऽर्थे, आस्वाद्यानन्दजनके च तत्र तत्र प्रसिद्धस्तेषु प्रकृते कोऽर्थो विवक्षित इत्याकाङ्क्षायां 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' 'को ह्येवान्यात् कः प्रा-

हरितोषिणी ।

चैतादृशनिरूपणेन विरुद्धधर्माश्रयत्वमुक्तमिति न पूर्णत्वभङ्ग इति भावः । लीलाया अनुकरणत्वं शङ्कायामुक्तम्, तत्खण्डयन्ति—अनुकरणेति । असङ्गतत्वमेवोपपादयन्ति—तथा हीत्यादिना । तद्रूपत्वेनेति । रसवत्त्वेन । प्रतिपाद्यत इति । तथा च श्रुतौ भगवत्स्वरूपं रसवत्त्वेन निरूपितमिति न लीलाया अनुकरणत्वं, किन्तु मुख्यत्वमेवेति भावः । ननु सर्वरस इत्यत्र बहुव्रीहिसमासे क्रियमाणे रसवत्वं सिद्ध्यति, न तु रसरूपत्वमित्यतः श्रुत्यन्तरमाहुः—तैत्तिरीयकेऽपीति । तथा च रसरूपत्वं ब्रह्मणः सिद्धम्, तेन च कामरूपत्वं च । ननु (?) श्रुत्या रसरूपत्वं सिद्धेऽपि तत्र सन्देहोद्भवात्तदर्थं पुरोवर्तिनीं तां श्रुतिमाहुः—रसमिति । अस्याः श्रुतेरग्रे श्रुतिः पठ्यते,—'को ह्येवान्यात्कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्' 'एष ह्येवानन्दयाती'ति, प्रकरणान्तरे 'स मानसीन आत्मा जनना'मिति च । तेन रसस्यानन्दत्वं, प्राणधारणहेतुत्वं, हृदयाकाशाधिकरणत्वमानन्दजनकत्वं चेति बोध्यम् । एवं च विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति'रिति भरतसूत्राद्रसशास्त्रप्रणाड्या जायमानो मनोविकारः प्रमोदात्मा, स रसात्मकभगवतः कार्यरूपः, 'एष ह्येवानन्दयाती'ति श्रुतेः । तथा तदंशभूतः । 'एतस्यैवा-

पठ्यते । रसेषु च शृङ्गाररसस्य मुख्यत्वात्तस्य च रत्याख्यस्थायिभावस्व-

सुवर्णसूत्रम् ।

ण्याद्यदेष आकाश आनन्दो न स्यात्' 'एष ह्येव आनन्दयाती'त्यनेन रसस्यान-न्दत्वं, प्राणधारणाप्रयोजकत्वं, हृदयाकाशस्थत्वमानन्दजनकत्वं च तत्सँवोच्यते । तेन हृद-यस्थप्राणितानन्दजनको य आनन्दः स रस इति सिद्ध्यति । तत्र यत्स्यानन्दोत्पत्तिरूपस्य कार्यस्य तत्तदवयवेष्वनुभूयमानत्वेनानन्दस्य सर्वशरीरव्यापित्वं, तथाप्युक्तश्रुत्या, 'स मान-सीन आत्मा जनाना'मिति श्रुत्यन्तरेण च मनस्येव तस्य विशेषतः स्थितिरिति निश्ची-यते । एवं सति रसशास्त्रप्रणाड्या जायमानो यो मानसो विकारः प्रमोदात्मा स रसा-त्मनो भगवत एव कार्यभूतः । 'एष ह्येवानन्दयाती'ति सावधारणश्रुतेः । तथा तदं-शभूतश्च, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः । अत एव च प्रकृष्यमाणे तस्मिन् रसत्वप्रतीतिर्लोकानां, तथा प्रयोगश्च महादिषु पुरुषपदप्रयोगवद् भाक्तः । न चैवं सत्यानन्दमात्रस्यैव तथात्वात् प्रणाड्यामेव कुतो विशेष इति शङ्क्यम् । रसस्वरूपस्यैव तथात्वात् । न च मानाभावः । लौकिकस्य प्रणाड्यभिव्यञ्जत्वे सिद्धे तद्दृ-ष्टान्तेनालौकिकेऽपि तथाऽनुमातुं शक्यत्वात् । अलौकिको रसः प्रणाडीविशेषाभिव्यञ्जः; रसत्वात् । लौकिकविप्रयोगादिरसवत् । कारणधर्माणामेव कार्येऽभिव्यक्तेः, सन्देहनिरासाच्च । न चानित्यत्वापत्तिः, ब्रह्मत्वादेव तन्निरासात् । अत एव न मनोविकारत्वमपि । नाप्यनेकरूपत्वं दोषाय, तस्य प्रणाडीकृतत्वेन वास्तविकरूपाबाधकत्वात् । 'अनन्तरूप'मिति श्रुत्या वास्तवि-कत्वाच्च । तेनेदं सिद्धम्—परं ब्रह्मैव रसशास्त्रोक्तप्रणाड्या हृद्याविर्भूतं सद्रस इति । तत्र

हरितोषिणी ।

नन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः । अधिकं तु सुवर्णसूत्राद्वगन्त-व्यम् । विस्तरभयाद्विरम्यते । एवं च प्रकृतेऽनुकरणे रसोत्पत्तिर्नास्तीति सूचयितुमादौ शृङ्गाररसरूपत्वमाहुः—रसेष्वित्यादिना । स्थायिभावेति । 'व्यक्तः स तैर्विभावाद्यैः

गङ्गाधरभट्टी ।

स्थायिभावरूपत्वादिति । पुष्टः स्थायी एव रस इति भावः । स च 'स मा-नसीन आत्मा जनाना'मिति श्रुत्या मनस्येवाऽऽविर्भवति । तत्र चिदंशो न्यग्भूत एव । आनन्दस्य तामसप्रधानत्वात् । अत एव प्रगल्भालक्षणे 'रतिप्रीतिरानन्दात्सम्मोह' इति । 'नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः'! शपामि यदि किञ्चिदपि स्मरामी'ति चोदाहृतम् । 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचक' इति श्रुतेश्च सदानन्दः कृष्ण इत्युच्यते । यद्यपि महानन्दे सत्ताया अपि न तादृग् भानं, तथाऽपि तस्याः सार्वत्रिकत्वादनुमानमस्त्येव । एवं चिदंशोऽपि न्यग्भूतस्तिष्ठत्येव, अन्यथाऽनुभवा-सम्भवात् ।

रूपत्वात्तद्रूपत्वं तद्वत्त्वं चावश्यं वाच्यम् । तत्र व्रजवरसुन्दरी(भावालम्बनवि)भावत्वेन तद्भावानुसारेणैव च सर्वकरणेनैवैतद्रसरूपत्वम् । एतच्च 'बर्हापीडे'ति 'अक्षण्वता'मिति च 'चूतप्रवाले'ति श्लोकविवरणे

सुवर्णसूत्रम् ।

चिदंशो न्यग्भूत एव । अत एव 'कृपिर्भूवाचक' इति श्रुतौ सदानन्दत्वमेवोक्तम् । न च भूशब्दस्य सत्तावाचकत्वात्सत्तानन्द इति भवति, न तु सदानन्द इतीति शङ्क्यम् । सत्ताया आत्मरूपत्वेन धर्मत्वाभावस्य व्याकरणमते सिद्धत्वात्, सत एव सिद्धेः । अतः परब्रह्मणः सदानन्दत्वेन प्रणाड्याऽऽविर्भूतेऽपि तथात्वमेव । नन्वस्त्वेवं तथाप्युक्तश्रुतौ मानसीनत्वसिद्धेरतिगुप्तस्य ब्रह्मणो रसत्वमुच्यते, तथा सति बहिराविर्भूतस्य भगवतोऽतिगुप्तत्वाभावेन रसत्वाभाव इति चेत्, मैवम्; यत्रेदं वर्णनेनोपबृंहितं, तत्र भगवान् न बहिः प्रकटः, किन्तु हृद्येवेत्युपपादितं 'बर्हापीडे'त्यस्य स्वतन्त्रे । यदाऽपि बहिस्तदाप्यासक्तिभ्रमन्यायेन मानसीन एवेति गुप्तत्वेन रसत्वस्याबाधात् । नन्वेवं सति वृत्तिविशेषरूपत्वान्न भगवानिति चेत्, न; लोके वृत्त्या ग्राह्यस्य देशकालपरिच्छिन्नत्वेन तत्र देशे तदभावेऽपि विरहादौ संस्कारप्राबल्यादिना वृत्तिनिर्गमाद् व्याप्तिः स्वीक्रियते, न तथा प्रकृते । देशकालापरिच्छिन्नत्वात् । किन्त्वनन्यभक्तिलभ्यत्वाद्यादृशी भक्तिस्तथा तत्राऽऽविर्भवति । सा च मनोधर्म इति तदभिव्यङ्ग्यत्वेन बहिराविर्भूतस्य मानसीनत्वेन वृत्तित्वाभावात् । मायावादिमते वृत्त्यवच्छिन्नविषयावच्छिन्नयोश्चैतन्ययोरेकलोलीभावे बहिष्ठस्य वृत्त्यवच्छिन्नत्वेऽपि वृत्तित्वाभाववत् । नन्वस्त्वेवं तथाऽपि प्रकृतानुरोधाच्छृङ्गारात्मकत्वमेवात्र वक्तव्यम्, तस्य च परस्परसाकाङ्क्षस्त्रीपुंव्यक्त्यात्मकालम्बनद्वयाधीनस्थितिकत्वादत्रापि तथात्वमङ्गीकर्तव्यम्, तच्च भगवतो रसत्वे विरुध्यते, एकालम्बनकत्वेन रसाभासत्वप्रसञ्जकत्वादिति चेत्, न; आलम्बनत्वस्यापि सत्त्वात् । 'कामिनां दर्शयन् दैन्य'मित्यस्य [1]टिप्पण्यां रसात्मको

हरितोषिणी ।

स्थायिभावो रसः स्मृत' इति काव्यप्रकाशोक्त्या तद्रूपत्वादित्यर्थः । वाच्यमिति । रसरूपत्वं रसवत्त्वं वाच्यमित्यर्थः । तत्र रसरूपत्वे वाच्ये । व्रजवरसुन्दरीति । व्रजवरसुन्दरीणां भावत्वेन रसानुकूलविकाररूपत्वेनेत्यर्थः । एतच्चेति । रसरूपत्वं व्रजनारीणामालम्बनत्वं

---

टिप्पणी ।

[*] आसक्तिभ्रमन्यायेनेति । वियोगव्यग्रो विप्रकृष्टमपीष्टजनं नीरन्ध्रध्यानमहिम्ना बहिः प्रत्यक्षीकरोतीत्यासक्तिभ्रमन्यायः ॥

[1] टिप्पण्यामिति । सप्तत्रिंशाध्यायीयटिप्पण्याम् । 'पूर्वमात्मारामत्वोक्त्या तादृशोऽपि सन्यन्नायिकाऽधीनत्वमेवं भजते, तेन रसात्मको रसवांश्च भगवानेव, अन्ये तु कामिनो रसाभासिनो मलपूर्णे वस्तुन्यासक्त्या बीभत्सरसपूर्णा भ्रान्ताः सन्तस्तादृशीष्वेव दैन्यमात्रं फलं लभन्त इति ज्ञाप्यत' इति पूर्णा पङ्क्तिः ॥

प्रपञ्चितं पितृचरणैरित्यत्र दिङ्मात्रं प्रदर्श्यते । भगवानपि तासु तादृशभाववानिति तद्वत्त्वं, भगवतस्तद्रूपत्वं च, भगवति भावानामपि स्वरूपातिरिक्तानामभावात् । अन्यथा श्रुत्युक्तं रसभोक्तृत्वं, रसरूपत्वं च भज्येत । एतस्य रसस्यैतादृशत्वादेव तथात्वं मन्तव्यम् । तथा च यावती तस्य रसस्य मर्यादा, तावती सर्वाऽपि भगवत्यस्तीति मन्तव्यम् । अन्यथा रसत्वव्याहतिरित्युक्तम् । न ह्यनुकरणे स्वस्मिन् स रस आपद्यते, तासां वा रसोत्पत्तिः । अन्योन्यमनाविर्भावे तद्रसत्वं तत्र ना-

सुवर्णसूत्रम् ।

रसवांश्च भगवानिति कण्ठरवेणोक्तत्वात् । अत्रापि तथाऽङ्गीकाराच्च । न च विरोधः । स्वप्रतिष्ठत्वस्य श्रौतत्वेन सर्वसंमतत्वात् । यथाऽन्येषां कामेन कामवत्त्वं, कामस्य तु स्वत एव, तथाऽन्येषां रसेन रसवत्त्वं, रसस्य तु स्वत इत्यस्यापि सुवचत्वाच्च तदप्रसक्तात् । तस्माद्बहिराविर्भूतस्यापि भगवतो रसत्वमबाधमेव । तदेतद्धृदि कृत्वा आहुः—रसेष्वित्यादि । मुख्यत्वात् भरतसूत्रादौ तस्यैव मुख्यत्वप्रतिपादनेन तथात्वात् । तद्वत्त्वमिति । उपदर्शितरीत्याऽऽलम्बनत्वम् । एतच्चेति । रसरूपत्वं तदालम्बनत्वं च । प्रपञ्चितमिति । प्रथमे उद्देशेनेतराभ्यां तद्विमर्शेन च विस्तार्योक्तम् । प्रतिज्ञातां दिशमाहुः—भगवानित्यादिना । उक्तस्यार्थस्य श्रुतावस्फुटत्वेन श्रुतार्थापत्तिसिद्धत्वमाहुः—अन्यथा श्रुत्युक्ते-

हरितोषिणी ।

चेत्यर्थः । भगवत आलम्बनत्वेनापि रसरूपत्वं रसवत्त्वं चाहुः—भगवानपि तासु तादृशेति । व्रजसुन्दरीनिरूपितविभावानुभाववानित्यर्थः । कुत एतदित्यत आहुः—भगवतीति । भावानामिति । व्रजनारीनिरूपितभावानामित्यर्थः । स्वरूपेति । भगवत्स्वरूपरसातिरिक्तेत्यर्थः । अत्रार्थापत्तिं प्रमाणमाहुः—अन्यथेति । भावानां रसरूपत्वाभावे । श्रुत्युक्तमिति । 'रसो वै सः' 'रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवती'ति श्रुत्युक्तमित्यर्थः । एतस्येति । भगवद्रूपरसस्येत्यर्थः । सिद्धमाहुः—तथा चेति । एतावता रसरूपत्वं रसत्वं चोक्तम्, अनुकरणे तु तदुभयमपि नास्तीत्याहुः—न हीति । कुतो नास्तीत्यत आहुः—अन्योऽन्येति । तथा चानुकरणे रसाविर्भाव एव नास्तीति रसशास्त्रोक्तसिद्धान्त इति

गङ्गाधरभट्टी ।

श्रुत्युक्तमिति । 'सर्वरस' इति 'रसो वै स' इति श्रुतिद्वयोक्तम् । एतादृशत्वादिति । संयोगविप्रयोगभेदेन द्विभेदत्वाद्विप्रयोगे च संयोगापेक्षयाऽभ्याधिक्यादभिव्यञ्जनाय प्रियाविप्रयोगतत्क्लेशादीनां सहनम् । वस्तुतस्तदानन्दरूपमिति लौकिकैरपि रसत्वसाधनायोपगतम्, कुतस्तराम् परमात्मविषये शङ्कापङ्ककलङ्कः । न ह्यनुकरण इति । किमिदं वाच्यम्, यतः सामान्यायामपि स रसो नेति रसिका अभियुक्ताः ॥

स्तीति यतस्तद्रसशास्त्रमर्यादा । अत एव गजदृष्टान्तः सर्वत्र 'आत्तगजेन्द्रलीलः' 'यथा मदच्युद्विरदः करेणुभिः', 'श्रान्तो गजीभिरिभराडिव भिन्नसेतु'रित्यादिः । अतः शृङ्गाररसरूपत्वेन प्रियाविप्रयोगे तत्कार्यैतत्संगमतत्कार्याः सर्वे एव संभवन्तीति न ब्रह्मत्वक्षतिः । वस्तुन एव तथात्वात् । प्रत्युत ब्रह्मत्वसाधका एव, विरुद्धसर्वधर्माधारत्वात् ॥

वस्तुतस्तु ब्रह्मगतधर्मेषु विरोध एव नास्ति, श्रुतिभक्तानुभवसिद्धत्वादित्युक्तम् । तदुक्तं श्रीभागवतेऽपि 'न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणदुरवग्रहवादिनां विवादानवसर' इति सर्वमनवद्यम् ॥

अथ कृत्वा चिन्तयोच्यते, यदि ब्रह्मलतयाऽऽत्मारामत्वादय एव

सुवर्णसूत्रम् ।

त्यारभ्योक्तमित्यन्तम् । एवं रसरूपत्वं तद्वत्त्वं च समर्थयित्वा तयोरनुकृतित्वबाधकतां व्युत्पादयन्ति—न हीत्यादि ॥

श्रुतिभक्तानुभवेति । श्रुतिश्च भक्तानुभवश्च ताभ्यामित्यर्थः । विरुद्धधर्माश्रयत्वमुपपादयन्ति—तदुक्तमित्यादि ॥

एवं लीलाया अनुकरणमात्रत्वदूषणप्रसङ्गेन भगवतो रसत्वं, तेन तद्वत्त्वं च स्वरीत्या स्थापयित्वा परोक्तमुपगम्यापि स्थापयन्ति—अथ कृत्वा चिन्तयेति । परारोपितमङ्गी-

हरितोषिणी ।

भावः । अत एवेति । अनुकरणाभावादेव । यथा गजेन्द्रलीलायामनुकरणत्वं नास्ति, तथात्राऽपि नास्तीति दृष्टान्तकथनादवगन्तव्यमिति भावः । अत इति । तथा च संयोगवियोगरूपशृङ्गाररसस्य कार्याणि सर्वाणि तत्र सन्तीति न ब्रह्मत्वक्षतिरिति भावः ॥

ननु मन्मते विरुद्धधर्माधारत्वं नास्तीत्यत आहुः—वस्तुतस्त्विति । श्रुतिभक्तेति । श्रुतिभक्तानुभवाभ्यां सिद्धत्वादित्यर्थः । प्रमाणान्तरमप्याहुः—तदुक्तमिति । माहात्म्येति । विवादानवसर इत्यनेनान्वयः । अर्वाचीनेति । अर्वाचीना आधुनिका ये तादृशा दुराग्रहवादिनस्तेषामित्यर्थः ॥

इदानीं परमतरीत्याऽपि ब्रह्मणि रसत्वं, रसवत्त्वं चास्तीति समर्थयितुमाहुः—अथेत्यादिति । अथेति । अनन्तरम् । कृत्या । परमतस्वीकारं कृत्वा । चिन्तया श्रुत्यर्थविचारेणोच्यते स्वमतसिद्धिरुच्यत इत्यर्थः । आत्मारामत्वादय इति । आदिपदात्पूर्णकामत्वादयः ।

गङ्गाधरभट्टी ।

कृत्या चिन्तयेति । परोक्तमभ्युपेत्यापि स्वेष्टसाधनचिन्तनम् ।

ब्रह्मणि, नान्ये धर्मा इति मनुषे, तदाऽपि वदामः—अस्तु त्वदुक्तम्, परन्तु सा ब्रह्मधर्ममर्यादा । अत्र च भक्तेष्वतिशयितानुग्रहेण तद्भक्त्यतिशयेन च स्वस्वरूपमर्यादामप्यतिक्रम्य तदधीनत्वं प्राप्तः सन् यथैव तदभीष्टं भवति तथैव लीलां कुर्वन्नुक्तसर्वभावान् स्वयमेव भजत इति भगवतः पुष्टिरूपमिदमुच्यते । तदुक्तं भगवता दुर्वाससं प्रति—'अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजे'त्युपक्रम्य 'वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथे'त्यन्तेन । अत्र सत्पदद्वयेन स्वस्य तेषु तथारूपत्वं तेषां च प्रपत्तिर्न माययेति ज्ञाप्यते । तथा सति तु सत्त्वं न स्यात् । न चानीशत्वप्रसङ्गः । एतस्यैव महदैश्वर्यरूपत्वात् । न ह्यन्यः स्वरूपमर्यादां त्यक्तुं समर्थः । अत एव 'भिन्नसेतु'रिति विशेषणम् । अत एवाचिन्त्यमहिमत्वं श्रुतिरप्याह—'यतो वाच' इत्यादिना । अतो यथा यथा शङ्कसे, तथा तथाऽधिकं ब्रह्मत्वमेवायातीति चिरञ्जीव ॥

(४२) यत्तु जीवादृष्टसम्पादितशरीरं भूतावेशन्यायेनेश्वर आविश्य

सुवर्णसूत्रम् ।

कृत्य स्वेष्टसाधनविचारः कृत्वा चिन्ता । तथारूपत्वमिति । पराधीनत्वम् ॥

(४२) एवं लीलाया अनुकरणमात्रताखण्डने, प्रसङ्गेन भगवतो रसरूपत्वं तद्धर्त्वं च समर्थितं, तदेतन्नैयायिका न मन्यन्ते इति तान् प्रतिवक्तुं तन्मतमाहुः—यत्त्वित्यादि ।

हरितोषिणी ।

नान्ये इति । शृङ्गाररसरूपत्वप्रयुक्ताः प्रियाविप्रयोगकार्याः प्रियासंयोगकार्या धर्मा न मनुषे इत्यर्थः । स्वीकारमाहुः—अस्त्वियति । सेति । आत्मारामत्वरूपा । अत्रेति । पुष्टिरूपत्वमुच्यत इत्यग्रेणान्वयः । स्वरूपेति । आत्मारामत्वमर्यादामित्यर्थः । उक्तसर्वेति । शृङ्गाररसप्रयुक्तेत्यर्थः । एतादृशपुष्टिरूपत्वे प्रमाणमाहुः—तदुक्तमिति । तथारूपत्वमिति । पराधीनत्वमित्यर्थः । प्रपत्तिरिति । शरणागतिरित्यर्थः । पराधीनत्वं शङ्कते—न चेति । न हीत्यर्थः । समाधानमाहुः—एतस्यैवेति । पराधीनत्वस्यैवेत्यर्थः ॥

(४२) शरीरं विनाऽनुकरणं न संभवतीति तदर्थं शरीरस्वीकरणमिति शरीरानुकरणयोर्वास्तविकत्वं नास्तीति नैयायिकमतं खण्डयितुमाहुः—यत्त्विति । आविश्येति । प्रवेश

गङ्गाधरभट्टी ।

महदैश्वर्येति । षष्ठीसमासः । कर्मधारये 'आन्महत' इत्यापत्तेः ॥

(४२) यत्त्विति । न्यायमतम् । अग्रे सावयवत्वेनानुमितं कार्यत्वं यस्य तत्क्षित्यादि, तत्पक्षकं कर्तृपूर्वकत्वं साध्यं यस्य (यस्य), तथा कार्यत्वं लिङ्गं यस्य, तादृशेनानुमानेनेत्यर्थः । तथा च प्रयोगः—क्षित्यादिकं कार्यं, सावयवत्वात् । क्षित्यादिकं कर्तृजन्यं, कार्यत्वात् । उभयत्रापि घटवदिति दृष्टान्तः ।

---

१ इतिशब्दः पतित इति प्रतिभाति ।

ईश्वरस्य शरीरं न स्वाभाविकमिति न्यायनयनिराकरणम्।

कार्यं कृत्वाऽऽवेशं त्यजति, न त्वीश्वरे *स्वाभाविकं शरीरादिकमस्ति, ज्ञानेच्छाप्रयत्नातिरिक्तविशेषधर्माभावादिति। तत्तूपेक्ष्यम्, ईश्वरस्याकर्तृत्वापादकत्वात्। तथा हि तन्मते हि सावयवत्वेनानुमितकार्यत्वक्षित्यादिपक्षककर्तृपूर्वकत्वसाध्यककार्यत्वलिङ्गकानुमानेन जगत्कर्तृत्वेनैवेश्वरसिद्धिः।

सुवर्णसूत्रम्।

तद्दूषयन्ति—तत्त्वित्यादि। ईश्वरस्येति स्वाभाविकशरीरराहित्येन जन्यशरीरमाविशतः तदुपपादयन्ति—तथा हीत्यादि। सावयवत्वेनानुमितेति। अत्र क्षित्यादिकं कार्यं; सावयवत्वात्; घटवत्; यन्नैवं, तन्नैवम्। आकाशवदिति प्रयोगो द्रष्टव्यः। क्षित्यादिपक्षकेत्यादि। क्षित्यादिकं कर्तृपूर्वकं, कार्यत्वात्, घटवत्। व्यतिरेके आकाशवदिति प्रयोगोऽत्र। नन्वनेन साध्यताऽवच्छेदकशरीरनिविष्टस्य कर्तुरेव सिद्धिर्नेश्वरस्येति शङ्कायान्तेन

हरितोषिणी।

वास्तविकं शरीरं नास्तीति सूचितम्। खण्डयन्ति—तत्तूपेक्ष्यमिति। अकर्तृत्वेति। शरीरं विना कर्तुं न शक्यत इति तवाप्यभिमतम्। तथा च तस्य जन्यशरीरस्वीकारे जगत्कर्तृत्वं तव मते न स्यादिति भावः। तदेवोपपादयन्ति—तथा हीत्यादिना। तन्मत इति। ईश्वरसिद्धिरित्यग्रेणान्वयः। सावयवत्वेनेति। सावयवत्वेनानुमितं कार्यत्वं यस्मिन्नेतादृशं यत्क्षित्यादीत्यर्थः। तथा च क्षित्यादिकं कार्यं, सावयवत्वात्, घटवदित्यनुमानेन प्रथमतः क्षित्यादौ कार्यत्वरूपहेतुनिश्चयो जातः। तदनन्तरं क्षित्यादिकं कर्तृपूर्वकं, कार्यत्वात्, घटवदित्यनुमानेन पृथिव्यादौ कर्तृपूर्वकत्वसिद्धौ सत्यां जगत्कर्तृत्वेनेश्वरसिद्धिरित्यर्थः। अत्र प्रथमानुमानं क्षित्यादौ कार्यत्वरूपहेतुनिश्चयार्थम्। यथा पर्वते धूमनिश्चयं विना वह्न्यनुमितिर्न जायत इति कृत्वा धूमरूपहेतुनिश्चयापेक्षा, तथाऽत्रापि कार्यत्वरूपहेतुनिश्चयेन कर्तृपूर्वकत्वसिद्धिरित्याखण्डलार्थः। अत्राधिकं तु विस्तरभयाद्विरम्यते। नन्वत्र कर्तृपूर्वकत्वरूपसाध्यसिद्धौ सत्यां साध्यताऽवच्छेदककोटिप्रविष्टकर्तुरेव सिद्धिर्नेश्व-

---

टिप्पणी।

* स्वाभाविकमिति। स्वाभाविकमित्यस्य स्वादृष्टोद्भवमित्यर्थः। स्वस्य भावः स्वभाव इति व्युत्पत्त्याऽदृष्टादीनामेव स्वभावत्वात्। तद्गतधर्मस्यैवान्यत्र भावपदबोध्यत्वात्। तथा चेश्वरो न शरीरी; शरीरोत्पादकधर्माद्यभावादित्यनुमानम्। तत्र धर्माद्यभावसाधनार्थं ज्ञानेच्छाप्रयत्नातिरिक्तविशेषधर्माभावादिति हेतुः। धर्मादीनां च विशेषधर्मापरपर्यायत्वेनाभिमतं विशेषगुणत्वमस्त्येवेति नाप्रयोजकत्वशङ्काऽपीति प्राभञ्जनः॥

**कर्ता चोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमानेव लोके दृष्ट इति द्व्यणुकादिनगसागरान्तस्य च पक्षीकरणेन तत्कर्तृत्वेन सिद्ध्यँस्तदुपादानगोचरापरोक्षज्ञानादिमान् नित्यः सर्वज्ञ एव भवतीति तादृक् तत्सि-**

सुवर्णसूत्रम् ।

तं साधयति कर्ता चेत्यादि । द्व्यणुकादिनगसागरान्तक्षित्यादिचतुष्टयकर्ता तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमान्, कर्तृत्वात्, यो यत्कर्ता स तदुपादानगोचरापरोक्षज्ञानादिमान्, घटकर्तृकुलालवत् । यन्नैवं तन्नैवम्, घटाद्यकर्त्रस्मदादिवदित्यनुमाने दृष्टान्तभूतकर्ता लोक एतादृश एव दृष्ट इति तादृशपक्षकरणे तत्कर्तृत्वेनानुमानात्सिध्यन्पक्षतावच्छेदकशरीरनिविष्टद्व्यणुकाद्युपादानभूतपरमाण्वादिगोचरापरोक्षज्ञानादिमान् सेत्स्यति । तत्सादृशज्ञानवान् नित्यः; आत्मत्वात् । अस्मदाद्यात्मवत् । सर्वज्ञः; सर्वकर्तृत्वात् । यो यत्कर्ता, स तत्सम्बन्धिसर्वतदुपकरणादिविषयकज्ञानवान्, घटादिकर्तृवत् । यन्नैवं तन्नैवं, तदकर्त्रस्मदादिवदित्यनुमानाभ्यां नित्यसर्वज्ञ एव युक्तो भवतीति धर्मत्रयविशिष्टेश्वरसिद्धि-

हरितोषिणी ।

रस्येत्यत आहुः—कर्ता चेति । उपादानं समवायिकारणं, तद्विषयकं यदपरोक्षज्ञानं प्रत्यक्षात्मकं, तद्विषयिणी या चिकीर्षा कर्तुमिच्छा, तद्विषयिणी या कृतिस्तद्वानित्यर्थः । द्व्यणुकादीति । क्षित्यादिचतुष्टयस्येति शेषः । कर्तृत्वेन सिद्ध्यन् द्व्यणुकादिसागरान्तकर्तृत्वेनानुमानात्सिद्ध्यन् । तादृगिति । उपादानादिज्ञानादिमत्त्वनित्यत्वसर्वज्ञत्वविशिष्टेश्वरसिद्धिरित्यर्थः । अनुमानं तु द्व्यणुकादिनगसागरान्तक्षित्यादिचतुष्टयकर्ता क्षित्याद्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमान्, कर्तृत्वात् । यो यत्कर्ता, स तदुपादानगोचरापरोक्षज्ञानादिमान् । अत्रान्वयदृष्टान्तः—घटकर्तृकुलालवत् । यन्नैवं तन्नैवं, घटाकर्त्रस्मदादिवत् । एतादृशानुमाने दृष्टान्तभूतः कर्ता लोक एतादृश एव दृष्ट इति तादृशपक्षकरणे तत्कर्तृत्वेनानुमानात्सिद्ध्यन् पक्षताऽवच्छेदकशरीरनिविष्टद्व्यणुकाद्युपादानभूतपरमाण्वादिगोचरापरोक्षज्ञानादिमान् सेत्स्यति । तदनन्तरं तादृशज्ञानवान्नित्यः; आत्मत्वात् । अस्मदाद्यात्मवत् । तादृशज्ञानवान् सर्वज्ञः; सर्वकर्तृत्वात् । यो यत्कर्ता, स तत्सम्बन्धितदुपकरणादिसर्वविषयकज्ञानवान् । घटादिकर्तृवत् । यन्नैवं तन्नैवं, तदकर्त्रस्मदादिवदित्यनुमानाभ्यां नित्यः सर्वज्ञ एव युक्तो भवतीति धर्मत्रयविशिष्टेश्वरसिद्धिरित्याखण्डलार्थः । एवं

गङ्गाधरभट्टी ।

दृष्ट इति । कुलालो दृष्टः । ( दृष्टान्तः ) । घटे कार्ये मृत्पोपादानविषयकापरोक्षज्ञानेच्छायत्नानां तत्र दृष्टत्वात् । सागरान्तपदेन जीवस्य तत्र कर्तृत्वं न सम्भवतीति सूचितम् । नित्य इति । तस्य तु न जन्यत्वम् । कर्त्रन्तरापेक्षणेऽनवस्थानात् । एवमेव तज् ज्ञानादीनामपि नित्यत्वमूह्यम् ॥

द्धिः । तथा च यथा लोके ज्ञानादिमत एव कर्तृत्वं दृष्टमितीश्वरेऽपि ज्ञानादिसिद्धिरेवं शरीरिण एव लोके कर्तृत्वं दृष्टमितीश्वरेऽपि शरीरित्वसिद्धिर्निष्प्रत्यूहा । कर्तृत्वस्य शरीरित्वव्याप्यत्वात् ॥

नन्वेवं कार्यत्वेनानित्यत्वानुमाने घटादिषु रूपसाहचर्यं लिङ्गस्य दृष्ट-

सुवर्णसूत्रम् ।

रित्यर्थः । नन्वेवं कर्तृत्वसिद्धौ कथमकर्तृत्वापत्तिरित्यत आहुः—तथा चेत्यादि । लोकदृष्टान्तेन साधने ईश्वरः शरीरी, कर्तृत्वात्, लौकिककर्तृवत् । यन्नैवं तन्नैवं, परममुक्तवदित्यनुमानात्सशरीरस्य कर्तृत्वे सिद्धे सर्गाद्यकालीनद्व्यणुकारंभकपरमाणुद्वयसंयोगजनकं कर्म शरीरजन्यं, चेतनकर्मत्वात्, अस्मदादिशरीरजन्यक्रियावदित्यनुमानात्त्वया जीवादृष्टजन्यशरीरे भूतावेशवदावेशाङ्गीकारेणानुमतत्वात्त्वेश्वरे शरीरित्वसिद्धिर्वादिप्रतिवादिनोः समत्वान्निष्प्रत्यूहा । तच्छरीरस्य नित्यत्व एव परं विवादः । तत्र च तच्छरीरं नित्यं, सर्गाद्यकालीनद्व्यणुकारम्भपूर्वकालीनद्रव्यत्वात्, परमाण्वादिवत् । यन्नैवं । तन्नैवम्, अस्मदादिशरीरवदित्यनुमानेन नित्यस्यैव शरीरस्य सिद्धेस्त्वदभिमतशरीरस्य तत्र भूतावेशन्यायक्रप्रवेशस्य चासिद्ध्याऽशरीरस्याऽकर्तृत्वापत्तिरपि निराबाधेत्यर्थः ॥

एवं दूषिते स्वोक्ते तत्समर्थनाय नित्यशरीरं प्रत्याख्यातुं प्रयतते—नन्वेवमित्यादि । अयमर्थः—ईश्वरे यच्छरीरं साध्यते तच्छरीरं किमीश्वराद्भिन्नमभिन्नं वा? नान्त्यः । आत्माभिन्नस्यापि तस्यासिद्धत्वात् । अतो भिन्नं नित्यं नित्यसंबद्धं चाङ्गीकार्यम् । तथा सति यथा कार्यत्वेन कर्तृपूर्वकत्वसाधनं कुर्वतश्चेतनकार्यत्वे शरीरजन्यत्वसाहचर्यस्य भूयोदर्शनेन शरीरजन्यत्वविशिष्टकार्यत्वस्य व्याप्यत्वात् साध्यतावच्छेदकशरीरनिविष्टे कर्तरीश्वरे तादृशशरीरसिद्धिस्तदसिद्धौ च कर्तृत्वासिद्धिः, एवं वायुरनित्यः; कार्यत्वाद्, घटवदित्यनुमानेऽपि लिङ्गस्य तथात्वेन तथा स्यात् । तथा च विशिष्टस्य व्याप्यत्वे अनिष्टापत्तिः, केवलस्य

हरितोषिणी ।

चेश्वरे शरीरसिद्धिरित्याहुः—तथा चेति । लोकदृष्टान्तेन सर्वज्ञत्वसाधने । कर्तृत्वस्येति । ईश्वरः शरीरी, कर्तृत्वात् लौकिककर्तृवत् यन्नैवम् तन्नैवम् परममुक्तवदित्यनुमानाच्छरीरस्य कर्तृत्वे सिद्धे सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म शरीरजन्यं, चेतनकर्मत्वात् । अस्मदादिशरीरजन्यक्रियावदित्यनुमानाच्छरीरसिद्धिर्निष्प्रत्यूहेत्यर्थः ॥

शरीरस्यानित्यत्वमाशङ्कते—नन्वेवमिति । एवं साहचर्येणेश्वरशरीरसाधने । अत्र दोषमाहुः—कार्यत्वेनेति । वायुरनित्यः कार्यत्वाद् घटवदित्यनुमान इत्यर्थः । लिङ्गस्य दृष्ट-

गङ्गाधरभट्टी ।

लिङ्गस्य दृष्टमिति । कार्यत्वस्य रूपसाहचर्यं दृष्टम् ।

मिति तद्विशिष्टस्यैव तस्य व्याप्यत्वे रूपाभाववति वायौ तदसिद्धिस्तत्सिद्धौ वा रूपस्यापि सिद्धिः स्यात्। न त्वेवम्, प्रत्यक्षबाधात्॥

ननु साहचर्यमात्रमप्रयोजकं, व्याप्तिरेव प्रयोजिका, सा च कार्यत्वा-

सुवर्णसूत्रम्।

व्याप्यत्वे च शरीरस्यासिद्धिरित्युभयथाऽपि तव मतमसङ्गतमित्यर्थः। तत्र समादधते—नन्वेवमित्यादि। तथा च सर्वत्र विशिष्टस्य व्याप्यत्वेन केवलस्यापि न, किन्तु यत्र यथा प्रमाणसिद्धं तत्र तथाऽङ्गीकार्यम्, तथा सति न कोऽपि दोष इत्यर्थः॥

हरितोषिणी।

मिति। यत्र यत्र रूपं तत्र तत्र कार्यत्वं दृष्टमित्यर्थः। तद्विशिष्टस्य रूपविशिष्टस्य। तस्य। कार्यत्वस्य। व्याप्यत्वे। अनित्यत्वव्याप्यत्वे। तदसिद्धिरनित्यत्वासिद्धिः। केवलकार्यत्वस्य व्याप्यत्वमुच्यते चेत् तत्राह—तत्सिद्धाविति। वायावनित्यत्वव्याप्यकार्यत्वस्य सत्त्वादनित्यत्वसिद्धौ सत्यां रूपसाहचर्यस्य कार्यत्वे सत्त्वात्कार्यत्ववति वायौ रूपस्यापि सिद्धिः स्यादित्यर्थः। एवं प्रकृते घटः कर्तृपूर्वकः, कार्यत्वादित्यत्र यत्र यत्र कार्यत्वं तत्र तत्र जन्यशरीरजन्यत्वम्। यथा पटे। उभयोः साहचर्यं भूयोदृष्टमिति तत्र शरीरजन्यत्वविशिष्टकार्यत्वे कर्तृपूर्वकत्वव्याप्यत्वं यदा स्वीक्रियते, तदा साध्यताऽवच्छेदके कर्तरीश्वरे जन्यशरीरसिद्धिः। यदा केवलकार्यत्वे कर्तृपूर्वकत्वव्याप्यत्वं स्वीक्रियते, तदा शरीरसिद्धिर्नास्तीत्युच्यते चेत्तदा कर्तृत्वसिद्धिरपि न स्यात्। कुतः? कार्यत्वस्य शरीरविशिष्टकर्तृजन्यत्वनियमात्। तस्मात्कर्तरीश्वरे जन्यशरीरसिद्धिः। एवं च जन्यत्वविशिष्टशरीरविशिष्टव्याप्यत्वे जन्यत्वसिद्ध्या मदुदनिष्टमापद्येत, केवलकर्तृत्वव्याप्यत्वे शरीरासिद्धिः स्यादिति भावः। तत्र समाधिमाहुः—न त्वेवमिति। तथा च यत्र यत्र यथा यथोपयोगस्तत्र विशिष्टस्य केवलस्य च व्याप्यत्वमङ्गीकार्यमिति न दोषः॥

वादी पुनः शङ्कते—नन्विति अप्रयोजकमिति। अनुमानविधया साध्यसिद्धावप्रयोजकम्। अत एवोक्तं चिन्तामणिकारैः—'शतशः सहचरितयोरतिव्यभिचारोपलम्भेश्च। पार्थिवत्वं, लोहलेख्यत्वादित्यादौ हीरकादौ तथा दर्शनात्। तत्र पार्थिवत्वमस्ति, लोहलेख्यत्वं नास्ती'ति। तर्हि किं प्रयोजकमित्यत आह—व्याप्तिरेवेति। वायुरनित्यः, कार्यत्वादित्यादौ कार्यत्वरूपहेतौ साध्याभाववदवृत्तित्वरूपा प्राचीनमतरीत्या, हेतुव्यापकसाध्यसा-

गङ्गाधरभट्टी।

तद्विशिष्टस्यैवेति। रूपविशिष्टस्यैव हेतोः। तदसिद्धिः। अनित्यत्वासिद्धिः। सिद्धिः स्यादिति। वायू रूपवान्, कार्यत्वाद् घटवदिति दृष्टान्तात्। न च कार्यत्वं रूपाद्यव्याप्ति, न तु रूपवत्त्वमिति व्यभिचारः। द्रव्यत्वे सतीति विशेषणीयत्वात्॥

नित्यत्वयोरेवेति वायावपि तत्सिद्धौ रूपासिद्धिश्चेति चेत्, तर्हि प्रकृतेऽपि कर्तृत्वप्रयोजकं ज्ञानेच्छाप्रयत्नवत्त्वमेवेति शरीरित्वस्य तत्साहचर्यंवत्त्वमतो नेश्वरे तत्सिद्धिः। अन्यथा दृष्टान्तीयाशेषधर्मापत्तिः पक्षे स्यात्। तथा च घटदृष्टान्तेन जलेऽनित्यत्वसाधने पृथिवीत्वादिकमपि सिद्ध्येत्॥

किञ्च चेष्टां विना प्रयत्नमात्रेण कुलालादेर्घटादिकरणे सामर्थ्याभावाच्चेष्टाश्रयस्य शरीरस्य सहकारित्वमस्तु नाम, ईश्वरस्तु प्रयत्नमात्रेणैव

सुवर्णसूत्रम्।

एतमपि विभज्य व्याप्यत्वपक्षमनूद्य पुनः स्वेष्टं साधयति—नन्वित्यादि। तर्हीत्यादि च। ननु प्रमाणान्तरेणाबाधितत्वात्कथं न प्रयोजकत्वमत आह—अन्यथेत्यादि। प्रयोजकत्वं कुतोऽवगतं, प्रत्यक्षाद् अनुमानाद्वा? नाद्यः। ईश्वरस्याप्रत्यक्षत्वात्। द्वितीये तु दृष्टान्त एव दृष्टत्वात्तद्धर्मत्वमेव, न तु पक्षधर्मत्वम्। तथा सति जलपक्षकानुमाने पुनरनिष्टापत्तिरित्यर्थः॥

ननु जलपक्षकानुमाने पृथिवीत्वादिकं नानित्यत्वप्रयोजकम्, परमाणुष्वपि सत्त्वात्, प्रकृतानुमाने तु ज्ञानेच्छाप्रयत्नानामेव कर्तृत्वप्रयोजकत्वाङ्गीकारे चेष्टां विनाऽपि कुलालादेः कर्तृत्वप्रसङ्ग इति क्रियाऽऽवश्यकी; सा च शरीरनिष्ठेति तदाधारस्य शरीरस्य प्रयोजकत्वमवर्जनीयमित्यत आह—किञ्च चेष्टामित्यादि। ननु प्रयत्नमात्रेण सर्वकरणसामर्थ्यम-

हरितोषिणी।

मानाधिकरण्यरूपा नवीनमतरीत्या वाऽनित्यत्वरूपिता कार्यत्वरूपहेतौ व्याप्तिरस्तीति वायावनित्यत्वसिद्धिः। अतः कारणादीश्वरः शरीरी, कर्तृत्वादित्यादौ शरीरित्वनिरूपिता व्याप्तिः कर्तृत्वरूपहेतावस्तीति कर्तृत्वरूपहेतुनेश्वरे शरीररूप शरीरित्वसिद्धिरित्यर्थः। प्रकृतेपीति। वायौ यथा साहचर्यं प्रयोजकं न भवत्येवं प्रकृत ईश्वरेऽपि कर्तृत्वप्रयोजकं शरीरसाहचर्यं न भवति, किन्तु ज्ञानादिकमेवेत्यर्थः। एतदेवाहुः—शरीरित्वस्येति। तत्सिद्धिः। शरीरसिद्धिः। यथा घटादिकर्तरि शरीरसिद्धिरेवं द्व्यणुकादिसागरान्तकर्तरि तत्सिद्धिर्भविष्यतीत्यत आहुः—अन्यथेति। एवंरीत्या तत्सिद्धिस्वीकरणे। तथा चेति। जलमनित्यं, कार्यत्वाद् घटवदित्यादावित्यर्थः॥

ननु कुलालस्य चेष्टां विना कर्तृत्वं न संभवतीति तस्या आवश्यकत्वम्, सा चाश्रयीभूतशरीरं विना न संभवतीत्येवंरीत्येश्वरेऽपि शरीरसिद्धिरित्यत आह—किञ्चेति। ननु

गङ्गाधरभट्टी।

तत्सिद्धीति। द्वलोपे दीर्घः। अनित्यत्वसिद्धिरित्यर्थः॥ ननु कुलालस्य ज्ञानादिमतोऽपि चेष्टाभावे कार्यादर्शनाच्चेष्टावत्त्वमपि कर्तृत्वप्रयोजकम्। तथा च शरीरस्यैव कर्तृत्वसिद्धम्। 'शरीरपरिस्पन्दश्चेष्टे'तिलक्षणात्। अत आहुः—किञ्चेति। ननु कुलालदृष्टान्तेन चेष्टां विना सामर्थ्याभाव ईश्वरेऽपि कल्पनामत आहुः पुनः—

सर्वकरणसमर्थ इति न तदपेक्षा । किञ्च शरीरस्य परिच्छिन्नत्वनियमेन युगपत्सकलदेशगतकार्यानुत्पत्तिप्रसंग इति चेत्, नैतत्साधीयः । ज्ञानादिमत्त्वस्येव शरीरित्वस्याप्यन्वयव्यतिरेकसिद्धत्वात् । तथाहि—यत्र कुलालादिषु कर्तृत्वं, तत्र शरीरित्वम् । यत्र च मुक्तात्मस्वशरीरित्वं, न तत्र कर्तृत्वम् । अत ईश्वरस्यापि कर्तृत्वाच्छरीरित्वमवश्यमङ्गीकर्तव्यम् । लोके तथा दर्शनात् । अन्यथेच्छादिकमपि न सिध्येत्, अविशेषात् ।

सुवर्णसूत्रम् ।

त्यन्तापरिदृष्टं कल्पनीयं, नित्यत्वं तु परमाणुप्रभृतिषु दृष्टमिति परममहत्यपि शरीरे संभवतीति नित्यशरीराङ्गीकरणमेव ज्याय इत्यत आह—किञ्च शरीरस्येत्यादि । ईश्वरशरीरं परिच्छिन्नं, शरीरत्वादस्मदादिशरीरवदित्यनुमानेन परिच्छेदापत्त्यैवमेवानित्यत्वापत्त्या च तथेत्यर्थः । तस्मादशरीर एवेश्वरः कर्तेति प्राप्ते दूषयन्ति—नैतदित्यादि । अत इति । भूयः साहचर्यात् । तथा च लोकरीत्या विचारकस्य तव तदावश्यकमित्यर्थः । ननु लोके तथा दर्शनेऽपि पक्षे दृष्टान्तीयाशेषधर्मापत्त्या साहचर्यमात्रस्याप्रयोजकत्वात्तन्न युक्तमित्यत आहुः—अन्यथेत्यादि । व्याप्तिबलसिद्धस्यानङ्गीकारे । अयमर्थः—साहचर्यमात्रेत्यत्र मात्रपदं किं यावत्तत्परमुत भूयोदृष्टत्वपरम्? अन्त्ये, त्वोमिति ब्रूमः । लोहलेख्या पृथिवीत्वादित्यादौ भूयःसाहचर्यस्याप्यप्रयोजकत्वदर्शनात्, पूर्वोक्तदोषाच्च । आद्ये तु, व्याप्तेरप्यप्रयोजकत्वापत्त्याऽनुमानस्यैवोच्छेदादिच्छादेरप्यसिद्धेस्त्वन्मतस्याप्यसिद्धिरित्यर्थः । ननु न मन्मतासिद्धिः शरीरकर्तृत्वादित्यनुमानस्य अशरीरो महासमर्थत्वादित्यनेन सत्प्रतिपक्षत्वात् । तस्य च 'चेष्टां विने'त्यादिना प्रागेव सूचितत्वात् । न चात्यन्तापरिदृष्टकल्पनं दोषः । आस्तिकवादिनामीश्वरस्यावश्यकत्वेनान्यथाऽनुपपत्तिसिद्धत्वादिति शङ्कायामाहुः—

हरितोषिणी ।

प्रयत्नमात्रेणात्यन्तापरिदृष्टसर्वकरणसामर्थ्यकल्पनापेक्षया परमाणुषु दृष्टं नित्यत्वमिति नित्यशरीरकल्पनं लघीय इत्यत आह परिहर्तुं—किञ्चेति । नियमेनेति । ईश्वरशरीरं परिच्छिन्नं, शरीरत्वात्, अस्मदादिशरीरवदित्यनुमानेनेश्वरशरीरेऽपि परिच्छिन्नत्वमित्यर्थः । एवंरीत्या नैयायिकमनुपपाद्य खण्डयति—नैतत्साधीय इति । ज्ञानादीति । ईश्वर इतिशेषः । अन्वयव्यतिरेकमेवाहुः—तथा हीत्यादिना । लोकेति । तव मते लौकिकरीतेर्मुख्यत्वादिति भावः । नन्वलौकिकस्थले लौकिकरीतेः प्रयोजनाभावात्प्रयत्नमात्रेण सर्वं कर्तुं शक्यत इत्युक्तमेवेत्यत आहुः—अन्यथेति । व्याप्तिबलसिद्धशरीरस्यानङ्गीकारे । अविशेषादिति । यथा प्रयत्ने सति शरीरापेक्षा नास्ति तथेच्छापेक्षाऽपि नास्तीत्यविशेषइत्यर्थः ॥

गङ्गाधरभट्टी ।

किञ्चेति । नियमेनेति । ईश्वरशरीरं परिच्छिन्नम्; अस्मदादिशरीरवदिति दृष्टान्तेनानुमानेनेत्यर्थः । अन्यथेति । लोकदृष्टान्तानङ्गीकारे ।

अथ चेष्टां विनाऽपि प्रयत्नमात्रेण कार्यकरणे समर्थत्वादीश्वरस्य न तदाश्रयतत्सिद्धिरिति ब्रूषे, तदेच्छाप्रयत्नौ विनापि ज्ञानमात्रेणैव तथाकरणसमर्थत्वादीश्वरस्य नेच्छादिमत्त्वमपीत्यपि सुवचम् । न च शरीरस्य परिच्छिन्नत्वेनोक्तदोषापत्तिरिति वाच्यम् । अन्यथाऽनुपपत्तिबलात् सिद्ध्यच्छरीरं यावताऽनुपपत्तिपरिहारस्तावद्रूपमेव सेत्स्यति । शरीरपरिच्छेदानित्यत्वनियमस्त्वनुपपन्नः । पक्षधर्मताबलादपरिच्छिन्ननित्यस्यैव

## सुवर्णसूत्रम् ।

अथेत्यादि । तथा च तादृक्सामर्थ्याङ्गीकारेऽपि तद्दोषतादवस्थ्यमित्यर्थः । ननु शरीराङ्गीकारेऽपि दोषतादवस्थ्यं, चेष्टाश्रयत्वेनाङ्गीक्रियमाणे तस्मिन् व्यापकत्वस्य महाकार्यकर्तृत्वेनाणुत्वस्य च वक्तुमशक्यतया मध्यमपरिमाणकस्यैव तस्य सिद्धावनित्यत्वापत्तेर्युगपत्सकलकार्यानुत्पत्तिप्रसङ्गस्य च दुर्वारत्वादित्यत आहुः—न चेत्यादि । यादृशेन यावदात्मकेन यावत्परिमाणकेन युगपत्सकलकार्यानुत्पत्तिपरिहारस्तावद्रूपं तादृशं तदात्मकं तावत्परिमाणं तत्पूर्ववर्त्ति नित्यं तदुत्पादनानुकूलक्रियाशालि च सेत्स्यति । तथा चान्यथानुपपत्तिबलात्सर्वकरणसामर्थ्यं यथा त्वयाङ्गीक्रियते, तथाऽत्राप्यनुसन्धेयं, युक्तेस्तुल्यत्वादित्यर्थः । ननु मन्मते सामर्थ्यस्य तथाऽङ्गीकारेऽपि न कस्यापि नियमस्य भङ्गस्तव तु शरीरपरिच्छेदानित्यत्वादिनियमभङ्ग इत्यत आहुः—शरीरेत्यादि । पक्षधर्मताबलादिति ।

## हरितोषिणी ।

अत्राशङ्कते—अथेति । ईश्वरस्येति । समर्थत्वात्तत्सिद्धिरित्युभयत्रापि देहलीदीपन्यायेनान्वयः । तदाश्रयेति । चेष्टाश्रयेत्यर्थः । तत्सिद्धिरिति । शरीरसिद्धिरित्यर्थः । समाधानमाहुः—ब्रूषे इति । सुवचमिति । यथा यत्नसत्त्वे शरीराद्यपेक्षा नास्ति तथा ज्ञानसत्त्वे कस्याप्यपेक्षा नास्तीति वक्तुमशक्यतयेच्छादीनां यथा सिद्धिस्तथा शरीरस्यापि सिद्धिरिति भावः । शङ्कते—न चेति । उक्तदोषेति । युगपत्सकलदेशगतकार्यानुत्पत्तिरूपदोषापत्तिरित्यर्थः । समाधानमाहुः—अन्यथेति । 'अन्यथाऽनुपपत्तिः सर्वतो बलवती'ति वचनात्तद्बलेन शरीरं सिद्धं जातं चेत्तादृशशरीरे तद्बलेन युगपत्सकलकार्योत्पादनानुकूलव्यापारवत्त्वं नित्यत्वं परममहत्परिमाणवत्त्वं च स्वीकर्तव्यमिति भावः । ननु यत्र यत्र शरीरत्वं तत्र तत्रानित्यत्वं परिच्छिन्नत्वमिति नियमभङ्ग इत्यत आहुः—शरीरेति । पक्षधर्मतेति । पक्षो जगत्कर्ता, तस्य धर्मः कर्तृत्वं तत्ता जगदुत्पादनानुकूलक्रियावत्त्वं

## गङ्गाधरभट्टी ।

तावद्रूपमेवेति । युगपत्सकलदेशगतकार्यसम्पादनक्षममेवेत्यर्थः । अनित्यत्वेति । शरीरमनित्यं, शरीरत्वादस्मदीयशरीरवदिति दृष्टान्त इत्यर्थः । अनुपपन्न इति । उक्तानुमाने भौतिकत्वादृष्टजन्यत्वादेरुपाधित्वात् ।

सिद्धेः । वस्तुतस्तु परिच्छेदानित्यत्वाद्यनुपपत्त्युद्भावनस्य शरीरसिद्ध्य-सिद्धिव्याहतत्वेनासंभव एव । अन्यथा ज्ञानस्याप्यनित्यत्वनियमेनेश्वर-ज्ञानस्याप्यनित्यत्वप्रसङ्गः ॥

सुवर्णसूत्रम् ।

द्व्यणुकादिनगसागरान्तं, तत्कर्ता वा यथायथं पक्षः, तद्धर्मस्तावत्त्वं तत्कर्तृत्वं च तत्ता, तावद्व्यासज्यवृत्तित्वं तावदुत्पादनानुकूलक्रियाशालित्वं च तदेतत्तदैव संगच्छते, यदा तच्छरीरं तावत्कार्यदेशव्यापि तावत्पूर्ववर्ति च भवति, नान्यथेति तावद्व्यासज्यवृत्तित्वता-यदुत्पादनक्षमक्रियावत्त्वयोः स्वरूपसामर्थ्याच्चथेति स नियमस्त्वानित्यशरीरवादिनोऽपि मतेऽनुपपन्न इत्यर्थः । नन्वेवमन्यधर्मेणान्यधर्मसाधने घटोऽनित्यः, कुलालजन्यत्वाद् घटा-न्तरवदित्यादौ पक्षधर्मभूतघटत्वादेर्नित्यत्वव्यापकत्वादिचलनात् कुलालादिशरीरस्यापि तथा-त्वसिद्धिरित्यप्रयोजकमिदं साधनम् । तथा व्यधिकरणधर्मसाधने तद्बलस्य प्रयोजकता चेत्, सुतरां समानाधिकरणेऽपि स्यात्, तथा सति घटादीनामपि तथात्वप्रसङ्गः । यदि द्व्यणुकयोजनं सामर्थ्यबलेनाशरीरः कुर्यात्, पश्चात् किमिति प्रविशेत्, प्रविशन् वाऽस-मर्थः कथं न स्यादित्यादितर्केण पक्षनित्यत्वापत्त्येश्वरस्याप्यसिद्धिरिति महानेवानय इत्यत आहुः—वस्तुत इत्यादि । अशरीरकर्तृवादिमतेऽसिद्धिव्याहतं, सशरीरकर्तृवादिमते अन्य-थानुपपत्तियत्नासिद्धशरीरसर्वानुपपत्तिपरिहारपूर्वकं सच्चिदानन्दात्मकमीश्वराभिन्नमेव सिद्धमिति सिद्धिव्याहतमतस्तथेत्यर्थः । ननु तर्हि नियमभङ्गस्य का गतिरिति चेत्तत्राहुः—अन्यथे-त्यादि । तथा च तव मतेऽपि नियमभङ्ग इति पृथैवायं पर्यनुयोगस्तुल्यपरिहारत्वादित्यर्थः ॥

हरितोषिणी ।

तस्य बलं तं विना जगदुत्पत्तिर्न भविष्यतीत्यन्यथाऽनुपपत्तिरूपं, तस्मादित्यर्थः । अत्र तादृशनियमानुपपत्त्युद्भावनं कर्तुं न शक्यत इत्याहुः—वस्तुतस्त्विति । शरीरेति । ईश्वरोऽशरीर एव कर्तेति स्वीक्रियमाणे शरीरासिद्धिः, सशरीर एव कर्तेति यदा 'आका-शशरीरं ब्रह्मे'ति श्रुत्या 'यद्येष आकाश आनन्दो न स्या'दिति श्रुत्याकाशस्यान-न्दरूपत्वेन वर्णनादानन्दशरीरत्वम् । तथा च शरीरे सिद्धेऽपि ब्रह्मणि परिच्छेदानित्यत्व-योरभावाच्चादृशनियमः कुण्ठित एवात्रेति भावः । नन्वेवं चेन्नियमस्य सार्वत्रिकत्वाभावे भङ्ग इत्यत आहुः—अन्यथेति । अन्यथा तादृशनियमस्य सार्वत्रिकत्वे स्वीक्रियमाणे । अनि-त्यत्वनियमेनेति । नैयायिकस्य तव मते ज्ञानस्य त्रिक्षणावस्थायित्वनियमेनेत्यर्थः । तथा चेश्व-रज्ञानस्यानित्यत्वप्रसङ्गभिया तादृशनियमस्यासार्वत्रिकत्वं त्वयाऽपि स्वीकर्तव्यमिति भावः ॥

गङ्गाधरभट्टी ।

व्याहतत्वेनेति । शरीरस्य सिद्धौ यावताऽनुपपत्तिपरिहारस्तावद्रूपमेव सेत्स्यतीत्यनित्यत्वादिर-हितमेव सिद्धम् । किञ्च सिद्धे अनित्यतादिदोषेणासाधनं सिद्धिव्याहतं नाम, असिद्धौ सत्यामसा-धनं व्याहतम् । शरीरस्यासिद्धौ तु पक्षाभावात् (साधनं शरीरस्य) सर्वथा व्याहतमिति भावः ॥

यत्त्वीश्वरस्य कर्तृत्वेन शरीरित्वसाधन ईश्वरासिद्धावाश्रयासिद्धिस्तत्सिद्धौ च धर्मिग्राहकप्रमाणेनाशरीरस्यैव सिद्धत्वेन तद्बाध इति। तत्त्वविचारितरमणीयम्। तथाहि—अत्र धर्मिग्राहकं प्रमाणं किमिति भवान् पृच्छते, कार्यलिङ्गकमनुमानमिति चेद्ब्रवीति भवान्, तदा तेन कर्ता परं सिद्ध्यति, नान्यत् ॥

ननु सत्यमेतत्, परन्तु कर्ता स्वयं कर्तृत्वेन सिध्यन् स्वकर्तृत्वनिर्वाहकमादायैव सेत्स्यतीति वदामि (मः)। अहो!! किं तन्निर्वाहकम्? ज्ञानेच्छाप्रयत्ना एव। कुत एतत्? यतो लोके कार्यकर्तृत्वं तद्वतामेव दृष्टं, न तद्रहितानाम्। तर्हि शरीरस्यापि तत्समानयोगक्षेमत्वात् ज्ञानेच्छाप्रयत्नशरीरवानेव सेत्स्यति । अन्यथा तु ज्ञानादिकमपि न सेत्स्यति, लोके दर्शनस्य समानत्वादिति बुध्यस्व ॥

सुवर्णसूत्रम्।

एवमेकं मतं दूषयित्वा मतान्तरं दूषयितुमुपक्षिपन्ति—यत्त्वित्यादि । ईश्वरासिद्धावाश्रयासिद्धिरिति । जीवतुल्यताऽऽपत्त्येश्वरासिद्धावाश्रयासिद्धिरीश्वरे पक्षे पक्षतावच्छेदकासिद्धिः । तद्बाध इति । शरीरित्वबाधः । पक्षे साध्यशून्यत्वम् । तथा चैवं दोषद्वयापत्तेस्तत्साधनमसङ्गतमित्यर्थः । एतद्दूषयन्ति—नन्वित्यादि । अन्यथेत्यादि । निर्वाहकं विहाय केवलस्य कर्तुः सिद्धौ । अत इदमपि गतमसङ्गतमित्यर्थः ॥

हरितोषिणी।

नैयायिकैकदेशिमतमाहुः—यत्त्विति । ईश्वरस्येति । ईश्वरः शरीरी, कर्तृत्वादित्यनुमानेन शरीरसिद्धिश्चेत्, तादृशशरीरविशिष्टे जीवसादृश्येन जीवविशेष एव स्यान्नत्वीश्वर इत्याश्रयस्येश्वरस्यासिद्धिरित्यर्थः । ननु 'कर्ता चोपादाने'त्यादिपूर्वोक्तानुमानेनेश्वरः सिद्ध एवेत्यत आहुः—तत्सिद्धाविति । धर्मीति । ईश्वरग्राहकानुमानेनेत्यर्थः । तद्बाध इति । शरीरित्वबाधः । 'साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृत' इति वचनादित्यर्थः । एवं च शरीरसिद्धिरसङ्गतेति भावः । दूषयन्ति—तत्त्विति । कार्यलिङ्गकेति । जगत् कर्तृजन्यं, कार्यत्वाद्घटवदित्यनुमानमित्यर्थः । नन्वित्यादि, वदाम इत्यन्तं वादिवाक्यम्। अन्यत्स्पष्टम् ॥

गङ्गाधरभट्टी।

ईश्वरासिद्धाविति । शरीरिणो जगत्कर्तृत्वसाधने जीवस्यैव सिद्धिः स्यादिति भावः । तत्सिद्धौ । ईश्वरसिद्धौ । तद्बाध इति । शरीरित्वबाधः । पक्षे साध्यशून्यत्वादिति भावः ॥

ननु शरीरस्य महत्त्वेनोद्भूतरूपवत्त्वेन च चाक्षुषत्वं कथं न स्यात् । लौकिकप्रत्यक्षाविषयत्वादिति ब्रूमः । श्रूयते हि देवानामपीन्द्रादीनामप्रत्यक्षत्वं विग्रहवतां, किं पुनरखिलदेवदेवस्याप्रत्यक्षत्वे शङ्का नाम । किञ्च शङ्कानां तत्सिद्ध्युत्तरकालीनत्वात्तत्सिद्ध्यनवसरपराहतत्वेनैव नोदयसंभव इति संक्षेपः ॥

एतेन कार्यस्य शरीरादिमत्कर्तृपूर्वकत्वनियमः प्रत्यग्रजायमानाङ्कुरा-

सुवर्णसूत्रम् ।

शरीरसिद्धौ बाधकान्तरमाह—नन्वित्यादि । ईश्वरशरीरं चाक्षुषं, महत्त्वे सत्युद्भूतरूपवत्त्वात्, अस्मदादिशरीरवदित्यनुमानेन चाक्षुषत्वसिद्धौ चाक्षुषं कथं न स्यादित्यर्थः । अत्र समादधते—लौकिकेत्यादि । तथा च अचाक्षुषं, लौकिकप्रत्यक्षाविषयत्वात् इन्द्रादिशरीरवदिति प्रत्यनुमानात्पूर्वानुमानं लौकिकप्रत्यक्षविषयत्वरूपोपाधिग्रस्तमिति न तेन तत्सिद्धिरित्यर्थः ॥

एवं नैयायिकमतं निरस्य तेनैव मीमांसकमतं निरस्यन्ति—एतेनेत्यादि । न्यायबलात्कर्तृसाधनेन कार्यस्येत्यादिनोक्तो नैयायिकनियमः शरीरिणः कर्तुरनुपलम्भाद् घटदृष्टान्तवत् प्रत्यग्रजायमानाङ्कुरदृष्टान्तेन कार्यत्वस्य हेतोर्विपक्षगामितया नैकान्तिकत्वावगमादपि

हरितोषिणी ।

शङ्कते—नन्विति । चाक्षुषत्वमिति । शरीरं चाक्षुषं, महत्त्वे सत्युद्भूतरूपवत्त्वादित्यनुमानेनेश्वरेऽपि चाक्षुषत्वं सिद्ध्यति । तथा च तस्य चाक्षुषत्वं कुतो न जायत इति शङ्काकर्तुरभिप्रायः । उत्तरमाहुः—लौकिकेति । शरीरमचाक्षुषं, लौकिकप्रत्यक्षाविषयत्वात् इन्द्रादिशरीरवदिति सत्प्रतिपक्षग्रस्तत्वान्न पूर्वानुमानं सम्यगिति भावः । शङ्कैव न भवतीत्याहुः—किञ्चेति । तत्सिद्धीति । प्रत्यक्षविषयत्वसिद्ध्युत्तरकालीनत्वादित्यर्थः ॥

नैयायिकमतनिराकरणोत्तरं मीमांसकमतं निराकुर्वन्ति—एतेनेति । नियम इति । यत्र यत्र कार्यत्वं तत्र तत्र शरीरादिमत्कर्तृपूर्वकत्वं घटवदिति नियम इत्यर्थः । अस्य नियमस्य व्यभिचारमाहुः—प्रत्यग्रेति । प्रतितृणाग्रे जायमानो यस्तृणाङ्कुरस्तदादावित्यर्थः । तथा च तत्रारण्ये निर्जने देशे कुलालादिवत्कर्ता नोपलभ्यत इति तृणादौ कार्यत्वमस्ति,

गङ्गाधरभट्टी ।

अन्यथेति । निर्वाहकं विनैव कर्तृसिद्धौ । देवानामिति । तद्वदिच्छया तच्छरीरस्यापि प्रत्यक्षत्वम् ।

त्वावेव शरीरिणः कर्तुरनुपलम्भान्निरस्त इति निरस्तम् । उक्तयुक्तिभिस्तत्रापि शरीरिकर्तृकत्वस्यैव सिद्धेः । अतो ज्ञानदुर्बलव्यामोहनमात्रपरमेतन्मतं, न तु सच्छास्त्रीयमिति विद्वद्भिरुपेक्ष्यम् । एतदपि त्वन्मतानु-

सुवर्णसूत्रम् ।

निरस्त इति मीमांसकमतं निरस्तम् । तत्र हेतुः—उक्तयुक्तिभिरित्यादि । अङ्कुरादौ साध्यसन्देहस्यानन्याहितत्वेनाङ्कुरादेः पक्षसमतया विपक्षत्वाभावेन कार्यत्वस्य सद्धेतुत्वे सिद्धेऽङ्कुरादावपि कर्तृतानिर्वाहकत्वपक्षधर्मताबलसिद्धसिद्धिव्याघातानवसरपराहतत्वरूपाभिः साधकबाधकयुक्तिभिः शरीरिकर्तृकत्वस्य सिद्धेः । एवं न्यायसिद्धे शरीरिकर्तृकत्वे कर्त्रनुपलम्भस्याप्यप्रयोजकत्वात्तेनापि नियमस्याबाधात्तथेत्यर्थः । एवं न्यायेन साधयित्वा तस्यानुपयोगित्वायाहुः—एतदपीत्यादि । अयमर्थः—सांख्यास्तावत्प्रकृतेः कर्तृत्वमङ्गीकृत्येश्वरं न मन्यन्ते । तथाहि—प्रत्यक्षेणानवगम्यमानस्येश्वरस्य कार्यत्वादिलिङ्गकानुमानेन कर्तृतया साधने तादृशप्रकृतिसिद्ध्याऽर्थान्तरत्वेन तदसिद्धिः । तस्य कर्तृतानिर्वाहकमादायैव सिद्ध्यङ्गीकारे तु तुल्ययोगक्षेमत्वाच्छरीरस्यापि सिद्धिः । सशरीरेश्वराङ्गीकारे तु शरीरवद्रागस्याप्यन्वयव्यतिरेकसिद्धत्वाद्रागिण ईश्वरस्य सिद्ध्या तस्य जीवतुल्यताऽऽपत्तिर्नित्यमु-

हरितोषिणी ।

शरीरादिमत्कर्तृत्वं नास्तीति व्यभिचार इति भावः । निरस्त इति । एतादृशव्यभिचारादयं नियमो निरस्त इत्येतादृशमीमांसकमतमेतेन पूर्वोक्तयुक्त्या वक्ष्यमाणयुक्त्या च निरस्तमित्यर्थः । मीमांसकमतनिराकरणमेवाहुः—उक्तयुक्तिभिरिति । यथा पर्वतो वह्निमान्; धूमादित्यादौ पर्वते वह्नेः सन्देहसत्त्वेऽपि धूमे व्यभिचारित्वं नास्ति, तथाऽङ्कुरेऽपि शरीरादिमत्कर्तृपूर्वकत्वस्य विवादग्रस्तत्वेन सन्देहात्तस्य पक्षतुल्यत्वेन तद्भिन्नकार्यत्वरूपहेतावपि व्यभिचारित्वाभावेन सद्धेतुत्वं सिद्धम् । एवं च त्वया कर्तृपूर्वकत्वं स्वीकृतं चेत्, कर्तरि शरीरादिमत्त्वमपि स्वीकर्तव्यम् । कर्तृत्वं शरीरं विना न संभवतीति पूर्वोक्तयुक्तिभिरित्यर्थः । न च कदाचिद्वक्तव्यम—कर्ता नोपलभ्यत इति । तस्य लौकिकप्रत्यक्षाविषयत्वेनानुपलब्धिरिति न किंचिदेतत् ॥ एतादृशयुक्तिभिस्त्वन्मतखण्डने मम निर्भरो नास्तीत्याहुः—एतदपीति । युक्त्या खण्डनमपीत्यर्थः । त्वन्मतेति । वेदवाक्यप्रामाण्यास्वीकारिबौद्धनिराकरणार्थमादृतस्य नैयायिकमतस्यानुसारेणेत्यर्थः । अत एव बौद्धमतधिक्कारकर्तृभिरुदयनाचार्यैरुक्तम्—'कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः । वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्यय' इति । अत्र धृत्यादेरित्यादिपदेन ब्रह्माण्डनाशो गृह्यते । अत्र नवानुमानेनेश्वरसिद्धिः प्रतिपा-

१ कृत इति पुस्तके पाठः ।

त्त्वहानिश्च । न च प्रकृतेर्जडत्वात्कर्तृत्वानुपपत्तौ तदधिष्ठातृत्वेन विवक्षितरूपस्यैवेश्वरस्य सिद्धिरिति वाच्यम् । अधिष्ठातृत्वस्यैव विचार्यत्वात् । तथाहि—किं नामाधिष्ठातृत्वम् ? प्रकृतिनियामकत्वं वा, तत्सन्निहितत्वं वा, तस्यां प्रतिबिम्बितत्वं वा ? । नाद्यः । चेष्टां विना ज्ञानादिमात्रेण तथात्वाङ्गीकारे जीवानामपि तथात्वापत्तेः । तथा सत्यनेकेश्वरापत्तेश्च । न द्वितीयः । तदाप्युक्तदोषापत्तेः । तत्सन्निधानस्य सर्वेषु तौल्यात् । न तृतीयः, प्रतिबिम्बिते शरीरे मणौ च चलति शरीरमणिचलनप्रतीतिवत्प्रकृतिकर्तृत्वेनैव तस्य स्वस्मिन् कर्तृत्वाभिमानात् स्वातन्त्र्यासिद्ध्या पारिभाषिकत्वापत्तौ विवक्षितरूपेश्वरासिद्धेः । किञ्च ज्ञानादिमात्रेणात्मनो जडनियामकत्वाङ्गीकारे मृतशरीरेऽप्याहारादिक्रियापत्तिः । तदभावात्तस्याः प्राणबुद्ध्यादिकार्यत्वेन मृतशरीरे च तेषामभावेन तदभावाज्जीवच्छरीरेऽपि तेषामेव नियामकत्वसिद्ध्याऽऽत्मनि तदभावात् । अतः पुरुषच्छायापातेन चेतनत्वापन्नस्य बुद्ध्यादेरन्तःकरणस्यैवाधिष्ठातृत्वं, न तु तटस्थस्यात्मनः, अग्निसम्बन्धेन लोहस्य दाहकत्ववत् । अतो नैवमपीश्वरसिद्धिः ॥

किञ्च तस्य स्वातन्त्र्येण कर्तृत्वेऽकृताभ्यागमादिप्रसक्तिः; कर्मसहकारित्वेऽनीश्वरत्वापत्तिः, तथा स्वार्थं जगत्करणेऽनाप्तकामत्वापत्तिः, परार्थं करणे वैषम्यनैर्घृण्यादिप्रसक्तिः । अतः प्रकृतिरेव कर्त्री । 'प्रधानाज्जगज्जायत' इति श्रुतेः । न च 'स हि सर्ववित् सर्वकर्ते'ति श्रुतेरीश्वरस्य कर्तृत्वं शङ्क्यम् । एतस्य मुक्तात्मोपासासिद्धात्मान्यतरप्रशंसापरत्वादित्याहुः ॥

तथा रामानुजाचार्याश्च—क्षित्यादिषु सावयवत्वेन कार्यत्वमपि नानुमातुं शक्यम् । अकार्यम्, अशक्यक्रियत्वात्, अशक्योपादानविज्ञानत्वात्, महाभूतशब्दवाच्यत्वाच्च आकाशवदिति भट्टभास्करोक्तैः प्रत्यनुमानैस्तस्य सत्प्रतिपक्षत्वात् । यदि चाकाशे निरवयवत्वस्यानुकूलतर्कस्य सत्त्वेन क्षित्यादिवायुपर्यन्तेषु च तदभावेनोक्तहेतूनामप्रयोजकत्वं विभाव्यते, तदाऽपि कार्यत्वेन हेतुना बुद्धिमत्कर्तृपूर्वकत्वमात्रसिद्ध्या तादृशक्षेत्रज्ञानामेव कर्तृत्वेन सिद्धिरिति हेतोरर्थान्तरसाधकत्वान्नैतेनेश्वरसिद्धिः । न च क्षित्यादिवायुपर्यन्तस्य पक्षीकरणेन तदुपादानगोचरापरोक्षज्ञानादिमत्त्वस्य क्षेत्रज्ञेष्वशक्यवचनतया पक्षधर्मताबलादीश्वरसिद्धिः । विवादाध्यासितं क्षित्यादिकं सोपादानगोचरापरोक्षज्ञानादिमदनेककर्तृपूर्वकं, कार्यत्वात् विचित्रसन्निवेशसार्वभौमसदनवदिति दृष्टान्तेनानेककर्तृसिद्ध्या पक्षधर्मताया दुर्बलत्वात् । महीमहार्णवादीनां कार्याणामनेकत्वात्तेषां सर्वेषामेककर्तृकत्वेन निर्मितत्वे प्रमाणभूतस्य हेतोरभावात् । पृथग्भूतेषु कार्येषु कालभेदकर्तृभेदयोः प्रत्यक्षसिद्धत्वेन प्रत्युत बाधाच्च । न च जीवानां तादृशनिर्माणशक्त्यदर्शनेन तच्छक्तौ कार्यत्वबलेनैव तत्सिद्धिरिति वाच्यम् । पूर्वमशक्तानामपि पश्चात्पुण्यविशेषेण क्वचित् शक्तिदर्शनात् । पुण्यविशेषोपचयेनातिशयितादृष्टसंभावनया च तादृशविलक्षणकार्यकर्तृत्वस्यापि संभवात् । इदमेवोक्तं

सुवर्णसूत्रम् ।

कपिलाचार्यैः—'मुक्तात्मनः प्रशंसावाक्यमुपासासिद्धस्य वे'ति सूत्रे । इदं योगिनोऽप्युपलक्षकम् । किञ्च युगपत्सर्वोत्पत्तिस्थिती न प्रमाणपदवीं व्रजतः; लोके क्रमेणैव तयोर्दर्शनात् । युगपत्तत्कल्पकस्य हेतोरशक्यवचनत्वात् । क्रमेण तत्कल्पने विरोधाभावाच्च । अतः क्षित्यादिकं बुद्धिमदेककर्तृकं, कार्यत्वाद् घटवदित्यत्र, तन्नैककर्तृकं; कार्यत्वाद् घटस्तम्भादिसमूहवदिति दृष्टान्तेन हेतोः साधारणत्वम् । तथा भूभूधरादिनिष्ठं कार्यत्वं न बुद्धिमदेककर्तृकत्वसाधकं, समूहनिष्ठत्वाद् घटपटस्तम्भादिसमूहनिष्ठकार्यत्ववदित्यनुमानान्तरादपि तथा ॥

किञ्चेदं क्षित्यादिगतं कार्यत्वं युगपदुत्पद्यमानसर्वगतं वा क्रमिकोत्पद्यमानसर्वगतं वा? आद्ये आश्रयासिद्धत्वम् । द्वितीये तु विरुद्धत्वम् । तस्मान्न कार्यत्वलिङ्गकानुमानेनेश्वरसिद्धिः । नापि जगदेकचेतनाधीनम्; अचेतनारब्धत्वात् नीरोगस्थशरीरवदित्यनुमानात्सिद्धिः । तथाहि—किमिदमेकचेतनाधीनत्वम्? एकचेतनायत्तोत्पत्तिस्थितिकत्वमिति चेत्, न; नीरोगस्यापि शरीरस्य पितृपुत्राद्यनेकचेतनादृष्टजन्यत्वेन तदुत्पत्तिस्थित्योस्तदधीनत्वेनैकचेतनाधीनत्वाभावाद् दृष्टान्ते साध्यवैकल्येन हेतोरसाधारणत्वापत्तेः ॥

किञ्च शरीरस्थितिरपि किं स्वावयवसमवेतता, उत प्राणनम्? आद्ये अवयवाधीनत्वान्न चेतनापेक्षा घटादिवत् । द्वितीये क्षित्यादीनां शरीरत्वाभावेन पक्षेऽसंभव इति पक्षसपक्षानुगतस्थित्यनुपलम्भः । नाप्येकचेतनाधीनप्रवृत्तिकत्वम् । पक्षान्तर्भूतेषु गुरुतररथशिलामहीरुहादिष्वनेकचेतनाधीनप्रवृत्तिकत्वदर्शनेन व्यभिचारात् । नापि चेतनमात्राधीनत्वम् । सिद्धसाधनत्वादर्थान्तरापत्तेश्च ॥

किञ्च ईश्वरः कर्ता न भवति; प्रयोजनशून्यत्वात्, अशरीरत्वाच्च मुक्तात्मवदिति बाधकानुमानादपि नेश्वरकर्तृत्वसिद्धिः ॥

किञ्चात्यन्तापरिदृष्टेश्वराख्यपुरुषस्य तस्मिन् सामर्थ्यविशेषस्य च कल्पनेऽत्यन्तगौरवात्, क्लृप्तानां जीवानामेव तपोयोगयागादिलब्धसामर्थ्यानां कर्तृत्वेन कल्पनं लघीय इत्यचेतनारब्धत्वलिङ्गकानुमानेनापि नेश्वरसिद्धिरित्याहुः ॥

यानि तु 'कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः । वाक्यात्संख्याविशेषाच्च साध्यो विश्ववि(कृ)दव्यय' इत्युदयनाचार्योक्तान्यनुमानानि तानि तु व्याख्यातृभिरेवं व्याख्यातानि । तथाहि—अत्र कार्यत्वं तु प्रसिद्धमेव । आयोजनं तु सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म । धृतिर्धारणं, गुरुत्ववतो ब्रह्माण्डादेः पतनाभावः । आदिपदाद् ब्रह्माण्डादेर्नाशः । पदं घटपटादिसम्प्रदायव्यवहारः घटादिपदप्रयोगो वा । प्रत्ययो वेदजन्यं धर्मादिज्ञानम् । श्रुतिर्वेदः । वाक्यं पदसमूहः । संख्याविशेषः सर्गादौ परमाणुनिष्ठद्वित्वादिसंख्याजन्यं परिमाणमित्यादि । प्रयोगास्तु—क्षित्यादिकं कर्तृजन्यं, कार्यत्वात् घटवत् । अन्ये तु जन्यत्वादित्यपि प्रयुञ्जते । तथा क्षितिरुपादानगोचरापरो-

सुवर्णसूत्रम्।

क्षज्ञानोपायेच्छातादृशकृतिजन्या, ज्ञानजन्या, इच्छाजन्या, कृतिजन्या वा, जन्यत्वाद् घटादिवदित्यपि। पूर्वोक्तं कर्म चेतनप्रयत्नपूर्वकं, कर्मत्वाद् अस्मदादिशरीरजन्यक्रियावत्। उक्ता धृतिः चेतनप्रयत्नपूर्विका, धृतित्वाद् वियति विहङ्गमधृतिवत्। ब्रह्माण्डादि प्रयत्नवद्विनाश्यं, विनाशित्वात् पाट्यमानपटवत्। उक्तव्यवहारः स्वतन्त्रप्रयोज्यः; व्यवहारत्वात् आधुनिकलिप्यादिव्यवहारवत्। पूर्वोक्तं ज्ञानं कारणगुणजन्यं; प्रमात्वात् प्रत्यक्षादिप्रमावत्। वेदः पौरुषेयो; वेदत्वाद्, यन्नैवं तन्नैवम्, आकाशवत्। वेदः पौरुषेयो, वाक्यत्वाद्, भारतादिवत्। द्व्यणुकपरिमाणं संख्याजन्यं, परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वात् तुल्यपरिमाणककपालद्वयारब्धघटपरिमाणवदिति। इदं चैवं व्युत्पादितं मैथिलभवदेवमिश्रैः। अत्र प्रथमे प्रयोगे कर्तृजन्यत्वं तु स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमददृष्टाद्वारकजन्यत्वम्। अत्रादृष्टाद्वारकेतिविशेषणान्न जीवात्मनिरूपितादृष्टद्वारकजन्यत्वेन सिद्धसाधनमर्थान्तरं वा। जीवानां क्षित्याद्युपादानीभूतपरमाण्वादिगोचरापरोक्षज्ञानाभावेन तज्जन्यत्वे बाधान्न तैरपि तथा। न च क्षितिघटादिसाधारणस्यैकस्य साध्यस्याभावेन स्वपदार्थाननुगमात् कथं व्याप्तिग्रह इति वाच्यम्। स्वपदार्थाननुगमस्यादोषत्वात्। अन्यथेच्छादिना ज्ञानाद्यनुमानं न स्यात्। स्वविशेष्यकत्वप्रकारकज्ञानत्वादिनैव तत्र कार्यकारणभावात्। अत्र च सकर्तृकत्वादिसाध्यकानुमाने कर्तृत्वेनैव कारणता, ज्ञानजन्यत्वादिसाधके च ज्ञानत्वादिना। एवं कार्यताऽपि कार्यत्वेन जन्यत्वेन च। न च शरीरगौरवेणाप्रयोजकत्वं शङ्क्यम्। अवच्छेदककोटौ घटत्वादीनां प्रवेश आनन्त्यगौरवात्। ध्वंसस्य जन्यत्वेन तस्य च जन्याभावत्वेनावच्छेदकतया प्रवेशे शरीरगौरवाच्च। एवं तु विवक्षितविवेके जन्याभावत्वैकदेशस्य जन्यत्वस्यैव प्रवेश इति शरीरलाघवात्, सामान्यलाघवादेकत्वलाघवात्कल्पनालाघवादुपस्थितिलाघवाच्च जन्यत्वेनैव कार्यता, न घटत्वादिना। कार्यत्वं च स्वसमवायिजन्यताख्येन परम्परासम्बन्धेन कृतिस्वमेवेति न तत्रापि गौरवम्। न च विशिष्यान्वयव्यतिरेकाभ्यां घटत्व(वत्) कुलालत्वादिना विशिष्य कार्यकारणभावस्यावश्यकत्वात्सर्वमेतद्विरुद्धमिति वाच्यम्। कार्यमात्रवृत्तीनां जातीनां कार्यतावच्छेदकत्वमिति सिद्धान्तसमुद्घोषात्। न चाङ्कुरादौ हेतोर्विपक्षगामित्वेनानैकान्तिकत्वं शङ्क्यम्। तत्र साध्यसन्देहस्यानन्याहितत्वेन तस्य पक्षसमत्वात्। न च शरीरजन्यत्वस्योपाधेर्विद्यमानत्वाच्छरीराजन्यत्वस्य प्रतिसाधनस्य सत्त्वाच्च साध्यसन्देहस्यान्याहितत्वेनानैकान्तिकत्वं सिद्धमिति शङ्क्यम्। कर्त्रादिजन्यतायामपि गुरुभूतस्य शरीरजन्यत्वस्यानवच्छेदकत्वाल्लघुभूतस्य जन्यत्वमात्रस्यैवावच्छेदकत्वेन तस्य च साधनव्यापकत्वेनानुपाधित्वे हेतोरदुष्टत्वात्। एवं च कर्त्रादिजन्यतायामिव शरीरजन्यतायामपि जन्यत्वस्यैवावच्छेदकत्वादीश्वरे नित्यज्ञानादिकमिव नित्यशरीरवत्त्वस्याप्यङ्गीकारेण प्रतिसाधनदोषस्याप्यभावात्। अनुमानं च–क्षित्यादिकं शरीरजन्यं, जन्यत्वाद् घटवत्। ईश्वरः शरीरी; कर्तृत्वात् कुलालवदिति।

सुवर्णसूत्रम् ।

अनुकूलतर्कश्चात्र कर्तृत्वजन्यत्वाभ्यामिव शरीरत्वजन्यत्वाभ्यामपि पूर्वोक्तयुक्तितुल्ययुक्तिकः कार्यकारणभाव एव । श्रुतिश्च—'यतो वा इमानि भूतानि जायन्त' इत्यादि । 'सहस्रशीर्षा पुरुष' इत्यादि । 'आकाशशरीरं ब्रह्मे'त्यादि च ॥

श्रुतीनां चानुकूलतर्कविषया स्वतन्त्रतया च ब्रह्मणि प्रामाण्यमिति नवीनमतम् ॥

साम्प्रदायिकमते शरीरस्य कुलालशरीरत्वादिनैव कारणत्वं, न तु शरीरत्वेनेतीश्वरस्य न नित्यं शरीरं, लोकानुग्रहेण व्यवहारप्रवर्तनार्थम् । अतोऽस्मदाद्यदृष्टजनिते रामकृष्णादिनामके शरीरे भूतावेशन्यायेनावेशः, कार्यकरणानन्तरं च त्याग इति ॥

अभिनवमते तु महेश्वरस्य विश्वमेव शरीरम् । तच्च नित्यानित्यपुञ्जघटितमित्यनित्यांशविरामेऽपि नित्यांशमादाय नित्यमेव । आकाशात्मकं च नित्यमेव । रामकृष्णादिनामकं त्वाविर्भावतिरोभावशालि भक्तानुग्रहेण कदाचित्कचिदाविर्भवति तिरोभवति च । अत एव तत्त्ववादिभिर्मूर्तमपि तन्नित्यं विभु चेत्यङ्गीक्रियते । सर्वत्र सदा तथाभूतभक्तभावनया भक्तैः साक्षात्क्रियमाणत्वात् । तादृशसाक्षात्काराणां प्रमात्वे संभवति भ्रमत्वकल्पनस्यान्याय्यत्वात् । तदुक्तम्—'औत्सर्गिकं धियां प्रमात्व'मिति । विश्वात्मकं तु योगिप्रत्यक्षगम्यमपि विश्वरूपदर्शनादिषु श्रूयत एव सहस्रशः । एवं श्रुत्यादिभिः शरीरेऽङ्गीकृते तदनुसारि सकर्तृकत्वानुमानं निर्दुष्टमेव । एवमेकेनेश्वरेण सकलक्षित्यादिकार्यसंभवे सति प्रमाणाभावाद् गौरवाच्च नानेकेश्वरसिद्धिः । किञ्चानेकेश्वराङ्गीकारे तेषामैकमत्यं वैमत्यं वा स्यात् । तत्राद्ये स्वातन्त्र्याभावादैश्वर्यहानिः, द्वितीये तु कार्यासिद्धिरिति कार्यदर्शनात् 'एकमेवाद्वितीयं ब्रह्मे'त्यादिश्रुतिभ्यस्तादृशैः पुराणैश्चैकस्यैव सिद्धिरिति न पूर्वोक्तं किमपि दूषणम् । एवमेकेश्वरसिद्धौ कर्मत्वादिलिङ्गकान्यप्यनुमानानि तमेव साधयन्तीति न कोऽपि क्वापि दोष इति । तदपि न विचारचारु । रामानुजाचार्योक्तसार्वभौमसदनदृष्टान्तस्य महीमहार्णवेत्याद्युक्तदूषणानामनुद्धारेण सिद्धसाधनादिदोषाणां हेतोराभासतायाश्च निवृत्त्यभावात् । एवं शरीरित्वसाधकानुमानेऽपि कापिलोक्तानां रागादिदोषाणामनपगमाज्जीवतुल्यताऽऽपत्त्यनुद्धार एव । एवमेव जन्यत्वलिङ्गकज्ञानजन्यत्वादिसाध्यकानुमानेऽपि द्रष्टव्यम् । अतः श्रुतिसाहाय्यं विना कथमपि न निर्वाहः । एवं कर्मत्वलिङ्गकानुमानमप्याश्रयासिद्धम् । 'असतः सद्येततश्च'(?)रित्यादिश्रुतिषु 'तन्मायाफलरूपेणे'त्यादिभगवद्वाक्येऽन्यत्र च विभागादेव सृष्टिकथनेन पक्षताऽऽवच्छेदकस्य पक्षेऽभावात् । एवं धृतिपक्षकानुमानेऽपि धृतेर्ब्रह्माण्डादिपतनात्यन्ताभावरूपत्वं तत्प्रागभावरूपत्वं वा वक्तव्यम् । तयोरुभयोरप्यनादित्वेन चेतनप्रयत्नपूर्वकत्वस्याभावाद्बाधितत्वम् । अतो धृतिशब्दार्थो विष्टम्भात्मकः संयोगविशेषो वक्तव्यः । तदाऽपि चेतनप्रयत्नपूर्वकत्वे साध्ये तादृशानेकजीवप्रयत्नेन सिद्धसाधनमर्थान्तरं वा । एकचेतनप्रयत्नपूर्वकत्वे साध्ये तु गुरुतररथशिलादिदृष्टान्तेन हेतोः साधारणत्वं दुरपोहम् । एवं ब्रह्माण्डादिपक्षकानुमानेऽपि सिद्धसाधनादिकम् । एकप्रयत्न-

सारेणैवोक्तम् । अस्माकं तु प्रतिसत्कर्णजिह्वाग्रजागरूकोक्तश्रुतिस्मृ-

सुवर्णसूत्रम् ।

वह्निनाश्यत्वसाधने तु खन्यमानमहाभवनदृष्टान्तेन हेतोः साधारणत्वं द्रष्टव्यम् । एवं व्यवहारपक्षकानुमानेऽपि लिप्यादिव्यवहारसाङ्केतिकप्रयोगदृष्टान्तेनोक्तदोषादिकं द्रष्टव्यम् । तथा धर्मादिज्ञानपक्षकानुमानेऽपि वेदापौरुषेयवादिनं प्रति सिद्धसाधनादिदोषदुष्टत्वम् । एवं वेदत्वलिङ्गकानुमानेऽपि हेतोरसाधारणत्वम् । वाक्यत्वलिङ्गकानुमानेऽप्याकाशवाणी-दृष्टान्तेन [†]हेतोरसाधारणत्वम् । एवं द्व्यणुकपरिमाणपक्षकानुमानेऽपि तादृशसंख्याज्ञानस्य योगिनामपि सम्भवात्तैरर्थान्तरमिति सर्वाण्येवाभासरूपाणि । एवं नवीनमते यदीश्वरस्य शरीरमङ्गीकृतम्, तदपि युक्तिमूलत्वे रागादिमत्त्वप्रयोजनवत्त्वाद्यापत्त्यपरिहारादुष्टमेव । श्रुतिमूलत्वे तु श्रुतिषु सच्चिदानन्दात्मकतदभिन्नशरीराङ्गीकारात्कर्तृत्वस्यापि तत्रोक्तत्वात्तासां श्रुतित्वेनैव प्रामाण्यं, न तु तदनुगामित्वेनेति । यदप्यभिनवमते विश्वात्मकं शरीरमङ्गीकृतम्, तच्च नित्यानित्यपुञ्जघटितत्वेऽपि नित्यांशमादाय नित्यम् । आकाशादिरूपं च नित्यमेवेत्युक्तम् । तदपि फल्गु । कर्तृत्वनिर्वाहकत्वेनाङ्गीक्रियमाणस्य तस्य विश्वपूर्वभावित्वस्यावश्यकत्वेन विश्वात्मकत्वानुपपत्तेः । नित्यांशमादाय तस्य पूर्वभावित्वाङ्गीकारे तस्य परमाण्वादिरूपत्वेन कर्तृतानिर्वाहकत्वविरहप्रसङ्गात् । न च नित्यानित्यपुञ्जात्मकमेव तदित्यपि युक्तम् । 'यस्य पृथिवी शरीर'मित्यादिश्रुतिगतप्रत्येकपर्याप्तैकत्वविरोधप्रसङ्गात् । 'सर्वतःपाणिपादं त'दित्यादिश्रुतिविरोधापत्तेश्च । प्रकृतमनुसरामः । अतो नैयायिकमतानुसरणं बौद्धादिदूषकत्वेन शिष्टादरमात्रादित्यर्थः । शास्त्रयोनित्वसूत्रानुसारेणाहुः—अस्माकमित्यादि । अस्माकमिति । व्यासानुसारिणाम् । प्रतिसत्कर्णमिति । सँश्चासौ

हरितोषिणी ।

दिता । अस्याः कारिकाया व्याख्यानं सांख्यरामानुजाचार्यमतखण्डनं च सुवर्णसूत्रादवगन्तव्यम् । ग्रन्थविस्तरभयाद्विरम्यते । ननु युक्तिषु निर्भरो नास्ति चेत् कथं खण्डनं क्रियत इत्यत आहुः—अस्माकमिति । अस्माकं कृष्णद्वैपायनमतानुसारिणाम् । प्रतिसत्कर्णमिति । सत्कर्णं सत्कर्णं लक्षीकृत्येति प्रतिसत्कर्णम् । जिह्वाग्रेति । जिह्वाग्रे

गङ्गाधरभट्टी ।

प्रतिसत्कर्णमिति पृथक्पदं पाठान्तरे । सत्कर्णेति । सतां कर्णे कर्णे जिह्वाग्रं जिह्वाग्रं च प्रतीति प्रतिसत्कर्णं प्रतिजिह्वाग्रम् । द्वन्द्वाद्वीप्सार्थेऽव्ययीभावः । शुङ्कारो मशकशब्दः ॥

---

टिप्पणी ।

[*] आकाशवाणीति । वाक्यत्वेऽप्याकाशवाण्यां यथा न पौरुषेयत्वं तथा वेदेऽपि ॥

[†] हेतोरसाधारणत्वमिति । सर्वत्रैतादृश एव पाठ उपलब्धस्तथाऽपि वेदः पौरुषेयो वाक्यत्वाद् भारतादिवदित्यनुमाने वाक्यत्वहेतुर्न पक्षमात्रवृत्तिः, किन्तु पौरुषेयत्वाभाववत्याकाशवाण्यपि सत्त्वेन विपक्षवृत्तिरपि । अतः हेतोः साधारणत्वमितीह पाठ उचितः प्रतिभाति ॥

तिपुराणवाक्यतत्त्वसूत्रभेरीघोषोद्धुष्टतया सर्वतःपाणिपादान्तत्वेनाचिन्त्यानन्तशक्तिमत्त्वेनैव भगवान् सिद्ध इति नानुमानमशकशुङ्कारापेक्षापीत्यलं प्रसक्तानुप्रसक्त्या ॥

(४३) स्यादेतत्, ब्रह्मधर्माः किं ब्रह्मणः सकाशाद्भिन्ना, अभिन्ना वा? नाद्यः । तेषामपि नित्यत्वेनाङ्गीकारात् '*एकमेवाद्वितीयम्' 'असङ्गो ह्ययं पुरुष' इत्यादिश्रुतिविरोधात् । न द्वितीयः । धर्मत्वव्याहतेः । तथा चैकविज्ञानेन सर्वविज्ञानोपपत्त्यर्थं प्रपञ्चवद्ब्रह्मकार्या एव धर्मा इति मन्तव्यम् । तथा सति ब्रह्म सर्वकल्पनारहितमेव सेत्स्यतीति चेत्, अत्रोच्यते—यथा सूर्यस्य तेजोरूपस्य प्रकाशोऽपि तद्रूप एव तद्धर्मरूपः । तेजस्त्वेनैव सू-

ब्रह्मधर्मा ब्रह्मतो भिन्ना अभिन्नाश्चेति श्रुतिबलेन व्यवस्थापनम् ।

सुवर्णसूत्रम् ।

कर्णश्च सत्कर्णः, सत्कर्णं लक्षीकृत्येति प्रतिसत्कर्णम् । भेरीघोषोद्धुष्टतयेति । भेर्यो महादुन्दुभयः । 'ताड्यमानासु भेरीष्वि'ति भारते प्रयोगात् । भेरीणां घोषेणोद्धुष्टो भेरीघोषोद्धुष्टस्तस्य भावस्तत्ता तया । एतस्य सिद्ध इत्यनेनान्वयः ॥

(४३) एवं नैयायिकमते निराकृते धर्माणां भेदाभेदं साधयितुं प्रवृत्तो मायावादी, आगन्तुकधर्मवादी चाशङ्कते—स्यादेतदित्यादि । तत्र प्रतिवदन्ति—अत्रोच्यत इत्यादि ।

हरितोषिणी ।

जागरूकानि श्रुत्यादीनि सूत्रान्तानि, तेषां यो भेरीघोषो दुन्दुभिघोषस्तेनोद्धुष्टस्तस्य भावस्तत्ता तया । सिद्ध इत्यग्रेणान्वयः । तथा च श्रुत्याद्युद्घोषः शब्दप्रामाण्यं यत्र तत्रानुमानस्य मशकस्य शुङ्कारापेक्षा नास्तीति भावः । एतावता प्रबन्धेनेश्वरे शरीरविचारः कृतः ॥

(४३) इदानीमीश्वरधर्माणां विचारं कर्तुं प्रथमतो मायावादी शङ्कते—स्यादेतदिति । श्रुतिविरोधादिति । धर्माणां नित्यत्वेन ब्रह्मतुल्यत्वात्, अथ च तेषां ब्रह्मसम्बन्धत्वेन श्रुतिविरोधादित्यर्थः । धर्मत्वव्याहतेरिति । अभेदे धर्मधर्मिभावो नास्तीति भावः । सेत्स्यतीति । तथा च केवलं सच्चिदानन्दरूपमेवेति भावः । समाधानं वदन्ति—अत्रोच्यत इति । यथेति । तेजोरूपस्य सूर्यस्येत्यन्वयः । तद्रूप एवेति । सूर्यरूप एव सूर्यधर्मरूप इत्यर्थः । कुत इत्यत आहुः—तेजस्त्वेनैवेति । सूर्यः प्रकाशश्च तेजस्त्वेनैवेत्यर्थः ।

गङ्गाधरभट्टी ।

(४३) तद्रूप एवेति । तेजोरूपः ।

---

टिप्पणी ।

* एकमेवेति । अद्वितीयपदेन ब्रह्मसदृशं तद्भिन्नं निषिध्यते, एकैवपदाभ्यां तु ब्रह्मणो नानारूपेषु जायमाना पारस्परिकभेदशङ्का निवर्त्यते, अतोऽनया श्रुत्या न परस्माद्वक्ष्यमाणो धर्मधर्मिभेदः प्रतिषेद्धुं शक्य इति प्राभञ्जनः ॥

त्वावच्छेदेन *प्रतीयमानत्वान्नातद्रूपः । तस्माद्भिन्नत्वेनापि तदीयत्वेनापि प्रतीयमानत्वात्तद्धर्मरूपोऽपि । तस्मात्प्रतीत्यनुरोधेन तादृशमेव तद्वस्तूत्पत्तिशिष्टमित्यङ्गीक्रियते । तथा ब्रह्मधर्मा अप्यभेदबोधकश्रुत्यनुरोधेन तद्रूपा एव । 'पराऽस्य शक्ति'रित्यादिषु षष्ठ्या भेदेनापि प्रतिपादनात्तद्भिन्ना अपि । तथा चोभयविधश्रुतिबलेनैवैतादृशमेवैतद्वस्त्वित्यति मन्तव्यम् । लौकिकानुवादपूर्वकनिषेधपक्षस्य पूर्वमेवापास्तत्वात् । न च सूर्यजन्यमेव तेजोऽन्तरं प्रकाश इति वाच्यम् । †'यदादित्यगतं तेज' इति वाक्याद्भगवत्तेजस्त्वेनाजन्यत्वात् । भेदकल्पनायां प्रमाणाभावाद्गौरवाच । प्रलये सूर्यनाशेऽपि तेजसो भगवद्दत्तत्वेन पुनर्भगवत्येव स्थितिः ।

सुवर्णसूत्रम् ।

तस्मादिति । उक्तरूपप्रमाणसिद्धत्वात् । ननु प्रलये सूर्यलयेन तेजसोऽपि लयात्तस्यातिरिक्तत्वमेवानायत्याङ्गीकार्यं, तत्र भगवदीयत्वकथनं तु भाक्तमिति चेत्तत्राहुः—प्रलय इत्यादि ।

हरितोषिणी ।

नातद्रूपेति । सूर्यरूपो न भवतीति नेत्यर्थः । तस्मादिति । सूर्यादित्यर्थः । तद्धर्मरूपोऽपीति । सूर्यधर्मरूपोऽपीत्यर्थः । दार्ष्टान्तिके घटयन्ति—तथेति । तद्रूपा एव । ब्रह्मरूपा एव । तद्भिन्ना अपि । ब्रह्मभिन्ना अपि । ननु लोके तथा न दृश्यत इत्यत आहुः—लौकिकेति । अपास्तत्वादिति । 'अलौकिकास्तु ये भावा न तांस्तर्केण योजये'दित्यनेन निरस्तत्वादित्यर्थः । शङ्कते—न चेति । तेजोऽन्तरमिति । तेजस्त्वेन सूर्यरूपं न भवतीति भावः । उत्तरमाहुः—यदादित्येति । प्रलये सूर्यस्यापि लये तेजसो नाशस्यानित्यत्वेन भगवदीयत्वं कथमित्यत आहुः—प्रलयेति । प्रकारान्तरमाहुः—

गङ्गाधरभट्टी ।

तस्मादिति । प्रत्यक्षत्वात् । उत्पत्तिशिष्टमिति । प्राथमिकज्ञानसिद्धम् । अपास्तत्वादिति । तथा सति प्रतिपादनवैयर्थ्यापातादिना ।

---

टिप्पणी ।

* यथा परिमाणद्वैगुण्यापत्तिदोषेणावयवावयविनोर्भेदो नाभ्युपेयते मायावादिना, तथा प्रकाशतदाश्रययोरपि नास्माभिः । मणेः प्रभेति भेदव्यवहारस्तु भगवदिच्छाप्रयुक्त इति नैतेन तत्त्वव्याहतिः ॥

† यदादित्यगतमिति । अस्योपासनापरत्वेऽप्यवस्तूपासने फलाभावात्, रामकृष्णाद्यवतारोपक्रमे ब्रह्मादीनां तेजोरूपस्य भगवतो दर्शनं जातमिति श्रावणाच्च तेजसि भगवदीयत्वं वास्तवमेव ॥

तेजःसहितस्य तस्यैव वा भगवति लयः । सूत्रकारोऽपि धर्मस्वरूपनिरूपणे आहैवमेव 'प्रकाशाश्रयवद्वा तेजस्त्वा'दिति । वाशब्दः पूर्वपक्षनिरासे । *प्रकाशस्तदाश्रयश्च सूर्यादिस्तयोर्यथाऽभेदस्तद्वद्धर्मब्रह्मणोरपीत्यर्थः । प्रकाशस्य †स्वाश्रयतेजोभिन्नत्वशङ्काव्युदासाय हेतुः । तथा

सुवर्णसूत्रम् ।

'यावदधिकारमवस्थितिराधिकारिकाणा'मिति न्यायेन पक्षान्तरमाहुः—तेज इत्यादि । भेदाभेदपक्षस्य न्यायसिद्धत्वमाहुः—सूत्रेत्यादि । तेन ‡ब्रह्मधर्माः स्वाश्रयात्मकाः; तेजस्त्वात् प्रकाशाश्रयसूर्यादिप्रकाशवदिति प्रयोगो बोध्यः ॥

हरितोषिणी ।

तेजःसहितस्येति । तथा च तस्य नाशो नास्तीति भावः । स्वोक्तार्थे सूत्रकारसम्मतिमाहुः—सूत्रकारोऽपीति । एवमेवेति । आहेति पूर्वेणान्वयः । सूत्रमाहुः—प्रकाशेति । सूत्रव्या-

गङ्गाधरभट्टी ।

तेजोभिन्नत्वशङ्केति । प्रकाशो भिन्नः, सूर्यादिरूपं तेजश्च भिन्नमिति शङ्केत्यर्थः । हेतुरिति । तेजस्त्वादितिरूपः ।

---

टिप्पणी ।

* प्रकाशस्तदाश्रयश्चेति । एतेनेह द्वन्द्वसमासः सूचितः । भाष्यप्रकाशे तु षष्ठीतत्पुरुषः ॥

† स्वाश्रयतेजोभिन्नेति । तेजस्त्वादिति हेतुः 'प्रकाशाश्रयवद्वे'ति दृष्टान्तांश एव सम्बध्यते, न तु ब्रह्मांशेऽपीति भावः ॥

‡ ब्रह्मधर्माः स्वाश्रयात्मका इति । 'प्रकाशाश्रयाः सूर्यादयः प्रकाशेन न भिन्नाः' इत्यणुभाष्येण, भाष्यप्रकाशोक्तेन, प्रकाशस्याश्रयाः, त इव प्रकाशाश्रयवदिति विग्रहेण च ब्रह्म स्वधर्मेभ्यो न भिन्नं तेजस्त्वात् प्रकाशाश्रयवदिति प्रयोग एवोचितः प्रतिभाति, परन्तु ब्रह्मधर्मा ब्रह्मणः सकाशाद् भिन्ना अभिन्ना वेति प्रश्नप्रत्युत्तरणाय 'प्रकाशाश्रयवद्वे'ति सूत्रस्यावतीर्णतया प्रत्युत्तरप्रतिपत्तिसौकर्याय ब्रह्मधर्माः स्वाश्रयात्मका इति धर्मविशेष्यकवाक्यप्रयोग एव विशेषतः प्रकरणानुगुणः । अत एव भाष्यप्रकाशेऽपि ब्रह्मधर्मा ब्रह्मणो भिन्नाभिन्ना इति पश्चादुक्तम् । यद्यपि भेदाभेदौ साधयितुं प्रकृतसूत्रस्योपन्यासादिहाऽपि भिन्नाभिन्ना इत्येव वक्तुं युक्तं, परन्तु प्रकाशाश्रयवदिति दृष्टान्तमहिम्ना साध्यमानोऽभेदस्तादात्म्यरूप एव सिद्ध्यति, तादात्म्यं च भेदसहिष्णुरभेद इति स्वाश्रयात्मका इत्युक्तेऽपि न क्षतिः ॥

सति स्वाश्रयाभिन्नतेजस्त्वादित्यर्थो भवति ॥

अथवा तेजोऽतिरिक्ते वस्तुनि नैवं दृश्यत इत्यत आह हेतुं ब्रह्मण्येव तेजःशब्दवाच्यत्वादिति वा । 'यदादित्यगत'मिति वाक्ये तेजसः स्वधर्मत्वेन निरूपणाद्ब्रह्मापि तेजोरूपमिति भावः । तस्मात्तादृशधर्मविशिष्टमेव तद्वस्तु श्रुत्यैकमेवेति प्रतिपाद्यते । तथा चैवकारेण भगवद्धर्मातिसुवर्णसूत्रम् ।

(ननु भगवद्धर्मेषु तेजस्त्वस्याप्रसिद्धत्वात्स्वरूपासिद्धत्वमाशङ्क्य ?) व्याख्यानान्तरमाहुः—अथवेत्यादि । 'परो दिवो ज्योतिर्दीप्यते' 'परं ज्योतिरुपसंपद्ये'त्यादौ 'तेजोमयं विश्वमनन्तमाद्यं तेजोराशिं सर्वतो दीप्तिमन्त'मित्यादौ ब्रह्मणि तेजस्त्वस्य सिद्धत्वादित्यर्थः । भाष्योक्तसंग्रहायाहुः—तेजःशब्देति । ब्रह्मणस्तेजस्त्वमुपपादयन्ति—

हरितोषिणी ।

व्यानमाहुः—वाशब्द इति । हेतुरिति । सूत्रे *तेजस्त्वादिति हेतुप्रयोग इत्यर्थः । हेत्वर्थमाहुः—तथा सतीति । स्वाश्रयेति । प्रकाशाश्रयेत्यर्थः ॥

ब्रह्मणि तेजस्त्वं नास्तीति शङ्काव्युदासाय हेतोर्व्याख्यानान्तरमवतारयन्ति—अथवेति । ब्रह्मण्येव हेतुमाहेत्यर्थः । तथा च तेजस्त्वादिति हेतुः 'परो दिवो ज्योतिर्दीप्यत' इति श्रुत्या ब्रह्मण्यस्तीति भावः । तेजस्त्वादित्यस्य व्याख्यानान्तरमाहुः—तेज इति । धर्मधर्मिणोरैक्यं बोधयन्ति—यदादित्येति । ऐक्ये हेतुमाहुः—तस्मादिति । श्रुत्येति । 'एक-

गङ्गाधरभट्टी ।

स्वाश्रयाभिन्नेति । स्वं प्रकाशः, तदाश्रयरूपं तेजश्च परस्परमभिन्नमित्यर्थः । ननु तेजसो भगवदीयत्वे सूर्यनाशेऽपि तेजस्त्विष्टेर्भगवद्धर्माणां नित्यत्वादिति चेन् इत्यापत्तिरित्याहुः—प्रलये इति । तेजस्त्वादिति । 'तेजोमयं विश्वमनन्तमाद्यं' 'तेजोराशिं सर्वतो दीप्तिमन्त'मित्यादि श्रुतेः, 'परो दिवोज्योतिर्दीप्यते' 'परं ज्योतिरुपसंपद्ये'त्यादिश्रुतौ तेजोऽपरपर्यायाच्च ॥

---

टिप्पणी ।

* तेजस्त्वादिति हेतुप्रयोग इति । प्रकाशाश्रयसूत्रानुसार्येनुमानमपि यदि प्रयुज्यते तदा तेजस्त्वादित्येतावानेव हेतुः प्रयोक्तव्यो, नत्वधिक इति । एतेन 'स्वाश्रयाभिन्नतेजस्त्वा'दिति मूलोक्तिः सिद्धे भेदे तदर्थकथनपरेति फलति । अत एवाभेदसाधकहेतोः स्वरूपे 'स्वाश्रयाभिन्ने'त्यभेदे प्रविष्टे हेत्वसिद्धिरित्याशङ्काऽपि नापतति । अत्र प्रभञ्जनः प्रकारान्तरेण समाधत्ते ॥

रिक्तमेव वस्तु व्यवच्छिद्यते, न तु तेऽपि । तेषां स्वरूपान्तःपातित्वात् । न हि मध्यन्दिने नभोमण्डले सूर्य एवास्तीतिवाक्ये तत्प्रभासत्ताऽपि निषिध्यते । अत एव द्वितीयस्कन्धे ब्रह्मस्वरूपनिरूपणे राज्ञा पृष्टः श्रीशुकस्तन्निरूपयन्नित्याह—'न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिता' इत्युपक्रम्य 'युक्तं भगैः स्वैरितरत्र चाध्रुवैः स्व एव धामन् रममाणमीश्वरम्' तथा च भगवद्धर्मा भगवत्स्येव नित्या एव, येषु च भगवान् स्वैश्वर्यादिधर्मान् ददाति तेषु यावत्कालं भगवदिच्छा तावदेव ते तिष्ठन्तीति फलितम् । दशमस्कन्धे चाक्रूरदृष्टस्वरूपनिरूपणे 'श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया । विद्ययाऽविद्यया

सुवर्णसूत्रम् ।

यदादित्स्येति । अत एवेति । ब्रह्मणि स्वात्मकधर्मसद्भावादेव । इतीति । वक्ष्यमाणम् । भगैः स्वैरिति । स्वाभिन्नैर्भगशब्दवाच्यैर्धर्मैः । फलितमिति । तथा च सूर्येऽपि तेजसस्तावदेव स्थितिरिति तस्य तेजसो भगवदीयत्वं निर्बाधमिति न तत्रोपचार इत्यर्थः । वाक्यान्तरेणापि भेदाभेदं समर्थयन्ति—दशमेत्यादि । अत्र पूर्ववाक्ये 'श्रिये'त्यादितृतीयया भेदो निर्दिष्टः, द्वितीयवाक्ये 'चाणिमाद्यै'रिति बहुवचनेन बहुत्वं, मूर्तिपदेनाकारस्योल्लेखात्करादीनामभिन्नत्वं चोच्यते, तेन तथात्वं सिद्ध्यतीत्यर्थः । एवं धर्माणां तदात्मकत्वे

हरितोषिणी ।

मेवाद्वितीय'मिति श्रुत्येत्यर्थः । न तु तेऽपि । न तु भगवद्धर्मा अपि । अत्र दृष्टान्तमाहुः—न हीति । अत एवेति । भगवद्रूपधर्माणां भगवति वृत्तित्वादेव । युक्तमिति । स्वैः स्वाभिन्नैरितरत्राध्रुवैरेतादृशैर्भगैर्धर्मैर्युक्तमेतादृशम् । ईश्वरमित्यग्रेणान्वयः । अन्यत्राप्येवमेवोच्यत इत्याहुः—दशमस्कन्धेति । श्रियेति । अत्र तृतीयान्ताभिः श्रीपुष्ट्या-

गङ्गाधरभट्टी ।

*न तु तेऽपीति । ननु 'सजातीयविजातीयस्वगतद्वैतवर्जित'मितिनिबन्धविरोध इत्यत आहुः—तेषामिति । खण्डपुत्रिकादिवद्वस्तुभेदाभाव इति भावः । यां चेति । (?) 'आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च त्रिविधभेदविवर्जितात्मे'त्यनेन विजातीयभेदाभावोक्तेरनुचराणां वेदादीनां चेदग्विद्यादीनां चानन्दरूपत्वमिति तात्पर्यम्, 'एकमेवाद्वितीयम्' 'द्वितीयाद्वै भयं भवति' 'अथ योऽन्यां देवतामुपास्ते' 'सर्वं खल्विदं ब्रह्मे'त्यादिश्रुतिभ्यश्चेति दिक् ॥

---

टिप्पणी ।

* न तु धर्मा अपि व्यवच्छिद्यन्त इत्यर्थिकेतः परं काचन पङ्क्तिः पतिता प्रतिभाति ॥

शक्त्या मायया च निषेवित'मितिवाक्यैकवाक्यतायां लोकसम्मता-ध्यायत्रयीया'ऽणिमाद्यैर्महिमभि'रित्युपक्रम्य 'मूर्तिमद्भिरुपासिताः' 'सत्यज्ञानानन्तानन्दमात्रैकरसमूर्तय' इतिवाक्यैकवाक्यतायां च सर्वेषां धर्माणां सच्चिदानन्दरूपत्वं सिद्ध्यति । लीलाया अप्येवंरूपत्वादेव नित्यता मन्तव्या ॥

(४४) ननु गिरिकाननयमुनापुलिनपशुपक्षिमनुजादिसम्बन्धिनी हि लीला । सा च तेषामनित्यत्वे कथं नित्या भवेत्? ननु साध्वी

सुवर्णसूत्रम् ।

निर्णीते देहस्यापि स्वरूपात्मकत्वात्तद्धर्मरूपाया लीलाया अपि नित्यत्वं निर्णीतमतिदिशन्ति —लीलाया इत्यादि । एवंरूपत्वादिति । सच्चिदानन्दरूपत्वाद्भगवदेकनिष्ठत्वाच्चेत्यर्थः । अत्र भगवल्लीला नित्या, *भगवदेकनिष्ठत्वात् तज्ज्ञानवदितिरूपमनुमानं फलति ॥

(४४) ननु श्रवणादिविषयनिर्द्धारोऽत्र ग्रन्थकरणप्रयोजनं, तत्तु धर्मविशिष्टब्रह्मस्वरूपविचारादेव सिद्धमिति लीलानित्यत्वमपि धर्मविचारेण सिद्धमिति तन्नित्यतानिरूपणप्रतिज्ञा नात्यावश्यकीत्याकाङ्क्षायां पूर्वपक्षमुखेन तदावश्यकत्वं सूचयन्ति—ननु गिरीत्यादि । अयमर्थः—लीला †नामानायासेन क्रियमाणं कर्म । तच्चोत्क्षेपणादिभेदेन विसर्गरूपत्वेऽभि-

हरितोषिणी ।

दिभिर्निषेवितमित्युक्त्या श्रीपुष्टादीनामीश्वराद्भिन्नत्वं प्रतीयते, भेदे तृतीयाऽभिधानात् । सत्यज्ञानादीनां तु तदभिन्नत्वं प्रतीयते वाक्यैकवाक्यतायामिति द्विवारमुक्तम् । तेन पूर्वेण भेदो, द्वितीयेनाभेदः सूचित इति बोध्यम् । एवं किं सिद्धमित्यत आहुः—सर्वेषामिति । भिन्नाभिन्नानामित्यर्थः । एतावता धर्माणां नित्यत्वं साधितम् । इदानीं लीलाया नित्यत्वं साधयन्ति—लीलाया इति । एवंरूपत्वादिति । भगवद्धर्मत्वात् सच्चिदानन्दरूपत्वादित्यर्थः । एतेन यथा 'प्रकृतिवद्विकृतिः कर्तव्ये'त्यतिदेशस्तथाऽत्राप्यतिदेशः सूचितः ॥

(४४) ननु लीलानित्यत्वं दुर्निरूपमिति शङ्कते—नन्विति । कथं नित्या भवेदित्ये-

टिप्पणी ।

* भगवदेकनिष्ठत्वादिति । अत्र भगवदेकनिष्ठत्वं समवायेन स्वरूपेण वा । भगवदेकधर्मत्वं फलति । आकाशादिष्वप्यत एव न व्यभिचारः, तेषां भगवन्निष्ठत्वेऽपि भगवद्धर्मत्वाभावात् । 'तदेजती'तिश्रुत्युक्तैजनादेर्दिगादिवृत्तित्वेऽप्येकपदाविरोधश्च ॥

† अनायासेन क्रियमाणं कर्मेति । लीला तु स्वानन्दरसास्वादः, परन्तु स आस्वाद ईदृशैरेव कर्मभिर्भवतीति प्रकारकथनमिदम् । अत एव 'लीला हि स्वानन्दरसास्वाद' इति प्राभजनोक्त्या न विसंवादः । वस्तुतस्तु कर्मणामप्यानन्दरूपत्वान्न तथा ॥

लीलाविशिष्टभगवत्स्वरूपस्य नित्यताप्रतिपादनम्। ते वाणी, यत्तन्नित्यताशुश्रूषामपि तवाभिव्यनक्ति। तन्नित्यता च प्रमाणादेवावसीयत इति। तथाहि—'जयति जननिवासो देवकीजन्मवादो यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम्। स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्द्धयन् कामदेव'मिति वाक्ये भिन्नकालीनानामपि द्वारकागोकुलमथुराधिकर-

सुवर्णसूत्रम्।

जल्पशिल्पभेदेन या तत्र तत्र पर्य्यविधत्वेनोच्यमानमपि *प्रतियोगिसापेक्षतन्निरपेक्षभेदेन द्विविधम्। तत्र द्वितीयं तु भगवदेकतत्त्वत्वात्, 'तदेजती'त्यादिश्रुतिसिद्धत्वादीश्वराप्राकृतत्वस्य पूर्वं व्यवस्थापनाच्च न पर्यनुयोगार्हम्, अतः प्रथममेव पर्यनुयुङ्क्ते—कथं नित्या भवेदिति। तथा च अनित्या; प्रतियोग्यन्तरसापेक्षत्वाचत्संयोगवदित्येवं प्रतिसाधनस्य विद्यमानत्वान्नित्यता दुर्घटेति। तस्य प्रश्नस्याक्षेपरूपत्वेन दूष्यत्वेऽपि फलानुभवादिनित्यत्वसाधनाभावे सम्यन्ध्यनित्यतायां 'सोऽश्नुत' इति श्रुत्युक्तपरमफलस्य न नित्यत्वसिद्धिस्तत्सिद्धौ चैतत्सिद्धिरिति तां साधयितुं तद्धेतुत्वाच्चां पूर्वपक्षोक्तिमभिनन्द्य शास्त्रस्यास्य श्रौतत्वाल्लौकिकयुक्तिविरोधोऽकिञ्चित्कर इति शब्देन तयोर्नित्यतासाधनप्रतिज्ञां सूचयन्ति

हरितोषिणी।

तदन्तः शङ्काग्रन्थः केषाञ्चिद्भ्रमनिवारणार्थं विषयान्तरसंचारराहित्यार्थं च। ननु साध्वीत्यादि, अभिव्यनक्तीत्यन्तो लीलानित्यतासाधनप्रतिज्ञाग्रन्थः। अत्र समाधानं कर्तुं लीलाया नित्यत्वं साधयन्ति—तन्नित्यता चेति। श्रीभागवतपद्यमेव लीलानित्यतायां प्रमाणयन्ति—जयतीति। जयतीति पदं नित्यतां बोधयतीत्याहुः—भिन्नकालीनानामिति।

गङ्गाधरभट्टी।

(४१) एककालीनेति। अत्र स्वविध्यभावेऽपि एककाली चासाविनश्चेति समासः। एक उत्पत्तिकालोऽस्येत्यर्थे 'अत इनिः'। इन ईशः। 'इनः सूर्ये नृपे पत्या'विति कोशात्। असताऽप्यवयवार्थेन शब्दा उत्पाद्यन्ते रथन्तरादिवत्, किं पुनर्यथाकथंचित् संभवे। 'बालवयो विदूरं च प्रकृत्यन्तरमेव वे'ति 'विदूराञ्ञ्य' इति भाष्यतुल्यन्यायात्। ईशपदेन स्थिरो लक्ष्यत इति दिक्। गौण एव न तु मुख्य इति। ननु व्याकरणस्य शक्तिग्राहकत्वोक्तिविरोधः। न विरोधः। 'वर्तमानव'दित्यतिदेशेनैव गौणत्वोक्तेः॥

---

टिप्पणी।

* प्रतियोगिसापेक्ष इति। सापेक्षत्वमेव, न तु प्रतियोगिनिष्ठत्वम्। यथा मृगयाऽऽदिलीला मृगादिसापेक्षाऽपि न तन्निष्ठा, किन्तु राजनिष्ठा। अतः पूर्वोक्तभगवदेकनिष्ठपदस्य यथाश्रुतार्थग्रहणेऽपि नैव दोषः॥

णकलीलानां कर्तुर्भगवत उत्कर्षेण स्थितेः स्वकथनसमयेऽपि वर्तमानत्वं जयतीति वर्तमानप्रयोगेण निरूपयन्नेव श्रीशुकस्तत्र तत्र लीलानामपि तथात्वं बोधयितुमेककालीनत्ववाचकशतृप्रत्ययान्तपदे प्रयुक्तवान्—अस्यन्निति, वर्द्धयन्निति च । तथा च कथनसमयेऽतीतत्वेन प्रतीतानामपि लीलानां तदा वर्तमानत्वं प्रतीयते । तच्च नित्यतायामेव घटते, नान्यथा ॥

सुवर्णसूत्रम् ।

नन्वित्यादि, *तन्नित्यता च प्रमाणादेवावसीयत इत्यन्तम् । अत्रेदं बोध्यम्—लीलातत्सम्बन्धिनोर्नित्यतायां हि बाधकं भवे(व)द्यथासंभवं कर्तुरनित्यत्वं वा भवेत् । स्वरूपतः सम्बन्ध्यनित्यत्वं वा, प्रमाणाभावो वा, प्रमाणतात्पर्याभावो वा, तस्य तात्पर्यान्तरं वा, गौणः प्रयोगो वा, उत्पत्तिमत्त्वं वा, नाशप्रतियोगित्वं वा, कल्पितत्वं वा, अनुभवो वा, १० तन्नित्यताभावन उपासकेऽपराधप्रसक्तिर्वा, तेष्वप्रसादो वा, इदानीमिदमित्याकारको लीलास्थानामवतारकालीनानां वा, कादाचित्कत्वेनानुभवो वा, प्रमाणदौर्बल्यं वा, अधिष्ठानध्वंसप्रयुक्ता लीलासम्बन्ध्यनित्यता वा, साधारणजनदृश्यत्वं वा, लौकिकत्वं वा, भगवद्भिन्नत्वं वा, भूतार्थप्रयोगो वा, तथाऽनुभवो वा, २० भविष्यदर्थकः प्रयोगो वा, भविष्यत्त्वानुभवो वा, जन्यभावत्वेन नश्वरत्वेन व्याप्तिर्वा, कर्मस्वभावमर्यादा वा, प्रत्यक्षबाधो वा, लौकिकेष्वपि भक्तानां लीलासन्बन्धित्वेन बुद्धिर्वा, प्रमाणयोरितरेतरविरोधो वा, लीलास्थानां नाशानुभवादिर्वेति २८ । एवमेतेष्वष्टाविंशतिषु कर्तुरनित्यत्वं स्वरूपतः सम्बन्ध्यनित्यत्वं प्रमाणाभावं चेति त्रयं निरस्यन्ति—तथा हीत्यादि । स्वकथनसमय इति । अवतारतिरोभावावच्छिन्ने शुकोक्तिसमये । प्रतीयत इति । शब्दात्प्रतीयते । नान्यथेति । कर्तृस्वरूपानित्यत्वेऽधर्मानित्यत्वे व्रजपुरवनितानामनित्यत्वे च । तथा च वर्तमानार्थकक्रियात्रयप्रयोगान्यथानुपपत्त्यैव तत्कर्मरूपसम्बन्धिनित्यत्वं सिद्धमित्यर्थः । न चाधर्मनित्यत्वे तन्निरासस्य निरासार्थकावतारस्य वैयर्थ्यादिकं शङ्क्यम् । आविर्भावतिरोभावाभ्यां तस्यापि निरसनीयत्वात् ॥

हरितोषिणी ।

लीलानामित्यनेनान्वयः । कर्तुरिति । तादृशलीलाविशिष्टभगवतो जयतिपदव्याख्याया उत्कर्षेण स्थितेः श्रीशुकोऽवतारतिरोभावानन्तरं परीक्षितं प्रति स्वकथनसमयेऽपि वर्तमानत्वं निरूपयन्नित्यर्थः । शतृप्रत्ययान्तपदद्वयमेवाहुः—अस्यन्नित्यादि । एवं च वर्तमानार्थकक्रियापदत्रयप्रयोगेण लीलाया नित्यत्वं बोध्यम् ॥

---

टिप्पणी ।

* तन्नित्यता चेति । प्रापञ्चिकपदार्थाः कारणात्मना नित्याः, न तु स्वस्वरूपेण । लीलास्थास्तु स्वस्वरूपेण नित्याः । अत एषां नित्यत्वं पृथक् निरूप्यते ॥

किञ्च कर्तुरेवेदानीं सत्त्वं चेदभिप्रेतं स्यान्न लीलानामपि, तदा ता न निरूपयेदेव। परिचायकत्वेन तन्निरूपणे वा तत्कर्ता जयतीत्येव वदेत्। एवं च सति गत्यन्तरसद्भावेऽपि यच्छत्रन्तस्यैव निरूपणम्, तेन लीलानामेव वर्तमानत्वं मुख्यतयाऽभिप्रेतमित्यध्यवसीयते। न च विशेषणत्वेनामुख्यत्वमिति वाच्यम्। 'दण्डी प्रैषानन्वाहे'त्यत्र यथा प्रैषानुवा-

## सुवर्णसूत्रम्।

ननु कर्तृनित्यत्वायैवमत्र प्रयोगो, न तु लीलानित्यत्वे तस्य तात्पर्यमित्यत आहुः—किञ्चेत्यादि। ननु तादृशप्रयोगस्य न लीलानित्यत्वे तात्पर्यं, किन्तु कर्तृपरिचायकत्व इत्याशङ्कायामाहुः—परिचायकत्वेनेत्यादि। एवं चेति। तथाऽनुक्त्वेत्यर्थः। सतीति पदं सद्भाव इत्यनन्तरं सम्बध्यते। ननु यदि लीलानित्यत्वमभिप्रेतं स्यात्तदा शत्रन्तद्वयं भगवद्विशेषणत्वेनामुख्यतया न वदेदतो नैवमिति शङ्कायामाहुः—न चेत्यादि। तथा च *'सविशेषणे ही'ति न्यायेन लीलानित्यत्व एव तात्पर्याद्गौणत्वं न दोषायेत्यर्थः॥

## हरितोषिणी।

ननु भगवतो नित्यत्वेन तत्कालेऽपि सत्त्वेन वर्तमानप्रयोग इत्यत आहुः—किञ्चेति। निरूपणस्य लीलाया उपलक्षणत्वे तात्पर्यं, न तु नित्यत्व इत्याशङ्कते—परिचायकत्वेनेति। अनेन पुरुषेणैवमेवं कृतमित्येतादृशोऽयं पुरुष इति तत्कर्तृपरिचायकत्वेनेत्यर्थः। अत्र दूषणमाहुः—तत्कर्तेति। लीलाकर्तेत्यर्थः। एवं च सतीति। तत्कर्ता जयतीत्येवंरूपगत्यन्तरसद्भावे सतीत्यर्थः। यच्छत्रन्तस्यैवेति। अस्यन् वर्द्धयन्निति शतृप्रत्ययान्तस्यैवेत्यर्थः। अत्राशङ्कते—न चेति। विशेषणत्वेन शत्रन्तस्य भगवद्विशेषणत्वेन। समाधानमाहुः—दण्डीति। अग्निष्टोमयज्ञे मैत्रावरुणनामक ऋत्विगस्ति। तस्य 'मैत्रावरुणाय दण्डं प्रयच्छती'ति श्रुत्या दण्डदानं विहितम्। तथा च दण्डी मैत्रावरुणोऽध्वर्युणा दत्तान् 'अग्नयेऽनुब्रूही'त्याकारकान् प्रैषाननु पश्चात् आह पुरोनुवाक्यामाहेत्यर्थः। 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यत्रेति। वाजपेये श्रुत्यादीनां(?) षोडशानां लोहितोष्णीषविशिष्टानां प्रचारः कर्मकरणं विधीयते तत्रोभयत्र चेत्यर्थः। यथेति। विशिष्टवि-

---

### टिप्पणी।

* सविशेषण इति। 'सविशेषणं हि विधिनिषेधौ विशेषणमुपसंक्रामतो विशेष्ये बाधके सती'ति न्यायः। इह समन्वयस्तु कामवर्द्धनादिलीलाविशेषणविशिष्टे भगवति 'जयति जननिवास' इति वर्तमानत्वविधिः सन्देहानुदयेन प्रयोजनाभावाद्बाधितः सन् विशेषणीभूते लीलांशे संक्रामतीति॥

दस्य 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यत्र च तत्प्रचारस्य च पूर्वसिद्धत्वेन न विधानं, किन्तु विशेषणस्यैव दण्डित्वस्य लोहितोष्णीषत्वस्य च, अपूर्वत्वात् । तथा भगवतो वर्तमानत्वे सन्देहाभावात्तत्तल्लीलाकरणस्यैव वर्तमानत्वस्यात्रापि निरूपणात् ॥

यद्यपि 'वर्तमानसामीप्ये वर्तमानवद्वे'त्यनुशासनाद्वर्तमानसामीप्यादेवात्राप्येवं प्रयोग इति वक्तुं शक्यम्, तथापि वक्ष्यमाणश्रुतिपुराणवाक्यैरसन्दिग्धं नित्यतया निरूपणादत्रापि तदेकवाक्यत्वार्थं वर्तमानत्वार्थ एव प्रयोग इति निश्चीयते । किञ्च तत्सामीप्येऽपि तथा प्रयोगस्य साधुत्वं तत्र ज्ञाप्यते । प्रयोगश्च सामीप्यगुणयोगाद्गौण एव, न तु मुख्यः । स च मुख्यार्थबाध एव कल्पयितुं युक्तः । तद्बाधप्रकारश्चाग्रे वक्ष्यते ॥

सुवर्णसूत्रम् ।

ननु प्रयोगस्य वर्तमानार्थकत्वे लीलानित्यत्वादिचिन्ता, सामीप्यार्थकत्वात्तत्सार्थक्याभाव इति व्यर्थोऽयमाडम्बर इति शङ्कायां तदुक्तमुपगम्याहुः—यद्यपीत्यादि । तथा च प्रयोगस्यार्थद्वयसाधारण्यादनिर्णायकत्वेऽपि प्रमाणान्तरोपष्टम्भादेवं निर्णय इत्यर्थः । नन्वेवं सति प्रमाणान्तरेण सर्वत्र तथा कल्पयितुं शक्यत्वादनुशासनवैयर्थ्यापात इत्यत आहुः—किञ्चेत्यादि । तत्रेति । अनुशासनसूत्रे हि वर्तमानातिदेशपूर्वकं प्रत्ययविधानाद्द्वयं बोध्यते—सामीप्ये तथा प्रयोगस्य साधुत्वं, मुख्यापेक्षया गौणत्वं च । तथा च प्रयोगसाधुत्वमात्रेण सूत्रसार्थक्येऽपि गौणत्वस्यापरिहारान्मुख्यासम्भव एव तदर्थप्रयोगादरणमुचितं, न तु तत्संभवेऽपीति सूत्राशयान्न वैयर्थ्यमित्यर्थः ॥

हरितोषिणी ।

धाने विशेष्यस्य विहितत्वादपूर्वस्य दण्डस्य लोहितोष्णीषस्य च विधानं तथाऽत्रापि लीलाकरणसम्बन्धि यद्वर्तमानत्वं तस्य निरूपणमित्यर्थः ॥

तत्प्रत्ययादिकं वर्तमानसामीप्यार्थकमित्युच्यत इत्याशङ्कते—यद्यपीति । उत्तरमाहुः—तथापीति । नन्वेवं सति यत्र सामीप्यार्थकत्वं तत्रापि वर्तमानार्थकत्वमुच्यते चेत् सूत्रप्रणयनं व्यर्थमित्यत आहुः—किञ्चेति । तत्र वर्तमानसामीप्यसूत्रे । प्रयोगश्चेति । शत्रादिप्रयोगश्चेत्यर्थः । सचेति । गौणप्रयोगश्चेत्यर्थः । नन्वत्रापि मुख्यार्थबाधः स्यादत आहुः—तद्बाधेति । मुख्यार्थाबाधेत्यर्थः ॥

(४५) अपि च दशमस्कन्ध एव नामकरणप्रस्तावे सर्वज्ञेन गर्गाचार्येण निरूपितम्—'बहूनि सन्ति नामानि रूपाणि च सुतस्य ते । गुणकर्मानुरूपाणि तान्यहं वेद, नो जना' इति । अत्र हि नाम्नां रूपाणां च बहूनामेव सन्तीति प्रयोगेण वर्तमानत्वं बोध्यते । तत्रापि गुणानामौदार्यादीनां कर्मणां कालियदमनादीनामनुरूपाणां तेषां तथात्वं बोध्यते । अनुरूपत्वं तु तत्समय-

भगवन्नाम्नां नित्यत्वलोकविलक्षणत्वानौपचारिकत्वादिप्रतिपादनम् ।

सुवर्णसूत्रम् ।

(४५) एवं कर्त्रनित्यत्वलीलासम्बन्धिस्वरूपानित्यत्वप्रमाणाभावप्रमाणतात्पर्याभावप्रमाणतात्पर्यान्तराख्यपञ्चदोषपरिहारेऽपि गौणप्रयोगात्मकषष्ठदोषपरिहारस्य प्रमाणान्तरसापेक्षत्वेन शैथिल्यात्तत्परिहारायोत्पत्तिमत्त्वनाशप्रतियोगित्वक्रमिकत्वानुभवलीलानित्यत्वभावनजन्यापराधप्रसक्त्युपासकाप्रसादकादाचित्कत्वानुभवरूपसप्तदोषपरिहाराय च लीलाप्रयुक्तानां नाम्नां तत्कर्तॄणां रूपाणां च प्रमाणान्तरेण वर्तमानत्वबोधनात्तेन लीलानित्यत्वमुपपादयन्तः पूर्वं गौणप्रयोगत्वं परिहरन्ति—अपि चेत्यादि । तथात्र रूपाणां नाम्नां च सामीप्याभावेन प्रयोगे गौणत्वस्य वक्तुमशक्यत्वाल्लीलानित्यत्वं निर्बाधमित्यर्थः । ननु पूर्वश्लोके 'जयती'तिप्रयोगाद्भगवत्स्वरूपस्येवात्र 'सन्ती'तिप्रयोगबलादस्तु रूपाणां नाम्नां च यथाकथञ्चिद्वर्तमानत्वं, तावता गुणकर्मादीनां कथं नित्यत्वसिद्धिरित्यत आहुः—तत्रापीत्यादि । तथा च तत्र यथा शत्रन्तप्रयोगस्य गौणत्वमाशङ्कितं तथात्र 'गुणकर्मानुरूपाणी'ति विशेषणे गौणप्रयोगत्वस्याशक्यवचनतया तद्बलात्तत्सिद्धिरित्यर्थः । तां व्युत्पादयितुमनुरूपत्वं विवरिष्यन्तो नाम्नां योगरूढत्वेन तादृशरूपवाचकत्वमेवानुरूपत्वमिति तदनुक्त्वा तत्प्रयोजकरूपानुरूपत्वस्य स्वरूपमाहुः—अनुरूपत्वं त्विति । तत्समययोग्येति । गुणकर्मसमययोग्येत्यर्थः । आदिपदेन गुणः । अत्र योग्यताया बाधाभावरूपत्वेन भगवता च स्वल्पेनापि रूपेण शकटभङ्गादिक्रियाकरणात् स्वरूपयोग्यतायाः सदा सत्त्वेऽपि सर्वदा तन्मात्रेण रूपेण सर्वक्रियाणामकरणात्तत्तत्समये तेन तेन रूपेण तत्तत्करणाच्च 'तत्समये'ति योग्यताविशेषणम् । 'आकारे'त्यादिकं तु योग्यताया

हरितोषिणी ।

(४५) प्रकारान्तरेण लीलाया नित्यत्वमुपपादयन्ति—अपि चेति । सन्तीति प्रयोगेणेति । वर्तमानार्थकलडन्तप्रयोगेणेत्यर्थः । एतेन गुणकर्मानुरूपनामान्यथानुपपत्त्या लीलानित्यत्वं साधितम् । नाम्नां योगरूढत्वं सूचयितुमनुरूपत्वस्यार्थमाहुः—अनुरूपत्वं त्विति । तत्समयेति । गुणकर्मसमयं योग्यो य आकार आकृतिः पूतनावधे बालाकृति-

योग्याकारक्रियादिमत्त्वम् । यथा गोवर्द्धनोद्धरणकर्मण्युच्छ्रितत्वमुद्धारुत्वं, तद्धारणक्रियावत्त्वं, सकलगोकुलजनाप्यायकत्वादिकं च । तथा चैतादृशानां नाम्नां वर्तमानत्वं तदैव स्यात्, यदि तत्प्रयोजकस्वरूप-

सुवर्णसूत्रम्।

एव विवरणमिति बोध्यम् । एतस्योदाहरणमाहुः—यथेत्यादि । गुणानुरूपत्वोदाहरणं तु यथा ब्रह्मण्यत्वगुणे ब्राह्मणपूजनादिषु प्रह्वत्वस्तुतिक्रियाशालित्वर्जुत्वादिकम् । नाम्नामनुरूपत्वं नूक्तमेव । तदेतदभिसन्धायाहुः—तथा चेत्यादि । एतादृशानामिति । नाम्नां तादृशस्वरूपवाचकानाम् । अयमर्थः—औत्पत्तिकादिसूत्रेषु शब्दार्थसम्बन्धानां नित्यताया उपपादितत्वेऽप्यर्थविषय आकृतौ सम्बन्धस्य *लक्षणादोषप्रस्तत्वेन तदनङ्गीकृत्य व्यासपादैः 'शब्द इति चे'दिति सूत्रे वैदिक्यां नित्यायां †व्यक्तावेव सम्बन्धोऽङ्गीकृत इति प्रकृते तादृशधर्मविशिष्टस्वरूपसत्त्व एव तद्वाचकनामसत्त्वं सिध्यति । तादृशरूपासत्त्वे स्वप्रयुक्तशब्दसत्तायां मानाभावेन तन्नामापि न स्यात् । रूपस्यानित्यत्वे तु नाम्नामप्यनित्यत्वापत्त्या 'सन्ती'ति प्रयोगोऽपि बाधितः स्यात् । गर्गकथनसमये तत्प्रत्ययाभावस्य सर्वजनीनत्वात् । तथा च जैमिनिमते यथाऽऽकृतिसत्त्वं, तथा व्यासमते गवादिव्यक्तिसत्त्वमिति सा यथा तत्तद्रूपादिविशिष्टैव सतीत्यतो विशेषणीभूताकारादिसत्ता प्राप्यते,

हरितोषिणी।

रूपा, तत्र या क्रिया स्तनपानरूपा, तद्वत्त्वमित्यर्थः । क्रियादिमत्त्वमिति । आदिपदाद्गुणो बोध्यः । उदाहरणमाहुः—यथेति । इदं च क्रियानुरूपनाम्नामुदाहरणम् । ब्रह्मण्य इत्यादीनां ब्राह्मणपूजनादि प्रह्वत्वादिकमनुक्तमपि बोध्यम् । पूर्वोक्तं सर्वं विशदयन्ति—तथा चेति । वर्तमानत्वं स्यादिति । लीलाया नित्यत्वं विना वर्तमानत्वं न स्यादिति भावः ।

---

टिप्पणी।

* लक्षणादोषेति । व्यक्तेराक्षेपलभ्यत्वाभ्युपगमेऽप्याक्षेपशब्दार्थोऽनुमानमर्थापत्तिर्वा वाच्यः । तत्राद्ये, सर्वत्रानुमानविधयैवार्थबोधकत्वाच्छब्दस्य प्रमाणान्तरत्वभङ्गः । अन्त्ये तु लक्षणायामेव पर्यवसानम् । किञ्च वृत्तिजन्यपदार्थज्ञानस्यैव शाब्दबोधहेतुत्वाल्लक्षणेतरवृत्तेश्चेहोपयोगासंभवादपि लक्षणास्वीकरणमावश्यकम् । अत एव मण्डनमिश्रैर्लक्षणाऽभ्युपेयते ॥

† व्यक्तावेव सम्बन्ध इति । 'यः सिकरेताः स्या'दितिश्रुत्युक्तस्य सिकरेतस्त्वस्य जातित्वाभावादनित्यत्वाच्च नैतेन सह शब्दस्य नित्यसम्बन्धः संभवतीति वैदिकनित्यव्यक्तौ सम्बन्धाभ्युगम आवश्यकः । वैदिकी नित्यव्यक्तिसृष्टिस्तु 'यत्पुरुषेण हविषा देवा' इति नित्यपुरुषात्मकहविरादिकथनेन पुरुषसूक्ते स्पष्टैव ॥

क्रियादीनां वर्तमानत्वं स्यात् । अन्यथा कदाचित्क्रियानिवृत्तौ तत्प्रयुक्तं तन्नामापि तदा न स्यात् । पाचकपाठकवत् ॥

ननु यथा लोके पाकानुकूलक्रियाराहित्यदशायामपि पाचकमाकारयेदित्यादिप्रयोगो यदाकदाचित्तद्वत्त्वेन तदानीमपि तथोपचारतस्तथाऽत्रापि कदाचिद्गुणकर्मयोगात् प्रवृत्तस्य नाम्नो गुणकर्मराहित्यदशायामप्युपचारात् प्रयोगसंभवेन सन्तीत्यस्योपपत्तेर्न तन्नित्यत्वमायातीति

सुवर्णसूत्रम् ।

तथात्र मुख्यतया 'सन्ती'तिप्रयोगेणोक्तविशेषणविशिष्टस्वरूपसत्तायां विशेषणत्वेन लीलाया अपि वर्तमानत्वं प्राप्यत इत्यर्थः । ननूक्तसूत्रे 'अतः प्रभवा'दित्यनेन वेदशब्देभ्यो जगदुत्पत्तिमात्रं कथ्यते, अतः कथं नित्यसृष्टिसिद्धिः, तदभावे च कथं व्यक्तौ सम्बन्धसिद्धिरिति चेत्, न; प्रभवशब्दस्य ज्ञानविषयत्वमात्रपरत्वात् सुखेन तत्सिद्धिः । न चात्र तादृशतत्सृष्टौ मानाभावः शङ्क्यः । अनुकृत्यधिकरणे सर्वस्य भगवदनुकारितायाः सिद्धत्वेन पुरुषसूक्ते तद्विवरणभूते द्वितीयस्कन्धाध्याये च यज्ञसंभाराणां पशुवनस्पतिप्रभृतीनां ब्रह्मणा दृष्टत्वेन तेषामेवात्र प्रमाणत्वात् । न च समाननामरूपत्वसूत्रात् प्रवाह एव शक्तिरिति व्यासाभिप्रायः शङ्क्यः । तस्य पक्षान्तरत्वात् । 'आवृत्तावप्यविरोध' इतिसूत्रस्थापिशब्देन तस्य पक्षस्य गौणत्वनिश्चयात् । अतः 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पय'दितिश्रुत्युक्तसृष्ट्यन्तरविषयत्वात्प्रवाहशक्तिपक्षस्य न पूर्वोक्तबाधकत्वमिति तदनुरूपादिसत्ताप्रयुक्तं लीलानित्यत्वमविवादम् ॥

औपचारिकप्रयोगेण नामादिसत्तामुपपादयन्नुक्तविशेषणेन लीलानित्यत्वासिद्धिं शङ्कते —नन्वित्यादि । तथोपचारत इति । गौण्या आपादनमुपचारः, सा च छत्रिणो यान्तीत्यादौ यथा काचित्केन लिङ्गेन तथाऽत्र कादाचित्केन लिङ्गेन प्रयोगे ज्ञेया । न तन्नि-

हरितोषिणी ।

तदेव विशदयन्ति—अन्यथेति । तथा च पाकादिक्रियासत्त्व एव पाचक इति नाम, अन्यथा नास्तीति भावः ॥

क्रियाभावेऽपि नामास्तीति शङ्कते—नन्विति । यदाकदाचिदिति । पूर्वं यदाकदाचित्पाकादिक्रियावत्त्वेन तदानीमपि तादृशक्रियाराहित्यदशायामपि तथोपचारतो गौण्यापादनरूपोपचारात् । यथा प्रयोग इति पूर्वेणान्वयः । दार्ष्टान्तिके योजयति—तथाऽत्रापीति । भगवद्विषये इति । नाम्न इति । गोवर्धनधारी कालियदमन इत्यादिनाम्नः । उपपत्तेरिति । नाम्नो वर्तमानत्वोपपत्तेरित्यर्थः । न तन्नित्यत्वमिति । न लीला-

चेत्, मैवम्; औपचारिके प्रयोगे नामत्वाभावात्। तस्य मुख्ययैव वृत्त्या बोधकत्वात्। लोके नरसिंहादिनामानि तु डित्थडपित्थादिनामवद्रूढ्यैव तद्वाचकानि, न तूपचारतः। केवलनरेऽप्यशूरेऽपि च तथा प्रयोगात्। अत एव लौकिकपुरुषे प्रयुक्तानि श्रीकृष्णेत्यादीनि नामानि न भगवन्नामानि। तेषां सदानन्दरूपत्वाद्यर्थवाचकत्वेन लौकिकपुरुषे च तदभावेन तदनर्थको लौकिक एव तत्सरूपः शब्दविशेषः स इति

सुवर्णसूत्रम्।

त्यत्वमिति। न लीलानित्यत्वम्। अत्र समादधते—मैवमित्यादि। औपचारिके काश्चित्क्रियया प्रयुज्यमाने पाचकादिपदे नामत्वाभावान्नाम्नो मुख्यवृत्त्यैव बोधकत्वादत्र च नामपदान्न पाचकादिदृष्टान्तेन प्रत्यवस्थानमुचितमित्यर्थः। ननु नाम्नामपि मुख्यवृत्त्या वाचकत्वं न नियतं, लोके नरसिंहादिनाम्नां शूरादिपूपचारादपि प्रयोगदर्शनादिति शङ्कायामाहुः—लोक इत्यादि। रूढ्येति। संकेतात्मिकया। तत्र गमकं—केवलेत्यादि। सिंहाकाराद्यवयवशून्ये सादृश्यशून्ये च तथा प्रयोगात्। तथा च यत्र तेषामौपचारिकत्वं, न तत्र तेषां नामत्वं, यत्र पुनर्नामत्वं न तत्र तेषामौपचारिकत्वमतो न नियमभङ्ग इत्यर्थः। ननु भवतु नाम्नां मुख्यवृत्त्या वाचकत्वं, तथाऽपि तेषां लौकिकपुरुषे प्रयोगान्न केवलमलौकिकत्वम्। तथा च लौकिकपदार्थशास्त्रपु नष्टेपु तन्नामापि नश्यति। यथा 'तेषां तु पुत्रपौत्राणां गोत्राण्यपि न शृण्महे' इत्यादि। एवं सति प्रलय इवान्यदाऽपि नामविषयकसंस्कारनाशे नाम्नामपि नाश इति कथं तेषां नित्यत्वमित्याशङ्कायां भगवन्नामसु लोकसाम्यमात्रं, न तु लौकिकत्वमपीति नात्र नाशशङ्केत्याशयेनाहुः—अत एवेत्यादि,

हरितोषिणी।

नित्यत्वमित्यर्थः। समाधानमाहुः–मैवमिति। औपचारिक इति। केनचित्पुरुषेण पूर्वं पाकादिकं कृतं तस्मिन् पुरुषे प्रयुक्ते पाचक इतिपद इत्यर्थः। तस्येति। नाम्नः। तथा च पाचकादिपदे नामत्वाभावाद्दृष्टान्त एवात्र न संभवतीति भावः। ननु लोकेऽपि शूरादिवाचक औपचारिके नरसिंहादिपदे नामत्वमस्तीत्यत आहुः—लोक इति। न स्थिति। सिंहअवयवार्थाभावादेव नोपचारः संभवतीति भावः। रूढित्वे हेतुमाहुः—केवलेति। सिंहनखसदृशनखानि पुरश्चरणादिना कस्मिंश्चित्पुरुषे नखवृद्धौ सत्यामिति तद्भिन्ने केवल इत्यर्थः। अशूरेऽपि चेति। शूरेऽपि सिंहसादृश्यसत्त्वाचद्भिन्न इत्यर्थः। तथेति। नरसिंहनाम्नः प्रयोगात्। अत्रोपष्टम्भकमाहुः—अत एवेति। प्रयुक्तानीति। डित्थादिपदवत्प्रयुक्तानीत्यर्थः। तेषाम्। भगवद्वाचकानां द्वर्यादिनाम्नाम। तदभावेन। सदानन्दरूपत्वाद्यर्थवाचकत्वाभावेन। तत्सरूपः। भगवद्वाचकश्रीकृष्णेतिशब्दसरूपः। स इ-

मन्तव्यम् । भगवन्नामानि त्वखण्डशब्दब्रह्मरूपाणि । यथा भगवत्स्वरूपे शरीरत्वभानं ग्राहकदोषात्, तथा नामस्वपि लौकिकशब्दत्वेन भानं तद्दोषादेवेत्यादि प्रपञ्चितं पितृचरणैः श्रीभागवतविवरणे । तेन स्वरूपवन्नाम्नामपि सर्वेषां नित्यता मन्तव्या ॥

ननु 'गुणकर्मानुरूपाणी'ति वचनाद्गुणकर्मकरणानन्तरभाविनां नाम्नां कथं ब्रह्मत्वं, तस्य त्रैकालिकाबाधविषयत्वादिति चेत्, न; स्वरूपवत्कर्मणामपि प्रादुर्भावेन तदनुरूपनाम्नामपि प्रादुर्भाव एव परं, न तूत्पत्तिः ।

सुवर्णसूत्रम् ।

मन्तव्यमित्यन्तम् । अत एवेति । लौकिकनाम्नां डित्थादिपदवत् कल्पितत्वादेव । तर्हि किं तेषां स्वरूपमत आहुः—तेषामित्यादि । तेषामिति । भगवन्नाम्नाम् । तथा चार्थभेदेन पदभेदात्तथा मन्तव्यमित्यर्थः । ननु नानार्थस्थलेऽर्थभेदेऽप्यानुपूर्व्यैक्येन पदैक्यदर्शनान्न शब्दभेदो युक्त इत्यत आहुः—भगवन्नामानीत्यादि । तेनेति । अखण्डशब्दब्रह्मात्मकत्वेन । तथा च नित्येनार्थेन सह नित्यसम्बन्धाप्रसिद्धेः स्वरूपभेदे वर्णानुपूर्व्या अप्रयोजकत्वात्प्रत्यभिज्ञाया न पदैक्यसाधकत्वमिति लौकिकानां भिन्नत्वात्तन्नाशेऽपि यथा 'वाचा विरूपनित्यये'त्यादिश्रुतिबलाद्वेदस्य यथावस्थितस्यैव नित्यत्वं तथा नाम्नामपीति न भगवन्नामसु दोषसङ्क्रम इति भावः । न च नानाऽर्थन्यायः शङ्क्यः । तत्र कस्याप्यर्थस्य गङ्गापदात्तीरस्येवार्थान्तरप्रतीतिपूर्वकप्रतीतिकत्वादर्शनात् । सर्वासामाकृतीनां तुल्यतयैकत्रैकस्यैवैकतराभावेन सत्त्वाभावादाकृत्यधिकरणन्यायेनाक्षेपलभ्यत्वासंभवात् सर्वप्रवाहतौल्येन समाननामरूपसूत्रस्यापि तूष्णीकत्वाशार्यप्रयोगसाधारण्यात्, प्रकृते त्वाकृतिप्रवाहयोरभावेन तस्य न्यायस्यात्राभावादिति दिक् ॥

एवं ध्वंसाप्रतियोगित्वेन नित्यत्वे साधितेऽपि नित्यत्वस्य लक्षणान्तरमाश्रित्योत्पत्तिमत्त्वेन तेष्वनित्यत्वं शङ्कते—नन्वित्यादि । हेतुमुखेन नित्यत्वलक्षणमाह—तस्येत्यादि । नित्यत्वस्यैतल्लक्षणकत्वादित्यर्थः । समादधते—नेत्यादि । प्रादुर्भावगमकं तर्कमाहुः—

हरितोषिणी ।

तीति । लौकिकः श्रीकृष्णेति शब्दः । ननु शब्दस्वरूप इत्युक्त्वा पदभेदो दर्शितः, स च न संभवति, नानाऽर्थस्थले तथाऽदर्शनादित्यत आहुः—भगवदिति । तद्दोषादिति । ग्राहकदोषादेवेत्यर्थः । तथा च भगवच्छरीरे नाम्नि चालौकिकत्वमेवेति भावः । तेनेति । नाम्नामलौकिकत्वेन । तथा च वेदवन्नाम्नामपि नित्यत्वमस्तीति भावः ॥

ननु नामसु ध्वंसाप्रतियोगित्वमस्तु नाम, परन्तु तस्य लीलानन्तरं भावित्वात् प्रागभावाप्रतियोगित्वाभावात्कथं ब्रह्मत्वमित्याशङ्कते—नन्विति । तस्येति । ब्रह्मणः । समाधानमाहुः—स्वरूपवदिति । अत्र नाम्नामपि प्रादुर्भाव एव, न तूत्पत्तिरित्यत्र साधकतर्क-

अन्यथा निजमखविहतिकुपितदशशतभगकृताशनिसारासारावसन्ननिजव्रजजनावनाय वामकरकमलनखराग्रनिहितशिखरिवरगोवर्द्धनाचले श्रीगोकुलनाथे विहताखर्वगर्वशक्रसुरभिप्रभृतिविरचितमहाभिषेकसमयसमनुभूतश्रीगोविन्दनामाग्रे भावि पूतनासुपयःपानानन्तरं खप्राणेभ्योऽप्यतिवल्लभे बीजन्यासं कुर्वत्यो व्रजवरवध्वः 'क्रीडन्तं पातु गोविन्द' इति, गुणगाने च 'गोविन्दवेणुमनुमत्तमयूरनृत्य'मिति कथं वदेयुः। तेन यत्कर्मविशिष्टस्य यस्य रूपस्य यन्नाम तत्कर्मविशिष्टं तद्रूपं नित्यमेव, लोके परं तेषां भक्तानां तत्तद्रसानुभवार्थं क्रमेणाविर्भावः कस्याप्यंशस्य, कस्यचिदाच्छादनमित्येवं मन्तव्यम्। तेन

सुवर्णसूत्रम्।

अन्यथेत्यादि। अत्रापादकं—'यदि नामानि नित्यानि न स्यु'रित्याकारकं बोध्यम्। सिद्धमाहुः—तेनेति। रूपनामाविर्भावात्पूर्वमेव तदर्थकनामकथनेन। मन्तव्यमिति। श्रुता-

हरितोषिणी।

माहुः—निजेति। निजस्य खकीयस्य मखस्य विहतिर्मखे स्त्रीयत्वनाशस्तेन कुपितो यो दशशतभग इन्द्रस्तेन कृतो यः अशनिसारासारावसन्ननिजव्रजजनः, अशनिसारो विद्युद्गर्भः एतादृश आसारो धारासंपातः तेन अवसन्नो दुःखितो यो निजव्रजजनस्तस्यावनाय रक्षणायेत्यर्थः। 'यदशनिहतस्य वृक्षस्य संभारो भवती'ति श्रुत्याऽशनिपदस्य विद्युन्नामधेयत्वम्। वामकरेति। वामकरकमलनखराग्रे निहितः स्थापितः शिखरिवरः पर्वतश्रेष्ठो गोवर्द्धनाचलो येन तादृशे श्रीगोकुलनाथे विषये। श्रीगोविन्दनामेत्यग्रेणान्वयः। विहतो दूरीकृतोऽखर्वगर्वो यस्य एतादृशो यः शक्रस्तेन सुरभिप्रभृतिभिश्च विरचितो यो महाभिषेकस्तत्समये समनुभूतं यच्छ्रीगोविन्दनाम। कीदृशं नाम? अग्रे भावि। एतादृशं व्रजे पूतनावधानन्तरं गीतमिति नाम्नो नित्यता मन्तव्येत्यर्थः। तथा चायं तर्कः—'यदि नामानि नित्यानि न स्युः, तदा नामप्रादुर्भावपूर्वकालीनगोपीकृतगानविषयाणि न स्युः, वर्तन्ते तु गानविषयाणि तस्मान्नित्यानीति। यथाऽयं पर्वतो यदि वह्निमान्न स्यात्तर्हि धूमवान्न स्यात्; वर्तते तु धूमवान् तस्माद्वह्निमानिति। तेनेति। नामप्रादुर्भावपूर्वकाले नामकथनेन। मन्तव्यमिति। श्रुतिपुराणतर्कैर्मन्तव्यमित्यर्थः। तेनेति।

गङ्गाधरभट्टी।

(४५) दशशतभगकृताशनिसारासारावसन्नेति। दशशतभग इन्द्रस्तत्कृत आसारो जलधारासंपातः, कीदृशोऽशनिसारः, वज्रपातसारः, मध्ये मध्ये वज्रपातोऽपि क्रियत इत्याशयः। अथवा विद्युत्पात एवाशनिपदेन लक्ष्यते, तादृशेनासारेणावसन्नोऽवसादं कष्टं प्राप्त इत्यादिरर्थः। अखर्वगर्वेति। अनल्पगर्वेत्यर्थः॥

भगवान् गोवर्द्धनमुद्धरन् सर्वदा वर्तेत इति गोवर्द्धनोद्धरणधीर इति क्रियानामभ्यां सहितो गोवर्द्धनोद्धरणरूपः सदा वर्तते इति। अत एवाद्यापि भक्तानां तथाऽनुभवः क्वचित् । तथा प्रतिकृतौ भजनम् । तथा स्मरणं

सुवर्णसूत्रम् ।

र्थापत्त्या मन्तव्यम् । तथा चाविर्भावतिरोभावगतावुत्पत्तिनाशावाविर्भूते तिरोभूते चोपचर्येते, जैमिनीये नये व्यञ्जकध्वन्यादिगतौ तौ शब्दे यथा । न चाविर्भावस्योत्पत्त्यङ्गीकारेऽसतः सत्तापत्त्या सिद्धान्तहानिरिति वाच्यम् । सिद्धान्ते कारणाद्बहिर्भावस्य कारणे लयस्योत्पत्तिनाशपदार्थत्वेन दोषाभावात् । तथा सतीदं सिद्ध्यति—लीलायाः साक्षात्सम्बन्धिपदार्थानां च प्राकट्याप्राकट्ये । प्राकट्याप्राकट्ययोस्तूत्पत्तिनाशौ । तेन प्राकट्याप्राकट्ययोरनित्यत्वम् । तेन च लीलासु तत्सम्बन्धिषु च क्रमिकत्वभानम् । अतो न लीलातत्सम्बन्धिनोः स्वरूपनित्यत्वबाध इति लौकिकबोधनानुकूलः पन्थाः । सैद्धान्तस्तु यथा पृथिव्यामेव तत्तद्देशे तत्तत्काले तत्तद्गन्धरूपेणाविर्भवति, न जलादौ, तथा तत्तत्काले देशे च तत्तद्रसभोगार्थं तत्तत्तथा तथाऽऽविर्भावयिष्यामि तिरोभावयिष्यामीति पूर्वोक्तरीतिकयेच्छयैव लीलादिकं क्रमिकतां धत्ते, तथा बुद्धिगोचरं वा भवतीति न काऽप्यनुपपत्तिरिति दिक् । एवमुत्पत्तिमत्त्वं, नाशप्रतियोगित्वं, तदुभयाभावेन क्रमिकत्वस्य लीलास्थानामवतारकालीनानामन्येषां चेदानीमिदमित्याकारककादाचित्कानुभवस्य चादूषकत्वात्तयोर्दोषत्वं नेति चतुर्णां परिहारेण सिद्धमुदाहरन्ति—तेन भगवानित्यादि । कालान्तरेऽननुभवं परिहर्तुमनुभवं प्रदर्शयन्ति—अत एवेति । लीलाविशिष्टस्य वर्तमानत्वादेव । अत्र साधारणजनाननुभवस्याधिकाराभावप्रयुक्तत्वेनाबाधकत्वादद्यापि भक्तानामित्यनेन साधनं निर्दिष्टम् । किञ्च यथा योगिनोऽतीतानागतं सूक्ष्मरूपेण पश्यन्ति तथा न, किन्तु परिदृश्यमानं यथाऽवस्थितरूपेण पश्यन्तीति बोधनाय तथाऽनुभव इत्युक्तम् । असार्वत्रिकत्वबोधनाय क्वचिदिति देश उक्तः । तेन स्वरूपतो नित्यत्वमनुभवेन च समर्थितम् । तस्यानुभवस्येतरेषामपि संवादाय तेषामधिकाराय च साधनं बोधयन्ति—तथेत्यादि । अत्रापि भक्तानामित्यनुषज्यते । न च पुनरुक्तिः शङ्क्या । अत्र प्रारम्भावस्थाया अभिप्रेतत्वात् । एवमननुभवः परिहृतः । नन्वननुभवस्यानुभवप्रदर्शनेनैव परिहाराल्लीलानित्यत्वोपपादने भजनस्मरणयोः कुत्रोपयोग इत्याकाङ्क्षायां लीलानित्यत्वभावनयोपासकेऽपराधग्र-

हरितोषिणी ।

स्वरूपनाम्नोर्नित्यता प्रतिपादनेन । सर्वदा वर्तमानत्वेऽनुभवं प्रदर्शयन्ति—अत एवेति । लीलासहितस्य वर्तमानत्वादेवेत्यर्थः । क्वचिदिति । भक्तानामिति बहुवचनेन क्वचिद्देश एकेनानुभवः कृतः, क्वचिद्देशे एकेनेत्यनया रीत्या सार्वत्रिकं व्यज्यते । इतरेषां भक्त्यर्थं, भक्तानां च दर्शनार्थं साधनमाहुः—तथेति । प्रतिकृताविति । प्रतिमायाम् ।

च । अन्यथा त्वतथाभूतस्य तथाभावनेनापराधः स्यात्, न तु प्रसाद-हेतुर्भजनम् । 'योऽन्यथा सन्तमात्मान'मितिवचनात् । दृश्यते च तथा भजने प्रसादः । एवं सति रूपे नामावश्यकत्वेन तत्कर्मानुरूपनामापि नित्यमेवेति नोपचारशङ्कागन्धलेशोऽपि ॥

किञ्च नामवद्रूपस्यापि गुणकर्मानुरूपत्वेनोक्तत्वेन तत्र यथा नौपचारिकसत्त्वशङ्का, तथा नाम्न्यपीति बुध्यस्व । गुणकर्मणामपि नित्यत्वप्रतिपादनार्थैव 'गुणकर्मानुरूपाणी'त्यप्युक्तमिति ज्ञायते । अन्यथा 'कुरु

सुवर्णसूत्रम् ।

सक्तेस्तथोपासने तेषु प्रसादाभावस्य च परिहारेणानुभवस्य प्रामाण्यसाधन उपयोग इति वक्तुं तर्कमाहुः—अन्यथेत्यादि । अत्रापादकं यदि लीलाविशिष्टं रूपं नित्यं न स्यादित्येवं बोध्यम् । एवं रूपनित्यत्वसाधनेन सिद्धमाहुः—एवं सतीत्यादि । रूपाणां नित्यत्वे सति शब्दार्थसम्बन्धनित्यतया रूपे नामावश्यकत्वेन तत्कर्मानुरूपनामापि नित्ययोगप्रयुक्तं नामापि नित्यमेवेति हेतोस्तत्प्रयोगे कर्मकादाचित्कत्वाद्गौणी न संभावयितुमपि शक्येत्यर्थः ॥

ननूक्तवाक्ये 'रूपाणि चे'ति चकारेण सन्तीत्यस्य पृथक् प्रयोगो बोध्यते । तथा सति नामानि सन्ति, रूपाणि सन्तीति वाक्यद्वयं भवति । तत्र नामवाक्यप्राथम्येऽपि रूपे नामसम्बन्धादर्थबलेन रूपवाक्यस्य प्राथम्यमायाति । 'अग्निहोत्रं जुहोति' 'यवागूं पचती'त्यादिवत् । तथा च सिद्धे रूपसत्त्वे नामवाक्यं सामीप्यगुणयोगादपि संभवतीति नामनित्यत्वमौपचारिकमेवेति शङ्कायामाहुः—किञ्चेत्यादि । न तत्र केवलयोर्नामरूपयोः सत्तोच्यते, अपि तूक्तविशेषणविशिष्टयोः, तथा सति विशेषणबलात्तादृशी रूपसत्ता सिद्धा तादृशी नाम्नोऽपि तत एव सिद्ध्यतीति बुध्यस्व । तथा चार्थविचारेऽत्र गौणी न संभवदुक्तिकेत्यर्थः । ननु सर्वमिदं विशेषणोक्तगुणकर्मसत्तायां वाक्यस्य तात्पर्ये सिद्ध्यति, न तु रूपसत्तामात्र एव तत्तात्पर्यं इति चेत्तत्राहुः—गुणेत्यादि, सुस्थमित्यन्तम् । तथा च सर्वस्य नित्यतायामेव वाक्यतात्पर्यम् । अन्यथा वाक्यवैयर्थ्यापत्तेः । अतः श्रुतार्थापत्तिव-

हरितोषिणी ।

अन्यथेति । लीलाया नित्यत्वाभावे । अतथाभूतस्येति । नित्यत्वाभावविशिष्टस्य नित्यताभावनेनेत्यर्थः । एवं सतीति । लीलाया नित्यत्वे सति । रूपे नामावश्यकत्वेनेति । शब्दार्थयोः सम्बन्धस्य नित्यत्वादावश्यकत्वेनेत्यर्थः । नोपचारेति । न गौणत्वशङ्केत्यर्थः ॥

ननु नाम कर्मानुरूपं भवति, तत्र नित्यत्वमौपचारिकमेवेत्यत आहुः—किञ्चेति । तत्र रूपे । ननु गुणकर्मणां नित्यत्व एव संशय इत्यत आहुः—गुणकर्मणामिति । ज्ञायत इति । नाम्नि नित्यत्वस्य तदनुरूपत्वोक्त्या गुणादीनां नित्यत्वं ज्ञायत इत्यर्थः । अन्यथेति

द्विजातिसंस्कार'मिति प्रार्थितत्वेन नामकरणाख्यसंस्कारमात्रस्यैव कर्तव्यत्वे सति नाम्नां रूपाणां च, तत्रापि गुणकर्मानुरूपाणां वर्तमानत्वं न निरूपयेत्। प्रयोजनाभावात्। एवं सत्यपि यत्तन्निरूपणं, तेनैवं ज्ञापयति—मदुक्तान्यपि नामधेयानि न मया कृतानि, किन्तु पूर्वसिद्धान्येव मयानूद्यन्ते। परं ते सुतस्य बहूनि नामानि रूपाणि सन्तीति समभिव्याहारवशान्नन्दसुतत्वमप्यनादीति ज्ञायते । तेन नन्दस्यापीदानीं मम पुत्रो जात इति ज्ञानमप्यनादीति ज्ञेयम्। गर्गस्यापि नामकरणलीलामध्यपातित्वेन तदागमनवचनादीनामपि नित्यत्वेनानादित्वमेव । पूर्वसिद्धाया एव लीलाया भगवदिच्छया क्रमेणाविर्भाव इति पूर्वमेवोक्तत्वात्सर्वं सुस्थम्। श्रुतिरपि गुणकर्मानुरूपरूपाणां प्रत्येकं नित्यत्वाभिप्रायेणैवाह—'तदेजति तन्नैजति तद्दूरे तद्वन्तिक' इत्यादि। अन्यथैकस्यैवैकस्मिन्नेव काले क्रियावत्त्वतद्राहित्ये विरुद्धे कथं बोधयेत् । तेन

सुवर्णसूत्रम्।

त्वादुक्तोपपत्तेश्च सर्वमविवादमित्यर्थः । एवमत्र तात्पर्याभावतात्पर्यान्तरदोषौ परिहृतौ। एवं त्रयोदशसु दोषेषु परिहृतेष्वपि स्मार्तमेवेदं प्रमेयं, न तु श्रौतम्, तथा सत्यस्थूलादिवाक्यैरनामरूपत्वेनोक्तत्वात्तैरेतद्बाधोऽपि संभवतीति शङ्कायां चतुर्दशं तं परिहर्तुमुक्तस्मृतेरुपबृंहणत्वेन सन्देहवारणार्थत्वान्न दौर्बल्यमित्याशयेन पूर्वोक्तां श्रुतिमिरुपष्टभ्नन्ति—तद्बाधप्रकारश्चाग्रे वक्ष्यत इति। पूर्वोक्तां प्रतिज्ञां च पूरयन्ति—श्रुतिरपीत्यादि। तत्तश्चेति। तद्रूपं गुणकर्मविशिष्टमेव नित्यम् । तथा चास्थूलादिवाक्ये जडजीवधर्माणामेव निषेधान्न नित्यब्रह्मधर्मात्मकक्रियाया निषेधः । श्रुत्यन्तरे 'स्वाभाविकी ज्ञानबलक्रिया चे'ति क्रियायाः स्वाभाविकत्वेनैव प्रतिपादनात् । एतेनैव समाननामरूपसूत्रे प्रवाहेऽपि पदसम्बन्धाङ्गीकारात्प्रकृतेऽपि रूपप्रवाहे शक्तिरस्त्विति शङ्काऽपि निरस्ता बोध्या। उक्तवाक्ये स्वरूपनित्यत्वबोधनायैव रूपाणीति निर्देशात् । उक्तश्रुत्या तदुपष्टम्भाच्च। तेन क्रियाऽप्यनागन्तुकी प्रतिपादितैवेति सदानन्दरूपे लीलारूपा क्रियाऽपि नित्यसिद्धा निष्प्रत्यूहेऽत्रोऽपि न चोद्यावसर इति दिक्॥

हरितोषिणी।

गुणादीनां नित्यत्वास्वीकारे। रूपाणां चेति। वर्तमानत्वमित्यग्रेणान्वयः। भगवदिच्छयेति। क्रमेणाविर्भावे सामञ्जस्यमिति सूचनाय गुणादीनां नित्यत्वे श्रुतिप्रामाण्यं दर्शयन्ति —श्रुतिरपीति। आहेत्यनेनान्वयः। तदेजतीति । तद्ब्रह्म एजति क्रियावद्भवति, नै-

गङ्गाधरभट्टी।

'तद्दूरे तद्वन्तिक' इति श्रुतौ तदु तदेवेत्यर्थः॥

येन रूपेणैजति तस्य रूपस्य तस्यैजनस्य च नित्यत्वेन तत्तथा । यच्च रूपं स्थिरं, तस्य रूपस्य तस्य स्थैर्यस्य च नित्यत्वेन नैजत्यपि । न च सक्रियाक्रिययोः स्वरूपयोर्भेदः शङ्कनीयः । यत्त एतत्परिहारायैव पुनः पुनर्ब्रह्मवाचकतच्छब्दस्यावृत्तिमाह पूर्वतच्छब्दस्यैव सर्वत्र सम्बन्धार्हत्वेऽपि । तथा चानेकनित्यरूपकमनेकनित्यक्रियाकमनेकनित्यनामकं ब्रह्मेति फलितम् ॥

(४६) किञ्च ऋग्वेदेऽपि पठ्यते—*"ता वां वास्तूंन्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । †अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि" इति । ता तानि वां युवयोः कृष्णरामयोर्गोपीमाधवयोर्वा वास्तूनि गमध्यै प्राप्तुं उश्मसि कामयामहे । तानि कानीत्याकाङ्क्षायां गूढाभिसन्धिमुद्धाटयति

लीलासम्बन्धिनित्यत्वोपपादकप्रमाणदर्शनम् ।

सुवर्णसूत्रम् ।

(४६) एवं लीलानित्यत्वसाधकप्रमाणमुपष्टभ्य लीलासम्बन्धिनित्यत्वसाधकप्रमाणमुपष्टभ्नन्ति—किञ्च ऋग्वेद इत्यादि । येषु कृपा तेषां स्थलान्तरेऽपि तद्दर्शयतीति तदनुरो-

हरितोषिणी ।

जति स्थिरं भवति । तत्तथेति । तद्ब्रह्म तथा तादृशोभयधर्मविशिष्टम् । न चेति । न हीत्यर्थः । सक्रियेति । क्रियाऽक्रियासहितयोरित्यर्थः । सम्बन्धार्हत्वेऽपि । आवृत्तिमाहेति पूर्वेणान्वयः । एतावता लीलाया नित्यत्वे प्रमाणमुक्तम् ॥

(४६) इदानीं लीलाविशिष्टस्य नित्यत्वे प्रमाणं दर्शयन्ति—ऋग्वेदेऽपीति । ता वां वेति ऋक् । ता वां वास्तूनि गमध्यै उश्मसि, यत्र भूरिशृङ्गाः गावः । वसन्तीति शेषः । अयासः अत्र अह उरुगायस्य वृष्णः तत्परमं पदमवभाति भूरीत्यन्वयः । अन्वयानुरो-

गङ्गाधरभट्टी ।

(४६) किञ्च ऋग्वेद इत्यत्र । वास्तूनि स्थानानि । अयासः शुभा इति । 'अयः शुभावहो विधि'रिति कोशः । 'आज्जसेरसु'गित्यसुगागमः ।

---

टिप्पणी ।

* 'ता वाँ वास्तूनी'ति । ऋक्संहिताया द्वितीयाष्टके चतुर्विंशतितमे वर्गे 'विष्णोर्नुकं वीर्याणी'त्यारभ्य, 'ता वाँ वास्तूनी'ति पर्यन्तं षड्र्चं सूक्तमिदं विष्णुदैवतम् । अतो न प्रकरणविरोधः सम्बन्धसङ्गतः ॥

† अत्राहेति । अत्र अहेति पदच्छेदः । अहेति खल्वर्थकमव्ययम् ॥

—यत्र गोकुले भूरिशृङ्गा दीर्घशृङ्गा गावः । वसन्तीति शेषः । अथवा आरण्यग्राम्यपशूपलक्षणार्थम् । भूरिशृङ्गा बहुशृङ्गा रुरुप्रभृतयो मृगा गावश्चेत्यर्थः । अयासः शुभाः । अत्राह अत्र स्थाने भूमौ तल्लोकवेदप्रसिद्धमुरुगायस्योरुकीर्तेर्भगवतो वृष्णः, कामान् वर्षतीति वृषा तस्य गोपिकासु कामवर्षकस्य (तथाभूतस्य) तद्गोकुलं परमं पदं, पदं स्थानं वैकुण्ठं तस्मादप्यधिकं परमं पदं प्रकृतिकालाद्यतीतत्वेनापि वैकुण्ठाद्यपेक्षयाऽतिप्रियत्वेनापि परमं तादृशं पदमवभाति प्रकाशते भूरि बहुतरम् । तथा च यदेतादृशं तयोः स्थानं तत्स्थानसम्बन्धीनि वास्तूनि प्रसावत्वेन प्राप्तुं कामयामहे, नान्यानीति वाक्यार्थः संपद्यते । भूरिशब्दस्य बाहुल्यार्थत्वेनानेकविधनिकुञ्जगह्वरप्रदेशयमुनापुलिनगोवर्द्धनसान्वादिषु निरन्तरं भगवतः स्थित्या तावद्रूपं प्रकाशत इति तात्पर्यार्थः । भूधातोरास्यर्थत्वे व्यापकमिति वा । तथा च परमत्वेन भगवत्स्थानत्वेन भूरित्वेन च नित्यत्वमेव गोकुलस्यायाति ॥

सुवर्णसूत्रम् ।

येन पक्षान्तरमाहुः—व्यापकमिति येति । न चैवं सति ब्रह्माण्डान्तर्वर्तित्वबोधकस्यात्राहेति श्रुत्यंशस्य व्याकोप इति वाच्यम् । वैश्वानराधिकरणन्यायादेव सिद्धेः । उभयोरपि श्रौतत्वात् । व्यापकात्मवादिमते शरीरस्येव भूप्रदेशस्य तद्वृत्तिलाभस्थानत्वाद्वा दोषाभावात् । न चर्ग्वेदस्यापरविद्यात्वादस्थूलादिवाक्यस्य परविद्यान्तर्गतत्वादृग्वेदस्थवाक्यबाध इति वाच्यम् । परविद्यया साधनशेषभूतलौकिककामनिरूपणांशस्यैव बाधनात् । *गृहि-

हरितोषिणी ।

येन व्याख्यामाहुः—ता तानि वामिति । अन्यत्स्पष्टम् । भूरिशब्दस्य बाहुल्यार्थकत्वमुक्तं निरुक्ते, इदानीं व्यापकत्वार्थत्वमाहुः—भूधातोरिति । एवं च श्रीगोकुलसम्बन्धि-

गङ्गाधरभट्टी ।

तत्स्थानसम्बन्धीनि वास्तूनीति । अवान्तरस्थानानि । वस्तून्येव वा । छान्दसो दीर्घः । एवमेव उष्मसीत्यत्र 'इदं तोमसी'तीकारः । तालव्यशकारस्थाने †मूर्धन्यश्च । 'गमध्यै' इति तुमर्थेऽध्यै प्रत्ययः । ता इत्यत्र शेश्छन्दसि बहुलं लोपः । अत्रा इति ‡दीर्घश्च छान्दसः ॥

---

टिप्पणी ।

* गृहिण इति । गुणोपसंहारन्यायेनेति स्यादिति प्रतिभाति ॥

† मूर्द्धन्यश्चेति । नायं मूर्द्धन्यो धन्यवादार्हः, यतः सर्वोऽप्येवं तालव्यं गलहस्तयति ॥

‡ दीर्घश्च छान्दस इति । इयान् परिश्रमो नापेक्ष्यते, संप्रति तु कुशली पदपाठः ॥

सुधर्मसूत्रम् ।

णोऽपि संहारन्यायेन तथा निश्चयात् । 'धार्मिकान्विदध्'दित्यादिना पूर्वकाण्डस्थप्रमेयानुवादपूर्वकमपुनरावृत्तिरूपफलसम्बन्धबोधनात् । अकामश्रुतेश्च । ऋग्वेदान्तर्गतत्वमात्रेण बाधाङ्गीकारे मंत्रसंचारप्रयुक्तस्योपनिषदमन्त्रस्य बाधप्रसङ्गाच । अतोऽक्षराधिगमकत्वतदनधिगमकत्वप्रयुक्तस्यैव बाध्यबाधकभावस्यादरणीयत्वात् । 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुत्या पूर्वकाण्डेऽप्यक्षराधिगमकत्वस्याप्रत्यूहत्वात् । उक्तश्रुतौ च पदस्यैव निरूपणेन बाधाप्रसक्तेश्च । न च सगुणनिर्गुणनिरूपकत्वेन बाध्यबाधकभावः । तयोर्भेदस्य पूर्वोक्तदिशा निरस्तत्वात् । 'यया तदक्षरमधिगम्यत' इति परविद्यालक्षणमुक्त्वा किं तदक्षरमित्याकाङ्क्षायां 'यत्तदद्रेश्यमग्राह्य'मित्युपक्रम्य 'यथोर्णनाभिः सृजते गृह्णते चे'ति 'तपसा चीयते ब्रह्मे'ति 'यः सर्वज्ञ' इति मन्त्रत्रयेण कार्यलक्षणमुक्त्वा 'तदेतत्सत्य'मित्युपसंहाराच । न चोऽस्मसीति कामनांशस्य बाधः संभाव्यः । आत्मकामश्रुतितुल्ययोगक्षेमत्वात् । 'अथाकामयमान' इत्युपक्रम्य 'योऽकामो निष्काम आत्मकाम आप्तकाम' इति श्रावणात् । वस्तुतस्तु शङ्केयमपार्थैव । श्रुतौ बाधानुक्तेः । निरुक्तव्याकरणयोरप्यत्रार्थज्ञानार्थमुपयोगाच । परापरभावस्तु प्रधानगुणभावमादाय । सत्स्वेवमप्यक्षीण इति प्रभुचरणैरपीयमुपेक्षितेति दिक् । नन्वयं मन्त्रो निरुक्ते सूर्यपरत्वेन व्याख्यातः, तत्कथं गोकुलपरत्वेन व्याख्यायत इति चेत्, उच्यते; प्रकरणानुरोधात्, 'वेदैश्च सर्वैरहमेव वेद्यः' 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुतिस्मृतिभ्यां च । 'अदो यद्दारु प्लवत' इत्यलक्ष्मीप्रकाशकमंत्रस्य पुरुषोत्तमक्षेत्रमाहात्म्ये व्यासपादैर्वेदभाष्ये विद्यारण्येन च श्रीजगन्नाथपरतया व्याख्यानात्, एतस्याः सरणेर्दर्शितत्वाच । तद्विरोधस्यादूषकत्वात् । वस्तुतस्तु 'रश्मयो गाव उच्यन्त' इति प्रतिज्ञाय 'ता वां वास्तूनी'ति श्रुतिर्व्याख्याता, न तु सूर्यनिरूपणं प्रतिज्ञाय । व्याख्याने च शिरसो निर्गतमित्यपि शृङ्गपदनिरुक्तिः । तेनार्थान्तरोक्तावपि न तद्विरोध इति दिक् ॥

हरितोषिणी ।

वस्तुप्राप्त्या मुक्त्यपेक्षयाऽधिकं फलं भवतीति भावः । यथा '*अदो यद्दारु प्लवत' इति मन्त्रोऽलक्ष्मीपरोऽपि श्रीव्यासैः पुरुषोत्तममाहात्म्ये विद्यारण्यैश्च वेदभाष्ये श्रीजगन्नाथपरत्वेन व्याख्यातः, तथाऽयं मन्त्र उपासकैः स्वीयपरत्वेन व्याख्यात इति प्रकरणबलाच्छ्रीभगवत्परत्वेन व्याख्याने दोषाभावः । 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुतिप्रमाण्यादित्यलं पल्लवितेन ॥

---

टिप्पणी ।

* 'अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषम् । तदारभस्व दुर्हणो तेन गच्छ परस्तरम्' इति पूर्णो मन्त्रः ॥

किञ्च तैत्तिरीयकेऽपि पठ्यते—'ता ते धामान्युश्मसि गमध्यै गावो यत्र भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरे'रिति। ते तव ते तानि धामानि स्थानानि गमध्यै प्राप्तुमुश्मसि कामयामह इति। शेषं पूर्ववत्। भूरेः बहुरूपस्य। रासोत्सवादिषु तथा प्रकटत्वात्। अत्र स्वयं नित्यो वेदः अवभातीति वदन् स्वभानविषयस्य गोकुलस्यापि नित्यत्वमेवाह। अन्येषामवभानपक्षेऽपि वर्तमानप्रयोगेण विषयस्यापि वर्तमानत्वमेवायाति॥

एतदनन्तरमेव च पठ्यते—'विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखा' 'तद्विष्णोः परमं पदꣳसदा पश्यन्ति सूरयः। दिवीव चक्षुराततं'मिति मन्त्रद्वयम्। तथा च पूर्वस्मिन्मन्त्रे यत्र

सुवर्णसूत्रम्।

अनेकप्रमाणानुगृहीतत्वाय श्रुत्यन्तरसम्मतिमाहुः—किञ्चेत्यादि। एताभ्यां लीलासम्बन्धिनां नित्यता पूर्वश्लोकोक्तशत्रन्तप्रयोगस्य मुख्यार्थविषयत्वाय व्यक्तीकृता॥

अतः परं गोकुले कृतानां लीलानां नित्यत्वाय श्रुत्यन्तरमाहुः—एतदनन्तरमेवेति।

हरितोषिणी।

अन्यां श्रुतिमप्याहुः—तैत्तिरीयकेऽपीति। वर्तमानप्रयोगेणेति। अवभातीतिवर्तमानार्थकलडन्तप्रयोगेणेत्यर्थः। पूर्वोक्तमन्त्रद्वयं लीलासम्बन्धिनां नित्यत्वे प्रमाणमुक्तम्॥

इदानीं लीलानां नित्यत्वे प्रमाणमाहुः—एतदनन्तरमिति। [1]पठ्यत इति पूर्वेणान्वयः। पूर्वमन्त्रैतन्मन्त्रयोर्गूढाभिसन्धिमाहुः—तथा चेति। सूरय इत्यन्तेन लीलानां

गङ्गाधरभट्टी।

तैत्तिरीयकेऽपि। ते इति लिङ्गव्यत्ययः। ननु निरुक्ते 'रश्मयो गाव उच्यन्त' इतिस्मरणादियं श्रुतिः सूर्यपरा, सत्यम्? 'सर्वे वेदा यत्पदमामनन्ती'त्यादिवचनाद्ब्रह्मपरत्वे बाधकाभावात्। अत एव श्रीशेषमहाभाष्ये 'सदृशं त्रिषु लिङ्गेष्वि'ति प्रणवपराऽपि श्रुतिरव्ययसंज्ञकपरत्वेनोक्ता। सर्वस्यापि वस्तुतो ब्रह्मपरत्वात्। 'अदो यद्दारु प्लवत' इति मन्त्रश्च वेदभाष्ये श्रीजगदीशपर उक्तः। तन्माहात्म्येऽपि तथोक्तः। मन्त्ररामायणमन्त्रभागवतवेदपादस्तोत्रादि चैवमेव शिष्टैरादृतम्॥

प्रकृते तु प्रकरणमपि लीलाया इति सूचयन्ति—एतदनतरमिति। प्रकरण इत्यर्थः॥

टिप्पणी।

एतेनेदं मूले पुनः, पठ्यत इति नास्तीति ज्ञायते। वर्तमानं तु पश्चात्प्रक्षिप्तमिति॥

[1] मूलादिषु इदं प्राचीनपाठः।

'भूरिशृङ्गा अयासस्तदुरुगायस्य परमं पद'मित्युक्त्वा तदनन्तरं तत्र कृतानि कर्माण्यपि 'विष्णोः कर्माणि पश्यते'ति मंत्रेण निरूप्य पुनः पूर्वोक्तं (तत्र) लीलास्थानं 'तद्विष्णोः परमं पद'मिति पदेनानूद्य तस्य नित्यत्वनिरूपणायाह—'सदा पश्यन्ति सूरय' इति। सूरयो विद्वांसः। तत्त्वं च शब्दब्रह्मपरब्रह्मस्वरूपविच्चम्। परब्रह्मज्ञानं च भक्त्यैवेति निर्णयः। 'भक्त्या मामभिजानाती'तिवाक्यात्, 'भक्त्याऽहमेकया ग्राह्य' इतिवाक्याच्च। तेन सूरिपदेन भक्ता उच्यन्ते। ननु 'अत्राह तदुरुगायस्ये'ति 'सूरयः सदा पश्यन्ती'ति वाक्यैकवाक्यतायां भूमौ तत्परमं पदं भक्ता एव सदा पश्यन्तीत्यर्थः संपद्यते। तथा च काननकालिन्दीतत्पुलिनगिरिगह्वराद्यात्मकत्वेनोद्भूतरूपवन्महच्च तत्परमं पदं कथं भक्तैकदृश्यं, न साधारणजनचक्षुर्विषय इत्याशङ्क्य तन्निरासाय दृष्टान्तमाह—'दिवीव चक्षुरातत'मिति। दिवि स्वर्गे यथा आ समन्तात्ततं व्याप्तं 'यन्न दुःखेने'तिवाक्यात्सुखैकसाधनम्। तद्रूपं पदार्थं तत्रस्थानामेव चक्षुः पश्यति, नान्येषां तथेत्यर्थः। तेन तल्लीलामध्यपातिनामेव तद्दृश्यमिति साधारणजनाविषयत्वेऽपि न दोष इति भावः॥

सुवर्णसूत्रम्।

अस्मिन् प्रकरणे सूक्ते चेत्यर्थः। तद्रूपं पदार्थमिति। सुखरूपं तत्रत्यं वस्तु गृहादिकम्। (आततपदार्थबलेनैव वस्तुप्राप्तेर्नाध्याहारः। पूर्वार्धोक्तक्रियाया एव वचनविपरिणामेन दृष्टान्तेऽन्वयः) अत्र दिवि स्वर्ग इत्यादिना गोकुलस्य साधारणजनादृश्यत्वे चक्षुरसामर्थ्यं हेतुरित्युक्तम्। तेनालौकिकार्थदर्शन उद्भूतरूपवत्त्वादिकं न प्रयोजकं, किन्तु साधनविशेष एव प्रयोजक इति बोधितम्। अत्र श्रुतावुत्तरार्धं दृष्टान्तवाक्यम्। तथा च यथा महदुद्भूतरूपमपि यत्र तत्र क्षेमत्रिकटवर्त्यपि तत्रत्यं वस्तु नान्ये पश्यन्ति, किन्तु तत्रत्या एव पश्यन्ति, तथा गोकुलमपि साधारणजनचक्षुरगोचरं, भक्तानां तु गोचरमित्यर्थः॥

हरितोषिणी।

तत्स्थानानां च नित्यत्वं सूचितमिति गूढाभिसन्धिः। तत्त्वं चेति। विद्वत्त्वमित्यर्थः। सूरिपदस्य भक्तपरत्वमेवेत्याहुः—परब्रह्मेति। भूमौ परमपददर्शनं भक्तानां जायत इति सूचयितुं दिवीवेति मन्त्रमवतारयन्ति—नन्विति। न साधारणजनेति। उद्भूतरूपं लौकिकदर्शने प्रयोज[1]मलौकिकदर्शने तु भक्तिरेव प्रयोजिकेति भावः। दिवीति। स्वर्गस्थानां जीवानां चक्षुर्यथा सुखसाधनपदार्थं पश्यति, तथा भक्तानां चक्षुः काननकालिन्द्यादिकं पश्यति, नान्येषामिति भावः॥

---

१ रूपवत्त्वादिकं। २ मपि क. पु. पाठः।

अथवा पूर्वोक्ताशङ्कायामेवोच्यते पूर्वमित एव स्वर्गस्थपदार्थदर्शनाभावेऽपि योगधारणया दूरग्रहणाख्यसिद्धिसंपत्तौ योगिनश्चक्षुराततं सर्वतो व्यासं सर्वग्रहणसमर्थं सदित एव स्वर्गे पदार्थान् पश्यति यथा, तथैतस्यापि पूर्वमदृश्यत्वेऽपि तादृशभगवदनुग्रहेण तादृग्भक्तिलाभे सति तदधिकारः संपन्न इति तदर्थं तथा भगवान् प्रकटो भवतीति तदा दृश्यत्वं भवतीत्यर्थः । तेनाधुनिकानामपि पूर्वोक्ताधिकारसंपत्तौ तद्दर्शनं भवतीति सिद्धम् ॥

अथवा दृष्टान्तत्रयमत्र । तथाहि—पूर्वोक्तपरमपदस्य लोकरूपत्वेने-

सुवर्णसूत्रम् ।

तत्र पूर्वार्द्धोक्तक्रियाया वचनविपरिणामेन योजनेति दिव्यपदाध्याहारो वा चक्षुःपदे वृत्तिसंकोचो भवतीति चारुच्या पक्षान्तरमाहुः—अथवा पूर्वोक्तेत्यादि । आततपदं प्रथमान्तमत्र ज्ञेयम् । शेषं पूर्ववदेव । तथा च 'यं सप्तरात्रं प्रपठन् पुमान् पश्यति खेचरा'निति 'य एतच्छुष्के स्थाणौ निषिञ्चेज्जायेरन् शाखाः प्ररोहेयुः पलाशानी'ति श्रुतिस्मृतिभ्यां स्वतोऽदर्शने स्वतः शाखाद्यप्ररोहेऽपि मन्त्रेण चक्षुषि पयसि चातिशयाधानेनैव दर्शनप्ररोहयोः कथनात् प्रकृतेऽपि साधारणानामपि भक्त्याऽतिशयाधाने तद्दर्शनं भवतीत्यपि दर्शितम् । ( स्मारितम् ) । तेन तत्सत्ताया दृश्यादर्शननिरस्तत्वं य आहुस्तेऽपि प्रत्युक्ताः । तथा भगवान् प्रकटो भवतीति । आवरणं भङ्क्त्वा प्रकटीभवति । तथा च भगवानिवैतदपि भगवत्सामर्थ्यैकदृश्यमित्युक्तम् । तेन तदनभिज्ञजनसकलशङ्कानामनवसरपराहतत्वमुक्तं भवति ॥

अस्मिन् पक्षे दृष्टान्तवाक्ये कर्मवाचकपदाभावात्पदार्थपदाध्याहारोऽप्यापततीत्यरुच्या संयोगपृथक्त्वन्यायानुगृहीतं पक्षान्तरमाहुः—अथवा दृष्टान्तत्रयमत्रेति । एकस्मिन्नेव

हरितोषिणी ।

पक्षान्तरमाहुः—अथवेति । पूर्वोक्ताऽऽशङ्कायाम् । 'कथं भक्तैकदृश्य'मिति शङ्कायाम् । स्वर्ग इति । सप्तम्यर्थो वृत्तित्वम् । तथा च स्वर्गवृत्तिपदार्थानित्यर्थः । तथा च पृथिवीस्था योगिनः स्वर्गस्थपदार्थान् पश्यन्ति यथा, तथा भक्ता अपि भगवन्तं तत्स्थानानि च पश्यन्तीति भावः । अत्र पूर्वदृष्टान्ते स्वर्गस्थानां स्वर्गीयपदार्थदर्शनम् । अत्र तु भूमिस्थयोगिनां सर्वपदार्थदर्शनमिति विशेषः । सिद्धमिति । भगवदनुग्रहेण भक्त्या च भगवद्दर्शनं तत्स्थानानां च दर्शनमिति भावः ॥

पक्षान्तरमाहुः—अथवेति । दृष्टान्तत्रयमत्रेति । अत्र 'दिवीव चक्षुराततमि'ति-

१ नन्वेवं शब्देन नित्यत्वप्रत्यायनेऽपि स्वस्य तथादर्शनाभावात्तदनित्यमेव भविष्यतीत्याशङ्का स्यादिति तन्निवृत्तये प्रकारान्तरमाहुरिति क. पुस्तके पाठः ।

तरलोकन्यायेन दुःखस्यापि तत्र संभवाद्भगवल्लीलायाश्चानन्दरूपत्वात्कथमेतस्यानन्दैकरूपत्वम्, अत उक्तम्—दिवीवेति । यथाऽन्यलोके दुःखसंभिन्नसुखरूपत्वेऽपि स्वर्गे दुःखासंभिन्नसुखरूपत्वं, तथा गोकुल आनन्दैकरूपत्वमित्यर्थः । नन्वित्यादिनोक्ताऽऽशङ्कायामाह—चक्षुरिवेति । यथा चक्षुरेव रूपं गृह्णाति, न श्रोत्रादिकम् । इन्द्रियत्वाविशेषेऽपि तस्यैव तत्र सामर्थ्यात् । वस्तुन एव तथात्वात् । तथाऽत्रापीत्यर्थः । यथा दोषासहकृतमेव चक्षुर्वस्तुतत्त्वं गृह्णाति, भ्रमिकामलादिदोपसहकृतं तु मही-

सुवर्णसूत्रम् ।

वाक्ये दृष्टान्तत्रयं, न तु वाक्यद्वयस्य दृष्टान्तदार्ष्टान्तिकभाव इत्यर्थः । अत्र दिवीवेत्येको दृष्टान्तः । कर्मणि चक्षुरिवेत्यपरः । कर्तरि आततं चक्षुरिवेत्यन्यः । अत्र पूर्वार्द्धे पश्यन्तीत्युक्तम्, तत्र कथं पश्यन्तीति प्रकाराकाङ्क्षायां प्रथमे दृष्टान्ते दिवीव पश्यन्तीति कथनेन व्याख्यातरीत्येतरसाधारणत्वं परिहृतम् । द्वितीयेन चक्षुरिवेत्यनेन कुतस्त एव पश्यन्तीति पूर्वोक्ताकाङ्क्षायां ग्राह्यग्राहकयोर्योग्यता विवेचिता । तथा द्वाभ्यां दृष्टान्ताभ्यां तेषामेव योग्यं, त एव च योग्या इति फलति । तेनाप्रत्यक्षकृतो विरुद्धप्रत्यक्षकृतश्च बाधः परिहृतः ॥

हरितोषिणी ।

वाक्ये दिवीव, चक्षुरिव, आततं चक्षुरिवेति दृष्टान्तत्रयमित्यर्थः । तदेव विशदयन्ति—तथा हीत्यादिना । प्रथमं दृष्टान्तं घटयन्ति—यथेति । स्वर्गे यथा सुखं, तथा गोकुल आनन्द इत्यर्थः । द्वितीयं दृष्टान्तं घटयन्ति—नन्वित्यादिनेति । उक्ताशङ्कायामिति । 'नन्वत्राहे'त्यवतरणस्थ 'कथं भक्तैकदृश्य'मितिशङ्कायामित्यर्थः । तथाऽत्रापीति । यथा चक्षुषि रूपग्राहकत्वं, तथा श्रीगोकुल आनन्द इति भावः । आततं चक्षुरिवेति । तृतीयं दृष्टान्तं घटयन्ति—यथेति । *आततं कमलादिदोषरहितं चक्षुः सद्वस्तुग्राहकं, तथाऽविद्यादि-

गङ्गाधरभट्टी ।

इतरलोकन्यायेनेति । परमो लोको दुःखसंभिन्नः, लोकत्वान्नरलोकवदिति प्रयोगेणेत्यर्थः । दुःखासंभिन्नेति । 'यन्न दुःखेन संभिन्न'मिति स्वर्गलक्षणात् । तथा च परमो लोकः केवलसुखरूपः, परमत्वात् स्वर्गलोकवदिति सत्प्रतिपक्ष इत्यर्थः ॥

---

टिप्पणी ।

* आततं कामलादिदोषरहितमिति । सदोषमिन्द्रियं वस्तु व्याप्नोति, परन्तु न समन्ततः । अत एव चक्षुः शङ्खं पश्यदपि तदीयं श्वेतरूपं न पश्यति, कामलादिदोषरहितं स्वा समन्तात्ततं व्याप्तं भवति, सर्वांशेन पश्यति । अत आततपदेन कामलादिदोषराहित्यमुच्यते ॥

भ्रमिशङ्कपीनिमादिकं, तथाऽविद्यादिदोषरहिताः सूरय एव गोकुला-दिस्वरूपं पश्यन्ति, नान्य इत्यपि चक्षुर्दृष्टान्तस्याभिप्रेतमिति ज्ञेयम्। एतेन तत्रस्थवृक्षस्थलादीनां वृश्चनान्यथाभावदर्शनादिपूपपत्तिरुक्ता भवति ॥

यद्वा चक्षुरिति द्वितीयैकवचनान्तं पदम् । यथा चक्षुरिन्द्रियं स्वयमतीन्द्रियमेव गोलके स्थितं सत्स्वं प्रत्याययति, गोलकेऽपि चक्षुःशब्दवाच्यतां च विधत्ते, योगिप्रत्यक्षविषयश्च भवति, तथा गोकुलादिकमप्यलौकिकं स्वयमतीन्द्रियमेव साधारणजनदृश्ये स्वयोग्ये स्थाने स्थितं सत्तत्स्थानं प्रकाशयति, स्वव्यपदेशं च प्रापयति, तत्रैव च स्थितं भवति, पूर्वोक्तसूरित्वे दृश्यं च भवति । तथा चैतादृशं परमं पदं सूरयः सदा पश्यन्तीति सम्बन्धः ॥

सुवर्णसूत्रम् ।

अस्मिन् पक्षे इवपदेन यथापदस्मारणं तेन तथापदस्येति क्लेशः, एवकाराध्याहारः, प्रतिज्ञाभङ्गश्चेत्यरुच्या पक्षान्तरमाहुः—यद्वेत्यादि । अत्र यद्वेत्यादिना च सर्वैरनुभूयमानस्य तद्वृत्तिलाभस्थानत्वं, यथा व्यापकात्मवादिनां शरीरस्य तत्स्थानत्वमिति प्रकटीकृतम् ॥

हरितोषिणी ।

दोषरहिता भक्ता गोकुलादिरूपं पश्यन्तीत्यर्थः । एतेनेति । गोकुलादिरूपस्यालौकिकत्वकथनेन । तत्र । गोकुले । वृश्चनेति । वृश्चनं *छेदनं तस्यान्यथाभाव इत्यर्थः । उक्ता । ग्रन्थान्तर इति शेषः ॥

पक्षान्तरमाहुः—यद्वेति । गोलके स्थितमिति । चक्षुरिति पूर्वेणान्वयः । दार्ष्टान्ति योजयन्ति—तथेति । तत्रैव च स्थितं भवतीति । साधारणजनदृश्ये गोकुलेऽलौकिकं गोकुलं स्थितं भवतीत्यर्थः । पूर्वोक्तेति । सूरित्वं च शब्दब्रह्मपरब्रह्मवित्त्वमिति पूर्वमुक्तमि त्येतादृशसूरीणां ब्रह्मज्ञानां दृश्यं भवतीत्यर्थः । चक्षुःपदस्य द्वितीयान्तत्वोपयोगमाहुः—तथा चेति । एतादृशमिति। चक्षुस्तुल्यम्। परमं पदम् । अलौकिकं गोकुलपदमित्यर्थः ।

गङ्गाधरभट्टी ।

द्वितीयैकवचनान्तमिति । अत्र पश्यन्तीत्यनुषज्यते, सूरय इति च, तदाहुः—'पूर्वोक्तसूरित्वे दृश्य'मिति ॥

---

टिप्पणी ।

* छेदनं तस्यान्यथाभाव इति । छेदनकृतोऽन्यथाभावः । वस्तुतस्तु स्थले छेदनाप्रसिद्ध्या वृक्षांशे छेदनं, स्थलांशेऽन्यथाभाव इत्येवं द्वन्द्वमुररीकृत्य योज्यम् ॥

ननु साधारणजनदृश्यस्याधिष्ठानत्वपक्षे तस्यैव करणदोषादन्यथाभानपक्षेऽपि तत्र स्थितानां लोकानां दुःखकामक्रोधादिकमनुपपन्नम् । तस्य परमानन्दरूपत्वाद्गुणातीतत्वाच्च । न च करणदोषेणैव द्रष्टुस्तत्स्थितलोकदुःखादिदर्शनमिति वाच्यम् । करणदोषस्यापि तत्र वक्तुमनुचितत्वात्, तत्रैवान्योन्यं तथा दर्शनादिति । अत उक्तम्—'आततं चक्षुरिवे'ति । यथा देवदत्तचक्षुरिन्द्रियं विष्णुमित्रशरीर आसमन्ताद्व्याप्तमपि तैजसं सदप्यनुद्भूतरूपस्पर्शत्वेन नान्धतमसे प्रकाशयति तापयति वा, तथा भगवदिच्छयैवाप्रकटानुभावत्वेन तस्य पक्षद्वयेऽप्याधुनिकतज्जनदोषदर्शनमुपपद्यत इत्यर्थः । तादृशी भगवदिच्छा तु सर्वमुक्त्यभा-

सुवर्णसूत्रम् ।

तृतीयमवतारयन्ति—नन्वित्यादि । एतस्य दृष्टान्तस्य व्याख्याने 'तथा भगवदिच्छयैवे'त्यादिना 'क्षुधार्ता इदमब्रुवन्' 'त्रातुमर्हसि देवान्नः कुपिताद्भक्तवत्सले'त्यादिवाक्योक्तेऽर्थ उपपत्तिरुक्ता । यदाऽनुभावं न प्रकटयति लीलार्थं, तदा तादृग् दुःखकामक्रोधादिकं लीलास्थानां गोचरीभवति; यदा पुनः क्रमेण सहसा वाऽनुभावं प्रकटयति, तदा तेषां दुःखादिकं न भासत इति भगवदिच्छायां बीजमाहुः—तादृशीत्यादि । तदुक्तं ब्रह्माण्डपुराणे—'तथाप्यसुरमोहार्थं परेषां च क्वचित् क्वचित् । दुःखाज्ञानश्रमादींश्च दर्शयञ्छुद्धसद्गुणः । क्व व्रणादि क्व चाज्ञानं स्वतन्त्राचिन्त्यसद्गु(र्णः)णे ।

हरितोषिणी ।

तृतीयं दृष्टान्तमवतारयन्ति—नन्विति । अधिष्ठानत्वपक्ष इति । अलौकिकगोकुलस्येदं गोकुलमधिष्ठानमिति पक्ष इत्यर्थः । अन्यथाभानपक्षेऽपीति । इदं परिदृश्यमानं गोकुलमिन्द्रियदोषेण पश्यन्ति, न त्वलौकिकमिति पक्षेऽपीत्यर्थः । अनुपपन्नमिति । करणदोषोऽस्तु नाम, भूमिदोषस्तु नास्ति, एवं च तत्रत्यानां कामादिकं कथमिति भावः । करणदोषमादाय शङ्कते—न चेति । उत्तरयन्ति—करणेति । करणदोषस्यैकस्य, न तु सर्वेषामित्याशयेनाहुः—तत्रैवेति । दृष्टान्ते घटयन्ति—यथेति । दार्ष्टान्तिके घटयन्ति—तथेति । पक्षद्वयेऽपीति । अधिष्ठानपक्षे, अन्यथाभानपक्षेऽपीत्यर्थः ॥

गङ्गाधरभट्टी ।

जनदृश्यस्येति । प्रसिद्धमथुरादेः । तस्यैवेति । साधारणजनस्य । अन्योन्यमिति । परस्परम् । तथा दर्शनात् । कामक्रोधादिदर्शनात् । अन्धतमस इति । गाढे तमसि । प्रकाशयतीति । चक्षुरिति द्वितीयान्तमेव कर्म । यद्वा स्वात्मानमिति शेषः । दोषदर्शनमिति । अन्येषां स्वस्य चेति शेषः । भगवदनुग्रहेण प्रकटानुभावत्वे तु नैतदिति भावः ॥

१ कामक्रोधादिकमिति मु. पु. पाठः । २ व्याप्तमिति क्वचित्कः पाठः ।

वायासुरजीवानां व्यामोहाय च। यथा योगिनामेव प्रत्यक्षं तत्तथा भक्तानामेवैतदपीति पूर्वमेवावोचाम॥

(४७) अथ 'विष्णोः कर्माणी'ति मन्त्रो व्याख्यायते। अत्र पूर्वस्मिन् मन्त्रे गोकुलस्यैव निरूपणात् तत्र कृतान्येव कर्माणि यशोदास्तनपानपूतनापयःपानरिङ्गणादीनि कर्माणि कर्मपदेनोच्यन्त इत्यवगम्यते। अत एवाह—यतो व्रतानीति। यतः कर्मभ्यो हेतुभूतेभ्यो व्रतानि कात्यायन्यर्चनादीनि सान्निध्याद्विष्णुरेव पस्पशे स्पृष्टवान्। तत्फलत्वेन तत्कर्त्रीष्वाविर्भूय तासु सर्वां लीलां कृतवानित्यर्थः। स्पश बाधनस्पर्शनयोः।

भगवत्कर्मणां नित्यत्वदर्शनसाधनत्वयोरुपपादनम्, भूतार्थप्रयोगोपपत्तिश्च।

सुवर्णसूत्रम्।

दौर्लभ्याच्चैव मोक्षस्य दर्शयेत्तानजो हरि'रिति। यद्यप्येतानि वाक्यानि स्वरूपविषयकाणि, तथाऽपि 'यदक्षरे परमे प्रजा' इति श्रुतेर्नित्यलीलास्थानां भगवद्रूपत्वात्तत्परत्वेनोपन्यासेऽप्यदोषात्। एतादृशस्य साधारणजनागोचरत्वे पूर्वदृष्टान्तव्याख्यानोक्तां युक्तिं स्मारयन्ति—यथेत्यादि। तदिति। चक्षुः॥

(४७) एवं सम्बन्धिनित्यत्वस्थापकं प्रमाणं दृढीकृत्य 'तदेजती'त्यादिश्रुत्युक्तक्रियाणां लीलात्मकत्वं स्फुटीकर्तुं मन्त्रान्तरव्याख्यानं प्रतिजानते—अथेत्यादि। अथेति। सम्बन्धिनित्यत्वस्थापनानन्तरम्। एतेन क्रमत्यागबीजं सूचितम्। अत्रानेकश्रुतिव्याख्यानमनेकप्रमाणानुगृहीतत्वाय दूषणान्तरनिरासाय चेति ज्ञातव्यम्। कर्मभ्य इति। स्वलीलारू-

हरितोषिणी।

(४७) एतादृशभगवदिच्छायां हेतुमाहुः—अथेति। लीलानां नित्यत्वस्थापनानन्तरम्। कर्मणामनन्तत्वाद्दुर्ज्ञेयत्वाच्च कानि पश्यतेत्यत आहुः—अत्रेति। अत्रोपष्टम्भकमाहुः—अत एवेति। पातिव्रत्यव्रतस्यापि व्रतशब्देन ग्रहणमिति सूचयितुमाहुः—

गङ्गाधरभट्टी।

(४७) अथ विष्णोरिति। 'सदा पश्यन्ती'ति वाक्यवृत्त्यैव विस्पष्टम्। *नित्यताप्रतिपादकं पूर्वं व्याख्यातं, तदनु व्याख्येयनित्यताप्रतिपादकमिति भावः। एतेन पूर्वमन्त्रस्य पश्चाद्व्याख्यानमयुक्तमिति प्रत्युक्तम्।

---

टिप्पणी।

* अधिकरणनित्यताप्रतिपादकं पूर्वं व्याख्यातं, तदनु चाधेयनित्यताप्रतिपादकमित्यर्थानुकूलमिह पङ्क्तिस्वरूपमपेक्षितमिति प्रतिभाति॥

---

१ गो. इति क. पु. पाठः।

शनयोरिति धातोर्लिटि रूपमिदम् । अयं चोभयार्थकः प्रयोगः । तेन व्रतानि लोकमर्यादाव्रतानि पातिव्रत्यादीनि ययाथ इत्यप्यर्थः । वेदमर्यादात्याजकानां कर्मणां सदोषत्वशङ्कापरिहारायाव्ययप्रयोगः । तेन तेषामविकृतत्वमुक्तं भवति । स्वव्रतान्यप्यात्मारामत्वपूर्णकामत्वादीनि नियमरूपाणि ययाथे । अस्मिन्नर्थे नञ्प्रश्लेषे अव्रतानि स्पृष्टवानित्यप्यर्थो युज्यते । तानि कर्माणि गोपीभिः सह रमणरूपाणि पश्यतेत्युपदेशः । यद्यपि कर्मदर्शनस्य फलत्वेन न स्वकृतिसाध्यत्वं, तथापि मोक्षरसाधिकरसानां स्वतः पुरुषार्थरूपाणामतिहृद्यानां स्मरणतस्तत्पारवश्यमौत्सुक्यं च श्रुतेः प्रकटयत्येवं कथनम् । तेन तत्साधनोपदेशः पर्य-

सुवर्णसूत्रम् ।

वेभ्यः । स्वव्रतानीत्यादि । एतेन भगवतः स्वपरस्वरूपमर्यादात्यागेऽपि समर्थत्वाच्छन्दोऽपीदमित्थतया तल्लीलां वक्तुं न शक्नोतीति ज्ञापितम् । इत्युपदेश इति । इदमामन्त्रणं दर्शनसाधनोपदेशरूपमित्यर्थः । तदुपपादयन्ति—यद्यपीत्यादि । न च मन्त्रगतत्वान्नास्य विधायकत्वमिति शङ्क्यम् । 'वसन्ताय कपिञ्जलानालभेते'त्यादीनां मन्त्राणामपि तथात्वदर्शनात् । न च 'तच्चोदकेषु मन्त्राख्ये'ति सूत्रसिद्धस्य 'प्रयोगकरणभूतः शब्दो मन्त्र' इति लक्षणस्य भङ्गप्रसङ्ग इति शङ्क्यम् । 'अधिकं तत्रानुप्रविष्टं, न तु तद्धानि'रिति न्यायेनाभङ्गात् । न च प्रकृते प्रयोगकरणत्वाभावान्न मन्त्रत्वमिति वाच्यम् । इतरत्र सिद्धत्वात् । लक्षणस्यौत्सर्गिकत्वाच्च । अन्यथा प्रत्यगाशीर्मन्त्रेषु व्यभिचारानपायात् । 'प्रत्यगाशिषो मन्त्रान् जपत्यकरणा'निति कल्पात् । अतो न चोद्यावसर इति दिक् ।

हरितोषिणी ।

अयं चेति । स्वकीयव्रतस्यापि व्रतपदेन ग्रहणमिति सूचयितुमाहुः—स्वव्रतान्यपीति । स्पृश् धातोः स्पर्शनार्थकत्वमादायाहुः—अस्मिन्नर्थे इति । उपदेश इति । वेदोऽप्युपदेशरूपेण कथयति, न तु सम्पूर्णलीलाकथने समर्थ इति सूचितम् । उपदेशकथनेन साधनमुपपादयन्ति—यद्यपीति । कर्मदर्शनस्य 'कर्माणि पश्यते'ति श्रुत्युक्तस्येत्यर्थः । कृतिसाध्यत्वं यागादौ, न तु यागजन्यफले स्वर्गादावित्याशयेनाहुः—फलत्वेनेति । तथाऽपीति ।

गङ्गाधरभट्टी ।

अविकृतत्वमिति । यत्र व्येति विविधं विकारं स्त्रीपुंसाविकृतं नैति तदव्ययं, तत्प्रयोगेणात्रापि विकारराहित्यं ध्वन्यते । ध्वनिर्हि न व्याप्रावेव, किन्त्वव्याप्यतिव्याप्त्योरपि भवति, परम्परयापि चेत्यादि प्रतिपादितं काव्यप्रकाशादौ । इत्यर्थो युज्यत इति । पूर्वोक्तार्थे उपपत्तिस्तु पदपाठे नञ्पाठाभावः ।

वक्ष्यति। एतेन कर्मणां नित्यत्वं ज्ञेयम्। अन्यथैतदुपदेशासम्भवात्। इन्द्रस्य युज्यो योग्योऽनुकूलः सखा। अयमर्थः—भगवतेन्द्रयागभङ्गे कृते बहुवल्गनवृष्ट्यादिभिरिन्द्रेण द्रोहे कृतेऽपि तद्धेतुभूतदोषरूपमदमेव दूरीकृतवान् सर्वसमर्थोऽपि, न त्विन्द्रं तदधिकारं वा। तथा च तद्दोषहरणेन तदनुकूलः। तदनन्तरमिन्द्राभिषेकगोविन्दनामधारणादिभिस्तत्समानधर्मैस्तस्य सखा। एतेनाप्रपन्नेऽपि प्रत्युतापकारकर्तर्यपि स्वयमुद्यम्य तद्दोषनिवर्तकस्तद्धर्माङ्गीकर्ता च नान्योऽस्तीति परमकृपालुत्वं दर्शितम्। तेन भजनौपयिकरूपमुक्तं भवति॥

यद्वा यतः कर्मभ्य इन्द्रस्य व्रतानि यागादीनि पस्पशे बबाधे तानि पश्यतेत्यन्वयः। तानि कर्माणि केवलात्मसात्करणरूपाणि। एतच्च यथा दशमस्कन्धविवरणे प्रपञ्चितं पितृचरणैरिति नात्रोच्यते। तेन स्वतःसाधनरहितत्वेऽपि विपरीततत्करणेऽपि तन्निवार्य स्वत एवात्मसात्करणल-

सुवर्णसूत्रम्।

एतेनेति। दर्शनामन्त्रणेन। अन्यथेति। अनित्यत्वे दर्शनसमयवर्तित्वाभावेन। ननु(?) पस्पश इति भूतार्थप्रयोगादनित्यत्वं शङ्क्यम्। एतस्य सिद्धार्थानुवादपरत्वेन नाशबोधकत्वाभावात्। इदमनुपदमेव 'जज्ञान एव व्यबाधते'ति श्रुतिव्याख्याने स्फुटीभविष्यति॥

हरितोषिणी।

अतिहृद्यानामिति। विष्णोः कर्मणामिति शेषः। एवं कथनमिति। पश्यतेत्युपदेशरूपं कथनमित्यर्थः। साधने क्रियमाणे दर्शनं भविष्यतीत्यत्र तात्पर्यमाहुः—तेनेति। इन्द्रस्य यागभङ्गे कृते तस्य शत्रुर्न तु सखेत्यतः श्रुतेस्तात्पर्यं वर्णयन्ति—अयमर्थ इत्यादिना। स्वयमुद्यम्येति। स्वयमुद्योगं कृत्वा, न त्विच्छयेत्यर्थः। तेनेति। दयालुत्वेनेत्यर्थः॥

पक्षान्तरमाहुः—यद्वेति। बबाध इति। आत्मसात्करणं यस्य जातं, तस्य यागजन्यफलेच्छाभावाद्यागाद्यपेक्षा नास्तीति भावः। अथ येन्द्रस्य यागभङ्गः कृतः, तस्य पुनरात्मसात्करणं कृतं, तेन कृत्वा यागस्य बाध एव जातः, प्रचारो न जात इति भावः। आत्मसात्करणं भगवदधीनमित्याहुः—तेन स्वत इति। इन्द्रेण भजनादिकं न कृतं,

गङ्गाधरभट्टी।

अन्यथेति। अनित्यत्वे दर्शनसमयेऽभावेन। [1]बहुबलादिति। [2]बहुवल्गनेतिपाठे वल्गनं वलश्लाघनम्। नन्वेवं भूतार्थकपस्पश इत्यनुपपन्नम्। सत्यम्! तथा प्रयोगः सिद्धार्थकत्वबोधनायैवेति 'जज्ञान' इति श्रुतौ व्याख्यास्यते॥

---

1 बहुबलादिति कपुस्तकम्। 2 बहुवलाद्येकोन क्वचित्।

क्षणधर्मोऽसाधारणो ज्ञापितो भवति । तेनैतस्यैव भजनीयत्वमुक्तं भवति । अन्ये हि स्वभक्तसाधनसंपत्तौ फलं ददति, न त्वन्यथाऽपीति भावः । युज्यो योग्यो गोपिकानां तडिद्रूपत्वेन, भगवतश्च नीलमेघश्यामत्वेन तासां योगार्हः, सखा समानशीलव्यसनवानित्यर्थः । युजेर्बाहुलकात्क्यप् । कित्वाद्गुणाभावः ॥

एतन्मन्त्रद्वयानन्तरमेव ऋग्वेदे पठ्यते—'तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पद'मिति । एतदर्थस्तु—विष्णोर्यत्पूर्वोक्तं परमं पदमस्ति, तत्पदं विप्रासो मेधाविनः, पुनः कीदृशाः, विपन्यवो विशेषेण स्तोतारः, पुनः कीदृशाः, जागृवांसः शब्दार्थयोः प्रमादराहित्येन जागरूकाः समिन्धते सम्यग्दीपयन्ति प्रकाशयन्ति । मेधावित्वेन यथोक्तभगवत्तल्लीलास्वरूपाद्यनुसन्धानसहिताः शब्दार्थयोः प्रमादराहित्येन वाच्यवाचकयोर्भगवद्रूपनाम्नोर्नित्यत्वेन कुतर्काद्यनुपहतमतयो निरन्तरकीर्तनरूपस्तोत्रादिसाधनैः प्रकटयन्तीत्यर्थः । तादृशासा-

सुवर्णसूत्रम् ।

साधनोपदेशत्वसमर्थनाय मन्त्रान्तरमुपक्षिपन्ति—एतदित्यादि । पूर्वश्रुत्यैकवाक्यत्वस्य स्फुटीकरणायाहुः—तादृशेत्यादि । आप्रदपरिहाराय स्मृतिसम्मतत्वमस्यार्थस्याहुः—

हरितोषिणी ।

विपरीतं वृष्ट्यादिकं तु कृतं, तथापि तस्यात्मसात्करणं कृतमिति परमदयालुत्वं व्यज्यत इति भावः । असाधारणपदस्वारस्यमाहुः—अन्ये हीति । अन्ये देवा इत्यर्थः । इन्द्रस्येतिपूर्वान्वयि व्याख्यातव्यमवशिष्टं–युज्यः सखेति, तद्व्याख्यानमाहुः–योग्य इत्यादि ॥

मन्त्रान्तरमवतारयन्ति—एतन्मन्त्रेति । मन्त्रार्थमाहुः—एतदर्थस्त्विति । विप्रास इत्यस्य तात्पर्यार्थमाहुः—मेधावित्वेनेति । भगवल्लीलेति । भागवतादिषु यथोक्तं भगवतल्लीलानां च स्वरूपमित्यर्थः । जागृवांस इत्यस्य तात्पर्यार्थमाहुः—शब्दार्थयोरिति । विपन्यव इत्यस्य तात्पर्यमाहुः—निरन्तरेति । तादृशेति । एतेन पूर्वमन्त्रैकवाक्यता

गङ्गाधरभट्टी ।

गोपिकानां तडिद्रूपत्वेनेत्यादि । इन्द्रस्येत्युपलक्षणम् । गोपिकानामपीति भावः । बाहुलकादिति । अन्यथा 'ऋहलोर्ण्य'दिति स्यात् । जागृवांस इति क्वसन्तं छान्दसम् ॥

धनसंपत्त्यौ तद्दर्शनसामर्थ्ये सति पश्यन्तीति तथा । अत एव श्रीभागवतेऽप्युक्तम्–'शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः, स्मरन्ति नन्दन्ति तवेहितं जनाः । त एव पश्यन्त्यचिरेणे'त्यादि । तथा च स्थितस्यैव परमपदस्य समिन्धनमुक्तमिति नित्यत्वमेव काननपशुपक्षिमनुजादीनां तत्सम्बन्धिलीलानामपि ॥

नित्यलीलास्थानानामधिष्ठानध्वंसप्रयुक्तानित्यत्वस्य परिहारः

(४८) अपरं च छान्दोग्ये पठ्यते—'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं, तद्वा व विजिज्ञासितव्य'मित्येतस्याग्रे 'किं तत्र विद्यते यदन्वेष्टव्यं यद्वा व विजिज्ञासितव्य'मिति प्रश्ने 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इत्यादिनाऽग्निवायुसूर्यचन्द्रविद्युन्नक्षत्राण्युक्त्वा 'यच्चास्येहास्ति, यच्च नास्ति सर्वं

सुवर्णसूत्रम् ।

अत एवेत्यादि । यस्मादस्यां श्रुतौ कीर्तनादीनां दर्शनस्य साधनत्वमुच्यते, तस्मादेव श्रीभागवते श्रवणादीनि तथात्वेन संगृह्यन्त इत्यर्थः । सिद्धमाहुः—तथा चेत्यादि । एवं प्रमाणदौर्बल्यरूपश्चतुर्दशो दोषः परिहृतः ॥

(४८) ननु 'ता वां वास्तूनी'ति मन्त्रे 'अत्राहे'त्यनेन भूमिष्ठत्वं गोकुलस्योक्तम्, भूमिस्तु दैत्यै रसायामवान्तरप्रलये नीयते मज्जति च, महाप्रलये च लीयत इत्यधिष्ठानध्वंसादिप्रयुक्तमनित्यत्वमापततीति तत्परिहारायाहुः—अपरं चेत्यादि । अत्र 'ब्रह्मपुरे

हरितोषिणी ।

सूचिता । अयमर्थो व्याससंमतोऽपीत्याहुः—अत एवेति । एतावता यत्सिद्धं तदेवाहुः—तथा चेति । समिन्धनमिति । सम्यग्दीपनमित्यर्थः । तत्सम्बन्धीति । गोकुलसम्बन्धीत्यर्थः ॥

(४८) प्रलये पृथिव्या नाशे गोकुलस्यापि नाशः स्यादित्यत आहुः—अपरञ्चेति ।

गङ्गाधरभट्टी ।

(४८) छान्दोग्य इति । ब्रह्मपुरे ब्रजे । यदन्तरिति । परं ब्रह्म । अयमाकाश इति । अक्षरब्रह्म । हृदये । भक्तहृदये । 'आकाशस्तल्लिङ्गा'दिति सूत्रादाकाशो ब्रह्म, यदन्तः पुरुषोत्तमः । अस्तीति । वर्तते । नास्तीति । भूतं भविष्यच्च ।

१ सौ. प्रा. पु: पाठः ।

तदस्मिन् समाहित'मित्युक्त्वा ब्रह्मपुरे जीर्णे ध्वस्ते वा तदाश्रितं किमव-शिष्यत इति प्रश्ने 'नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिताः, एष आत्माऽपहतपाप्मे'त्यादि। अत्र ब्रह्मपुरशब्देन ब्रह्मणो भगवतः पुरं लीलास्थानं श्रीगोकुलमथुराद्यु-च्यते। शरीरार्थकत्व 'एतत्सत्यं ब्रह्मपुर'मित्यग्रिमं वाक्यं विरुध्येत। अस्य नित्यत्वकथनार्थमेव तज्जरादिहेतुकतदाश्रितनाशं पूर्वपक्षत्वेनोक्त्वा वस्तुतस्तु तत्र जरावधादिसंभावनैव नास्ति, यत एतत्सत्यं ब्रह्मपुरम्; तथापि 'तुष्यतु दुर्जन' इतिन्यायेन 'नास्य जरये'त्याद्युक्तं तर्कितं त-दिति ज्ञेयम्। अत एव भक्तानां सर्वे कामास्तस्मिन् सम्यगाहिता

## सुवर्णसूत्रम्।

जीर्णे' इत्यारभ्य 'प्रश्न' इत्यन्तं वाक्यं श्रुत्यर्थबोधकं ज्ञेयम्। तदग्रिमस्य 'नास्य जरये'-त्यादिग्रन्थस्य पूर्वोक्तेन पठ्यत इत्यनेनान्वयः। व्याकुर्वन्ति—अत्रेत्यादि। ननु ब्रह्मपु-रशब्देन नित्यलीलास्थानोक्तौ 'यदैतज्जरा वाऽऽप्नोति प्रध्वंसते वा किं ततोऽतिशि-ष्यत' इतिश्रुतिस्थः प्रश्नो विरुध्येतेत्यत आहुः—अस्येत्यादि। नन्वत्र लीलास्थानमेवो-च्यत इत्यत्र किं गमकमित्याकाङ्क्षायामाहुः—अत एवेत्यादि। तथा च कामसमाधानमेव

## हरितोषिणी।

अथेत्यारभ्यापहतपाप्मेत्यादीत्यन्ता छान्दोग्यश्रुतिः। श्रुत्यर्थमाहुः—अत्र ब्रह्मपुरेति। ननु ब्रह्मणः पुरं शरीरं कुत उच्यत(?) इत्यत आहुः—शरीरार्थकत्व इति। अस्येति। गोकुलस्येत्यर्थः। पूर्वपक्षत्वेनोक्त इत्यस्य समाधानमाहुः—यत एतत्सत्यमिति। तर्कितं तदिति। तद्ग्रन्थविषयीभूतं गोकुलमित्यर्थः। (तर्कश्च)यदिदमुपनिषत्प्रतिपाद्यं श्रीगोकुलम-नित्यं, तस्य तर्हि नास्य जरयेत्याद्युक्तिर्न स्यात्, नास्य जरयेत्याद्युक्तिस्तु वर्तत इति गो-कुलमपि नित्यमस्तीति तर्केण तस्य नित्यत्वमिति भावः। अत्र गोकुलमेवोच्यत इत्यस्मि-न्नर्थे गमकमाहुः–अत एवेति। भक्तानामित्युक्त्या तदेवोच्यत इति ज्ञायत इति भावः।

## गङ्गाधरभट्टी।

अस्मिन्निति। अक्षरं। तदाश्रितमिति। परं ब्रह्म। कामा इति। भक्तकामाः। 'एष आत्मे'त्यादिना परं ब्रह्मोच्यते, 'सोऽन्वेष्टव्यः स विजिज्ञासितव्य' इत्युत्तरे श्रवणात्। शरीरार्थकत्वे इति। शङ्कराचार्योक्ते। तर्कितमिति। तर्कश्च न प्रमा। यद्यग्निमान्न स्याद् धूमवान्न स्यादिति यथा। न चाप्रमा। प्रमासाधकत्वात्॥

इत्युक्तम् । एतच्चानन्दमयाधिकरणे 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणे'ति श्रुतिव्याख्याने प्रपञ्चितम् ॥

किञ्च 'दहर उत्तरेभ्यः' इत्यधिकरणेन व्यासैर्दहरशब्दवाच्यार्थो भगवानिति निर्णीतः । भगवत्स्थानस्यापि भगवद्धर्मवत्त्वेन तत्स्थितियोग्यत्वमिति वक्तुं श्रीगोकुलस्थभक्तहृदयकमलस्यापि दहरत्वमुक्तम् । तत्र व्याप्य प्रकटीभूय सर्वव्यवहारहेतुत्वेन स्थित इत्याकाशत्वमुच्यते। साक्षात्पुरुषोत्तमलीलोपयोगिपदार्था आकाशादयो सुप्रभृतयोऽपि भगवदात्मका एवेति तदन्तःस्थिता एव, न तु कालाद्यधीनास्तदाश्रया वा । 'ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यह'मितिभगवद्वाक्याच्च ।

सुवर्णसूत्रम् ।

गमकमित्यर्थः । नन्विदमपि शरीरसाधारणमेवेति शङ्कायां पुनराहुः—एतच्चेत्यादि । उक्तश्रुतौ हि ब्रह्मणा सह सर्वकामाशनं श्राव्यते, तथा सति कामपदेन कामभोगोपकरणान्येव तत्राभिप्रेयन्ते, मनोरथपरत्वे त्वशनोक्तिर्विरुध्येत, तदिदं तत्र प्रपञ्चितम्, तथात्रापि प्रविष्टितत्वकथनेन तान्येवाभिप्रेयन्त इत्यर्थः ॥

नन्वयमर्थो न्यायविरुद्ध इत्याकाङ्क्षायां तत्परिहाराय श्रौतानि पदानि विवृण्वन्ति—किञ्चेत्यादि । ननु सूत्रे दहरपदवाच्यस्य भगवत्त्वनिर्णयेन प्रकृते किं सिद्धमित्यत आहुः—भगवदित्यादि । उच्यत इति । भगवत उच्यते । तदन्तःस्थिता इति । भगवदन्तःस्थिताः । यथाऽन्तर्यामिणः पृथिव्याद्यन्तःस्थितस्य पृथिव्यादयोऽन्तःस्थितास्तथैवैतदपीत्यर्थः । ननु तत्र श्रौतं तथात्वं, प्रकृते तत्कथमवगन्तुं शक्यत इत्याकाङ्क्षायां भगवद्वाक्यार्थेनात्रोपष्टम्भन्ति—य इत्यादि । तथा चैते सुप्रभृतयोऽपि त्यक्तबाह्यत्वलोकव्यवहा-

हरितोषिणी ।

तदर्थस्य दृढीकरणार्थमाहुः—एतच्चेति । सर्वान् कामानिति । अत्र कामपदेन कामभोगोपकरणान्येव, न तु मनोरथानि, तेषामशनाभावा 'दश्नुत' इत्युक्तिः श्रुतौ न स्यादिति भावः ॥

दहरपदस्य श्रीगोकुलस्थभक्तहृदयपरत्वे व्याससूत्रं प्रमाणयन्ति—किञ्चेति । 'तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्य'मिति तैत्तिरीयोपनिषद्वाक्याद्दहरपदस्य भक्तहृदयाकाशपरत्वे स्वारस्यमाहुः—तत्रेति । भक्तहृदये इत्यर्थः । तदन्तःस्थिता इति । भगवदन्तःस्थिता इत्यर्थः । 'यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश'

गङ्गाधरभट्टी ।

दहरत्वमुक्तमिति । अक्षरब्रह्मपरब्रह्मणोर्नात्यन्तं भेद इत्यन्यत्र स्थितम् । आकाशत्वमिति । ब्रह्मणः । तदन्तःस्थिता इति । तथा च यथाऽन्तर्यामिणः पृथिव्यन्तःस्थस्य पृथिव्यादयोऽन्तःस्थितास्तथैवेऽपीत्यर्थः ।

यावान्वेति परिमाणसाम्यमुपलक्षणविधयोक्तमिति ज्ञेयम् । तेन लीलास्थपदार्थाः स्वरूपतस्त्वलौकिका एव, तथापि लौकिकसरूपा एवेति ज्ञाप्यते । 'लोकवत्तु लीलाकैवल्य'मितिन्यायात् । एवं सति निष्प्रत्यूहं लीलानित्यत्वं श्रुतिवृन्दैरमन्दगीतममन्दानन्दकन्दममन्दभाग्यराशिभिर्मनुजैर्हृदि भावनीयम् ॥

अपरञ्च बृहद्वामनपुराणे गीयन्त उत्तरस्थाने खिल्ये च भृग्वादीन्प्रति ब्रह्मणो वाक्यानि—'षष्टिवर्षसहस्राणि मया तप्तं तपः पुरा । नन्दगोपव्रजस्त्रीणां पादरेणूपलब्धये ॥ तथापि न मया प्राप्तास्तासां वै पादरेणवः । श्रुत्वैतद्ब्रह्मणो वाक्यं भृगुः प्राह्लाथ सादरम् ॥ वैष्णवानां पाद-

सुवर्णसूत्रम् ।

यंस्वरूपलोकधर्मा इति तेऽपि तथेत्यर्थः । तेनेति । परिमाणसाम्यस्य लौकिकधर्मान्तरोपलक्षकत्वेन । उपलक्षकत्वोक्तौ मानमाहुः—लोकवदित्यादि । तथा च लीलायां व्यासेन बोधितं लोकसाम्यं तत्सम्बन्धिष्वपि लीलानिर्वाहाय बोधयतीति नोपलक्षकत्वमप्रामाणिकमित्यर्थः । सिद्धमाहुः—एवं सतीत्यादि । लीलासम्बन्धिनां नित्यत्वे सत्यधिष्ठानध्वंसप्रयुक्तदोषाभावात्तथेत्यर्थः । तथा च यथा छान्दोग्यवाक्यस्थब्रह्मपुरपदस्य शरीरपरत्वेऽपि वेश्मनि न तद्ध्वंसादिकृतदोषप्रसक्तिः, तथात्र भूमिष्ठस्य भगवद्धामस्वरूपस्य गोकुलस्यापीति भावः । एवं पञ्चदशः परिहृतः ॥

उक्तोपबृंहणाय पुराणवाक्यान्याहुः—अपरञ्चेत्यादि । नारायणपदं निरुक्तिभेदेन य-

हरितोषिणी ।

इत्यस्याः श्रुतेः का गतिरित्यत आहुः—यावान्वेतीति । तेनेति । परिमाणसाम्यस्योपलक्षकत्वेनेत्यर्थः । अत्रार्थे व्याससूत्रं प्रमाणमाहुः—लोकवदिति । लोकसाम्यं लीलायां व्यासेन बोधितं चेल्लीलासम्बन्धिष्वपि बोध्यमित्युपलक्षणं युक्तमिति भावः । एतावता भूमौ यद्भगवन्निवासस्थानं गोकुलं तन्नाशे सति न नश्यतीत्याहुः—एवं सतीति । मनुजैर्लीलानित्यत्वं निष्प्रत्यूहं निर्विघ्नं यथा भवति तथा हृदि विभावनीयमित्यन्वयः । किंभूतैर्मनुजैः, अमन्दभाग्यराशिभिः । किंभूतं लीलानित्यत्वम्, श्रुतिवृन्दैरमन्दगीतम् । उच्चैर्गीतमित्यर्थः । पुनः कथंभूतं लीलानित्यत्वं, अमन्दानन्दकन्दम् । अमन्दोऽधिक आनन्दकन्दो यस्मिन् ॥

अत्र प्रमाणानि श्रुतिवाक्यान्युक्त्वा पुराणवाक्यान्याहुः—अपरं चेति । 'षष्टिवर्ष-

गङ्गाधरभट्टाः ।

उपलक्षणविधयेति । शाखाचन्द्रन्यायेनेत्यर्थः । भूताकाशस्य ब्रह्मापेक्षया व्याप्यत्वात् ॥

रजो गृह्यते त्वद्विधैरपि । सन्ति ते बहवो लोके वैष्णवा नारदादयः ॥ तेषां विहाय गोपीनां पादरेणुस्त्वयापि यत् । गृह्यते संशयो मेऽत्र को हेतुस्तद्वद प्रभो ॥ ततः ब्रह्मा भृगुं प्राह चिन्तयित्वा पुरातनीम् । कथां सर्वश्रुतीनां यद्रहस्यं परमाद्भुतम् ॥ ब्रह्मोवाच—न स्त्रियो व्रजसुन्दर्यः पुत्र ताः श्रुतयः किल । नाऽहं शिवश्च शेषश्च श्रीश्च ताभिः समाः क्वचित् ॥ प्राकृते प्रलये प्राप्ते व्यक्तेऽव्यक्तं गते पुरा । शिष्टे ब्रह्मणि चिन्मात्रे कालमायाऽतिगेऽक्षरे ॥ ब्रह्मानन्दमयो लोको व्यापिवैकुण्ठसंज्ञकः । निर्गुणोऽनाद्यनन्तश्च वर्तते केवलेऽक्षरे ॥ अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तमम् । तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः ॥ चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान् गिरा । तुष्टोऽस्मि ब्रूत भोः प्राज्ञा ! वरं यन्मनसीप्सितम् ॥ श्रुतय ऊचुः—'नारायणादिरूपाणि ज्ञातान्यस्माभिरच्युत । सगुणं ब्रह्म सर्वेदं वस्तुबुद्धिर्न तेषु नः ॥ ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम् । वाङ्मनोगोचरातीतं ततो न ज्ञायते तु तत् ॥ आनन्दमात्रमिति यद्वदन्तीह पुराविदः । तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ॥ श्रुत्वैतद्दर्शयामास स्वं लोकं प्रकृतेः परम् । केवलानुभवानन्दमात्रमक्षरमध्यगम् ॥ यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमैः । मनोरमनिकुञ्जाढ्यं सर्वर्तुसुखसंयुतम् ॥ यत्र गोवर्द्धनो नाम सुनिर्झरदरीयुतः । रत्नधातुमयः श्रीमान् सुपक्षिगणसंकुलः ॥ यत्र निर्मलपानीया

सुवर्णसूत्रम् ।

यपि पुरुषत्रयवाचकं; तथापि 'नारायणादिरूपाणी'त्यत्र नारायणपदम 'आपो नारा इति प्रोक्ता आपो वै नरसूनयः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत' इति निरुक्त्या प्रथमपुरुषपरं ज्ञेयं, नाक्षरपरम् । सगुणत्वस्याग्रे उक्तत्वादुक्तहेतोर्जिज्ञासितत्वकथनाय न तृतीयपरम् । नारायणादीति । आदिपदं तदवतारसंग्राहकम् । 'एतन्नानाऽवताराणां निधानं बीजमव्यय'मितिवाक्येन तस्य नानाऽवतारबीजत्वात् । सर्वेदमित्यत्र सर्वपदं लुप्तविभक्तिकं भिन्नमेव । अक्षरव्यावृत्त्यर्थमाहुः—ब्रह्मेत्यादिश्लोकद्वयम ।

गङ्गाधरभट्टी ।

बृहद्वामने व्यक्तेऽव्यक्तं गते पुरेति । व्यक्ते महदादिके प्रकृतिं प्रविष्टे । केवलेऽक्षरे इति । एतेन तल्लोकस्याक्षराभेदः सूचितः । सर्वेदमिति । इदं सर्वमित्यर्थः । उभयोर्विशेषणत्वेऽन्यतरस्य विशेष्यत्वविवक्षया समासोऽन्यतरस्य पूर्वनिपातः । खञ्जः कुब्जः कुब्जखञ्ज इतिवत् । वस्तुबुद्धिरिति । निर्गुणत्वबुद्धिः । वाङ्मनोगोचरेति । वाङ्मनोगोचरात्सगुणादतीतमित्यर्थः ।

कालिन्दी सरितां वरा । रत्नबद्धोभयतटी हंसपद्मादिसंकुला ॥ नानारासरसोन्मत्तं यत्र गोपीकदम्बकम् । तत्कदम्बकमध्यस्थः किशोराकृतिरच्युतः ॥ दर्शयित्वेति च प्राह ब्रूत किं करवाणि वः । दृष्टो मदीयो लोकोऽयं यतो नास्ति परं वरम् ॥ श्रुतय ऊचुः—'कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः । कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयम् ॥ यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः । भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा ॥ श्रीभगवानुवाच—'दुर्लभो दुर्घटश्चैव युष्माकं सुमनोरथः । मयाऽनुमोदितः सम्यक् सत्यो भवितुमर्हति ॥ आगामिनि विरञ्चौ तु जाते सृष्ट्यर्थमुद्यते । कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ॥ पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले । वृन्दावने भविष्यामि प्रेयान्वो रासमण्डले ॥ जारधर्मेण सुस्नेहं सुदृढं सर्वतोऽधिकम् । मयि संप्राप्य सर्वेऽपि कृतकृत्या भविष्यथ ॥ ब्रह्मोवाच—'श्रुत्वैतच्चिन्तयन्त्यस्ता रूपं भगवतश्चिरम् । उक्तकालं समासाद्य गोप्यो भूत्वा हरिं गता' इति ॥ अत्र हि श्रुतिभिः सर्ववेदान्तप्रलयं गुणातीतं वाङ्मनोगोचरातीतमानन्दैकरूपं यत्तव रूपं तत्प्रदर्शयेति प्रार्थितो भगवान् गोकुलं, तत्स्थितं स्वस्वरूपं, लीलां तत्र क्रियमाणां च प्रदर्शितवानित्यु-

सुवर्णसूत्रम् ।

'आगामिनि विरञ्चौ त्वि'त्यनेन प्राकृतिकप्रलयस्य न महाप्रलयत्वं नैयायिकादीनामिवेति बोधितम् । तेन प्रपञ्चप्रवाहस्यानादिता दर्शिता । एवमुपबृंहणवाक्यान्युक्त्वा श्लोकद्वयार्थकथनपूर्वकं तत्तात्पर्यमाहुः—अत्रेत्यादि । उपबृंहणत्वं स्फुटीकुर्वन्ति—एतदि-

हरितोषिणी ।

सहस्राणी'त्यारभ्य 'गोप्यो भूत्वा हरिं गता' इत्यन्तं । सार्धषड्विंशतिश्लोकाः स्पष्टार्थाः । सर्वमिति छेदः । सर्वस्वरूपेत्यर्थः । एतेषां श्लोकानां तात्पर्यमाहुः—अत्र हीति ।

गङ्गाधरभट्टी ।

आगामिनि विरञ्चाविति । एतेन चतुर्मुखलयोपि नैमित्तिक एव दैनन्दिनवन्न महाप्रलय इत्युक्तम् । युगपत्सकलब्रह्माण्डलय एव तु महाप्रलयो भवति । न चासंभवो, भगवति सर्वसंभवात् । न चानेकब्रह्माण्डसत्त्वे मानाभावः । 'अन्तराऽण्डनिचया ननु सावरणा' इति श्रुतिस्तुतेः । महाप्रलयेऽपि नित्या लीला तिष्ठत्येव । अन्यथा नित्यत्वासंभवात् । अलमधिकेन । 'अनतिप्रश्न्यां वै देवतामतिपृच्छसि मा ते मूर्धा व्यपप्त'दिति बृहदारण्यकात् ।

---

१ व इति क. पु. पाठः ।

च्यते । एतत्तदैव घटेत यदि सर्ववेदान्तप्रत्ययत्वादिविशिष्टमेतद्भवेत् । एवं सति तन्नित्यता निष्प्रत्यूहा सिद्धा भवति । न च तत्स्थितस्वरूपमात्रस्यैव नित्यता, न लोकस्यापीति वाच्यम् । लोकप्रदर्शनवैयर्थ्यापातात् । अप्रार्थितत्वात् । तथा च स्वरूपदर्शनमात्रार्थं प्रार्थितो यद्वृन्दावनादिकमपि प्रदर्शितवान्, तेन वृन्दावनाद्युक्तसामग्रीविशिष्टमेव सदा

सुवर्णसूत्रम् ।

त्यादि । एतदिति । स्वरूपदर्शने प्रार्थिते लोकपूर्वकं तद्दर्शनम् । एतद्भवेदिति । गोकुलं भवेत् । एवं सतीत्यादि । लोकविशिष्टस्य स्वरूपस्य रूपसत्त्वे सति । तन्नित्यता । लोकनित्यता । निष्प्रत्यूहासिद्धा भवति । स्वरूपान्तःपातित्वान्निर्विघ्ना सिद्धा भवतीत्यर्थः । एतदेव व्युत्पादनपूर्वकं स्फुटीकुर्वन्ति—न चेत्यादि । ननु लोकस्यापि स्वरूपान्तःपातित्वे यथा वृक्षस्य फलप्रसूनपल्लवादिभिः स्वगतद्वैतं, तद्वदत्र लोके स्वगतद्वैतापत्तिरिति चेत्तत्राहुः—वस्तुन इत्यादि । 'तस्मान्न भिन्ना एतास्तु आभिर्भिन्नो न वै प्रभुः । भूमावतारितं सर्वं वैकुण्ठं स्वर्गवासिना'मिति गोपालतापनीयश्रुतेः, 'यदक्षरे परमे प्रजा' इति तैत्तिरीयश्रुतेः, पूर्वोक्तछान्दोग्यश्रुतेश्च लोकस्तत्रत्याश्च भगवतः सकाशान्नात्यन्तं भिन्ना, नाप्यत्यन्तमभिन्नाः, किन्तु भिन्नाभिन्ना इति वृक्षफलादिवत् स्वगतभेदाङ्गीकारेऽपि न क्षतिः, श्रुत्यादिविरोधाभावादित्यर्थः । एतेनैव मथुराद्वारकादीनां तत्स्थितानां च लीलास्थानां च नित्यता प्रदर्शिता, समानन्यायात् । न च मिथिलाकुरुक्षेत्रादिष्वपि लीलाकरणात्तेषां सुतलसंयमन्यादीनां च नित्यताप्रसङ्गः । तावन्मात्रार्थं तत्र गमनमात्रेण नित्यलीलास्थानत्वस्याशक्यवचनात् । अन्यथा कार्यबोधकश्रुतिस्मृतिव्याकोपप्रसङ्गात् । मथुरादिषु नित्यसन्निधानवाक्याद्भक्तानां तदनुभवाच्चापि तथाऽवसीयते । अतो न चोद्यावसरः । एवं पूर्वो-

हरितोषिणी ।

एतदिति । प्रार्थनोत्तरकालीनं गोकुलादीनां प्रदर्शनम् । एतदिति । गोकुलादिकमित्यर्थः । निष्प्रत्यूहा । निर्विघ्ना । अत्र शङ्कते—न चेति । उत्तरमाहुः—लोकेति । तेनेति ।

गङ्गाधरभट्टी ।

वस्तुन एव तथात्वादिति । न चाधारस्याधेयरूपत्वं विरुद्धं, विरुद्धधर्माधारत्वस्यास्मन्मते भूषणत्वात् । 'भर्ता सन् भ्रियमाणो बिभर्ती'ति तैत्तिरीये भर्तृसूक्तोक्तेः । भुवा धार्यमाणेषु भूधरत्वस्य लोके प्रसिद्धेश्च । न्यायमप्याहुः—

---

टिप्पणी ।

* गोपालतापनीयश्रुतेरिति । इदानीमुपलभ्यमानेषु लिखितमुद्रितपुस्तकेष्वियं श्रुतिरस्माभिर्नोपलब्धा ॥

भगवद्रूपं, न केवलमिति ज्ञापयति। वस्तुन एव तथात्वान्न शङ्कालेशोऽप्यत्र। अत एव ब्रह्मधर्मस्वरूपविचारे 'प्रकाशाश्रयवद्वा तेजस्त्वा'दिति सूत्रितं बादरायणेन। एतच्च यथा तथा पुरस्तादेवोक्तम्॥

अत एवेयं लीला ऋगन्तरेणापि ऋग्वेदे निरूप्यते। तथाहि—'ज॒ज्ञा॒न ए॒व व्य॑बाधत॒ स्पृध॒: प्राप॑श्यद्वी॒रो अ॒भि पौंस्यं॒ रण॑म्। अवृ॑श्चद॒द्रि॒मव॑ स॒स्यद॑: सृ॒जद॑स्तभ्ना॒न्नाकं॑ स्वप॒स्यया॑ पृ॒थु'मिति। जज्ञान एव गोकुले जातमात्र एव स्पृधः पूतनातृणावर्तादिवैरिणो व्यबाधत विविधप्रकारैर्विशेषेण हिंसितवान्। पश्चाद्वीरो विक्रान्तो मथुराद्वारकादिषु अभिपौंस्यमात्मपौरुषानुरूपं रणं दैत्यैः सह संग्रामं प्रापश्यत् अनुभूतवान्

सुवर्णसूत्रम्।

कोपबृंहणविचारेणैव साधारणजनदृश्यत्वं लौकिकत्वं भगवद्भिन्नत्वं च परिहृतं ज्ञेयम्। उक्तवाक्यानामतिप्रसिद्धत्वाभावात्कुमतीनां शङ्का नापैतीति पूर्वोक्तमेव स्मारयन्ति—अत एवेति। धर्माणां ब्रह्मणः सकाशाद्भेदाभेदाभ्यामेव। तथा च स्वगतभेदस्य व्यासचरणैरप्यनुमतत्वान्न पूर्वोक्तेऽर्थे शङ्कालेश इत्यर्थः। एवं षोडशसप्तदशाष्टादशाः परिहृताः॥

अतः परं भूतार्थप्रयोगस्य तथाऽनुभवस्य चादोषत्वं समर्थयन्ति—अत एवेत्यादि। अत एवेति। लीलासम्बन्धिनां भगवदात्मकत्वेन नित्यत्वादेव। न च विबाधने नाशा-

हरितोषिणी।

वृन्दावनादिप्रदर्शनेन। न शङ्कालेशोऽप्यत्रेति। 'तस्मान्न भिन्ना एतास्तु आभिर्भिन्नो न वै प्रभुः। भूमावुत्तारितं सर्वं वैकुण्ठं स्वर्गवासिना'मिति गोपालतापिनीयोक्तत्वान्न शङ्कालेशोऽपीत्यर्थः। अत्र पूर्वोक्तं प्रमाणं स्मारयन्ति—प्रकाशेति। तथा वृन्दावनादिकं तत्रत्याश्च सर्वे वृक्षफलादिवद्भगवतः सकाशाद्भिन्नाभिन्ना इत्यर्थः॥

अत एवेति। लीलानां नित्यत्वादेव। निरूपणमेवाहुः—तथाहीति। ऋचमाहुः—जज्ञान एवेति। ऋगर्थमाहुः—जज्ञान एव गोकुल इति। स्पृधः प्रापश्यदित्यस्य व्याख्यानमाहुः—पश्चाद्वीर इति। प्रापश्यदित्यस्य केवलदर्शनार्थकत्वाभावादाहुः—प्राप-

गङ्गाधरभट्टी।

प्रकाशाश्रयवदिति॥ 'जज्ञान एवे'ति मते नित्यत्वं, भूतत्वं कथमिति चेत्, पूर्वकालवृत्तित्वं भूतत्वमित्याश्रयणादिति गृहाण। अत एव 'सदेव सौम्येदमग्र आसी'दिति। 'एक एव नारायण आसी'दिति च श्रुतिः। अभिपौंस्यमिति। नत्रिपुरुपार्थः, ष्यञ् कर्मार्थ इत्याहुः—आत्मपौरुषानुरूपमिति।

कृतवानित्यर्थः । भूमिष्ठदैत्यानां नाशकत्वमुक्त्वा देवेन्द्रमदभङ्गकारित्वमाह—अद्रिं गोवर्द्धनगिरिमवृश्चदुत्पाटितवान् । *सः स्यत् प्रस्रवदिन्द्रप्रेरितमेव जलमवासृजत् अधिक्षिप्तवान् निवारितवान् । एतया स्वप-

सुवर्णसूत्रम् ।

त्स्पृधां कथं नित्यमिति शङ्क्यम् । 'असुरानीकवीर्यं' इतिवाक्येन भगवद्वीर्यात्मकतया नित्यत्वात् । शरीरस्य कारणे लयेऽप्यक्षतेः । श्रुतौ स इत्यस्य लोकवेदप्रसिद्ध इत्यर्थः सं-

हरितोषिणी ।

द्द्यदिति । केचित्तु प्रापद्द्यदित्यस्य केवलदर्शनार्थकत्वं स्वीकृत्य व्याख्यानान्तरं स्वीकुर्वन्ति। तथाहि—वीर एक एव सर्वेषां कौरवाणां विनाशकरणे समर्थः, एतादृशोऽपि सन् पौंस्यं पुरुषसम्बन्धिनं कौरवपाण्डवानां रणं प्रापद्द्यत्, तटस्थतया दृष्टवानित्यर्थः । तटस्थतया दर्शने हेतुः—पौंस्यँमिति । य एक एव सर्वदैत्यविनाशकर्ता, तेन पुरुषसम्बन्धि रणं कथं कर्त्तव्यमिति पौंस्यँपदेन द्योत्यत इत्यप्याहुः । अवृश्चदद्रिमित्यस्य ऋगुत्तरार्द्धस्य व्यो-

गङ्गाधरभट्टी ।

सस्यदिति । स्यन्दू प्रस्रवणे । क्विपि †द्वित्वमार्षम् । अवासृजदिति । छन्दसि परेऽपि व्यवहिताश्चोपसर्गाः । स्वपस्ययेति । स्वपः स्वापः एकत्र स्थितिः, तस्माज्जालसायां क्यचि सुगसुकौ पर्यायेण, क्यजन्तात् 'अप्रत्यया'दित्यकारे स्त्रीत्वाट्टाबित्याशयेनाहुः—

---

टिप्पणी ।

* सः स्यदिति । यद्यपि संप्रति प्रचरतोः शाकलसंहितातत्पदपाठयोः सस्यद् इति द्वितीयाबहुवचनान्तं समासितमेकं पदमुपलभ्यते, सह स्यन्दमाना इति विद्यारण्यव्याख्यानेन च सहशब्दस्य सादेश इति प्रतीयते, परन्तु 'प्रभूर्जयन्त'मिति मन्त्रस्य व्याख्यायां 'उद्गीथस्तु 'भूर्जयन्त'मित्येकपदं मत्वा भूरादीन् लोकान् जयन्तमिति व्याचकारेति 'अवानुकं ज्यायान्' इति मन्त्रव्याख्यायां च 'अध्येतारो नु कमिति पदद्वयं कुर्वन्ति, तथापि हिकं नुकमित्यादीनि नवोत्तराणि पदानीत्युक्तवान् यास्काचार्यः । अतः केवलानां हि, नु, सु इत्येवमादीनां यावानर्थः स एव विशिष्टानामपि । तैत्तिरीया अप्येकमेव पदं कुर्वन्ती'ति च विद्यारण्योक्त्या क्वचित्प्रचरत्पदपाठविरोधेनापि प्रामाणिकैः क्रियमाणं व्याख्यानं न दुष्यतीति ज्ञायते । अतः 'सः स्य'दिति पदद्वयं सूपपन्नमेव । स्यदित्येकवचनान्तपाठस्तु शाखान्तरीयः ॥

† द्वित्वमार्षमिति । नार्षम्, अपि तु भाष्यम् । श्रुतौ 'स' इत्यस्य लोकवेदप्रसिद्ध इत्यर्थः संमाह्य इति सुवर्णसूत्रकृता स्पष्टमेव पदद्वयाङ्गीकारात् ॥

स्वया गोकुलस्थितिकरणकर्मेच्छया पृथुं विस्तीर्णं नाकमस्तभात् प्रतिपन्नवान् । इन्द्रादिदेवानां मदस्तम्भं कृतवानित्यर्थः ॥

(४९) किञ्च दशमस्कन्धे कात्यायन्यर्चनव्रतानन्तरं वरदानार्थमागतस्य भगवतो व्रजवरकुमारीषु वरदानवचनं गीयते—'मयेमा रंस्यथ क्षपा' इति । अत्रेमाः क्षपा इतीदंशब्देन ताभ्यः सर्वाः क्षपाः पुरःस्थिताः कृत्वा प्रदर्शितवानिति ज्ञायते । अन्यथा ताः

कालनित्यत्वभूतभविष्यदर्थकप्रयोगक्रमिकाविर्भावतथानुभवानुपपत्तिप्रदर्शनपुरःसरो लीलानित्यत्ववादोपसंहारः ।

सुवर्णसूत्रम् ।

माणः । गोकुलस्थितिकरणकर्मेच्छयेति । गोकुलस्थितिकरणार्थं कर्मेच्छा लीलेच्छा तयेत्यर्थः । एवं लीलाया भगवदात्मकत्वेन नित्यत्वे व्यवाधतेत्यादीनां भूतार्थप्रयोगाणां 'सदेव सौम्येदमग्र आसीत्' 'एको ह वै नारायण आसी'दित्यादिवत्पूर्वकालवृत्तित्वमेवार्थो, न तु कथनावसरे तदवृत्तित्वमपीति तादृशेच्छाधीनतया तिरोभावशक्त्यैव भूतत्वानुभवोऽपि समर्थितो भवतीति सिद्धावपि दोषावेतेनैव परिहृतौ बोध्यौ ॥

(४९) एवमूनविंशविंशौ परिहृत्यैकविंशद्वाविंशयोर्भविष्यदर्थप्रयोगतथानुभवयोरदूषकत्वं समर्थयितुं रमणसम्बन्धिनीनां रात्रीणां नित्यत्वं समर्थयन्ति—किञ्चेत्यादि । तत्र च रात्रिर्हि सूर्यादर्शनवशेन भवति, प्रातःसमये च सूर्ये दृश्यमाने लौकिकीनां तासामभावाल्लीलासृष्टिस्थसूर्यादर्शनवशेन जायमाना इतो भिन्ना एव, एकदा प्रदर्शितत्वादुक्तयुक्तिभ्यश्च नित्या एवेति तासां नित्यत्वमविवादमिति भावः ॥

हरितोषिणी ।

ख्यानं कर्तुमवतारयन्ति—भूमिष्ठेति । गोकुलस्थितिकरणेति । गोकुलस्थितिकरणकर्मेच्छया कर्मपदवाच्यलीलेच्छयेत्यर्थः । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यत इत्यनेनेच्छाया उभयत्र योग इति बोध्यम् । इत्थं च व्यवाधतेत्यत्र भूतार्थयोगेनेदानीन्तनकालासत्वं, पूर्वकालसत्वं विबाधनस्य न बोध्यते, किन्तु लीलाया नित्यत्वात्सर्वदा सत्वं बोध्यते । यथा—'सदेव सौम्येदमग्र आसी'दित्यादौ । एवं च तिरोभावशक्तया पूतनाविवाधने भूतत्वं बोध्यत इति गूढाभिसन्धिः ॥

(४९) अन्यासामपि लीलानां नित्यत्वमाहुः—किञ्चेति । वरदानवचनमेवाहुः—मयेमा इति । रमणसम्बन्धिरात्रीणां नित्यत्वमाहुः—अत्रेति । अन्यथेति । तादृशरात्रीणां प्रद-

गङ्गाधरभट्टी ।

गोकुलेति ॥

क्षपा इत्येव वदेत् । वदति च प्रातःसमये, तेनैतद्रात्रिसाजात्येन तासामेतस्यामेवेमा इति प्रयोगो जात्यभिप्रायेणेति न वक्तुं शक्यम् । बहुवचनानुपपत्तेश्च । न चेदंशब्दस्य भगवद्बुद्धिस्थतद्वाचकत्वेन सर्वोपपत्तिरिति वाच्यम् । कथनस्य परप्रतिपत्त्यर्थत्वेनैवं कथनेऽपि कुमारीणां तद्बोधासंभवेनैतत्कथनवैयर्थ्यापत्तेः । किञ्च भगवतः सत्यसङ्कल्पत्वेन तत्त्वस्य चाबाधितविषयत्वेनात्र तासां रात्रीणां सपथभावे पूर्वोक्तसत्यसङ्कल्पत्वानुपपत्तिः ॥

नन्'न्वेष्यामि ते गृहं सुभ्रू' 'आयास्य इति दौत्यकैः' 'ज्ञातीन् वो द्रष्टुमेष्याम' इत्यादिषु स्थलेष्वग्रेभावि भगवदागमनं कथं तदैव वर्तत इति

हरितोषिणी ।

शितत्वाभावे । इत्येव वदेदिति । अनेन 'इमा' इति न वदेदित्यस्य व्यवच्छेदः । रात्रिर्हि लौकिक्यलौकिकी चेति द्विविधा भवति, तत्र रात्रित्वसाजात्येन व्यवस्थामाहुः—वदति चेति । एतद्रात्रिसाजात्येनेति । लौकिकरात्रिसाजात्येनेत्यर्थः । तासाम् । अलौकिकरात्रीणाम् । एतस्यां लौकिकरात्र्याम् । एवं च प्रातःसमये भगवतोक्तम्—'मयेमा रंस्यथ क्षपा' इति । तत्रेदंशब्दवाच्यायां पुरःस्थितलौकिकरात्र्यामेवा लौकिकरमणरात्रीणां प्रयोगः साजात्याभिप्रायेणेति । तथा च तासां बहुत्वेन प्रयोगान्नित्यत्वमिति भावः । अत एवाहुः—बहुवचनेति । शङ्कते—न चेति । बुद्धिस्थतद्वाचकत्वेनेति । इदंशब्दस्य बुद्धिस्थबहुरात्रिवाचकत्वेनेत्यर्थः । उत्तरमाहुः—कथनस्येति । एवं कथनेऽपि । बुद्धिस्थबहुरात्रिकथनेऽपि । अन्यदपि लीलानित्यत्वे साधकमाहुः—किञ्चेति । तत्त्वस्य । सत्यसङ्कल्पत्वस्य । अत्र । लौकिकपुरोवर्तिरात्र्याम् । तासामलौकिकरात्रीणाम् । पूर्वोक्तेति । 'मयेमा रंस्यथ क्षपा' इति पूर्वोक्तेत्यर्थः ॥

पुनर्लीलानित्यत्वे शङ्कते—नन्विति । तदैवेति । भाविभगवदागमनस्य लीलासम्ब-

गङ्गाधरभट्टी ।

(४९) एतस्यामेवेति । वर्तमानरात्रावित्यर्थः । जात्यभिप्रायेणेति । 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्या'मिति सूत्रेणेत्यर्थः । न वक्तुं शक्यमिति । प्रातःसमये रात्र्यभावादिति भावः । अनुपपत्तेरिति । ब्राह्मणाः पूज्या इत्यत्र जातेः पूज्यत्वविवक्षायां बहुवचनमुपदिष्टं, न तद्वत्प्रकृते रात्रिसामान्यविवक्षा, भगवद्वियोगासंभवात्, सूत्रस्य प्रत्याख्यानाच्च । न चेति । असतः पदार्थस्य बुद्धिस्थत्वासंभव इति भावः । पूर्वोक्तेति । 'सङ्कल्पो विदितः साध्व्यो भवतीनां मदर्चनम् । मयाऽनुमोदितः सोऽसौ सत्यो भवितुमर्हती'त्यर्थः ।

वक्तुं शक्यम्, तथात्वे वा कथनवैयर्थ्यापत्तिरनुभवविरोधश्चेति चेत्, मैवम्; सर्वस्या अपि लीलाया नित्यत्वेन पूर्वसिद्धाया एव क्रमेणाविर्भावः परमिति पूर्वमेवोक्तत्वात्, तस्यागमनस्य चाधुनाऽप्रकटितत्वादेतत्काले प्रकटितलीलामध्यपातिनां तदननुभवाद्भगवतश्च सर्वज्ञत्वेन तल्लीलाया अप्यनुभवविषयत्वात्सर्वोपपत्तेः ॥

नन्वधुना प्रकटितलीलामध्यपातिनामेवाग्रे प्रकटनीयलीलासम्बन्धित्वमवश्यं वाच्यम् । तथैवानुभवात्तेषाम्, मह्यं पूर्वमुक्तमासीद्रेष्यामीति तेनागत इति । अन्यथा त्वन्यत्र कथनमन्यत्र गमनमिति सत्यवाक्त्वानुपपत्तिश्च । उक्तेषु भगवदाशया स्थित्यनुपपत्तिश्चेति कथं

सुवर्णसूत्रम् ।

ननु 'रंस्यथे'तिप्रयोगाद्रमणलीलाया भावित्वेन तदानीमभावात्कथं नित्यत्वमिति शङ्कां हृदि कृत्वा शङ्कते—नन्वित्यादि । तत्र समादधते—मैवमित्यादि । तथा च भगवदनुभवविचारेण नित्यत्वं, भक्तानुभवविचारेण वाक्यकथनवैयर्थ्याभाव इति तादृशप्रयोगानुभवयोर्न दूषणत्वमिति भावः ॥

पूर्वसिद्धाया एव लीलायाः क्रमेणाविर्भाव इति यदुक्तं, तत्राशङ्कते—नन्वधुनेत्यादि । अन्यथेति । प्रकटितप्रकटनीयलीलयोरन्योन्यभक्तसम्बन्धित्वे । चकारादनुभवविरोधो-

हरितोषिणी ।

न्धित्वेन नित्यत्वेऽपि वर्तमानकालेऽपि तद्दर्शन इति कथं वक्तव्यमित्यर्थः । समाधानमाहुः —मैवमिति । क्रमेणाविर्भाव इति । अग्रेभाविभगवदागमनस्य पूर्वं तिरोभावः, अनन्तरमाविर्भावो, न तूत्पत्तिर्येनानित्यत्वं स्यादिति पूर्वमेवासकृदुक्तत्वादित्यर्थः । इदमेव विशदयन्ति—तस्यागमनस्येति । सर्वोपपत्तेरिति । तिरोहिताविरोहितलीलाया भगवदनुभवविषयत्वमाविर्भावकालीनलीलाया भक्तानुभवविषयत्वमेवंरीत्या सर्वोपपत्तेरित्यर्थः ।

सर्वासां लीलानां क्रमेणाविर्भावतिरोभावावेव, न त्वनित्यत्वमिति यदुक्तं तत्र क्रमो न संभवतीत्याशङ्कते—नन्विति । प्रकटिताप्रकटितलीलयोर्भक्तसम्बन्धित्वेऽनुभवं प्रमाणयन्ति—तथैवेति । तेषां तादृशलीलासम्बन्धिभक्तानाम् । तथैवानुभवादित्यनेनान्वयः । अनुभवमेवाहुः—मह्यमिति । अन्यथेति । पूर्वोत्तरप्रकटनीयलीलासम्बन्धिभक्तानामे-

गङ्गाधरभट्टी ।

भगवतश्च सर्वज्ञत्वेनेति । तथा च भगवदनुभवे नित्यत्वं लीलायाः, भक्तानुभवे वाक्यकथनवैयर्थ्याभाव इति भावः । अनुपपत्तिश्चेति । इति । हेतौ । अबाधितभगवद्वक्ताप्रतीतिबलादित्यर्थः ।

नित्याया एव लीलायाः क्रमेणाविर्भावः परमिति संगच्छत इति चेत्; अत्रेदं प्रतिभाति—लीलानित्यत्वं न केवलं लौकिकयौक्तिकं, किन्तु 'जयति जननिवास' इत्याद्युक्तश्रुतिस्मृतिप्रमाणगम्यम् । तथा चाबाधितप्रामाण्यैरुक्तप्रमाणैः सिद्धं चेन्नानुपपत्तिः काचित् तत्र वस्तुनीत्यभ्युपेयम् । प्रमाणतस्तथैव सिद्धत्वात् । किन्तु स्वबुद्धिपरिकल्पिता तत्रानुपपत्तिः । सा चैवं परिहरणीया—'रसो वै स' इति श्रुत्या 'सर्वरस' इति श्रुत्या च भगवतः सर्वरसरूपत्वं निर्विवादम् । तथा च यत्र यदा वदत्स्येष्यामीति तेषां भक्तानां तत्कालीनभगवदागमनविषयकपरमार्तिलक्षणरसपोषाय भगवता तथोक्ते मद्गृहे सर्वथा समागमिष्यति प्रियस्तत्र चैवमेवं मन्मनोरथपूर्तिर्भविष्यतीति निश्चयेनामन्दानन्दरूपा रसभावविशेषाश्चातिविलक्षणास्तदा भक्तेऽपूत्पद्यन्ते, भगवतश्च तद्भा-

सुवर्णसूत्रम् ।

ऽपि संगृह्यत इत्यबाधितेन भविष्यत्त्वानुभवेन बाधितत्वादीदृश्यामाशङ्कायां तादृशानुभवलीलानित्यत्वयोरविरोधं रसस्वरूपविचारेण समर्थयन्ति—अत्रेदमित्यादि । निर्विवादमिति । 'स मानसीन आत्मा जनाना'मितिश्रुत्यन्तरात् । 'को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्या'दित्युपसंहारे आनन्दरूपताश्रावणाच्च 'रसो वै स' इतिश्रुतावपि विभावादिभिरुत्कृष्यमाणानन्दात्मकरसत्वं तत्तद्भेदवैशिष्ट्यं चावश्यमङ्गीकार्यम् । अतो विवादरहितम् । तावता कथमनुपपत्तिपरिहार इत्यत आहुः—तथा चेत्यादि । रसपोषायेति । एवं सर्वभेदविशिष्टरसात्मकत्वे भविष्यदागमनविषयकवाक्यज-

हरितोषिणी ।

क्याभावे । तथा चोत्तरकालीनप्रकटितलीलायां भविष्यत्त्वानुभवस्तु जायत एवेति क्रमेणाविर्भावो नास्तीति भावः । समाधानमाहुः—अत्रेदमिति । लीलाया नित्यत्वं मयैवोच्यत इति न, किन्तु श्रुतिस्मृतिगम्यमित्याहुः—लीलानित्यत्वमिति । ननु श्रुत्यादिप्रमाणसिद्धे वस्तुनि यद्यपि काप्यनुपपत्तिर्नास्ति, तथापि पूर्वोक्तलीलासम्बन्धितादृशानुभवस्य लीलानित्यत्वस्य च यो विरोधस्तत्कृतानुपपत्तिः कथं परिहरणीयेत्यत आहुः—सा चैवमिति । एवं रसस्वरूपविचारेण । विचारमेवाहुः—रसो वै स इति । सर्वरसरूपत्वमिति । विभावानुभावसंचारिभावविशिष्टसंयोगविप्रलम्भादितत्तद्भेदविशिष्टसर्वरसरूपत्वमित्यर्थः । सर्वरसरूपत्वमेव विवृण्वन्ति—तथा चेति । भगवता तथोक्ते । सति सप्तमीयम् । तथा च यावत्पर्यन्तं किमपि नोच्यते, तावत्पर्यन्तं किमपि रसभावविशेषा नैव जायन्त इति सर्वानुभवसिद्धम् । तथा च तथोक्त्यनन्तरं जायत इति तत्तद्रसानुभवो भक्तस्य भवत्येव-

यद्दर्शनजनितस्तत्समयानुरूपो भावविशेषः परमानन्दरूपोऽनुभवविषयो भवति। तथा च पूर्वोक्तश्रुत्या स्वरूपात्मकमेवेमं रसं सदैवानुभवतीति सिद्धम्। पूर्वोक्तभक्तगृहगमने च पूर्वमवधिं कृत्वा तत्समयमतिक्रम्यानतिक्रम्य वा समागते प्रियतमे ये रसात्मका भावविशेषास्तांस्तथाभूतः सन्नुक्तन्यायेनात्मरूपानेवानुभवति । अत्र च पूर्वोक्तानामेतेषां च भेदो न शङ्कनीयः । यतः पूर्वं मध्यमेवमुक्तमासीदित्यनुसन्धान एव तथा रसोत्पत्तिर्नान्यथा। तथा च तस्य तस्य रसस्य तादृक्तादृग्रूपत्वाद्रसस्य च भगवद्रूपत्वाद् यत्र यो रसो यादृशो यावद्विधः स्वशास्त्रसिद्धस्तत्र तादृशस्तावद्विधः स रसो भगवानेवेति फलितम्। भगवांश्चैक एव। तथा च तत्रत्या सर्वा सामग्री तद्रसरूपैवेति सर्वमनवद्यम्। तथा च क्षपाणां तथा प्रदर्शनं तन्नित्यत्व एव घटते । अभि-

सुवर्णसूत्रम्।

नितो य इदानींतनार्त्तिरूपो रसस्तत्पोषाय। पूर्वोक्तभक्तेति । एष्यामीति वाचाऽऽश्वासितेत्यर्थः । तस्य तस्येति । भविष्यत्त्वोत्तयवधिस्वागतदत्यागैरभिव्यक्तस्य । तादृग्रूपत्वादिति। तेनैव प्रकारेणानुभवयोग्यस्वरूपकत्वात्। फलितमिति। 'रसो वै स' इत्यादिश्रुतिद्वयविचारे निष्कृष्यमाणे सिद्धम्। अन्यथा 'सर्वरस' इत्यत्र सर्वपदव्याकोपापत्तेः। प्रायःपाठेन सर्वपदस्य नानारूपतायामेव पर्यवसानादिति। सर्वमनवद्यमिति । भविष्यत्वस्यापि स्वरूपान्तःपातित्वेन नित्यत्वाविरोधाद्भगवदिच्छया भविष्यत्त्वानुभवस्यापि

हरितोषिणी।

दर्थं भगवतोच्यत इति न कोऽपि सन्देह इति परमार्थः। एतावता रसस्य नित्यत्वं समर्थयन्ति—तथा चेति। पूर्वोक्तश्रुत्येति। 'रसो वै स' इत्यादिश्रुत्येत्यर्थः । वाण्याऽऽश्वासनमात्रदानानन्तरं यो रसानुभवः स वर्णितः, इदानीं यत्राभागमनं दत्तं तद्गृहगमनानन्तरं यो रसानुभवस्तं वर्णयन्ति—पूर्वोक्तभक्तेति । तथाभूतः सन्निति । रसरूपः सन्नित्यर्थः। पूर्वोऽपि रसः, इदानीन्तनोऽपि रस एवेति सूचयितुमाहुः—अत्र चेति। यया रीत्या रसोत्पत्तिः शास्त्रसिद्धा सैव रीतिरादरणीयेत्याहुः—यत इति । अनवद्यमिति । श्रुत्यादिप्रमाणसिद्धत्वाददोष इत्यर्थः । लीलानां नित्यत्वे रसत्वेन भगवद्रूप एव

गङ्गाधरभट्टी।

पूर्वोक्तश्रुत्येति । 'रसो वै सः' 'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवती'त्यनया। तथाभूत इति । रसात्मकः । उक्तन्यायेन । श्रुतिरीत्या । तस्य तस्येति । संयोगवियोगादिरूपस्य । तादृक्तादृग्रूपत्वात् । अनेकभावरूपत्वात्। फलितमिति। श्रुतिद्वये। तथा च भविष्यत्ताप्रतीतेः रसान्तःपातित्वात्सर्वमनवद्यम्।

मरमणलीलाया अपि नित्यत्वे कथमेतद्व्रतफलत्वेन वरदानमुपपद्यत इति शङ्काऽप्येतेनैव निरस्ता वेदितव्या । भगवतः सर्वरसरूपत्वेनैव सर्वोपपत्तिरित्युक्तत्वात् । इयमेवोपपत्तिः, श्रीनन्दयशोदयोस्तादृशलीलाऽऽनन्दानुभवे को हेतुरिति 'नन्दः किमकरोद्ब्रह्मञ्छ्रेय एवं महोदयम् । यशोदा च महाभागा पपौ यस्याः स्तनं हरि'रित्यादिना राज्ञा प्रश्ने कृते 'द्रोणो वसूनां प्रवरो धरया सह भार्यया । करिष्यमाण आदेशं ब्रह्मणस्तमुवाच ह । जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ । भक्तिः स्यात्परमा लोके ययाऽञ्जो दुर्गतिं तरेत् । अस्त्वित्युक्तः स एवेह व्रजे द्रोणो महायशाः । जज्ञे नन्द इति ख्यातो यशोदा सा धरा भवेत् । ततो भक्तिर्भगवति पुत्रीभूते जनार्दने । दम्पत्योर्नितरामासीद्गोपगोपीषु भारते'त्यादिना श्रीशुकेनोत्तरितेऽपि ज्ञेया । एवमेव श्रीदेवकीवसुदेवयोरन्येष्वप्येतादृशेष्वित्यलं विस्तरेण ॥

सुवर्णसूत्रम् ।

नित्यत्वाबाधकत्वेनानित्यत्वरूपदोषरहितमित्यर्थः । सिद्धमाहुः—तथा चेत्यादि । नन्वग्रिमरमणस्य नित्यत्वे एतद्व्रतफलत्वेन वरदानं कथमुपपद्यत इति चेत्तत्राहुः—अग्रिमेत्यादि । एतेनेति । भविष्यत्त्वनित्यत्वयोरविरोधेन । अविरोधे बीजमाह—भगवत इत्यादि । तथा च स्वरूपविचारेणैव विरोधपरिहार इत्यर्थः । एतामेवोपपत्तिं लीलान्तरेऽप्यतिदिशन्ति—इयमित्यादि, विस्तरेणेत्यन्तम् । उपपत्तिरिति । नित्यत्वभविष्यत्त्वादीनां स्वरूपान्तःपातित्वेनाविरोधरूपा सेत्यर्थः ॥

हरितोषिणी ।

सर्वमुपपद्यत इत्याहुः—तथा चेति । ननु व्रतफलं तु भावि, व्रतकाले तस्य सत्त्वं कथमित्याशङ्कायामाहुः—अग्रिमेति । शङ्कानिरासप्रकारमप्याहुः—एतेनैवेति । इत्युक्तत्वादिति । तथा च भविष्यत्त्वं नित्यत्वं च परस्परं विरुद्धं न भवति, भगवतः सर्वरसरूपत्वादिति काप्यनुपपत्तिर्नास्तीति भावः । पूर्वमियं लीला न स्थिता, अनन्तरमुत्पन्नेति शङ्का लीलान्तरेऽप्यस्ति, सैवं भगवतो रसरूपत्वेन निराकर्तव्येत्याहुः—इयमिति । इयमेवोपपत्तिरित्यस्याग्रिमेणोत्तरितेऽपि ज्ञेयेत्यनेनान्वयः । उपपत्तिरिति । नित्यत्वं सनातनत्वं च नित्यपदार्थे, भविष्यत्त्वं भाव्युत्पत्तिमत्पदार्थे, एवं चानयोः परस्परं विरुद्धयोरपि भगवद्रूपरसात्मकत्वेनाविरोध इत्येवंरूपोपपत्ति'रित्यर्थः । को हेतुरित्यस्य प्रश्ने कृत इत्यनेनान्वयः । प्रश्नमेवाहुः—नन्द इति । उत्तरमाहुः—द्रोण इति ॥

गङ्गाधरभट्टी ।

एतेनैवेति । सामग्र्या रसान्तःपातित्वेनैव । इयमेवेति । लीलासामग्र्याः स्वस्वरूपान्तःपातित्वरूपा ॥

इति श्रुतिशतैरतिस्फुटतरैरपास्तभ्रमैर्विचारभरचातुरीसचिवसत्पुराणैरपि। स्फुरद्विहृतिनित्यता सुनिरणायि गोपीपतेर्मयाऽतिनिजयत्नतः फलतु तेन सैवेह मे॥

(५०) अथेदं विचार्यते—'जन्मान्तरसहस्रेषु तपोध्याने'तिवाक्यादनेकजन्मसञ्चितसुकृतराशेरतिशयितभगवदनुग्रहभाजनस्य महत्तमचरणरजोऽभिषिक्तस्य कस्यचित्पुरुषविशेषस्य पूर्वोक्तन्यायेन नित्यलीलामध्यपातिभक्तभावसजातीयभावोत्पत्तौ तद्भावानुसारेणैव च तदभिलापेण भजने क्रियमाणे तल्लीलामध्यपातित्वमस्य भवति न वेति। किमत्र युक्तम्? नेति। कुतः? यत एतस्यापि तादृशलीलारसानुभवकामनया भगवद्भजनस्य कृतत्वेनैतस्मिन्नपि तादृशीं लीलां हरिः करिष्यतीति

अनित्यत्वापत्तिपरिहारपूर्वकमाधुनिकभक्तानां लीलान्तःपातित्वसमर्थनम्।

सुवर्णसूत्रम्।

इतीति। इत्याशयेन। एवं द्वाविंशतीनां(?) दोषाणां परिहारे पुनः शङ्काऽनुदयविभावनेन लीलानित्यतावादं समाप्य तस्या आशास्यत्वमाहुः—इतीत्यादि॥

(५०) ननु लीलानित्यत्वे तदन्तःपातिनां तदनुभवोऽस्तु, तेषामपि स्वरूपान्तःपातित्वात्। न त्वाधुनिकानाम्, तदनन्तःपातित्वेनानित्यत्वात्। तथा सति तस्याः कथमाशास्यत्वमित्याशङ्कायां विचारान्तरमारभन्ते—अथेत्यादि। पूर्वपक्षमाहुः—नेत्यादि।

हरितोषिणी।

लीलानित्यत्वनिर्णयजन्यं फलं प्रार्थयन्ति—इतीति। मयाऽतियत्नतः स्फुटतरैरपास्तभ्रमैः श्रुतिशतैर्विचारभरचातुरीसचिवसत्पुराणैः कृत्वा गोपीपतेः स्फुरद्विहृतिनित्यता देदीप्यमाना या लीलानित्यता सा निरणायि। तेन निर्णयेन सैव लीलानित्यतैवेह मे फलत्वित्यन्वयः॥

(५०) एतावता प्रबन्धेन लीलानित्यतावादं समाप्येदानीन्तनजनानां लीलामध्यपातित्वमस्ति वा न वेति विचारं कर्तुमाहुः—अथेदमिति। पूर्वोक्तन्यायेनेति। 'जन्मान्तरसहस्रेष्वि'तिन्यायेनेत्यर्थः। सन्देहाकारमाहुः—भवति न वेतीति। तत्र पूर्वपक्षमाहुः—नेतीति। एतस्यापीति। नित्यलीलानन्तःपातिनः कस्यचित्पुरुषविशेषस्ये-

गङ्गाधरभट्टी।

चातुरीसचिवेति। सहितेत्यर्थः। स्फुरन्ती विहृतिनित्यता लीलानित्यता। सैवेति। लीलैव॥

भवता वाच्यम् । तथा चैतस्मिन् क्रियमाणाया लीलाया जन्यत्वेन न नित्यत्वं वक्तुं शक्यम् । तेनैतदर्थमेव क्वचित् प्रकटीभूयास्मै तादृक् सुखं दत्वा स्वस्मिन्नेव प्रवेशयति तमिति, न नित्यलीलायां तस्य प्रवेश इति चेत्, अत्र ब्रूमः—यथा गौतमीयानां मते सर्वज्ञत्वेनेश्वरस्य सर्वविषयकज्ञानस्यावश्यवाच्यत्वेन विषयाणां जन्यत्वेऽपि न तद्विषयकतज्ज्ञानस्य जन्यत्वम् । धर्मिग्राहकप्रमाणेन नित्यत्वेनैव सिद्धेः । तथा पूर्वोक्तप्रमाणैर्लीलाया अपि नित्यत्वेनैव सिद्धायास्तस्या एव तादृग्भक्तविषयत्वमात्रस्यैवात्र वाच्यत्वात्तद्विषयिकायास्तस्या अजन्यत्वात्त्वद्धेत्वसिद्धिः । न च तादृग्भक्तस्यैतद्विषयत्वे मानाभाव इति वाच्यम् । तस्य पूर्वमेवोक्तत्वात् । तथाहि—बृहद्वामनीयकथासन्दर्भे स्वस्तुतिसन्तुष्टभगवत्प्रदर्शितस्वरूपावलोकनसञ्जातमनोरथे श्रुतिभिः 'कन्दर्पकोटिलावण्ये'त्यादिना निरूपिते 'दुर्लभो दुर्घटश्चैपे'त्यादिना भगवद्वरदानं निरूप्य पश्चाद्ब्रह्मवाक्यं निरूप्यते—'उक्तकालं समासाद्य गोप्यो भूत्वा

सुवर्णसूत्रम् ।

समादधते—अत्रेत्यादि । त्वद्धेत्वसिद्धिरिति । जन्यत्वरूपहेत्वसिद्धिरित्यर्थः । तथाहीत्यादि । अत्रायमर्थः—यद्यपि बृहद्वामनपुराणीयसन्दर्भे 'पृथिव्यां भारते क्षेत्र' इत्यनेनोक्तं स्थानं केवलाक्षरमध्यपातिनित्यलीलास्थानात् स्थानान्तरमिव प्रतीयते, तथा सति तत्रत्या लीला भिन्नैवेति भ्रमो भवति, तथापि 'ता वां वास्तूनी'त्यादा'वत्राह त'दिविश्रावणाद् दहरविद्यायां 'नास्य जरयैतज्जीर्यती'त्यादिना पुरजरादावपि वेश्मजरादेर्निराकरणाद्बृहद्वामनपुराणेऽपि 'व्यापिवैकुण्ठसंज्ञित' इत्यनेन वैकुण्ठस्य व्यापित्वेन

हरितोषिणी ।

त्यर्थः । एवं वक्तव्ये लीलाया जन्यत्वापत्तिरित्याहुः—तथा चेति । समाधानमाहुः—अत्र ब्रूम इति । यथा जन्यपदार्थविषयकेश्वरज्ञानस्य नित्यत्वं, तथा तादृग्भक्तविषयिण्या लीलाया नित्यत्वमिति वदन्ति—यथेत्यादिना । त्वद्धेत्वसिद्धिरिति । त्वदीयजन्यत्वरूपहेतोरसिद्धिरित्यर्थः । शङ्कते—न चेति । तादृग्भक्तस्य । आधुनिकभक्तस्य । तद्विषयत्वे । नित्यलीलाविषयत्वे । समाधानमाहुः—तस्येति । तथाहीति । निरूपिते इत्यस्य सञ्जातमनोरथ इत्यनेनान्वयः । श्रुतिप्रार्थनानन्तरं भगवद्वाक्यमाहुः—दुर्लभ

गङ्गाधरभट्टी ।

(५०) स्वस्मिन्नेव प्रवेशयतीति । 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम'तिवाक्यान्मुक्तिं ददातीत्यर्थः । त्वद्धेत्वसिद्धिरिति । जन्यत्वरूपहेत्वसिद्धिः । निरूपित इति । मनोरथ इत्यस्य विशेषणम् ।

हरिं गता' इति । एतदग्रे च पठ्यते 'स्त्रियो वा पुरुषो वापि भर्तृभावेन केशवम् । हृदि कृत्वा गतिं यान्ति श्रुतीनां नात्र संशय' इति । यद्यपि नगरादपि बहिः स्थितस्यात्यधमस्य कस्यचिन्महाराजान्तःपुरप्रवेशकामनायामपि न तत्र प्रवेशः संभवति, प्रत्युत दण्डस्तदिच्छाज्ञानेऽपि; तथा तादृशस्यैव जीवस्य पूर्वोक्तकामनायामपि न तत्र प्रवेशः संभवति, प्रत्युत 'अयोग्यमिच्छन् पुरुषः पतत्येव न संशय' इति वाक्यात्पात एव भवेत् । अत एव भगवता श्रुतिष्वपि 'दुर्घट' इत्युक्तम् । तथापि 'मयाऽनुमोदितः सम्यक् सत्यो भवितुमर्हती'त्युक्त्या तथा भगवदङ्गीकारत एव भवतीति ज्ञायते । सर्वात्मभावेन चेत्तथा भजनं करोति, तदा भगवानप्यङ्गीकरोत्येव । अन्यथा 'ये यथा मां प्रपद्यन्त' इति मर्यादा न स्यात् ॥

सुवर्णसूत्रम् ।

विशेषितत्वाच्च पृथिव्यां दृश्यमानस्य तद्भिन्नत्वं तद्भुक्तिलाभस्थानत्वं वा वाच्यम् । तथा सति तस्यैवात्रापि सत्त्वाच्छ्रुतिसम्बन्धिन्यपि लीला तल्लोकस्थैवेति नित्यैव । अतो नैयायिकप्रतिपन्नेश्वरज्ञानवद्विषयानित्यत्वेऽपि लीलानित्यत्वं सूपपन्नम् । नन्वस्तु श्रुतिसम्बन्धिन्या लीलायास्तथात्वम्, श्रुतिपुराणसिद्धत्वात्, न त्वाधुनिकभक्तसम्बन्धिन्या अपि, तदनुक्तत्वात्; तथा सति कथं तस्या आशास्यत्वमित्याशङ्कायामाहुः—एतदग्र इत्यादि । भवतीति । आधुनिकभक्तस्यापि भवति । तथा चाशास्यत्वे काऽपि नानुपपत्तिरित्यर्थः । नन्वङ्गीकारेणानुमोदने मनोरथस्य सिद्धिरित्यङ्गीकारश्च श्रुतीनामिव साधनविशेषवशात्, तथा च तादृशसाधनाभावे तदभावात्तदसिद्धिरित्यनर्थकमेवाशासनमित्याकाङ्क्षायामाहुः—सर्वेत्यादि । तथा च तादृशभजनमेवाङ्गीकारगमकमिति तादृशं नाशासनमनर्थकमित्यर्थः ॥

हरितोषिणी ।

इत्यादिना । श्रुतीनां प्रवेशस्तत्रोक्तो, न त्वाधुनिकजनानामित्यत आहुः—एतदग्रे च पठ्यत इति । बृहद्वामने इति शेषः । अत्राशङ्कते—यद्यपीति । तदिच्छाज्ञानेऽपीति । बहिःस्थिताधमपुरुषेच्छाज्ञानेऽपीत्यर्थः । दार्ष्टान्तिके घटयन्ति—तथेति । पूर्वोक्तेति । नित्यलीलाप्रवेशकामनायामपीत्यर्थः । स्वकीयकल्पनायामुपष्टम्भकं दर्शयन्ति—अत एव भगवतेति । समाधानमाहुः—सर्वात्मभावेनेति । यत्तु दुर्घटत्वं नास्तीति सूचयितुमेव-कारः । अन्यथेति । अङ्गीकारस्य दुर्घटत्वे । बृहद्वामनीयकथासन्दर्भोक्तरीत्यो'त्कालि'-मित्यादिना पूर्वसम्बन्धिलीलायाः 'स्त्रियो वा पुरुषो वापी'त्यादिनाऽऽधुनिकभक्तसम्बन्धिलीलायाश्च नित्यत्वमुक्तम् ॥

गङ्गाधरभट्टी ।

स्त्रियो वेति । अनेन वाक्येनाधुनिकभक्तानामपि लीलाप्राप्तिरुक्ता । तादृशस्येति । अत्यधमस्य । तथेति नित्यलीलाप्रवेशः ॥

अथवा पूर्वोक्तभक्तसम्बन्धिन्या लीलाया वर्तमानाया एव यथा क्रमेणाविर्भावस्तथाऽऽधुनिकभक्तसम्बन्धिन्या अपि तस्या इति नानुपपत्तिः काचित् ॥

अत एव ऋग्वेदेऽपि पठ्यते—'विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् । ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकारे'ति । एष विष्णुः क्षेत्राय निवासार्थं मनुषे स्तुवते देवगणाय दशस्यन् असुरेभ्योऽपहृत्य प्रदास्यन् एतां सर्वां पृथिवीं विचक्रमे। अत्र हि विष्णुमाहात्म्यमुच्यते । तत्र न हीदमेव महत्तस्य माहात्म्यं,

सुवर्णसूत्रम् ।

ननु भवत्वेवं जाड्यपरिहारो गौतमीयानां, न तु मायावादिप्रभृतिभिस्तथाङ्गीकार्यम्; तत्तन्ने पूर्वोक्तयुक्त्यप्रसिद्धेरित्याशङ्कायां प्रकारान्तरमाहुः—अथवेत्यादि । तथा च भगवदिच्छायाः कारणता तु सर्वैरेव सर्वत्राङ्गीकार्या । तथा च तयैव समाधिरित्यर्थः । एवं च यथा स्वाश्रयमोक्षवादिनां तेषां मते शबरकुलसंवर्धितराजकुमारवद्विस्मृतकण्ठमणिस्मरणवद्वा पूर्वसिद्धस्यैव स्वरूपस्य ज्ञानप्रतिबन्धनिवृत्तिमात्रेण प्राप्त्युपचारस्तथा प्रकृतेऽपि साधनैः प्रतिबन्धनिवृत्तौ लीलाऽनुभव आधुनिकभक्तस्यापि तात्कालिकस्वसम्बन्धित्वोपचार इति तदीययुक्त्या तेषामपि जाड्यपरिहार इति भावः ॥

ननु पूर्वमाविर्भावतिरोभाववादे सर्वस्य सार्वकालिकी सत्ता प्रतिपादितेति तद्रीत्या लीलायास्तत्सम्बन्धिनां च नित्यत्वमनुक्तसिद्धमेवेति पुनस्तत्साधनस्य किं प्रयोजनमिति शङ्काव्यावृत्त्यर्थं श्रुतिमाहुः—अत एवेत्यादि । अत एवेति । एतन्नित्यत्वस्य तद्विलक्षणत्वं हृदि कृत्वैव विचक्रम इति । त्रिभिः क्रमैराक्रान्तवान् । एतावता कथं प्रकृतसिद्धिरित्याकाङ्क्षायामाहुः—अत्र हीत्यादि । नित्यत्वं त्वित्यादेरयमर्थः—यथा 'पुरोडाशं चतुर्द्धा

हरितोषिणी ।

इदानीमाविर्भावतिरोभावानङ्गीकारेण परमतरीत्याऽऽधुनिकभक्तस्य लीलाया भगवदिच्छयैव नित्यत्वमाहुः—अथवेति । यथा क्रमेणेति । न त्वाविर्भावतिरोभावरीत्येति भावः। तस्या इति। वर्तमानाया लीलाया इत्यर्थः। तथा चाधुनिकभक्तस्य भजनेन कीर्तनेन नित्यलीलायां प्रवेश इति भावः ॥

अत्र श्रुतिवाक्यं प्रमाणमाहुः—अत एवेति । ऋगर्थमाहुः—एष विष्णुरिति । प्रकृतसिद्धिमाहुः—अस्य कीरय इति । ननु जीवस्वरूपभक्तस्य नित्यत्वं स्तोत्रेण कथमित्यत

गङ्गाधरभट्टी ।

दशस्यन्निति । दाशतेश्छान्दसम् । विष्णुमाहात्म्यमिति । वामनावतारीयम् ।

किन्त्वितोऽधिकमप्यस्तीत्याशयेनाह—ध्रुवास इति। अस्य कीरयः स्तोतारो जनासो भक्ता ध्रुवासो नित्या एवेत्यर्थः। नित्यत्वं तु स्तोत्रेण संतुष्टेन भगवता पूर्वोक्तलीलामध्ये तेषां पातनेनेति ज्ञेयम्। अन्यथा जीवस्य स्वत एव नित्यत्वेन 'अस्य कीरयो ध्रुवास' इत्यनर्थकं भवेत्। नापि सर्वसंपत्त्या याश्चार्थकगमनाभावरूपं कादाचित्कं ध्रुवत्वमत्र वाच्यम्। सङ्कोचे मानाभावात्। तादृशे ध्रुवपदाशक्तेश्च। तस्मादस्मदुक्त एव श्रुतेस्तात्पर्यं वेदितव्यम्। सुजनिमा शोभनानि जनिमानि नामानुकीर्तनस्मरणादीनि यस्यैतादृशो विष्णुरुरुक्षितिं विस्तीर्णनिवासां चकारेत्यर्थः॥

सुवर्णसूत्रम्।

करोती'त्यनेनोक्तस्य चतुर्द्धाकरणस्य 'आग्नेयं चतुर्द्धा करोती'तिवाक्येनाग्नेय उपसंहारस्तथा 'नित्यो नित्याना'मित्यादिनोक्तस्य जीवनित्यत्वस्य भगवत्स्तोतृपूपसंहार इति न वक्तुं शक्यम्। पूर्वोक्तोपन्यस्तश्रुतिस्मृतिन्यायव्याकोपात्। एवं सति यदत्र ध्रुवत्वश्रावणं तत्र कश्चिद्विशेषो वक्तव्यः। स चोक्तरूप एव युक्तः। अन्यथा निःप्रमाणकस्य श्रुतिसंकोचस्य लक्षणायाश्चापातादिति। तथा च ध्रुत्युक्तभगवत्स्तोतृनित्यत्वार्थापत्त्या लीलातत्सम्बन्धिनां या सत्ता सा पूर्वोक्ताया विलक्षणा, स्वरूपधर्मयाथातथ्यघटितत्वात्। तस्यास्तु तदन्यथाभावघटितत्वादिति। 'रुद्र यत्ते जनिम चारु चित्र'मित्यादौ जनिमशब्दस्य जन्मनि प्रसिद्धत्वात्तद्व्यावृत्त्यर्थमर्थान्तरमाहुः—नामानुकीर्तनेत्यादि। जनी प्रादुर्भावे, जायन्त इति जनिमानीति व्युत्पत्त्या तानि तथेत्येतादृश इत्यर्थः। इदं च लीलानित्यत्वं '*तद्भूतस्य तु नातद्भाव' इत्यधिकरणे प्रपञ्चितम्॥

हरितोषिणी।

आहुः—नित्यत्वं त्विति। ध्रुवास इत्यस्यान्यार्थकत्वं वारयन्ति—नापीति। उरुक्षितिमित्यस्य फक्कपादस्य व्याख्यानमाहुः—सुजनिमेति। सुष्ठु जनिमा यस्येति विग्रहानुरोधेनार्थमाहुः—शोभनानीति। इदं च सर्वं 'तद्भूतस्य तु नातद्भाव' इत्यधिकरणे विस्तरेणोक्तम्॥

गङ्गाधरभट्टी।

पातनेनेति। ननु 'ण्यासश्रन्थो युच्' न्याय्यः? 'कृत्यल्युटो बहुल'मिति न दोषः। जनिमानीति। जन्मानीत्यर्थः। 'जनिमृङ्भ्यामिमनिच्छन्दसि'। जन्मानन्तरं नामादीनि भवन्तीति भावेनाहुः—नामेत्यादि॥

---

टिप्पणी।

* तद्भूतस्येति। व्याससूत्रतृतीयाध्यायचतुर्थपादे। तद्भूतस्य पुष्टिमार्गीयभावं प्राप्तस्य अतद्भावः पुष्टिमार्गीयभावतिरोभावो नेत्यक्षरार्थः॥

(५१) किञ्च अनित्यत्वं लीलासु वदन् वादी प्रष्टव्यः । ध्वंसप्रतियोगित्वं ह्यनित्यत्वम्, तदत्र कुतस्त्वयाऽवधारितमिति । जन्य-[1]भावत्वेनेति चेद्ब्रूयात्, तदा स वक्तव्यः, पूर्वसिद्धाया एव तस्याः क्रमेणाविर्भाव एवेति पूर्वमेवोक्तां स्वरूपासिद्धिं किं नानुसंधत्स इति । न पश्यामीति चेद् ब्रवीषि, तदा स्वाभिमतेश्वरेऽपि तथा ब्रूहि । धर्मिग्राहकप्रमाणेन स तथैव सिद्ध इति तु तुल्यम् ॥

युक्तिभिर्लीलानित्यत्वोपपादनम् ।

सुवर्णसूत्रम् ।

(५१) एवं शब्दप्रमाणेन लीलानित्यत्वे स्थापितेऽपि शङ्काद्यमानी जन्यभावत्वेन नश्वरत्वेन व्याप्तिं हृदि कृत्वा अनित्याः; जन्यत्वात्, जन्याः; क्रमिकत्वादिति क्रमिकत्वबोधकप्रत्यक्षशब्दानुगृहीतेनानुमानेन प्रत्यवतिष्ठत इति तं प्रत्याहुः—किञ्चेत्यादि । तथा च जन्यत्वनश्वरत्वयोर्व्याप्तौ सत्यामपि प्रकृते शब्दस्य तात्पर्यान्तरेण तदनुग्राहकत्वात्, प्रत्यक्षस्य च तत्त्वास्पर्शित्वेन दुर्बलत्वात् स्वरूपासिद्धेनानुमानेन न तत्सिद्धिरित्यर्थः । अत्राह—न पश्यामीति । असतः सत्तामनङ्गीकुर्वता सिद्धान्तिनाऽपि प्रपञ्चस्य सत्यत्वाय कारणाद्बहिर्भावः, कारणे लय इत्येवंरूपयोरुत्पत्तिनाशयोरङ्गीकारात्तन्न्यायस्यात्रापि शक्यवचनत्वान्न पश्यामीत्यर्थः । तत्र प्रत्याहुः—तदेत्यादि । तथा ब्रूहीति । त्वं हि कार्यत्वलिङ्गकानुमानात् कर्तृत्वेनेश्वरं साधयसि, तथा सति कर्तृत्वस्योत्पत्तिविनाशशालित्वव्याप्तत्वात्तत्रापि सिद्धान्त्यभिमतं पूर्वपक्षाभिमतं चानित्यत्वं निराबाधमतस्तदपि ब्रूहीत्यु-

हरितोषिणी ।

(५१) इदानीं तु क्रमिकत्वेन हेतुना जन्यत्वसाध्यकानुमानेन लीलायां जन्यत्वस्वीकर्तृणां नैयायिकानां निराकरणार्थमाहुः—किञ्चेति । प्रष्टव्य इत्यनेन साक्षाद्विवादानर्हत्वं नैयायिकस्य सूचितम् । तद् ध्वंसप्रतियोगित्वम् । अत्र लीलासु वादिवाक्यानुवादमाहुः—जन्येति । तथा च लीला अनित्या, जन्यभावत्वादित्यनुमानं बोध्यम् । जन्यभावत्वमेव लीलासु नास्तीति स्वरूपासिद्धिरूपहेत्वाभासदोषग्रस्तं त्वदीयानुमानमित्याहुः—पूर्वसिद्धाया इति । तथा चाविर्भावतिरोभावावेव लीलाया, न तूत्पत्तिविनाशाविति भावः । नैयायिकः शङ्कते—न पश्यामीति । इदानीन्तना लीला पूर्वसिद्धैवेति न पश्यामीत्यर्थः । प्रतिबन्धोत्तरमाहुः—तदेति । तथा ब्रूहीति । तुल्ययुक्त्येश्वरेऽप्यनित्यत्वं ब्रूहीत्यर्थः । तथा च घटादिकार्यकर्तरि कुलाले यथाऽनित्यत्वं, तथा जगद्रूपकार्य-

गङ्गाधरभट्टी ।

(५१) तथैवेति नित्यत्वेनैव ।

---

1 भावावच्छिन्नत्वेनेति कपुस्तकम् ।

ननु न तुल्यम् । अत्र धर्मिग्राहकमानेऽपि प्रातःकालीनलीलायाः सायङ्काले, बाल्यस्य च पौगण्डादिष्वनिरूपणात् । सत्यम् । तत्र पुस्तकाले पूर्वलीलासत्त्वासत्त्वौदासीन्येन लीलानिरूपणं क्रियते, न तु पूर्वलीलायाः सत्त्वमसत्त्वं वाऽपि निरूप्यते । एवं च सति सन्देहे तन्निवारणपूर्वकं 'जयति जननिवासः' 'बहूनि सन्ति नामानि' बृहद्वामनीयकथा, 'ता वां वास्तूनि' 'ते ते धामानि' 'तद्विष्णोः परमं पदं' 'तद्विप्रासो' 'ध्रुवासो अस्ये'त्यादिश्रुतिस्मृतिभिरुक्तरीत्या लीलाया नित्यत्वेऽवधारिते सर्वसमाधानार्थं क्रमेणाविर्भाविताया एव लीलायाः क्रमेण

सुवर्णसूत्रम् ।

पालम्भः । ननु धर्मिग्राहकप्रमाणेनेश्वरो नित्य एव सिद्ध इति तत्र तथा कथनमुचितं, नात्रेति चेत्तत्राहुः—धर्मीत्यादि । ग्राहकं प्रमाणं सर्गाद्यकालीनपरमाणुद्वयसंयोगजनकस्य कर्मणो जन्यत्वसाधकमनुमानं, नवानुमानानि वा । प्रकृते तु लीलातत्सम्बन्धिनित्यत्वसाधिकाः श्रुतयः श्रुतार्थापत्तयश्च बोध्याः । तथा च परिहारसाम्यादत्रापि तदुचितमित्यर्थः ॥

तौल्यं परिहरति—नान्वित्यादि । अत्र लीलाया नित्यत्वग्राहके पूर्वोक्तप्रमाणे सत्यपि तस्मिन् प्रातरित्याद्युक्तप्रकारेणानित्यत्वस्यैव सिद्धेरित्यर्थः । अत्र समाधत्ते—सत्यमिति ।

हरितोषिणी ।

कर्तरीश्वरेऽप्यनित्यत्वं तव मते सिद्ध्यतीति भावः । अत्र नैयायिका उत्तरमाहुः—धर्मीति । धर्मी ईश्वरः तद्ग्राहकं प्रमाणमुदयनाचार्योक्तं पूर्वोक्तानुमाननवकं तेनेत्यर्थः । अथवा धर्मिग्राहकं प्रमाणं वेदस्तेनेत्यर्थः । स ईश्वरः । तथैव नित्य एव । तुल्यमिति । लीलायामपि नित्यत्वग्राहकं प्रमाणं वेदादिकमस्तीति तुल्यमित्यर्थः ॥

तुल्यता नास्तीत्याशङ्कते—नन्विति । तुल्यत्वाभावे हेतुमाह—अत्रेति । मानेऽपीति । लीलाया नित्यत्वग्राहके प्रमाणे सत्यपीत्यर्थः । लीलाया अनित्यत्वं साधयन्ति —प्रातरिति । तथा च प्रातःकालीना लीला सायङ्काले नास्ति, बाल्यलीला पौगण्डे नास्तीत्यनित्यत्वमिति भावः । समाधानमाहुः—सत्यमिति । एवं च सतीति । लीलामात्रं निरूपणीयं सतीत्यर्थः । सन्देह इति । लीला नित्याऽनित्या वेति सन्देहे सतीत्यर्थः । संशयनिवारणार्थं 'जयती'त्यादि—'ध्रुवास'—इत्यन्तान्यष्टवचनान्याहुः—जयतीत्यादि ।

गङ्गाधरभट्टी ।

अनिरूपणादिति । अनित्यत्वमिति शेषः ।

तत्र निरूपणमात्रमिति तत्रापि निर्णयात् कथं न तुल्यत्वम् । न हि प्रतिपदं नित्यत्वं निरूपणीयम् । एकत्र तथा निर्णयस्यैवान्यत्राप्यवगन्तुं शक्यत्वात् । एकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि तथेति न्यायात् । अनन्यलभ्यस्य शब्दार्थत्वात् ॥

ननु लीलायाः कर्मरूपत्वेन तस्य चाचिरावस्थायित्वनियमेन न नित्यत्वं वक्तुं शक्यमिति चेत्, हन्त ! ! एवं ज्ञानस्यापि त्रिक्षणावस्थायित्वनियमेनेश्वरज्ञानस्यापि न नित्यत्वं वक्तुं शक्यम् । धर्मिग्राहकप्रमाणाचेत् तुल्यम् ॥

सुवर्णसूत्रम् ।

सर्वसमाधानार्थमिति । लीलानित्यत्वतत्चद्रसस्वभावतन्मनोरथादिसामञ्जस्यार्थम् । ननु नित्यत्वस्य कण्ठतोऽनुक्तेर्न तुल्यत्वमत आहुः—न हीत्यादि ॥

अनन्यलभ्यस्येत्यादि । शब्देन निर्णीतस्य नित्यत्वस्य शब्देतरालभ्यत्वेन शब्दार्थत्वादित्यर्थः । एवं शब्दस्य मानान्तरविरोधकृतं नैर्बल्यं निरस्तम् ॥

अतः परं कर्मस्वरूपमर्यादाभङ्गदोषविधूननाय पूर्वोत्तरपक्षावाहुः— नन्विति । हन्तेति च । यद्यपि प्रतिबन्देरनुत्तरत्वं, तथापि धर्मिग्राहकाणां पूर्वोक्तप्रमाणानां प्राबल्यादपीष्टसिद्धौ प्रतिबन्देः परप्रतिपत्तिमात्रार्थत्वादत्रोत्तरत्वमेव; परप्रसिद्ध्या परबोधने सौकर्यादिति । तथा चेश्वरज्ञानवत्कर्मणोऽपि लोकविलक्षणत्वान्न तेन लौकिककर्मरूपमर्यादाभङ्ग इत्यर्थः । एवं त्रयोविंशचतुर्विंशौ परिहृतौ ॥

हरितोषिणी ।

सर्वसमाधानार्थमिति । लीलाङ्गभूतसंयोगविप्रलम्भाङ्गभूतमनोरथादिसिद्ध्यर्थम् । कथं न तुल्यत्वमिति । एवं प्रकारेण निर्णयाद्वेदेन कथं न तुल्यत्वमित्यर्थः ॥

कर्मस्वरूपलीलाया नित्यत्वं नास्तीत्याशङ्कते—नन्विति । समाधानमाहुः—हन्तैवमिति । तत्रापीयं चिन्तास्तीति हन्त इति खेदः । तत्कारणमाहुः—ज्ञानस्यापीति । तुल्यमिति । धर्मिग्राहकवेदानुमानादिप्रमाणमुभयत्राप्यस्तीति तुल्यमित्यर्थः ॥

गङ्गाधरभट्टी ।

अनन्यलभ्यस्येति । अनिरूपणेन हेतुनाऽनित्यत्वं हि त्वया साध्यम् । तत्रान्यलभ्यत्वान्न शब्दार्थः । अनुमानं च शब्दाद्दुर्बलमिति वेदवेदान्तमीमांसकाः । जगतो नित्यत्वं च युक्त्याऽपि साधितं, किं पुनर्लीलाया इति भावः ॥

कर्मरूपत्वेनेति । 'अनायाससाध्यमिष्टं कर्म लीले'ति लक्षणात् । हन्तैवमिति । प्रतिबन्देरनुत्तरत्वेऽपि वाग्गुचरेणैव स्वोत्तरसिद्ध्यर्थमेवमुक्तम् । तदाहुः—धर्मिग्राहकेति ॥

(५२) ननु लीलासम्बन्धिपदार्थाः सर्वैः सपद्यनुभूयमाना एव, तद्भिन्ना वा? आद्ये, तन्नित्यत्वं प्रत्यक्षबाधितम्। क्वचिच्च श्रूयमाणवैलक्षण्योपलम्भाच्च न तथा वक्तुं शक्यम्। द्वितीये त्वेतेषामपीतरपदार्थसाधारण्येन तल्लीलारसनिमग्नानामेतेष्वेवासाधारणप्रेमानुपपत्तिः। तादृग्भक्तानामेतद्दर्शनादिना तद्रसानुभवेनाह्लादविशेषस्यानुभूयमानत्वेन च न तथा वक्तुं शक्यम्।

सर्वदृश्यगोकुलमथुरादीनां लीलासम्बन्धित्वाभावेऽपि लीलासम्बन्धिपदार्थाभिव्यक्तिस्थानतया भक्तप्रीतिविषयतेति कथनम्।

सुवर्णसूत्रम्।

(५२) अतः प्रत्यक्षबाधादिदोषद्वयपरिहाराय पूर्वोत्तरपक्षावाहुः—ननु लीलेत्यादिना। प्रत्यक्षबाधितमिति। प्रश्नादिप्रत्यक्षेण बाधितम्। वैलक्षण्येति। यथा 'रत्नबद्धोभ-

हरितोषिणी।

(५२) लीलासम्बन्धिपदार्था व्रजसम्बन्धिपर्वतवृक्षलताकुञ्जादयस्ते ते द्विविधाः। एके भक्ताभक्तैः सर्वैः परिदृश्यमानाः। अपरे उत्कटभक्तैरेव परिदृश्यमाना अलौकिकरत्नादिविशिष्टाः। तत्राशङ्कते—नन्विति। लीलासम्बन्धीति। व्रजसम्बन्धिस्रक्चन्दनतरुलतागुल्मादयः पदार्था इत्यर्थः। सर्वैरिति। भक्तैः साधारणजनैरित्यर्थः। सपदि एकस्मिन्नेव काले। तथा चारामादिनिकुञ्जानां सर्वैरनुभव एकस्मिन्नेव काले क्रियत इत्यनुभवोऽपीति भावः। द्वितीयं पक्षमाहुः—तद्भिन्ना इति। ये परिदृश्यमाना निकुञ्जादयस्तदपेक्षया भिन्ना विलक्षणा इत्यर्थः। वैलक्षण्यं च भक्तैरेवानुभूयमानत्वं, न त्वितरजनैरिति भावः। प्रथमपक्षे दूषणमाहु—आद्ये इति। तन्नित्यत्वमिति। वृन्दावनलतागुल्मादीनां नित्यत्वमित्यर्थः। प्रत्यक्षबाधितमिति। तेषां वृक्षाणां छेदनादिकं दृश्यत इति कृत्वा नित्यत्वं प्रत्यक्षेण बाधितमित्यर्थः। अनित्यत्वमपि वक्तुं न शक्यत इत्याहु—क्वचिदिति। श्रीमदुत्कटभक्तमुखाच्छ्रीगोकुले यमुनाया उभयतटी रत्नबद्धेति श्रूयमाणं वैलक्षण्यमिति तेषामनित्यत्वमपि वक्तुं न शक्यत इत्यर्थः। द्वितीयपक्षोऽपि न भवतीत्याहु—द्वितीये त्विति। उत्कटभक्तैरेव परिदृश्यमाना इति पक्षे त्वित्यर्थः। एतेषामपीति। सर्वानुभूयमानपदार्थानामित्यर्थः। तल्लीलेति। अलौकिकभगवल्लीलारसनिमग्नानामित्यर्थः। एतेष्वेवेति। सर्वैरनुभूयमानेषु व्रजपदार्थेषु। तथा चात्र भक्त्यभावे भक्तानां दोषः स्यादिति भावः। ननु मास्तु लौकिके प्रेमानुत्पत्तिः, का क्षतिरित्यत—आहुः—तादृग्भक्तानामिति। एतद्दर्शनेति। सर्वैरनुभूयमानव्रजमण्डलदर्शनादिना। तद्रसानुभवेन। अलौकिकरसानुभवेन। अपरं हेतुमाहुः—आह्लादेति। न तथा वक्तुमिति। अलौकिकप्रेमोत्पत्तिर्मा भवत्वित्येवं वक्तुं न शक्यमित्यर्थः। प्रेमोत्पत्तिस्त्वलौकिके वा जायते सा

गङ्गाधरभट्टी।

(५२) वैलक्षण्येति। 'रत्नबद्धोभयतटी'त्यादि।

क्यमित्युभयतःपाशा रज्जुः । न च भिन्नत्वेऽप्यभिन्नत्वभ्रमात्प्रेमाद्युपपत्तिः । दृश्यते हि स्वप्नप्रतीतप्रमदादर्शनादिना पारमार्थिक(नर)स्खलनादिरिति वाच्यम् । एवं तादृशाह्लादोपपत्तावपि तत्र तत्र वेणुकिङ्किण्यादिश्रवणतत्सौरभविशेषानुभवप्रदीपाद्यनुभवानां पारमार्थिकानामनुपपत्तेः । न ह्यभिमानमात्रेणोक्तानामनुभवः संभवति । अन्यथा जागरितस्यापि प्रमदास्पर्शाद्यनुभवप्रसंगः । तादृशेषु भ्रमानुपपत्तिश्चेत्यादिशङ्कानिरासस्तु 'दिवीव चक्षुराततं'मितिश्रुतिव्याख्यानेनैव कृत इति दिक् ॥

## सुवर्णसूत्रम् ।

यतटी'त्यादि । तादृशेष्विति । उत्कटभक्तिमत्सु । एवमाशङ्कामुक्त्वा तत्समाधिं स्मारयन्ति—दिवीवेत्यादि । तथा च तद्व्याख्याने 'दिवि स्वर्गे यथे'त्यादिना स्वर्गीयाणां पदार्थानां महद्गुरूत्तरूपवत्त्वेऽपि स्वर्गस्थदृश्यत्वमेव, न त्वदृश्यत्वमपि; तथैव वस्तुसामर्थ्यात्, तथैवात्रापीति श्रौतदृष्टान्तबलेन साधारणजनाविषयत्वं स्थापितम् । तेन सर्वानुभूयमानपदार्थेभ्यो भिन्नत्वमर्थादेव सिद्धमिति प्रत्यक्षबाधोऽनवसरादेव पराहतः । लौकिकेष्वपि भक्तानां लीलासम्बन्धित्वेन बुद्धिस्तु 'चक्षुरिति द्वितीयैकवचनान्त'मित्यादिना सर्वानुभूयमानस्य तद्वृत्तिलाभस्थानत्वव्यवस्थापनादस्य तत्सम्बन्धिसम्बन्धित्वप्रयुक्तत्वादबाधकत्वेन पर्यवस्यतीति न दोषलेशशेष इति भावः । एवं पञ्चविंशषड्विंशौ परिहृतौ ॥

## हरितोषिणी ।

तदभेदभ्रमादित्याशङ्कते—न चेति । भ्रमादपि प्रेमोत्पत्तिर्जायत इत्यत्र दृष्टान्तमाहुः—दृश्यते हीति । समाधानमाहुः—एवमिति । एवमभेदभ्रमेणेत्यर्थः । तत्र तत्रेति निकुञ्जे निकुञ्जे इत्यर्थः । तथा च भ्रमेणाह्लादो भवतु नाम, परं त्वत्रापि स्थलविशेषे सत्यानां वेणुकिङ्किण्यादीनां तत्र तत्र श्रवणादिकं जायत इति तदनुपपत्त्याऽभेदो वक्तव्य इति भावः । ननु लौकिमलौकिकं भिन्नमेव, प्रदीपाद्यनुभवस्तु तदेवेदमित्यभिमानेनेत्यत आहुः—न हीति । उक्तानामिति । वेणुकिङ्किण्यादीनामित्यर्थः । लौकिकदृष्टान्तानुसरणमस्तु नाम, तथाप्यपरं निष्कृष्टं समाधानमुच्यते इत्याहुः—तादृशेष्विति । उत्कटभक्तियुक्तेष्वित्यर्थः । नन्वित्यादिना पूर्वपक्षे समाधानमाहुः—शङ्कानिरासस्त्वित्यादिना । दिवीति । दिवि । स्वर्गे इत्यर्थः । तथा च स्वर्गे ये ये पदार्थाः सन्ति ते सर्वे स्वर्गीयाणामेव दृश्या, न त्वन्येषामेवमत्रापि भक्तानामेवालौकिकलीलासम्बन्धिपदार्था दृश्या, न त्वन्येषाम् । एवं च ते लौकिकसाधारणजनविषयपदार्थेभ्यो भिन्ना एवेति भावः । एवं च भक्तानां लौकिकेषु प्रेमोत्पत्तिस्तु लीलासम्बन्धित्वेनेत्यवधेयम् ॥

## गङ्गाधरभट्टी ।

तादृशेष्विति । लीलारसनिमग्नेषु । दिवीवेति । दिविष्ठं वस्तु तत्रत्यानामेव दृश्यते,

प्रभासीयलीला विषयतारूपा मायिकीति प्रमाणबलेन निरूप्यते।

(५३) ननु प्रभासीयकथायाः कथं सङ्गतिरिति चेत्, उच्यते भगवान् हि सर्वलीलायुतः प्रकटः सदा । तथा च यथा धर्मरक्षा, सद्रक्षा, देवकार्यकरणं, भूभारहरणादिकं भगवल्लीला; तथैवासुरव्यामोहनमपि लीलैव । मोहनं च माययैवेति निश्चयः । एवं च सत्यासुरमोहनार्थं या लीला सा मायिकीति मन्तव्या । तस्यां च लौकिकत्वेनासत्यत्वेन ज्ञा-

सुवर्णसूत्रम् ।

(५३) अतः परं प्रमाणयोरितरेतरविरोधो लीलास्थानां नाशानुभयादिर्वेतिदोषद्वयपरिहाराय तस्कृतं पूर्वपक्षमाहुः—नन्वित्यादि । कथं सङ्गतिरिति । पूर्वोक्तप्रमाणैर्हि लीलालीलास्थयोर्नित्यत्वं, तत्कर्तुश्च दृश्यमानविग्रहानित्यत्वं च व्यवस्थापितम् । तथा सति द्वारकालीलास्थानामपि तथात्वमावश्यकम् । एकादशस्कन्धे च यदुकुलस्य शापपूर्वको नाश उच्यते । 'लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलाम् । योगधारणयाऽऽग्नेय्याऽदग्ध्वा धामाविशत्स्वक'मित्यनेन स्वरूपस्यान्यथाभाव उच्यते । तथा सति प्रमाणयोर्लीलयोश्च विरोधात् प्रदर्शनमात्रार्थत्वं सर्वस्यायाति । यदि च स्वप्नादिवैधर्म्यान्मायिकत्वं नाङ्गीक्रियते; तदाऽपि सत्कार्यवादस्य पूर्वं साधितत्वादत्रापि तन्न्यायेन कार्यत्वे सिद्धेऽनित्यत्वस्यैव दार्ढ्यम् । अंशावतारणाच्च । तथाऽक्रूरभीमाहृतादीनां पुराणान्तरे पूर्वजन्मकथनादपि तथा । एतेनैव प्रथमतृतीयस्कन्धीयार्जुनोद्धवोक्ती भारतविष्णुपुराण॰

हरितोषिणी ।

(५३) इदानीं लीलाया नित्यत्वे पूर्वपक्षमुत्थापयन्ति—नन्विति । प्रभासीयेति प्रभासक्षेत्रे सर्वेषां यादवकुलोत्पन्नानां विप्रशापेन नाश उच्यते; तथा च लीलोत्पन्नानां लीलायाश्च नाशात्कथं नित्यत्वमिति भावः । सङ्गतिं व्युत्पादयितुं समाधानमाहुः-

गङ्गाधरभट्टी ।

तथा लीलास्थं वस्तु लीलारसनिमग्नानामेव दृश्यते, तस्माल्लीलास्थाः पदार्था भिन्ना एव; तथापि लौकिकेषु भक्तानां लीलास्थत्वबुद्ध्यनुपपत्तिः ? मैवं वोचत । लौकिकेष्वेवालौकिकप्राकट्यात् । यथा चक्षुर्गोलकेऽतीन्द्रियचक्षुरिन्द्रियावेशः । इदमपि व्याख्यातं चक्षुरितिद्वितीयाव्याख्यायाम् ॥

(५३) कथं सङ्गतिरिति । योगधारणया तनुं दग्ध्वा धामाविशत्स्वकमिति स्वरूपविकारः, 'यदून्यदुभिरन्योन्यं भूभारान्संजहार हे'ति लीलास्थानाम्; तथात्वं नित्यत्वे कथम्? न च सत्कार्यवादान्न दोषः । कार्यत्वस्यैवानित्यत्वात् । किञ्चांशावतरणात्पूर्वजन्मोपाख्यानाच्च भक्तादीनां कथं नित्यत्वं प्रत्येतव्यम् ॥

नेन भगवत्यपि लौकिकत्वज्ञानमसुराणामेव, न देवानाम् । यतस्तदर्थमेव तत्करणम् । अत एव भगवताऽप्युक्तम्—'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् । मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः । महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्यय'मिति । 'मामव्यय'मिति पदाभ्यां यः प्रकटो दृश्यते तमेवाविकृतं जानन्तो भजन्त इति गम्यते ॥

अपि च भगवद्गीतास्वेव 'यदक्षरं वेदविदो वदन्ति विशन्ति यद्

सुवर्णसूत्रम् ।

दिस्यमौशलादिकथाऽपि व्याख्याता । अतो विग्रहलीलातत्सम्बन्धिनां नित्यत्वे बहुवाक्यविरोधादस्याः सङ्गतिर्न भवतीत्यतः प्रश्नः—कथं सङ्गतिरिति । तत्र तस्याः सङ्गतिं व्युत्पादयितुं विग्रहादिनित्यत्वेऽपि सङ्गतिर्न दुर्घटेत्याशयेनाविर्भूतस्य भगवतः सामर्थ्येन तदुपपत्तिमाहुः—उच्यते भगवानित्यादि लीलैवेत्यन्तम् । तथा च तदपि लीलात्वास्वरूपसाध्यमिति तदानीमपि स्वरूपं नित्यमिति तत्सामर्थ्येनैव तदुपपत्तिरित्यर्थः । सा कया विधयेत्याकाङ्क्षायां तत्करणं, तस्याः स्वरूपं, तां विधां चाहुः—मोहनं चेत्यारभ्य, करणमित्यन्तम् । इयं च लीलाऽसुरार्था, न दैवार्थेत्यत्र मानमाहुः—अत एवेत्यादि । तथा चैतद्वाक्ये स्वावज्ञायास्तद्भावप्रकारकथनपूर्वकमुक्तत्वात्तेषां मूढत्वेन मोहस्य सार्वदिकत्वात्तिरोभावावसर एवंप्रकाराकरणे मोहशैथिल्यं भवेत् । अतस्तथा करणम् । तेन च दैवानां न मोह इति । तस्यामोहस्य व्याख्यातत्वादेव ज्ञानप्रकारमाहुः—मामित्यादि । तथा चासुराणामेवान्यथाबुद्धिर्न दैवानामिति पूर्वोक्तं युक्तमेवेत्यर्थः ॥

एवमस्या लीलाया असुरार्थत्वे सिद्धे स्वरूपनित्यत्वं निष्प्रत्यूहमेवेत्याशयेन तन्नित्यत्व-

हरितोषिणी ।

उच्यत इति । लीलाया नित्यत्वोपपत्तिमाहुः—भगवानित्यादिना, लीलैवेत्यन्तेन । सर्वलीलायुत इति । धर्मरक्षासुरव्यामोहनान्तसर्वलीलायुत इत्यर्थः । तथा च प्रभासीयलीलयाऽसुरव्यामोहनमित्यसुरव्यामोहनात्मिकेयं लीलेति भावः । शरीरादित्यागादिकं मायिकं मिथ्याभूतमित्याहुः—मोहनं चेति । सा मायिकी । असुरव्यामोहनात्मिका लीला मायिकी मन्तव्येत्यर्थः । तथा चेयं लीला मोहनार्थं श्रितेत्यत्र प्रमाणमाहुः—अत एवेति । असुरा मानुषं मामवजानन्ति, महात्मानस्तु मामव्ययं जानन्ति, अत एव ते भजन्तीत्यर्थः ॥

असुरव्यामोहनात्मिकाया लीलाया असुरार्थत्वेऽपि तस्या लीलाया अनित्यत्वेन तद्विशिष्टस्वरूपस्याप्यनित्यत्वापत्तिः । अतस्तस्य नित्यत्वे प्रमाणं दर्शयन्ति—अपि चेति ।

यतयो वीतरागाः। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्य' इत्युपक्रम्याक्षरस्वप्राप्त्युपायौ निरूप्य, स्वप्राप्तौ च विशेषमुक्त्वा पुनर्भगवतोच्यते—'अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे। राज्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके। भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते। राज्यागमेऽवशः पार्थ प्रभवत्यहरागमे। परस्तस्मात्तु भावोऽन्योऽव्यक्तो व्यक्तात्सनातनः। यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यती'त्यादि। एतदन्ते च 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यये'-त्युक्त्वा परस्य लक्षणमुच्यते 'यस्यान्तःस्थानि भूतानि येन सर्वमिदं तत'मिति। अत्र च यत्सर्वेषु भूतेषु नश्यत्स्वपि स्वयं न नश्यति तस्यैव लक्षणं 'यस्यान्तःस्थानि भूतानि येन सर्वमिदं तत'मितिपदेनोक्तम्। एतल्लक्षणवत्त्वं च मृत्साभक्षणजृम्भणादिलीलानिरूपणप्रस्तावे पक्षान्तरनिरासपूर्वकं भगवतो दृश्यस्वरूपस्यैव नैसर्गिकधर्मत्वेन दशमस्कन्ध एव निरूपितम्॥

### सुवर्णसूत्रम्।

साधकं मानान्तरमाहुः—अपि चेत्यादि। निरूप्येति। 'ओमित्येकाक्षरं ब्रह्मे'त्यनेन 'अनन्यचेता' इत्यनेन च निरूप्य। उक्त्वेति। 'मामुपेत्य पुन'रितिश्लोकेनोक्त्वा। एतदन्त इति। एवमक्षरस्वरूपनिरूपणानन्तरम्। एवं गीतोक्तप्रमेयं निरूप्य तादृशत्वं

### हरितोषिणी।

भगवता साक्षादर्जुनं प्रति 'यदक्षर'मित्यनेनोपक्रमः कृतः, अनन्तरं 'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मर'न्नित्यनेनाक्षरप्राप्त्युपायं, 'अनन्यचेता' इत्यनेन स्वप्राप्त्युपायं च निरूप्य 'मामुपेत्य पुन'रित्यनेन स्वप्राप्तावक्षरापेक्षया विशेषमुक्त्वा पुनर्भगवता 'अव्यक्ताद्व्यक्तय' इत्यादिनाऽक्षरस्वरूपनिरूपणमुच्यते। एतदन्ते पुरुषस्य भक्तिलभ्यत्वमुक्त्वा 'यस्यान्तःस्थानी'त्यनेन परस्य लक्षणमुच्यत इत्याखण्डलार्थः। एतादृशं परस्य लक्षणं भगवत्यस्तीत्याहुः—एतल्लक्षणवत्त्वं चेति। निरूपितमित्यनेनान्वयः॥

### गङ्गाधरभट्टी।

निरूप्येति। 'ओमित्येकाक्षर'मिति। 'अनन्यचेता' इति च। विशेषमिति 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यत' इति। एतदन्त इति। 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्। यं प्राप्य न निवर्तन्ते तद्धाम परमं मम'त्यक्षरनिरूपणान्त इत्यर्थः। अयमर्थोऽत्र प्रकरणे—विनैव साधनं प्रलयेऽक्षरप्राप्तिः सर्वेषां, ज्ञानिनां स्वनावृत्तिः, परब्रह्मप्राप्तिस्तु भक्त्यैवेति न पूर्वापरविरोध इति॥

अपि च, अत्रैव दामोदरलीलाप्रस्तावे तस्मिन्नेवोदरे दाम्नामनवच्छेद्यत्वं निरूप्यते, तेन तस्योदरस्यैव ब्रह्मत्वं निरूपितं भवति । उदरस्याब्रह्मत्वे तु दामभिरनवच्छेद्यत्वे देशकालापरिच्छिन्नत्वं ब्रह्मधर्मं हेतुत्वेन 'न चान्तर्न बहिर्यस्ये'त्यादि न निरूपयेत् । व्यधिकरणत्वापत्तेः । तथा च धर्मिग्राहकमानैर्विग्रहस्यैव ब्रह्मत्वं निश्चितमिति तद्विरुद्धधर्माणामसतामेव प्रदर्शनमसुरव्यामोहायेति निश्चीयते । अन्यथाऽनुपपत्तेर्बलिष्ठत्वात् ॥

## सुवर्णसूत्रम् ।

भगवति निगमयन्ति—एतदित्यादिना । सिद्धमाहुः—तथा चेत्यादि । एवं प्रभासीयलीलामायिकत्वदार्ढ्याय स्वरूपनित्यत्वं पुनरत्र स्मारितम् । तेन 'लोकाभिरामा'मित्यनेन यः स्वरूपस्यान्यथाभाव उक्तः स प्रदर्शनमात्रमेवेति बोधितम् । एवमेव ब्रह्माण्डपुराणेऽप्युच्यते । तदेव हि ब्रह्मतर्कस्तवटीकायामप्पयदीक्षितेनोपन्यस्तम् । तथाहि—'निर्दोषश्चेत्कथं विष्णुर्मनुष्येषु प्रजायते । चिन्ताश्रमव्रणाज्ञानदुःखयुग् दृश्यते कथम् । एवं मे संशयो ब्रह्मन् हृदि शल्यमिवार्पित'मिति नारदप्रश्ने, 'स्त्रीपुंमलानुपक्तात्मा देहो नास्य विजायते । किन्तु निर्दोषचैतन्यसुखनित्यां स्वकां तनुम् । प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा । तथाऽप्यसुरमोहार्थं परेषां च क्वचित्क्वचित् । दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः । क्व व्रणादि क्व चाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे । दौर्लभ्याच्चैव मोक्षस्य दर्शयेत्तानजो हरिः । कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहस्य देहवत् । लोकानां दर्शयामास स्वरूपसदृशाकृतिम् । तथैव श्रीशुकैरपि श्रीभागवत उक्तम्—'राजन् परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य । सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चात्ममहिम्नोपरतः

## हरितोषिणी ।

अपि चेति । भगवति लक्षणं संगमयन्ति—अत्रैवेति । दशमस्कन्ध एवेत्यर्थः । उदरस्य ब्रह्मत्वं निरूपितमित्युक्तम्, तन्मनसि नायातीत्यत आहुः—उदरस्येति । न निरूपयेदिति । व्यास इति शेषः । व्यधिकरणत्वेति । उदरे ब्रह्मत्वं तु न स्वीक्रियते, देशकालापरिच्छिन्नत्वं तूच्यत इति ब्रह्मव्यधिकरणत्वापत्तेरित्यर्थः । एतावता यत्सिद्धं तदाहुः—तथा चेति । धर्मिग्राहकमानैरिति । मृद्भक्षणजृम्भणदामोदरादिलीलाप्रस्तावे श्रीभागवतादिप्रमाणैरित्यर्थः । तद्विरुद्धधर्माणामिति । प्रभासीयलीलायां शरीरत्यागादीनाम् । असतां मिथ्याभूतानामित्यर्थः । अन्यथेति । भागवतादिप्रामाण्यानुपपत्तिः सर्वतो बलवतीत्यर्थः । सर्वा लीला नित्या देवानां प्रदर्शनाय, प्रभासीयाऽसुरव्यामोहनात्मिकाऽनित्याऽसुराणां प्रदर्शनायेत्यत्र प्रमाणं दर्शयन्ति—

सुवर्णसूत्रम् ।

स आस्ते ॥ मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रद-ग्धम् । जिग्येऽन्तकान्तकमपीशमसावनीशः किं स्वावने स्वरनयन् मृगयुं सदे-हम् ॥ तथाऽप्यशेषस्थितिसंभवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् । नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वस्थगतिं प्रदर्शय'न्निति श्लोकत्रयाणामत्रायमर्थः—पूर्वं यदुकुलनाशः स्वरूपान्यथाभावश्चोक्तः । तत्र 'योगधारणयाऽऽग्नेय्याऽदग्ध्वा धा-मा'विशत्स्वक'मित्यत्राकारप्रश्लेषस्यापि संभवदुक्तिकत्वात् किमदग्ध्वा, उत योगिवद्दग्ध्वा धामाविशदिति सन्देहे तं वारयितुं प्रवृत्तो लीलातत्सम्बन्धिस्वरूपविषयकं सन्देहं प्रथमेन वारयति । अन्यथा तृतीयश्लोकेनैव तन्निवृत्तेरायौ न वदेत् । तथा सत्ययमर्थः—राजन् *परस्याक्षरादप्युत्तमस्य †तनुभृतां यादवादीनां जननाप्ययेहा उत्पत्तिनाशचेष्टाः मा-याविडम्बनं मायानुकरणमवेहि । परो हि नित्यलीलासम्बन्धिनां समागमने(?) स्वमा-ययोत्पत्तिनाशत्वेन प्रत्याययति । तत्र दृष्टान्तो, यथा नटस्येति । नटो यथाऽन्यदन्यत्व-त्प्रत्याययति तथेत्यर्थः । इदमेव पूर्वाध्याये मौशलक्लिष्टं दारुकं प्रति भगवतोक्तम्—'त्वं तु मद्धर्ममास्थाय ज्ञाननिष्ठ उपेक्षकः । मन्मायारचनामेतां विज्ञायोपशमं व्रजे'-त्यनेन । 'एता'मित्यनेनात्र सन्निहितस्य 'गच्छ द्वारवतीं सूते'ति श्लोकत्रयोक्तस्यैव परा-मर्शात्, सर्वस्य मायिकत्वेऽभिसंहिते सर्वामित्येव वदेत् । अतस्तदनुवाद एव 'मायावि-डम्बन'मित्यत्रेति निश्चयः । परत्वं निगमयितुमिदानीं सृष्टिगुणयोगमाह—सृष्ट्वेत्यादि । महिमहिमा । तथा च प्रलये यथा सर्वं स्वात्मनि निवेश्योपरतस्तात्कालिकपरिकरयुक्त-स्तिष्ठति तथेदानीमास्त इत्यर्थः । श्रीधरीये तु 'तनुभृत्सु यादवादिष्वाविर्भावतिरोभावचे-ष्टे'ति भगवत्परत्वेन व्याख्यातम् । तच्चिन्त्यम् । तनुभृत्पदवैयर्थ्यप्रसञ्जकत्वात् । आवि-र्भावतिरोभावान्तरे जननाप्ययव्यवहाराभावेन तावतैव चारितार्थ्यात् । तस्मादुक्त एवार्थः । एवं सपरिकरस्य स्थितौ बोधितायां पुनः सन्देहः स्यात्, ननु मूलरूपे तथास्तु, अवता-ररूपे तथात्वं कथमवगन्तव्यमिति, तदर्थं सामर्थ्यमाह—मर्त्येनेति । अन्तकान्तकं मृत्युञ्जयम् । स्वावने स्वीयानामवने । तथा च मर्त्यशरीरस्य नाशोत्तरं चिरकालेऽपि गुरुसुतानयनेन ब्रह्मास्त्रदग्धस्वदानयनेन मृत्युञ्जयजयेन च लोकवेदृदेयाप्रतिबद्धसामर्थ्यं-स्येदानीमपि स्वापराधिमृगयुस्वर्नयने प्रकटीकरणात्सर्वकालमेकरूपमेव सामर्थ्यं विनिग-न्तव्यम् । तथा च मूलरूपमेवेदमित्यर्थः । एवमेव यशोद्भवयोः स्थापनाद् ब्राह्मणवा-

---

टिप्पणी ।

* परस्येति । कर्तरि षष्ठीयम् ।

† तनुभृतामिति । कर्मणि षष्ठी ।

सुवर्णसूत्रम् ।

क्याप्रतिबध्यत्वमपि सामर्थ्यं बोध्यम् । तर्हि सामर्थ्ये विद्यमाने स्वानात्मानं च कुतो न रक्षितवानित्याकाङ्क्षायां तत्कारणं, भक्तस्थितिमर्यादां चाह—तथापीत्यादि । अनन्यहेतुर्निरपेक्षकारणम् । तथा च देवकार्यार्थं प्रकटस्तदर्थं तेऽप्यवतारिताः, यदा तत्सर्वं कृतं, तदा स्वस्य भूमौ कार्याभावात् स्वधामजिगमिषायां तेषां वपुरत्र शेषितं प्रणेतुं नैच्छत् । तद्धि मर्त्यमपि वं सुखं पुष्णातीति भगवदस्थितौ सुखाभावेन तत्पोषस्य सुतरामभाव इत्यतो नैच्छदित्यर्थः । तदाह—'मर्त्येन किं स्वस्थगतिं प्रदर्शय'न्निति । स्वस्था भगवदेकनिष्ठाः, ते हि भगवदिच्छानुरूपमेव कुर्वन्ति, तैरेवमवगतम्—भगवानेवमसुरान् व्यामोहयिष्यति, ततस्ते तथा कृतवन्त इति तेषां गतिं प्रकृष्टामुत्तमां दर्शयन् विद्यमानेऽपि सामर्थ्ये तान्न रक्षितवानिति भावः । तेन यथा प्राकट्यावसरे 'बभूव प्राकृतः शिशु'रिति स्वत एव तथा भावनेन प्राकृतबुद्धिरुत्पादिता, तथा तिरोधानावसरे स्वतोऽप्रिप्राकट्येनात्मानं योगिनमिव प्रदर्शयता स्थिरीकृता । लौकिकप्रकारकरणे तु भक्ता अपि व्यामुह्येरन्, प्रकारान्तरे असुरा अपि व्यामोहं शिथिलं कुर्युः, यथाऽयोध्यानयनेन । अत उभयसामञ्जस्यार्थं स्वतश्चेच्छ एव नाट्यं समापितवान् । जनिष्यमाणदैत्यव्यामोहस्थिरीकरणरूपदेवकार्यस्यैतावतैव सिद्धेरिति 'लोकाभिरामे'तिश्लोकतात्पर्यं सिद्ध्यति । अत एव प्रथमस्कन्धे 'ययाऽहरद्भुवो भारं तां तनुं विजहावजः । कण्टकं कण्टकेनैव द्वयं चापीशितुः समम् । यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः । भूभारः क्षपितो येन जहौ तच्च कलेवर'मिति द्वयेन नटदृष्टान्तपूर्वकं भूभारहर्तृदेहस्यैव त्याग उक्तो, न लीलान्तरकर्तुः । तेनाप्यन्तरासृष्टिरूपस्यैव देहस्य त्यागः सिध्यतीति स्वस्मिन् प्राकृतत्वबुद्ध्यापादकं यद्रूपं तदनेन नाट्येन त्यक्तम्, न तु मूलरूपं व्यूहरूपं वेति फलति । यथा नटो नाट्यवेषमेव दूरीकरोति, न स्वीयं रूपमिति । न च व्यूहमूलरूपयोरभेदः । 'वृष्णीनां वासुदेवोऽस्मी'ति विभूतौ कथनात् । किञ्चैतेनान्यदपि कार्यं साधितम् । 'एकं भगवतः कार्यं बह्वर्थानां च साधक'मितिशास्त्रार्थात् । तथाहि—वेदः सर्वोऽपि भगवल्लीलाप्रतिपादकः । तथा च जातकर्मादिप्रतिपादकसार्थकत्वाय यथा तदनुकरणमेवं सांपरायिकप्रतिपादकस्यापि तथात्वायैवं करणम् । देवानामप्यद्भुतरसोत्पादनायैवैतत् । तदुक्तं तत्रैव—'देवादयो ब्रह्ममुख्या निविशन्तं स्वधामनि । अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिताः । सौदामिन्या यथाऽऽकाशे यान्त्या हित्वाऽभ्रमण्डलम् । गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः । देवादयो ब्रह्ममुख्या दृष्ट्वा योगगतिं हरेः । विस्मितास्तं प्रशंसन्तः स्वधामानि ययुर्मुदे'ति । नन्विदमत्यनुचितम्—'हासो जनोन्मादकरी च माये'तिवाक्यात् स्मितस्य मायात्वेन तत्कृतकामदेवाविवर्द्धनस्यापि मायिकत्वप्रसञ्जकत्वादिति चेत्, न; तस्या मायाया एतद्भिन्न-

उक्तं च ब्रह्माण्डपुराणे—'अमोहाय गुणा विष्णोराकारश्चिच्छरी-

सुवर्णसूत्रम् ।

रत्वात् । फलभेदेन तथा निश्चयात् । दृश्यन्ते हि मरुदेशराजधान्यां मायाविरचितदाडि-मानामिदानीमपि फलानि । तान्युपभुञ्जानानां च तद्रसानुभवतापोपरमादयः । अन्यत्र च दर्शनमात्रता मायाविरचितानाम् । तेन तत्रेवात्रापि फलवैजात्येन कारणवैजात्यमनुमेयम् । यदि च कारणवैजात्यं न मनुषे, तदाऽपि फलवैजात्यस्य प्रत्यक्षसिद्धत्वान्न पूर्वत्र दोषसंचारः । दर्शननिरस्तत्वात् । प्रकृते च शब्दसिद्धत्वात् । एवं सति नेत्रनिमीलनेन च देवानां ज्ञानशक्तिं तिरस्कृत्यात्मसंयोजनेन बहिःस्थितं सर्वं यथास्थितमेव स्वस्मिन्विला-प्यावरणाग्निमुपनिषदुक्तां परमात्मस्थानभूतामग्निशिखां वा प्रकटीकृत्य तस्मिन् स्वयमन्त-र्भूय पूर्वप्रतिपादितं स्वनित्यलीलास्थानं प्राविशदिति निबन्धोक्तो निष्कर्षः । तदेतद्ब्रह्माण्ड-पुराणब्रह्मपुराणाभ्यामपि द्रढयन्ति वादिमुखध्वंसाय—उक्तं चेत्यादि । ब्राह्मोक्तमप्रत्वा-

हरितोषिणी ।

उक्तं चेत्यादिना, 'दोषा विष्णोर्न हि क्वचि'दित्यन्तेन । नन्वाराधकत्वं जीवधर्मः,

गङ्गाधरभट्टी ।

उक्तं चेति । माध्वमाध्ये, ब्रह्मतर्कविवरणेऽपि ब्रह्माण्डे—'स्त्रीपुंमलानुपङ्गात्मा देहो नास्य विजायते । किन्तु निर्दोषचैतन्यसुखनित्यां स्वकां तनुम् । प्रकाश-यति सैवेयं जनिर्विष्णोर्न चापरा । तथाऽप्यसुरमोहार्थं परेषां च क्वचित्क्वचित् । दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः । क्व व्रणादि क्व चाज्ञानं स्वतन्त्राचि-न्त्यसद्गुणे । दौर्लभ्याच्चैव मोक्षस्य दर्शयेत्तानजो हरिः । कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहस्य देहवत् । लोकानां दर्शयामास स्वरूपसदृशाकृतिम् । श्रीभागवतेऽपि —'राजन्परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्य'। *तनुभृत इव जननादीत्यर्थः । 'मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः पर-मास्त्रदग्धम् । जिग्येऽन्तकान्तकमपीशमसावनीशः किं स्वावने स्वरनयन्मृगयुं सदेह'मिति । कथं तर्ह्युक्तम्—'योगधारणयाऽऽग्नेय्या दग्ध्वे'ति, असुरव्यामोहनार्थमि-त्युक्तम् । अदग्ध्वेत्येव वा पदम् । श्रीधरोऽपि—'योगिनः स्वच्छन्दमृत्यवः, आग्नेय्या योगधारणया तनुं दग्ध्वा लोकान्तरं गच्छन्ति, भगवाँस्तु न तथा, किन्त्वदग्ध्वैव' । तत्र हेतुर्भक्तानां धारणाध्यानयोस्तद्दर्शनार्थम् । न हि धारणैवासत्यवार्ता । 'अमोहाये'त्यादि-वचनान्तराणि चान्यत्र व्याख्यातानि ॥

---

टिप्पणी ।

* तनुभृत इव जननादीति । इदं भागवतचन्द्रचन्द्रिकादिपरमतव्याख्याऽनुसारि व्याख्यानम् । तोषिणीकृद्भिस्तु बालप्रबोधिनीविवृतौ श्रीधरस्वामिवदेव व्याख्यायते । परन्तु तदपि सुवर्णसूत्रकृतामसंमतमित्येतदीयसुवर्णसूत्रे व्यक्तमेव ॥

रता । निर्दोषत्वं तारतम्यं मुक्तानामपि चोच्यते । एतद्विरुद्धं यत्सर्वं तन्मोहायेति निश्चय' इति ॥

उक्तं च ब्रह्मपुराणे—'अज्ञत्वं पारवश्यं च विधिभेदादिकं तथा। तथा प्राकृतदेहत्वं देहत्यागादिकं तथा । असुराणां विमोहाय दोषा विष्णोर्न हि क्वचि'दिति । तथा च पद्मपुराणे पाषण्डप्रवर्तनार्थं वृषभध्वजमाज्ञापयता भगवतोक्तम्—'त्वामाराध्य तथा शम्भो ग्रहीष्यामि वरं सदे'ति । न ह्यत्राराधकत्वं भगवति संभवति । तस्य जीवधर्मत्वात् । तस्य यथा स्वच्छिन्नसत एव प्रदर्शनं लोकव्यामोहाय, तथा तस्या अपीति मन्तव्यम् ॥

(५४) अपि च यथेन्द्रजालविद्यायां नटस्य स्वर्गगमनं, तत्र युद्धं, तेन तन्मरणं, मृतस्यात्र पातस्तत्स्त्रियाश्च सहगमनादिकं पूर्वमनुभूतमपि पश्चात्कालीनतदागमनेन प्रत्यक्षप्रमाणसिद्धेन मायिकमिति निश्चीयते; तथा 'जयति जननिवास' इत्याद्युक्तस्मृतिश्रुतिभिः पूर्वपूर्वलीलाया नित्यत्वं सिद्धमित्यनन्य-

युक्तिबलेन प्रभासीयलीलायां मायिकत्वप्रदर्शनम् ।

सुवर्णसूत्रम् ।

दिकं रसस्वरूपातिरिक्तरूपसम्बन्धीति बोध्यम् । तेन प्रियाविप्रयोगसामयिकाज्ञत्वस्य, भक्तपारवश्यस्य, 'आत्तगजेन्द्रलील' इत्याद्युक्तविधिभेदस्य च न दोषावहत्वम् । तत्र रसरूपत्वादिना तथैव सिद्धत्वात् । तथा सति 'त्वं हि नः परमं चक्षु'रित्याद्युक्तमज्ञत्वं तथा । अत एव 'मन्त्रेषु मां वे'त्याद्युद्धववाक्यम् । एवं पारवश्यमपि 'तत्तस्य कैङ्कर्यमलंभृतां न' इत्यादिवाक्योक्तम् । विधिभेदोऽपि शतधनुर्वधादिरूपः । आदिपदेन विध्यकरणम् । यथा यवनेन सह युद्धाकरणम् । प्राकृतदेहत्वं सत्त्वदेहत्वम् । देहत्यागादिकमिति । आदिपदेन शाल्वयुद्धादौ प्रकृत्युपप्लवः सांपरायिकक्रियाकारणादिकं च तत्र संगृहीतं बोध्यम् । प्रसङ्गात्तदीयं धर्मान्तरमपि विमृशन्ति—तथा चेत्यादि । तस्या अपीति । प्रभासीयलीलायाः ।

(५४) प्रमाणैर्मायिकत्वं तस्याः साधयित्वा युक्तिभिः साधयन्ति—अपि च यथेत्यादि । अनन्यगत्येति । उक्तशुकवाक्यस्यावतारतिरोभावोत्तरकालीनत्वात्तत्रत्यानां जय-

हरितोषिणी ।

स च कथं भगवता स्वीकृतः शिवाराधनेनेत्यत आहुः—तथा चेति । तस्या अपीति । प्रभासीयलीलाया अपीत्यर्थः ॥

(५४) लौकिकमपि मायिकं प्रत्यक्षसिद्धं कचिदस्तीत्यत आहुः—अपि चेति । एवं

गत्यैवास्या लीलायाः प्रदर्शनमात्रपरत्वमित्यध्यवसेयम् । न चैतदनुरोधेन पूर्वलीलानामेव तथात्वं वक्तुं शक्यम् । तासामुक्तप्रमाणैर्नित्यत्वेनैव सिद्धत्वात् । न चोक्तदृष्टान्तन्यायेन पूर्वं तथा सिद्धमपि पश्चाद्बाध्य(ता)मिति वाच्यम् । तत्र लौकिकत्वेन प्रमाणस्य, दोषस्यापि संभवेऽपि प्रकृते दोषासंभवात् । अत्र पूर्वोक्तन्यायेन लीलानामन्योन्यं बाध्यबाधकभावाभावेन तथा वक्तुमनवसरश्चेत्यलं विस्तरेण ॥

प्रभासीयप्रसङ्गस्यसन्निहितवाक्यानां तात्पर्यार्थप्रदर्शनम् ।

(५५) एतेन 'यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः । नश्वरं गृह्यमाणं च विद्धि मायामनोमय'मितिभगवद्वाक्यं लीलामध्यपात्यन्तरङ्गभक्तं प्रत्युक्तमिति न वास्तवत्वं कस्याप्यर्थस्य वक्तुं शक्यमिति निरस्तं वेदितव्यम् । उक्तरीत्याऽऽसुरव्यामोहाय प्रदर्श्यमानाना-

सुवर्णसूत्रम् ।

त्यादीनां वर्तमानार्थकप्रयोगाणामन्यथानुपपद्यमानत्वात्तदनन्यगत्येत्यर्थः । अत्र पूर्वोक्तन्यायेनेत्यादि । नटदृष्टान्ते यथा जीवनं प्रामाणिकं तन्मरणस्य बाधकं, समग्राङ्गता चावयवविशरणस्य बाधिका; तन्न्यायेनात्र प्रभासीयलीला न तच्छरीरादिबाधिका । उक्तप्रमाणविरोधेन तद्दर्शनस्याप्रामाणिकत्वात् । अतस्तथाकथनमनवसरपराहतमित्यर्थः । अलं विस्तरेणेति । ब्रह्माण्डपुराणे नारदप्रश्नप्रश्नोत्तराभ्यामेकादशस्कन्धसमाप्तौ च कण्ठत एवास्यां लीलायां मायिकत्वस्य कथनात्तथेत्यर्थः ॥

(५५) ननु तस्या एव लीलाया न मायिकत्वं, किन्त्वखिलप्रपञ्चस्यैव तथात्वम्, एकादशीयसप्तमाध्याये भगवतोद्धवं प्रति तथोपदेशादित्याशङ्कायामाहुः—एतेनेत्यादि ।

हरितोषिणी ।

च प्रभासीयलीलायाः पूर्वं सर्वा लीला नित्या, अन्या लीला प्रदर्शनमात्रार्थेत्याहुः—तथेत्यादिना, अलं विस्तरेणेत्यन्तेन । अत्राशङ्कते—न चेति । उक्तेति । ऐन्द्रजालिकन्यायेनेत्यर्थः । उत्तरयन्ति—तत्रेति । प्रकृते । भागवतादिप्रमाणे । अपरमपि समाधानमाहुः—अत्रेति । अत्र भगवदीयनित्यलीलायाम् । पूर्वोक्तेति । ऐन्द्रजालिकविधान्यायेनेत्यर्थः । तथा वक्तुमिति । मायिकत्वं वक्तुमित्यर्थः ॥

(५५) ननु सर्वस्य प्रपञ्चस्यैव मायिकत्वमुच्यते, न तु केवलं प्रभासीयलीलाया इत्यत आहुः—एतेनेति । प्रभासीयलीलाया मिथ्यात्वकथनेन । श्रवणादिभिर्गृह्यमाणं नश्वरमित्यन्वयः । भगवद्वाक्यमिति । एकादशस्थसप्तमाध्यायीयभगवद्वाक्यमित्यर्थः । अन्तर-

गङ्गाधरभट्टी ।

(५४) दृष्टान्तन्यायेनेति । दृष्टान्तसिद्धन्यायेनेत्यर्थः ।

मर्थानामेव 'यदिद'मित्यादिना कथनात् । अन्यथा 'नश्वर'मिति नोक्तं स्यात् । 'गृह्यमाण'मित्येतावतैव सर्वप्राप्तेः । एवं सति द्विजशापेन नश्व-

सुवर्णसूत्रम् ।

एतेनेति । प्रभासीयलीलाया मायिकत्वोपपादनेन । अन्यथेति । सर्वस्य मिथ्यात्वे । एवं सतीति । अस्मिन् वाक्ये नश्वरपदनिर्देशे सति । उक्तव्याख्यानोपष्टम्भाय तत्रत्यं वाक्यान्तरमाहुः—अत एवेत्यादि । अत एव । इतरस्यानश्वरत्वादेव । श्रीधरीये तु 'मनसा वचसा दृष्ट्ये'ति पाठः । ननु हंसगीतायामेव 'ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् । विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्प' इत्यत्र, इदं जगद्विभ्रमः, मनोविलासत्वात्, दृष्टत्वात्, विनष्टत्वात् । स्वप्नवत् । अतिलोलत्वात् । अलातचक्रवत् । इत्येवं जगन्मिथ्यात्वसाधकानुमानबोधनात्तत्र प्रभासीयप्रसङ्गाभावेन वाक्ये तद्विषयत्वस्य वक्तुमशक्यत्वादिति चेत्, न; अत्रापि 'विज्ञान'मित्युत्तरार्द्धे, त्रिधागुणविसर्गकृतो विकल्पो विज्ञानम्, उरुधा विभानात्, मायावत्, स्वप्नवदिति । अनेन सगुणसृष्टावेवान्यख्यात्या विज्ञानरूपत्वनिगमनेन निरीश्वरसार्वसृष्टावेव तथा पर्यवसानात्, 'सदेव सौम्ये'त्यादिश्रुत्युक्तप्रपञ्चमिथ्यात्वानापादकत्वात् । अन्यथा पूर्ववाक्यविरोधस्यापरिहारेण द्वयोरप्यसङ्गतत्वापातात्, तत्रापीन्द्रियग्राह्यस्यैव स्वामिन्नत्वबोधनात् । अतस्तत्रापि विषयभेदोऽवश्यमभ्युपेयः । एवमेव द्वादशाध्यायसन्दर्भेऽपि ज्ञेयम् । तत्रापि 'स एष जीव' इत्यारभ्य 'पटो यथा तन्तुवितानसंस्था' इत्यन्तसार्धचतुर्भिर्भगवद्रूपं प्रपञ्चमुक्त्वा 'य एष संसारतरु'रित्यारभ्य 'मायामयं वेद स वेद वेद'मित्यन्तैः सार्द्धैस्त्रिभिर्द्वितीयस्य कथनात् । अत एव पूर्वत्र 'अयं हि जीवस्त्रिवृदब्जयोनि'रित्यनेन त्रिगुणाधारत्वं लोकपद्मकारणस्वभेकत्वादिकं च तस्योक्तम् । द्वितीये तु 'द्वे अस्य बीजे' इत्यनेन कारणद्वयं बोधितम् । तेनात्रापि पूर्ववदेव निरीश्वरसृष्टौ पर्यवसानं बोध्यम् । एवमन्यत्रापि वैराग्यार्थं नृसिंहतापनीयोक्तामैन्द्रजालिकसृष्टिमादायैवोच्यते पुराणेष्विति निबन्धोक्तदिशाऽवगन्तव्यम् । तदस्मत्पितृचरणैरावरणभङ्गे सम्यक् प्रदर्शितमिति नेह प्रपञ्च्यते । प्रकृतमनुसरामः ॥

हरितोषिणी ।

ज्ञभक्तमिति । उद्धवं प्रतीत्यर्थः । कथं निरस्तमित्यत आहुः—उक्तरीत्येति । अर्थानामेवेति । प्रभासीयलीलामध्यपातिनामर्थानामित्यर्थः । यदिदमिति । भगवद्वाक्यस्य 'यदिद'मित्यादिनेत्यर्थः । अन्यथेति । सर्वप्रपञ्चमिथ्यात्वस्य भगवदभिप्रायविषयत्वे । नश्वरमिति । गृह्यमाणं यन्नश्वरं तन्मायामनोमयमित्यर्थः । सर्वप्राप्तेरिति । सर्वप्रपञ्चस्य प्राप्तेरित्यर्थः । नश्वरपदस्वारस्यमाहुः—एवं सतीति । एवं च सर्वप्रपञ्चस्य नश्वरत्वं भगव-

रमिति गृह्यमाणं तथेत्यर्थः पर्यवस्यति । अत एव 'यदिदं मनसा वाचा गृह्यतेऽन्यैरपीन्द्रियैः । अहमेव न मत्तोऽन्यदिति बुध्यध्वमंजसे'ति भगवतो हंसस्य वचनं गीयते ॥

(५४) अत्र विद्वद्भिरेवं ज्ञेयम्—आदौ निगूढाशयेन शुकदेवेन 'भूभारराजपृतना' इत्युपक्रम्य 'संजह्रे स्वकुलं विभु'रित्यनेन मौषिका लीला सामान्यत उक्ता। अत्रास्वकुलमिति निगूढः पदच्छेदो ज्ञेयः । वास्तव्यां नैसर्गिक्यां लीलायां भुवि प्रकटतया सत्यां कथमेवं संभवतीति शङ्कानिरासाय 'स्वमूर्त्ये'ति द्वयेनाग्रे भुवि लीलाप्राकट्यप्रयोजनाभावं ज्ञापयितुं लीलाप्राकट्यप्रयोजननिष्पत्तिकथनपूर्वकं सर्वांदृश्य-

प्रभासीयलीलासम्बन्धिया-दवकुलं नित्यलीलामध्यपातिया-दवकुलतो भिन्नमित्युपपादनम् ।

सुवर्णसूत्रम् ।

(५६) ननु प्रभासीयलीलासम्बन्धिनां मायिकत्वे द्वारकालीलास्थानामपि मायिकत्वमेव सिद्ध्यति, द्वारकास्थानामेव शापान् शत्रानामेव न तथाभावादित्याशङ्कायामाहुः—अत्र विद्वद्भिरित्यादि । स्वमूर्त्येति । द्वयेनेति । 'स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणाम् । गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः । आच्छिद्य

हरितोषिणी ।

दभिप्रेतं न भवति, किन्तु प्रभासीयलीलाया एवेत्यर्थः । नन्वयमभिप्राय इत्यत्र प्रमाणं किमत आहुः—अत एवेति । वचनमिति । सप्रमाध्यायीयभगवद्वचनमित्यर्थः ॥

(५६) ननु द्वारकास्थानां यादवानामेव ब्राह्मणशापानन्तरं प्रभासे गमनमिति तत्रत्यानां कथं मायिकत्वमित्यत आहुः—अत्र विद्वद्भिरिति । आदाविति । एकादशे प्रारम्भ एवेत्यर्थः । पदच्छेदो ज्ञेय इति । संजह्रे अस्वकुलमिति पदच्छेद इत्यर्थः । लीला द्विविधा वास्तवी, लौकिकी च, तत्र नित्या या वास्तवी लीला तस्या नाशः कथमित्यत आहुः—वास्तव्यामिति । कथमेवमिति । कथं नाशः संभवतीत्यर्थः । पदच्छेदे क्रियमाण आशङ्कायाः 'संजह्रेऽस्वकुलं विभु'रितिपद्योत्तरपद्यद्वयेन निराकरणमाहुः—स्वमूर्त्येति । 'स्वमूर्त्या लोकलावण्यनिर्मुक्त्या लोचनं नृणाम् । गीर्भिस्ताः स्मरतां चित्तं पदैस्तानीक्षतां क्रियाः । आच्छिद्य कीर्तिं सुश्लोक्यां वितत्य ह्यञ्जसा नु कौ । तमोऽनया तरिष्यन्तीत्यगात्स्वं पदमीश्वर' इतिद्वयेनेत्यर्थः । लौकिक्यास्तत्पदं

गङ्गाधरभट्टी ।

(५५) अत एवेति । इतरस्य प्रपञ्चस्यापि नित्यत्वादेव । कचित्, कचित्प्रपञ्चस्य अ-नित्यत्ववर्णनं वैराग्यार्थं पुराणे, तन्निबन्धे विशदं कृतम् ॥

स्वलक्षणं पद्मगादित्युक्तम् । लौकिक्या भूमेरधिष्ठानत्वमात्र उपयोगादस्वाभाविकत्वमिति तद्विलक्षणं पदमिति ज्ञापनाय स्वमित्युक्तम् । अग्रे च 'ब्रह्मण्यानां वदान्यानां नित्यं वृद्धोपसेविनाम् । विप्रशापः कथमभूद्वृष्णीनां कृष्णचेतसा'मिति राजप्रश्नवाक्यव्याजेन नित्यलीलामध्यपातियादवस्वरूपनिरूपणेन प्रासशापानां तद्भिन्नत्वं ज्ञापितं व्यासेन। 'बिभ्रद्वपुः सकलसुन्दरसंनिवेशं कर्माचरन् भुवि सुमङ्गलमाप्तकामः। आस्थाय धाम रममाण उदारकीर्तिः संहर्तुमैच्छत कुलं स्थितकृत्यशेष' इत्युत्तरे तु स्वरूपं लीलां च भुवि प्रकटीकुर्वन् प्रयोजननिष्पत्तिं ज्ञात्वा धाम सहजं नित्यं यल्लीलास्थानं तदेवास्थाय रममाण एव स्थितकृत्यशेषः स्थितोऽग्रिमासुरव्यामोहलक्षणः कृत्यशेषो यस्य तादृशः, 'कुलं

सुवर्णसूत्रम् ।

कीर्तिं सुश्लोक्यां वितत्य ह्यञ्जसा नु कौ । तमोऽनया तरिष्यन्तीत्यगात्स्वंपदमीश्वर' इति द्वयेन । तद्भिन्नत्वमिति । 'यदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् । लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णव' इति । भगवद्वाक्योक्तधर्मवत्त्वाद् वृद्धसेवित्वे च तदभावात्तेषां तद्भिन्नत्वम् । ननु 'बिभ्रद्वपु'रित्युत्तरे अकुलमितिपदच्छेदस्याशक्य-

हरितोषिणी ।

न भवतीति ज्ञापयितुमाहुः—लौकिक्या इति । स्वमित्युक्तमिति । पद्ये 'स्वं पदमगा'-दित्युक्तमित्यर्थः । तथा च द्वारकास्थं यद्यादवकुलं तत्स्वकुलं, यत्प्रभासे गतं तदस्वकुलमित्यर्थः । इदमेव कथयन्ति—अग्र चेत्यादिना । निरूपणेनेति । 'ब्रह्मण्याना'मित्यादिना निरूपणेनेत्यर्थः । तद्भिन्नत्वमिति । नित्यलीलामध्यपातियादवभिन्नत्वमित्यर्थः । अत एव भगवतोक्तम्—यदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् । लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णव' इति । अत्र 'यदिद'मित्युक्तयो'द्धत'मित्युक्त्या च तद्भिन्नत्वं बोध्यम् । ननु राज्ञा प्रश्ने कृते 'बिभ्रद्वपु'रित्युत्तरितं शुकदेवैस्तत्र तु 'संहर्तुमैच्छत कुल'मित्यत्राकुलमितिपदच्छेदो न संभवतीति कथमुभयोर्भिन्नत्वमित्यत आहुः—बिभ्र-

गङ्गाधरभट्टी ।

(५६) तद्भिन्नत्वं ज्ञापितमिति । 'यदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् । लोकं जिघृक्षद्रुद्धं मे वेलयेव महार्णव' इति वृद्धसेवित्वेऽसंभवात्तद्भिन्नमिदम् ॥

एकादशसुबोधिन्यां नार्थोऽयं स्फुटतीति चेत् । व्याख्यातमेवं मे तत्र वीक्षस्वापेक्षसे यदि । संहर्तुमैच्छतेति । अयमर्थो भर्तृसूक्ते 'भर्ता सन् भ्रियमाणो बिभर्ति' 'एको देवो बहुधा निविष्टः, यदा भारं तन्द्रयते स भर्तुं निधाय भारं पुनरस्तमेती'-त्यादिना निरूपित इत्यन्यत्र निरूपितम् ।

सुवर्णसूत्रम् ।

स्याद् वृद्धसेविलेखे च नैवं वक्तुं शक्यमित्यत आहुः—विभ्रदित्यादि । तथा च यथा 'द्वया ह प्राजापत्या' इत्यादावेकगोलके देवासुरभेदभिन्नानीन्द्रियाणि, तथैव पुरुषाधिष्ठभूतन्यायेन तेष्वाविष्टं यत्कुलं तदेव तथेत्यर्थः । अत्रैवं बोध्यम्—प्रथमस्कन्धेऽर्जुनोक्तौ 'एवं बलिष्ठैर्यदुभिर्महद्भिरितरान् विभुः । यदून् यदुभिरन्योऽन्यं भूभारान् संजहार ह' इति । एकादशे भगवद्विचारानुवादे च 'भूभारराजपृतना यदुभिर्निरस्य गुप्तैः स्वबाहुभिरचिन्तयदप्रमेयः । मन्येऽवनेर्ननु गतोऽप्यगतं हि भारं यद्यादवं कुलमहो अविषह्यमास्ते' इत्यनेन च भूभारभूतत्वमुक्तम् । तृतीयस्कन्धे चोद्धवैः 'दुर्भगो बत लोकोऽयं यदवो नितरामपी'त्युक्त्वा ते किं सर्वे, उत केचिदित्याकाङ्क्षायां 'ये संवसन्तो न विदुर्हरिं मीना इवोडुप'मिति पूर्वोक्तानां स्वरूपमुक्तम् । 'इङ्गितज्ञाः पुरुप्रौढा एकारामाश्च सात्वताः । सात्वतामृषभं सर्वे भूतावासममंसते'त्यनेन विपरीतज्ञानवत्त्वं चोक्तम् । एवमान्यत्रिकमपि । एवंभावश्च न नित्यलीलास्थेषु घटते । एवं सति स्वर्गिष्विव परिकरेऽपि प्राकृतत्वबुद्ध्युत्पादनाय यन्नाट्यमंशावतरणादिना कार्यसृष्टित्वप्रतिपादकमारब्धम्, तल्लोकवत्कार्यदेहावस्थाप्रदर्शनप्राणत्यागचिताग्निप्रवेशसाम्परायिककारणादिना (शोकादिना) चासुराणां स्वपरिकरे लौकिकत्वबुद्धिस्थिरीकरणेनैवं समापितम् । एतदेवात्रापि 'यथेन्द्रजाले'त्यादिना पूर्वं सूचितम् । आद्यन्तमेकरीत्या नाट्य एव हि नटस्य माहात्म्यमन्यथा वैदग्ध्यहानिरित्यतः स्वस्मिंस्तथा प्रदर्शनं, परिकरे चैवं प्रदर्शनमित्यपि सर्वं निबन्धे 'रामस्य सत्यदेहस्तु पूर्वमेव निरूपितः । बलभद्रुक्मिणीमुख्या नाट्यं सर्वमिहोदित'मित्युक्तदिशा सिध्यति । तेनेदमेव हृदि कृत्वा 'यदिदं मनसा वाचे'ति 'त्वय्युद्धवाश्रयति य' इत्यादीनि वाक्यान्युक्तवान् । एतदेव निबन्धेऽपि 'यन्मायिकत्वकथनं पुराणेषु प्रदृश्यते । तदैन्द्रजालपक्षेण मतान्तरमिति ध्रुव'मित्यनेनोक्तम् । एवं स्वभर्तुरभिप्रायं ज्ञात्वैव श्रीमदुद्धवस्यापि सुहृत्सु स्नेहपाशविच्छेदप्रार्थनादयः । 'अथापि तदभिप्रायं जानन्नहमरिन्दमे'तिवाक्यात् । एवं चात्रेदं बोध्यम—प्रभुप्राकट्यसमयेऽवतारिता न सर्व एव लीलास्था, अपि तु कतिचिन्नैव । 'यदुवरपरिषत्स्वैर्दोर्भि'रित्यस्य यदुवरपरिषत्सु ये स्वदोरूपाः सेवका इतिव्याख्यानाद्, भगवद्विचारानुवादे 'गुप्तैः स्वबाहुभि'रिति यदुविशेषणाच्च पूर्वजन्मांशावतरणादिकथनाच्च । अंशावतरणप्रकारश्च त्रेधा जीवानाम् । कश्चिद्वीर्यद्वारा स्वतेजःसंक्रमणरूपः । यथा पाण्डवादिषु । तथा सति तदंशसंभूतशरीरे जीवान्तरप्रवेशः । कश्चित्तु शापादिना स्वदेहमन्यथा कृत्वाऽकृत्वा वाऽन्यवीर्ये वा सदेहाः प्रविश्यावतरन्ति । यथा यमलार्जुनविदुरादयः । कश्चित्तु पूर्वदेहं विहाय लिङ्गेन सहावतरन्ति । यथा श्रीनन्दा-

सुवर्णसूत्रम् ।

दयः । तत्र पूर्वस्मिन् प्रकारे जीवस्य भक्त्यादिना यथाऽधिकारं फलं, देहस्य पातोंऽश-स्यांशिनि प्रत्यापत्तिः । द्वितीये तु 'यावदधिकार'मितिन्यायाच्छापाद्युपात्तदेहस्य त्याग-स्तदाविष्टस्य पूर्वदेहस्य यथा स्थितता मात्रम् । यमलार्जुनादौ, 'विदुरोऽपि परित्यज्य प्रभासे देहमात्मवान् । कृष्णादेशेन तच्चित्तः पितृभिः स्वक्षयं ययाʼवित्यादौ च तथा निर्णयात् । जन्मान्तरमापन्नानां तु भगवत्सेवाकरणेन, भक्त्या वा यथाऽधिकारं भगवति, नित्यलीलायां वा ब्राह्मेण प्रवेशः, स्थूलसूक्ष्मशरीरयोस्त्यागः । भौमाहृतानां तु अष्टावक्रप्रसादशापाभ्यां भगवत्पत्नीत्वचौरहस्तगतत्वादि । तत्र लक्ष्म्यंशस्य लक्ष्म्यां प्रत्या-पत्तौ कार्यदेहस्यान्यथात्वम् । 'गतश्रीषु गृहे'ष्वितिवाक्यात् । तेन न कोऽपि दोषः । श्रुतीनां तु कार्यकोटावप्रवेशाच्छब्दब्रह्मात्मक एव देहः । अग्निकुमाराणामपि प्रसादरूप-श्रीशक्तिरूपो ब्राह्म एव । यासां च कार्यं आसीत् स तूक्त एव । तेनैव न्यायेन गोपी-चन्दननिदानभूतदेहोऽपि व्याख्यातः । एवं महिष्यादीनां तु पूर्वमुक्त एव । एवमेव यथासंभवमितरेषामपि ज्ञेयः । एवं सति यमनृगनलकूबरादिवत्सदेहानामेव कार्यदेहान्तरे प्रवेशकथनेनापि लीलास्थानां नित्यत्वसिद्धौ निष्प्रत्यूहायामपि सत्यां यत्प्रातिभासिकदेहा-ङ्गीकरणं तद्भगवद्वाक्यानुरोधात् । तदेतदुक्तं—'तथेत्यर्थः पर्यवस्यती'त्यन्तेन । एतदेव दृढीकृतम्—अत एवेत्यारभ्य, न तु पूर्वलीलाकर्त्रेत्यन्तेन । न च 'कालात्मना भग-वता शक्रदर्पं जिघांसते'त्यत्रापि कालात्मपदान्नेदं साम्प्रतमिति वाच्यम् । दर्पहृतिमात्रे, तत्करणभूतवाक्योक्तिमात्र एव च तद्रूपप्राकट्येनेतरलीलायां तदभावेनादोषात्, कालस्य भगवच्चेष्टारूपत्वेन गुणीभूततया सत्वेऽप्यदोषाच्चेति । अयं चार्थस्तैत्तिरीयारण्यके भर्तृसू-क्तानुवाके 'भर्ता सन् भ्रियमाणो बिभर्ती'त्यादिना प्रतिपादितः । तथाहि—'भर्ता सन् भ्रियमाणो बिभर्ति, एको देवो बहुधा निविष्टः । यदा भारं तन्द्रयते स भर्तुं निधाय भारं पुनरस्तमेती'ति। भर्ता सन्, 'पुरुषः स परः पार्थ भक्त्या ल-भ्यस्त्वनन्यया । यस्यान्तःस्थानि भूतानी'त्युक्तरीत्या धारकः सन्, 'यो लोकत्रय-माविश्य बिभर्त्यव्यय ईश्वरः' 'यः पृथिव्यां तिष्ठ'न्नित्युक्तरीत्या भ्रियमाण एव बि-भर्ति । तत्र हेतुः—'एको देवो बहुधा निविष्ट' इति । देवः क्रीडिता बहुधा एकैक-स्मिन् शरीरे वैश्वानराग्निपुरुषप्रादेशमात्राङ्गुष्ठमात्रादिरूपैर्नानाप्रकारेण स्थितः क्रीडार्थं धारयति । यदि तत्क्रीडाविरागकाले भूभारभूतं यादवकुलं भर्तुं तन्द्रयते आलस्यं प्रा-प्नोति, तदा भारं पूर्वोक्तं निधाय क्वचित्प्रभासादौ निक्षिप्य पुनरस्तमेति । यथाऽवता-रात्पूर्वमदृश्यमानः स्थितस्तथैवादर्शनं प्राप्नोतीति यथास्थितस्यैवास्तभवनमुक्तम् । एतदेव तृतीयस्कन्धे 'कृष्णद्युमणिनिम्लोच' इत्यनेनोद्धवेनोक्तम् । ननु भर्तृत्वस्य कुतो भारता

१ देहस्य त्यागस्तदाविष्टस्य पूर्वदेहस्य पात इत्यधिकः मु. पु. ।

सुवर्णसूत्रम् ।

येन भर्तुस्तन्द्रेत्याकाङ्क्षायामाहुः—'तमेव मृत्युममृतं तमाहुः तं भर्तारं तमु गोप्तारमाहुः स भृतो भ्रियमाणो बिभर्ति य एनं वेद सत्येन भर्तु'मिति । अत्र पूर्वार्द्धे अविदुषां विदुषां भक्तानां च ज्ञानप्रकारा उक्ताः, क्रमेण तत्कथनप्रयोजनमुत्तरार्द्धेनाह—य एनं भर्तारं सत्येनामायया भर्तुं धारयितुमनुसन्धातुं वेद स भृतः स तेन व्याप्तो भ्रियमाणस्तेनैवाविश्य धार्यमाणस्तं बिभर्ति । तथा च भक्तातिरिक्तान्न बिभर्तीति भक्त्यभावात्तेषां भारता, तेन भर्तुस्तन्द्रेति सत्येनैव भर्तव्यमिति तदुक्तिप्रयोजनमनूदितम्। अथ पूर्वोक्तं पोषयितुं सर्वदा भगवदनुसन्धानाय च तृतीयया भूभारहेतुं वदन् 'समोऽहं सर्वभूते'ष्वित्यनेनोक्तेऽर्थे निदर्शनमाहुः—'सद्यो जातमुत जहात्येष उतो जरन्तं न जहात्येकम् । उतो बहूनेकमहर्जहार अतन्द्रो देवः सदमेव प्रार्थ' इति । एष भर्ता सद्यो जातं, 'भवद्भिरंशैर्यदुषूपजन्यताम् । स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्भुवी'त्यत्र यावद्भूभारहरणमुपजननस्योक्तत्वात्प्रभासीयलीलायामपि भूभारहरणात् तदानीं यो जातः स सद्यो जातो यज्ञोऽन्यो वा तमुत अपि जहाति भूमौ त्यजति । 'यज्ञस्तस्यामभूद्यस्तु मौशलादवशेषितः । स्त्रीबालवृद्धानादाय हतशेषान् धनञ्जय' इत्यादिवाक्यात् । उतो अपि एकं जरन्तमुद्धवं न जहाति न त्यजति । 'स्वधाम नय मामपी'ति तदभिलापात् स्वस्थाने बदर्याश्रमे तं प्रेषयन् ब्रह्मवादादिकं चोपदिशन्न त्यजति, उतो बहून् यादवान्, एकमहः । सप्तम्याः स्वादेशः । एकस्मिन्नहनि जहार भूर्लोकादपहृतवान्, अतोऽयं देवोऽतन्द्रोऽभक्ताभक्तत्यागाग्रागकरणे अनलसः सदमेव सदैव प्रार्थः भक्तैर्भूत्वाऽनुसन्धेय इत्यर्थः । एवं भारहेतुमुक्त्वाऽभारहेतुं तुरीययाऽऽह—'यस्तद्वेद यत आबभूव संधां च यां संदधे ब्रह्मणैषः । रमते तस्मिन्नुत जीर्णे शयाने नैनं जहात्यहस्सु पूर्व्येष्वि'ति । यत आबभूव आविर्बभूव यां च संधां प्रतिज्ञां ब्रह्मणा सह संदधे कृतवान्, यस्तद्वेद जानाति, तस्मिन् पुरुषे जीर्णे जरति शयाने स्वपति रमते तेनैव क्रीडति, एनं जानन्तं भक्तं पूर्व्येष्वहस्सु पूर्वं भवेषु दिनेषु न जहाति न त्यजति । ज्ञातृत्वात्तेन कार्यचिकीर्षया तादृशमुद्धवं न त्यक्तवान् । तथा चेदमभारहेतुत्वनिदर्शनमित्यर्थः । एवं भाराभारहेतुमुक्त्वा भारहरणप्रकारं वदिष्यन् सर्वस्य तदाज्ञाकर्तृत्वसूचनपूर्वकं तिरोधानप्रकारं वदति पञ्चम्या स्तौति च—'त्वामापो अनु सर्वाश्चरन्ति जानतीः । वत्सं पयसा पुनानाः त्वमग्निं हव्यवाहं समिन्त्से त्वं भर्ता मातरिश्वा प्रजाना'मिति । हे भर्तः! त्वदभिप्रायं 'समुद्रः सप्तमेऽह्न्येतां पुरीं च प्लावयिष्यती'तिरूपं, त्वां वा जानतीः जानन्त्यः सर्वाः आपः सामुद्राः अनु लक्ष्यीकृत्य चरन्ति । तदुक्तम्—'द्वारकां हरिणा त्यक्तां समुद्रोऽप्लावयत् क्षणात् । वर्जयित्वा महाराज श्रीमद्भगवदालय'मिति । ज्ञाने दृष्टान्तः—'वत्सं पयसा पु-

सुवर्णसूत्रम् ।

नाना' इति । स्वीयं वत्सं ज्ञात्वा क्षीरेण पोषयन्त्यो गवादय इवेत्यर्थः । निरुक्ते 'अश्वं नत्वा वारवन्त'मित्यत्रोपमावाचकपदाभावेऽप्युपमाख्याख्यानाददोषः । तथा च भगवदिच्छाज्ञानेऽभिमानिप्रेरिता जडा अपि यत्र भगवत्कार्यं कुर्वन्ति तत्र चेतनानां किं वक्तव्यमित्यर्थः । त्वमग्निमावरणरूपं हव्यवाहं सुखरूपं वा समिन्त्से । ञि इन्धी दीप्तौ । संदीपयसि । एतेन तिरोभावप्रकारकथनेन स्वरूपनित्यत्वमुक्तम् । स्तुतिमाह—त्वं प्रजानां भर्ता धारकः पोषकश्च । एतेन 'त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थ'इत्यादिदेवस्तुतेरर्थ उक्तः । किंच मातरिश्वा त्वमेव प्राणो वायुश्च । एतेनात्ममिनत्वबोधनात् 'शुद्धिर्नृणां न तु तथेड्य दुराशयानां विद्याश्रुताध्ययनदानतपःक्रियाभि'रित्यत्रोक्तं भगवद्यशसः श्रद्धया शोधकत्वमुक्तम् । अपहतपाप्मत्वात् । तेन वक्ष्यमाणयुद्धादिकं स्वदिच्छयैव, न तु कर्मविपाकरूपमिति बोधितम् । अथ पद्यगा स्तुवन् भारहरणाय युद्धमाह—'त्वं यज्ञस्त्वमु वे वासि सोमः तव देवाहवमायन्ति सर्वे । त्वमेकोसि बहूननुप्रविष्टः नमस्ते अस्तु सुहवो म एधी'ति । त्वं यज्ञप्रवर्तकत्वेन यज्ञोऽसि । एतदेव देवस्तुतावुक्तम्—'यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ त्रय्या निरुक्तविधिनेशहविर्गृहीत्वे'त्यनेन। 'वासिष्ठो ह सात्यहव्य' इत्युपाख्याने यज्ञ एव यज्ञप्रतिष्ठायाः श्रावणात् । किंच, त्वमुवेव सोमोऽसि उमया संहारशक्त्या सह वर्तमानः सोमस्त्वमेवासि । एतदेव देवस्तुतौ—'नस्योतगाव इव यस्य वशे भवन्ति ब्रह्मादयस्तनुभृतो मिथुरर्द्यमानाः । कालस्य ते प्रकृतिपूरुषयोः परस्ये'त्यनेनोक्तम् । युद्धादिकमाह, हे देव ! सर्वे यदुष्ववतीर्णास्तवाऽऽहवं संग्राममायन्त्यागच्छन्ति । तत्र हेतुः—'त्वमेको बहूंस्ताननुप्रविष्टोऽसी'ति, युद्धं स्वदिच्छयैव, न तु कर्मविपाकेनेत्यर्थः । तदुक्तम्—'जघ्नुर्मुकुन्देन विमोहिता भृश'मिति । एवं लीलामुक्त्वा नमन् प्रार्थयते—ते नमोऽस्तु मे मम सुहव एधि सुष्ठु समीचीनं हवमाह्वानं यस्य तादृशो भव, आह्वातुं सुलभो भवेत्यर्थः । तत्रापि 'नताः स्म ते नाथ पदारविन्द'मिति प्रागेवोक्त्वा तदनन्तरं 'ततः स्वधाम परमं विशस्व यदि मन्यस' इति प्रार्थितम् । एवं केवलं भगवन्तं स्तुत्वा द्वाभ्यां रामकृष्णौ स्तौति, असुरवधाय द्विरूपेणावतीर्णत्वात् । तत्र सप्तमी—'नमो वामस्तु शृणुतं हवं मे प्राणापानावजिरं संचरन्तौ । ह्वयामि वां ब्रह्मणा तूर्तमेतम् यो मां द्वेष्टि तं जहितं युवाना' इति । हे प्राणापानौ देवौ । वां युवाभ्यां नमोऽस्तु, मे मम हवं ह्वानं शृणुतम् । अजिरं रणाजिरं संचरन्तौ विचरन्तौ वां युवां, ब्रह्मणा मन्त्रेण ह्वयामि, तूर्तं शीघ्रं एतं मद्गृहमागच्छतम् । प्रयोजनमाह—युवाना नित्यतरुणौ युवां यः शत्रुर्मां द्वेष्टि तं जहितं विनाशयतम् । तथा च युवां विना न मे शत्रुनिवृत्तिरतो यथाऽऽज्ञाज्ञापनेन भूभारो

सुवर्णसूत्रम् ।

भूमिष्ठभक्तशत्रवश्च हतास्तथाऽसद्रूप आगता तत्राप्यसद्वाधकान् निवर्तयतमित्यर्थः । अथाष्टमी—'प्राणापानौ संविदानौ जहितम् अमुष्यासुना मा संगसाथाम् । तं मे देवा ब्रह्मणा संविदानौ वधाय दत्तं तमहं हनामी'ति । हे प्राणापानौ देवौ ! संविदानावैकमत्यं प्राप्तौ जहितमसच्छत्रुं परित्यजतम् । अमुष्य गच्छत्रोरसुना प्राणेन मा संगसाथाम् संगतौ माभूताम् । मे ब्रह्मणा मदीयविज्ञापनमन्त्रेण संविदानावैकमत्यं प्राप्तौ युवां तं शत्रुं मह्यं वधाय दत्तं प्रयच्छतम् । तं शत्रुमहं हनामि नाशयामि । तथा च हनने श्रम इति मदधीनतां तस्य सम्पादयतम् । पश्चान्मयैव स निवर्तनीय इत्यर्थः । असुराणामपि भगवद्वीर्यरूपत्वात्तद्धनने भगवतः कोपो भवेदिति तदभावाय तस्य द्वेष्टृत्वकथनपूर्वकं साम्प्रतलीलायां तदनुकूलताज्ञापनपूर्वकमेवं प्रार्थनम् । एवं स्तुत्वा साम्प्रतिकलीलायां भारभूतस्य स्वरूपं नवम्याह—असज्जजान सत आबभूव यं यं जजान स उ गोपो अस्य । यदा भारं तन्द्रयते स भर्तुम् परास्य भारं पुनरस्तमेती'ति । सतो यादवकुलाद्भगवतो वा असन्मायिकं जजान उत्पन्नम् । तत्र गमकम्—आबभूव ईषद्बभूव नश्वरं बभूवेति । 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वा'दिति सन्ध्याधिकरणसिद्धान्तसूत्रे तदुक्तम् । अत्रापि 'प्रत्यनीकं मन्यमाना बलभद्रं च मोहिता' इति कथनात् तद्गुप्तादिषु यत्प्रत्यभात्तत्तथैव । अत्रैवं बोध्यम्—भगवान् यदा तिरोधित्सति, तदा मायां विस्तारयति । तस्याश्च षडाश्रया निषिद्धदेशकालद्रव्यकर्तृमन्त्रक्रियाः । तेषु प्रकृते शैरेयद्रव्यदुष्टक्रियाभ्यामाश्रयाभ्यां तामुत्थाप्यानित्यलीलास्थानामिन्द्रियबुद्धिषु तया व्यामोह उत्पादिते तत्सहकृता विषयतारूपास्ते ते तं तं प्रत्युत्पादिताः । ततो व्यामुग्धनित्यलीलामध्यपातिशस्त्रादिद्वारा विषयतारूपास्ते नाशिताः । तेनेतरेषां लीलास्थेष्वेव नष्टबुद्धिरुत्पादितेति । तदुक्तम्—'यं यं जजान स उ गोपो अस्ये'ति । गौर्वाण्यात्मिका तद्रक्षक एव स, यं यमुत्पादितवान् तस्मिन् पूर्वसारूप्याद्वधिषयिणी हत इति बुद्धिरिति तत्स्वरूपमुक्तम् । उक्तां लीलामुपसंहरति 'यदा भार'मित्यादि । अर्थस्तु व्याख्यात एव । लीलामुपसंहृत्य मध्ये प्राणरूपत्वं यदुक्तं तत्रोपपत्तिं दशम्याह—'तद्वै त्वं प्राणो अभवः महान् भोगः प्रजापतेः । भुजः करिष्यमाणः यद्देवान् प्राणयो न वे'ति । यद्यदा त्वं भुजः भोगान् करिष्यमाणः सन् नव देवान् नवगोलकवर्तिदेवान् प्राणयः प्रकर्षेण व्याप्तवानसि, तत्तेन देव! त्वं प्राणः प्राणनामा अभवः । कीदृशो भोगो यदर्थमेतावत्करणं तत्राह—प्रजापतेः उपान्त्यानन्दिनः सकाशान्महानधिको, ब्रह्मानन्द इत्यर्थः । तथा च तदर्थमेतावत्करणम् । प्राणत्वेनापानतात्युक्तैवोपलक्षणतयेति शुभम् ॥

संहर्तुमैच्छते'त्येकेन श्रीशुकैरुक्तम् । तेनास्य कुलस्य मायिकत्वं सिद्ध्यति । कृत्यसिद्धिर्यतस्तथैव भवति । भुवीति पूर्वमुक्तमेवेति तद्भिन्नमेव धाम वाच्यम् । तदुक्तमस्माभिः । अग्रेऽपि कालात्मना निसृष्टा मुनय इत्युक्तं, न तु पूर्वलीलाकर्त्रेति ॥

श्रुत्युक्तवैपरीत्येन यन्मोहाय हरिः स्वयम् । प्रदर्शयति तन्मोहगमनाय न मद्वचः ॥

सुवर्णसूत्रम् ।

ननु यद्येवं तदा सर्वेषामेवायमर्थः कुतो न भातीत्यत आहुः—श्रुत्युक्तेत्यादिद्वयम् ।

हरितोषिणी ।

द्व्युरिति । मायिकत्वं सिद्ध्यतीति । धामाऽऽस्थायेति क्त्वाप्रत्ययस्य भुक्त्वा व्रजतीतिवदुत्तरकालीनक्त्वार्थकतया तदनन्तरं संहर्तुमैच्छदित्युक्तया सिद्ध्यतीत्यर्थः । तथा च भूतावेशन्यायेन द्वारकास्थयादवकुल आविष्टं प्रभासीययादवकुलं भिन्नमिति 'यथा द्वया ह प्राजापत्या' इत्यादावेकगोलके देवासुरभेदेन भिन्नानीन्द्रियाणि, तथैवात्रापि बोध्यम् । ननु 'धामास्थाये'त्यत्र धामशब्देन भूरूपं धाम कुतो न वक्तव्यमित्यत आहुः—कृत्यसिद्धिरिति । यादवकुलभेदविचारविस्तरस्तु सुवर्णसूत्रादवगन्तव्यः । अस्मिन् विषये स्वयं श्रीमत्प्रभुगोस्वामिभिरुच्यते—तदुक्तमिति । अग्रेऽपि कालात्मनेति । एकादशे—'कर्माणि पुण्यनिवहानी'ति दशमं पद्यं प्रथमाध्यायेऽस्ति तत्रोक्तमित्यर्थः । कालात्मना निसृष्टाः, पूर्वलीलाकर्त्रा नेत्यनेन पिण्डारके मुनीनां प्रेपणं कालात्मना भगवता कृतं, न तु रासादिलीलाकर्त्रेत्युक्तम् । तेन तत्कुलं भिन्नमित्यर्थः ॥

नन्वेतादृशरीत्या कुलं भिन्नमित्ययमर्थः सर्वैः कुतो न ज्ञायत इत्याहुः—श्रुत्युक्तेति ।

गङ्गाधरभट्टी ।

कालात्मनेति । 'वीर्याणि तस्याखिलदेहभाजामन्तर्बहिः पूरुषकालरूपैः । प्रयच्छतो मृत्युमुतामृतं च मायामनुष्यस्य वदस्व विद्वन्नि'ति श्लोके पूरुषरूपेण मुक्तिं, *कालरूपेण संसारं प्रयच्छतीति निरूपितम् ॥

---

टिप्पणी ।

* कालरूपेणेति । भगवतः कालरूपं हि संसारसाधकम् । अतस्तेन यत्करोति तत्सर्वं संसारोपयुक्तमेव । इदं कुलसंहाररूपं नाट्यमपि तेनैव कृतमिति मोहोत्पादनेनासुराणां संसारसिद्धावुपयुङ्क्ते । अत इदं मोहैकफलकं मायिकं मिथ्यैवेत्याशयः । 'कालात्मना निसृष्टा मुनय' इति मूलोक्तार्थप्रदर्शनाय तु नेदमुपयुङ्क्ते, किन्तु तोषिणीस्थं 'कर्माणि पुण्यनिवहानी'ति ॥

क्षिपाम्यजस्रमित्युक्तेर्यतस्तन्मोहनित्यता । अतोऽनङ्गीकृतिस्तेषां युक्ता तामसिनां नृणाम् ॥

तत्सङ्गादन्यथाभूतहृदयाः सात्त्विका अपि । मा भवन्त्वित्ययं यत्नस्तेन तुष्टोऽस्तु मे हरिः ॥

काञ्चनीकरणे शक्तो मणिर्धातुगणस्य यः । तस्याश्मनां तथाभावाकरणेऽपि न हि क्षतिः ॥

(५७) नन्वस्तु प्रपञ्चातीतत्वेन लीलानां सत्यत्वं प्रमाणसिद्धत्वान्न तु

सुवर्णसूत्रम् ।

तर्हि प्रयासोऽयं किमर्थं इत्यत आहुः—तत्सङ्गादित्यादि ।

एतस्य पाक्षिकसाधनत्वं निराकुर्वन्ति—काञ्चनीत्यादि ।

(५७) अत्र जगन्मिथ्यावादी पुनराशङ्कते—नन्वित्यादि । प्रमाणसिद्धत्वादिति । प्रमाणैः पूर्वोक्तश्रुतिस्मृतिभिः प्रकाशाश्रयन्यायेन ब्रह्मणः सकाशाद्भेदेऽप्यभिन्नतया ब्रह्मा-

हरितोषिणी ।

द्वयेन । श्रुत्युक्तेतिश्लोकद्वयार्थस्तु—मोहायेति चतुर्थी द्वितीयार्थे । तथा च हरिः श्रुत्युक्तविपरीतार्थबोधनेन यन्मोहं प्रदर्शयति तन्मोहगमनाय मद्वचो न । कुत इत्यत आहुः—क्षिपामीति । अहमजस्रं तान्मोहे क्षिपामीति हरिणोक्तम् । अतस्तेषां मोहस्य नित्यत्वाऽस्तीति तस्य नाशाभावात् तन्मोहगमनाय मदीयं वचनं न भवतीत्यर्थः ॥

यदि मोहस्य नित्यता चेत्तद्गमनार्थं प्रयासः किमर्थं क्रियत इत्यत आहुः—तत्सङ्गादिति ॥

इदं च सात्त्विकानां साधनं प्रदर्शितं, न तु सर्वेषामिति क्षतिरित्यत आहुः—काञ्चनीति । तथा च ममापि न क्षतिरिति भावः ॥

(५७) सिंहावलोकनन्यायेन मिथ्यावादी शङ्कते—नन्विति । प्रमाणसिद्धत्वादिति ।

गङ्गाधरभट्टी ।

तामसिनां नृणामिति । 'नृ च'ेतिदीर्घविकल्पे छन्दसीति नानुवर्तनीयम् । 'नृणामेको गम्य' इत्याद्यनेकलौकिकप्रयोगादिति समर्थनीयम् । एवं 'मा भवन्त्वि'ति समर्थनीयम् । निरनुबन्धमानिपातेन 'माङि लुङि'त्यस्याप्रवृत्तेः । समर्थसूत्रे महाभाष्ये गच्छतु मा वृकेभ्यो भयं देवदत्तायज्ञदत्तस्येति प्रत्युदाहरणात् । नहि क्षतिरिति । तद्वदसुराणां ज्ञानानुदयेऽपि न क्षतिरिति भावः ॥

सर्गादिलीलामध्यपातितया प्रपञ्चोऽपि नित्य इति।

प्रपञ्चस्यापि, प्रमाणैस्तथासिद्धत्वादिति चेत्, न; तस्यापि सर्गादिलीलामध्यपातित्वेन श्रीभागवतादिषु निरूपणात् । जगदप्रतीतिप्रसङ्गादित्यादिनिरूपणेनैव प्रपञ्चसत्यत्वस्यापि निरूपितत्वात्, पुनर्लिखनेनालम् । तत्त्वसूत्रभाष्ये श्रीभा-

सुवर्णसूत्रम् ।

त्मकत्वेनैव निर्णीतत्वात् । तथासिद्धत्वादिति । 'नश्वरं गृह्यमाणं चे'त्यत्र नश्वरपदात्, 'ईक्षेत विभ्रम'मित्यत्र विभ्रमपदात्, तत्सिद्धैरनुमानैश्च सिद्धे नश्वरत्वमायिकत्वे तस्मिन् प्रपञ्चे दर्शनेन मायिकत्वस्य निर्णीतत्वात् । तथा च प्रत्यक्षानुमानशब्दैः प्रपञ्चसत्यत्वं बाध्यत इत्यर्थः । समादधते—नेत्यादि । तथा च सिद्धे लीलायास्तत्सम्बन्धिनां च भिन्नाभिन्नत्वे प्रपञ्चस्यापि सर्गादिलीलासम्बन्धित्वेन तथात्वे तथात्वेन तस्य सत्यत्वमपि निर्बाधमेवेत्यर्थः । एतेन पूर्वोक्तभेदाभेदप्रतिज्ञा पूरिता ज्ञेया । तथा च सिद्धे ब्रह्मात्मकत्वे भावविकारप्रतीतिरप्याविर्भावतिरोभावाभ्यामेव समर्थिता भवति । तथाहि—'जायत' इति प्रतीतिः शुद्धप्रादुर्भावविषया । धात्वर्थस्यैव तथात्वात् । पूर्वोक्ताभ्यः

हरितोषिणी ।

प्रमाणैः श्रुतिस्मृतिभिः पूर्वं सिद्धत्वादित्यर्थः । प्रमाणैरिति । 'नश्वरं गृह्यमाणं चे'त्यादिश्रुतिस्मृतिभिः । अथवा शब्दानुमानप्रत्यक्षप्रमाणैरित्यर्थः । तथा असत्यत्वेन मायिकत्वस्य समाधानमाहुः—तस्यापीति । प्रपञ्चस्यापीत्यर्थः । निरूपणादिति । 'विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया । यथेदानीं तथा चाग्रे पश्चादप्येतदीदृश'मिति श्रीभागवते तृतीयस्कन्धे । अथ चादिपदेन 'तदेतदक्षयं नित्यं जगन्मुनिवरा-

गङ्गाधरभट्टी ।

(५७) तथासिद्धत्वादिति । प्रत्यक्षेण शुक्तौ रजतं बाध्यते, तद्दृष्टान्तेन ब्रह्मणि जगद्बाध्यते अनुमानात् । शुक्तिरजतसदृशो घटादिरित्युपमानमपि । 'त इमे सत्याः कामा अनृतापिधाना' इत्यादिशब्दोऽपि । नेति । प्रत्यक्षं तावज्जगत्सत्त्वं गृह्णाति । 'वैधर्म्याच्च न स्वप्नादिव'दिति सूत्राच्च स्वप्नादयो मायिका, न तु जागरोऽपि । एवं च घटादयः सन्तः; सर्वैर्घटत्वेन घटग्रहणात् पटवत्, वैधर्म्ये रज्जुसर्पवत् । नहि रज्जुः सर्वैः सर्पत्वेनैव गृह्यते । एतेनोपमानमपि प्रागुक्तं प्रत्युक्तम् । शब्दः 'त इमे सत्याः कामा' इति सत्यत्वमेवान्वाचष्टे । अनृतेन माययाऽपिहिता इति मायापिहितधियां न सत्यत्वमवभासते । अधिकमन्यत्र बहु लिखितम् । पुनर्लिखनेति पाठे लेखनं लिखः । घञर्थे कः । ततः 'तत्करोती'ति णिजन्ताद्भावे ल्युट् । अन्यथा कुटादिबहिर्भावाल्लेखनमिति गुणः स्यात् । किञ्चेत्युक्ते श्रुतिपुराणवाक्ये माध्वभाष्यस्थे ।

गवतविवरणादिष्वप्ययमर्थो निरूपितः पितृचरणैरिति नाधिकमत्र निरूप्यते ॥

किञ्च महोपनिषदि पठ्यते—'एष ह्येव शून्य एष ह्येव तुच्छ एष

सुवर्णसूत्रम्।

सत्कार्यवादयुक्तिभ्यः, 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्। आविर्भावतिरोभावजन्मनाशविकल्पव'दिति वैष्णववाक्यात्। 'विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया। यथेदानीं तथा चाग्रे पश्चादप्येतदीदृश'मिति तृतीयस्कन्धवाक्याच्च। एवमस्तीतिप्रतीतिरपि प्रादुर्भावप्रयुक्तेति विषयाणां ब्रह्मात्मकत्वेन न विवादार्हा। विपरिणमते, वर्द्धते क्षीयत इति प्रतीतित्रयी तु पूर्वरूपतिरोभावरूपान्तराविर्भावाविवेकजन्यत्वाद्विविक्ततद्द्वयविषया, वृद्धिक्षयविपरिणामेषु विचारितेषु तथैव सिद्धेः। नश्यतीति केवलतिरोभावविषया; धात्वर्थस्यादर्शनात्मकत्वात्, उक्तप्रमाणेभ्यश्च। तथा सत्याविर्भावतिरोभावयुक्ते ब्रह्मरूप एव प्रपञ्चे भगवतो माययाऽविद्यमानं यत्प्रत्याय्यते, विद्यमानं न प्रत्याय्यत इति जीवस्य भ्रमः संसारश्च भवति। अविद्यमानं यत्प्रत्याय्यते तदन्तरासृष्टिरूपत्वान्मायामनोमयम्। तेनानुमानादपि प्रपञ्चसत्यत्वं सिद्ध्यति। तत्रायं प्रयोगः—व्यावहारिकः प्रपञ्चः स्वापेक्षयोत्कृष्टसत्ताकप्रपञ्चपूर्वकः; मायिकत्वेनाभिमतत्वान्मायिकत्वाद्वा, स्वाप्नादिप्रपञ्चवदिति। इदं यथा तथा सृष्टिभेदवादे प्रपञ्चितमस्माभिरिति नात्र वितन्यते ॥

नन्वस्तु प्रपञ्चस्य भिन्नाभिन्नत्वं, तथापि नृसिंहोत्तरतापनीयपञ्चमखण्डे 'स्वप्रकाशमानन्दघनं शून्यमभव'दिति, 'परमं ब्रह्मात्मप्रकाशं शून्यं जानत' इति च श्रवणाद्, गौडाचार्यकृते तद्विवरणे च विशेषशून्यमिति व्याख्यानाद् ब्रह्म निर्विशेषमेव प्रतिपत्तव्यम्। तथा सति लीलानां कथं सत्यत्वम्। किञ्च तत्रैव नवमखण्डे 'न ह्यस्ति द्वैतसिद्धिः आत्मैव सिद्धोऽद्वितीय' इत्युपक्रम्य 'मायया ह्यन्य'दित्येवमुक्त्वा 'माया च तमोरूपानुभूते'रिति तत्स्वरूपं चोक्त्वा 'तदेतज्जडं मोहात्मकमनन्तं तुच्छमिदं रूपमस्य अस्य व्यञ्जिके'त्याद्युक्तम्। तेन जगतोऽपि तुच्छत्वं मायिकत्वमिति कथं ब्रह्मात्मकत्वं तत्र निर्णेतुं शक्यमित्याशङ्कायामाहुः—किञ्चेत्यादि। एते श्रुतिपुराणवाक्ये मध्व-

हरितोषिणी।

खिलम्। आविर्भावतिरोभावजन्मनाशविकल्पव'दिति विष्णुपुराणेऽपि निरूपणादित्यर्थः। तथा चाविर्भावतिरोभावावेव जगतो, न तूत्पत्तिविनाशावित्ययं सिद्धान्त इति भावः। प्रपञ्चस्य सत्यत्वमेव निरूपितमणुभाष्ये सुबोधिन्यां श्रीमत्प्रभुचरणैरित्याहुः—जगदित्यादिना, निरूप्यत इत्यन्तेन ॥

ननु जगतो नित्यत्वं, ब्रह्मात्मकत्वं, कथं वक्तव्यं, तुच्छत्वान्मायिकत्वात्तस्येत्यत आहुः-महोपनिषदीति। एष ह्येवेति। अन्यसुखास्पीकरणादेवास्य ब्रह्मणः शून्यत्वं, न तु

ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्चे'ति। महाकौर्म्येऽपि 'शमूनं कुरुते विष्णुरदृश्यः सन् परः स्वयम् । तस्माच्छून्यमिति प्रोक्त स्तोदनात्तुच्छमुच्यते । नैष भावयितुं योग्यः केनचित्पुरुषोत्तमः । अ-तोऽभावं वदन्त्येनं नाश्यत्वान्नाश इत्यपि । सर्वेषां तदधीनत्वात्तत्तच्छ-ब्दाभिधेयता । अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभि'रिति ॥

सुवर्णसूत्रम् ।

भाष्ये प्रथमाध्यायसमाप्तावुपन्यस्ते । तदर्थश्च जयतीर्थेन टीकायां व्याख्यातः—दुर्जना-नामव्यक्तत्वादिना शमूनं कुरुत इत्यादियोगेन चेश्वरे निषेधमुखवेद्यवस्तुवाचिशब्दप्रवृत्ते-रुपपत्तिः । तत्र शमूनं कुरुते स्वसुखादन्यसुखमल्पं करोति । तोदनात्तुद्, अदृश्यश्छः, छन्नत्वात् । भावयितुमुत्पादयितुम् । *नाश्यत्वादभक्ष्यत्वादिति । एवं सति तापनीय आनन्दघनपदोत्तरं शून्यपदोक्त्याऽन्यसुखाल्पीकर्तृत्वमेवार्थो, न तु यावद्विशेषशून्यत्वम् । तथा सति लीलानां नित्यत्वं निर्बाधमेव; लीलाभिरेवान्यसुखाल्पीकरणात् । तथा परमा-त्मैव मायया छन्नः सँस्तुदतीति तत्प्रयुक्तं तुच्छत्वं, न तु मायाकृतम् । तृतीयया करण-तयैवाभिप्रेतत्वात् । अत एव व्यञ्जिकात्वमेव भावितं, न तु जनिकात्वम् । तथा 'अन्य-दिवे'त्युक्तम्, न त्वन्यदेवेति । एवं सत्यभावप्रयोजकतया ब्रह्मण्यभावरूपताया अपि सत्वात् प्रपञ्चस्य भावाभावरूपत्वं न ब्रह्मात्मकत्वबाधकमित्यर्थः ॥

हरितोषिणी ।

यावद्विशेषशून्यत्वम् । एवं मायया छन्नः सँस्तुदति, अत एव तुच्छो, न तु मायाधीन-त्वेन तुच्छः । एष ह्येवाभाव इति । 'नेति ने'तीति श्रुत्याऽभावप्रयोजकत्वेनाभावरूप-त्वमित्यर्थः। 'एष ह्येवाव्यक्त' इत्यादिकं स्पष्टम्। पुराणवाक्यान्याहुः—महाकौर्म्य इति। शमूनमिति । स्वसुखादन्यसुखमल्पं करोतीत्यर्थः । छन्नत्वाददृश्यः । नाश्यत्वादिति ।

गङ्गाधरभट्टी ।

शमूनमिति । जगतीति शेषः । नाश्यत्वादिति । णश अदर्शने । †अदृश्यत्वादि-त्यर्थः । एवं च तापनीय आनन्दघनपदोत्तरं शून्यपदस्यायमेवार्थः । लौकिकधर्मशून्य-त्वाद्वा, सर्वरूपत्वाद्वा, शून्यरूपत्वम् । एवं चाभावरूपत्वमपि व्याख्येयम् ॥

---

टिप्पणी ।

* नाश्यत्वादभक्ष्यत्वादिति । अभातेर्यम् । नशब्देन समासो, न नञा ।

† अदृश्यत्वादित्यर्थ इति । लाक्षणिकोऽर्थः ॥

तेन ब्रह्मणो भावरूपत्वेन प्रपञ्चस्य भावाभावरूपत्वेन कथं ब्रह्मात्मकता वक्तुं शक्येत्यपि चोद्यं निरस्तम् ॥

येषामप्यसत्त्वेन जगदभिमतं, तेषामपि जगन्मध्यपातिभगवन्मूर्तितद्भजनाद्यसहिष्णुतयैव । तेषां तथात्वं तु कलौ तथा भगवदिच्छयैवेत्युक्तम् ॥

तस्माद्स्माभिरेवोक्तपद्धत्या श्रुतिसिद्धया । ज्ञात्वा ब्रह्मस्वरूपं तत्प्राप्त्यै तद्भजताखिलाः ॥

येषां लौकिकमेव मानमधिकं वेदादितोऽलौकिका,-
स्तत्पादानुगतस्तदर्थ इति च प्रच्छन्नबौद्धास्तु ते ।

सुवर्णसूत्रम् ।

एवं प्रमाणपुरःसरं शृण्वन्तोऽपि न मोहं जहति तेषामाशयमाहुः—येषामित्यादि । तथात्वमिति । असहिष्णुत्वम् ॥

सिद्धमाहुः—तस्मादित्यादि । पूर्वोक्तासहिष्णूनां स्वरूपमाहुः—येषां लौकिकेति । इति चेतिपदमावृत्याऽत्रापि योज्यम् । प्रच्छन्नबौद्धा इति । प्रच्छन्ना असुराः । द्वितीयस्कन्धे 'देवद्विषां निगमवर्त्मनि धिष्ठितानां पूर्भिर्मयेन विहिताभिरदृश्यतूर्भिः । लोकान् घ्नतां मतिविमोहमतिप्रलोभं वेषं विधाय बहु भाष्यत औपधर्म्य'मित्यत्रासुराणामेवार्थे भगवता बौद्धानां प्रस्थानं कृतमिति कथनात् । दृष्टसृष्टिवादस्य तन्मत एव सत्त्वात्तदुपगच्छतां तथात्वमेवेत्यर्थः । तथा चोक्तं वैष्णवे कलिनिरूपणे—'विप्ररु-

हरितोषिणी ।

अभक्ष्यत्वादित्यर्थः । अन्यत्स्पष्टम् । अत्र किञ्चिदाशङ्का निरस्यन्ति—एतेनेति । निरस्तमिति । तथा च भावरूपे ब्रह्मण्यभावरूपत्वस्यापि सत्त्वेन भावरूपस्य जगतो ब्रह्मात्मकत्वं सिद्ध्यतीत्यर्थः ॥

जगत आभासत्वं यैर्मनसि दृढीकृतं तैर्भगवद्भजनं नैव क्रियत इत्याहुः—येषामपीति । तेषामसहिष्णुत्वे कारणमाहुः—तेषामिति । उक्तमिति । कलिधर्मनिरूपण उक्तमित्यर्थः ॥

एतावता प्रबन्धेन यत्सिद्धं तदाहुः—तस्मादिति । ब्रह्मस्वरूपज्ञानेऽस्मदुक्तपद्धतिरेव समर्थेति भावः ॥

मूढानां स्वरूपमाहुः—येषामिति । तदर्थ इति । पूर्वोक्ताधिकपदावृत्त्या योज्यम् ।

गङ्गाधरभट्टी ।

तत्पादानुगत इति । तदनुसारी तदर्थ इति च येषां मतमित्यर्थः । येषां तु केषाञ्चिद्विदुषां गोपीशसंसेविनाम् ।

येषां तद्विपरीततैव विदुषां केषाञ्चिदन्तर्गता
तेषामेव मुदेऽस्तु मत्कृतिरियं गोपीशसंसेविनाम् ॥
वरीवर्त्ति श्रद्धा श्रुतिषु यदि वा व्यासवचने
तदा विद्वांसोऽस्मद्विरचितमिदं मण्डनवरम् ।
यथोक्तं कण्ठे वा शुकवदथवाऽर्थं च हृदये
मुदा कृत्वाऽऽयत्तं धुनुत रिपुपक्षाभिधतमः ॥
यदागतं हृदि श्रीमद्गोपीशरतिलक्षणम् ।
शोभां तनोति तदिदं मण्डनं श्रीहरेः प्रियम् ॥
अखण्डवरपण्डितप्रसृतचण्डपाखण्डवा-
रिवखण्डनसुचण्डिमा धरणिमण्डलाखण्डलः ।

सुवर्णसूत्रम् ।

पाणि रक्षांसि राजानः कर्णवेदिन' इति । पाद्मोत्तरखण्डे च शिववाक्ये 'मायावा-
दमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते । मयैव कथितं देवि! कलौ ब्राह्मणरूपिणे'ति ।
ग्रन्थस्यावान्तरमुख्यफले आहुः द्वाभ्यां क्रमेण—वरीवर्तीत्यादि । उक्तफलद्वयं श्रीमदा-
चार्यचरणस्वरूपदार्ढ्येनैव भवतीति बोधयितुं प्रार्थनपूर्वकं नमन्ति द्वाभ्यां अखण्डेत्यादि-

हरितोषिणी ।

पण्डितानां स्वरूपमाहुः—येषामिति । श्रीकृष्णसंसेविनां सन्तोषार्थं मत्कृतिरिति भावः ॥
अनेन ग्रन्थेन परमतखण्डनं सुखेन भविष्यतीत्याहुः—वरीवर्तीति ॥
अस्य ग्रन्थस्यान्वर्थसंज्ञकस्य धारणे फलमाहुः—यदागतमिति ॥
श्रीमदाचार्यमहाप्रभुचरणप्रार्थनां कुर्वन्ति—अखण्डेति । पितुः स पादनखमण्डलो

गङ्गाधरभट्टी ।

तद्विपरीतैव नाम वेदाद्यलौकिकमेव लौकिकान्मानादधिकफलं, तदनुसार्येव लौकिकं मानं प्रमाणमिति मतमित्यर्थः । वरीवर्त्तीति । यङ्लुगन्तं लोकेऽपि साधु इत्यन्यत्र व्यवस्थापितम् । व्यासवचने इति । व्याससूत्रादौ । शुकवत्कण्ठे कृत्वा, अथवा एतदर्थं हृदये कृत्वा मायारूपं तमो धुनुत निवारयत । अयमर्थः—शुकः पक्षी अर्थमजानन्नपि कण्ठे धारयति, श्रीशुकदेवश्चान्तःकरणाध्यासरहितोऽपि वादविवादविरहितोऽपि शब्दमात्रेण शास्त्रार्थमाचष्टे, तद्वदेन केनापि वैष्णवेन परपक्षं प्रतिजिहीर्षुणा शब्दमात्रेणाप्युक्ते मायावादः प्रशाम्यति, स्वबोधमात्राकाङ्क्षायां स्वैतदर्थं तु हृदये कुरुत । मण्डनमपि रत्नजटितं कण्ठे हृदये वा धार्यमाणं तमो दूरीकरोतीति । यदागतमिति । मण्डनमित्यर्थः । अखण्डेति । अखण्डेषु समग्रेषु शास्त्रेषु वरा ये पण्डिताः । अखण्डा न खण्डयितुं

नमन्नृपतिमण्डलीमुकुटताण्डवैर्मण्डितः
स पादनखमण्डलः पितुरिहाऽस्तु मे मण्डनम् ॥
पुनरपि नमामि गोपीपतिरतिमार्गप्रवर्तकाचार्यान् ।
श्रीवल्लभाभिधानान् पितृचरणान् वाङ्मनःकायैः ॥
एतेनास्मत्कुलपतिः श्रीगोपीजनवल्लभः ।
प्रीतोऽस्त्वस्मासु तेनैव पूर्णता किमिहापरैः ॥

इति श्रीमन्निजकटाक्षपाततरणिविघटितमायावादिप्रभृतिवादितमः-

सुवर्णसूत्रम् ।

श्याम् । मण्डलपदं त्रिलिङ्गम् । 'बिम्बोऽस्त्री मण्डलं त्रिषि'त्यमरः ॥

ग्रन्थं समाप्यैतं भगवते समर्पयन्ति—एतेनेति । उपायनभूतेन ग्रन्थेनेत्यर्थः ॥

हरितोषिणी ।

मे मण्डनमिहास्त्वित्यन्वयः । कथंभूतो मण्डलः, अखण्डेति । अखण्डा या वरपण्डित-प्रसृतचण्डपाखण्डवाक् तस्या विखण्डने या *सुचण्डिमा सैव धरणिस्तस्या मण्डल आखण्डलः, पुनः किंभूतः—नमन्नृपतीति । स्पष्टम् ॥

ग्रन्थान्ते श्रीमदाचार्यचरणनत्यात्मकं मङ्गलमाचरन्ति—पुनरपीति ॥

ग्रन्थं भगवदर्पणं कुर्वन्ति—एतेनेति ॥

श्रीविद्वन्मण्डननामायं संदर्भः प्रच्छन्नार्थ इति मदीयात्र कृतिरिति सुधीभिर्निपुणतरं विभावनीयमित्यलम् ॥

गङ्गाधरभट्टी ।

शक्या या पाखण्डवागित्यर्थो वा । धरणिमण्डलाखण्डल इत्यस्यार्थः—अन्ये विप्रा धरणिसुरा, अयं तु भूसुरेन्द्र इति । ताण्डवैर्नृत्यैः । वाङ्मनःकायैरिति । त्रिपदद्वन्द्वः । वाङ्मनसेति निपातनं तु द्विपदद्वन्द्व एवेति भावः । एतेनेति । उपायनेनेत्यर्थः ।

श्रीमदाचार्यतत्सूनुपादपद्मानुसारिणा ।
गङ्गाधरेण रचिता श्रीगङ्गाधरबोधिनी ॥

इति श्रीमदाचार्यान्वयदासानुदासचरणरजसा प्राप्ततदाशयज्ञानस्य गौड्डोपाह्वगङ्गाधर-भट्टस्य कृतिः श्रीमद्विद्वन्मण्डनविवृतिः सम्पूर्णा ॥

---

टिप्पणी ।

* सुचण्डिमा सैव धरणिरिति । शोभनश्चण्डिमा यस्यां सा सुचण्डिमा परपक्षखण्डनप्रणाली । 'डाबुभाभ्या'मिति वैकल्पिको डाप् । अनभिमते बहुव्रीहौ तु 'अर्श आद्यच्' इत्याश्रयणीयम् । इदंद्वयोरभाव आवन्तत्वं दुर्लभम् ॥

यदीयदययोदीये मदीयहृदयोदरे । तदीयपदयोरेतद्रचितं विनिवेद्यते ॥

पुञ्ज–विकासितश्रीगोकुलाधीशरतिसरसिजश्रीगोकुलनाथचरणैकतान-गोस्वामिश्रीविट्ठलनाथदीक्षितविरचितं विद्वन्मण्डनं सम्पूर्णम् ॥

सुवर्णसूत्रम् ।

स्निग्धोज्ज्वलं रसघनं हृदयं स्वकीयं, वक्तुं निजेषु नवनीतमयं दधानः ।
प्रेङ्खश्रितश्च तरले जनमानसेऽपि हासे दयालुरिति तस्य गुणं व्यनक्ति ॥
यस्तं नमामि नवनीरधरामिरामं श्रीबालकृष्णमखिलश्रुतिसारमीशम् ।
मादृक्प्रपन्नजनकर्ममयोरुपाशविच्छेदचञ्चलमहासिसुनामधेयम् ॥
नमामि श्रीमदाचार्याननल्पकरुणायुतान् । संसारकूपपतितोद्धारप्रकटितस्वकान् ॥
नमः श्रीविट्ठलेशाय संसारार्णवसेतवे । श्रीमदग्निकुमाराय भजनानन्दहेतवे ॥

हरितोषिणी ।

उत्क्षिप्योत्क्षिप्य वामं मृदुविमलकरं दक्षिणं सव्यकट्यां,
संस्थाप्य स्वीयलीलाललितनटवरो नृत्यति प्रेमनाट्ये ।
भक्तानाहूय लीलाविविधरसभरात्तन्मनांसि प्रमुष्य,
श्रीनाथस्तत्पदाब्जे विलुलितवसनो नौमि वेदार्थरूपे ॥
योऽसौ लीलारसाब्धौ परमरसमयः क्रीडते नित्यविश्वे
मत्वेतः प्रेर्य कृष्णः प्रकटितमकरोद्दीपिकां मण्डनस्य ।
तं नित्यानन्तशक्तिं धृतमखिलनिजं रायपूर्वं मुकुन्दं
नत्वा नत्वोपकारं प्रमुदितमनसा संस्मरामि स्मरामि ॥
यद्वंशीनादशब्दप्रमुदितवनितावृन्दमागत्य पार्श्वे
भावावेशैः कटाक्षैः प्रियमतिविभवैस्तोपयत्यादरेण ।
स्वामिन्या स्वीयया यो विविधरसमयः क्रीडते पूर्णलीलः,
श्रीमद्गोपालबालं प्रमुदितमनसा तं प्रभुं संनमामि ॥
ये साक्षाद्ब्रह्मवादं व्यवहितमखिलं मायिवादैस्तमिस्रैः
प्राकाट्य स्वीयभाष्यं प्रचुरकरुणया श्रीमदाचार्यवर्य्याः ।
संचक्रुस्तत्पदाब्जे विवरणसुमनांस्यञ्जलौ सन्निधाय
नत्वा नत्वा च भूयः सकलफलमये चार्चयेऽभीष्टरूपे ॥
यः पुष्टिपीयूषसमुद्रमद्भुतं स्वीयान्तरङ्गे प्रकटं चकार ।
नन्दात्मजः क्रीडति सर्वदा यतः श्रीविट्ठलेशं प्रणमामि नित्यम् ॥
यत्पादाब्जपरागरञ्जितहृदो जानन्ति मार्गं निजं
यैः स्वीयार्थमबोधि चेतसि मम प्राप्तो मुकुन्दो मया ।

सुवर्णसूत्रम् ।

श्रीमद्वल्लभनन्दनप्रभुकृपादृक्षा समासादित-
ज्ञानादिः प्रणिधाय तच्चरणयोश्चिन्तां तदिच्छाबलात् ।
विद्वन्मण्डनधारणे सुकरतासिद्ध्यै यथाबुद्ध्ययं
तद्दासः पुरुषोत्तमो व्यरचयत् सौवर्णसूत्रं मुदा ॥
एष पुष्पाञ्जलिः श्रीमत्तदीयचरणाम्बुजे ।
निवेदितस्तेन नाथास्तुष्यन्तु मयि किङ्करे ॥

इति श्रीमद्वल्लभनन्दनचरणरजःसनाथश्रीपीताम्बरात्मजपुरुषोत्तमप्रणीतं विद्वन्मण्डन-विवरणं सम्पूर्णतामाप ।

हरितोषिणी ।

ताञ्छ्रीमद्यदुनाथवर्य्यचरणान् नत्वा त्रिधा सन्ततं
तत्पादाब्जयुगेऽर्पयामि बहुधा भूपार्थपुष्पाण्यनु ॥
इति श्रीवल्लभाचार्यचरणाः करुणामयाः ।
प्रसीदन्तु निजे दासे मयि सर्वार्थसाधकाः ॥

इति श्रीमन्मुकुन्दरायसहजमाधुरीपरमानिर्वचनीयसरसवदनतामरसरसमुधाद्रवावगा-हिश्रीमदाचार्यपदाब्जकृपाऽपारसारश्रीमत्प्रभुचरणात्मजमहाराजयदुनाथकुलोद्भवगोस्वामि-श्रीगोपालात्मजगिरिधरविरचितविद्वन्मण्डनव्याख्या हरितोषिण्यपरपर्य्याया दीपिकाभिधा समाप्तिमफाणीत् ॥



श्रीगोकुलेन्दुर्जयति ।

# विद्वन्मण्डनस्य टीका

## सिद्धान्तशोभा ।

---

नमः श्रीमद्गोवर्द्धनधरणधीराय विदुषे
मुदा चन्द्रावल्या मणिकमलनीराजितदृशे ।
यदालोके रासोत्सवकलितकाश्मीरकिरणैः
सुवर्णाभं लीलाजगदिदमहो नित्यविभवम् ॥ १ ॥
वैयासकिं नमस्कृत्य निजाचार्यपदाम्बुजे ।
श्रीमद्विट्ठलनाथानां कृतिं विवृणुते सुधीः ॥ २ ॥

तत्रादौ लीलानित्यत्वं प्रार्थयन्तो मङ्गलमाचरन्ति प्रेम्भुदृशां विषय इति । दृशाम् । चर्षणीनां ताः परमानन्दं विना न रज्यन्ते इति, अत एवोद्गादित्युक्तम्, दृशां तत्रैव विनियोग इति । रसोर्मिषु दोलायमानकमलरूपत्वमपि दृशां प्रार्थयितुं प्रथमतो लीलासामग्रीं प्रस्तावयन्ति—नैवस्नेहाम्भोधेरिति । नवः पुष्टिमार्गीयफलरूपः स्नेहो भक्तिर्भगवतः । मकरिकापत्रावलिमयीप्रलम्बनमागतानां संमानने तासामपि मकरिकापत्रान्दोलितः कृत इति तदाधारा मुखेन्दवोऽत्र ध्वन्यन्ते । तत एव श्रीगोकुलचन्द्रमाः स्वयमपि संवृत इत्याहुः किमॅपि परित इति । दलद्वयमध्ये शृङ्गारसिन्धुरेव । आमण्डलं दलद्वयेऽप्यार्द्रांशलग्नेनोक्तम् । कुङ्कुमारुणाः स्मितकिरणा ऊर्मयः, त एव पुनः परस्परं परितः परिधिः सर्वस्य रासमण्डलं मन्दिरचन्द्रिरस्य च । वर्तमानप्रयोगेण सर्वदैवाविर्भावविशिष्टस्याविर्भावः प्रार्थ्यत इत्यर्थेनदत्तयम् । संभेदः पुष्टिमार्गे गूढो भावः, प्रेमामृतनामभिर्विवृतत्वादानेव श्रीकृष्णपदार्थः, स्वयं स्वनामाप्रकटनेऽपि तदर्थं कृतनाम्ना वेणुरन्ध्रान् पूरयन्निति च प्रमाणं निरूपितं तद्गर्भिभिः श्रीश्रीपरिहृडकुण्डे इत्यथाहुः । एवं विषयतायां प्रार्थितायां प्रभुरनवनेनैव प्रोवाच, यद्रूपं प्रार्थयन्तीति त आहुः पितृंचरणानिति । नत्वाऽनुत्कर्षपदे प्रतिष्ठाप्य अहं तेषामहङ्काररूपो लिखनप्रतिज्ञां करोमि । यतस्तेषामेवाज्ञा सर्वैः साध्या यथामतीत्याहुः यथाबुद्धीति । अरस्मात् ( न्वयं ) न्यमेयं मयैवेयं प्रतिज्ञा कृतेत्यर्थः । विद्वन्मण्डनं रासमण्डलरूपमित्याहुः श्रुतिसूत्रादिति । श्रुतिर्ब्रह्म इव पद्मरागमणिः, सूत्राणि विश्वतोमुखमणयः पर्यायाः । आदिना गीता श्रीभागवतम् । अङ्कुरितप्रेमकिरणो मारकतमणिप्रभाव इति । युक्तिमौक्तिकानि प्रार्थितरासचन्द्रोदयप्रभवाणि, न तु मनोमात्रचन्द्रप्रभवा विकल्पाः, तेषां किरणैर्ग्रन्थनं साक्षात्सूत्रैर्न तु सुवर्णसूत्रमात्रेण । तथा चास्यां सिद्धान्तशोभायां विशदीकरिष्यामः तत्रादौ विवादरङ्गभूमौ विप्रतिपत्तिस्तां समुद्भावयन्ति—इहेह हीति । प्रतिपाद्यते । भवति विप्रतिपत्तिरित्युभयत्रान्वेति । इहास्यामुत्सवसभायाम् । सप्तानामपि प्रत्येकवद्शास्त्रतत्समुदायरूपाणां जिज्ञासूनां सर्वशास्त्रारम्भसम्बन्धिजिज्ञासावताम् । तेन कः पदार्थो ब्रह्मवादे इति पदार्थजिज्ञासा व्याख्यानस्यैका सर्वमूर्द्धन्यवेदान्ते ब्रह्मजिज्ञासामूर्द्धन्यायामस्यां सर्वा एव जिज्ञासाः संगृह्यन्ते, सर्वविज्ञानप्रतिज्ञानानुरोधात् । तथा च धर्मब्रह्मणोरैक्यविचारे धर्ममीमांसा, सांख्ये तत्त्वजिज्ञासा, तत्त्वं च ब्रह्मेति प्रकृतसङ्गतिः । योगो बहुविधो भक्तेः पर्यवस्यतीत्यतो योगमीमांसा वाम्पूरविशाङ्कन्थसमाप्तौ लीलानित्यत्वप्रसङ्गेन अथेदं विचार्यत इति प्रभवो विभावयाम्बभूवुः । वैशेषिकाणां सप्तपदार्थजिज्ञासा स्वस्वरूपेऽस्वरूपजिज्ञासेति बहुवचनसमन्वयः ।

विविधेत्यादि । पञ्चमस्कन्धीयं पद्यं पञ्चमं पुरुषार्थरूपमपवर्गं विवृणोति । अत्र ब्रह्मशब्दप्रतिपाद्यं जिज्ञास्यं वा स्वपरप्रकाशकमुभयसाधारणं पक्ष इति निष्कर्षः । विप्रतिपत्तिरविरोधफलकत्वे सति एकवृत्तिकविरुद्धकोटि-प्रदर्शकवाक्यद्वयम्, तत्त्वं चोभयपर्याप्तम् । तेनानिवारितविरोधे तादृशवाक्ये नातिव्याप्तिः । न वा विभिन्न-वक्तृके, तादृशवाक्यद्वयात्तटस्थस्य संशयेऽपि प्रयोक्तृपुरुषसंशयाज्ञानाद्विचारोद्देश्यपुरुषस्यालाभात् । किन्तु विप्रतिपत्तिर्मध्यस्थस्य वादिनोर्वेत्यनाग्रहः । अत्र जिज्ञासा फलमित्यधिकारिविशेषणं जिज्ञासूनामित्युक्तम् । अत्र केचिन्मधुसूदनमुनयः—यद्यपि विप्रतिपत्तिजन्यसंशयस्य न पक्षतासंपादकत्वेनोपयोगः, संशयस्य पक्षता-त्वनिरासात्, वाद्यादीनां निश्चयवत्त्वेन संशयासंभवात्, आहार्यसंशयस्याहार्यपरामर्शादिहेतुत्वापादकत्वेनाति-प्रसञ्जकत्वाच्च । नापि विप्रतिपत्तेः स्वरूपतः पक्षप्रतिपक्षपरिग्रहकल्पकत्वेनोपयोगः, तवेदं साधनीयमनेनेदं दूषणीयमित्यादिमध्यस्थवाक्यादेव तल्लाभाद्विप्रतिपत्तिवैयर्थ्यमप्यस्ति, तथापि विचारसाध्यसंशयाभाव......प-फलज्ञानस्य विशेषणज्ञानतया कारणे संशये विप्रतिपत्तिवाक्यं कारणं प्रयोजकं चेति विप्रतिपत्त्युपयोगः । वादिनोर्निश्चयकाले संशयानुत्पत्तावपि संशयकारणस्वरूपेण ज्ञाता विप्रतिपत्तिः ससम्बन्धिकत्वात्संशयं स्मारय-तीति तदुपयोगः । अथवा संशयापत्त्यादीनां संशयाभावमुद्दिश्य विचारे प्रवृत्तिरिति तत्रापि तस्यास्तथोपयोगः । विशेषणज्ञानस्य विशिष्टबुद्धिहेतुत्वमतेऽपि स्वस्य परस्परं वा संशयाभावे निश्चिते तत्र सिद्धत्वज्ञानात्तदुद्देशेन न विचारप्रवृत्तिः, अतः संशयाभाववत्त्वनिश्चयविरोधिनीः संशयवत्त्वधीरपेक्ष्य न प्रवृत्तिः । यदि च संशयाभाव-मुद्दिश्य न विचारे वादिनोः प्रवृत्तिरपि तु जयमात्रमुद्दिश्य, वादिनोरन्येषां सभास्थानां प्रबोध संशयाभावनिश्चये तस्य सिद्धत्वज्ञानात्, तदा तु तात्कालिकतन्निश्चयेऽपि कालान्तरे संशयाभावोऽनुवर्ततामितीच्छया विचारप्रवृत्तौ संशयोल्लेखिनी विप्रतिपत्तिरुपयुज्यताम् । अन्यथा निश्चयजन्यसंस्कारस्य कालान्तरे उच्छेदशङ्कायाः संभवात् । किञ्च यथा समयबन्धः एतन्मतमालम्ब्यैव विचारणीयमिति विचार्यकक्षाविषयविशेषगोचरः क्रियते । अन्यथा विषयान्तरसंचारेण वादिनोः शाखाचङ्क्रमणे तत्रैव न लब्धजयत्वे प्रस्तुतविषये जयपराजयव्यवस्थाऽनुपपत्तेः । विप्रतिपत्तौ तु कृतायां सभास्थैस्तच्चङ्क्रमणचापल्यं वादिभ्यां शाखान्तरे नाम निषेद्धव्यमिति विप्रतिपत्तेरावश्य-कत्वं समर्थयाम्बभूवुः । तन्नातिरमणीयम् । तथाहि स्थूणाखननन्यायेन निश्चितानां विचारे आहार्यसंशय एवाङ्गम् । न चाहार्यपरामर्शस्यापि हेतुत्वापादनं युक्तम्, प्रतिबन्देरनुत्तरत्वात् । तत्रान्वयव्यतिरेकाभ्यामना-हार्यपरामर्शत्वेनैव कारणत्वात् । प्रकृते त्वाहार्यसंशयस्यैवान्वयव्यतिरेकविधानात् । अन्यथाऽऽहार्यशङ्कायाः प्रतिबध्यप्रतिबन्धकभावे मानाभावेन तद्विरोधितर्कवैफल्यापत्तेश्च । प्रतिबन्धकत्वनिर्णयस्याप्यन्वयव्यतिरेकसह-चारज्ञानसाध्यत्वात् । प्रतिबन्धकत्वस्य कारणत्वघटितत्वात् । किञ्च जयमात्रोद्देशे विप्रतिपत्तेरनुपपत्तिरेव । तत्र कालान्तरीयसंशयाभावस्याप्यनुद्देश्यत्वात् । यदपि विषयान्तरस्य प्रासङ्गिकस्य संचारेण जयाभिमाननिरा-सार्थं विप्रतिपत्तिरिति, तदपि न । समयबन्धेनैव तन्निरासात् । तत एव श्रोतॄणामवधानसंभवात् । प्रस्तुत-विषयतत्प्रमाणव्यवस्थयोस्तत एव भावात् । तवेदं साधनीयमनेनेदं दूषणीयमिति मध्यस्थवाक्यादेव पक्षद्वयो-पस्थितेश्चोक्तत्वात् । किञ्चैवं प्रतिज्ञावाक्यवैयर्थ्यापत्तिः । विप्रतिपत्तेरेव साध्योपस्थितिसंभवात् । नच विप्रतिपत्तेः प्रति वा विप्रतिपत्त्या निर्वाहः, विप्रतिपत्तिद्वयस्यानावश्यकत्वात् । समयबन्धादेव प्रमाणादिव्य-वस्थागोचरस्यापि पौर्वापर्यनियमात् । विप्रतिपत्त्यनन्तरमेवं प्राप्ते ग्रन्थकृतः प्राहुः—किमत्र युक्तमिति । युक्तत्वमविरुद्धत्वं जिज्ञासाविप्रतिपत्तिफलमित्यर्थः । तथाहि विप्रतिपत्तौ कृतायां पक्षद्वयविषयिणी युक्तायुक्तत्वजि-ज्ञासा जन्यते । यथा सत्प्रतिपक्षस्थले हेत्वोर्बलवत्त्वजिज्ञासा । तस्यां कृतायां किमत्र युक्तमिति मध्यस्थाभिलापेन जिज्ञासाविषयबोधककिंपदघटितेन जिज्ञासोन्नयनात् । धर्मिज्ञानजनकत्वविधया च विप्रतिपत्त्युपयोगः, धर्मि-ज्ञानस्य जिज्ञासाहेतुत्वात् । न च धर्मिज्ञानमपि मध्यस्थवाक्यादेव, तत्त्वबुभुत्स्वोः कथायां मध्यस्थस्यानियमात् । अस्तु तावदेवम्, तथापि विनिगमकाभावान्मध्यस्थवाक्यानन्तरं समयबन्धादिरूपं तदीयं विप्रतिपत्तिवाक्यं वा धर्मि-ज्ञानजनकम्, अन्यतरसमवधानेऽपि तदुभयान्यतरसंभवाच्च । न चावश्यकसमयबन्धात्मकमध्यस्थवाक्यमेव तथास्तु, किं विप्रतिपत्त्येति वाच्यम् । विरोधानुपस्थितौ तन्निवारणफलकविचार एव प्रवृत्त्यनापत्तेः । अविरोध-स्यैव बुभुत्साविषयतावच्छेदकपदार्थत्वात् । वादिमतमाधाय विचारापर्यवसानात् । अनित्यः शब्दो नित्यो वेत्येकत-

राध्यवसायेऽप्यन्यतरकोटौ बाधाध्यवसायेऽपि वाऽन्यतरकोटिस्वीकारं विना स्वस्य कोटिबाधावधारणमात्रेण वादिनः समाधानानवतारात् । वादिनिग्रहमात्रस्य तत्त्वबुभुत्सोः कथायामनुद्देश्यत्वात् । अन्यतरकोटिस्वीकारेण तु विभिन्नधर्मिण्येवान्यतरकोटिपर्यवसानाद्विरोधोद्भावनाशक्यत्वमिति समाधानान्यथानुपपत्त्यैव तत्प्रतियोगिविरोधोपस्थापिका विप्रतिपत्तिरावश्यकीति । इदं च विरोधपदार्थमङ्गीकृत्य सर्ववादिरीतिसंग्रहार्थमुक्तम्, स्वसिद्धान्ते तु विरोधांशपरित्यागे विप्रतिपत्तेरनावश्यकत्वमित्यत एव जिज्ञासासूत्रमित्यन्येषामेव पृथङ्निर्देश इति ध्येयम् । तथा चाविरोधफलकविचारे इतिकर्तव्यतात्वेन विप्रतिपत्तेरुपयोग इति । अथैतत्स्यात्, तथाहि तेषां विषयो ब्रह्मेत्युक्तः श्रवणस्य शाब्दबोधस्य पूर्वसिद्धत्वे सिद्धसाधनान्मननवैयर्थ्ये तदितिकर्तव्यतारूपा विप्रतिपत्तिर्व्यर्था । शब्दस्य सन्देहाजनकत्वात् । शब्देन निर्णीते संदेहाभावाच्च । न च धर्मिणि सन्देहाभावेऽपि धर्मे संशय इति वाच्यम् । मननस्य श्रवणवैयधिकरण्यापत्तेः । 'श्रोतव्यो मन्तव्य' इति सामानाधिकरण्यानुपपत्तेः । ग्रन्थस्य परार्थानुमानरूपत्वात्तत्र च सिद्धसाधनदोष एव, यागे द्रव्यान्तरसाधनकत्वं यवागूपाकस्यादृष्टार्थकत्वमपि चेति कल्पनागौरवात् । नापि वैषम्येण, अत्र मननानन्तर्यस्य श्रवणे वक्तुमशक्यत्वात् । येन च धर्मेण श्रवणं, तेनैव मननीयत्वात् । मननादप्रामाण्यनिर्धारेऽप्यर्थान्तरम्, प्रामाण्यस्य प्रतितन्त्रसिद्धत्वाच्च । तात्पर्यग्रहार्थं मननमित्यपि न, तात्पर्यग्रहाभावे श्रवणस्यैवासिद्धेः, धर्मिस्वरूपे संशयानुपपादनाच्च । निर्धर्मकस्य ज्ञातुमशक्यत्वे धर्मविषयक एव संशयो धर्मिविषयक इति चेन्न, निर्धर्मकत्ववादिनां धर्मिनिर्धारस्यैव मोक्षहेतुत्वाङ्गीकारात् । धर्मिण एव परस्पराविरुद्धप्रकारेण चिन्तनोपपत्तेरिति । अत्र **वर्धमानोपाध्यायाः**—सिसाधयिषाविरहघटितपक्षताविघटनद्वारा सिद्धसाधनं दोषः । सिसाधयिषा च द्वयी, सामान्यतः साध्यज्ञानेच्छा, विशेषतस्त्वनुमितित्वप्रकारिकेच्छा । सामान्यतः साध्यज्ञानं तु विरोधि, धारावाहिकदर्शनात् । तथा च शाब्दबोधेऽप्यनुमितित्वप्रकारकेच्छायाः संभवादनुमितिरूपेष्टसाधनत्वं मन्तव्यमित्यस्यार्थ इत्याहुः । अत्रेदं बोध्यम्-शाब्दसिद्धेस्तद्विषये सिद्धत्वज्ञानात्तत्रानुमितित्वप्रकारिकेच्छापि न संभवति । न च तत्तत्सिद्धिमादाय सिद्धत्वज्ञानं चेत्तत्र सिद्धीच्छाया विरोधीति शाब्दसिद्धत्वज्ञानं नानुमित्साविरोधीति वाच्यम् । मानाभावात् । तावदन्तर्भावे गौरवात् । न च प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका इति वाचस्पतिवाक्यात्तथेत्यपि साम्प्रतम्, इन्द्रियदोषादिसंभावनानिरस्तप्रामाण्यशङ्काकलङ्कितत्तत्प्रत्यक्षादिसिद्धत्वज्ञानस्यैवेच्छायामविरोधित्वेन तात्पर्योपवर्णनात् । एकेनापि बहूनां प्रतिरोधसंभवात् । प्रमाणबहुत्वस्यावश्यकत्वाच्च । तस्मात् 'सन्देहवारकं शास्त्रं बुद्धिदोषात्तदुद्भव' इति न्यायेन शाब्दबोधेऽपि योग्यतासंशयोत्तरभाविन्यपि शब्दस्याप्तोक्तत्वादिसन्देहाहितः प्रमेयविषयकत्वसन्देह इति मननविधेः साफल्यमित्याचार्यवर्याणां वच एव शरणीकरणीयमिति । उक्तं हि वर्धमानैरपि, यद्वा शङ्काशङ्कानिवृत्तिन्यायोपासने संशयोऽङ्गमिति । प्रकृतमनुसरामः । एवं प्रतिज्ञाया अपि ग्रन्थप्रतिज्ञायाः शिष्यावधानमिव न्यायाङ्गभूतायाः सामाजिकानामवधानमेव फलमिति युक्तमुत्पश्यामः । अत्र विप्रतिपत्तौ चरमपदं विशेषार्थकम्, अभिन्नप्रतिज्ञाकारिकयोरनुरोधादिति बोध्यम् । 'उपजीव्यत्व' इत्यादिविप्रतिपत्तिनिरासार्थं परमतभाषया प्रभुप्रौढतनयाः प्रत्यवतिष्ठन्ते—**निर्विशेषं निरूप्यत** इति । एवं च मन्न विप्रतिपत्तिविषयः, उभयप्रकारकश्रवणविषयत्वादित्यत्र स्वणुपुरत्वादौ साध्यव्यापकमेकतरपक्षपात्युपजीव्यत्वाद्यभावविशिष्टवाक्यप्रतिपाद्यत्वं पक्षे ब्रह्मणि साधनाव्यापकमुपाधिरिति भावः । उपजीव्यत्वं विशदयन्ति **तथाहीति** । स्थितये ज्ञप्तये पारङ्कणीयत्वमाधारत्वम्, तत्र स्थितिः । कालादावपि संभवतीति द्वितीयं परिशेषयन्ति **निरूपिताः स्युरिति** । निरूपणं विषयीकरणं यदेकनिर्वाह्यं ज्ञप्तिमेव गुणाश्रयीकरोतीत्यर्थः । इदमेव ज्ञप्तेरुपजीव्यत्वमित्याहुः—**उपेति** । अन्यतः सविशेषज्ञप्तिसिद्धिरित्याशङ्क्य निराचक्षते **धर्मनिषेधेति**। ज्ञप्तिः स्वसंवेदनमेवा, न धर्मान्तरमपेक्षते, स्वत एव वैधत्वोपपत्तेरित्यर्थः । असाधारणधर्मो निर्विशेषत्वमभावरूपो धर्मः । यद्यप्यभावत्वमधिकरणत्वं, तथापि विनिगमकाभावात्प्रतियोग्यप्यभावत्वमित्याहुः—**अभावस्येति** । अत्र पूर्वं धर्माभावादित्येको ग्रन्थः । भावरूपधर्माभावादिति तदर्थः । उपजीव्यत्वं च कारणीभूतप्रतियोगिज्ञानजनकत्वेन अभावरूपधर्मपक्षेऽभावविशेषणधर्मरूपविशेषणज्ञानजनकत्वेन धर्मनिरूपकवाक्यानां प्रयोजकत्वमेवोपजीव्यत्वमिति द्रष्टव्यम् । **श्रुतिसिद्धा**

इति ( नन्वित्याद्यग्रे व्याख्यासन्दर्भसम्बन्धः ) । ( अत्र व्याख्यायां चतुरस्रमित्यनन्तरं शोधः ) । ननु य एव लौकिकास्त एव वैदिकास्त एव चामीषामर्था इति न्यायाल्लौकिकानामप्यणुत्वादीनां क्वचिद्वेदेऽप्यन्ततः प्रतियोगितया चोपात्तत्वात्तन्निषेधो वैदिकतन्निषेध एवेति चेत्, सत्यम्, अनाविर्भूतसर्वात्मभावकत्वरूपलौकिकत्वविशिष्टत्वेन न तादृशां वैदिकत्वं, किन्त्वलौकिकत्वेनेति । किञ्च वैदिकानां निषेधं प्रति नानुबन्धित्वम्, षोडशिग्रहन्यायात्, उभयोः प्रामाण्यात् । तदिदमुक्तम्–किन्त्वनुवादपूर्वमितिमन्दमध्यस्थोऽप्यमन्दायते । ननु तथापि महतां विचारे उभयतोऽपि मध्यस्थमन्दयोः सन्निवेशो न घटत इति चेत्, सत्यम्, परन्तु प्रतिवादिना धर्माधारप्रतिपादकतयोपजीव्यत्वं निर्विशेषवाक्यानां यदङ्गीकृतं, तल्लौकिकाधारबोधकवाक्ये बाधकत्वं व्यभिचरति । न खलु भूतलं घटवदिति वाक्यं प्रति भूतलमिति वाक्यं बाधकम् । तथा चैवंविधोपजीव्यत्वमपि यदप्रयोजकं, तदा 'यक्षानुरूपो बलि'रिति न्यायादभावनिरूपणोपयोगिप्रतियोगितयोपजीव्यत्वमपि तादृशं किमिति न स्यादिति कक्षाविशेषत्वालपनाय प्रभुचरणैर्माध्यस्थ्येनायमुररीकृतो मन्दाक्षप्रापणेनेति कश्चिदाशङ्कावकाशः । अत एवायमाशङ्काद्वयात्मको मध्यतनो ग्रन्थो विचारविशेषसंचारायेति नाशङ्कता । अन्यथा—तानामपि(?) साधूपसंहारग्रन्थ एव युज्येत, तत्रैव वादमार्गलाभादिति सर्वं चतुरस्रम् । तथा चायं कारिकार्थसंग्रहः । उपजीव्यत्वतः । ल्यब्लोपे पञ्चमी, उपजीव्यत्वं प्राप्येत्यर्थः । एवं चोपजीव्यत्वविशिष्टत्वे सति व्याख्यान्तरेण सोपाधिविषयकैकविषयत्वाभावलक्षणाप्रतिद्वन्द्वित्वे च सति निर्बन्धक्यान्तरत्वविशिष्टत्वेनेतरप्रतिषिद्धं निर्विशेषवाक्यप्रतिपाद्यत्वात्प्रबलहेतोर्ब्रह्मसविशेषवाक्यप्रतिपाद्यत्वादिति निर्बलहेतुना प्रसक्तसत्प्रतिपक्षनिरास इति । किञ्च श्रुतिवाक्येति द्वयोरुपादानं षण्णां तात्पर्यनिर्णायकानां संग्राहकम् । तत्र श्रुतिः 'ब्रह्मैव सन् ब्रह्माप्येती'ति द्वितीयाप्रकृत्यर्थस्यैव प्राप्यार्थत्वेन विशेषाणामप्राप्यतया धर्मिण्येव तात्पर्यं गमयति । लिङ्गमद्वितीयत्वं विशेषान्विहाय धर्मिण्येव तात्पर्योन्नायकम् । वाक्यं समभिव्याहारः 'निषेधशेषोऽशेष' इति 'निर्गुणं गुणभोक्त्रि'ति । अखण्ड......दम्रगतश्च । धर्मिणः सर्वसम्मतत्वात्केवले वाक्यपर्यवसानम् । 'सदेव सोम्ये'ति महाप्रकरणम् । सन्निधिःस्थानम्, धर्मिणः सर्वत्र सन्निधानात् । निर्गुणमिति समाख्या चेति सङ्ग्रहः । ईति तात्पर्येणेति । अनेन सन्मात्रतात्पर्यकत्वमन्तरङ्गत्वं विवृतम् । प्रथमचकारः सत्प्रतिपक्षप्रतिक्षेपकः । अन्यपरत्वतश्चेति योजना......। अग्रिमचकारो निरवकाशत्वसमुच्चायकः । सगुणवाक्यान्युपासनायामपि युज्येरन् । भावनामात्रे वा भावनाविषये वा तेषां सावकाशत्वात् । निर्विशेषवाक्यानां तु नैवम्, भावनामात्रपरत्वे न्यायमीमांसकमतयोरनुप्रवेशात् । सगुणभावनाविषयस्य च वास्तवत्वेऽद्वैतहानिः, अवास्तवत्वे धर्मिमात्रस्यावास्तवत्वप्रयोजकाभावात्, सर्वं ज्ञानं धर्मिण्यभ्रान्तमितिसर्ववादिराद्धान्तात्, तस्य च वास्तवत्वे उभयोस्तद्योगादवास्तव एव सगुणवाक्यानां सावकाशत्वमिति । एतेन निर्विशेषवाक्यानामप्युपासनोपक्षीणत्वम् । परेषां मते 'अक्षरधियां त्ववरोध' इति सूत्रे निर्गुणोपासनायाः प्रतिपादनादित्यन्यतरत्वमुभयोः समानमिति सामाजिकोक्तमपास्तम् । निर्गुणब्रह्मसाक्षात्कारसुकराणां निर्गुणवाक्यानामुपासनायामनियमात् । निर्गुण( ब्रह्मसाक्षात्कार )ज्ञानदुष्करतायां तु दुष्कृतादिप्रत्यूहविधमनाय तदुपासनायाः कल्पनीयत्वात्, निर्गुणसाक्षात्कारप्रतिबन्धकानां सगुणोपासनानिवर्तनीयत्वात्, धर्मिमात्रपराणां च प्रामाण्योत्कर्षस्यावेदितत्वात् । तस्माद्धर्मिग्राहकमानानुरोधादध्यारोपापवादन्यायेनैव सगुणवाक्यानि सङ्गमनीयानीति पूर्वपक्षमुपसंहरन्ति–कैवल्यने सर्वमिति । सामञ्जस्यमुभयाविरोधः । तथा च न विप्रतिपत्त्यवकाश इति ........इत्थं परैरेव विप्रतिपत्तौ निरस्तायां सिद्धान्तसाम्राज्यमासादयन्ति अत्र ब्रूम इति । अत्र गूढकारिकानुसन्धेया पत्रान्तरे । जगदिति । एतद्बाधने जगदेव बाध्येतेत्याशयः । उक्तेति कोमलामन्त्रणेन विकल्पोद्भावनम् । ननु भेदः सर्वत्र तात्त्विक एव, तार्किकाणां भेदभ्रमस्थले तु भेदो नास्त्येव । परैरपि घटपटयोर्वास्तविक एव भेदोऽभ्युपेयते इतीत्थं मतमनुसृत्याहुः–भेदपक्षेऽपीति । अपिना परेषां गर्हा । अनिर्वचनीयपक्षस्य निराकरणीयत्वात् घटपटन्यायेनैव सविशेषनिर्विशेषयोर्भेदः, नञ्रूपाविना धर्मिणि रूपान्तरकल्पना, रूपद्वयस्यापि श्रौतत्वात् श्रुतानुपादानस्य विवादास्पदत्वात् । सांख्यपक्षपातिनीनां प्रकृतिमात्रादिश्रुतीनामसदादिपरत्वेनाप्युपपत्तेः । अभेदवाक्यानां चैकैक्यप्रतिपादकत्वेन नानेश्वरवादनिराकरणपरत्वात् ।

निर्विशेषस्यानीश्वरस्य जीवस्वरूपस्यैव वा कर्त्रादिरूपेश्वराद्भेद इति मताङ्गीकारे परेषामपि क्षतिविरहादित्याशयेनाहुः—तात्त्विकमिति । भेदस्य तात्त्विकत्वं द्वेधा सविशेषत्वतः साहित्यरूपविरुद्धधर्माध्यासेन उपास्यत्वानुपास्यत्वाभ्यां च, 'नेदं यदिदमुपासत' इति श्रुते उपास्यत्वाभावाङ्गीकारात् । तत्र प्रथमे सविशेषत्वस्य भेदकत्वेऽपि तदभावो न भेदकः, अधिकरणात्मकत्वात्तस्य, निर्विशेषे च व्यावर्तकधर्माणां भवद्भिरनङ्गीकारात् । सर्वतोऽव्यावृत्तत्वात्तस्य । अथ सविशेषः स्वधर्मैस्तस्मान्निर्विशेषाद्व्यावर्तेत, नैष दोषः घटाकाशो नाकाश इति प्रतीत्यापत्तेः, दण्डी पुरुषो न पुरुष इति प्रतीत्यापत्तेश्च । केवलविशेष्ये विशिष्टान्योन्याभावानभ्युपगमात् । विशिष्टकेवलविशेष्यभेदस्य निष्प्रतियोगितावच्छेदकस्य प्रत्येतुमशक्यत्वात् । तस्मादुभयोर्व्यावर्तकधर्माभावे परस्परभेदो गीर्वाणगुरूणामपि न शक्यवचन इति मनसि निधाय द्वितीयपक्षोपर्यधिकरणविरोधं प्रख्यापयन्ति—सर्वत्र प्रसिद्धेति । अत्र विषयवाक्ये जगदुपादानत्वलिङ्गं सर्वात्मकत्वलिङ्गं च सविशेषस्येश्वरस्य, उपास्यत्वं च शान्तकर्तृकं, शमगुणोपादानान्निर्विशेषत्वलिङ्गम् । ब्रह्म च विश्वजिज्ञासायास्सर्वैरेकमेव ज्ञानध्यानयोरन्वेति, अवान्तरब्रह्मणः शमादिमतामनभिलषितत्वात् । सर्वाभिलषितं च सर्वतः प्रेयोरूपमिति वेदान्तपण्डापोषः तदिदमुक्तम्—सर्वत्र वेदान्तेष्वित्यादिना । मनोमयत्वादिविषयवाक्योक्तं ब्रह्मैवेति प्राथमिका च योऽवधारणार्थः । तत्कस्य हेतोः, यतस्तत्रैव संशयः । मनोमयत्वादीनां जीवलिङ्गत्वात् कथमवगम्यते ब्रह्मैवात्र सर्वत्रोपादेयमिति । तस्मादुपसंहारानुसारेणोपक्रमस्य नेयत्वात्तस्य निगमनस्थानीयत्वाद्वाक्यशेषस्थानाभिषिक्तत्वाच्च भारूपस्य प्रकाशात्मन एकस्य मुख्यविशेष्यत्वात्तदात्मना मनोमयत्वादिलिङ्गं विपरिणमय्य मनोमयप्राणमयविज्ञानमयाविशेषतया विशेषात्मना आनन्दमयान्तानामुपलक्षणानीति 'सर्वं खल्वि'त्यत्रमयोऽपि तत्त्वेनोपास्य इति जीवलिङ्गानां ब्रह्मपरत्वे निर्णीते सुतरां सविशेषनिर्विशेषयोरभेदसिद्धिरित्याशयः स्फुटार्थः । यत्तु 'नेदं यदिद'मित्याद्युक्तम्, तत्र प्रापधिकरूपेणोपासनाया एव हेयत्वोक्तेः । पशुपुत्रादिरूपेणोपासनाया एवेदंपदपरामृष्टत्वात् । यदपि सामान्येनोपादानादुपास्यत्वावच्छेदेन ब्रह्मत्वनिषेध इति प्रतिबिम्बविशेषणभेनोपासनालम्बनमिति, तदपि न साधीयः, तथापि पश्वादिवद्धेयत्वावचनात् । उपादेयविषयताशालित्वेऽपि न ब्रह्मत्वं, सामान्यतो 'नेद' मिति निषेधावगमादिति चेत्, इदमिति निकृष्टवस्तुप्रकारेणोपासनाया एव हेयत्वं पर्यवसानात्, निकृष्टस्योत्कृष्टत्वेनोपासनायाश्चोपादेयत्वात् । क्रियोपास्यत्वनन्ततत्त्वात्तदुनिविषयत्वम्, अविषयस्य तथास्तीति तु नाशंसनीयम्, विषयतायाः स्वरूपसम्बन्धात्मिकायाः केवलब्रह्मैकनिर्वाह्यत्वे चोपाधेस्तत्रानुप्रवेशादिति निपुणतरं वक्ष्यामः । एतेनेदमधिकरणं न तयोस्तात्त्विकभेदप्रतिक्षेपकम्, तदुद्देशेनैव तदधिकरणानवतारादित्यपि शङ्का निरस्ता, उपास्यानुपास्ययोस्तात्त्विकभेदे तदधिकरणोक्तोपास्यत्वविशिष्टे ब्रह्मणि मनोमयत्वादिजीवलिङ्गानां ब्रह्मधर्मत्वापादनेन समन्वयानुपपत्तेः तादवस्थ्यात् । अन्यथोपास्यानुपास्ययोर्भेदेऽप्युपपत्तेः किमधिकरणरचनयेति पूर्वपक्षिणोऽनुत्तरता स्यात् । यत्तु जीवलिङ्गबाधनेनैवोपपत्तेः प्रकृतं ब्रह्मोपास्यं स्यादेवेति, तन्न, तर्हि जगदुपादानलिङ्गमपि बाधित्वा शुद्धमेवोपास्यं स्यात् । न च तन्मते शुद्धस्योपास्यत्वानुपास्यतावच्छेदकगुणानुसरणमिति वाच्यम् । तर्हि जीवलिङ्गानामप्युपासनाप्रकरणपठितानां निष्कर्षावश्यकत्वात् । ब्रह्मवादिनो हि वेदब्रह्मवादिनोपीति तेषां मते वेदार्थमात्राऽबाधनेन पूर्वोत्तरमीमांसयोर्निर्वाहात्तत्र तत्र व्याख्यानदर्शिभिः सूक्ष्ममतिभिरदसेयत्वादित्यभिसन्धायोक्तं विस्तृतमिति । अत एव ब्रह्मसर्वधर्मनिष्कर्षायैवमाहुः—किञ्चेति । सुतरामिति । अयमाशयः—तन्मते सविशेषस्य भगवत उपास्यत्वेऽपि बिम्बाभेदः, जीवस्य तु न तथा । तस्य स्वत उपास्यत्वाभावात् । अन्यथा निरीश्वरपक्षः प्रसज्येत, तथा च तन्मते न दोष इत्यतो ब्रह्मप्रकरणपठितजीवधर्माणां ब्रह्मधर्मत्वसंपादनार्थोऽयं ग्रन्थः । तत्रात्मन्मनःसमुदायस्य व्यापकस्य वा प्रकारान्तरेण व्यवस्थापनीयम् । मनसा वा मनोमयत्वादिकं ब्रह्मधर्मत्वेनाभिषिच्य वा धर्मं द्वारीकृत्यैव वाक्यार्थ उपेयः । एवंविधमनोमयत्वादिभेदात् सविशेषानन्त्यमित्यप्याहुः—ब्रह्मानेकेति । अस्माभिर्यथा भेदेऽङ्गीकृते विषयतात्मकस्वरूपतादात्म्याभेदेन तावद्विषयत्वाभेदः पर्यवसितस्तथा तवानङ्गीकार इत्याहुः यथा तथेति । चैतन्यं 'त्वं'पदार्थो मनोमयत्वादिविशिष्टः सन् सर्वान्तर आनन्दमयोऽस्ति, आनन्दो वेत्युभयसाधारणोऽर्थः । चैतन्यमात्रे त्वनुवादकताप्रसङ्गो महावाक्यस्य । यत्तु प्रतिभासते अहङ्कारास्पदत्वेनाविवेक इति परानुसारिभिः

समाहितम्, तत्र, प्रतिभासत इत्यहङ्कारास्पदत्वेन प्रबलेन दुर्बलस्य बाधसंभवात्, सोपुत्तानुभवदार्ढ्यांच कृतमुपदेशेनेति । तस्माद्भगवान् भगवन्तमुपदिशतीति सर्वोत्तरोऽर्थः । सर्वान्तराभेदमयाभेदः श्वेतकेतुं प्रत्यवाधेन । श्वेतद्वीपे केतुर्यस्येति भेदसहिष्णुरनाऽऽसीत्यनेन भेदस्तादात्म्यं पर्यवसितः, सोऽपि ते नाङ्गीकार इति भावः ।

'गुणगानपरो वेदः फलतो रूपतश्च हि ।
ब्रह्मणश्चाविभक्तत्वादेकत्वे गुणवर्णन' मिति ।

स्यादेतत्, कथं तात्त्विकभेदपक्षो निषिध्यते, जाग्रति भेदवादिनि, तथाविधभेदाभेदवादिनि चेति चेत्तत्राहुः येऽदर्थेङ्गीति । भेदमात्रनये अभेदवाक्यव्यवस्थानानुपपत्तेः, तयोर्विरोधादभेदवाक्यं भावनामात्रपरं, न वस्तुसाधकमिति व्यवस्था । एतन्मतेऽनिर्विशेष्यो नवविशेषगुणशून्यो मुक्त इति व्याख्येयम् । तस्येश्वरतुल्यतया कतिपयसादृश्येनाभेद इति बोध्यम् । यदा तु कथञ्चित्तयोर्विरोधमचिन्त्यशक्त्यादिनिर्माध्वाभिमतविशेषपदार्थाभ्युपगमेन वा समाधाय भेदाभेदयोरङ्गीकार इति मतम्, तदा त्वाहुः तैंद्वेग्रे इति । आस्तां तर्हि भेदाविरुद्धमभन्ये । तस्मादभेद एव तादात्म्यलक्षणः संसारदशायां स्फुरन् पारमार्थिकत्वाय शास्त्रेण समन्वीयत इत्यस्मत्सिद्धान्तः । भवतां तु यथा तथा स्यात्, पूर्वोक्तवादिनोर्मध्ये तु नाभिनिवेष्टव्यमिति भावः । अतात्त्विकभेदस्त्रिधा–बिम्बप्रतिबिम्बद्विचन्द्रघटाकाशादिषु तथा दर्शनात् । तत्राद्यपक्षे द्वयोः प्रपञ्चनीयतया तार्तीयीकमाश्रित्य ते सें त्विति । घटः किमावरको ब्रह्मण्येव विशेषावतिरिक्ताविद्या वा, किं ब्रह्मणि स्वधर्मसमर्थकाः । स्वसाक्षिमानेन विना मेयमात्रस्याल्पसत्ताकत्वात्स्वसत्ताव्याप्यसत्ताकत्वाच्च ब्रह्मधर्माणामन्ततः प्रकृतिप्रवर्तकत्वादीनां च स्वतन्त्रत्वेनाज्ञानानियन्त्रितत्वात् कथमुपाधीभवेयुरविद्यात्मनाऽपि ब्रह्मधर्माः, उपाधिशब्दार्थोल्लङ्घनात् । स्वतः स्वरूपानवभासात् । भासमानं ज्ञप्तिविशिष्टमेव भासते इति राद्धान्तः । ज्ञप्तिविषयता च स्वपरसाधारणी, नैकान्ततः प्रपञ्चाश्रया, नापि स्वातिरिक्तनिषेधमपेक्ष्य स्वमात्रपर्यवसायिनी, किन्तु स्वमात्रपर्यवसायिनी बोध्यबोधकादिसामर्थ्यस्वस्वरूपसम्बन्धात्मन एकधर्मिनिष्ठत्वे स्थापकसचिवप्रमाणप्रकाण्डप्रमापितत्वेन धर्मिग्राहकमानसिद्धमस्मन्मतं सकलवेदार्थमुपकरोतीत्यनुशय्याहुः ईति विचारणीयमिति । ऊँसक्त इति । 'विज्ञानादी'त्यादिभगवद्वाक्यं तु सांख्यमतानुवादकम्, तदपि सेश्वरसांख्यरीत्या । समन्वयाविरोधिभगवत्सांख्यं भिन्नमेवेति भावः । उपहितत्वमुभयोस्तादात्म्याध्यासः, सोऽप्यनादिः, जीव ईश्वर इत्यादिभवत्सिद्धान्तानुसाराच्च । सर्वं इत्युपलक्षणम् । त्रयाणां यौगपद्यमुपाधियौगपद्यं......अनुविधानात् । न चानादित्वेऽपि यौगपद्यं कथं, प्राग्भावादीनां च सहकारित्वादिति नायं दोष इति चेत्, न; येऽप्यनादिभावास्ते सर्वे युगपत्प्रवृत्तिकाः, अनादिभावत्वात्, अनादिपुरुषवत्। अनादिपुरुषो हि सर्वैः सदैव युगपत्प्रवर्तते, तथाऽन्येऽपि गुणेच्छादयस्तथैव प्रवर्तेरन् । एतेन कर्मादीनां सहकारित्वेनापि न समाधानम्, मीमांसकैस्तथा समाधेयत्वेऽपि प्राकृतानां मायिकानां कर्मणां वा कार्याणां च स्वोपादानतुल्यप्रवृत्तिकत्वेन तत्रापि तद्दोषानिस्तारात् । क्रमाकारोऽपि मायादिपरिणाम इति चेत्, स कालघटितः, कालोपाधयश्च क्रमयुक्ता एव, नियतास्तु कालव्यवस्थामेव न कुर्युः । मायैव व्यवस्थां करिष्यति इति चेत्, सैवाव्यवस्थिता । अध्यासाव्यवस्थेति पुनर्भ्रम एव परामर्शः प्रक्रान्तः । अध्यासं विना सांख्य एव पर्यवस्येत्, तदिदमुक्तम्, असङ्गत इति । सैांतमवलम्ब्येति च । स्मृतिः सांख्यम् । सेश्वरसांख्यावष्टम्भेनाहुः—तैदिच्छेवेति । क्रमे । तैद्धेतोर्गुणक्रमहेतोः । तथा च सांख्ययोर्विवादः परस्परमायादितः प्रधानासाधारणेच्छावादिनं वादकथायामनुनिवेश्य पर्यनुयुङ्क्ते इच्छायां सिसृक्षायां क्रमनियामिका नेच्छा न गुणाः, आत्माश्रयान्योन्याश्रयापातात् । अथ योऽसा(?)द्गुणजन्यसत्कार्यविशेष एवेच्छेति सेश्वरसांख्याः, गुणानां तु स्वनिष्ठकारणतावच्छेदकः स्वभाव इति मतमाक्षिपन्त्यनीश्वरे अपि । सिद्धान्तस्तु गुणा इच्छेव वा स्वसंक्रमं स्वयमेव विषयीकरोति, अन्यथा विषयतानवस्थानात् । इच्छात्वं च वक्ष्यमाणो विशिष्टेच्छास्वरूपविज्ञानगतो विषयताविशेष एव । ज्ञानस्य प्राथमिकत्वात्तद्विनिगमनाविरहावकाशः । अत एवोक्तं भाष्ये 'सत्यादिपदवत्कर्त्रादिपदसामानाधिकरण्यमपी'ति । गुणाः व्याप्यसत्ताश्रयाः तत्कृत एवैकविध..................व्याप्यव्यापकभाव इति । तदाहुः ऐंवेचसौम्येदमिति । सौम्य सोमवंशोद्भवेति ।

भेदेन स्तुतः सम्बोधितश्च भगवानेव । स्ववाक्यजन्यबोधाश्रयत्वेनेच्छाविषयो हि सम्बोध्यः, तत्त्वं पत्रादिषूत्ता-न्ताभिज्ञानोद्देश्ये 'स्वस्ति श्री' त्यादिसम्भ्यन्तेऽतिप्रसक्तम्, तत्रापि सम्बोधनप्रथमापत्तेः । तस्माद्धे हे इत्यादि-पदप्रयोगहेत्विष्टसाधनताज्ञाने सति तत्तत्पदस्य सम्बोधनप्रथमाश्रयप्रयोज्यप्रयोगोपाध्यधीनसम्बोधनज्ञानस्य प्रयो-गनिर्वाहकत्वमत्रत्यादिसम्बोध्यतावच्छेदकधर्मवत्त्वमेव सम्बोध्यत्वम् । अन्यथा आत्माश्रयाद्यापातात् । तथा च पुरो-डाशाद्यत्वेन न साधारणसम्प्रकनिष्ठमेव सम्बोध्यत्वमित्याह सौम्येति । एवकारेण मायाद्यन्ययोगव्यवच्छेदे सत्यभिन्नेन सत्त्वं इदन्त्वं च वक्ष्यमाणमिति भावः । सदितरन्नासीदिति स्वसत्ताभावेऽप्युपपद्यत इत्यत आहुः—ब्रह्मणोऽन्यस्येति । तथा चाविमृष्टविधेयांशो वाक्यमात्र एव दोष इति पार्थान्यस्मिन् धनुर्धरतादात्म्यव्यवच्छेदेऽपि घटो न धनुर्धर इत्यादिवद्विधेयांशालाभात् । अन्यथाऽधनुर्धरः पार्थ एव धनुर्धर इत्यापत्तेः । पार्थे धनुर्धरत्वपर्यन्तस्य वाक्यार्थतया प्रकृतेऽपि ब्रह्मसत्त्वालाभ इति भावः । अत्रेदमित्यस्य विशेष्यत्वे इदमानान्यस्मिन् सत्त्वव्यवच्छेदस्य बाधितत्वात्तस-दन्यस्मिन्निदं तादात्म्यव्यवच्छेदे सदेव विशेषणम् । विशेषणसङ्गतत्वे सत्त्वायोगव्यवच्छेद इदं पदार्थे, इदं सद्भिन्नं नासीदित्यर्थे वा कालादेरपीदंपदार्थतया तस्य सद्भिन्नत्वाभावोऽपि प्रतीत इत्यग्रपदार्थोऽपि ब्रह्मैवेति वक्ष्यन्ति "बोधनार्थमेवेति, तथाप्यग्रपदवैयर्थ्यमाशङ्कमानो वादी शङ्कते—नै चेदि । सृष्टिपूर्वकालवाचकेत्यर्थः । तथा चेदंपदार्थे तदनन्तर्भावादधिकरणतया तस्यार्थानन्वयाच्च स्वातन्त्र्येण तस्यान्वय इति तत्तुल्यतया मतान्तरे नित्यान्त-राणामपि सत्तायां ब्रह्मसत्त्वात्यन्तायोगस्तदानीं व्यवच्छिद्यते, न तु ब्रह्मान्यव्यवच्छेद इति भावः । अयोगव्यवच्छे-दपदमत्यन्तायोगव्यवच्छेदार्थकमिति सम्प्रदायानुरोधिनः । अत्र त्वयोगव्यवच्छेद एव सामानाधिकरण्येनान्वये-ऽप्यत्यन्तायोगव्यवच्छेदो गीयते, न त्वालम्बितकालान्तर्भावेनैवकारार्थ इति नव्यन्यायाबद्धपरिष्काराभिप्रायेण तथोक्तिः । बोधनार्थमेवेति । सिद्धार्थकमेवेदं वाक्यम्, कालांशोऽविवक्षितार्थमित्यर्थः । घटितार्थकत्वेन कालत्वेन तदभावार्थमप्रदोषाद्दानात् । 'अग्रे' इत्यस्य कदाऽसीदित्याकाङ्क्षानिवर्तकत्वार्थत्वात् । तथा चेदंप-दार्थे तदन्तर्भावोऽप्यविरुद्धः । अव्ययोऽक्षरं प्रथमकवस्तु तमेवायातीति सप्तम्या अपि प्रथमार्थे वृत्तेरव्याद-त्वात् । अधिकरणत्वादेरपीदंपदार्थेन परामर्शसाम्राज्याच्च, तदाहुः यैतदनुरोधेनेति । अपिना आकाशा-दिसंग्रहः । काले कालान्तराभावाच्च स काल आसीदित्यादौ ब्रह्म एव कालत्वं ब्रह्मणैव मेघगम्भीरया गिरो-क्तमित्याहुः भैगवद्भाष्यमिति । निमित्तमात्रमिति । अभिन्ननिमित्तोपादाने मयि सति त्वं निमित्तमात्रं प्रयोज्यकर्तृ स्वयमेव, प्रयोजकेनाऽपि कार्यनिर्वाहे प्रयोज्यकर्तुरन्यथासिद्धत्वात् । कालत्वनिमित्तेऽपि सति कालोपाधितया कदाचिद्भवाभिनित्तम्, कालोपाधयस्तु बहव इत्युक्तम् इतोऽपीति । उपाधीनामप्यनुग्राहकः स्वयमेवेति भावेनेति । ईदृमेव । अग्रे सत्यमेव । प्रतिसर्गं सत्तासम्बन्धाभिप्रायेण मूलपदम् । सत्कार्य-वाद एवंविध एव यत्राम नित्यसत्तासम्बन्धः, न तु ब्रह्मव्यतिरेकेण प्रकृत्याधिनं सत्कार्यं भिन्नमिति, किन्तु व्याख्याज्ञाने वर्तमानानां नाभावनिरूपणम्, नापि महाकाले कालोपाधिध्वंसाननिरूपणम्, न सर्वज्ञानित्यत्वाय, नापि मिथ्यात्वाय, महाकाले ईश्वरे वा वर्तमानत्वात् । इसौ च सर्वज्ञनित्यप्रत्ययविषयत्वात् । तस्मान् प्रतिष्ठा लौकिकविषयताप्रत्यापत्तिर्न तु नाशः । असद्विषयताप्रसङ्गात् । अनुभूयमानैव सेति चेत्, न; इदानीं त्वाय-न्तभावौ नासत्प्रतीतावपि सदिति प्रतीतेर्निरुपाधितया बलवत्त्वेनासत्प्रतीतेरपक्षाश्रयत्वात् । अतोऽभावात्वा न नाशादिः । भावत्वं तु विषयताविशेषानातिरिच्यत इति सत्तायामेवान्तर्भावः परिष्कार्य इति भावः । उपाध्यधीनत्वमुपाधिप्रयोज्यान्यावस्थत्वम् । उपाधेस्तु न ब्रह्मप्रयोज्यान्यावस्थत्वम् । ब्रह्मणोऽप्रयोजकत्वात् । नापि स्वाधीनतद्भत्त्वम् । स्वस्य स्वानपेक्षत्वात् । तेन यत्र यस्य यदधीनत्वम्, तेन तस्य अर्थापत्तिसिद्धत्व-मित्युपाधावित्यग्रिमग्रन्थसङ्गतिः । स्वोत्तरकाभावादिति । 'स्वतन्त्रः कर्ते'ति पाणिनिसूत्रार्थो दर्शितः । तत्त्वं च कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वम् । सकलकारकसंचारी पुनरविद्योपाधिः सर्वत्र प्रयो-जक इति तदभावादित्यर्थः । नन्वेवमीश्वरप्रयोज्यानां जीवानां कर्तृत्वं न स्यात्, न स्यादेव घटादेर्दकर्तृत्वादे-र्यथा मीनादिशरीरचेष्टायामीश्वरकृतेरेव स्वावच्छेदकत्वगतत्वेन विषयमात्रे व्यापकत्वस्य व्यवस्थापनीय-त्वात् । ईश्वरस्यैव कर्तृत्वात् । न चैवं तत्प्रतिपादनानुपपत्तिः, तदिच्छाया अपि सर्वविषयकत्वेन प्रतिपाद-स्यापि तद्विषयत्वात् । प्राप्तत्वात् । न चान्यप्रतिपाते कर्तृत्वमात्रत्वेऽवगाविकर्तृत्वमीश्वरस्य न स्यादिति

साध्यम् । तत्राप्यप्रतिघातमात्रस्यैवेच्छया विषयीकरणात् । प्रतिघातेनैव प्रतिबद्धत्वाच । प्रतिहन्तृसंहरैव तस्य कर्तृत्वात् । प्रामाणिकास्तु भवत्वेवं, तथापि जीवतुल्यकर्तृत्वं न रोचयामहे, नित्येच्छा च नाश्रयप्रयोजिकेति स्वतन्त्रकर्तृत्वमाहुः । मुनेरनुशासनमुभयपरमीश्वरपरमेव चेति सर्वं रमणीयम् । तथा चोपाधौ ख्यातव्यं निरुक्तमागतम् । तथा चोपाहितरूपासिद्धौ निरीश्वरपक्षः, स च न सूत्रकारसम्मत इत्याहुः—द्वैयाकोपेति । उपचारः सादृश्यम् । किंचिद्धर्मधर्मेण स्वरूपसम्बन्धात्मकेन सर्वानुगमकरूपेणोपचारस्तादात्म्यमेव प्रतिष्ठापयेत् । अथोपाधिसारूप्यमध्यास उपचार इति चेदुपाध्यनुविधायित्वं भ्रमेण प्रमया चेति विवादप्रसक्तौ स्वरूपचैतन्ये धर्माभावात्, ज्ञातभ्रमस्य चाध्यासस्य तत्र कल्पने प्रमाणाभावात्प्रमातुल्य उपाध्यध्यासः स्वरूपसत्तातादात्म्यं नामेत्येव सन्तोष्टव्यमावाभ्यां, किं विवादान्तरमाध्यस्थ्येनेत्याहुः मुख्ये सम्भवतीति । स्यादेतत् । अविकार्ये ब्रह्मणि कृतीच्छादीनां स्वरूपाप्रवेशान्मायावृत्तयः, कर्तृत्वादिना द्वैतापत्तेरद्वैतं ब्रह्माकृष्टिति चेन्न, मुख्यार्थाबाधादित्याहुः—मुख्येति । कारणतावच्छेदकप्रमेयत्वस्य विषयताविशेषस्वरूपात्मकसम्बन्धत्वेनाविकारत्वात् । सुखोल्लासक्रीडायां कृतिसाध्यतादिज्ञानं स्वतन्त्रत्वात् । 'आनन्दाद्ध्येव' 'यतो वे'त्यादिहेतुत्वान्यथस्य, मुख्यस्यावधित्वादेः स्वरूपसम्बन्धस्य नित्यानित्यसाधारणावधिसत्तानिरूपकस्य शुद्धे ब्रह्मणि स्वाराज्यादित्यर्थः । उपचारो गौणत्वमित्याह गौणश्चेदिति । ननु भद्रसेनो ममात्मेतिवदात्मपदं बहुशो दृष्टम्, अत्राह तन्निष्ठस्येति । 'अयमात्मा ब्रह्मे'त्येतज्ज्ञानं मोक्षहेतुर्न तु जगत्कारणतावच्छेदकमिति चेत्, मोक्षहेतुज्ञानस्यैव भगवन्निष्ठसर्वतादात्म्यज्ञप्तिविषयत्वेन रूपेण जगत्कारणतावच्छेदकत्वात् । एतावतैव मोक्षस्य सिद्धत्वज्ञापनेनार्थसमाजग्रहः, तद्धर्मावच्छिन्नं प्रति न कारणता कस्यचिदित्याशयः । कारणतावच्छेदकसर्वतादात्म्यज्ञानसमानसमयमेवोभयवादिविद्वानुग्रहानुगृहीतसर्वात्मभावस्वरूपस्यैव मोक्षलक्षणत्वमिति स्थितम् । एवं प्रकृतिकारणतानिरासपरे, ब्रह्मणि शब्दप्रतिपाद्यत्वप्रतिपादनपरे चेक्षत्यधिकरणे 'ता आप ऐक्षन्ते'त्यादिसाधारणकारणाय हेतुत्वानुपन्यासादुपाधेः कारणतावच्छेदकत्वे तस्यान्यथासिद्धत्वेऽपि शब्दप्रतिपाद्यत्वस्य प्राधान्येनाभावेऽपि च विशेषणविशेष्यभावे विनिगमकाभावादवच्छेदकत्वं ब्रह्मण्याभाय तदवच्छिन्नस्योपाधेरेव प्राधान्येन कारणत्वशब्दार्थत्वयोः प्रसक्तावधिकरणदोपतौल्यम् । ततस्तस्य कारणतावच्छेदकत्वं पदार्थतावच्छेदकत्वं चोभयं निराकरणीयमधिकरणोद्भावकेन कृष्णद्वैपायनेन । स हि स्वयं मायापुरुषौ परस्परमुभयोः प्राधान्ये संदिहानः सद्विशिष्टमपश्यंश्चकार वा तस्योभयस्य समप्राधान्ये समगुणीभावे वा विप्रतिपत्तिम् । कस्माचिदुत्थाप्याऽशब्दादिपदैः प्रकृत्यादेरशब्दार्थत्वं मनसि निधाय, अथावशिष्यते कारणतावच्छेदकत्वं, तदपि नेतीति महता संरम्भेण ब्रह्मेक्षणमेव विषयताप्रसादरूपं जगत्कारणतावच्छेदकत्वमभ्युपगम्याधिकरणं कृतार्थीकृतवान् ब्रह्मणः पदाभिधेयत्वेति प्रस्तुतार्थः । किञ्च यथारोपविषया उपहितधर्मास्तदा जीवेन क्रियमाणायाः स्ववृत्तित्वेनाध्यारोपितधर्मविषयाया उपासनाया जीव एवोपपत्तेः कृतमुपहितेश्वरेण, अध्यारोपाविशेषात् । नन्वस्ति विशेषो व्यावहारिकप्रातिभासिकारोपाभ्याम् । तथा चेश्वरः प्रजापतिरिति व्यावहारिकोऽतिरिक्तः प्रमाणैस्तादृशैरेवोपगम्यते । तुरीयं तु वाक्यतात्पर्यविषयमिति चेत्, ईश्वरेऽपि प्रातिभासिकारोप एवास्तु । तादृशप्रमाणानामपि प्रतिभासविषय एव सावकाशत्वात् कर्तुरसिद्धिरिति चेत्, तर्हि तस्योपास्यत्वमेव निषेधामः, कर्तृत्वेन प्रकारेणानुपास्यत्वे पर्यवसानात् । उपदर्शय वा कर्तारमपि मीमांसकसरणिम् । अध्यारोप्यधर्माणां हेयत्वमिति चेद्विज्ञानदशायामुभयोरेव जीवेशयोर्धर्मा भवन्मते तथाविधा एवेत्याशयेनाहुः द्वैयत्वेति । तस्माद्यदीश्वरधर्मा न हेयाः, अत एव नाविषयाः, अहेयस्योपादेयत्वनियमात् । अज्ञानव्यष्टिषु विश्रान्तो हेयोपादेयभावो न ब्रह्मणीति तस्योपादेयत्वमपि नास्तीति चेत् उपादेयताया ब्रह्माध्यारोपनीतत्वेन विभूतिपर्यवसितायाः ब्रह्मणो वेदाश्रितत्वात् । मुमुक्षुसाधनेति । अयं भावः 'तमेव विदित्वे'ति तच्छब्दपरामृष्टजगत्तादात्म्यापन्नत्वेन पुरुषज्ञानं तदभेदज्ञानं च जीवस्योभयविषयतया मोक्षकारणं न तु तयोः पृथक्त्वेन पृथग् ज्ञानम् । ईश्वरज्ञानस्यापि देहीत्यादिवाक्यनाविरुद्धत्वात् । तामनिवर्त्य मोक्षसाधनस्यायोगात् । देहादिविविक्तत्वेन जीवज्ञानस्य च 'तमेवे'त्यादिवाक्यार्थबोधाविषयत्वात् । अनुत्पत्स्यमानदुरितोत्तरक्षणवृत्तित्ववद्ध्वस्तदुरितध्वंसत्वस्यार्थसमाजग्रस्तधर्मत्वात् । प्रमाणमाहात्म्ये च परमेश्वरज्ञानपर्यवसितत्वात् । एतेनार्थसमाजसिद्धधर्मस्य कार्यतानवच्छेदकत्वेन प्रमाणाभावो बीजम् ।

प्रकृते तु प्रमाणमेवास्तीति समाधानं सिद्धान्तानुकूलमित्युक्तं भवति । मुक्तिस्वरूपस्य प्रकारान्तरेण वक्ष्यमाणत्वात् । यच्चोक्तम्–ईश्वरज्ञानस्य वासनायामविरोधित्वमिति, तदयुक्तम्, स्वरूपतस्तस्य पापादिविरोधित्वानुपपत्तेः । किंच नित्यसुखाभिव्यक्तिः, प्रेयोरूपनित्यज्ञानाभिव्यक्तिर्वा मुक्तिरिति पक्षे जगत्कारणस्यापरमेश्वराभेदज्ञानं तत्समसमयं सर्वाभेदप्रतिपत्तौ फलिष्यतीति मोक्षप्रमाणबलाज्जीवेश्वराभेदसंपत्त्यैव नित्यसुखाभिव्यक्तिः, इतरथा जीवस्य नित्यसुखे प्रमाणाभावादीश्वराभेदस्य च भवद्भिरनङ्गीकारादिति । प्रकृतमनुसरामः । तस्मादीक्षत्यधिकरणसिद्धं जगत्कर्तृत्वादिकमीश्वरगोचरज्ञानस्य तदुपयोग्युपासनायाश्च विषयीकृत्य मोक्षकारणतावच्छेदकत्वेनान्वयितं महावाक्ये तत्त्वपदपरामर्शात्स्वरूपसमन्वयं नौपाधिकं, किन्तु वास्तवम्, वृत्त्याद्यवच्छिन्नचैतन्यस्य चैतन्यावच्छिन्नत्वस्यादेर्वोपासनात्वेन तत्त्वज्ञानाविरोधात्तद्विषयरूपाणामपि हेयत्वमेव, स्वरूपधर्माननुप्रवेशादित्याशयेनाहुः । इतोऽपि हेतोर्निर्गुणं प्राकृतगुणराहित्येन स्वरूपविषयदर्शकत्वेन गुणत्वव्यवहारो विषयस्वरूपमेवेत्यर्थः । सूत्रे चकारेणोपादेयत्वसङ्ग्रहः । ननूपहितमेवेक्षत्यधिकरणविषयः, विषयताया अपि स्वरूपसम्बन्धरूपायाः संसर्गत्वेन कल्पितत्वात्, स्वतोऽविषयत्वश्रुतेरित्यादाय ग्रन्थस्यास्य चतुर्लक्षणमीमांसात्मकत्वं सूचयितुं सिंहावलोकनेन प्रथमाधिकरणं स्मारयन्ति अथात इति । ब्रह्मजिज्ञासाशब्दो योगरूढिभ्यां सगुणनिर्गुणयोर्ज्ञानेच्छाविचारयोश्च द्वयोर्द्वयोः प्रत्येकं बोधकौ । तेनाधिकारार्थत्वनिवृत्तिः । आनन्तर्येणापि कर्मणिच्छा सम्बध्येत, विषयविशेषपरतन्त्रत्वात् । विविदिषाश्रुतेः कर्मापेक्षाया असार्वत्रिकत्वात् । शमाद्यानन्तर्ये तस्यैवाधिकारिविशेषणत्वासम्भवात्, अधिकारार्थविरोधात् । अत्र सगुणस्य स्वातन्त्र्येण जिज्ञास्यत्वम्, गुणान्तर्भावेण वा । नाद्यः, तज्जिज्ञासार्थमधिकरणशरीरस्य पूर्वपक्षस्य भेदप्रसङ्गात् । तथाहि जिज्ञास्यस्याहमिति प्रकाशमानत्वात्संसारानुभवाच्च तन्निवृत्तिबोधकानामर्थवादत्वाद्द्वैतदार्ढ्याच्चाजिज्ञास्यत्वे वैयर्थ्यात् प्राप्ते देहाध्यासस्यानुभविकत्वात्तन्निवृत्त्यर्थं शास्त्रारम्भ इति हि निर्गुणजिज्ञासायाम् । सगुणायां तु सगुणानामानन्त्याद्द्वैतविरोधाद्द्वैतात्मना तादात्म्यादिप्रकारेणैकविधब्रह्मणः समन्वयानुपपत्तावसिद्धेर्व्यर्थो विचार इत्यादिकमाक्षिप्य ज्ञानस्यैकविधविषयत्वे स्वपक्षमेकविज्ञानप्रतिज्ञानानुपपत्त्युपसंहितैकविधसमन्वयनिर्वाहकं पुरस्तादेव, अतःशब्दार्थतया प्रतिज्ञार्थस्य विविक्ततया व्यासैर्मीमांसारम्भाय स्तम्भास्तम्भ इवाव्यभिरोपितायाः ब्रह्मपदस्तम्भेनप्रतिपन्नत्वात्, अन्यथा तत एव शास्त्रपरिसमाप्तेः स्वव्यर्थाविरोधियोगस्य विषयताविशेषात्मकस्य ब्रह्मस्वरूपसंसर्गलक्षणस्य स्वीकारात् । निर्विकल्पकानभ्युपगमस्य प्रपञ्चनीयत्वात् । यत्तु विषयतायाः कल्पितत्वमभाणि, तन्नोक्तम् । कल्पकं हि सर्वत्र चैतन्यमनाद्युपहितं चेत्, तदपि सत एव, नोपधानात् । अन्यथा स्वाध्यासानुपयोगात् । स्वरूपत्वेन्मुक्तावपि तत्स्वरूपं विजयते । अज्ञानप्रवर्तकत्वं चेक्षितृत्वमेव कल्पकत्वम्, तदपि वृत्तौ, तस्य सत्त्वात् । भावाभावत्वयोरुभयोः स्वरूपसम्बन्धरूपत्वे विषयत्वादेरपि स्वरूपानतिरेकात् अधिकरणत्वनिवृत्तौ मुक्तिरपि निवर्तेत । तस्माद्विषयात्मविशेषो मुक्तावपि साधारणोऽनुपप्लव इति भवति व्यवस्थितिः । दृश्यसम्बन्धात् दृष्टिदोषो न संभावनीयः । सर्वज्ञदृष्टेः संस्कारकतया सर्वात्मभावमादायाऽदोषात् दृश्यनिवृत्तावपीक्षतेः स्वरूपधर्मत्वात्, नित्यमनुभूयमानधर्माणां शुद्धसगुण एव समन्वयसाम्राज्यात्तथैव व्यवहारसमर्थनार्थं शास्त्रारम्भात् । तदुक्तम्–लौकिको वैदिक इति । यथा महाभाष्ये लौकिकानां वैदिकानां चेति । सेयं व्यासस्य प्रतिज्ञा एकविज्ञानेन सर्वविज्ञाने पर्यवसितेति हृदयम् । उपक्रमोऽप्ययमेव, श्रुतौ वा 'सदेवेदमग्र' इत्युपक्रम इति श्रुतिव्यासयोर्हृदयैक्यम्, तच्छ्लोकोऽपि स्वयंप्रकाशतां पारिभाषिकीमाश्रित्यान्वयभाजि प्रकाशते, अहो भगवन्महिमानमिह वेति हृदयम् । जन्म स्वाधिकरणसमयतिरोभावानधिकरणसमयसम्बन्धः । समयः सत्ता । 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः' इति वैतानिकी सृष्टिः शास्त्रदृष्ट्या निरूप्यते । शास्त्रदृष्टिविशिष्टा हि सृष्टिः पुष्टेर्मता यतः । शास्त्रप्रवर्तको देवस्तां निरूपयितुं क्षमः, । अत एव भाष्ये सूत्रद्वयम् । तथाहि सुखादिरूपादिपदार्थानां संस्कारविशेषविशिष्टत्वेन सृष्टिर्वैदिकनियम्येति वेदकर्तृसर्वज्ञकर्तृकत्वेऽविधेयायाः शास्त्रत्वादिसूत्रावयवसमभिव्याहारादेव तभायोगविभागस्य सूत्रद्वयोपजीवकत्वाच्च प्रथमाधिकरणे कारणाभावादधिकरणान्तरत्वायोगात् । इदमेव हारादेव ... विषयवाक्यत्वशास्त्रीकरणत्वम् । सत्तया वा सा, 'तेनात्मनेदं सर्वमनुजते' ति श्रुतेः । न च यत इत्यादिना विषयवाक्यत्वा-

भान्त्यक्तेत्यादिलाभः, उक्तरीत्या वैदिकदृष्टेरप्राप्तेः। सूत्रावयवस्य यत इत्यस्य वेदावयवत्वेऽपि ब्रह्ममात्रस्फोरकत्वेन शब्दस्य शाब्दबोधविषयत्वानियमाच्चेति। कर्तृत्वं नवधा परेषामपि मायाख्यसामर्थ्यनियन्त्रितं, नाध्यासिकम्। इदमेवास्यालौकिकत्वम्। न च न्यायसंमतं कर्तृत्वमप्यलौकिकं स्यादिति शङ्क्यम्। अनुमित्यायामपि शाब्दसिद्धेः प्रतिबन्धकत्वात्, अनुमित्सकल्पनागौरवाच्च विलक्षणकृतिसिद्धेर्वेदैकनियम्यत्वेनालौकिकत्वस्यौपनिषदपक्ष एव परिष्कारात्। एवंविधकृतेः कार्यकारणभावलभ्यत्वं तु नाशङ्क्यम्, कार्यत्वस्यैकस्याभावात्। न चैवं शब्देनापि कथं तदवबोधः, प्रमेयत्वादिना शक्तिग्रहपक्षस्याप्रसिद्धस्थलीयस्यास्वं न स्वमतसिद्धान्तानुकूलस्याविस्मरणीयत्वात्। एतदपि कर्तृत्वं यद्यपि स्वरूपलक्षणे न प्रविष्टं, तथापि सत्यत्वादिधर्मतुल्ययोगक्षेमं कर्तृत्वं फलतः सर्वज्ञत्वमेव, स्वयं सर्वज्ञेनेयं संपादिता विषयता बहुभवनेच्छारूपा, तया हि दृष्टिर्लौकिकं प्रति विषयतेति निषेधात्, तदिदमुक्तमाकरे कुतो नाङ्गीक्रियत इति। एवं च निषिध्यमानं कर्तृत्वं विकाररूपं जीवसाधारणम्। यदा तु जीवशरीरावच्छिन्ना मत्स्यादिशरीर इव युगपच्चेष्टाकारणस्यात्ममनःसंयोगस्य मत्स्यकृतावभावादीश्वरीयकृतिरेव कारणम्, न तदा विकारपक्षोऽपि। विकारास्त्वाविर्भूतब्रह्मात्मभावारूढुद्भवाः पदार्थाः प्रवाहिका यास्कोक्ताः जायत इत्यादयः। अनाविर्भूतफलतादात्म्यानि साधनानि मर्यादायां कारणीभूतब्रह्मतादात्म्येन ज्ञातानीति, अतस्त्रेधा व्याख्यानं भाष्ये। प्राथमिकमुत्तरोत्तरं च प्रामाण्यमिति पूर्वत्राख्या कुड्यस्यमिधानम्। यत्राकाशोऽपि ब्रह्मसत्तासंपादितसत्ताकतया ब्रह्मकार्यम्, तत्र कैव कथा जन्यपदार्थानां कार्यत्व इत्यभिसन्धिः। अत्र सत्यत्वादिधर्मांविषयकब्रह्मभानाङ्गीकारे तस्य निर्विकल्पकत्वं वक्तव्यम्, तच्च विवादास्पदम्, भ्रमाधिष्ठानत्वादिना 'सत्यं ज्ञान'मित्यादिस्वरूपलक्षणेनाप्रतिपादनात्, सत्यत्वादेरभावस्वरूपस्याधिकरणात्मकत्वे स्वरूपसम्बन्धरूपभावरूपत्वे लाघवमादाय विनिगमनाविरह इति मुग्धूकं ब्रह्मज्ञानमेव भवेदिति। किञ्च जन्मज्ञानाभावरूपं ब्रह्मापि स्वरूपतो भवेदित्याशयः। जन्म पुनराविर्भावरूपं श्रुतत्वात्, शास्त्रदृष्ट्या श्रवणविषयत्वात्, सर्वत्र पदार्थ इति तद्भेदाः स्थित्यादयः, सत्त्वेन हि स्थित्यादिप्रवेशोऽपि कारणाध्यासितसत्तेति प्राणनभासनादयो गुणाः 'को ह्येवान्यात्' 'तमेव भान्त'मित्याद्युक्ताः, तेऽपि यत इति फल्गवाक्ये योज्याः। तथा चायमास्वण्डकभाष्यार्थः। अध्याहार इति पर्यन्तं शास्त्रे इत्यतः प्राक्। अन्यथा बहुव्रीहिरित्यादिसन्दर्भविरोधः। अत्रातद्गुणपक्षाङ्गीकारे रुचिः पुष्टिपक्षपातात्, प्रवाहमर्यादयोररुचिः 'अथ चे'ति द्वाभ्यां सूच्यते। तुरीयपक्षस्तु पुष्टिः। आद्ये त्वाविर्भाव एव जन्मपदार्थः, सचाक्षेपाल्लभ्यते, अनाविर्भूतस्य स्थित्यादेरयोगात्। स्थित्यादेरनियमाच्च न तयोराक्षेपः। न च स्थित्यादेरप्याविर्भावपूर्वकत्वानियमः, आकाशादेरप्याविर्भावस्य परमाण्वादेश्च 'द्यावापृथिवी' त्यादिनाऽऽविर्भावप्रतिपादनात्। ज्ञातत्वलक्षणाविर्भावस्य, 'यतो द्रव्यं गुणाः कर्म सामान्यं सविशेषक'मित्युदयनैरभिधानाच्च। किञ्च तद्गुणसंविज्ञानपक्षे विशेषणस्यारुणाधिकरणन्यायेनान्वयाङ्गीकारे एकविशेषणत्वेनोपस्थितस्यैत्यादिनियमानुगृहीते एकपदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनान्वयबोधं प्रति विशेष्यतान्तरानिरूपितप्रकारतयोपस्थितेः कारणत्वे मुख्यप्रकारत्वं प्रविष्टम्, तन्नोपपद्यते। आख्यातेस्तु विधेयभावनायामनन्यगतिकोऽन्वयः। अन्यथा सर्वत्र परम्परासम्बन्धानामन्वये पटत्वादेरनित्यत्वान्वयवारणाय बाधबुद्धेः प्रतिबन्धकत्वान्तरकल्पने गौरवाच्चेति प्रभुचरणाविष्कृताधिकरणमीमांसासंचारी भाष्यार्थः प्रसङ्गाद्दर्शितः। प्रतिज्ञाहानिर्निग्रहस्थानमेकम्। उपक्रमविरोधो द्वितीयम्। 'यस्य भागवतं पद'मित्येकवचनात् सर्वशत्लक्षणं माहात्म्यं पद्यते गम्यते धर्मी अनेनेति भक्त्यंशो दर्शितः। 'अहमेव वेद्य' इति प्रेयोंऽशः। 'वेदान्तकृद्वेदविदेव चे'ति वेद एव सर्वस्मिन् वेदितार्थमनन्याधिगतं समधिगम्य यावानर्थस्तावन्तं ततो वेदान्तं शिरोभागं मूर्धाभिषिक्तं तमर्थं कर्तुं वेदान्तं सोपस्करं कृतवानस्मीत्यर्थः। तत्र गीता 'दिव्यं ददामी'ति सर्वस्यैव गीतार्थस्य तात्पर्यविषयत्वात् तदर्थो नेत्रम्। मुखं श्रीभागवतम्। वेदा अलकाः। सूत्रं श्रीकण्ठ इति। वेदान्तत्वं च वेदादिप्रमाणचतुष्टयसाधारणं भगवत्तात्पर्यग्राहकमानत्वमिति वेदान्तनिरुक्तौ विस्तृतमस्माभिः। अध्यारोपेत्यादि। उपजीव्योपजीवकभावस्य ताद्रूप्येण लाभाय। तथा च प्रतियोगिसमर्पकत्वं धर्मवाक्यानाम्। न च निषेधवाक्यादेव तल्लाभः, तदधिकरणे तदारोपस्यापेक्षणीयत्वात्। आरोपस्याहेतुत्वे तु प्रति-

योगिनां प्रामाणिकत्वं श्रौतत्वेन स्वातन्त्र्येण बोधयितुं सृष्ट्यादिवाक्योपनीतं कर्तृत्वादीति परमतनिष्कर्षः । इदं चापाततः प्रतियोगितावच्छेदकप्रकारकनिषेधनिरूपणवाक्यादेव प्रतियोगिप्रतीतेर्घटो नास्तीति निषेधप्रयोजकयोग्यताज्ञानेनैव घटादेस्तदर्थप्रतियोगिप्रामाणिकत्वश्रौतत्वयोरनपेक्षणात्, योग्यताज्ञानस्य शाब्दत्वे नियमाभावात्। क्वचिदधिकरणे आरोप्यप्रमाहितसंस्कार आरोप्यविषयसंस्कारो वाऽधिकरणांशमनन्तर्भाव्य प्रत्यायकोऽस्तु, तदधिकरणं वा तादात्म्येनाधिकरणम् । मायैव परिणामिनीति चेत्, तर्हि विशेष्यब्रह्मणोऽसिद्ध्या केवलमायावादापत्तेः । एवं सति सृष्ट्यादिधर्मवाक्यानामानर्थक्ये प्राप्ते न निषेधोपयोगित्वम्, अपितु स्वतन्त्रनिरूपकत्वमेव । केनापि रूपेण समानजातीययोरध्यासः संभवतु वा परस्परं मायिकानां, न ब्रह्ममाययोरिति । न च 'नेति, नेती'ति पूर्वपरागृष्टयावद्रूपनिषेधः श्रौतानामेवेति साम्प्रतम् । विधिनिषेधविशिष्टनिषेधेनेत्यादेरपि निषेधे 'अस्ति ब्रह्मेती'तिप्रशंसासामर्थ्याद्भावरूपधर्माणां स्वरूपविषयताविशेषाणां ब्रह्मणि साम्राज्यस्यादेशार्थत्वादितीक्षणीयम् । श्रुतिसिद्धेति । ननु सृष्टिप्रतियोगित्वेन जगत्प्रतीतिः श्रुतिसिद्धैवेति चेत्, न श्रुतिमात्रविषयत्वाभावे तात्पर्यात्, पूर्वापरग्रंथानामपि कस्यचित्प्रत्यक्षत्वात्, आबालकस्यापि स्वसृष्टेः प्रत्यक्षत्वात्, तत्कर्तृत्वं श्रुत्युपजीविना प्रमाणेन श्रुत्या च प्रतिपन्नं तन्मात्रसिद्धमेव । सृष्टस्य जगतस्तु प्रत्यक्षादिलोकप्रमाणसिद्धत्वात्तदनुवादेन कर्तृत्वं प्रसाध्य पश्चान्निषेधतीति प्रकारं निराकुर्वन्ति कार्यस्येति । अयमभिसन्धिः—सृष्टेर्निषेधो वा, कर्तृत्वादिनिषेधो वा, विशिष्टनिषेधो वा? । आद्ये सृष्टेरनुवादो वक्तव्यः, स कस्याः?, पूर्वपूर्वप्रजापतिसृष्टेर्यदि. तर्हि तत्तत्कर्तृत्वनिषेधेऽपि प्रजापत्यन्तरात्मनाऽऽविर्भूतब्रह्मणि कर्तृत्वे प्राप्ते पूर्वनिषेधेऽपि क्षतेरभावात्, पूर्वापरसकलानुवादेऽपि तत्तत्कर्तृत्वसमुदायानां निषेधे ब्रह्मनिष्ठसार्वदिककर्तृत्वानपहारात् । न च तत्र मानाभावः, 'यतो वा' 'आनन्दाद्धि' इति सदसत्प्रमाणसद्भावात्, सामन्यत एकविधकर्तृत्वस्य निरङ्कुशवेदार्थत्वात् । कर्तृसहितायास्तु नानुवादः, तत्तद्विराजां कर्तृत्वस्यापि प्रमाणैकसमधिगम्यत्वात् तेषां न निषेधो, सुकरीत्येव । एवमपि कर्तृत्वस्यानुवाद्यत्वेनैव पुनः समर्थनाकाङ्क्षाभावात् । भावे चैकविधमेव कर्तृत्वं ब्रह्मणि स्वरूपसम्बन्धात्मकमवश्यमङ्गीकार्यमिति तदननुवादान्निषेधे अनन्वयः । केवलायाः सृष्टेरनुवादे कर्तृविरहिण्या मीमांसकसृष्टेरेवानुवदनीयत्वप्रसक्तेः । अत्रापि निमित्तं विना जगदसंभवाशङ्कायां तस्याः प्रतिबन्धकत्वात्तदनुवादे बाधितविषयस्याप्यनुष्ठानापत्तेः तन्निषेधनिरूपणं शशशृङ्गनिषेधायमानमापतितम् । मीमांसकरीत्यापि नानुवादः, अन्ततः कर्मस्वभावान्यतरस्य निमित्तत्वात्, सम्बन्धसत्ताकस्यानुवादसंभवात्तन्निषेधेऽपि 'यतो वे'त्यादिप्रतिपन्नसृष्टेरप्रतिषेधात् । एवमन्यत्प्रतिषेधद्वयं व्याख्यातम् । एवं सति लोकसिद्धजगतः कर्त्राकाङ्क्षायामवश्यकर्तव्यायां च विषयव्यवस्थायां जीवाश्रिततत्तदसाधारणकर्तृत्वानामेव निषेध्यत्वमुपपाद्य साधारणं सर्वकर्तृत्वं निषेधाप्रयोजकतयोपदिशति कर्तृश्रुतिरिति वक्तुं युक्तम् । ननु बाधितविषयानुवाद्यत्वे मम का हानिरिति चेत्, न निषेधवैयर्थ्यात्, व्यवहारदशायां बाधाभावात्, तदभ्युपगमे निषेधस्य निष्प्रतियोगिकत्वापातात् । वस्तुतो भवतां निर्विकल्पकाभावभानेऽपि बाधकाभावात्कर्तृत्वनिषेधानुपपत्तिरित्युपरिष्टात्प्रपञ्चनीयम् । त्रैकालिकबाधबोधको निषेध इति चेत्, अनुवादवैयर्थ्यमिहोच्यते । अस्तु तर्हि निष्प्रतियोगिको निषेध इति चेत् । अत एवोच्यते अनुवादवैयर्थ्यमिति । स्यादेतत्, किन्तु ब्रह्म त्वेव जिज्ञास्यं, न तु कर्त्रपेक्षेति कर्तृत्वपादनं यत् 'यतो वे'ति तद्द्वारमात्रम्, अरुन्धतीन्यायादिति कथमुक्तं कर्त्रपेक्षायामितीति चेत्, सत्यम्, तथापि जिज्ञासा न निष्प्रकारकज्ञानगोचरेच्छा समान्यतः किंचित्त्वादिना धर्मिज्ञानसद्भावात् । अतः स्वरूपतटस्थलक्षणयोरन्यतरेण प्रकारीभवितव्यम् । यदि तत्र बुद्ध्यारोहार्थं प्रथमतो भवदभिमतरीत्या तटस्थमुपादयात्, तदा तदाकाङ्क्षैव सम्पन्ना । यदि स्वरूपलक्षणं 'सत्यं विज्ञान'मित्युपादयात्, तदा तदेवाकाङ्क्षितं भवतु नाम, तत्तु कर्त्रपेक्षयापि शीघ्रोपस्थितिकम्, कथं पुनस्तदुभयस्य कर्तृपदेशः, स्वरूपलक्षणाभिवृत्तजिज्ञासां प्रति 'यतो वे'ति वाक्यमप्रमाणं च स्यात् । स्वरूपलक्षणप्रतिपत्तिं प्रति द्वारताप्येतेन निरस्ता । नन्वत एव स्वरूपलक्षणावधारणे तत्पुरुषं प्रति व्यावहारिकं प्रामाण्यं तटस्थलक्षणवाक्यस्येति चेत्, किमिदं ताटस्थ्यं नाम, श्रुतिसिद्धान्त्यनुमानप्रतिरूपकाणि 'यतो वे' त्यादीनीति हि वेदभाष्ये स्थितम् । तथा च तदितरभेदानुमापकं तल्लक्षणम्, तच्चानुमिति-

कर्तृत्वमिव सत्यज्ञानादयोऽपि कामं देहभेदमनुमापयेयुः । 'यतो वे'त्यनपित्वेन निर्दिष्टस्य 'यस्साक्षादपरोक्षा-
द्ब्रह्मे'त्यनेनैकवाक्यत्वादचेतनस्याकारणत्वादिस्यविशेषः स्वरूपतटस्थलक्षणयोरस्मत्सिद्धान्ते । किञ्च श्रुतिः स्वक-
र्तृत्वं प्रतिपाद्य स्वस्य प्रोक्तत्वाभावं प्रतिपादयन्ती प्रामाणिकैरुपेक्षणीया स्यात्, अप्रामाण्यापादकत्वात् सुषुप्तस्या-
त्माभिरनुत्थापनादित्याहुः कथमेवमिति । सुषुप्तिदशायां सर्वनिरोधमनुरुन्धानेनास्मदुक्तं मन्तव्यम्, तत्र
हि'न वेदा न देवा' इति श्रूयत इत्यत आहुः सैवेतो बलवती हीति । सुषुप्तौ सर्वाभावान्यथानुपपत्तिस्तु
न बाधिका, आत्मप्रकाशसद्भावात्, चैतन्यरूपेण भासनात्, 'भेदक्षमपदार्थानामभावो भाव एव हि' अदस्थाज्ञान-
त्वाच्च तत्त्वज्ञानविषयतापेक्षया तदन्यथानुपपत्तेर्दुर्बलत्वादित्युक्तं बलवतीति । नेयं तथेति भावः । अग्रे केचित्
अग्निहोत्राहुतिविपरिणामात्मकं जगन्मन्वानाः स तया वात्ता 'तेनात्मनेदं सर्वमसृजते'ति श्रौतमुष्टेः श्रुति-
सिद्धत्वमेवेत्याहुः । युक्तमेव तावदिदम्, पारमार्थ्ये तन्निराकरणं तु विवादास्पदमित्यलं प्रसक्तानुप्रसक्त्या ।
दृष्टिसृष्टिवादी प्रत्यवतिष्ठते नैनूपलब्धिमात्रेणेति । मात्रपदेनार्थक्रियाकारित्वव्यवच्छेदः, अर्थक्रियाकारि-
त्वस्याप्युपलब्धिरेव, अर्थक्रियाकारित्वस्यार्थक्रियाकारित्वाभावात् । तथा च तेनापि रूपेण सत्त्वानियमात्स्वा-
प्निक एव न परमार्थसत्त्वम्, यथात्तत्स्वप्नप्रपञ्चप्रतीतिजा०० वंभिध सर्हि कर्तेतिश्रुतेश्च जीवस्यैव तत्कर्तृत्वम् ।
तथा चैवमपि प्रपञ्चः प्रतिजीवकर्तृको भिन्न एव । एतन्मते ईश्वरः कर्ता न भवति, उपास्यत्वेन परमङ्गीक्रियते
दृष्टिसृष्टिः । तथा च रजतस्वप्नादिवद् विद्यापरिणतिरूपा विषयाकारा वृत्तिरेव, न तु विषयाः । निर्विषयकमेव
तत्तादृशं वृत्त्यात्मकं ज्ञानमिति तन्मतनिष्कर्षेणाहुः प्रपञ्चासत्त्वमेवेति । अत्यन्तासत्त्वमेवेत्यर्थः । अभ्यु-
पगतं चैतज्ज्ञानानन्दादिभिः श्रीहर्षमिश्रैश्चेति तान् प्रति सोपालम्भं तमाहुः । विज्ञानिचापज्ञायकारणाद्विज्ञान-
शून्यो देवानांप्रियः । इन्द्रियदेवता एव च प्रतिवादिनो विज्ञानप्रतिबन्धकाः, अविद्योपासकान् प्रति देवैः स्वतो
ज्ञानप्रतिबन्धजननात् । तत्र स्वप्ने वासनायाः प्रत्यायकत्वेन तत्तुल्याया वासनाया एव तथात्वमाशङ्कते नै
तावदिति । सेर्वेषाम् । उपेक्षासाधारणानाम् । नन्वेतन्मते पुरुषभेदेनापेक्षासम्भवात् सर्वथा साधारणप्रती-
तिनिर्वाहेत्यत आहुः–"नियमे वेति । उद्बोधकमपि पुरुषविशेषनियन्त्रितं फलानुरोधित्वात्कल्पनाया एक-
जातीयं चाद कल्प्यताम्, अत्राहुः उद्बोधकं चेति । दृष्टं ज्ञानविषयीभूतं जगदेव, यत् किञ्चिद् दृष्टज्ञानमिति
यावत् । अन्योन्येति । दृष्टप्रतीतिनिर्वाहार्थं प्रयतमानेनादौ प्रतीतिरेव नासादिता, कथं पुनरसिद्धावस्थोद्बो-
धिकेति तत्सिद्धौ तत्सिद्धेरन्योन्याश्रयप्रसङ्गादित्यर्थः । नापीति । यद्यपि सत्त्वतत्त्वेनोद्बोधकत्वादशोद्बोध-
कतां च दृष्टसामग्री नापेक्ष्यते, इयं च विलक्षणैव सहकारणता, तथापि सर्वत्रादृष्टं साक्षादेव हेतुरस्तु, अन्ततः
सामग्री प्रत्यपि कारणत्वात्, अन्यथा दृष्टानवस्थानात् । ननु तर्हि प्रतीतिसामग्र्यप्यदृष्टमपेक्ष्य प्रतीतिं जन-
यिन्वा तदुद्बोधकत्वाभाद्वासनापर्यवसायिनी स्यादिति चेत्, तथाप्यदृष्टस्यैव प्रत्यायकत्वोपपत्तेरितरकारणैयर्थ्याच्च
अन्यस्यादृष्टनाशादिकल्पनापत्तेश्च, यथापि सामग्रीपूर्वकं कार्यं दृश्यत इत्यदृष्टस्य तद्द्वारा स्वातन्त्र्येण वा कारणत्वे
उद्बोधकत्वस्थितौ को दोष इति चेद्, वामनयेति त्यज्यताम्, साक्षाददृष्टकारणत्वोपपत्तेः । अदृष्टस्य तु यागादि-
जन्यत्वावगत्प्रतीतिः श्रुतिसिद्धेन, सच्चेद्या०० तथाऽऽसादयेत् । श्रौतं तु न वासनाधीज्ञप्तिकं, स्वर्गजनकत्वादेव
वासनाया अभावात्, अत्यन्तासद्वादिनोऽऽप्यास्तिकत्वात् । अस्तु तर्ह्येतन्मतेऽप्यध्यासावच्छिन्नैव जगत्प्रतीतिः
श्रुतिसिद्धेत्यनुशयानं वादिनं प्रतिवादिन उपस्कुर्वते नैनु जीवाविद्यैवेति । एवकारेण वासनाव्यवच्छेदः ।
तथाहि अनुभवपूर्विका वासना, अनुभवस्तु न वासनापूर्वकत्वनियमाश्रयः, तथा चायानुभवो न वासनयेति
संभवति, अनादिवासनापक्षेऽपि कार्यकारणभावानुपपत्तेरनुभवस्याप्यनादित्वापाताच्च । इष्टापत्तौ सव्येतरविषा-
णयोरिवानुभववासनयोर्मिथः कार्यकारणभावे मानाभावाद् बीजाङ्कुरानवस्थायामिवोपपादनेऽपि वासनैकनियत-
जगत्प्रतीतिखण्डनस्यैव प्रपञ्चकार्यकत्वात् । तथापि वासना लब्धप्रसरेति यदि विभाव्यते, तदा संस्कारजन्य-
त्वेन स्मृतित्वापत्तिर्ज्ञानमात्रस्य । अनुभवमात्राविद्धिश्च, प्राक्तनानुभवस्यापि संस्कारजन्यत्वात् । न चेष्टापत्तिः,
साक्षात्करोम्यनुमिनोम्यनुभवामीत्यादिप्रत्ययापलापापत्तेः । प्रत्यभिज्ञायैतत्समर्थनेप्ययमंशे संस्काराभावात्, तस्मा-
दसति सन्निकर्षादिप्रमाणप्रणाल्या अनवतारादसतो भानं दृष्टिसृष्टिन्यायेन दुरुपपादमिति समासः । नन्वीश्वरस्यै-

तन्मते प्रपञ्चदर्शित्वं न स्यात्, तस्याऽविद्याविरहादिति चेत्, एतन्मते ईश्वर एव न मानं, का कथा तस्य दर्शित्वे। भोग्यरूपेणेति। धर्मिप्रतियोगिज्ञानाभ्यां व्याघातापत्त्याऽहमज्ञ इति प्रतीतेर्ज्ञानसामान्याभावविषयत्वेनोपपादयितुमशक्यत्वाद्, घटप्रमा स्वविषयावरणस्य प्रागभावव्यतिरिक्तवस्त्वन्तरपूर्विका, प्रकाशकत्वात्, अन्धकारस्थप्रथमोत्पन्नप्रदीपप्रभावदित्यनुमानाच्च भावरूपमेव तन्मतेऽज्ञानमिति, तत्राहुः तुच्छत्वादित्युपलक्षणम्। भावाभावरूपकार्योपादानस्य भावाभावाभ्यामनिर्वचनीयत्वमेवेत्यर्थः। जीवाविद्यैव जगत्प्रतीतौ हेतुरित्युक्तम्, तत्र सोपाधिकजीवस्वरूपवादिनां जीवस्यापि जगदन्तःपातितया तत्प्रतीतावपि स्वाविद्या हेतुरिति वक्तव्यम्, तदपेक्षाधारापेक्षायां जीवचैतन्यं तथा वाच्यम्, न चैतद्द्वयमपि संभवतीत्याहुः प्रथमं जीवेति। शक्तिः प्रपञ्चप्रतीतिकारणतावच्छेदिका नवेति विप्रतिपत्तिर्विचारबीजम्, विचारो मीमांसा ब्रह्मण एवोपक्रान्ता। शारीरस्तु न ब्रह्मपदव्यवहारविषयः, नातः शारीरकमीमांसा, किन्त्वादेरानन्दस्य ब्रह्मणो मीमांसेति जीवस्वरूपं ब्रह्मैवेति तथोक्तम्। तथा चेश्वरविचारोऽप्युपलक्ष्यते, प्रतिबिम्बप्रकरणात्, मायायां ब्रह्मप्रतिबिम्बस्य तन्मते ईश्वरत्वात्। तथा चायं प्रकरणविभागः 'सर्वे वेदा यत्पद' मित्येतत्पर्यन्तं समन्वयाध्यायविषयः। आविर्भावप्रकारभेदात्सर्वसमाधाने सर्वाविरोधः आविर्भावप्रकरणे। लीलानित्यत्ववादात्पूर्वं साधनाध्यायविषयः स्फुटीभविष्यति। लीलाशास्त्रार्थः फलमिति। विचारस्वरूपं तावत्। तत्र उक्तविप्रतिपत्तौ विधिकोटिः परेषाम्, प्रसिद्धिः स्वपे, अविद्यानिषेधकोटिः सिद्धान्तिनाम्। ननु विषयतासम्बन्धस्वरूपशक्तेरस्या अङ्गीकारात्, तत एवोपपत्तेश्च। तथाहि जीवस्वरूपप्रतीतौ किं कारणतावच्छेदकम्। जीवत्वं त्वहंप्रतीतिविषयत्वम्। अहन्त्वं च सत्तात्तेदन्तादिवदननुगतं वाच्यम्। यत्तु सत्तादिकमनुगतमिति, तन्न; तत्ताया अप्यननुगतत्वापत्तेः। घटाद्युपाधिभेदेन सत्तादेरिव सत्ताया अपि भेदात्, सर्वकालसम्बन्धित्वस्य घटादौ नैयायिकैरनङ्गीकारात्, पूर्वमसदिति प्रलयानां तैरनभ्युपगमाच्च, सामान्यतः सदिति व्यवहारविषयत्ववत्तत्तेदन्तयोरपि समानत्वात्। तथा चाहमित्यर्थः श्रुतिप्रतिपन्न उपपत्तिप्रतिपन्नश्चानुगतः प्राजापत्य एव, स चायं प्रजापतिः श्रुतौ बृहदारण्यके गीतो जीवैरप्यासुषुप्तमनुभूयमानो न मायाप्रपञ्चवृत्तिविषयः, स्वप्रकाशस्य स्वयंज्योतिःपुरुषस्य 'तमेव भान्त' मित्यादिनाऽविद्यादिभासकत्वेन सिद्धस्य स्वभास्यभास्यत्वायोगात्, अहंप्रतीतेरविद्यादिवृत्तित्वे मानाभावात्, सर्वदैवाहमर्थभानात्, अविद्यान्तःकरणादिघटितप्रणाल्या अनपेक्षणात्, स्वप्नसुषुप्त्यादिदशायां स्वयंज्योतिषो आप्रदादावविद्याविषयत्वानुपपत्तेः। 'अत्रायं पुरुषः स्वयंज्योति' रिति सुषुप्तिमधिकृत्य श्रुतेरहमाकाराविद्यावृत्तिस्वीकारस्य तदानीमप्रामाणिकत्वात्, नैयायिकानामप्यात्ममनःसंयोग एव शक्तिजातत्वेन संक्रमत्वेन वा कारणता, विजातीयमनःक्रियाद्यभावादेवात्मनि तत्संयोगानुत्पत्तौ सुषुप्त्यनुरोधेन त्वङ्मनोयोगस्य हेतुत्वे मानाभावाच्चेत्यन्वयेन। तथापि मनसोऽपेक्षणादात्ममात्रभास्यत्वं सर्वस्य, कथमिव प्रपञ्चे सर्वेन्द्रियाणां सर्वप्रमाणानां चापेक्षणादात्मनः स्वपरसाधारणस्वप्रकाशत्वसिद्धिरिति चेत्, नैवम्, आत्मनः क्रियाद्यभावादात्मानं सर्वेऽप्यनुसरन्तीत्यात्मप्राधान्यं ज्ञानादपीति मन्यन्ते। वस्तुतस्तु सर्वत्रात्मभानाभ्युपगमादहं जाने इत्यनुव्यवसायाज्ज्ञानभानमात्मभानपूर्वकं धर्मितावच्छेदकज्ञानतयाऽऽत्मत्वज्ञानापेक्षणात्। तदात्मत्वज्ञानं च न मानसम्, ज्ञानधर्मितावच्छेदकीभूतात्मत्वस्य ज्ञानविषयतावहिर्भावेणाभावात्, मानसविषयतादीनां मनःसंयोगप्रयोज्यत्वादनन्तानात्मसंयोगकल्पनायामेकस्मिन्नेव विषये संयोगधाराकल्पनाया अनौचित्यात्। तत्तदात्मा नित्यज्ञानविषयतामवलम्ब्य स्वप्रकाशत्वमापादयतीत्यवश्यमङ्गीकरणीयम्, आत्मनः स्वपरसाधारणज्ञाने नित्यविषयतातिरिक्तविषयतानभ्युपगमात्। न चैवं नित्यं स्वपरसाधारणभानापत्तिरिति वाच्यम्, स्वात्मनः स्वविषयकज्ञानावारणे सम्भिन्नताया इष्टत्वात्, सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तिसम्बन्धेन तत्प्रत्यक्षे इष्टापत्तेः। कामिनीप्रत्यक्षादावात्मनोऽपि न भानमित्यस्य प्रवादस्य कामिनीत्वेनैवात्मभानमात्मत्वेन वा कामिनीभानमित्यत्र तात्पर्यात्। अथ प्रपञ्चावरणप्रसङ्गे लोकायतसामग्र्यपेक्षा स्यात्, न स्यात्, उभयवादिसिद्धनित्येच्छायाः सर्वविषयत्वोपपादनार्थं नियामकमार्गणे अस्मादस्मादिदमिदमित्यादिप्रकारप्रकारिभावेनेच्छायाः फलबलकल्पनीयतया तत एवातिप्रसङ्गवारणाद् विशिष्टेच्छाकारणत्वव्यवस्थापनप्रसङ्गे चास्य प्रकारस्य पत्रावलम्बनव्याख्यायां विशदीकृतत्वात्। न चैवमेककारणपरिशेषापत्तिः,

इतरेषामवच्छेदकत्वादिति वाच्यम्, ब्रह्मवादिनामिष्टत्वात् । इदमेव स्वप्रयोगभयसाधारणमन्तर्यामित्वमामनन्ति । स्यादेतत् । प्रकारप्रकारिभावेन विशिष्टेच्छाया विषयताविशेषपर्यवसितायाः सम्बन्धत्वमखण्डकरसम्ब्रह्मणि नियतमनियते स्वीकरणीयम्, आहोस्वित्, अविद्यैवाहमज्ञ इत्याद्यनुभवसिद्धभावाभावरूपापटितघटनापटीयसी ब्रह्मणः शक्तिरिति चेत्, 'आश्रयत्वविषयत्वभागिनी'त्यादिसिद्धान्तविरोधः । एतन्निरूपकत्वेनैवाज्ञानसिद्धिः, अज्ञानाश्रयत्वविषयत्वयोर्ब्रह्मणि तन्निरूप्यत्वादिति चेत्, तन्निरूप्यधर्माणां तदात्मकत्वेन केवलचैतन्याश्रयत्वानुपपत्तेर्दुरुद्धरत्वात्, तस्मादविद्यावादिनापि तदाश्रयत्वविषयत्वे चैतन्यनिरूपिते चैतन्यनिष्ठस्वरूपसम्बन्धरूपे अकामेनाप्येषितव्ये । ततश्च स्वतन्त्रं ब्रह्म, अस्वतन्त्रा प्रकृतिरवश्यम् । परतन्त्रापरश्च परः पुमानिति निर्व्यलीकः पन्थाः । ईश्वरसिद्धावीश्वरप्रमाण्यत्वं नित्यप्रमाण्यत्वं वा संभवति, अक्षेतरोऽविद्यानुमाने उपाधिः पुनरनुसन्धेयः । न च व्याघातः, यादृशप्रतियोग्यधिकरणोभयोपहितो यदभावप्रत्ययस्तदधिकरणोपधानेन न प्रतियोगिज्ञानाधिकरणादिज्ञानमभावज्ञाने हेतुः । तथा च सामान्यतो घट इत्यादिज्ञानसत्त्वेऽपि तत्तादृशाधिकरणे घटमहं न जानामीत्याद्यभावप्रत्ययाकारात्तस्य चासिद्धत्वात् अभावप्रत्ययनियामकसामग्र्या भावात्मकाभावप्रत्ययसामग्रीत्वसंभवाच्च, धर्मिप्रतियोगिसत्त्वे घटाज्ञानप्रत्ययः स्यात्, ज्ञानादेर्भवतामप्यावश्यकत्वाच्च । ततः सिद्धत्वप्रसङ्गात् प्रतियोगितया च घटाभावज्ञानं घट इति ज्ञाने प्रतियोगितया न घटज्ञापनमित्यादियुक्तिभिर्व्याघातस्यापि व्याघातात् । न तीर्यद्विद्यायामिति । अविद्यायां ब्रह्मप्रतिबिम्बो जीव इति नेत्यर्थः । अविद्यायामित्याधारसप्तमी । आधारत्वं वैज्ञानिकं प्रतीत्युभयसम्बद्धानुविधायित्वार्थकम् । बिम्बपदेनैव ब्रह्मत्वाभेऽपि ब्रह्मैव जीव इत्यभेदध्वननाय ब्रह्मपदम्, बिम्बत्वस्याननुगतत्वात् प्रतीतियोग्यत्वप्रापकं बिम्बपदम् । इत्येवं लक्षणमुखेन संमुखो ग्रन्थः । प्रतीतियोग्यत्वमात्रस्य बिम्बघटादिसाधारणत्वात्सत्यन्तम् । तावन्मात्रस्य दर्पणरेखायां वा चाकचक्यादिमत्यां शुक्तिस्वच्छमौक्तिकादौ च सत्त्वात्संमुखस्थितार्थानुविधायित्वनिवेशः । सम्मुखस्थितत्वे अनुकारिणि मेघेऽतिव्याप्तेः सत्यन्तान् पार्थक्यम् । तादृक्ता सन्निकृष्टे पदार्थे पुरुषान्तरेणाप्यप्रतीते प्रतिबिम्बव्यवहाराभावात्ततःप्रतीतियोग्यत्वम् । स्वतपसस्यवारणायेति । अत्र यदि प्रतीतिर्लौकिकचाक्षुषम्, यदि वा प्रतिहतचक्षुष्ट्वं प्रतिबिम्बनम्, उभयथापि ब्रह्मणो नीरूपत्वात्प्रतिबिम्बायोग इत्याहुः शुंक्तिसद्द इति । अत्र प्रतिपातनियमाभावात्तत्तदुपाधिनिष्ठत्वेन संयोगानामेव तेजोविशेषप्रतिपातकत्वात्पार्थिवस्य दर्पणस्य जलादेर्वा प्रतिबिम्बनिरूपकत्वानुपपत्तेः, प्रतिघाते वा दर्पणादेरप्यग्रहणप्रसङ्गाच्च प्रथममेव लक्षणमिति निबन्धानुसारिणः । नन्वेवम् 'उपाधिकालरूपं हि तादृशं प्रतिबिम्बते' इति सिद्धान्तः कथमुपपद्यताम्, तद्रूपस्य विवादास्पदत्वात्, कालस्य नीरूपत्वात्, ब्रह्मणश्च सर्वगतत्वात्, प्रतिबिम्बोपयोगिस्वच्छत्वे मानाभावाच्चेति चेत्, न; नीरूपस्यापि कालस्य षडिन्द्रियवेद्यत्वाभ्युपगमात्, प्रतिबिम्बितस्य रूपस्यैव, आधिदैविके वा रूपाभ्युपगमात्मायो दोषः । ब्रह्मणश्च परैः कात्स्न्येन तथात्वानभ्युपगमात् । आकाशस्येव तत्माकिन्यादेर्ग्राहकत्वं ब्रह्मणोऽपि श्यामरूपग्राहकत्वमिति नोक्तसिद्धान्तविरोधः । ननु सत्त्वतत्त्वान्मायान्तःकरणान्यतरोपाधेः स्वच्छत्वाङ्गीकाराभ्यतरोपोद्भावनं युक्तमिति चेत्, न; गुणविभागस्य सादितया तदुपाधिकजीवस्य सादित्वापत्तेः । अनादिप्रतिबिम्बाङ्गीकाराच्च नेष्टापत्तिः वक्तुं शक्यते । अविभक्तगुणत्रयविशिष्टोपाधेस्तु स्वच्छत्वे गुणान्तरेष्वविशेषान्मलिनप्रतिबिम्बे जीवान्तरत्वापत्तेः प्रतिशरीरमेकैकजीवाङ्गीकारा अनिष्टापत्तिरिति भावः । वायुदारुणोरपीति । दारु घनकाष्ठम् । अन्यथा स्निग्धकलितकाष्ठादेरपि स्वच्छत्वात् । वायुरित्याकाशोपलक्षणम् । तत्र शङ्कते—नैन्विति । तथा चारोपे सति निमित्तानुसरणं, न तु निमित्तमस्तीत्यारोप इति न्यायाद्गुणादावारोपाभावात्तत्रारोप आकाशादौ स एव दृष्टान्तीक्रियते । किञ्च स्वच्छत्वादिकं प्रतिबिम्बे निमित्तं, न तु स्वच्छत्वाभावो निमित्तम्, अभावस्यानियम्यत्वात्, प्रयोज्यत्वादिरूपसम्बन्धाङ्गीकारेऽपि तत्सम्बन्धत्वकल्पनस्य पुरुषधर्मत्वेनाङ्गीकारानङ्गीकारयोर्विवादास्पदत्वान्न तन्न्यायावतार इति भावः । प्रेमामण्डलस्यैवेति । योग्यत्वेन तत्प्रतिबिम्बांश एव प्रतिबिम्बत्वस्वीकारादित्यर्थः । अत्र विवरणानुसारिणः—कथं हि ब्रह्मात्मकप्रतिबिम्बविचारेऽपि प्रमाविषयतोपाधीयते तेनानुभूयमानाकाशविषयतामपहाय प्रमाविषयताप्रमयाऽभिव्यक्तेर्नमाम् । प्रमाणां तु सर्वतः गुरुत्वात्प्रमात्मकत्वाक्षुषसामग्रीमनपेक्ष्यैवाकाशादेर्विषयत्वोपपत्तेः । न चैवमुत्पन्नविषयतापत्तिः प्रतिबिम्बस्येति वाच्यम्,

पश्यामीति प्रतीतिरस्माकमुत्पादनीया, सा च शुक्तिरजतादेरिव लौकिकालौकिकोभयविषयाणां साधारणीति नानुपपन्नं किञ्चित् । तथा चाकाशे समण्डलश्चन्द्रः प्रभामण्डलं चेत्यपि प्रत्ययात्तद्विशिष्टस्य दर्पणादौ प्रतिबिम्बप्रतीतेराधारतांशे भ्रमत्वेन सर्वमत एव प्रतिबिम्बस्य मिथ्यात्वमनुमन्यन्ते । अत्र वृन्दारण्यानुसारिणः—नयनमाकाशप्रतिबिम्बे विप्रतिपद्यामहे, अस्य विपिनसरसीषु राससुधाकरकररञ्जितरमणीयतराकाशप्रतिबिम्बदर्शनात्, परन्तु प्रतिबिम्बानां मिथ्यात्वे विवदामहे । कथं नु नाम विभूतयो रसशास्त्रसिद्धपदार्था वा मिथ्यात्वमावकल्पेरन् । 'आख्यानाय प्रयोजनाभावा' दित्यधिकरणे 'ममैवांश' इति प्रतिबिम्बरूपभक्तजीवस्वरूपपर्यवसायाभिप्रायेण 'अहमात्मे'ति विभूत्यन्तर्निवेशात्तेषां साक्षात्फलाव्यभिचारेणान्तरङ्गसाधनानां स्वरूपविषयताऽन्तःपातात्सम्बन्धालौकिकरासदर्शनप्रस्तावाच्च शिष्टः संसारोऽनाविर्भूतसर्वात्मभावपर्यन्तः हिरण्मयपुरुषात्मनाच सर्वत्र भगवत्प्रतिबिम्बः सर्वस्याधिदैविकम् । गृत्यवच्छिन्नजीवास्तु साधयोऽनन्ता भवतां पर्यवसिताः । न यावत् सर्वात्मभावोदयस्तेषां तावत्संसारिणो भूत्वा न वेदवाक्यार्थं संमन्वते, तेषामिदं साधनमुपदिष्टं श्रीकृष्णद्वैपायनेन । 'प्रतिबिम्बरूपमेकं भगवत' इति हि श्रीमदाचार्याः । अत एव प्रतिबिम्बो विषयताविशेष इत्यभिप्रायेणासम्मुखत्वादिकमसम्मुखानां प्रतिबिम्बानामुपात्तं, तत्तु... तस्मात्प्रतिबिम्बस्येदमियत्तावत्तात्पर्यं, तदुक्तं न युक्तिसह इति । तत्कल्पितकल्पनाविषयः प्रतिबिम्बपदार्थो नेत्यादीति सर्वमवदातम् । एतेन शब्दप्रतिबिम्बो व्याख्यातः ।

निजकुञ्जलताकाशे मुरली मुरलीयति ।
हरिं तत्र प्रपद्यामः सखि नृत्यचकोरिणी' ति ।

सर्वमवदातम् । ननु नीरूपस्य रूपस्य कथं प्रतिबिम्बः, द्रव्याश्रितत्वं वा तत्र प्रयोजकं यदि, मम भ्यासेन किञ्चिदाश्रित्य प्रतिबिम्बताम्, एवं स्वच्छद्रव्यस्यास्वच्छद्रव्यसम्बन्धाद्द्रव्याणां प्रतिबिम्बग्राहित्वं, कुम्भादेर्जलादिवैसम्बन्धदशायामित्यापातरमणीयामाशङ्कां निधायाहुः— क्रिञ्चेति[१२] । ईश्वरसाधारण्येन प्रतिबिम्बपक्षं प्रतिक्षिपन्तीति वा । क्रिञ्चेति[१२] । तथाहि यावतान्तराध्यासो यावतान्तरलक्ष्मकस्वच्छद्रव्यसम्बन्धस्तावताऽध्यासापधि एव जीव... द्यान्तरमन्तरापातस्वच्छे ब्रह्मणीति यः प्रतिबिम्बो वा जीव इत्येव किं न स्यात् । अथवेश्वरसाधारणप्रतिबिम्बपदं व्याख्यायते प्रथमं जीवेति । जीवाविद्यात्वेन जगत्प्रतीतिहेतुत्वं केवलाविद्यात्वेन जगद्धेतुत्वं चेत्यपि विचारणीयम् । आद्ये जीवेति । तथा सति जीवत्वेनैव प्रतीतिहेतुत्वम् । ... इति ईश्वरस्य जीवतुल्यतां विना । तटस्थः शङ्कते ननु 'तदव्यक्तमाह ही' त्यधिकरणे ब्रह्मप्रतिबिम्ब एव हृदये जीवानामुपासनालम्बनमितीश्वरप्रतिबिम्बानां माध्वे स्वीकार इति तस्येदमुत्तरं प्रथमं जीवेति । यदि स्वतो जीवो भगवत्प्रतिबिम्ब एव, किन्तु तर्हि प्रतिबिम्बे प्रतिबिम्बान्तरकल्पनेति भावः । ..........................................

............................................................................................................................

अत्रोपाधेः प्रतिबिम्बपक्षपातित्वादमीश्वरेऽपि दोषाः प्रसज्येरन्, अतो बिम्बात्मकमीश्वरचैतन्यमिति पक्षं मनसि निधाय प्रतिबिम्बेश्वरपक्षं दूषितवन्तः, सत्राक्षरस्यैवेश्वरत्वात् तत्पक्षेऽपि कारणमाहुः येत्र यदिति । ईक्षानुसारिणीति । इति ते अलचक्रतत् । 'स्वयं ज्योतिरात्म'त्यादिः प्रतिबिम्बो दृष्टान्तत्वेनोपादीयते, न तु जीवस्य प्रतिबिम्ब ............र्थ...... न वक्तव्यः, अत ......... मानानप्रतिबिम्बत्वमेवमिति, न तु प्रतिद्धप्रतिबिम्बोपपादनाय ब्रह्मणि स्व ......... कल्पनम् । तेन प्रतिबिम्बत्वानिर्वाह इति भावः । जीवोपाधेरविद्यायाः ... गतत्वां मात्मत्वाभिप्राये—तेनेश्वरमङ्गदः......... ब्रह्मसम्बन्धासिद्धेः, किं प्रतिबिम्बेन प्रभवः अनेन । ननु सर्वगविद्याजीवत्वं ब्रह्म ब्रह्मण्यविधानात्स्वापः अविद्यायां ब्रह्मगमनाभावात् विद्यायामेव तथात्वात् विषयत्वं हि गमनम्, गत्यर्थानां प्राप्त्यर्थत्वात् । 'नहि तपः' ब्रह्मणः साक्षाद्विद्याभावाः.......................... न त्वेवम्, प्रभामण्डलतयापि दर्पणादिसंयोगिनया कथं तत्प्रतिबिम्बः मैवम्, तत्संयुक्तानामेव प्रतिफलनकल्पनीयत्वात्, तदिदमुक्तम् विस्तिनीसूत्रेति[११] । तेजसोऽपि तावद्व्यवधानं गुल्मदशाऽव्यवधानम्, तत चक्षुषो दर्पणादिसंयुक्तस्य दर्पणे प्रतिबिम्बो न स्यात्, अन्यथा दर्पणचाक्षुषानुपपत्तेरिति वाच्यम् । परावृत्त

स्वात्मानं बिम्बमेव चक्षुर्गृह्णातीति मतेऽभिघातकसंयोगस्य प्रतिबिम्बाविरोधित्वात्, यथा चक्षुरन्यदा स्वात्मानं मुखं वा न गृह्णाति, गृह्णाति तु प्रतिघात इत्यनुभवो दुरपह्नवः, तथा आकाशं प्रतिघाते गृह्णातीतिवच्च प्रतिघाते न ब्रह्मणः, मनआदिभिरिन्द्रियैर्ग्रहणे प्रमाणाभावात् । किञ्चात्र प्रतिबिम्बग्राहकमन्तःकरणमविद्या वा वाच्या । न चैवं संभवति, उपाधेः प्रतिबिम्बग्राहकत्वस्य क्वचिदप्यदर्शनात् । नन्वहमज्ञ इत्येवमज्ञाने भासमानमात्मानमन्तःकरणवृत्त्युपारूढसाक्षी प्रतिबिम्बात्मानं गृह्णातीति ब्रूमः, दिङ्मोह इवाज्ञानेन प्रतिघातादन्तःकरणस्य फलतस्तदुपहितसाक्षिणो ग्राहकत्वाङ्गीकाराद्, सोऽयं मानसः प्रतिबिम्ब इत्याशङ्क्याहुः किञ्चेति[१२] । अत्र पक्षिरूपत्वमुपासनाभिप्रायेणेति वदवः । 'मोदो दक्षिण' इत्यादिना प्रतिपत्तव्यरूपस्य ब्रह्माभेदादानन्दमयविज्ञानमयौ रामलक्ष्मणौ वा गृहं संसारमरणमावासमाश्रितौ, तत्रानन्दमयः फलम्, नहि फलेन स्वतः किञ्चिद्भुज्यते, विज्ञानमयः पुनरानन्दमयतां प्राप्तुं तन्मात्राणि सुखान्युपभुनक्ति, अप्यन्तरे फलेनाविष्ट एको रमते, फलं तु स्वानन्दभुक्, छाया कान्तिरन्तरङ्गा, अत्रोभयभोक्तृत्वं श्रुतम्, तदविरोधेन साक्षिणोऽपि भोक्तृत्वं स्वभोक्तृत्वेन निर्वाह्यम् । गौणात्मव्यावर्तनाय सूत्रम् । तथा च साक्षी बिम्बानन्दनो न प्रतिबिम्बसमानाधिकरणः, बिम्बत्वाद्बिम्बरूपमुखादिवदित्यर्थः । भवदभिमतप्रतिबिम्बपक्षे न संगच्छत इति । ननु न प्रतिबिम्बवैयधिकरण्यम्, बिम्बस्यैव प्रतिबिम्बत्वात्, प्रतिबिम्बात्मकरूपान्तरे तदुपाधिनिष्ठे मानाभावादिति चेत्, सत्यम्–यन्मते प्रतिबिम्बो न रूपान्तरं, तन्मतेऽपि बिम्बत्वविषयताद्वयमवश्यमङ्गीकार्यम्, अन्यथा बिम्बप्रतिबिम्बव्यवहारभेदानुपपत्तेः, तत्रोपाधिव्यङ्ग्यविषयताद्वये एकस्या उपाधिसन्निहितदेशोऽवच्छेदकोऽपरस्यास्तूपाधिरिति व्यवस्थायामुपाधिदेशस्यासंसृष्टस्यापि सांमुख्यमेव सम्बन्धो वाच्यः, असम्बद्धस्यानवच्छेदकत्वात्, प्रत्यगात्मनश्च कथं नाम सांनिध्यम् । अस्मन्मते त्विष्टापत्तिः, 'रूपं रूपं प्रतिरूपो बभूवे' ति ब्रह्मणः सर्वानुविधायित्वलक्षणस्वरूपसम्बन्धाभ्युपगमात्, अत एवोक्तम्, ऐक्ष इति । अध्यासमन्तराकृत्य प्रतिबिम्बोपपादने तु वरमध्यासावच्छिन्नमेव स्वरूपं जीव इति प्रतिपत्तुम् । यदि वाऽध्यासस्य सर्वप्रपञ्चसाधारण्यादसाधारणजीवलक्षणोपपादनार्थं प्रतिबिम्बकल्पनेति मन्यते, तर्हि प्रपञ्चैकदेशाध्यासः सर्वाविद्याध्यासो वा तन्निर्वाहक इत्युभयथापि जीवव्यवहारोपपत्तिः, साध्यासप्रतिबिम्बकल्पने 'तत्त्वमस्या'दौ भागद्वयत्यागापत्तौ स्वरूपमुद्दिश्य स्वरूपाभेदोपदेशानुपपत्तिः, तत्र भवन्मते स्वरूपं प्रतिबिम्बोऽध्यासविशेषावच्छिन्नो वा । अस्मन्मते तु वास्तवविषयताविशेषावच्छिन्न इत्यवान्तरविषयतामुद्दिश्य महाविषयत्वाभेदप्रतिपादने सर्वज्ञतायां किञ्चिदज्ञत्वस्यापि प्रवेशान्मात्रार्थस्याविवक्षितत्वादुद्देश्यस्वरूपानुपमर्देनोपदेशो युज्यते, भवन्मते न तथा । प्रतिबिम्बोऽसीत्येतावन्मात्रबोधनेनैवास्मन्मते कृतार्थत्वाच्च, भवतां तु पदस्वंसन इति विपरीतलक्षणां पुरस्कृत्यैव विवक्षिताभेदो निर्वाह्यः, भवन्मते स्वरूपबाधाभावे विशेष्यमात्रलाभस्य दुर्लभत्वादित्येतत्सर्वमभिसन्धायाहुः ईति चदतस्त्वेति । नन्वात्मनामुक्तलक्षणानां तस्यात्यन्तासत्त्वादेव न हानमित्यत्राहुः अलीकत्वं चेति । अनिर्वचनीयस्वरूपजीवपक्षत्यागापत्तौ पाखण्डप्रवेशापत्तेरिति भावः । सिद्धान्ते त्वनिर्वचनीयतापि तथेति हृदयम् । अत एव प्रतिबिम्बस्याऽनिर्वचनीयतापक्षेऽपि प्रवृत्त्यनुपपत्तिमाहुः मिथ्येति । मिथ्याशब्दोऽनिर्वचनीयवचन इति पञ्चपादिका, स्वयं तु कोशानुसारादत्यन्तासत्साधारणमिथ्याशब्दार्थत्वेनोक्तम् । तथा चानिर्वचनीयपक्षेऽपि सदसद्विलक्षणदर्पणाद्यवच्छिन्नाविद्याया एव चन्द्रादिप्रतिबिम्बकल्पकत्वे प्रतिबिम्बस्य सदसदनिर्वचनीयस्वरूपं मिथ्यात्वं, न तु मतान्तरवदुपनीतविषयता । तत्र सत्त्वे निवृत्त्ययोगात् असत्त्वे प्रतिभासानुपपत्तेः तदुभयविलक्षणम् । अनिष्टं, किं तर्हि व्यावर्त्यम्, सत्त्वमसत्त्वं वा व्यावर्त्यताम्, उभयविधसदसत्त्वयोः सत्त्वे किमिति तद्वैलक्षण्यम्, तत्तत्समयाद्युपाध्यवच्छेदेन तत्र तत्र सदसत्त्वयोः प्रतीतेर्वैलक्षण्यानिरूपणात् । न च विनिगमकाभावादुभयोः स्वीकारविरोधवारकावच्छेदककल्पनापेक्षया वरमनिर्वचनीयकल्पनमिति वाच्यम् । संयोगतदभावयोर्व्यवहारदशायां स्वस्वरूपाभ्यां भिन्नानिर्वचनीयतापत्तेः । यदि चैवं सत्त्वासत्त्वे नैयायिकादिमतान्तराभ्युपगते इति नाङ्गीक्रियेते, तर्हि सेयं मतान्तरासहिष्णुताप्येकं दूषणं भवद्भिः सूचितम् । आस्तां चानिर्वचनीयत्वं, तस्यापि प्रतीतिबलात्सदसत्त्वे विचारणीये न वा, तस्याप्यनिर्वचनीयत्वेऽनवस्था, अनवस्थितमायाकल्पनापेक्षया व्यवस्थितब्रह्मस्वीकार एव ज्यायानिति

वक्ष्यामः । यं कर्मभिर्दिव्यैरित्यादेरेवं भावः—यदि नाम ब्रह्मैवान्वेषणीयं, तथाप्यहन्तादिप्रधाने संसारेऽहन्तादिकमेव कस्येत्यन्वेषणीयम्, इतरथा तन्निवर्तकपारलौकिकसाधनाचरणे भवदीयत्वा साधनानां कर्तृपर्यन्तानां निवर्तनीयत्वेनाविशेषादैहिकफलसाधारणप्रवृत्तावेवाहन्तादिकं प्रमितव्यम् । न च मानान्तरानधिगतश्रुत्युपदिष्टसाधनानामेवाहन्तादिनिश्चायकत्वं निवर्तकत्वं चेति साम्प्रतम्, लौकिकसाधनानामपि भगवदिच्छान्तःपातित्वेन श्रुत्युपदिष्टत्वात् । निश्चायकत्वादिकं तु चिन्त्यम्, भवन्मते विभूतीनां मायोत्कर्षप्रभावतः प्राधान्यम् । ब्रह्मतत्त्वं हि समर्थम् । लौकिकेऽपि चातुरत्वोत्कर्षः, स एवास्तां, न मायिककल्पना परतरप्रकर्षदोषेण सत्त्वम्, तस्मादूढरूपमिदं । तस्मात्पारमार्थिकसाधनानां ब्रह्मभावोत्कर्षात्तेन फलरूपब्रह्माविर्भावविषयतावैलक्षण्यस्यैश्वर्यादिमाधुर्यवरप्रसादयानुमतत्वयत्वान्मुमुक्षुस्वरूपमनाविर्भूतब्रह्मतया यद्भवितुमन्मतेऽप्याश्चर्यवदिति प्रमाणप्रतिपन्नानुग्रहाख्यविलक्षणतया स्वतन्त्रया नित्यमुक्तमेवाविर्भावसत्स्वरूपं फलतीति सिद्धान्ते व्यवस्थिते जीवस्वरूपं धियाविशेषावच्छिन्नम्, प्रत्यात्मनानात्वापत्तेः, तस्य अनुगतत्वात्, अनुगतस्यार्थविज्ञानात्मब्रह्मैकनिष्कर्षत्वात्, एकविज्ञानप्रतिज्ञानानुरोधादिति । यदा चाविद्योपरमस्तदा तूष्णीं शब्दाभाव इत्याहुः तूष्णीमिति । अन्ततः क्षणापि प्रतिक्षणपरिणामिनीह धिया क्षणिकया उपरमे मध्ये जीवभावापगमप्रसङ्गः । नित्यविषयता तु ब्रह्मैव समर्पदेशाद्युपाधिधर्मानुविधायित्वान्नातिप्रसङ्गः । तूष्णीं कर्णध्वनिरपि नोपलभ्येत । भूतावेशाथ, तावता तरातरा स्यात्, अत एवाहुः विहितेत्यादि[५६] । कुतोऽपि मलिनीकरणादेः । सन्मार्गमात्रं षड्दर्शनानि आत्मतत्त्वे, पुनरेकं मन्यन्ते समं वेदान्तैः सप्तदर्शनानि, तत्रैकमत्या प्रच्याव्य वेदप्रामाण्यमनादिसाधारणं वेदान्तव्याख्याकरणे धार्ष्ट्यं योधानामिव तत्त्ववादिप्रभृतीनामुत्कृष्टवादिनामप्यवगणनम् । प्रामाण्यं हि पारमार्थिकतत्त्वावेदकत्वनिबन्धनं वेदत्वं नातिशेते । ये तु महावाक्यानामेव तथात्वं मन्यन्ते, तेषां सकलवेदसम्बन्धो महावाक्येषु प्रष्टव्यः, विरुद्धतात्पर्यकयोर्विरोधात्, सखण्डाखण्डयोरेकीभावस्यास्मत्सिद्धान्तात् । न ह्यनुष्ठानांशे प्रतियोग्यंशे वा तात्पर्यकल्पनापि मध्येऽवतरति, महातात्पर्यस्यैवास्माभिरपेक्षाम(न्व)यार्थाकारात्, परिशिष्टभावनायामिव परेषां पार्ष्णिकः पुनरन्वयो यथामतमुपपादनीय उपरिष्टात् । तेन्मध्यपातित्वेनेति । इदं ह्यलौकिकप्रकीडनं यदौकिकालौकिकप्रपञ्चयोर्मध्यपाती वेदः, एवमनुमितेन मत्स्वतिरेकेणतत्प्रपञ्चयोरैक्यं विलसतु वादीष्टमिदं नृहृदयेष्विति तादृशं मध्यप्रपञ्चसागरे मर्यादारूपेण स्थितं सेतुमिव त्वया यत्क्रीडास्पदं नीतं, किमिति वेदं त्याजयन्ति शरवत्तत्राङ्कुशो महावाक्यं सप्रणवं यन्नामसर्ववेदार्थसंग्राहकं, न तु निर्विकल्पकजनकं, वाक्यमात्रस्याखण्डार्थतायाः सम्प्रतिपत्तेः, अत्रापि तात्पर्यस्योपपादयितुं शक्यत्वात् सर्वसंग्रहस्तत्पदार्थाविरोधिसर्ववेदवाक्यार्थावबोधाधीन एवेत्यस्मत्सिद्धान्त एव शरणम् । इतरथा शुक्तिमौक्तिकन्यायतानामपि तथ कर्णाभरणापत्तेरित्याहुः तैस्तैर्हीति । तथाहि दर्पणाज्ञानं न प्रतिबिम्बकल्पकं, दर्पणस्य ज्ञातत्वात् । न च दर्पणावच्छेदेन मुखाज्ञानं तथा, मुखाज्ञानस्य मुखकल्पकत्वे मानाभावात्, रजताज्ञानस्येव रजतादेः । तस्मात्प्रतिबिम्बस्याज्ञानकल्पितत्वाभावे तदंशे भ्रमत्वं नैयायिकरीत्यापि न संभवति, तदभाववति तत्प्रकारेणोल्लेखेपि । परावृत्यग्रहणपक्षे दर्पणाद्यनुविधानानुपपत्तेः । तदनुविधानानुविधायिनी भ्रमविषयतेति तु न शक्यम्, भ्रांशादावेव प्रकारत्वात्, दर्पण इत्यत्र वैज्ञानिकाधारतायाः सप्तम्यर्थत्वे बाधकाभावात् । यदि च वैज्ञानिकाधारत्वं विषयताविशेषो वा प्रतिबिम्ब इत्युच्यते, तथापि तदभाववति तत्प्रकारत्वाभावान्न भ्रमत्वम् । आधारत्वांशेऽवच्छेदे वा भ्रमेऽपि सम्मुखासम्मुखसाधारणविषयताभेदे मानाभावादज्ञानव्यक्तिभेदेन विषयताभेदाभावाच्च मानाभावादनुपपन्नम् । तस्मात् प्रतिबिम्बेच्छामप्यनादीच्छायां संनिवेश्य विषयताविशेषोऽयं प्रमयाऽपि निरूप्यताम् । तथा चाक्रूरदर्शनसंवादः साधीयान् स्तूयमानरूपस्य सपरिकरस्यापि धर्म्यंशे प्रतिबिम्बस्य प्रमाविषयत्वात्, तत्र तथैव स्वरूपेणावष्टेत्युक्तेरित्यलं विस्तरेण । प्रतिबिम्बतत्त्वं जानन्निति । लौकिकालौकिकसाधारणविषयतामात्रं जानन् निष्कम्पप्रवृत्तिमान् पूर्वं दृष्टः, न अनादौ प्रवाहेऽपि दृष्टस्तथाप्यनुमाने दृष्टान्तालाभः । नन्वैहलौकिकप्रवृत्तौ दृष्टान्तः सकम्पप्रवृत्तिमानाम्रफलादावपि तथाविधे दृष्टान्तः, निष्कम्पा तु साधनांशेऽपि न, नियमतः कृष्यादिप्रवृत्तिरनुपपत्तेश्च । तथा च वक्ष्यन्ति सम्प्रतीति । सत्यम्, आस्तिकानां निष्कम्पा

प्रवृत्तिरिति तावदविवादम्, 'साम्नं' इति न्यायात्, तथापि स्वजये प्रतिबिम्बस्य मिथ्यात्वज्ञाने प्रमोषं कल्प्यमिव अनुमया जीवस्य प्रतिबिम्बत्वमुच्यते, न वेदे इत्यनुक्तोपालम्भ इति । किंच शब्दस्य मिथ्यात्वं नार्थस्य, अन्यथा ब्रह्मणोऽपि मिथ्यात्वापत्तिरिति चेदास्मानमुपालभस्व ब्रह्मन्यायेनैवास्माभिः कार्यकारणव्यवस्थायाः सत्यत्वाभ्युपगमात्, सत्ये ब्रह्मणि समन्वयाभ्युपगमाच्च । नाप्यनुक्तोपालम्भः, 'अज्ञानदर्पणे स्फारे समस्ता वस्तुदृष्टयः । इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमा' इति योगवासिष्ठाभिप्रायेण भवन्मते सर्वेषां प्रतिबिम्बत्वाभिधानात्, प्रतिबिम्बत्वव्यापकमिथ्यात्वज्ञानस्यैव प्रवृत्तिविघटकत्वेन मूलोक्ततया व्यापकमुखेन प्रतिबिम्बत्वोक्तेरनुक्तोपालम्भत्वाभावाच्च । किंचात्यन्तेनात्मज्ञानज्ञानादिदूषणसमुच्चयः, तथाप्यनास्थया पुरुषार्थेऽपि प्रवृत्तिः संभवतीति याथात्म्यज्ञानेनास्माभिर्निवार्यते इत्याहुः सत्यमेवेति । ननु स्वप्नेऽपि स्वप्नं पश्यामीति कदाचित्स्वप्नो जायत इति चेत्तत्राहुः–स्वप्न एव विदुष इति । तादृशज्ञानवतोऽपि स्वप्ने प्रवृत्तिर्जायमाना स्वाप्निकफलाविसंवादिनी च । तथा चेयं जायमाना क्रममुक्तिपर्यवसायिनी ब्रह्मभावपर्यवसायिनी वा न स्यात्, स्वाप्निकसंवादेनाप्युपपत्तेः, 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं प्रपद्यत' इति चेत्तर्हि यावत्सत्यप्रपत्तिपर्यन्तं स्वप्न एव स्थितः, स्वप्नतुल्यमेव फलमुपलभेत, मैवम्, उत्तरीत्या स्वाप्निकसम्वादेनाप्युपपत्तेः । तथा च ब्रह्मभावोऽपि स्वप्न एवास्तु, का क्षतिर्मां च निवार्यताम्, तादृशनिवर्त्यं स्वप्नाङ्गीकारस्य महानिद्रावदुपपत्तेः । तथा च मिथ्याब्रह्मभावनैव शास्त्रार्थोऽस्तु, ब्रह्मणो मिथ्यात्वेऽप्यक्षतेः, स्वप्नफलन्यायेनोपपत्तेः, क्षणिकब्रह्मवादवत् फलाविसम्वादस्यैवोपपादनीयत्वात्, मिथ्यापदार्थस्याधिष्ठानावरोप्यत्वेऽप्यधिष्ठानस्यापि स्वप्नफलन्यायेनोपपत्तेः । अत्यन्तासत्पक्षप्रवेशाद्वा नाधिष्ठानापेक्षा । एवंविधाधिष्ठानधारया अलीकत्वेनैव तत्कल्पनागौरवानयनारादिति निगमकल्पवृक्षमूर्धानं गतं प्रतिवादिनमवतारयन्ति गृहाणेति । प्रतिबिम्बितफलं सत्यं गृहाणेत्यर्थः । सोऽयर्ततीयं पुनः शङ्कते नन्विति । ममाधीतवेदवेदान्तस्य शाब्दज्ञानं जातमपि न फलायालमभूत्, व्यर्थश्च मया स्वाध्यायविधिरिति इत्यनुतापिनं वादिनं स्वसाधारणतामुपनयन्ति नैतत्सारमिति । यस्त्वया शास्त्रार्थतया बुद्धं प्राप्तं च फलम्, तस्याप्रफलन्यायानिःसारमन्तःसारं नेत्यर्थः । प्रतिबिम्बत्वेनेति । अनुमानं तु न प्रतिबिम्बितवृक्षपक्षम्, आश्रयासिद्धेः, किन्तु तीरवृत्तिवृक्षा नीरवृत्तित्वाभाववन्तः, नीरावच्छेदेन चक्षुर्ग्राह्यत्वाभावात् तीरवृत्तिपाषाणादिवत् । तीरावच्छेदेन चक्षुर्ग्राह्यत्वे सतीति हेतौ विशेषणीयम्, अन्यथा नीरावच्छेदेन चक्षुर्ग्राह्यत्वाभाववति नीररसादावनैकान्तिकतापत्तेः । एवं च नीरावच्छेदेन तत्फलार्थिप्रवृत्त्यभावोपपत्तिरित्याहुः अन्यथेति । अन्यथा असत्त्वानुमानात्मकविशेषदर्शनस्य चाक्षुषभ्रमानिवर्तकत्वात्प्रवृत्त्यविरोधित्वे । एवं च प्रसारितवाहुरित्यनेन पूर्वं सूचितं प्रत्यनुपपत्तिरूपदूषणं स्वतया प्रकृते सन्नमयन्ति प्रामित्यादि । न ह्येवंविधफलकत्वज्ञानं प्रात्यक्षिकं येन परोक्षवाधेऽप्यनुवर्तेत, किन्त्वेवंविधं प्रवर्तकज्ञानमार्थमित्यार्थेण मिथ्यात्वज्ञानेन बाध्येतैवेति भावः । लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञाने तदभावव्याप्यवत्ताबुद्धेर्विरोधितया जलादिसमवधानात्मकदोषविशेषाजन्यप्रतिबिम्बभ्रमस्याविरोधित्वेऽपि निष्कम्पप्रवृत्तिं प्रति बालकपश्वादिप्रवृत्तिव्यतिरिक्तप्रवृत्तिं प्रति च विरोधित्वमन्वयव्यतिरेकसिद्धम् । तत्कारणेष्टसाधनताज्ञानविघटकत्वाच्च सुतरां प्रवृत्तिविरोधित्वमित्यस्मदुक्तौ बाधकाभाव इत्याहुः बाधकाभाव इति । स्यादेतत्, प्रवृत्तिसमये बाधज्ञाने प्रमोषः कल्प्यते, प्रवृत्तिरूपफलानुरोधात् । किंच उक्तज्ञाने विरोधित्वं क्लृप्तं, न तु प्रवृत्तौ । तत्कारणीभूतज्ञानप्रतिक्षेपकत्वे तु शाब्दान्यत्वमपि विशेषदर्शनप्रतिबध्यतावच्छेदके निवेश्यताम्, योग्यताज्ञानहेतुतामतेऽपि विशेषदर्शनस्य इच्छाव्याप्यशङ्कत्ववत्ताज्ञानीयपीतप्रवृत्तिप्रयोजकज्ञानविरोधितायां विपरीतज्ञानविरोधित्वमेवावच्छेदकं वाच्यम् । तथा च शाब्दमिथ्यात्वज्ञानस्य विपरीतज्ञानविरोधित्वं न कल्प्यते, फलानुरोधित्वात्कल्पनाया इत्याशङ्कते नन्विति । अधीतसाङ्गस्वाध्यायस्य पूर्वोत्तरावस्थायां स्वर्गमुक्तिसाधनं, मिथ्येति ज्ञाने मिथ्यात्वघटकाभावज्ञानं यद्यपि प्रतियोगिसमानाधिकरणभावज्ञानत्वाच्च प्रतिबन्धकं, तथापि मिथ्यात्वज्ञानं सत्यत्वज्ञानप्रतिबन्धकं भवत्येव, भवन्मते वस्तुनि मिथ्यात्वज्ञाने सति सत्यत्ववति सत्यत्वप्रकारकयोग्यताज्ञानाभावात्प्रमात्वविषयकशाब्दबोधानुपपत्तिः । यदि च प्रवर्तकतायां प्रमात्वं नोपयुज्यते, व्यावहारिकं वा तत्तथा, तथापि किम् । मिथ्यात्वज्ञानेन द्वैतप्रतीतिर्निबर्हणादिति चेत्, न, तद्व्यावहारिकत्वेन प्रतीतेर्मम्प्रविदाम-

व्यतिरोधानात्। तत्र व्यावहारिकत्वं प्रकारो न चेत्सत्यमेतत्। कथं तर्हि वेदान्तेषु मिथ्यात्वव्यपदेशः, प्रतीतौ विचारणीयायां कोऽयं पर्यनुयोगः। वस्तुतः सदंशसामानाधिकरण्यं विहाय प्रतीतिमात्राभावादसदंशसामानाधिकरण्यमतिक्रम्य च ब्रह्मणि सत्प्रतीतेर्बलवत्त्वमभ्युपगच्छतां ब्रह्मवादिनां मते सदंश एव बलवानिति सत्त्वेन प्रतीयमानं मिथ्यात्वमपि सत्त्वं नातिशेते इत्यनुशयेनाशयाना आहुः तेव कुत इति। आदौ फलानुरोधितया पूर्वपक्षे प्रवृत्तिरानीता। दृष्टार्थापत्तिदृष्टान्तेन मे स पूर्वपक्षी एवं प्रष्टव्य इत्यर्थः। पूर्वपक्षस्तु सिद्धान्तनिर्द्धारे सर्वत्र मिथ्यासिद्धान्तानवतारेऽपि स एव सिद्धान्त इत्युभयथापि पूर्वपक्षो मिथ्या, अतस्तथा यद्यपि सोपपत्तिकं वदतीति वादी नोपवदितव्यो नोपवदितव्यश्च। तुष्टं प्रत्युच्यते– येदि ब्रूयादिति। 'एष तु वा अतिवदति यः सत्येनातिवदती'त्यतिवादित्वलिङ्गं ब्रह्मविदां वादिभिरदृष्टमतेषु द्रक्ष्यन्ति तं प्रवक्तव्य इति। प्रतिवादित्वं स्वस्य प्रकटीकृत्य त्वया स वक्तव्य इत्यर्थः। निःश्वासो जगज्जीवनयोनित्वसमानाधिकरणः। अत्र संशयः, ब्रह्मणः पूर्वं वेदोपदेशो वा, श्रीभागवतोपदेशो वा। आद्ये पुनरर्थदर्शवैयर्थ्यम्। द्वितीये आथर्वणवैयर्थ्यम्, तस्मादुभयोपदेश एवोक्त इति निर्द्धारः। तयोरेकवाक्यतया शास्त्रार्थो ब्रह्मरूप एव शब्दसाधारण इत्याहुः वेदे इति। स्वयम्भूरिति। वेदात्मकः शब्दो नित्यः, तदुत्पादकशब्दान्तराभावात्, अवाग्ज्ञप्तेरवच्छब्दप्रमाणत्वात्, पूर्वपूर्ववर्णगोचरसमूहालम्बनसंस्कारसहितान्तिमवर्णानुभवपक्षे पूर्ववर्णांशे लौकिकविषयतानुपपत्तेरिति विस्तरः। पदज्ञानत्वेन कारणत्वात् शब्दस्येश्वरे जगत्कारणतायामवच्छेदकत्वात्। अत एव शब्दानुगतं सर्वं लौकिकत्वाभाससाक्ष्यरूपस्यालौकिकशब्दत्वात्तथैवा( वेदत्वाच्च ) वच्छेदकत्वाच्च वेदत्वं पुनरखण्डोपाधिर्विषयताविशेषो वा, लक्षणान्तराणां नवीनैः परिशोधे तत्रैव पर्यवसानात्, क्षोदक्षमत्वाच्च। भगवतः मुखोच्छ्वासव्यापारेण नामात्मकः शब्दः स्वयमेव स्वरूपघटकतया प्रकटीभवति। नामविशिष्टो हि भगवान् शब्दार्थः, एवं वेदविशिष्टोऽपि अग्निहोत्रादिनामविशिष्टाग्निहोत्रवत्, द्वादशेऽहनीति वेदे सर्वनाम्नां सिद्धत्वाच्च पटपदवत्त्वं पटत्वमिति शाब्दिकैरभ्युपगमात्। सत्तावदेव शब्दोऽसतो व्यावृत्तः, स यदि पूर्वं न स्यात् तद्विशिष्टोऽर्थो भगवान् स्यात्, तस्माद्वेदो भगवल्लक्षणमेव। न च तत्कारणत्वमेव शास्त्रयोनित्वात्रिताम्, वेदविशिष्टस्यैव वेदं प्रति कारणत्वात्कारणतायाः स्वगतत्वयोग्यकार्यसत्ताकत्वे पर्यवसानात्, ज्ञानपदार्थस्यापि नित्यत्वात्। अन्यथाऽनित्यदृष्टान्तेन नित्यज्ञानादेरसिद्ध्यापत्तेः। नन्वनित्यज्ञानस्योत्पत्तिर्न श्रुता, वेदस्य तु श्रुतेति वाच्यम्। 'स्वयम्भू'रिति वाक्येन नित्यत्वस्यापि श्रुतेः। एवं सति नित्यत्वे सत्ता ( ज्ञापना )नुगृहीता श्रुतिर्बलवती। तथा चाप्यापनादौ वेदानां प्रत्यक्षमेव, विषयतया वर्णत्वादेरवच्छेदकत्वात् वायुसंयोगादेस्तत्रैव कारणत्वात्, अलौकिकप्रकारतावादिनां नैयायिकानां तादृशविषयताया अनुमित्यादिसाधारण्यात् परम्परया वर्णत्वमेवानवच्छेदकम्, अनित्यत्वकल्पनापेक्षया महालाघवादित्यलं विस्तरेण। पूर्वपूर्ववर्णगोचरसमूहालम्बनसंस्कारसहितान्तिमवर्णानुभवपक्षे पूर्ववर्णांशे लौकिकविषयतानुपपत्तेरिति विस्तारः। अत्र 'श्रुधुम' इत्यनन्तरं 'सर्वे वेदा यत्पद'मित्यादिपाठ उपलभ्यमानोऽपि लेखकदोषात्कश्चिदाक्षेपि। अत्र कारणतायाः सावच्छिन्नत्वनियमे वेदादीन् प्रति ज्ञानकारणतावच्छेदकनित्यत्वपक्षे वा शब्दत्वं प्रत्यवच्छेदकमविद्या वा स्वरूपविषयता वा। निरवच्छिन्नकारणतापक्षे तु कारणतावच्छिन्नलक्षणा विषयतेत्युभयथापि स्वपरसाधारणवैचित्र्यसिद्धिर्ब्रह्मणीति स्वयमेव समाधानमनुभूयापि विचारयेत्याहुः स्वयमेवेति। जगत्कारणतावच्छेदकाविद्याया वेदजनकतावच्छेदकत्वे लौकिकवाक्याविशेषः, तथा सति वेदोक्तपदार्था यूपादयोऽन्यदृष्टपटितत्वरूपा न स्युः, ब्रह्मापि व्यावहारिकं स्यात्, सत्वाविद्याया उत्कर्षापकर्षतारतम्यस्य ब्रह्माविर्भावतारतम्यनियम्यत्वात्तत्तारतम्यस्य 'आथर्वण'दिति न्यायेनानुग्रहात्मकविषयलक्षणात्मकविषयतासाम्यत्वात्तथैव विरोधं परिहृत्य ब्रह्मपक्षो विजयते। परेऽस्त्वविद्यामहिम्नैव विरोधमपहरद्भिस्तदुपष्टम्भकतया च 'मायामात्रमिदं द्वैत'मिति वाक्यं दर्शयद्भिर्विवर्तमेवेदमिति ब्रह्मणि विरोधो नाविषयापि रोद्धुं शक्यः, मीमांसापटितघटनारहीतत्वात्, तस्या विवर्तस्य मायापरिणामरूपत्वानभ्युपगमात्, अन्यथा स्वतन्त्रविवर्तवादानुपपत्तेः ब्रह्मनिष्ठविषयताविशेषमन्तरेण विवर्तस्यैव दुर्वचत्वाच्चेति विचारस्वरूपं

---

१ मत्ता अनन्तरमहर्षिरूपकं पाठान्तरम्

विभावनीयं पण्डितैः । एवं वेदानां ब्रह्म कारणमविद्या वेति विषये अपूर्वां वेदमीमांसां तस्मा उपदिश्य तच्छि-ष्यानुक्रोशेनाहुः ‘‘किञ्चेति । प्रमाणशब्दत्वेन वेदानां प्रामाण्यमर्थतथात्वनियतमिति वेदवादानुसारिसर्वशा-स्त्रेभ्यो ज्ञात्वा अस्ति मायावादोऽपि परम्पराप्राप्त इति सम्भावनयाऽर्थतथात्वे सन्दिहानस्तस्य प्रामाण्याप्रामाण्य-योरुदासीनतया तदुभयमनपेक्ष्य श्रवणमेव कर्तव्यमिति प्रायोपविष्टस्त्वामेव साक्षान्मायावादिनमुपलभ्य वेदाप्रा-माण्यपरिनिष्ठितधिया पुनः संशयात्मतया वा न निष्कम्पं प्रवर्तेत तच्छ्रवणे तदर्थानुष्ठाने वेति सन्दर्भार्थः । सकम्पप्रवृत्तावपि वस्तुस्वाभाव्यात्फलं भविष्यतीत्याशङ्कते ‘नैनु यत एवेति । उक्तरीत्या निर्णयसंशयौ व्याख्यातौ, स्वोक्तरीत्या तच्छिष्यायोपदिशन्ति ‘तैन्निर्णयार्थमिति । एतानि वाक्यानि पूर्वं वेदकारणताप्रा-माण्ये प्रस्तुतानि, इदानीं तु निर्णायकत्वेनोच्यन्त इत्यपौनरुक्त्यम् । यद्यपि श्रुतित्वेनैव परमते न निर्णायकत्वम्, विरुद्धवाक्ययोः प्रामाण्यस्य दुर्घटत्वात्, अत उपक्रमादीनां स्वरूपतो वेदोक्तानां लौकिकवैदिकोपपत्तिसिद्धानां प्रामाण्यमनुसृत्य यथामतं स्वस्वाचार्यद्वारा निर्धार्य च परमर्षीतेः संशीतयः शमनीयाः श्रवणप्रवरैः । किं वोभयसमाधेः समाधिसौकर्यायैकविध एव शास्त्रार्थो वर्णनीयः कारणत्वादिसमानाधिकरणस्वरूपपर्यवसायी, तच्छ्रुत्वा भवदीयः स्वबोधवैलक्षण्यार्थमेव द्वयमेव समादधानो विषयं न भिनत्तीति मुख्यब्रह्मवाद एव सोऽस्मा-भिरनुग्राह्य( स्वीकार्य ) इति स्वाभिमतं निर्णायकप्रमाणमुपदर्शयन्ति ‘‘निःश्वसितमित्यादि । जलशायिन इमे निःश्वासाः, तत्र कम्बुसदृशः कण्ठः, स्वपत एव सर्वप्रपञ्चसंरक्षणाय चतुर्दशरत्नानि चात्र प्रमाणानि आनन्दमयान्तानि ( लक्ष्मीप्रतिष्ठितानि ) दर्शितानि । श्रीरेव पुनरानन्दमयः, ‘रस ह्येवाय’मिति रसा-भ्यासादिति पुरोऽर्थः । एतत्तत्त्वमानन्दमीमांसायां प्रपञ्चितमस्माभिः । वेदमूला प्रवृत्तिर्वैदिकी च सृष्टिः पञ्चवा-क्यप्रमाणपारावारीणानां प्रमाणसिद्धा । तत्र वेदप्रामाण्यमुत्पत्तिविशिष्टं ज्ञापयितुमैकान्तिकमुत्पत्तिवाक्यमेव बहु-शोऽभिहितम् । एवं च श्रुतित्वेनैव समप्रामाण्यमिति ब्रह्मवादराद्धान्तोऽपि प्रासङ्गिको दर्शितः । वेदमात्रस्यास-त्यार्थस्याभावादिति श्रीमदाचार्यप्रतिज्ञा चात्र सांसारिकसांयात्रिकाणां वेदपोतपात्रशरणानामवश्यं क्षेपणीत्वेना-लम्बनीया । कथं तर्हि श्रुतीनां बाध्यबाधकभावः पूर्वोत्तरमीमांसयोः, सत्यम्, यावदुक्ताः किल प्रवादपाटचराः, तावन्मात्रं ब्रह्म बुध्वा तत्र तत्र श्रुतीनां तात्पर्यं प्रतिव्यक्ति भिन्नं कल्पयन्ति, तथाप्यद्वैतरत्नं सर्वानुगतं न लभ-न्ते, तस्मात्सिद्धान्तपारदमनुसरन्तु, नान्यथा प्रवृत्तिनिवृत्तिमार्गयोर्नारक्षीरसागरयोः पारं गन्तारः । तयोः सङ्ग-मोऽयं महापुरुषैः कृतस्तं यो न जानीते तदवस्थामाहुः ‘संस्प्रतीति । ज्ञानिनश्चेधा, ते सर्वे प्रकृतिपरवशा बहुवचनेन निर्दिष्टाः । ‘ज्ञानी त्वात्मैव मे मत’मिति भगवत्सिद्धान्तः । तथा च ज्ञानमेव विषयान्तराभावे विषयो भूत्वा विषयतामवतीत्युक्तम् ‘महात्मानस्तु मा’मिति । अन्धन्तमः सुदर्शनप्रकाश्यम् । सर्वत्र भगवा-नेव मार्गप्रद इत्युक्तं भवति । प्रसन्नस्तस्य भगवत उपेक्षानर्हत्वम् । अतिप्रसङ्गो मायायाः, तेनालं भगवतैव पूर्णानां प्रतिबिम्बप्रसङ्गात् । प्रसक्तमुपसंहृत्य प्रतिबिम्बभ्रमात्कूपेऽन्धतमसि सिंहवन्न पतनीयमिति सिंहावलोक-नेन स्मारयन्ति ‘अपरं चेति । यदि चाविद्या न दोषः, तर्हि प्रतिबिम्बः सत्यः, यदि दोषो न सा ब्रह्मणीत्याहुः ‘तथा चेति । ‘निर्दोषं हि समं ब्रह्मे’ति स्मृतेरित्यर्थः । द्रष्टृभावे च प्रतिबिम्बे मानाभाव इति भावः । नियामकत्वं बिम्बाभावे प्रतिबिम्बाभावात्तत्प्रयोजकाभावप्रतियोगित्वम् । स्वाभावस्य चासंभवात्प्रतिबिम्बे प्रतिबि-म्बासम्भव इत्यर्थः । अथानुविधानमात्रा तन्मन्यन्ते किमविद्यां प्रति स्वानुविधानम्, न तावदीयस्यवहितत्वम्, तदवच्छेदः अविद्ययैव तत्सम्पादितमध्यासपरम्परयेति यदि, तर्हि जीवस्य प्रतिबिम्बो जीव इति सोपहासमाहुः ‘महद्व्याख्यानकौशलमिति । व्याख्यानं प्रतिबिम्बश्रुतीनाम् । ‘प्रच्छन्ननास्तिको निरीश्वरमीमांसकः । तवापि मते बिम्बरूपेश्वरासिद्धिरिति तौल्यरूपकेण व्यङ्ग्यम् । परमात्मैवान्धतमसि पातित इत्यमेदार्थकरूपकल-भ्यमर्थं व्यञ्जयन्त इवाहुः ‘परमात्मनस्तद्दर्शित्वेनेति । भवन्मते द्रष्टृत्वस्यौपाधिकत्वादितिभावः । स्यादे-तत्, प्रतिबिम्बदर्शी परमात्मनोऽन्यः कश्चिज्जीवोऽस्तु, स एवोपाधिदर्शी स्वान्तःकरणमुपनेत्रं परमात्मानं ग्राह-यित्वा शुद्धां दर्शयितेति यावता स जीवन्मुक्तः, मुक्तो तु परमात्मन्येव प्रवेक्ष्यति, अत एव मुक्तोपसृप्याधिकर-णमिति स्वोचितस्वेनोन्मुखं वादिनं प्रतिक्षिपन्ति ‘जीवन्मुक्तेति । ‘संन्विद्गुमपीति । जडो निष्क्रियः

स्यादित्यर्थः । यत्तु परदृष्ट्यैव तथेति, तत्र वक्ष्यामः । अत्रापरे प्रत्यवतिष्ठन्ते प्रारब्धमात्रशेषेति । 'ज्ञानाग्निः' 'नाभुक्त'मित्यनयोर्वाक्ययोर्विरोधपरिहाराय सञ्चितानामेव क्रियमाणप्रारब्धाभ्यां भिन्नानामेव ज्ञानविनाश्यत्वं, प्रारब्धैरेव शरीरयात्रादिकमुपपद्यते । तथाहीति । अन्तःकरणं स्वच्छम्, अविद्या तु गुणत्रयवती तमआद्यवच्छेदेनांशतोऽस्वच्छेत्यन्तःकरणे प्रतिबिम्बवादः प्रवृत्तः । जीवाणुत्ववादिनां परैकदेशिनामन्तःकरणसम्बन्धहन्त्रादिमत्त्वं संसारित्वं, न जीवन्मुक्तानाम्, तदुक्तं माध्वैः 'आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति । गच्छेच्च हरिपादेन मुक्तस्यैषा स्थितिर्भवेदि'ति । कायवाङ्मनसां तदीयत्वमिति च सिद्धान्तः । न च ममाप्येवं सिद्धान्तेन संसारित्वमिति वाच्यम्, तत्सिद्धान्तानुसरणे भगवत्सम्बन्धिनामन्तःकरणादीनां निवृत्त्यभावे परममुक्त्यवस्थादौ तदभ्यापत्तेरित्यलं परपक्षप्रवेशेन । सुतरामिति । तत्र दोषान्तराणामपि पूर्वमुक्तत्वादिति भावः ।

अन्ये तु अप्रतिबद्धज्ञानस्यैवाज्ञाननिवर्तकत्वाङ्गीकारेण शरीरादौ ऐहिकस्य सर्वप्रतिबन्धकस्यवत्प्रारब्धप्रतिबद्धं तत्त्वज्ञानं नाविद्यानिवर्तनद्वारा फलायालमित्याहुः । केचित्तु दग्धपटन्यायेनाविद्यात्मकप्रारब्धादिसत्त्वमुररीकुर्वन्ति । सर्वान् निराचिकीर्षन्नस्तादेव वदन्ति नैव वाच्यमिति । 'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मण' इति भगवद्वाक्यविरोधादित्याशयः । अन्यथा प्रारब्धाधीना शरीरयात्रेति पार्थस्य समाधानसौकर्यात्तथा भगवता नोक्तं स्यात् । पार्थो हि परेषां तत्त्वज्ञानमास्थाय प्रायोपविष्टो जीवन्मुक्तमिवात्मानं मन्वानो न किञ्चित्कर्तुमुत्सहते, तज्ज्ञानसंस्थां न भगवानभिरस्यति, नित्यमुक्तमिव नरमधिकुर्वन् तत्साधारणीं च स्वप्रयोज्यां क्रियामुपदिशति । यथा स्यन्दनम्, तथा स्यन्दनाधिरूढस्य ते युद्धकर्मेति तत्त्वम् । अयमत्र राद्धान्तः—प्रारब्धस्थितौ न विवदामहे, तन्मात्रशेषाऽविद्येत्यादिकं तु न मन्यामहे, अविद्यात्वविद्यात्वाभ्यामेव नाश्यनाशकभावात्, सर्वत्र शुक्त्यज्ञानादौ भवन्मते तथा सम्प्रतिपत्तेः, प्रारब्धान्यत्वेन भवद्भिर्नाश्यतावच्छेदके विशेषणे गौरवान्मानाभावाच्च । यदि फलमनुरुणत्सि, तज्ज तर्हि प्रारब्धस्यैवाज्ञानान्तर्भावम्, सर्वसम्मतेरभावात् । यदि च यावन्ति ज्ञानानि तावन्त्यज्ञानानीति नानैव नाश्यनाशकभावे प्रारब्धेतरस्थल एव तत्कल्प्यते, न तु प्रारब्धान्यत्वं निवेश्यत इति मन्यते, तर्हि प्रारब्धनाशेन सहैवाज्ञाननाशोऽस्तु, प्रारब्धनाशस्यावश्यं कार्यत्वेन तत्कारणस्यैवाविद्यानाशकत्वोपपत्तेः, प्रारब्धस्याज्ञानकार्यत्वाभावप्रसङ्गाच्च, तत्त्वज्ञाननाश्यत्वेनैवाविद्यात्वोपगमात्, तदुक्तं पुरस्तात् ज्ञानमप्यज्ञानस्यैवेति । ज्ञानप्रागभावस्याप्यज्ञानस्यात्रैवकारविरोधः । ज्ञानव्यतिरिक्तस्य सर्वस्याज्ञानत्वादेकविधनियमोपपत्तेर्न प्रमाणाभावेनापि कृतार्थता । न हि ज्ञानभिन्नमात्रं प्रागभाव इति । अपि च प्रारब्धस्य तदाश्रयस्य च क्षणादिकं चरमतत्त्वज्ञानं वा परममुक्त्यव्यवहितपूर्वकालीनं नाशकम्, तस्यापि पुनस्तादृशक्षणान्तरं चेत्प्रमाणकल्पनायां ध्वंसधारादिकल्पनायां च गौरवात् । तत्त्वज्ञानाश्रयक्षणस्य दृश्याश्रयकालपूर्ववर्तित्वाभावनियमस्य प्रागभावे मानाभावात्तद्गर्भस्य तस्य दूषितत्वाच्च । किञ्च विद्याविषयत्वविशिष्टस्याविद्यासमयस्य च समकालीनत्वेऽपि चरमधीमतः क्षणस्याविद्यातत्प्रयुक्तदृश्यविशिष्टकालपूर्वत्वाभावनियमो निष्प्रत्यूह एव । अभ्युपगतं हि बृहदारण्यकभाष्ये विद्याविद्यासमययोः समसमयव्यक्तीभवनं रुद्राणां शङ्करेण । तस्माच्चरमधीमतः क्षणस्याविद्याविशिष्टकालीनत्वाभाव इति नियमान्तरमभ्युपगच्छतामाधुनिकवेदान्तविदुषां तत्त्वावबोधविशिष्टक्षणस्य स्वकालीनत्वाभावनियम एवाश्चर्यवत्पर्यवसन्न इति सुधीभिरवधातव्यम् । तथा च प्रकृतं ज्ञाननाश्यत्वं श्रूयमाणमपि तादृशस्य नाज्ञानत्वकल्पकम्, प्रारब्धादौ भाषासिद्धेः । तत्राज्ञानत्वप्रयोजकं किं नाम, नाश्यत्वमात्रमिति चेत्, न; प्रयोजकत्वात्, ज्ञानभिन्नत्वस्याज्ञानत्वावच्छिन्नं प्रति ज्ञानभिन्नजन्यत्वमेव प्रयोजकम्, अनादित्वात् । तथा च प्रारब्धस्य ज्ञानभिन्नजन्यत्वेनाज्ञानत्वे मूलप्रकृतावसिद्धिः । तस्याः स्वत एवाज्ञानत्वमिति चेत्, ईश्वरेऽप्यदमद्य इति प्रसङ्गस्यैश्वरापत्तेः । किञ्च तस्या ज्ञानत्वेन ब्रह्मान्तर्भावो वाऽज्ञानत्वं वा, अज्ञानत्वापेक्षया ज्ञानत्वस्य लघुत्वात् । तत्र भेदवादिनां मते धर्मरूपं ज्ञानं सा, अभेदवादिनां ब्रह्मणः स्वरूपसम्बन्धविशेषः, तस्य च तादात्म्यत्वात्तदवच्छिन्ननियम्यानामपि पदार्थानां न ज्ञानभिन्नत्वम्, ज्ञानधर्मप्रयोज्यत्वेनाज्ञानप्रयोज्यत्वाभावादिति गुरुमूर्द्धन्याः मतोऽयं मायावादतमसि ब्रह्मवादचन्द्रमा इत्याहुः ब्रह्मसाक्षात्कारैकेति । तत्साधारणलक्षणत्वस्वरूपसम्बन्ध एव सर्वनियामकः,

अविद्यानाशे तज्जनने वा, सचाभिन्न एव सम्बन्ध इति यथाकार्यमुन्नेयोऽयम् । मीमांसकाः प्रकृतिरित्यदृष्टमिति मायेति स्वरूपमिति बहुशो मन्यन्ते, तस्यां द्वितीयकल्पायां स्वरूपतादात्म्येन विद्यमानायां तदेकतोऽपि विरहात्मकाज्ञानेन स्थातुमशक्यत्वादित्यर्थः । अकारस्य भगवद्वाचकत्वेन निविष्टत्वाय तु तत्पर्यायतयेति पद्याम इत्याद्ययः । “प्रतिबन्धकाभावादिति । येनेत्यनेनैको ग्रन्थः । अत्र प्रतिबन्धकस्य निवर्तकस्याभावे निवृत्त्य-योगादिति द्वैतापत्तिरित्यर्थः । “भोगेनेति । प्रारब्धमविद्याभिन्नं ज्ञानानाश्यत्वे सति भोगनाश्यत्वात् । अत्र यसन्तेनैव सिद्धौ भोगेत्यादिविशेष्यं नाशकान्तरदर्शकमिति सत्प्रतिपक्षमसदनुकूलम् । “किं वक्तुमुद्यतोऽसि । विद्व तर्ज्ञकमेवेति सावष्टम्भम् । “अध्यासाभावादिति । सुषुप्ताविति अध्यास एव सामर्थ्यं कार्यकारणता । अथवा 'प्रारब्धाध्यासशल्यश्च प्राज्ञम्मीवमुक्तिमान् । परदृष्ट्या श्वसन् गच्छन्नेव किंचित्करो यदि । नैवं परस्य दृष्ट्याऽसौ वर्तमानः परैरिह । परदृष्टैतं लक्ष्योऽयं सुप्तोऽप्येवं विराडि'ति । कृतेऽपि प्रवचने चरमतत्त्वज्ञानस्यैव कारणत्वेन वैयर्थ्यादिति जीवन्मुक्त्यनुपपत्ति समुच्चित्य दूषणद्वयमभिहितम् । नन्वत्र 'तदधिगम उत्तरपूर्वाघयो' रित्यधिकरणविरोध इति चेत्, न; प्रारब्धसत्त्वेऽपि नास्मन्मते जीवन्मुक्तिविरोधः, शुद्धसत्त्वस्वरूपप्रेयोविषयतान्यतरेणानुभूयमानानन्दत्वस्यमुभयसाधारणमुक्तित्वम् । तत्रार्वाचीनाऽपि जीवन्मुक्तिः केषांचिदेव, न सर्वसाधारणी । द्वितीया तद्विलक्षणा शुकादीनाम् । यथाऽलीलविग्रहेणावतार इति । एतेन शुकादीनां जीवन्मुक्तानामर्थवाद इति परास्तम् । परममुक्तस्यैव सनाथीकृतस्य स्वकरे ग्रहणाच्छुकादीनाम् । एतेन स्वतन्त्रभक्ता अपि व्याख्याताः । नित्यमुक्तस्य हि भगवतः परिकरास्त इत्याहुः “सेति । सेति हास्यम् । “स्यादेतदिति । “चन्द्रादीति । तथा च वैज्ञानिकमवच्छेद्यत्वं चन्द्रादावनवच्छेदकत्वं चोपाधेरुभयत्र स्वरूपसम्बन्धविशेषः । “द्वित्र्यादीति । जीवनानात्वाभिप्रायेण । आभासत्वं चेदमेव योऽयं वैज्ञानिकावच्छेद्यावच्छेदकभावः । तथा च ब्रह्मावच्छेद्याऽविद्या वा जीव इति विकल्पोऽपि ध्वन्यते, तदुच्यते “द्वित्र्यादिसंख्यायोगीति । साक्षादेवाविद्यायाः संख्यायोगित्वात् । न चैवमविद्याया द्रव्यत्वापत्तिः, इष्टापत्तेः । “जीवपदवाच्यमिति । जीवप्राणधारण इति धात्वर्थानुशासने प्राणशब्दोपलक्षिताविद्याया एव सम्बन्धनिरूपकत्वायोगदृष्ट्या च तथात्वम्, 'जीवेनात्माभासेन करोती'ति श्रुतेरिति भावः । विचारस्वरूपमाहुः “नं तावदिति । कस्य ब्रह्मण इति प्रश्नार्थस्यैवार्थत उत्तरत्वे उत्तरयन्ति “नं ब्रह्मण इति । ब्रह्मणो मोहाभावोपदेशस्य चतुःश्लोक्यां प्रतिपन्नत्वात् । मालावेणुविषाणादिरूपस्य ब्रह्मणोऽनेकत्वावतारासम्भवात्प्रसिद्धलीलाया यथा नेतत्कल्पीयप्रामाणिकत्वम्, तथा कस्मिन्मानान्तरे प्रसिद्धतथाभावस्य जीवस्य न तथात्वं प्रमाणपरिगृहवेदान्तानां सम्मतम् । ब्रह्मैव स्वाविद्यया संसरतीति पक्षस्य 'नित्यो नित्यानां चेतनश्चेतनाना'मिति चैतन्यावधिभूतस्याविद्याविरोधित्वेन दूषितत्वात् । 'अभासेन करोती'त्यविद्याया एवाबभासं प्रति कर्तृत्वं वाच्यम्, न ब्रह्मणो नापि जीवस्येत्याहुः “अवभासविषयत्वादिति । अयं हेतुरविद्यायामपि तुल्य इति न तस्या अपि तथात्वम् । चैतन्यस्यैवाश्रयत्वविषयत्वाभ्यामविद्याया अविद्याश्रयत्वविषयत्वयोः प्रतिक्षेपादित्यर्थः । अत्र दृष्टान्तः “स्थानेनेति । समष्टुत्यवच्छिन्नचन्द्रद्वैतम् । “चन्द्रस्य नियतनकत्वावच्छिन्नस्य । सोऽयमीश्वरस्थानीयः । “तेषां द्वित्रचन्द्राणाम् । “तेषां द्रष्टृभिन्नानाम् । तस्य नियतकचन्द्रस्य । अस्तु तर्हि ब्रह्मण एवाविद्याश्रयत्वविषयत्वम्, मैवम्, कर्तृकर्मविरोधस्य भवदुक्तदूषणस्यानिस्तारात्, अत एवेदं संक्षेपकारमतं समतेऽप्याहुः “किञ्चेति । जीवात्मनः परमात्मनियम्यत्वं विहितनिषिद्धयोः स्वाधीनप्रवृत्त्यादिक(म)त्वम्, अन्यथा वेदमात्रात्प्रवृत्त्याद्युपपत्तौ सर्वस्य सन्मार्गवर्तित्वापातात् । नाप्यदृष्टान्नियमः, दुरदृष्टेन तथा सत्त्वसम्भवात् । न चैवं वैषम्यनैर्घृण्ये, तयोपरिशङ्क्य एव समाधेयत्वात्, तत्रैव विशदीकरणीयत्वात् । एवं च प्रतिबिम्बवादेऽपि नियामकत्वानुपपत्तेरुक्तत्वेऽपि न पौनरुक्त्यम् । नन्वेवंविधं नियामकत्वमव्यवस्थितम्, चन्द्रं प्रति व्यवस्थितचन्द्रस्य अर्थनियामकत्वमात्रे दृष्टान्तः सदस्येन तत्सत्त्व एवोपाध्यवच्छेदात्प्रतिचन्द्रव्यवस्थोपपत्तेः, इत्येवं ब्रह्मणोऽप्यन्तर्यामिणः प्रवृत्त्यादीन् प्रतीति चेत्तत्राहुः “श्रुतिरिति । द्वितीया श्रुतिरित्यर्थः । यथ'न्द्र्या गार्हपत्यमुपतिष्ठत'इत्यत्रेन्द्रगमन्यनिश्चितं लिङ्गप्राप्तमपि बाधित्वा द्वितीया श्रुतिर्गार्हपत्योपस्थानाङ्गत्वं तादर्थ्यैः

कल्पयति, तथाऽऽत्मशब्दव्युत्पत्तिप्राप्तं व्यापकत्वमपोह्य 'आत्मान'मित्येव द्वितीया नियम्यत्वं नियमयति । न हि व्यापकस्य नियम्यत्वम्, अत एवोक्तं श्रुतिभिः 'तदविमुच्य नियन्तृ भवे'दिति । अविमोकश्च भगवदीनव्यापकत्वव्याप्तिः । तथा सर्वशरीरगतचैतन्योपलम्भं काश्यादिस्थयोः सन्निधानं चादृष्टादिकमन्तरेणैवात्माऽऽत्मनि व्यापकाभेदपुरस्कारेण तिष्ठन्नियमयति संसारदशायां तस्याप्यन्तरोऽधिज्ञातः । एवं व्यापकत्वश्रुतेरुपपत्तौ सिद्धायां तदनुवादो नियम्यत्वपर्यवसायी स्वरूपतस्तु आत्मनो व्यापकस्यानुभूयमानव्यापकधर्माणां जीवात्मनि स्वाभेदमहिम्नैव निर्वाहसम्भवात् ।

'गन्धवद्व्यतिरेकोऽयं ब्रह्मणः सर्वगस्य हि ।
जीवचैतन्यसिद्ध्येषा व्यवस्था पाञ्चरात्रिकी ॥
न व्यासश्रीमदाचार्यकुमाराणां च सम्मता ।
विश्वतोमुखसूत्रस्य व्यवस्थां वेत्ति वाक्पतिः ॥

गुणे गुण्यतिगामित्वं व्यवस्थाप्यापि यन्मतम् ।
व्यापकत्वश्रुतीनां हि भगवत्त्वेन योजनम् ॥
तन्मतान्तरभावेयं स्वस्य सिद्धान्तसिद्धये ।
नानाविधप्रकारा हि वादिनां भगवन्मताः' ॥

प्रकृतं प्रस्तूयते एवंविधं नियामकत्वमध्यासपरिनिष्पन्नं चेच्छुद्धेऽध्यासः स्वीकर्तव्यः, तर्हि स्वरूपतः शुद्धाविशेषाज्जीव एव नियामकत्वाध्यासोऽस्तु । तथा चैतत्प्रतिपादका'न्तरउपपत्ते'रित्यधिकरणभङ्गः । सर्वाधिकरणानां ब्रह्मण एव प्रतिपाद्यत्वेन प्रायः समन्वयदृढीकरणार्थत्वात्, अक्ष्यादिदेवताऽन्तरत्वजीवान्तरत्वस्याप्यधिकरणेन क्रोडीकरणात् । अथैवं जीवाभिन्ने तद्विलक्षणे च ब्रह्मण्यभेदवादे किं मानम्, आविर्भावस्तु दापथनिर्णय इति चेत्तत्राहुः अपरं चेति । ब्रह्मणस्तत्तथोपनीतसत्तादात्म्यानुगमनमेव । 'यथा विभूतयः सत्याः प्राकट्योत्कर्षतो मताः' । एवं सत्त्वस्यैकविधस्यैव वैलक्षण्यनिरूपके ब्रह्मप्रपञ्चे विषयतामात्रेण स्वरूपसन्मात्रेण चरणारविन्दमादधतो भगवतः सर्वोत्कर्षः श्रुतिभिर्वर्ण्यमानो लोकसिद्धं पुरस्कृत्यैव, अन्यथा धर्मिवद्धर्माणामपि मानान्तरासिद्धौ प्रतिपादनस्य विप्रतिपन्नत्वापत्तेः । अतोऽभियुक्तानां सूक्ष्मेक्षिकया भवितव्यमिति चकारचकोरार्थः । 'कः सम्बन्ध इति । असम्बद्धसांख्यव्युदासाय । अप्राप्तिपूर्विका प्राप्तिः संयोगः, न विद्या अविद्या सर्वज्ञताविरोधिगुणो ब्रह्मणस्तत्तन्मात्रताप्रतिपत्तिरिति सिद्धान्तः । तत्प्रसङ्गादिह ब्रह्मणो जगत्कारणतावच्छेदकं विचार्यते, तत्राज्ञानं भावरूपमिति मते तदध्यासस्यावच्छेदकत्वमुपलक्षणत्वं वा । द्वितीये तस्यानवच्छेदकत्वभावत्वेन कारणतावच्छेदकत्वमनुपपन्नम्, जगत्कारणतावच्छेदकशक्तेरज्ञानानिर्वचनीयत्वात्, अन्यथा सर्वज्ञस्य जगत्करणे प्रवृत्तिर्न स्यात् । तथा च जगदपलापप्रसङ्गः पूर्वमुक्तो न विस्मर्तव्यः । स्वरूपसम्बन्धलक्षणायास्तु सम्भवत्त्वावच्छेदकत्वम्, निरवच्छिन्नकारणत्वाभ्युपगमे(तु निरुपाधिकमेव कारणत्वमन्ततः स्वरूपविषयत्वमेव वाऽवच्छेदकम्)ऽपि लौकिकं साधनसाधारणकारणतावच्छेदकं स्वरूपविषयत्वमेवेति सर्वानुपपत्तिं सिद्धान्ते परिहृत्य परमते तामुद्धाटयन्ति 'नं तावदिति । तयोर्विभुत्वेनेति । न चाविद्याया द्रव्यत्वेन विभुत्वेऽपि न ब्रह्मणः, त्रिविधपरिच्छेदशून्यत्वस्य तन्मते विभुत्वपदार्थत्वादिति वाच्यम् । आविद्यकत्वाभ्युपगमसिद्धान्तेनैतदभिधानात्, तदा ब्रह्मणोऽपि द्रव्यत्वाङ्गीकारात् । ननु तथाप्यविद्यासम्बन्धाभावे तदनुपपन्नम्, मैवम्, तदनङ्गीकारपक्षेण तस्यैव दूषितत्वात्, नित्यानादिसंयोगानङ्गीकाराच्च, संयोगस्य नियमेन जन्यत्वे मानाभावात् । अध्यास इति । तत्प्रयोजकरूपाभावेन तस्याप्यभावादित्यर्थः । अधिकारेणैतदर्थप्राप्तेः । अत एवोभयाभावबोधनाच्च पौनरुक्त्यम् । कथं पुनस्तत्प्रयोजकरूपाभाव इति चेत्, अत्राभिधीमहि सन् कुम्भः सन् पटः पीतः प्रिय इत्यादिप्रत्ययाः किमध्यासं संसर्गतयाऽवगाहन्ते, तन्नियामकं वा मूलाज्ञानाध्यासम् । द्वितीये कार्याध्यासे मानाभावः । आद्ये कारणाध्यासे मानाभावः । अथानवस्थापरिहारार्थं कारणाध्यास आवश्यकः ।

प्रातीतिकप्रातिस्विकाध्यासस्तु सर्वज्ञाध्यास एव किञ्चिज्ज्ञाध्यासानुप्रवेशादुपपन्नः । संसर्गत्वेन भानात्तु नाधुना सार्वज्ञ्यमुज्जृम्भते । एवं तर्हि सत्यानृतसंभेदावभासः कार्यकारणाध्याससाधारणसिद्धान्तलक्षणाक्रान्तः । तथा च कारणाध्यासोऽपि स्वरूपसम्बन्धमपेक्षते, न वा । आद्ये सम्बन्धानवस्थादौस्थ्यम्, द्वितीये त्वध्यस्तं ब्रह्मेति भवन्मते लौकिकवैदिकप्रत्ययानुपपत्तिः । ब्रह्मस्वरूपं तत्र सम्बन्ध इति चेत्, तर्हि किमन्यत्र तन्निलायनक्रीडामनुसरति । यत्तु स्वरूपसम्बन्धानङ्गीकारावसरे मधुसूदनैः विक्रान्तम्, तथाहि ज्ञानविषययोर्न स्वरूपं सम्बन्धः, तद्विवेके स्वरूपं सम्बन्धश्चेत्यर्थे, संयोगादावतिव्याप्तेः । न च तदुभयान्यत्वम्, हिमवद्विन्ध्ययोरपि स्वरूपसम्बन्धापत्तेरि[illegible] । सत्यम् । तयोरपि हिमवद्विन्ध्यावित्याद्येकज्ञानविषयत्वादिसम्बन्धसत्वात् । यथा वाऽग्नीषोमौ गौतमभरद्वाजौ नारदपर्वतावित्यादि सह्यविन्ध्याविति च, तेन विशिष्टबुद्धेरपीष्टत्वात् । अन्यथा तु तदारोपाभावे तन्निमित्ताकल्पनात् । यदपि सम्बन्धान्तरमन्तरेण विशिष्टप्रत्ययजननयोग्यत्वमात्मन्यब्धात्तम्, तन्नात्मानं जानातीत्यादौ समवायस्यैव सम्बन्धान्तरस्य सत्त्वादिति । तदपि न । तत्र विशिष्टप्रतीतिजननयोग्यतायामात्मनि ज्ञाननिरूपितायां स्वस्मिन् स्वनिरूपितायां च समवायस्यातन्त्रतया तदन्तरेणेत्यस्योपपत्तेः । अतीन्द्रियाभावादावीश्वरज्ञानानुमित्यादिरूपप्रतीतियोग्यतयैव सामान्यतो विषयतोपपत्तेः । सम्बन्धत्वं च संसर्गताविशेषः प्रतीतिसाक्षिकोऽतिरिक्तपदार्थः प्रमेयत्वादिवत्स्वपरसाधारण इति नानवस्थाव्यापातौ । सम्बन्धत्वेन च चाक्षुषत्वं मूर्तत्वमूर्तत्वान्योन्याभावस्येव, अखण्डोपाधिनाऽभावत्वेन विषयत्वादिना वेत्यमियुक्तैरभ्युपगमात् । अभावभ्रमस्थले तु वास्तवसम्बन्धसत्त्वे प्रमात्वस्याऽऽपाद्यत्वम्, तदापादने वास्तवसम्बन्धसत्त्वमित्यन्योन्याश्रयसाम्यात्, फलानुरोधित्वात्कल्पनायास्तत्र स्वरूपस्य सम्बन्धत्वाकल्पनाच्च । न चैवं सम्बन्धान्तरमन्तरेणेत्यादि व्यर्थम्, तस्य सम्बन्धत्वकल्पनातात्पर्यकत्वात् । नन्वियं कल्पनाऽध्यासापरपर्याय एवेति चेत्, न; विश्वव्यवस्थाया अनादिसिद्धदेशकालाद्युपबृंहितविषयतयैवोपपत्तेरित्यधिकं विशिष्टेच्छाव्यवस्थायाम् । एतेन विषयता नाध्यास इत्युक्तं भवति । विषयतयैव सर्वत्र सत्त्ववतांशो नातद्वत्त्वांश इति ब्रह्मांशे प्रामाण्यमेवाशेषतादात्म्यसंग्राहकम् । एतेन विशिष्टस्य प्रत्यय इत्यत्र स्वरूपसम्बन्धस्य पष्ठ्यर्थत्वे आत्माश्रयः । सम्बन्धमात्रस्य तत्त्वे समूहालम्बनविषयजगत एव तत्तज्ज्ञानविषयत्वापत्तेः समूहालम्बनविषयतायाः स्वरूपसम्बन्धात्मिकायाः सत्त्वात् । एवं ज्ञानस्याभावो ज्ञातोऽभाव इत्यनयोर्विषयावैलक्षण्येनावैलक्षण्यप्रसङ्गादिति दूषणमप्युद्धृतम् । अतिरिक्तत्वेनाभ्युपगतसम्बन्धत्वकल्पनायाः स्वदस्तित्वात् । न च प्रतीतौ सत्यां सम्बन्धत्वकल्पना, तस्यां सत्यां प्रतीतिरिति वाच्यम् । संसर्गज्ञाननियमेन प्रतीतेः सम्बन्धत्वकल्पनानपेक्षत्वात्, नित्यविषयतायाश्च संसर्गत्वकल्पनं न प्रतीतिमपेक्षते । नापि द्वयबाधे तृतीयसम्बन्धकल्पनमिति संसृष्टं ब्रह्म, क्वचिदसंसृष्टस्वभावम्, उपलक्षणभिन्नत्वात्, यदेवम्, तदेवम्, यथा चिद्विशेषणीभूतशमदमादिव्यक्तिः, यन्नैवम्, तन्नैवम्, यथा माया । तेन मायिकसंसर्गनिरासः । अत एव सांख्याश्छायापरत्यतिरिक्तं वैशिष्ट्यं प्रकृतिपुरुषयोर्न मन्यन्ते, भेदख्यातिपर्यवसानाज्ञानद्वयवादिनामामनन्ति चोपलक्षणस्य प्रकारताम् । सिद्धान्तिनस्तु तामपि न मन्यन्ते, तद्वक्ष्यामः । न चोक्तानुमानं प्रयोजकम्, उपलक्षणभिन्नस्य विशेषणस्य संसर्गिस्वभावतायाः प्रयोजकत्वात् । ब्रह्म च नोपलक्षणम्, व्यावर्तकान्तरविशेषणविरहात्, असत्त्वविरहात्, प्रत्याप्यव्यावृत्त्यसमानाधिकरणत्वाच्च । तेनाणूनामिव तद्व्यक्तित्वेन ब्रह्मणो व्यावर्तकत्वेऽपि फलितद्वितीयहेतोः सत्त्वान्नासिद्धिः । अतद्व्यावृत्तिसमानाधिकरणस्योपलक्षणत्वात् । अन्यथा पटादेरप्यनियतोपलक्षणत्वप्रसङ्गात् । न च ब्रह्म न संसृष्टस्वभावम्, अविशेषणत्वादिति प्रतिरोध इति वाच्यम्, पटादिषु व्यभिचारात् । विशेषणसामान्यभेदो हेतुरित्यपि न वाच्यम्, ब्रह्मविदि ब्रह्मणो ब्रह्मणि चोभयत्र तादात्म्येन ब्रह्मणो विशेषणत्वात्, अनावृतानन्दत्वस्य विशेषणत्वाबाधाच्च, आवृतानन्दव्यावर्तकत्वात् । माया तु समष्ट्यङ्गीकारे स्वकार्येषु विशेषणीभवन्ती ब्रह्मणि न विशेषणमिति भवदभ्युपगमाच्च । वस्तुतस्तु मायायाः क्वचिदपि न विशेषणत्वम्, अननुगतस्वभावत्वात्, समष्टावपि चैतन्यानुप्रवेशात्, सत्ताया एवानुगतत्वात्, सर्वभ्रमनध्यासात् । एवं प्रपञ्चेऽपीति रहस्यम् । कथं तर्हि पटे रूपमित्यादिर्वितत्तो विशेषणविशेष्यभाव इति चेत्, तद्वत्ताप्रतीतेर्विशिष्टबुद्धित्वे अनुबोध्यसंसर्गस्यानुपतस्यातिरिक्तस्य सिद्धान्तिभिर्ब्रह्मस्वरूपत्वाङ्गीकारात् । एतेनाभंगमनया पूर्वमिव्रा धर्ममीमांसापि सांसर्गिकविषयनाविशेषपरतया व्याख्याता । तथा चोपलक्षणीय

प्रकारता प्रत्याख्याता । भ्रमायाः प्रतीतेरेकविधसंसर्गतागोचरत्वात् । अथ संसर्गतावच्छेदकतया व्यक्तिषु विशेषणतासिद्धिरवच्छेदकता विशेष्यतात्मविदुषां संगृहीतः तस्या इति । किञ्चैवं शुक्त्यादौ रजतादिमत्त्वं प्रमाणं स्यात्, संसर्गप्रतीतेरिति, सत्यम्–अवच्छेदकताया अपि तद्वत्ताप्रत्ययगोचरत्वात् । रजतं तु यत्किञ्चिदस्तु, संसर्गो भ्रमैकबाध्यमिति । यदप्याहुः तात्त्विकसम्बन्धव्यापकस्य देशकालविप्रकर्षाभावादेरनुपलब्ध्या बाधात्वविशेषादाध्यासिकसम्बन्धसिद्धिः । यद्यपि प्रतियोग्यनुयोगिभाववाच्यवाचकभावादीनां सम्बन्धत्वे तादृशव्यापकाभावादेरनुपलब्धिर्न बाधिका, तथापि तात्त्विकाध्यासिकाभ्यां भिन्नमेव तादृशं सम्बन्धं ज्ञेयत्वान्मिथ्याभूतमुररीकुर्मः । तथातिरिक्तमनतिरिक्तं वेत्यस्यां काकदन्तपरीक्षायां न नो निर्बन्ध इति, तदेतत्सम्बन्धत्वासिद्धौ प्रतियोगित्वादीनां सम्बन्धत्वसाधकाभावेनासिद्धौ तन्तुकार्पासाद्यभावे तन्तुवायेन सह वादप्रवादमनुहरतीत्यलं प्रसङ्गेन । तस्मादनवस्थापरिहारो नाध्यासवदरैः, किन्तु स्वरूपसम्बन्धेनैव । तदिदमुक्तम्–संसर्गाप्यभावादिति । अनवस्थयैवाविद्ययाऽनवस्थां परिहरतो व्याघातः । अत एव दाम्नामनवस्थां परिहर्तुं यत्नेन दामनि स्वरूपसम्बन्धमङ्गीकृतवान्, तत एवानवस्थामप्यनङ्गीकृतवानित्यावरणाविद्यापरिहारार्थेयं लीला पुंभावप्राप्ताया मातुः समुद्दिश्य वत्सलं पितरं प्रति प्रेमोत्पादनम् । ततः स्तुतिश्चेत्यादिकमुपपद्यते । अत्र वादिनाऽऽशामोदकमुपलक्ष्य स्वमतेन सत्यं कर्तुं प्रथमतस्तदाशां ग्राहयन्ति नापि स्वरूपेति । अविद्यास्वरूपेण प्रत्याशा सम्बन्धस्य कार्यां, परन्तु ब्रह्मस्वरूप इत्यभिसन्धिः । प्रश्नेऽविद्याया अभ्यर्हितत्वेन पूर्वत्वात्, तन्मते परस्पराध्यासाङ्गीकारेणाविद्यानिरूपितसम्बन्धस्यापि प्रक्रान्तत्वात् । अविद्यया करणीभूतया सम्बद्धो बद्धः, ब्रह्मणा स्वेन आभिमुख्येन सम्बन्धेन सम्बद्धो मुक्तः । प्रपञ्चोऽप्यस्मन्मते मुक्तियोग्यः, उपाधेस्तत्रान्यस्य चाविशेषात् । यदि सार्वत्रिकं तत्, तथापि ज्ञप्तिमपेक्षते । व्यवस्थितस्वरूपसम्बन्धकल्पनप्रमा(ण)रूपं वस्तुनस्तत्त्वमिति । तस्माद्ब्रह्मप्रयोज्यसम्बन्धेन संसारित्वापादकः, किन्त्वविद्याप्रयुक्त इति नियमः । अत एव आस्तां वेति । आत्मामित्युक्तः पक्षः स्वसिद्धान्तो वेति पराभिमतानादर इत्यतस्तत्र दूषणमाहुः वोच्य इति । उक्तानवस्थापरिहारायेति शेषः । ऐक्येति । पूर्ववर्तित्वमनपेक्ष्य कारणत्वे सव्येतरविषाणयोरपि कार्यकारणभावापत्तिः । न चेष्टापत्तिः, कार्यत्वकारणत्वयोर्मिथो विरोधादिति भावः । योगक्षेमसाधारणीं कारणतामाशङ्कते नन्विति श्रुतीति । प्रागभावस्य एवेदं न भावस्य इत्याहुः तन्निर्वाहायेति । अथ कोऽयं निर्बन्ध इति चेत्, तत्राहुः मैवमिति । सर्वात्मनेति । मुक्तिकालोत्पत्तिकत्वं मुक्तिकालीनध्वंसप्रतियोगित्वमित्यंशपरिहारेण सादित्वानन्तत्वादिनिषेधोऽविद्यादावित्यर्थः । यथेति । देवमानेन शतायुर्मध्ये न मरणमित्यर्थः । मरणं चैहिकजन्मावच्छेदेन स्वसमानाधिकरणस्वप्रागभावासमकालीनस्मृत्याद्यभाव एव । न च मनुष्यमानेन शतायुर्मध्ये मरणाभावे मनुष्योऽप्यमरः स्यादिति वाच्यम् । देवेष्वविद्यायां च देवमानस्वमानयोरेवामरानादिपदाभ्यामभिधानात् । 'विद्यां चाविद्यां चे'ति श्रुत्यनुसारेण 'विद्ये'त्यादिवाक्यं व्याचक्षते तद्विच्छेति । अत्र विद्याविद्ययोर्भेदाविरोधावपरं वक्तव्यौ, सहभावश्रुतेः फलभेदश्रुतेश्च । तत्र भावरूपमज्ञानं नाभावरूपम्, व्याघातस्योक्तत्वात् । तस्य भावरूपता विद्यान्तेऽपि । किन्तु सखण्डाखण्डविषयतारूपे भानत्वाभावत्वे । विद्याऽविद्ये सखण्डाखण्डत्वाभ्यां प्रकारतात्वादिकेवलविषयतात्वादिरूपे । न चावश्यकत्वात्केवलविषयतैवास्तु, विनिगमकाभावेनानुपस्थितसंसर्गताज्ञप्त्यामिव महत्वापत्तात्, ततो विषयतामात्रसिद्धेरप्यनिवारणात् । एतेन ज्ञानाभावोऽभानमात्रं च व्याख्यातम् । तत्र तत्र च विशेषो वक्ष्यते । यथा च नैयायिकरीत्या ज्ञानाभावे व्याघात उक्तस्तत्र नैयायिकः प्रत्यवतिष्ठते–तमसोऽसिद्धत्वाद्दृष्टान्तासिद्ध्याऽविद्यानुमानं तावदसिद्धम्, तमसोऽतिरिक्तत्वसाधनं वैयर्थ्याद्वादिनः । न च व्याघातः, घटादिज्ञानाभाववानहमित्यज्ञानावगाह्यनुव्यवसायेन प्रतियोगितया ज्ञानग्राहिणा प्रतियोगिज्ञानवत्त्वं नः स्यादित्यमित्येवं हि सः । न ह्येवं समवायसम्बन्धावच्छिन्नज्ञानाभावज्ञाने प्रतियोगितया घटादिज्ञानस्याप्रतिबन्धकत्वात् । यद्यपि घटज्ञानज्ञाने घटज्ञानाभावाविरोधितावच्छेदकीभूतप्रतियोगितावच्छेदकं घटज्ञानत्वं न स्वीयप्रतियोगितावच्छेदकतानियामकसमवायसम्बन्धावच्छिन्नप्रकारतासम्बन्धेनेत्युक्तम्, तत्र घटत्वसमवायपर्यन्तस्याविवक्षितत्वात्समवायेन घटज्ञानत्वं स्वीयसमवायावच्छिन्नप्रकारतानिरूपितविषयितासम्बन्धेनेति वैषम्यम् । यदि

मन्यते नैतदपि तस्य घटीयालौकिकविषयतानिरूपितज्ञानीयलौकिकविषयतानिरूपितसमवायावच्छिन्नविषयितया तज्ज्ञानज्ञानवृत्तित्ववद्घटीयालौकिकविषयतानिरूपकज्ञानज्ञाने घटज्ञाननिरूपितसमवायेनापि घटज्ञानत्वप्रकारधौव्यात्, विषयताद्वयसमावेशस्येष्टत्वात् । अतो नैयायिकाः कथमेवं व्याघातं व्याहरेयुः । यच्च घटीयालौकिकविषयतानिरूपितज्ञानीयलौकिकविषयत्वावच्छिन्नमानसे तादृशविषयत्वावच्छिन्नस्य कार्यसमानतत्पूर्वकालान्यतरवृत्तित्वनियमाद्विरोधतादवस्थ्यमिति, तत्सत्यम्, तथापि घटीयलौकिकविषयतानिरूपितज्ञानीयलौकिकविषयतानिरूपितसमवायावच्छिन्नघटज्ञानत्ववत्त्वेनाविरोधात्, तस्य साक्षाद्घटज्ञान एव सत्वात्, तस्य सत्त्वेऽपि निरुक्तालौकिकविषयताघटितधर्मावच्छिन्नाभावस्य प्रत्येतुं शक्यत्वादित्यास्तां तावत् । अत एव बाधनिर्णयोऽपि भिन्नप्रकारकत्वान्न शङ्क्य इति । यत्पुनर्भावविशेष्यकप्रत्यय एकत्र द्वयमिति न्यायो न चेति तच्चिन्त्यम्, घटमहं न जानामीत्येव सार्वलौकिकत्वात्, मयि घटज्ञानमिति ज्ञानसत्त्वे तदसम्भवाच्च । उक्तरीत्या घटज्ञानानुव्यवसायाप्रसङ्गेन तत्तदुपधायकघटज्ञानसत्त्वेऽधिकरणतावच्छेदकांशेऽपि विशिष्टवैशिष्ट्यबोधमर्यादातिशायिनोऽभावप्रत्ययस्याप्रामाणिकत्वाद् निर्धर्मितावच्छेदकाभावबुद्धेश्चालीकत्वात्, अधिकरणतावच्छेदकप्रकारताधिकरणोपस्थितेस्तत्र तन्त्रत्वात्, तादृशानुव्यवसायस्थलेऽज्ञानसिद्धिप्रसङ्गेनैकव्यूहभङ्गेऽपि व्यूहान्तरप्रत्यवस्थानेन वादिविजयप्रसङ्गाच्च । एवं प्रतियोगिसविषयकत्वं ज्ञानव्यावृत्तं दुर्वचम्, व्यावृत्तौ वा विनिगम इत्यपि बोध्यम् । संस्कारत्वेन च जन्यत्वं स्मृतिप्रागभावजन्यत्वं वा स्मृतित्वमापादयसीति तत्तद्व्यावृत्तप्रतियोगिसविषयकत्वेन हेतुतायामपि घटीयसविषयकाभाववानहमित्यनुव्यवसायानुपपत्तिर्दुर्वारैवेति ध्येयम् । अतीन्द्रियसाधारणज्ञानत्वावच्छिन्नाभावस्यातीन्द्रियत्वेन तज्ज्ञानप्रागभावस्यैव विषयत्वाच्च । किञ्चात्र इत्यादावधिष्ठानाविषयकत्वतज्ज्ञाने लक्षणा तु तज्ज्ञानस्याधिष्ठानाविषयत्वे स्यात्, ततो वरम् । न चैव विरोधिगुणे लक्षणेति । इदं तु बोध्यम्–प्रतियोगितदभावयोरिव ज्ञानाज्ञानयोर्विरोधोऽपि कथं समाधेयो भवद्भिः, कथं च ज्ञानाभावस्य ज्ञानसमयेऽविनिगमः परिहरणीयः, यत्किञ्चित्तदभावसत्त्वात् । कथमन्यथा प्रतियोगित्वोपपत्तिरपि । वस्तुतस्तु तत्रार्थोऽखण्डविषयत्वलक्षणं वैकल्यम्, अन्यथा प्रतियोगिक्षणानवच्छिन्नतत्तदधिकरणीयविशेषणतायामभावसंसर्गतायां तत्तत्क्षणावच्छिन्नत्वाभावस्यापि तादृशी विशेषणता सम्बन्ध इत्यनवस्थापत्तेः । अतिरेके तु विषयतायास्तत्र तत्रैव सम्बन्धत्वं कल्प्यते । सा च नित्यानित्यरूपा जन्यज्ञानेषु यथासम्भवं स्वीक्रियमाणसंसर्गताशालिनी तथैवाश्रयत्वविषयत्वभागिनीति भावरूपे एव ज्ञानाज्ञाने । अत एव 'विज्ञानं चाविज्ञानं चे'ति ब्रह्मवादिनामुद्घोषः । अथ समुदायवृत्त्याऽज्ञानादिपदं भावरूपाज्ञानवाचकम्, रूढिर्योगमपहरतीति न्यायाच्च । रूढिग्राहकं च मायाप्रकृत्यादिपदं ब्रह्मपदमिव मन्मते परमात्मन इति चेत्, गतम्, तथाप्यवयवशक्त्यैवोपपत्तेः । न हि वस्तुनोऽज्ञानं ज्ञानाभावो वाऽर्थः, घटो नेत्यत्र व्यभिचारात्, भावे वा मतभेदे घटाज्ञानमर्थः स्यान्न तु ज्ञानसामान्याभावः । एवं चावयवीयोपस्थितेरभावं प्रसिद्धमेवादाय सुलभतयाऽश्रुता कथं बलाबलविवेकः । यदि च प्रकृतिप्राकरणिकी समुदायार्थोपस्थितिः शीघ्रतमा, यथा 'वरुण आदित्य' इत्यादाविति विभाव्यते, तदा ब्रह्मप्रकरणं 'किन्त्वयात' इत्यारभ्यैवेति वाच्यम् । उभयाकाङ्क्षारूपप्रकरणस्य पूर्वत्रोभयत्रापि च सत्त्वात् । वस्तुतस्तु कुमुदादिबोधव्यावर्तनाय पङ्कजादिपदे रूढ्या नियम आस्थीयते । प्रकृतेऽज्ञानभेदतदत्यन्ताभावप्रागभावादिबोधनेनातिप्रसङ्गसंभावना येन रूढिः स्वीक्रियेत । यत्तु अभावबोधासम्भवस्तद्बीजम्, तत्तु प्रागेव समाहितं व्याघातपरिहारे । किञ्च ज्ञानदशायां तदभावदशायां वा न जानामीत्यस्यानुपपत्तिरुद्भाव्यते; नाद्यः, तदानीमज्ञानवादिनापि तत्प्रतीत्यनङ्गीकारात् । द्वितीये तु तुल्यं समाधानम्, स्वोत्तरवर्तिज्ञानत्वावच्छिन्नप्रतियोगितासंसर्गावच्छिन्नाभावबोधसाम्राज्यात्, अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तेर्व्यवस्थितविशेषविषयत्वादिति संक्षेपः । अविद्याकृतस्वरूपसम्बन्धकल्पनायां बन्धो, विद्याकृततत्कल्पनायां मुक्त इत्युक्तं साधनेति । साधनाप्यायोक्तविद्याऽप्युक्तिरित्यर्थः । अंश इति । उक्तरीत्या सादित्वमभिप्रेत्य । तथाचेति । सम्बन्धनिरूपणभेदाभिरूपकभेदाच्चोक्तव्यवस्थायां ध्रुवकलायामित्यर्थः । उभयातिरिक्ता प्रसिद्धिरेतेन परिहृता, ध्रुव इव तदवस्थादर्शनादिति हृदयम् । शुकसनकादी-

नामिति । शुकश्च सनकादयश्चेति द्वन्द्वः । आद्योऽवतारिमुख्योऽभ्यर्हितः, अन्ये त्ववतारमुख्याः । आदिना सनन्दनसनत्कुमारौ । वामदेवस्तु न सर्वदा तथा, किन्तु सम्पन्नः । 'तद्धैतत्पश्यन्नृषि'रिति सिद्धसाध्यसमभिव्याहारलब्धकार्यकारणभावबलेन साधनसामग्र्यैव तस्य कृतार्थ( त्वानुशयात् )त्वसंप्रतिपत्तेः । अत एव हत्वा शिवः शुक इति न श्रुतौ पृथगुक्तः । सर्वदैव भगवद्भावावेशेन परमात्मैव शुकः श्रौत इति तु पारमहंस्यम् । अनुग्रहस्तु द्वादशपद्येन पूर्वमुदाहृतः । तथाहि—श्रीभागवतस्कन्धप्रतिपाद्यलीलावच्छेदकयो मनीषिभिर्गणनेनोद्धर्तव्याः । तत्र 'श्रियो वपुर्दधदि'ति फलप्रकरणार्थत्वात्पूर्वमुक्तिः सर्वोपास्यत्वाच्च । 'नोऽनुग्रहं व्यधा' दिति पुष्टिः । उभयोः कण्ठरवेणोपादानमन्योपलक्षणम् । एवंकथा निषेवितमिति द्वादशवाक्यार्थः । 'श्रियां चाश्रियां चे'ति चकारद्वयपुष्टिवाक्यार्थपाकुण्ठ्यमुख्येन भगवत्येकधैव साहित्येन सम्बध्यन्ते, साहित्यं भगवद्भावः, 'उभयं सहे'त्युक्तेः । भगवद्भावस्तु भगवतो द्वादशात्मतप्रकटीकरणम्, तच्छुक एव चेति । स च शुकः शोकस्य पारं गतः । शुकः शोकस्य शुद्धसत्त्वभावोऽकारस्तदात्मा हि सः । शुक् च अश्चेति व्युत्पत्तेः । ककारशकाराभ्यां रूपद्वयं समासाभावश्चेति बोध्यम् । तथा च विद्याऽविद्ययोः प्रकारान्तरेण सहभावासंभवात्केनापि रूपेण भगवद्भावावस्थाभावात् 'सोऽकामयते'तीच्छात्मकभगवद्भावस्य स्वतन्त्रत्वात्केचिदिच्छामुक्ता आत्मान इति स्थितम् । 'सोऽकामयते'तीच्छाया लौकिकालौकिकप्रपञ्चगोचरत्वादिति प्रस्तुतोऽर्थः । प्रसङ्गागतं 'एव एते'त्यादिवसुपरिष्टादुपपादयिष्यते । **अग्रे वक्ष्याम इति** । 'श्रुतितत्त्वसन्निधे'ति कारिकायामित्यर्थः । तथा च योगक्षेमसाधारणकारणतास्वीकारे तुल्यन्यायतया ब्रह्मापेक्षयाऽविद्याया एव तादृशकार्यतापत्तेर्भवन्मताऽर्थान्तरम्, अस्मन्मते भवन्मतसाधनान्तरीयकं सिद्धिरिति निगूढभावार्थः पूर्वग्रन्थस्य । नन्वेवमविद्यानिष्ठकारणत्वप्रमापकप्रमाणानुपपत्तिरिति चेत् तत्राहुः **अस्या न निषेधतीति** । अयमाशयः 'अस्या बन्धैकस्वभावाया' इति अनुपदवक्ष्यपरामर्शात्स्वस्वभावत्वं बद्धभावसमनियतमित्यस्या अपि बन्धस्वरूपत्वेन कार्यत्वावश्यंभावात्तत्करणीभूताविद्ययेति पदं ब्रह्मसमर्पकमेव कारणत्वस्य ब्रह्मैकनिष्ठत्वं गमयति । न हि भवन्मतेऽप्यचेतनस्य कर्तृत्वं, किन्तूपहितस्य । तथा चोभयथाऽपि मते विशेष्यतया ब्रह्मण एव कारणत्वं 'चक्षुषश्चक्षु'रितिवदविद्यागतकरणतानिर्वाहकमित्युक्तम् । **न निषेधतीति** । सूरिभिर्मनीषितव्यम् । विद्वन्मण्डनपद्ये मयैव व्याख्यातुल्यसिद्धपत्रमर्पितमिति निपुणैर्विभावनीयम् । जीवस्वरूपं तु तदानीं विद्यमानब्रह्मस्वरूपस्य सहस्रसम्वत्सरपरिमितकालादनाविर्भूतत्वेन प्रथमतो व्युच्चारणं प्रतीतपृथग्भावेंऽशत्वेनैव व्यपदेशो, न बद्धत्वेन, नापि जीवत्वेन तदुक्तम्, स्वैरूपमिति । जीवत्वं तु प्राणशब्दोपलक्षिताऽविद्यापदार्थसम्बन्धनिबन्धनं प्रागुक्तम् । परिपूर्णस्वरूपतिरोभावः स्वप्रयुक्त इति तत्त्वम् । तत्तादृशार्थं पुनरप्याहुः **जीवैर्भावमिति** । हामतेन तु 'तदभिध्याना'त्त्यर्तिन्यायेनाविर्भावविशेषो जीवभावः । तेनाऽविनाश्यसर्वज्ञतांशशिष्टमपनीयते, तत्रैव किञ्चिज्ज्ञतामात्रप्रतीतो जीवभावः, मात्रत्वं ब्रह्माभिध्यानप्रयुक्तम्, अभिध्यानं तु स्वरूपसम्बन्धविशेषो ब्रह्मनिरूपितो, न त्वविद्यानिरूपितः । ब्रह्म हि स्वसम्बन्धमन्तःकरणादौ फलप्रकाशो भवति, प्राज्ञ इव सुषुप्तौ । इयमेव प्रथमावस्था जीवस्य सुषुप्तावनुवर्तते । ब्रह्मणि पुनरविद्या स्वसम्बन्धमध्यासात्मकं कल्पयन्ती पूर्वोक्तकार्यकारणाध्यासविकल्पप्रसञ्जितामनवस्थामसहमाना स्वरूपाद्यं सम्बन्धमापद्येयादि, तर्हि ब्रह्मवासादिं तथा, कालियेनेव भगवानिति परमात्मोपलक्षः सर्वश्रुतीनां दर्शितः । परमात्मना तु स्वसम्बन्धबलेन सर्वज्ञेनाविद्यामभिकृत्याधोक्षजेनाप्यक्षीभवितव्यं श्रुतिकुमारीणामिति ध्वनिः । ध्वंसध्वंसः सर्वत्र भवत्येव, न तु सर्वशान्तोन्याभावस्य । तथा च व्यावहारिकान्योन्याभावत्वावच्छेदेन ब्रह्मस्य पारमार्थिकत्वस्य न प्रहाणमित्याहुः **भेदं वेदन्निति** । नन्वपारमार्थिकोऽपि भेदो दृश्यत इत्याशङ्क्य यैते इत्यादि, लक्षणापीत्यन्ताम् । **वाच्य इति** । विरुद्धगुणवत्त्वादिरविद्यकत्वं छिदेऽध्यासवभेदस्य कर्मैक्य(व्यक्तता)वादिनां मीमांसकानामपि सम्मतत्वांशानुगृहीतांशश्रुतेः प्राबल्य ( प्रांच्ये ) प्रौढ्ये, भेदश्रुतेरन्यथानयनमविवक्षितमिति भावः । **तादृशश्चेति** । परमेतदभिप्रायेण, न तु नैयायिकादीनाम्, प्रतिबिम्बितरूपान्तरस्य तैरनङ्गीकारात् । **तादृशोऽनिर्वचनीयः** । अत एव बिम्बप्रतिबिम्बभावोपलक्षितशुद्धचन्द्र एव प्रत्यक्षविषयो बहुधात्वयंभिन्नो वा, अत एवेत्यर्थः । **महावाक्ये प्रसिद्धे** । ननु 'यत्साक्षादपरोक्षाद्' 'अयमात्मा' 'सत्यं विज्ञान'

मित्यादिमहावाक्ये न लक्षणा । यदि तु तत्र शुद्धिस्थत्वेनैव भानम्, तर्हि 'तत्त्वमस्या'दावप्यस्त्वित्याहुः परं पूर्वापरेति । किंच 'तत्त्वमसि' मात्रं न तथेत्याहुः—सर्वथाहीति । अवच्छिन्नचैतन्यमात्रस्यानवच्छिन्नबोधने सर्वपादानामुपक्रम्य तदुपसंहारस्याधिकारिविषयत्वे तस्य देहात्मत्वादेहनिविष्टसकलप्रपञ्चप्रतिष्ठाज्ञाने बद्धपरिकराणां वाक्यानां सर्वबाधपक्षे । यदि सर्वत्र लक्षणा विशेष्यमात्रपरत्वं वा । विनैव लक्षणां मदभिमताद्वैतसिद्धेरिति ब्रुवाणं प्रत्येकं सिद्धान्ताभिमतं प्रतिजानते तदेकमेवेति । यथा सुवर्णेति । सर्वविज्ञानभुत्युमीताभेद एव स्वतादात्म्यलक्षणो मध्वाभेदो, न त्वनवच्छिन्नत्वम्, अभावरूपत्वेन गुरुत्वात्, अधिकरणात्मकत्वेऽपि वाक्यार्थे प्रतियोग्युपधानेन प्रवेशात् । सुवर्णादौ सुवर्णत्वजात्यनुगम इति नैयायिकाः । सुवर्णात्मकव्यक्तिप्रकृतिर्वभवाद्व्यापिकेति सांख्याः । सुवर्णतादात्म्यमाविर्भाववैचित्र्यादपान्तरब्रह्मस्वरूपं दृष्टान्तीकृत्य दुन्दुभ्यादिदृष्टान्तांश्च दार्ष्टान्तिके स्वरूपतादात्म्ये सिद्धान्तं परिशेषयन्ति अत इति । यतो ब्रह्मैव ब्रह्मणो दृष्टान्त इत्यत इत्यर्थः । तदात्मकत्वं तत्तादात्म्यं तत्पदार्थमाहुः सत्यमिति । अयमेव प्रधानमहावाक्यार्थान्वयी सत्यं तत्पदार्थः, न तु पराभिमतः कर्त्रादिरूप औपाधिकः, कृतहान्यकृताभ्यागमप्रसङ्गात् । अनभिव्यक्तसत्यस्य सत्यरूपत्वंपदार्थः, युष्मदः स्वभिन्नापरोक्षविषयतयोर्द्वये आभिमुख्याख्यसम्बन्धविशेषशालिनि शक्तेः । तादृशश्च चिदंशतादात्म्येनात्मैवेति न युष्मदस्मत्प्रत्ययगोचरयोः समानाधिकरणविषयविषयिणोर्विरुद्धस्वभावत्वमिति ध्येयम् । सत्यलोक एव सत्त्वाविर्भावनिबन्धनसंविदितिप्रतीतियोग्यं सत्त्वमित्यर्थः । तेनेति । एवेति । सिद्धान्तः । सांख्यसम्मतावपि तावदवस्थाज्ञानत्वापादकतयोत्पत्तिविनाशपर्यवसिताविति सदेकरसस्य ब्रह्मण आविर्भाव एकविधो वाच्यः, तं प्रदर्शयितुं पूर्वपक्षिणं पृच्छन्ति नन्विति । पूर्वपक्षी प्राह नोद्य इति । नाद्यः सिद्धान्तसम्मताविर्भावनित्यत्वपक्षः । 'आविर्भावतिरोभावौ यौ पक्षौ तौ गतस्मतः । तावारोप्य हरिं वादसभायां वेशयन्ति हि' इति । सिद्धान्ते आविर्भावो ब्रह्म, इहापि तत्स्वरूपसम्बन्धो घटादिकार्यक्षमस्वरूपविषयतात्मकोऽनुप्रवेशरूपत्वेनैव घटाद्याकारेण प्रत्यक्षसन्निकर्षाणां तद्व्यञ्जकत्वं स्वस्मिन् स्वप्रकाशत्वाज्ज्ञाना यथा, तथापि घटाद्यवच्छेदेन अनुप्रविष्टस्वरूपस्य स्वप्रकाशत्वाभावात्तदंशे सामग्र्यपेक्षणे तदवच्छेदेनाविर्भावोऽप्यनित्य आस्ताम् । तथा च ब्रह्मधर्मात्मकाविर्भावस्य नित्यानित्यत्वरूपपक्षान्तरप्रवेशेऽर्जुनस्येव प्रतिज्ञाभङ्गः । पार्थो हि नित्यत्वं प्रतिजानन्नाज्ञया केवलभारतिरोधानाय प्रवृत्तः, पुत्रं च नित्यं द्रष्टुं, दर्शयिष्यति च भगवान् व्यासः । यदि चानित्यत्वं पदार्थानामेकतः पक्षे स्यात्, अनित्यत्वेनैव शोकस्य पारं पश्येत्, भगवत्येव नित्यत्वनिर्धारात्, परन्तु भगवतामवदानां पदार्थानामपि नित्यत्वं पश्यन् गीतार्थप्रतिज्ञां भगवद्दत्तामासन्दिकामारूढः सिंहासनाधिरूढश्रीपरिगृहविधे सिद्धान्तवादी भूत्वा वादिनो नरेन्द्रस्य स्वतादात्म्यमुपकुरुते, तस्मादेकपक्षपातिनित्यत्वप्रतिज्ञायां ध्रुवायां ध्रुवं मध्यस्थीकृत्य पूर्वपक्षिणः प्रवृत्तिं दर्शयन्ति संततमिति । अभानपर्यवसिताभावस्थानाभिषिक्ततिरोभावेऽपि पूर्वोक्तनित्यत्वप्रकारमतिदिशन्ति अनुपलम्भे अनिर्वाच्यतापत्तेरिति । स्याद्वादप्रवेशापत्तेः । तद्वादिना चार्वाकेण भारक्षपणाक्षमक्षपणकेन दयालुना स्वैकदेशिक्षणिकसिद्धान्तभरमन्थरेण क्षणे आविर्भावः, क्षणे तिरोभाव इति मन्यते, एवमेकक्षणेऽपि स्यादिति स्वैकदेशिमतमप्यतिक्रम्य प्रवृत्तचार्वाकानुवर्ती पूर्वपक्षिचक्रवर्ती पार्थं स्वार्थपक्षे प्रवेशयितुं मायां विरचयति अनिर्वाच्यतेत्यादियुक्तं भवति । शून्यवादिनं च प्रत्युत्थापयति तयोर्धर्मत्वेनेति । धर्मत्वेनाधेयत्वेन । तादृक् एव, धर्मिद्वयस्वीकारे तु प्रमाणभेदाद्व्यभेदन्यायेनानन्तधर्मिसिद्धौ क्षणिकत्वमेव, न शून्यत्वम् । ब्रह्मणस्तु धर्मित्वेनाधुना सिद्धमिति भगवन्तं पश्यन्नपि न पश्यतीत्याहुः शून्यधीर्वश्चेति । चकारात्क्षणिकः । साधने दण्डादौ यागादौ वा स्थितयोरेव साध्यसाधनभावात्तत्तद्दिष्टसाधनताज्ञानसंतदसम्भवात् । नित्यत्वज्ञानादपि प्रवृत्त्यसम्भवात् । आविर्भावार्थप्रवृत्तिरित्यपि न; आविर्भावनित्यताया एव पूर्वपक्षितत्वात्, तन्नित्यत्वेनैव प्रपञ्चनित्यत्वसिद्धेर्महानेवात्र सम्भ्रमो ब्रह्मवादिनाम् । तार्किकः शङ्कते किञ्चेति । तौ चेति । भगवन्मनसि सिद्धावित्यर्थः । वर्तमानवस्तु लोकप्रसिद्धमित्यभिमानः क्वेति । तद्वस्तुगतत्वेन भगवच्छक्तित्वं भगवन्निष्ठत्वेन वेति प्रश्नः स्वसाम्प्रदायिकस्य । एवं पूर्वपक्षबाणजाले प्रवृत्ते तद्विच्छेदकबाणधाराकारणसोमपरम्परा ब्रह्मास्त्रपार्ष्णिग्राहिणी ब्रह्मवादानुसारेण वस्तुतो नित्यत्वमेव साधयति । तथा च तयात्वं

कादाचित्कत्वम् ईश्वरेच्छया क्रोडीकृतम्। तर्हि नित्येच्छया नित्यं वस्तु, अलीकं इच्छाभावात्। अनित्येऽपि सर्वेषामेच्छा न सम्भवति, आप्तकामत्वात्। ननु नित्यैव तथेति चेत्, 'सोऽकामयत'इत्यादिभिः सिसृक्षादीनां (व्यवस्थितत्वानुरोधान्नित्यत्वेऽप्याविर्भावादिलक्षणः स्वस्य सम्बन्धत्वकल्पनाहस्वरूपसम्बन्ध इत्येवंप्रकारकार्यविशेषितत्वे नाप्यत्वांशविषयत्वोपादानेनाप्तकामत्वानुपपत्तेः नाप्यत्वं स्वरूपसम्बन्ध एव) व्यवस्थितत्वं तु न विस्मर्तव्यम्। अतो नित्यत्वेऽप्याविर्भावादिलक्षणः कश्चित्प्रकारः कार्यविशेषितत्वे कार्यांशविषयत्वेनाप्तकामत्वानुपपत्तिः। अतः सङ्कोचरेच्छैव तदवच्छेदकत्वेन विषयताविशेषानुपादाय वस्तुनः सत्त्वं न व्यभिचरति, अन्यथा पूर्वापरसमययोरसत्त्वापत्तौ तदिच्छाया अंशतोऽप्रसिद्धविषयतापत्तेः। अत एव नैयायिकसम्मतो नित्यानित्यप्रकारोऽपि नाश्रीयते, परमाणुत्वपरममहत्त्वस्यापि महापृथिव्यां स्वीकारात्, ब्रह्माण्डानामानन्त्यात्सर्वानुगतपृथिवीपदार्थस्य वेदार्थत्वात्। तथा च मध्यमपरिमाणस्य सर्वविज्ञानानाविर्भावप्रयुक्ततया संसारतुल्यतया स्वीकारो न प्रपञ्चनित्यतायां परिपन्थीभवतीति गुरुचरणाः। अपसिद्धान्ताः प्रागुपदर्शिताः सहकारिणोऽपीच्छायां प्रविष्टा इति सिद्धान्तानुसरणेन वादी शङ्कते **न चेति**। **उक्तरीत्येति**। सहकारिणामीश्वरेच्छापर्यन्तत्वात्तन्नित्यत्वे सिद्धान्तरीत्यैव नित्यत्वसिद्धौ प्रतीतिगतस्वरूपं दूषणं पुष्कलमिति भावः। **किञ्चे**त्यादिनाऽऽशङ्कितमाविर्भावादिलक्षणं प्रतिक्षेप्तुमुपक्रमते **नापीति**। यथोक्तसौ कार्यव्यक्तिरेव निविष्टा, न दर्शनव्यक्तित्वर्णनाविर्भावे चेत्, उत्पत्तिरेव स इति पर्यवसिता, अन्यथा वाच्यावाच्यापनमित्याह **योग्यायेति**। आदिना गुरुत्वलघुत्वाकाशसंयोगादिसङ्ग्रहः। दर्शनपदस्य लौकिकप्रत्यक्षपरतायद्बोधे मानाभावादाह **अनुभवेति**। तार्किकप्राचीनानुरोधेन। नवीनमते त्वनुभवः स्मृतिभिन्नज्ञानम्। अत एव तथैव सिद्धान्तलक्षणम्। आविर्भूतस्य चाक्षुषत्वनियममाहुः **अपीति**। वाय्वादेरुपलक्षणम्। नन्विदमाविर्भावकाले आपाद्यते, अन्यदा वा, आद्ये कश्चित्प्रत्याविर्भावे चाक्षुषत्वेऽप्यलौकिके इष्टापत्तिः, अन्यदा तु नाविर्भावः, उत्पत्तिस्थानाभिषिक्तत्वात्, इत्यत आहुः **एवं सतीति**। उत्पत्तिदशायां नैर्गुण्ये प्रयुक्ताऽप्रत्यक्षवदाविर्भावदशायां प्रत्यक्षानङ्गीकारे आविर्भावस्वरूपालाभात्, तत्क्षणावच्छिन्नघटे मानाभावप्रसङ्गादनुमानादेरप्रयोजकत्वात्, आविर्भूतत्वज्ञानस्यैवातीतानागतयोरसत्त्वज्ञानपरिपन्थित्वादायमेवाविर्भावपक्षः पाणिनेः सम्मत इति 'जनी प्रादुर्भावे' इत्येवं सोऽनुशशास। न चैवं सति 'भुवः प्रभव' इति सूत्रवैयर्थ्यम् यथा, हेतुपदमर्थवोपपत्तौ 'भीत्रार्थाना'मिति सूत्रं प्रपञ्चमात्रम्, तथा, 'अनित्यं जनन'मित्यादिसम्प्रदायानुरोधेन वा तत्सूत्रस्यावतारात्, तथैव महाभाष्याशयात्। आविर्भूतव्यवहारस्याविर्भावादिप्रयुक्तत्वात्तयोः प्रत्यक्षाङ्गीकारेऽनङ्गीकारे वैकतरेणैव भवितव्यमित्याहुः **तिरो इति**। चकारादाविर्भावसङ्ग्रहः। **भिन्नेति** उत्पत्तिस्थानीयत्वाभिप्रायेण। **अभिव्यक्ताविति**। गुरुचरणस्थित्याभिप्रायेण, विभिन्नशक्तीनामपि तदीयानां स्वरूपसम्बन्धात्मकविषयत्वेन सामान्यसम्बन्धत्वात्। **नीलस्य इति**। सिद्धान्तपक्षप्रतिक्षेपार्थमेव वादिनः प्रवृत्तत्वात्प्रथमं तदुक्तिः। अवच्छेदकभेदसंज्ञायां प्रवेशमाशङ्कते **न चेति**। तदवच्छेदकप्रपञ्चशक्तितापत्तिमुज्जृम्भयति **हीति**। अनुक्तिवनिर्विकाराक्षमतां व्यनक्ति। **ईदृगतमिति**। तथा च प्रपञ्चशक्तित्वम्। प्रपञ्चस्य नित्यत्वे तच्छक्तित्वेऽपि न दोष इत्युक्ते दूषणमाह **सैवेति**। अग्रेऽप्यन्वेति। कालोपाधित्वं सिद्धान्ते नित्येच्छाप्रविष्टत्वमेव, तेषां चेच्छाविशेषणानामवच्छेदकत्वे तदवच्छेदेन नित्यमुपलम्भ आविर्भावो वा स्यात्। तदोपलम्भे तस्य नावच्छेदकत्वं कल्प्यत इति चेत्तत्राहुः **न हीति**। **तथात्वं** परस्परावच्छेद्यावच्छेदकभावः। तथा च परस्परावच्छेदकत्वे उभयोर्नित्यतया प्रसक्त सततोपलम्भप्रसङ्गो दुर्वार इति भावः, अन्यथोभयोरेवोपलम्भो न स्यादित्यनुपपत्तिः। सा च परस्परावच्छेदकत्वप्रापणात्, ततश्च सातत्यापादनं सुकरम्। उपपन्नमिति पाठे एकदोपलभ्यमानमिथोऽवच्छेद्यावच्छेदकभावे मानाभावः, सव्येतरविषाणन्यायादित्यर्थः। तथा च नियामकाभावे प्रतीतीनामाकस्मिकत्वं सातत्यं वा दुर्वारम्। ननु उभयोर्नित्यत्वेऽप्याविर्भावस्याविर्भावस्वीकारेऽपि नित्यत्वव्याहतेस्तं प्रत्येकावच्छेदकत्वं पटादीनाम्। तत्र यदाविर्भावप्रत्ययस्तदैव पटाद्यवच्छेदेनाविर्भावोऽस्त्विति इच्छाविषयत्वम्। अन्यदा तत्र कल्प्यते इति चेत्तत्राहुः **अनवस्थेति**। कालिकयस्तदंशयोरननुगम एवमाविर्भावादिपरम्परावच्छेदकत्वधाराकल्पनायामनवस्थेत्यर्थः। अपसि-

माविर्भावानामतीन्द्रियत्वमेव कल्प्यते फलानुरोधादिति चेत्, किमिदमतीन्द्रियत्वम्? । यदि तिरोभावस्तं प्रति विषयतायास्तर्हि सततोपलम्भोऽपि तत एव वार्यताम् । इष्टापत्तिरिति चेत्, न, 'यादृशो यत्स्वभावोऽसौ तिरोधातुं न शक्यते । योग्यायोग्यघटेनैव मानं भावाविपर्यया'दित्याशयेनाहुः एतेनेति । व्याख्यातो दुर्वचत्वेन अनुपलम्भप्रसङ्गादिना, उक्तविकल्पैश्चेत्यर्थः । किञ्च तिरोभावस्य नित्यत्वेऽनुपलम्भस्य विरुद्धस्यापादनम्, सततोपलम्भस्तु सत्त्वादिनापि भवतीतीष्टमेव । आविर्भावनित्यत्वं वादिमुखादुक्तं तिरोभावप्रत्याख्यानेन व्यक्तीभविष्यति चेदमुपरिष्टात् ।

'काले कालान्तराभावः फलोपाधिस्तु दुर्वचः । विषयत्वानवस्थाना (देकं ब्रह्मैव) दास्पदं ब्रह्मगोचरः । आवश्यकी विषयता सर्वत्र व्यवहारतः । संसर्गत्वनिमित्तोऽयं प्रपञ्चः प्राकृतोऽपि च' ।

एतत्पक्षे प्रतिव्यक्तिभिन्नाविर्भावसत्त्वमित्याह नोचेदिति । मुरेति । दोषतिरोधानार्थमाविर्भाव इत्यर्थः । दोषतिरोधानार्थं आविर्भावः कारणदोषाभावे कार्यादोषत्वाय दोषत्वनाविर्भावप्रसञ्जितासवाक्याप्रामाण्यशङ्कादिः, तदर्थमाविर्भावमहिम्नैवाप्तोक्तिप्रामाण्यसिद्धेः । स एव व्यापको, न तिरोभावः । प्रतियोगित्वेन घटाविर्भावो हीति भावः । सम्बन्धान्तरेण त्वाविर्भावसामान्यमिति विवेकः । एवं चाविर्भावश्च तिरोभावश्चोभौ भावौ तद्विषयताविशेषरूपौ नासत्साङ्कर्यापादकाविति नासतो वाक्यप्रामाण्यप्रतिष्ठापनम् । अत एव 'मुरवैरिण' इति षष्ठ्यन्तार्थविशेष्यकाभेदप्रधानो वाक्यार्थ इत्युक्तं भवति । आद्यमुपपादयति अनन्तेति । 'परास्य शक्तिर्विविधैवे'त्यनेन सङ्गतिर्दर्शिता । उपपादनमन्यथा करोति एकेत्यादि । एकस्या एव विविधत्वेनोपादानं परिणामभेदाद्वा यथानुभवं विषयतावैलक्षण्यात्मकस्वरूपाद्वेति पर्यालोचनायामविद्याप्रवर्तकत्वादिभिरुपपत्तिभिरवश्यमङ्गीकरणीयम् । द्वितीयपक्षमाश्रित्याद्यः पक्षो वा मास्तु, परसिद्धान्ते वा सगुणसांख्यादौ प्रवेष्टव्यमित्युभयथापि वदन् वादी विचारार्ह इति पुनः सम्भाव्याहुः उक्तेति । द्वितीयोऽनित्यत्वपक्षः । उक्तं यद्वाक्यं 'वैरिण' इति तद्विरोधादित्यर्थः । वैरं स्पष्टयति भगवद्धर्माणामिति । तथा च भवत्पक्षपाति वाक्यं भवदभिमतनित्यत्वविरोधीति एष एव विरोधो दर्शितः । ननु तद्वाक्यस्यानित्यशक्तिबोधकत्वमेवास्तु, तिरोभावसहोक्तेश्च, मैवम्, शक्तिर्हि कारणतावच्छेदकत्वेन सिद्धा, सुषुप्तौ मुक्तौ, प्रलये वा तदपगमे शक्तिमद्यावदवस्थायित्वं तस्या नोपपद्यते । न हि ब्रह्मशक्तेः कुण्ठनम् । अप्रतिहतशक्तित्वात् । आविर्भावविशिष्टत्वेन च सर्वमेव कारणत्वं किमर्थमिति चेत्, तथाहि—उपादानप्रत्यक्षकारणताया अवच्छेदकः परमाण्वादिः । इत्थेत्थं परमाण्वादेरपि कारणताया आविर्भावः, विशिष्टत्वेनोपपत्तेरिति गृहाण । निमित्तप्रत्यक्षादेरपि कारणत्वतौल्याय । उपादानप्रत्यक्षकारणतावच्छेदकीभूतपरमाणुत्वादेस्तादृशप्रत्यक्षविषयतावच्छिन्नपरमाणुत्वादिना कारणत्वे कार्यकारणभावैक्यलाघवात् । विनिगमकाभावेऽप्याविर्भावस्य स्वरूपत एकस्य कारणतावच्छेदकत्वे लाघवम् । न चैवं परमाणुत्वादिनैव कारणत्वमस्तु, तत्प्रत्यक्षकारणता चातिरिक्तास्तामिति वाच्यम् । उपादानप्रत्यक्षकारणतयैव विनिगमकाभावात्प्रत्यक्षविषयपरमाणुत्वादिना कारणत्वसमर्पणात् । एवमप्याविर्भावस्यैकत्वेनेश्वरीयप्रत्यक्षात्मकस्य तस्यैव कारणतावच्छेदकत्वे तु सुतरामविर्भावविशिष्टत्वेनैव सर्वत्र जनकत्वम् । आविर्भावस्याप्याविर्भावविशिष्टत्वान्नानवस्था कल्प्यते, (अयं चाविर्भावपदार्थे नित्यविषयतासम्बन्धलक्षणः, उत्पत्तिस्थानाभिषिक्तः पुनरलङ्करिष्यते सिद्धान्त इति सर्वं चतुरस्रम्) आविर्भावात्मकस्वरूपस्यैव निरवच्छिन्नविषयताविशेषलक्षणकारणत्वपर्यवसानादिति सर्वं चतुरस्रम् । तदुक्तं भगवद्धर्माणामिति । षड्गुणानां नित्यत्वे षड्त्वस्यापेक्षाबुद्धिविशेषविषयत्वरूपस्याविर्भावस्वरूपत्वेनाविर्भावप्रकारेष्वेव प्रवेशादिति भावः । विपक्षे बाधकमप्याहुः तथेति । अनित्यत्वे उत्पत्तिनियम इत्यर्थः । उत्पत्तिरायक्षणसम्बन्ध इत्यर्थः । अन्तर्गडुभ्याम् अजागलस्तनायमानाभ्याम् । अत्राजप्रकृतिरजात्वेन रूपकेण श्रुतौ व्याख्याता । तद्धर्माविर्भावतिरोभावावुक्तरीत्याऽनवस्थापादकौ स्वस्यापि वैयर्थ्यं गमयत इति तद्गलस्तनायमानत्वमेवान्तर्गडुत्वम् । सांख्यसिद्धान्तोऽपसिद्धान्तः । तन्मतेऽप्युत्पत्तिस्वीकारे तन्मत एवापसिद्धान्त इति वार्थः । किञ्च तयोः स्वीकारे घटसामग्र्येव तदुत्पत्तिसामग्री वाच्येत्याहुः तदुत्पादकं चेति । लाघवाद्घटत्वादेरेव कार्यतावच्छेदकत्वमित्याह तथेति । ननु न्यायनयेऽप्युत्पत्तेरहेतुकत्वेऽपि

गावचित्वं स्वीक्रियते, तथा नयोरप्यस्तु । किञ्च स्वकारणसमवायः स्वसत्तासमवायो वाविर्भाव इत्याशामित्याह तिरोभावश्चेति । तिरोभावपदार्थः । तथा सति पटोन्मज्जनप्रसङ्गात्तदङ्गीकार इति भावः । समवायनित्यतया न न द्वितीयः पक्षः । सम्बन्धत्वविशिष्टस्यानित्यत्वे घटत्वविशिष्टस्यैवानित्यत्वमस्तु, सम्बन्धत्वाकलनं च तिरोभाव इत्यस्तु, एवं न्यायनयेनापि घटादेरेव सावयित्वमस्त्विति सिद्धान्ते प्रविश्य पूर्वपक्षी न्यायसम्मतामुत्पत्तिमपि न मन्यते । उत्पत्तेरतीन्द्रियत्वेन प्रत्यक्षाभावादनुमानादेरप्रयोजकत्वात् । क्षणत्वस्य नवीनरीत्याऽतिरिक्तत्वे तत्सम्बन्धमात्रस्यातिप्रसञ्जकत्वात् । व्यञ्जकस्यैव सत्त्वघटनायामुत्पत्तित्वेनावच्छेदोपाधिरस्तु । न चैवमपि, प्रत्यक्षादिप्रमाणाभावादननुगतक्षणत्वस्यैवाननुगतोत्पत्तित्वस्वीकारात्, उत्पद्यत इत्येन प्रतीतेः । कस्यांचित् तदप्रतीतेः प्रतीकार इति चेत्, प्रागभावप्रतियोगित्वादिकमेव प्रतीतेर्विषयोऽस्तु । किञ्च प्रागभावस्थानीयो ध्वंसस्थानीयो वा तिरोभावो न वक्तुं शक्य इत्याह न चैकमिति । ध्वंसस्त इति भविष्यतामुपलक्षणम् । रूपेयत इति । योगिनां तत्त्वज्ञानमन्तरेण मम नोपलभ्यते, निर्विकल्पकैकविषयत्वात् । रूपं धर्मत्वाद्विशिष्टं तु सविकल्पकवेद्यम् । सैव इति । वस्तुमात्रं योगिप्रत्यक्षविषयो भवत्येवेत्याशयः । अन्यथा योगिप्रत्यक्षस्यातीन्द्रियाकाशादिसाधारण्यादुद्भूतरूपस्य योग्यतायामप्रवेशापत्तेः ... । अत एवोद्भूतरूपवतो महत इत्यादि नोक्तम् । तस्माल्लौकिकप्रत्यक्षसामग्रीपरो नायं ग्रन्थ इति ध्येयम् । वस्तुतस्तु योगजधर्मो रसं न चाक्षुषयतीति यो यदिन्द्रिययोग्यसजातीयविषयतायां नियामको योगजधर्म इति पक्षधरग्रन्थेऽभिधानात्तदभिप्रायकमिदमुक्तमिति युक्तम् । ननु प्रमाणाभावोऽसिद्धः, 'अनागतमतीतं चे'ति प्रमाणसद्भावादिति वादिनं प्रति वैपक्षिकप्रमाणं प्रत्यवस्थापयति प्रज्ञाश्चेति । तथा च सम्यक्तत्त्वज्ञानसाहाय्येन प्रज्ञयैव पश्यन्तीत्येव वादिप्रोक्तप्रमाणार्थोऽस्तु । नैतावता घटत्वादिप्रातिस्विकधर्मपुरस्कारेण प्रत्यक्षमुपपादयितुं शक्यते । अथवा स्यादेतत्, वस्तुगत्या तिरोभावदशायामपि विषयघटितमहदुद्भूतरूपादिसामग्रीसत्त्वात् सर्वैरेव घट उपलभ्येत । सर्वान् प्रति तिरोभावे योगिनं प्रत्यपि तिरोभावोऽस्त्वित्याशङ्कां वारयति नैवमिति । योगिनं प्रति तिरोभावे प्रमाणाभावादित्यर्थः । प्रत्युत 'अनागत' मित्यादि तत्प्रत्यक्ष एव प्रमाणमुपदर्शितमिति भावः । अथ कथं सर्वोपलम्भापादनमित्यपरितोषादाहोस्वित्परिमनिष्टापत्तिं दर्शयति प्रज्ञाश्चेति । अन्यधर्मापः । मुख्यकालीना इत्यर्थम् । आर्षदर्शनात् आर्षज्ञानस्य प्रमाणान्तरत्वं वक्ष्यमाणत्वात्, यद्विशुद्धसाक्षिजन्यमामनन्ति । अलौकिकदर्शनात् मुमुक्षुकुन्दस्यान्यस्य वा योगिनस्तस्य चाक्षुषत्वादिना दर्शनमुक्तप्रमाणस्य विषयः । तथा च प्रातिस्विकरूपेण घटत्वादिना दर्शनमाचार्यं पुरन्दरमेवेति भावः । अत्रायं संग्रहः—उक्तरीत्या आविर्भावतिरोभावोत्पत्तिविनाशाः सर्वे एव मा भूवन्, विकल्पानां दुरुत्तरत्वात् । किन्तु यथोपलब्धस्वभावः प्रपञ्चः स्वाद्यादसिद्ध एवास्तु, अविद्याविलासो वा, अनिर्वचनीयाकस्मिको वा, कार्यकारणभावादिव्यवस्थाया आविर्भावादिनैकत्वात्तदभावे नियतव्यवस्थाऽसम्भवात् । मवैव तु परिमार्गितव्यम् । इत्येव नाशादिप्रतीतेर्भ्रान्तत्वम्, अन्यथा क्वापि तदप्रसिद्ध्या भ्रमायोगात् । किन्तारोप्यविषयसंस्कारोऽनादिधारया नियामक इत्यनिर्वचनीयभ्रान्तिमयस्यानि वा प्रपञ्चगोचराः परिकल्पयिष्यन्तीति । अथवोत्पत्त्यादिप्रतीतिराविर्भावादिविषयिण्येवेति तदर्थः । परस्य वादिनो भ्रान्तिरिति प्रतिवादिनि प्रत्यवतिष्ठमाने भ्रमोऽप्येवमयत्नं प्राप्नमिति परस्परदूषकानां वाक्यमनुपलभ्य भ्रममुक्त्वाद्यवादे तान् प्रापयन्ति भ्रान्ति इति । इत्याविर्भावपूर्वपक्षरहस्यम् । गुणवादः स्वरूपसाक्षात्कारक इति स्वयमाहुः अंशोच्यत इति

**'स्वरूपं हरिरेवात्र निजहृद्गतरेणुना । तदङ्कयुक्तिमुक्ताभी रञ्जितेन हि वाक्पतेः । प्रसादेनैव लभ्योऽसौ लक्षणं तु विवक्षितम् ।'**

आविर्भावे उत्पत्तित्वं, न वा, ज्ञातत्वं न चेत्येवमाद्याः संशयाः, आविर्भावत्वं, न चेति, नित्यो न वेति च । अत्र 'न वे'ति सर्वत्र संशयाकारो ग्रन्थाभिरूढत्वांत्रिकानाम् । वयं तु सद्धांसदभाववानेवेति स्फुटाकारं ब्रूमः । नञर्थे विशेष्यान्वितभावकोटेरन्वयासम्भवादित्यवधेयम् । संशयलक्षणं तु तृतीयस्कन्धीयविवृतिटीका वक्ष्यमाणमिति बोध्यम् । अंशुभयविषयत्वयोग्यत्वमिति । अत्रोत्पत्तिस्थानानिष्पत्त्याविर्भावस्य द्वितीया-

दिक्षणसाधारण्यवारणाय योग्यतापदम्। अनुभवः प्रत्यक्षं तत्तदैन्द्रियकम्। यथा तथा चान्तत ईश्वरस्य। तत्र तदीयत्वमेव योग्यता। यद्यपि समयमात्रस्य स्वाधिकरणत्वात् स्वाधिकरणसमयध्वंसानधिकरणसमयस्याप्रसिद्धेः प्रतियोग्यप्रसिद्धेस्तिरोभावनिवेशेऽपि स्वाधिकरणपूर्वपूर्वसमयतिरोभावाधिकरणत्वादुत्तरोत्तरसमयानां तथैवाप्रसिद्धेः तिरोभावघटनायां तस्येदानीमज्ञानत्वाच्च योग्यत्वं दुर्वचम्, तथाप्यनुभवविषयत्वमधिकरणसमयेत्यादि वाच्यम्। स्वानुभवत्वेन निवेशाच्चास्य घटादिविषयभेदभिन्नत्वमाविर्भावत्वव्यवहार इति वाच्यम्। न चात्र विषयसत्त्वे पूर्वमनुभवविषयत्वं केन वार्यताम्, उत्पादकसामग्र्या एव विषयताव्यञ्जकत्वोपगमात्। अथ किमिदं विषयताव्यञ्जकत्वम्, विषयतायाः सम्बन्धत्वकल्पकत्वमिति गृहाण। कथमन्यथा विषयतायाः सर्वमत एव नित्यत्वेऽपि ज्ञानादीनां तद्व्यञ्जकत्वमास्थीयते। न चानुभवस्यापि नित्यत्वे तद्दोषतादवस्थ्यम्। नित्यानुभवमादाय भवन्मतेऽपि स्वस्यानुभवविषयत्वव्यवहारापत्तेः। स्वीयज्ञानविषयत्वमनित्यमिति चेत् न तर्हि स्वीयज्ञानमनित्यं। यदि विषयतायाः सम्बन्धत्वकल्पकं तथोत्पादकसामग्र्यपि घटादीनां ज्ञानादिनिरूपितसम्बन्धत्वकल्पिका कस्मान्न भवति, अन्यत्वकल्पकत्वापेक्षया लाघवात्। उत्पन्नपुनरुत्पादवारणाय प्रागभावः कार्यादेः प्रतिबन्धकत्वं वा भवद्भिः कल्पनीयम्। उत्पत्त्यन्तर्भावेण सामग्रीव्याप्तेरनभ्युपगमेऽप्युत्पत्तिव्यवहारनियामकानुसरणावश्यकत्वे तत्तदुत्पत्त्यधिकरणतानियमकातिप्रसङ्गस्योत्पत्त्यन्तर्भावेण सामग्रीव्याप्तिमभ्युपगम्यैव परिहरणीयत्वाच्च। अस्माकं तु तत्तद्व्यवहारहेतुज्ञाननिरूपितविषयतायाः सम्बन्धत्वकल्पनमेव सामग्रीनियन्त्रितमिति महल्लाघवम्। सामग्र्यपि क्षणघटिता, तेनोत्तरक्षणे सामग्र्याः सत्त्वेऽपि नाविर्भावविषयत्वम्। न चैवमनुभवविषयत्वमपि न स्यादिति वाच्यम्। तत्तत्क्षणाघटितसामग्रीनियम्यविषयताया अतिरिक्तत्वात्। अथ क्षणस्यैव क्षणिकत्वे सिद्धान्तभङ्गः, अन्यथाऽतिप्रसङ्ग इति चेत्, मैवम्, अस्मिन् क्षणेऽयं क्षण इत्यस्यापि प्रत्ययस्येदानींत्वावगाहिनो दुरपह्नवतया कालिकसम्बन्धस्य च तादात्म्यातिरिक्ततया काले कालान्तराभावस्योक्तरीत्या तदुपाधेरव्यवस्थितत्वेनैव लाभात्। 'स एवाद्य स उ श्व' इति श्रुत्युपदिष्टकालपदार्थस्य ब्रह्मणोऽखण्डविषयत्वलक्षणकालोपाध्यन्तरमनपेक्ष्यैव सविषयकविज्ञानात्मकस्य विषयतावैलक्षण्यस्यावश्यं सर्वैरङ्गीकरणीयत्वात्। तथा च निदाग्रेन पक्षानङ्गीकारात् क्षणाद्यात्मकविषयताविशेषस्य सम्बन्धत्वकल्पिकापि सामग्री मृग्या। सा च स्वप्रकाशत्वमेव। इदमेव च साक्षिवेद्यत्वम्। ईश्वरस्य कालत्ववादिनां नव्यानां नये क्षणोपाधेरतिरिक्तक्षणस्य च विषयतासम्बन्धत्वनियामकत्वाभ्युपगमे सार्वज्ञ्यतादृशविषयतायाः किञ्चित्प्रयोज्यत्वे अपसिद्धान्तात् तादृशविषयतायाः सम्बन्धत्वकल्पकं स्वरूपमेवं शरणीकरणीयम्। न चैवं वैलक्षण्ये भेदाभेदः, तद्विषयकप्रतीतिविषयत्वं भेदस्तदविषयकप्रतीत्यविषयत्वमर्थादखण्डविषयत्वपर्यवसितमभेद इति राद्धान्त इति कृतं प्रसङ्गेन। यत्तु मायैवाधारः कालव्यवहारनिदानं, 'स एवाद्य'स्यादौ तदुपहितमेवार्थ इति, तन्न; मायोपहिते समन्वयस्य सूत्रकारेणाप्रस्तुतत्वात्, उपलक्षणविधया समन्वयस्य शतशो विप्रतिपन्नत्वाच्च। किञ्च मायायां ब्रह्माध्यासविशेष एवं कालादिव्यवस्थाप्रलयस्थापक इत्युक्तं पुरस्तात्। एवं सत्त्वाविर्भावलक्षणे विषयताविशेषप्रवेश एव तिरोभावघटना, नाप्युत्पत्ताविव ध्वंसघटनेति मन्तव्यम्। स्यादेतत्, एवं तर्हि स्वरूपस्य नित्यत्वात् क्षणाद्यनुरोधेन तस्यैव सम्बन्धत्वकल्पकत्वे ध्रुवे सामग्रीस्थलेऽपि तदेव व्यञ्जकमस्तु कृतं सामग्र्येति चेन्न, सामग्रीविशेषितत्वेन कार्योन्नेयविषयताया विशिष्टेष्टसम्बन्धत्वाभ्युपगमादिति पत्रावलम्बनव्याख्यायां विस्तरः। नन्विच्छाया एव सामग्र्यनुविधाने किं मानम्। नहि 'सोऽकामयत बहु स्या'मित्यादौ सामग्र्या विशेषणत्वमिति चेत्, सत्यम्, साधनसाध्यभावेनाह स्यामित्यर्थ इति केचित्समादधते। वस्तुतस्तु यागादेः साधनत्वमनन्यलभ्यं येनैव बोध्यते, तत्रापि कारणतावच्छेदिका भगवच्छक्तिरेव। यागात्स्वर्गो जायतामितीच्छाविषयत्वेनैव यागादेः कारणत्वात्। न च यागत्वेनैव तथात्वम्, त्यज्यमानद्रव्योद्देश्यत्वेन चेतनधर्मेण देवतात्वेन विनिगमकाभावात्कारणत्वसिद्धौ तादृशोद्देश्यताया लाघवेन चेतनात्मकब्रह्मनिष्ठत्वात्। यागत्वं जातिरिति चेन्न, फलसमर्पकत्वानुरोधेन देवतात्वेनातिरिक्तकारणस्यापेक्षया यागकारणतायामेव देवतात्वप्रवेशात्। येषां मते 'फलमत उपपत्ते'रित्यधिकरणानुरोधो नास्ति, तान् प्रत्युपपत्तिरेव प्रदर्श्यते। सा चोद्देश्यताऽखण्डशब्दनिष्ठा पार्यन्तिकप्रधानायभावनायामिवान्ततो नित्यज्ञप्तिरूपायां

कारणत्वं व्यवस्थापयतीति किमनुपपन्नम्। एवं लोकसिद्धकार्यकारणभावस्यापि प्रायशो यागार्थत्वाद् यागसाधनीभूतद्रव्याणां कार्यकारणभावोऽपि पूर्वकाण्डार्थः। तत्र यद्यपि दण्डत्वादिनैवान्वयव्यतिरेकसहाचारवत्त्वेनैव कारणत्वं न तु देवताप्रवेशः, कुतस्तरां परब्रह्मणः परदेवतारूपस्य, तथापि फलोपधानस्य 'फलमत' इत्यधिकरणार्थत्वात् सकलकारकविशिष्टेच्छाविषयत्वेनैव फलोपधायकत्वं वक्तव्यम्। न चोपधायकत्वे इच्छाप्रवेशो मास्तु, किन्तु सामग्री व्याप्तिरेवेति वाच्यम्। इच्छायामेवैकत्र द्वयमिति न्यायेन सामग्रीप्रवेशोपपत्तौ परस्परविशेषणविशेष्यभावे विनिगमनाविरहेण सामग्रीव्याप्तिगौरवात्। अवच्छेदकतायाः सर्वज्ञविषयत्वरूपावच्छेदकावच्छिन्नाया व्यासज्यवृत्तित्वोपपत्तेरिति वक्ष्यते चोपरिष्टात्। अथ नित्यानुमेयानां कथमाविर्भावव्यवहारः, ईश्वरविषयतामादायेति ब्रूमः। स्यादेतत्, अस्मदाद्यपेक्षया क्षणे प्राथम्यं वाच्यम्, यतः पूर्वं नास्मदादीनां घटादेः प्रत्यक्षत्वम्। तथा च तत्तत्क्षणसम्बन्ध इत्यननुगत एवाविर्भावोऽस्तु, चरमत्वस्येवाद्यत्वस्यापि तत्तद्व्यक्तिरूपत्वात्। तत्तत्सामयिकसंसर्गतास्वीकारस्यान्ततः सर्वज्ञवृत्तेरपि घटनां विनैवावश्यं वक्तव्यत्वाच्च। न च काले सर्वमिति प्रलयोऽसिद्धः, खण्डविषयतयैवोपपत्तेरिति वाच्यम्। ईश्वरस्यैव समयत्वमते विज्ञाने सर्वमिति प्रलयस्यैवापह्नोतुमशक्यत्वात्। नत्रापि खण्डविषयता, ईश्वरासिद्धिप्रसङ्गात्। अथ कोऽयमनुयोगः, सन्ति चेश्वरे शतशः प्रमाणानीति चेत्, निरभीन, तदीयाऽखण्डविषयताया एव सिद्धायाः समर्पणात्। यत्र तस्या उपाध्यनुविधानं तत्र तदवच्छेदेन खण्डविषयतात्वम्, यत्र तदननुविधानं तत्र स्वरूपत एवाखण्डायामेव तादृग्मात्रीयत्वं प्रातीतिकं पारिभाषिकमपि वास्तवं सखण्डत्वम्। अत एव सखण्डत्वं पारमार्थिकम्, उदाहरन्ति च विद्वांसः—सखण्डेषु समानेषु न क्षणादौ तुर्यौ वा शब्दजन्यसाक्षात्कारादौ च विनैवोपाध्यनुविधानं स्वरूपविषयतायोगेन तारतम्यरूपं सखण्डत्वम्। तथा च नैवैनोपपत्तौ किं प्रयत्नेनेति न पर्यनुयोक्तव्यम्, स्वतन्त्रेच्छाया नियन्तुमशक्यत्वात्। एतेन यूयता ज्ञानं ब्रह्मविजिज्ञासाविषयैव, न स्वार्थं इति निरस्तम्। सखण्डविषयताप्रत्याख्यानार्थत्वात्तस्य स्वरूपमात्रे खण्डाया एव विषयतायाः प्रपञ्चादिषु प्रत्येकमेकत्वप्रलयसंवादिन्याः पूर्वानुगतायाः स्वस्मिन्नुपाध्यनुविधानं विना स्वरूपसंगमनतानभिलाषाः सिद्धान्तधोरणीसमलङ्कृतत्वात्। तथा चाननुगमोऽप्यनुगमः। एतेन चरमत्वस्यैवाद्यत्वस्यापि तत्त्वमर्थेनाननुगमः परिहृतः। तत्ताया अप्यनुपहितायाः स्वानुगताया एव सार्वत्रिकत्वात्। अथैवं सखण्डत्वव्याहतिः, मैवम्, तत्तादिष्वनुगमाननुगमयोरुभयोरेव शपथनिवारणीयत्वात्। इदमेव वैलक्षण्यमामनन्ति सविशेषविदः, अत्र च द्वितीयादिक्षणे तत्तत्क्षणसम्बन्धानङ्गीकारात्, तथापि प्रथमक्षणीयद्वितीयादिक्षणीयविषयतयोः को भेदः। द्विविधं विषयत्वप्रतीतिसामान्यत्वमेवं देवाविर्भावोऽस्तु, अत एवोत्पत्तितोऽयमाविर्भावोत्कर्ष इति, सत्यम्, आविर्भावस्य व्यवहितसम्बन्धार्थत्वाद्द्वितीयादिक्षणसम्बन्धानां पूर्वपूर्वेण व्यवधानात्तथैवाविर्भावलक्षणप्रणयनात्। व्यवधानाव्यवधानकृत एव च विषयतयोर्भेदः। यथा हिमवतो गङ्गा प्रभवतीति देशाव्यवधाने, तथा समयाव्यवधानेऽपि समानम्, व्यवहारानुरोधात्क्षणव्यवस्थितेः। तत्पूर्वपूर्वक्षणेषु केनापि रूपेणान्ततः सत्त्वादिना विषयनिरूपतायामप्यस्मदाद्यपेक्षया तदीयविषयतानिरूपकसम्बन्धत्वकल्पकत्वं न तत्तत्क्षणसम्बन्धानाम्। अत एव यदि स्यात्तदुपलब्धेदेवेत्यादाम्, तत्तत्क्षणसम्बन्धानामनुगतविषयतानिरूपकसम्बन्धत्वाकल्पकत्वात्, कल्पनायाः फलानुरोधित्वात्। ननु तथापि तदानीं वस्तुसद्भावे किं मानम्, योगिन ईश्वरो वा सशपथं पृच्छ्यताम्, तत्राहुः ते "चेति। तच्च सा च ते। यूथ एवान्तर्भाव इति योगयतेति श्रीलिङ्गनिर्देशः। न हीदं योगिवित्तिरोधानम्, किं तर्हि तत्तादात्म्येन स्थितिः, अत एवाहुः येस्तु स्वत्वेनेति। प्रकृतादस्मयैनेत्यर्थः। तथाहि—उत्पद्यमानोऽसौ ज्ञानविषयत्वविशिष्ट एवोत्पद्यत इति नियमः। तच्च ज्ञानं स्वस्य परस्य योगिनामीश्वरस्य वेत्यविशेषः। अत एवाद्यकालीनो घटो योगजधर्मं विनापि ज्ञानविषयः, घटत्वाद् द्वितीयादिक्षणवृत्तित्वविशिष्टघटवदिति परेषामीश्वरसिद्धावप्यनुकूलमनुमानान्तरमवधेयम्। नह्याद्यकाले उपादानप्रत्यक्षवतः कुलालादेर्न तद्घटप्रत्यक्षम्, कालभेदानालम्बनात्। एवं चाद्यकालीनो घटोऽस्मदादिज्ञानविषयः, विषयत्वात्, द्वितीयादिक्षणवृत्तिघटवदिति प्रयोगात्तस्याद्यकालीनानुभवविषयत्वसिद्धिर्निराबाधैव। नहि तदानीमतीन्द्रियो घटः, अतीन्द्रियत्वेन्द्रियकत्वयोर्विरुद्धधर्मद्वयसंकरनिषेधात्तयोरेकस्मिन्नपि विरोधात्। तटस्थः शङ्कते, ननु तिरोभाववादिमते तदानीमतीन्द्रियत्वापत्तिः, मन्मते तु

तदा विषयताबाधेव नातीन्द्रियत्वापत्तिरिति चेत्, न; सर्वेन्द्रियागोचरत्वस्यातीन्द्रियत्वपदार्थत्वात् । समाप्येवमिद्धिः चेत्, तावतोऽननुमानात्तद्वेः । नाप्यतीन्द्रियत्वादिकं कालिकाव्याप्यवृत्ति, मानाभावात् । अत एव 'ते च वस्तुतत्त्वेनैवे'त्येवकारो मूलेऽभिहितः । न च सिद्धान्तानुमाने सामग्र्यभाव उपाधिः, सामग्र्या उक्तत्वात् । एवं च स्वसंवेदनसिद्धमेवाविर्भावस्वरूपं नोत्पत्त्यादिवदतीन्द्रियम् । क्षणोऽपि विषयताविशेषात्मा समर्थित इत्यलं प्रसक्तानुप्रसक्त्या । यत्तु कार्यकारणभावानुपपत्त्या तदानीं गुणसामान्याभावसिद्धिरिति, तदपि न; आश्रयतयोत्पत्तेरपेक्षणीयस्य समवायिकारणस्य कार्यभावत्वेन कारणत्वावश्यकत्वे पूर्ववर्तित्वस्य तत्कारणतायां कारणमेदभिन्नायामनिवेशात्, सव्येतरविषाणयोरिव मिथो हेतुहेतुमद्भावस्य सद्भूतन्यायेनान्यथासिद्धत्वेनैव वारणात्, उत्पत्त्याधारस्यावश्यापेक्षणीयत्वात्, अनन्यथासिद्धेः । असमवायिगुरवस्तु विवृतितया पटवत्त्वमपेक्ष्य समवायेन पटत्वं कार्यतावच्छेदकमित्युत्पत्तौ लाघवपुरस्कृतं प्रमाणमुपवर्णयाञ्चक्रुः, तत्तथैव, परं यथोत्पत्तित्वं न कार्यतावच्छेदकम्, अनवस्थानात्, गुरुत्वात्, अर्थसमाजसिद्धत्वाच्च, एवमाविर्भावत्वमपि, किन्तु पटत्वमेव कार्यतावच्छेदकम्, समवायस्यैकत्वाद्विशिष्टाधिकरणतानिवेशे गौरवात्, अवयवसंस्थानवृत्तिपटत्वादेः परम्परासम्बन्धप्रवेशगौरवाच्च । कार्यत्वं तु स्वरूपसम्बन्धविशेषो व्यवहारप्रयोजकः । तत्सम्बन्धकल्पनानिमित्तं काले नित्यविषयतावच्छिन्नमेव । ततश्चोत्पत्त्यादीन् प्रलयधिरवे घटादीन् प्रत्येव तथैवोपपत्तौ 'सत्प्रतिष्ठा' इत्याद्युपपत्तेर्विलक्षणजनकताया एवौपनिषदत्वात् । एकस्यापि ब्रह्मणो दण्डादिनाविर्भावात् क्रमोपपत्तेः । एतेन ब्रह्म निर्गुणं, अविषयत्वात्, आद्यक्षणावच्छिन्नपटवदिति तार्किकपुरस्कृतोपन्यासो यदनुमानं प्रयुञ्जीत, सोऽपि प्रत्युक्त इत्यलमतिविस्तरेणेति । नन्वेवमुत्पत्तिधर्मकत्वेनैव वस्तुसत्त्वं साध्यताम्, किमाविर्भाववादेनेति चेत्, इष्टापत्तिरिति (केचित्) सांख्यादयः । वस्तुतस्तु ब्रह्मतादात्म्यमिहाद्वैत (ब्रह्म)वादः प्रस्तुतः । उत्पत्तिवादिना तु पूर्वक्षणसम्बन्धानङ्गीकारात् तदङ्गीकारे तदीयमायत्वं दुर्वचम् । यद्यपि प्रागभावानङ्गीकारेऽसतः सत्तापि न तत्सम्मता । तथा चाक्षचरणसूत्रम्–प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा उत्पादव्ययदर्शनात्' 'बुद्धिसिद्धं तु तदस'दिति । 'पूर्वपक्षश्च सिद्धान्त उभावत्र प्रतिि. . । उत्पत्तिर्यदि नो दृष्टा तदानीं चेत्पुरापि स'चिति सूत्रार्थः । तस्मादप्रतीतमात्रत्वादसत्त्वव्यपदेशो न सत्त्वविर. . एवं च पटादिः पूर्वपूर्वक्षणसम्बन्धिसत्ताश्रयः, उत्पत्तिशिष्टसत्ताश्रयत्वात्, सत्ताश्रयत्वाद्वा । उत्पत्तिदशायामनुपलभ्यमानत्वेनासत्त्वप्रसङ्गोऽत्र विपक्षबाधक उद्भावनीयः । तथा चासद्वादिनामैकमत्यम् । तथापि पूर्वक्षणसम्बन्ध उत्पत्तिरितिवादिनां विप्रतिपत्तः, तदर्थं तैः प्रागविद्यमानस्योत्पत्तिसमय एवाश्रयतयाऽवच्छेदकत्वं पटादेः स्वीक्रियते । तत्र च नियतत्तत्कालीनपदार्थैश्च विनिगमकाभावः । ब्रह्म तु तथा कल्प्यमित्याविर्भावाश्रमः (वस्तु) सर्वस्वरूपब्रह्मण एव व्यापकस्य सत्तादात्म्येन सर्वत्रा(नुभूयमानस्य)वस्थितस्य सर्वधर्मवत्तया लाघवानुगृहीतधर्मिग्राहकमानसिद्धस्य स्वगतसर्वधर्मानुगम्यस्फोरकत्वेनाभ्युपगमाद्धटत्वतत्कार्यकारित्वानन्वित्वादीनां पटाद्याकारेणाविर्भावानां चाश्रयतयाऽवच्छेदकत्वमङ्गीक्रियते । तत्रावयवसंस्थानादयः तद्व्यतिरेकेणाश्रयतयापि नान्तरीयकतया नावच्छेत्तुं समर्थाः, समर्थमप्रेक्षणनान्तरीयकत्वादित्ययमु(प)देशाच्चा प्रत्यक्षाविर्भावनान्तरीयको दर्शितः । तदुक्तम्–'नै ह्यलीके त इति । तिरोभावोऽपि घनोद्देशेऽलीकः, यूथापि (एव) प्रवेशात् । अलीकत्वं तु तदुद्देशस्य ततोऽपि परं तिरोधानात् । मण्डलमेव सर्वदाऽविर्भावाधिकरणमिति महतामनुग्रयः । एवमत्र अपमे ब्रह्मप्रतीतिर्न ध्रुवा, किन्तु लीलाधिकरणत्वेन सर्वात्मभावसंस्कृते तस्मिन्नलीकत्वापहारेण ध्रुवेत्याहुः तैर्योरिति । धर्मत्वमाधेयत्वम् । लीलात्वमेवेति तु रीतिः । लीलात्वं तु तन्नित्यतावादे (निर्वक्तव्यम्) लक्षणीयम् ।

'निकुञ्जभाविलीलानां नित्यतायाङ्कुरोऽर्पितः । आविर्भावविवादोऽयं सोऽत्र प्रस्तूयतेतमाम्' ।

'शक्ती वा' इत्यत्र शक्तिपदं लीलापरम् । एवं 'परास्ये' त्यत्रापि शक्तिर्हि कारणतावच्छेदकतया सिद्धोऽतीन्द्रियो धर्मः । अविर्भावस्तु स्वभावतः प्रत्यक्षः । एवं तिरोभावोऽप्यभावादिवद्प्रत्यक्ष एव । स्वाभाव्यादनभ्यक्ष इति तु न, (सद्रूप) ब्रह्मधर्माणां प्रत्यक्षत्वात् । अतीन्द्रियत्वमपि प्रत्यक्षमेव, इन्द्रियत्वादेरखण्डोपाधित्वात् । इन्द्रियत्वस्याखण्डोपाधेरैन्द्रियकत्वात्, वायुस्पर्शस्येव प्रत्यक्षत्वादित्यन्यदेतत् । कथं तर्हि शक्ति-

पदं सामर्थ्यलक्षणम्, योगार्थाभिप्रायादिति । तथा च प्रयोगः–घटत्वादयो धर्मा आविर्भावपर्यवसितास्वरू-
र्यन्ताश्च, कालत्रयाबाध्यधर्मिसम्बन्धशालिधर्मत्वात्, आकाशत्वादिवत् । ( तत्त्वं तु-परिमाणविशेष एव, लघु-
त्वात्, शब्दस्य प्रत्यक्षत्वेनाकाशासाधारणधर्मत्वे तस्याकाशेनैव ग्रहे आकाशत्वसिद्धावाकाशे विवादाभावाप-
त्तेः ) । ननु तस्य शब्दरूपत्वात्ततःसाध्याभावप्रसङ्ग इति चेन्न; तत्परिमाणादेरेव दृष्टान्तत्वात् । तथापि
शब्दे स्वतो व्यभिचार इति चेन्न; धर्मिनित्यतार्थमुपक्रान्तस्याविर्भावनादस्य धर्मनित्यतायामपि प्रसावात् ।
तथा च ततोऽपि शब्दनित्यत्वसिद्धिरित्यधिको ( पपरोरभ्युचयः )ऽनुप्रवेशः । अत एव व्योमैकगुणत्वेन
नित्यत्वं साधयन्ति मीमांसकाः । न च प्रमाणान्तरसिद्धमनित्यत्वमुपाधिः, प्रमाणान्तरत्वनिवेशवैयर्थ्याद्,
घटीयरूपादेरपि नित्यत्वसाधनात्, तद्व्यभिचारस्यानाशङ्कनीयत्वात् । यस्मिन् क्षणे यदुपलम्भस्तत्तत्स्वरूप-
क्षणात्मकविषयताया एव नियामकत्वान्न सततोपलम्भप्रसङ्ग इति । न चैककारणपरिशेषापत्तिः, ब्रह्मवादिना-
मिष्टत्वात्, तत्तत्साधनगोचरप्रवृत्तेरप्रवृत्तेर्वा विशिष्टेच्छायत्तत्वात् । तत्तत्प्रहरयानुपपत्तेरग्रे परिहरणीयत्वात् ।
तथापि ध्वंसवादिनं प्रति साध्यासिद्धिरिति चेन्न, तिरोभावस्याग्रे विवेचनीयत्वेन तत्रैव तत्समाधानात् ।
तदर्थं ग्रन्थमवतारयन्ति किं चेति । अर्थान्तरोपक्रमः । प्रकृतानुकूल्यादुपोद्घातसङ्गतिः । तथा चाविर्भा-
वनिरूपणनिर्वाह्यप्रकृतसाध्यसिद्धिसमर्थनार्थं तिरोभावनिरूपणम् । अन्यथा फलतः सोऽप्याविर्भावविशेषः, स्व-
रूपान्तरे सूक्ष्मस्यैव वा । सच्छक्तिमतो वस्तुनः सर्वत्रान्ततः प्रमेयत्वादिना आविर्भावविषयत्वात्, सर्वथा
तदभावानिरूपणात् । अत एवाभावस्यात्मविषयत्वायेन केनापि रूपेणाविर्भावस्यैव सावकाशत्वात् । उक्तं हि
पुरस्तात् 'स्वप्रतियोगितया घटाविर्भाव एव तत्तिरोभाव' इति । न चोन्मीलनानन्तरमाविर्भूतो घट इति प्रतीतिः,
प्रत्यक्षमात्रे उत्पत्तिस्थानीयातिरिक्ताविर्भावव्यवहाराङ्गीकारात् भावित्वं भूतत्वं चोभयं तिरोभावगर्भम् । अनु-
मितिशब्दाद्यनन्तरभाव्यं तु व्यवसायरूपं वा मानसान्तरं वा, यत्साक्षिज्ञानमुपदिशन्ति । सोऽप्याविर्भावविशे-
षः । साक्षादपि शब्दादितः केचिदिच्छन्तीत्यलमधिकेन । धर्मधर्मिभावान्यथानुपपत्तिरेव निरसने दण्ड
इत्याहुः पतिनेति । अन्याश्रयं वारयन्ति नचेति । अयमभ्यर्हितार्थः । अन्यधर्मो यदन्यमालम्बते, घ-
टधर्मः पटमालम्बेत । यथा कालो न घट इति प्रत्ययस्तथा पटेऽपि वाच्यम् । तथा च घटादिरेव कालो-
पाधितयाऽऽश्रयो महाकालो वेति पर्यालोचनायामनन्तानामुपाधीनामवच्छेदकत्वाश्रयत्वादिकं कल्पनीयमिति
गौरवाद्द्वितीयपक्षाश्रयणे तस्येश्वरानतिरिक्तत्वादीश्वर एव 'पुरुष एवेदं सर्वं'मिति सूक्तः सर्वाश्रयपदेऽभिधि-
त इति सोऽधुनापि घटत्वाद्याश्रयोऽस्तु । विद्यमानश्च तन्नावकाशः, सन्मात्रं वा प्रतीयत एवेति किमवक-
विभिर्बहुभिर्द्वैतापादकैः, विशिष्टाधिकरणत्वादिभिरेवानतिप्रसङ्गाच्चेतिसर्वमनवद्यम् । तत्समवेतत्वेन समवाय-
समवेतत्वेन तत्प्रकारिका घटविशेष्यिका प्रतीतिर्नेत्यर्थः । तेन सम्बन्धेन समवायात्मकसम्बन्धेन, समवाय-
स्यासत्त्वात्, किन्तु कालिकतया तत्र सत्त्वं न तत्प्रतीतिनियामकम्, विशिष्टबुद्धिनियामकस्यैव सम्बन्धत्वात्,
तथात्र तत्प्रतियोगित्वस्य प्रतियोगित्वात्मकस्वरूपसम्बन्धेनासत्त्वात्, किन्तु कालिकत्वेति तस्य नेदृशविशिष्टबु-
द्धिनियामकत्वम्, किन्त्विदानीं समवाय, इदानीं प्रतियोगित्वमित्येव विलक्षणविशेषणतावगाही प्रत्यय इति
न भवदुक्तप्रतीत्यापत्तिरित्याद इतीति चेदिति । सम्भावनायामव्ययः । वाचभिमतं स्वरूपसम्बन्धं तन्मुखेन
रूपयितुमुपक्रमन्ते स्वरूपेत्यादि । कालं प्रति सांसर्गिकविषयतात्वं प्रतियोगित्वादौ नास्तीति वादिनं दर्शयन्त
एवाहुः से को चेति । इदानीन्त्वावगाहिन्यां प्रतीतौ प्रतियोगित्वादेर्विशेषणतायाः सांसर्गिकविषयतात्वं व-
दतामास्तानां वाक्यं वेदो वा कश्चिद्विश्वासहेतुरित्यर्थः । नेष्टं दृष्ट इति । यत्र यत्र संसर्गतात्वं दृष्टं, तत्र
तत्र प्रतीतिबलात् । इदानीन्त्वावगाहिप्रतीतिबलात्सूक्ष्मं संसर्गतात्वं स्वरूपविशेषणतायामपि स्यात् । यदि
चेदानीं प्रत्ययः कालिकविशेषणतायामेवेति विभाव्यते, तथापि पदार्थसिद्धौ प्रत्ययोरन्तरनवतारात् । वि-
नियमकाभावादसिद्धेरिति तु मन्दम्, स्वरूपमात्रोपस्थितौ कालनिरूपितत्वोपस्थितेरदौच्चत्वात् । अस्मन्मते
तु सूक्ष्मासूक्ष्मयोर्विनिगमनाविरहस्याज्ञुद्धाव्यत्वेन ब्रह्मण्येव सर्वे प्रत्यया इत्यपरिमपितिष्ठन्ति । न च ब्रह्मव-
दन्यत्रापि सूक्ष्मम्, कल्पकस्य ब्रह्मण एवोपजीव्यत्वात् । तत्त्वपर्यन्तदृष्टौ तु नामधेयार्थः, प्रतीतेः । न चैवमपि
ब्रह्मणि संसर्गताप्रकारतयोर्भेदः स्यादेवेति साम्प्रतम्, (ज) भेदेऽपि तत्त्वयोरविरोधात् । ननु तथापि

मन्मते प्रतीत्यभावात्प्रतियोगित्वादौ कालनिरूपितविशेषणतात्वमास्तीत्याशङ्कते नेन्विति । प्रतीत्यभावाद्विशेषणत्वाभावस्तदभावात्तदभाव इति तु शब्देनान्योन्याश्रयस्तर्कितः । किमेदानीन्त्वावगाहिप्रतीतावपीदानीं काले पटत्वम्, कालस्तु न पट इति वदतो व्याघातः । काले पटत्वाभावबुद्धेर्विरोधित्वादिदानीं काले पट इति प्रतीतेरप्यनुपपन्नत्वात् । ननु कालिकविशेषणतया पटत्वबुद्धौ स्वरूपसम्बन्धावच्छिन्नपटत्वाभावबुद्धिर्न विरोधिनीति चेत्, तत्किं कालिकविशेषणता न स्वरूपसम्बन्ध इति वक्तुमुद्यतोऽसि । कल्प्यमानसांसर्गिकविषयतात्वावच्छिन्नस्वरूपसम्बन्धत्वाभावः कालिकविशेषणतायामिति वक्तुमुद्यतोऽहमिति चेत्, इदानीमयं काले पट इति प्रतीत्यापत्तेर्दुर्वारत्वात् । इदानीन्त्वप्रतीत्यापादितसांसर्गिकविषयतात्वेनावच्छिन्नत्वात्स्वरूपविशेषणतायाः सांसर्गिकविषयतात्वे कल्प्यमानेऽप्युत्तरीयोपादानस्यान्योन्याश्रयप्रघातपरिहरणीयत्वाच्च । प्रघातोपचारं विचिन्त्यान्यथानुपपत्तिकस्त्वमाश्रित्य कालोपाधिरूपनिजपरिस्पन्दशालिनं सूर्यमुपतिष्ठते सम्बन्धान्तरमन्तरेणेति । सूर्यपरिस्पन्दात्मककालोपाधेरवश्यमिदानीमित्यादिप्रत्ययविषयतायाः सर्वसम्मतत्वात्तत्र निरुक्तप्रतीत्यापत्तिवारणायायं प्रकार इत्यर्थः । सम्बन्धान्तरं संयोगसमवायादिमन्तरेणेति तमादायार्थान्तरशङ्कानिरसनाय संयोगादेर्द्रव्यैकगोचरत्वादल्पविषयत्वात्सर्वसाधारणमाशङ्कते योग्यैस्त्वेति । योग्यत्वं लक्षणं स्वरूपं यस्य तादृशः स विशेष इत्यर्थः । कैल्प्यत इति । न्यायाचार्यैरिति शेषेण श्रद्धा प्रदर्शिता । नैतद्युक्तमित्याहुः मैवमिति । योग्यत्वस्य वक्ष्यमाणास्तत्प्रश्नानन्तरमेव समाधातुं भवतोपक्रमस्य कर्तव्यत्वात् साम्प्रतं निर्वाह्य कथन्तय कथायामुपक्रान्तेत्यर्थः । अयं भावः—विशिष्टप्रत्ययजननयोग्यत्वं भावित्वाश्रयभाविव्यक्तिमपेक्ष्य महासमय एव वाच्यम्, भाविव्यक्तेर्भाविसमयव्यक्तेश्चेदानीमभावात् । ननु भावित्वं स्वस्मिन्नेव तावत्तिष्ठतु, मैवम्, भावित्वं भावीतिप्रत्ययापत्तेः । तदिदमुक्तम् एवेति । समयो भावीत्यादिप्रत्ययापत्तिरुक्तदूषणम् । तत्सम्बन्धस्य योग्यत्वसम्बन्धस्य । तेथा चेति । योग्यत्वस्य स्वावृत्तौ योग्यत्वं भावीति प्रत्ययापत्तौ प्रसक्तायां तस्य सम्बन्धिकस्य पुनः समय एवाश्रयत्वाश्रयणे समवायी भाविसमयः । अत्र पूर्वत्र च समवायपदं भेदः सम्बन्ध एव समवायव्यवहारात्तमनुरुध्येति पूर्वोक्तपटसमवायरीतिस्मारणाय चेति बोध्यम् । तथा च क्वचित्कालोपाधौ निरुक्तमहासमये वा निरुक्तयोग्यत्वलक्षणस्वरूपसम्बन्धाभ्युपगमे स्वरूपसम्बन्धस्याप्ययं स्वरूपसम्बन्ध इत्यनवस्था तत्र तत्र भावित्वप्रत्ययानवस्थामपि प्रसञ्जयन्ती निरुक्तयोग्यत्वमसम्बद्धमेव व्यवस्थापयेदित्याशङ्कामिव । तथा च तेन सम्बन्धेन सम्बन्धिनोऽपि निराधारतायां ज्ञानविषयत्वं कालसम्बन्धित्वव्याप्यमिति नियमभङ्ग इत्याहुः असिद्धेरिति । नियमान्तरमुपदर्शयन्ति अन्यभावेति । कालाश्रयस्य देशाश्रयत्वं, देशाश्रयस्य कालाश्रयत्वमिति तुल्यौ नियमावित्यर्थः । भावस्येति । भाट्टमतेऽभावानङ्गीकारेण । न चैवं भावपदमव्यावर्तकम्, अभावस्य भावात्मकत्वसूचनार्थं तथोक्तेः । समवेतपदमुक्ताभिप्रायम् । अन्यथा उक्तनियमानङ्गीकारे । असतोऽपीति । अपरिगृहीतायाम् । नन्वसम्भावस्येवेति कथमेतदापादनम्, तत्राहुः—अङ्गीकार इति । उक्तनियमबलादेवासत्ख्यात्यभ्युपगमो नैयायिकानाम् । तथा चाऽसत्ख्यातिनिरासार्थं प्रवृत्तानां तेषां घट्टकुट्यां प्रभातमिति भावः । ननु सर्वत्रानाश्रितस्यासत्त्वम्, देशकालविषयाणामन्यतमाश्रितस्य सत्त्वमित्येव नियमः । इष्टो हि कालाद्यनवच्छिन्नतयाप्यात्मा सन्निति प्रत्ययः, एवमिह देशे समय इति प्रत्ययोऽपि काले कालान्तराभावात्तदनवच्छिन्नः, एवमिदानीमयं देश इति देशे देशान्तराभावात्तदनवच्छिन्नप्रत्ययोऽपि । तथा च काल एव भावित्वतत्सम्बन्धादयो वर्तमानाः सम्बन्ध्यन्तरमनपेक्ष्यैव स्वसत्तां लभन्त इति नोक्तदूषणव्यूहे मदीयशास्त्ररथमागत्यार्धयमानं प्रति चक्रव्यूहमुद्भावयन्ति नैं हान्येति ।

चक्रमार्गो नाभिरग्रो यत्रारः सम्प्रतिष्ठिताः । तद्वत्र यदि जानीयान्निर्गच्छेद्वादिनां पुरः ।
प्रकृते वादिनो धारा आरा इव प्रतिष्ठिताः । देशकालस्वभावं च ब्रह्मैव परितः स्थितम् ।
पुरस्ताद्ब्रह्मवाक्योक्तं तदजानन् विमुह्यति । आरमार्गं प्रविष्टस्य देशः कालश्च बाधकौ ।
आराविश्लेषगमने द्वितीयो बाधको भवेत् । यत्रैते संश्रितास्तत्र सिद्धिरस्त्वचरी श्रुता ।

'सर्वे एते आत्मानः समर्पिता' इति । अन्यदुत्तमो भगवान् स एव धर्मो यस्य भगवदीयस्य तस्य न कालाश्रय इति ध्वनिः । ननु तादृशस्यापि बलेः कालाश्रयत्वं दृष्टम् कालप्रतीक्षाश्रवणाद्धीप्यादीनां चेति चेत्,

इत्यत आहुः—तथैव सतीति । स तु तथापि स्वधर्मांश्च प्रच्युतः, वादी भूत्वा भवांस्तु यदि भाविष्यत्त्वादिकमनपेक्ष्य कालमात्राश्रयत्वं भावित्वादीनां मनुषे, तदा तस्य प्रतीत्यभावनिबन्धनो ज्ञानविषयताऽयोगोऽप्यापतित इति स्वधर्मत्वव्याघातभयं भारतादावनुश्रुतं नानुसंधत्से । तस्मादस्माद्विवादादधुनैव पराजयमप्राप्यैवाऽवहारः कार्य इत्याहुः अंत इति । एवमङ्गीकृते गीतार्थमुपदिशन्ति किं चेति । उक्तयोग्यता स्वरूपसम्बन्धत्वव्यापिका स्वरूपनिष्ठोऽतिरिक्तो धर्मः, तर्हि पृच्छामः, किं नाम योग्यताऽवच्छेदकधर्मवत्त्वं योग्यत्वमित्यत्र किमवच्छेदकमिति स्वसमानाधिकरणसांसर्गिकविषयतासमानाधिकरणं परस्परावच्छेद्यावच्छेदकभावमासादयेत्, तर्हि किमन्यतरेण, अन्यतरस्यैव संसर्गत्वात् । अथ विनिगमकाभावादुभयमवच्छेदकीभवच्च व्यर्थम्, तर्हि लाघवात्स्वरूपसम्बन्ध एवावच्छेदकोऽस्तु, किमनेन सम्बन्धान्तरमन्तरेणेत्यादिमन्त्रपाठेनेत्याशयस्यार्थः । तदुक्तं भगवता 'नासतो विद्यते भाव' इत्यादि, तत्र, स्मारयन्तः कादाचित्कत्वमसत्त्वापादकतया परकीयशङ्कां त्याजयन्ति स्यैजेति । पारमार्थिकसत्तां प्रत्यप्रयोजकत्वादित्याहुः पैति । सत्ताया जातित्वं नव्यनैयायिकैर्न स्वीकृतं, वर्तमानत्वनिबन्धनसत्त्वप्रत्यय इति न स्वीकृतम् । तस्य च यदा कदाचिदित्याद्युपाधं तस्यैव प्रतिकूलम्, तस्मादुक्तं सत्त्याजनम्, यदा कदाचिदन्तर्भावेण सत्ताया एव निरूपयितुमशक्यत्वात् । व्यवहारप्रातिभासिकयोरप्येवम् । ननु तदानीन्तनवर्तमानत्वमेव 'यद्वा कदे'त्यस्यार्थः इत्यत आहुस्तया द्वितीयार्धमपि त्याजयन्ति स्यैजेति । वीप्सायाऽन्वयेऽसुरावभङ्गो द्विरुक्तमन्त्रस्यकरणाद् द्रष्टव्यः । स्वज स्वजेति मन्त्रः । तथाहि तदानीन्तनवर्तमानत्वं नाम कोऽर्थः, यदा स घटः प्रत्यक्षो घटो येत्यादिकं वर्तमानत्वं विशेषणं परिचायकं वा । नाद्यः, वर्तमानत्वस्यादाकादाचित्कत्वयोः परस्परं विशेष्यविशेषणभावे विनिगमकाभावात्, यादाकादाचित्कत्वस्यातिप्रसक्तत्वाद्वर्तमानत्वस्य तत्र विशेषणत्वासम्भवाद्वर्तमानकादाचित्कत्वविशिष्टे वर्तमानत्वान्वये निराकाङ्क्षत्वात् । एवं वर्तमानत्वस्याप्यतिप्रसङ्गो बोध्यः । ननु तत्तद्वर्तमानत्वमन्वयिताऽवच्छेदकं न यदा कदेत्यादिविशेषितस्यैव तत्तत्त्वपदार्थत्वात् । न द्वितीयः, तथा सति वर्तमानत्वं सर्वानुगतमेकमेव । वर्तमानकालसम्बन्धत्वमित्युक्तावात्माश्रयश्च । तदानीन्तनत्ववर्तमानत्वयोरेककालघटितत्वेऽनैक्यापाताच्च । तस्माद्यत्र कदाचित्र कश्चिद्दिशानीमत्र वा वर्तेत इत्येवानुगतव्यवहाराद्यदाकदेत्यर्थं प्रति व्यापकत्वाच्च वर्तमानत्वं स्वरूपसम्बन्धविशेषोऽखण्डपदार्थो वेति वादिनां व्यवस्था । अक्षसंस्थैव तु वर्तमानत्वमिति भक्तवादिनः प्रतिव्यक्ति तद्भेदे गौरवादित्याहुः गौरवं चेति । चकारायदाकदेत्याद्यननुगमसङ्ग्रहः । अनुगतगुरुरूपसम्भवे तत्राननुगमाभावाद्गौरवसम्भवाच्च गौरवाननुगमयोर्भेद इति भावः । अत्रान्तःप्रविष्टशङ्कां त्याजयन्ति तथा सम्बन्धान्तरमन्तरेणेति । अन्यः सम्बन्धः सम्बन्धान्तरमिति विग्रहवाक्ये सम्बन्धत्वावच्छिन्नभेदो नान्तरपदार्थः, भेदाश्रयसम्बन्धस्यापि सम्बन्धत्वात्, किन्तु प्रकृतसम्बन्धव्यक्तित्वावच्छिन्नभेद एव प्रकृतसमभिव्याहृतपदार्थत्वम् । तथा चास्य सम्बन्धान्तरमित्येव वाक्यं साधितं स्वरूपसम्बन्धातिरिक्तसम्बन्धमन्तरेणेति फलितार्थस्यामेदतृतीयार्थगर्भस्य विशिष्टत्वभ्रिमपदार्थैकदेशेऽन्वयादन्यसम्बन्धभिन्नसम्बन्धेनान्यपदार्थवत्त्वविशेषेण वा प्रतीतिरत्रांद्विविधत्वप्रत्यय एव तज्जननं फलोपधायकत्वस्वरूपम् । योग्यत्वनिषेधे सर्वदैव स्वरूपसम्बन्धकल्पनापत्तेरिति पूर्वपक्षोक्तिकभावार्थो वादिविरचितव्यूहस्तदंशस्य सम्बन्धान्तरमित्यादिमन्त्रस्य पराभवे व्यूहभङ्ग इति तदाहुः सिद्धे इति । प्रकृतस्य च स्वरूपसम्बन्धत्वस्य प्रकृतमन्त्रपाठसाध्यत्वेन प्रकृतमन्त्रस्य चोक्तरीत्याऽनर्थकत्वेनार्थतोऽपराभात्पराभवप्रसङ्ग इत्याहुः सार्थकमिति । उक्तरीत्या तदर्थस्य समभिव्याहृतपदार्थसाकाङ्क्षत्वेन स्वरूपसम्बन्धादन्यः सम्बन्धस्तमन्तरेण तद्भिन्नेन सम्बन्धेनेति पूर्वापरीभावघटितस्वरूपसम्बन्धस्य सम्बन्धत्वासिद्ध्या सम्बन्धान्तरानवधारणादित्यर्थः । स्यादेतत्, कल्पनयैव सम्बन्धत्वं साधयिष्यामि, विशिष्टप्रतीतिनान्न हि तत्कल्पकम्, अत एवोक्तनियमे तन्निवेशः, इतरथा सम्बन्धत्वमात्रासिद्ध्या नियमासिद्धेरित्यत्राहुः तथा चेति । स्वरूपमात्रस्य गत्वेनातिप्रसङ्गवारणाय 'सम्बन्धान्तरमन्तरेणे'त्यादिनियमादरणे स्वरूपसम्बन्धासिद्धौ नियमासिद्ध्या तत्सार्थक्यकरणार्थं तन्मन्त्रमात्रेण तत्साधने आत्माश्रयः । मन्त्रान्तरानुसरणेऽनवस्था । उक्तरीत्या प्रतीतिमात्रेण तत्साधने प्रतीतिसिद्धौ सम्बन्धत्वसिद्धिः, तत्सिद्धौ तत्सिद्धिरित्यन्योन्याश्रयः । ननु प्रतीत्यभावात्सम्बन्धत्वं न कल्प्यत इति चेत्, तर्हि प्रतीत्या सम्बन्धत्वं कल्प्यत इत्यर्थापत्तिवाद एव । किञ्च प्रतीतिकालीनं सम्बन्ध-

स्वमव्याप्यवृत्ति स्यात् । स्यादेवेति चेत्तर्हि प्रतीतिकालस्य तदवच्छेदकत्वे वैशिष्ट्यमेव तत्तत्क्षणित्वमवच्छेदकम् । तथा च स्वस्य स्वावच्छेदकत्वे आत्माश्रय इत्याहुः आत्मेति । न च तत्तत्क्षणित्वेनावच्छेदकत्वे नायं दोष इति वाच्यम् । तत्क्षणित्वेन सम्बन्धावगाहिवैशिष्ट्यप्रतीतेः सम्बन्धत्वाकल्पकत्वेन तयोरेकेरयुक्तत्वात् । एवं भगवत्तर्कचक्रमभ्यवतो वादी चक्रात्समुद्धर्तुं भगवन्मायां प्रति मायां रचयति नै चेत्यादि । तदर्थं इति वाच्यमिति पर्यन्तम् । यत्रानेकतर्कशस्त्राण्येकत्र प्रादुर्भवन्ति तदिदं मायास्त्रम्, तत्रान्तरा बाणरङ्गेषु न चेति चतुष्टयं प्रतियाणान्प्रेषयन्ति । तथात्वं विशिष्टप्रत्ययजननयोग्यत्वम् । तदर्थः सम्बन्धान्तरपदार्थः । तथा च 'सम्बन्धान्तर'मित्यादेः सामासिकार्थं विहायाऽनवस्थितपारिभाषिकार्थानुसरणमेव मायेत्याशयः । सम्बन्धपदं सन्निकर्षपरमित्याह योद्धे''ति । षड् प्रकाराः प्रसिद्धाः । इदं स्वरूपसम्बन्धत्वनियामकमित्यभिमानः, संसर्गस्याज्ञातस्य विशिष्टबुद्धिविषयत्वाभ्युपगमेन संसर्गज्ञानं विनापि प्रतीतिसिद्धेरिति भावः । नै च वाच्यमिति । सर्वदा स्वरूपसम्बन्धकल्पनापत्तेर्योग्यताया्श्चानिरूपणादित्यर्थः । ननु तथात्वे सति सम्बन्धत्वमेव योग्यत्वम्, केवलस्वरूपसत्त्वेऽपि सम्बन्धत्वं नास्तीत्यत्रात्माश्रये सत्यपि तत्क्षणित्वेन कल्पकत्वे वा दूषणान्तरमाहुः योगे जेति । तद्धर्मस्य तत्तत्संसर्गावगाहिप्रत्यक्षनियामकत्वे संसर्गत्वकल्पकत्वावश्यंभावादिति भावः । अथेष्टापत्तिर्लौकिकयोग्यत्वं वा विवक्षितमित्याशङ्कते नै चेति । वाच्यमित्यनेनान्वयः । योगजधर्मस्य संसर्गत्वेनासिद्धेः, सिद्धौ वा तस्याज्ञातस्यैव विशिष्टबुद्धिविषयत्वाभ्युपगमेन युञ्जानाश्रितयोगस्य चिन्ताविशेषः सहकारी न स्यात्, तस्मादिष्टापत्तिरित्यर्थः । लौकि''केति । पूर्वं 'सन्निकर्षाभावे'त्यन्तेनालौकिकतज्जननयोग्यत्वमुक्तम् । एतच्चालौकिकस्वीयस्वरूपसम्बन्धे नियामकम् । लौकिके त्याहुः लौकिकेत्यादि लौकिकालौकिकोभयविधतद्योग्यत्वं वा नियामकमित्यर्थः । तत्तत्सन्निकर्षसमवधाने लौकिकालौकिकयोरुभयोरपि स्वरूपसम्बन्धत्वसिद्धिर्न तु योगजधर्मस्य तत्सिद्धिः, तस्य सन्निकर्षत्वेन स्वरूपान्तरस्य सम्बन्धत्वकल्पकत्वेऽपि स्वस्य तदकल्पकत्वोपपत्तेरिति भावः । सामान्यप्रत्यासत्ताविति । तस्याः स्वैशिष्ट्यांशे विषयविधया लौकिकतज्जननयोग्यत्वात्तत्सम्बन्धे नातिव्याप्तेरिष्टापत्तेर्वोक्तरीत्या कर्तुमशक्यत्वादिति भावः । न च जन्येति । जन्येत्यनेन नित्यसामान्यस्य घटत्वादेर्व्युदासः । जन्याजन्यसामान्यव्यावर्तनाय तदुभयसामान्यात्वं वा विवक्षितमित्याह विनापीति । अपिना सामान्यभेदनिवेशो दर्शितः । नै चेति । सामान्यलक्षणास्थले किञ्चिद्धर्मेण लौकिकप्रत्यक्षसामग्र्याः सहकारित्वम् । अत एवान्धतमसे सौदामिनीतेजोजनितद्रव्यचाक्षुषेऽपि तदुत्तरं न चाक्षुषमित्युक्तं नैयायिकैः । तथा च सामान्यलक्षणायां नातिव्याप्तिरिति भावः । एवमव्याख्याने जन्यसामान्यस्यावरणादिति ध्येयम् । अतिव्याप्तेरिति । योगजधर्मेण प्रत्यक्षे जननीये लौकिकसामग्र्याः सहकारित्वाभावेनोक्तातिव्याप्तिदार्ढ्यमेवेति भावः । लौकिकतज्जननयोग्यत्वनिवेशे 'जन्यलौकिकप्रत्यासत्ति विनापी'त्यंशं त्यजेति पुनरुपालम्भो द्रष्टव्यः । तटस्थः शङ्कते ननु 'सम्बन्धान्तरमन्तरेणे'त्यंशत्याजनवत्'सन्निकर्षाभावे सती'त्यन्तांशोऽपि त्यज्यताम्, अन्यथा तु संयोगादिस्थलेऽपि स्वरूपसम्बन्धसम्भवात्सम्बन्धान्तरमित्यादिकमप्यर्थान्तरवारणायोपादीयताम् । किञ्च षोढासन्निकर्षस्थले स्वरूपसम्बन्धो न सिध्येत्, इतरस्य सम्बन्धत्वकल्पकस्याभावात् । न च 'विशिष्टे'त्यादि . योग्यत्वान्तं विशेष्यमात्रमेव तत्कल्पकम् । तथापि 'सम्बन्धान्तर'मित्यादेः सत्यन्तस्य च तदर्थत्वेन स्वीकृतस्य वैयर्थ्यप्रसङ्गात् । न चार्थान्तरवारणाय तदुपादेयम् । संयोगादेस्तत्त्वेनानन्तस्वरूपाणां सम्बन्धत्वकल्पनस्यैवार्थान्तरनिवारकत्वात् । मैवम्, तावदनवबोधात् । सम्बन्धत्वनिवेशप्रसक्तिप्रतात्माश्रयवारकत्वेन सत्यन्ताङ्गीकरणात् । न च तथापि सत्यन्ते सति विशिष्टप्रत्ययोऽसिद्ध इति वाच्यम् । अनुमित्यादावलौकिकप्रत्यक्षे च स्वरूपसम्बन्धसिद्धेः । तत्र तत्र स्वस्वसामग्र्याः स्वस्वसम्बन्धविषयकः । ( 'न च सामान्ययोगजधर्मे सतः 'प्रतिबिम्बत्वेन वाऽलीकस्य नियमनमेतस्मिन् स्थितिर्वा' एतत्पर्यन्तमूलग्रन्थस्य व्याख्या नास्ति )

पूर्वेत्याद्युक्तं स्पष्टयति ज्ञानैकैर्घनस्येति । घनात्मकवस्तुनो नाणुत्वभेदौ पूर्वापरकोटी सम्भवतः, सूर्य इव स्वप्रकाश्ये तस्मिन्नणुत्वभेदयोर्विरोधात् । आभासत्वेनाणुत्वम्, प्रतिबिम्बत्वेन भेदश्चोक्तः । नत्वनयोरनिर्व-

चनीयत्वम् जीवस्य मिथ्यात्वस्वीकारे स्वस्य चिदंशमादाय तत्प्रतीतावङ्गीकरणीयायामप्यंशेन जीवो भगवदनि-
त्वलीकत्वेनाभ्युपगते तस्मिन् पूर्वप्रकारेणोत्तरस्य व्यपदेशभेदस्याऽन्वयो वक्तव्यः, स च न संभवति, अली-
कत्वव्यपदेशान्वययोर्भिन्नत्वयोर्विरोधादिति भावः । अत एवालीकस्यानिर्वचनीयस्य वा न चेतनत्वं साधारणो
धर्मः, ज्ञानैकघने विद्यमानस्य सार्वत्र्यचेतनत्वस्य तादृशे अंशेऽसम्भवादित्याहुः देते पवेति । कथं तत्रांशान्तो-
त्कदुत्पत्तिरित्यत आहुः प्रकारस्त्विति । तुशब्देन प्रकारान्तरनिरासः । कण्ठरवेण तु श्रुतौ नांशत्वमुक्तं, किन्तु
भगवता व्यासेन चोक्तम्, तन्निर्वचनचिन्तायां च श्रुतिरेवान्वेष्टव्येति व्युच्चरणमाविर्भावविशेष एवांशत्वमिति
तथोक्तमित्यर्थः । ननु लोके नाविर्भावमादायांशत्वव्यवहारः, यथा पटस्य तन्तवो दशा एव वांशाः, पटादेर-
व्यवयवविशेषा एव तथेति प्रकृते तदसम्भवमाशङ्कमानं प्रत्याहुः इदमत्र ज्ञेयमिति । श्रुतिरूपाप्तरूपप्रमा-
णमिदं वाक्यम् । नैव लोकेति । धर्मिणोऽलौकिकत्वे धर्माणामप्यलौकिकत्वादित्यर्थः । जीवस्याहंप्रत्यय-
गम्यत्वेऽपि तदीयांशत्वस्य ब्रह्मनिरूप्यत्वात्तद्धि स्वयमेव स्वांश इति भावः । ननु नैवं तुच्छांशत्वमिति श्रुतिर्भवद्भि-
रेव प्रार्थनीया, प्रार्थितापि न ब्रूयाचेत्तदंशत्वमेव त्यज्यतामित्यत आहुः एवं सतीति । भगवानेवांशत्वं वदन-
स्माभिः पृष्टप्रायः, श्रुतिस्तु बृहदारण्यके भुवनां भिन्निता भविष्यति, तथाऽऽत्मनां निर्गमनं ब्रह्माविर्भावविशेष-
निबन्धनं भवतामुपदिष्टमपि न प्रतीतम् । तर्कस्त्वत्र लौकिकोऽग्निः राण्डव इव राण्डवायमानाहेन, स यदि
तर्कोऽलौकिकभावेन राण्डवायेनानुगृहीतः, तर्हि बृहदारण्यकार्थमंशत्वं न भक्षयेत् । ननु सुषुप्तादात्मनो
जाग्रद्दशायां 'क्व तदाऽभूदिति' प्रश्नोत्तरत्वेन व्युच्चरणमुपक्रान्तम्, तत्कथमंशत्वमिति चेत्, तर्हि सौषुप्ता-
द्यानमाकलय । यथा प्रसुप्तो जाग्रद्दशायामाविर्भवति, तथा स्वे महिम्नि स्थितस्य जीवभाव आविर्भाव एवेति ।
अयमानन्दभुक्कोशविशेषावच्छिन्नः, सोऽपि कुत इति प्रश्ने किमुत्तरम् तस्मादानन्दमयाख्यं भगवद्रूपं
तन्मर्मेत्याह सोऽयमानन्दादानन्दमयो, न मायानिर्मितकोशः । मयडर्थः प्राचुर्याद्यविषयता, विषयता
च स्वरूपसम्बन्धविशेषः । मर्मेत्याह मामकम् तस्माद्दीयेति निपुणतमम्, तस्मात् स तर्कोऽस्माभिः प्रसादेन
संभावितो, न युष्माभिरित्याहुः अंशं एवेति । तर्केणाविप्रतिपन्नेनालौकिकभावपुटेन च । तेनाविप्रतिपन्नेन
श्रौतोऽर्थः पोषणीय एवेत्याहुः इत्यादिका श्रुतिरिति । श्रुत्युक्तस्तर्कः श्रौतः, तेन सिद्धा या मतिः, सा नाप-
नेया । किञ्च श्रुत्यापि बाधकत्वेन तर्कोऽनुगृहीतो मननामननात् स्वाभिमतातिरिक्तार्थं बाधितुं न तु स्वार्थं
बाधितुमित्यभिप्रायेणाहुः अन्यथेत्यादि । यदि लोकानुसारिणमर्थं श्रुतिरनुवदनीयाद्वैरिव भगवदतिरिक्तमनु-
सरन्ती वेणुवेत्राभ्यां निगृह्णेत । किञ्च यद्यलौकिकोऽर्थो न स्यात्तदैषा मतिरिति न निर्दिष्टं स्यात् । लौकिकस्य
लौकिकेन बाधने श्रुतेर्न किञ्चिद्बाधनम् तस्मादयमलौकिकोऽर्थः, स एव लोकसिद्धार्थकुवलयापीडेनालौकिक-
मल्लक्रीडायामुपयुक्तो भवति । तेनापि सह मल्लयुद्धमेव भगवता दन्तिना सह तर्कयुद्धमेव कुलमभ्यासेना-
प्रिमलीलायै । अन्यथेयं लीला व्यर्था, मल्लयुद्धार्थमाहूतस्य भगवतस्तस्य चाम्बोद्देश्यकलीलाप्रवृत्तेर्नातिविरुद्ध-
लाघवेत्याहुः विरुद्धार्था च स्यादिति । अलौकिकार्थं दृष्टान्तयन्ति लोके''ऽपीति । लोके भूत्वाऽलौकि-
कोऽयमर्थः, अयःकान्तसन्निधौ लोहस्य चाञ्चल्यादेवं । अत्र कश्चिद्युक्तिं प्रयुञ्जीत बाधिकाम्, तर्हि 'नहि
दृष्टेऽनुपपन्नं नामे'ति न्यायादलौकिकसन्निकर्षजन्यं ज्ञानं नानुमानप्रतिबध्यम् । तत्रेदमवधेयम्, विरुद्धधर्माध्यासात् ।
परिभ्रमणं हि चेतनधर्मः, क्रिया वा, उभयथापि घटसन्निधौ पटपरिभ्रमणप्रसङ्गः, कथं च पाषाणो विजातीयोऽयः-
कान्तीभवेदिति युक्तिः, सा च प्रत्यक्षेण बाध्यते, क्वचित्सत्प्रतिपक्षमुद्रयाऽनुमानेनाप्यानुमानिकी, क्वचिच्च प्रत्यक्षमपि
चन्द्रपरिमाणादौ भ्रान्तं यत्र मानान्तरविसंवादः । शब्दानुमानयोर्यद्यपि गमप्राधान्यम्, उभयोरपवादे अयः-
कान्तादावपि शक्तिसाधकानुमानसम्भवात्, अन्ततोऽयःकान्तत्वादेरेव शक्तित्वात्, शक्तेरतीन्द्रियत्वनियमे माना-
भावात् । धर्मविशेषत्वेन कारणतावच्छेदकधर्माणां व्यवहारस्य प्रामाण्येऽपि 'पराऽस्य' त्वेनानेकधर्माश्रयत्वलक्षणं
वैचित्र्यमेव तत्र तत्रेति शक्तिपरिभाषायाः स्वरूपसङ्केतमात्रत्वात् । एवं प्रमाणशब्दप्रतिपन्नोऽप्यर्थ इत्युभयत्र बला-
ऽबलरूपाभ्यां शब्दानुमानाभ्यां यदि मिथः प्रतिपक्षसम्बन्धीभवितव्यम्, तत्सेनाकलहप्रसङ्गः, तदर्थं प्रत्यक्षाद्यपेक्षया
भिन्ने विषये तुल्यबलयोः शब्दानुमानयोरहम्पूर्विकया परस्परमुपकार्योपकारकभावेन प्रवृत्तिः । नहि साम-
नीत्या प्रथमप्रवृत्तशब्देन सेनाधिपेन स्वोत्तरप्रवृत्तानुमानयुद्धस्य निकृष्टं वक्तुं वारयितुम् । शास्त्रे ह्यनुमि-

स्यादौ पुनरनियतमिष्टसाधनताज्ञानम् । सैषा सर्वसिद्धा प्रक्रिया वेदान्तिभिरुपारोप्यते निकुञ्जवीथीति यत्र भगवदनुमाने मुरलिकारवोऽसाधारणः शब्दो गवां हुङ्कृतयश्च शब्दानुमानोभयमूर्तयो वरीवर्तन्ते, निर्गुतिविशिष्टसत्ताया एव शब्दैः प्रतिपादनात् । अयमेव औपनिषदशब्देषु विज्ञानिशब्देषु चोत्कर्षः, यतः स्वतः साक्षात्कारमिवानुमित्यादिकमपि भावयतां सर्वप्रमाणरूपत्वमिति, किन्तु सप्रकारक एव साक्षात्कार इत्यत्र संभ्रमो वाक्परिष्ठानाम्, निजोक्तनाम्नः सकाशाद्भगवत्साक्षात्कारादित्यलं पल्लवेन । इदमुपलक्षणम् । चन्द्रकान्तसन्निधौ चन्द्रसुधासरोऽवगाहनादिकमनुसन्धेयम् । देवतोऽस्यभावस्यैवेति । यथा तुल्यपरीक्षायां परीक्षाकृष्टचेतनदेवताभिर्निमनोप्रमनाभ्यां जयाजयौ, तथेहापीत्यर्थः । मणौ परदेवता प्रविष्टेति तयाऽधिभूताभ्यामिन्द्रयोर्भगवद्वीक्षत्वसम्पादनात्कञ्चिदभिभावकत्वाच्च देवतापक्षेऽपि देवतास्वभावस्य गुणीभूतत्वमित्याहुः मणिर्स्वभावस्य । परदेवतात्वेन प्रविष्टस्य भगवतः सार्वज्ञ्यविषयतावच्छिन्नं वस्त्वेव, प्रपञ्चविषयतयैव तावद्विषयतास्वरूपत्वस्य ब्रह्मस्वरूपे उभयनात्, अन्यथा सौपुप्तविषयतया निर्विशेषविषयतया वा तदुभयने सृष्टिनिहरणशाप्यत्वस्य विरोधः । तस्मात्तत्प्रामाण्यार्थं केवलविषयत्वेनावधृतस्यैव सार्वज्ञ्यविषयत्वाभ्युपगमः साधीयान्, सर्वज्ञतातिरोभावे स्वतोऽपि तिरोधानापत्तेरित्याहुः मन्तव्यमिति । ननु युक्तिभिरनुचिन्तनं मननम्, युक्त्यनङ्गीकारे कथमत्राहुः नेन्युक्तिरिति । यत्र सर्वथा बाधकप्रमाणावतारो नास्ति, तत्साधकं प्रमाणमस्त्विन्मते युक्तिर्योगः । सर्वस्य ब्रह्मसम्बन्धित्वमेकविज्ञानादिति युक्तिः । यत्र तु बाधकं, सा युक्तिर्लौकिकत्वमित्रणार्थिका, न ततो भगवत्प्राप्तिः । सार्वज्ञ्यविषयता च सर्वसिद्धा, तत्कृताऽभेदधीः सृष्टिं प्रत्युपजीव्यत्वात्र सद्वेदक्षमेति भावः । सांशत्वमंशित्वापरपर्यायमवयवैरंशैस्वमिराकृत्याविर्भावलक्षणमंशत्वं व्यवस्थापयतीत्यर्थः । मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वम् । मन्त्रवर्णानां सिद्धवद्वस्तुबोधकत्वेन ततोऽपि प्रामाण्यम्, मन्त्रो गूढपदार्थो वर्ण्यते यत्र । अस्य महतो भूतस्य सिद्धवस्तुनः पादोऽपि सिद्ध एव । नहि सिद्धस्यासिद्धः पादो भवति । चराचरात्मेवेति रहस्यम् । हे जीव आव नर, गां जीवयतीति जीवस्तस्मिंल्लोके वाऽऽग्मानन्दसमुद्रे जीवः सचेव भूतो नित्योऽनादित्वात्सनातनः, सनातनो वा कुमारः । मे मैवेति । नाविद्याचैतन्ययोः समुच्चय इत्यर्थः । एवं चांशस्य सतः पार्ष्ठिको बन्ध एवासेत्यनेनास्यांशस्योक्तः अन्यथाऽन्योन्याश्रयादस्येत्यस्य दुर्वचत्वापत्तेरिति भावः । इदमेवोक्तं 'न तु तत्कृतं जीवत्व'मिति मुक्ताफलावल्याम् । नाग्निरिति । यद्यपीन्धनांशेनाविद्यांशेन वा नाग्निरंशा वा तथा, अपि तु हार्दावच्छिन्नविषयतावच्छिन्नं स्वरूपमेवांश उच्यते, तत्र हार्दं नाविषयकम्, 'तन्मनोऽसृजते'ति साक्षात्सृष्टिश्रवणात् । ऐन्द्रियकविषयतानियामकविषयताश्रयद्रव्यविशेषो हि मनस्तादृशविषयतायाः सम्बन्धत्वकल्पकत्वेनाङ्गीकृतः । तदवच्छिन्नविषयतान्तरत्वमंशत्वं जीवत्वमिति । प्राणप्रवाहस्तुल्यमपि धारणाख्यविषयतानियामकत्वमेव, इत्थं संयोगादिप्रक्रियायामनङ्गीकारादिति । अल्पज्ञत्वं सर्वज्ञविषयताव्याप्यं, न तु भ्रमसमानाधिकरणमित्याहुः भ्रमेस्त्विति । जीवेभावः पूर्णत्वतिरोधानम् । न चैवं 'पूर्णात्पूर्णमुदच्यत' इत्यनेन विरोध इति वाच्यम् । सर्वज्ञदृष्ट्या वेदेन तथोक्तेरिति केचित् । वस्तुतस्तु सर्वज्ञविषयतायामल्पज्ञत्वं प्रविष्टमित्येव पूर्णत्वपदार्थः । न चैवमज्ञत्वमनुपपन्नम्, ज्ञानसामान्याभावस्यासिद्धेः । यत्किञ्चिज्ज्ञानवत्वे स्वल्पज्ञत्वमेवेति तत्सार्वज्ञ्यविषयतयैव क्रोडीकृतमिति । केचित्तु भ्रमस्तु जीवानामनुभूयमानो न ब्रह्मांशत्व उपपद्यते, अतोऽविद्यावच्छिन्नत्वमप्युपादेयम् । तथा च निजाचार्यसिद्धान्तविरोध इति महतां वाक्यं मनसिकृत्य तर्हीत्यारभ्यैव रघुनाथवर्याणां पूर्वपक्षावतारश्चेदिति पर्यन्तमित्याहुः । वस्तुतस्तु भ्रमोऽप्यापातत इति ख्यातिविचारे विस्तीर्णविषयत्वात्तत्र सार्वज्ञ्यानुपपत्तिरेतावन्मात्रं पूर्वपक्षशरीरम् । नेहीति तन्निवारणम्, यावद्द्वयमस्यान्वय इति, 'तस्मा' दित्यतः प्राक् सिद्धान्तग्रन्थ एव । 'तस्मा' दित्यारभ्य पुनः पूर्वपक्षः, । तेषामादिति । जीवभावोऽपि यद्यमिथ्यानादिना संपद्यते, तन्नानादित्वानुपपत्त्यादिदूषणप्रसक्त्यादित्यर्थः । ईश्वरप्रसादजभानत इति प्रसिद्धमाध्वमताभिप्रायेण । प्रसादश्च भगवदुक्तो 'मत्प्रसादात्तवार्जुने'ति भेदाभेदबुद्धिक्षमः पदार्थान्तरं प्रसन्नोऽस्मीत्यनुभवसिद्धम् । शुद्धस्य हि भिन्नं प्रति प्रसादः । स्वात्मसात्करणं सख्यादिषु निवेशनम् । मुक्तो भेदेति स्वतः, नत्वमेदेन प्रविशति । तद्गुणसारत्वात्तद्व्यपदेश इति माध्वाभिमानः । कथं तर्हि जीवसृष्टिरुक्तेति पाञ्चरात्राशङ्कायामाह श्रुतिश्चेति । यथा चात्राविर्भाव एवांशत्वेनोपव्याख्यातस्तथेति । स इ

रोपुरुषात्मा दुःखाभावाकाराभिव्यक्त्यापि वैकुण्ठप्रतिष्ठोऽपि लीलाकारानन्दमय एव । 'सता सोम्ये'ति श्रुतेः, तथापि व्यासैः स्वस्य प्रसङ्गैः समं मार्कण्डेयप्राणायामावसरे तदभिमुखतिष्ठतां पितृचरणानां वाक्यप्रतीक्षयाऽयं पूर्वपक्षमवतार इति बोध्यम् । भगवदुदरं गिरिगर्तः । उदरं सांपादिकाकाशो वा । अवकाशावच्छिन्नानन्दरूपमेव तदुदराकाशमिति सर्वगतत्वं नाल्पकत्वविरोधीत्याह नेन्तु परिच्छिन्नेत्यादि । आदिना तत्त्वज्ञानपरिग्रहः । 'पार्थ' इति । धनुर्धरत्वं धनुःकार्यानुकूलशिक्षाविशेषः, तदाह येथेरा स इति । यद्यपि पार्थ एव गदापाणिरिति न प्रयुज्यते, तच्छिक्षायास्तद्विपक्ष एव साम्राज्यात्तथापि तद्वाया गृहीततत्साम्राज्यरूपत्वेन जयशालिसार्धविंशतिसहस्रगजप्रमारित्वाद् भीमोऽपि पार्थस्तथा प्रयुज्यत इति प्राणापिष्ठानुवलेन स्वयं समादधते वेदार्थतोमरस्येति । प्राणायामो प्राणप्रपञ्चनाशनम्, तेन मार्कण्डेयानुभूतमायास्वाधीनीकरणे तथा प्रदर्शिते प्रकटोनपि दुरवगाहे वीक्षणमात्रं वेदार्थो भगवदीक्षणरूपः श्रीपरिबृढे प्रतिष्ठितस्तामरसस्तेनैव समाधौ निलीनो व्यासः पीनो देवदत्त इतिवदन्तर्दर्शीर चक्षुष्मान्, तादृशचक्षुषा सूर्य इवेत्यर्थः । सूर्यः किल यैः किरणैः पिबति रसं तानेव किरणानाप्यमण्डलीयत्वेन चन्द्रकिरणानिव तामरसे नियोजयति, ततो विकास इति चन्द्रात्मकत्वमप्युक्तम् । अत एव रासलीलां वक्ष्यतीति भावः । निदर्शनं स्मृतिः । 'स्मृतेश्चे'ति सूत्रात् । श्रीताथ दृष्टान्ता विस्फुलिङ्गादयस्तदाहुः अंशादिभिरिति । तेर्दुक्तं भिन्नत्वम् । यस्य भवद्भिः पक्षे स्थितं, स माध्व एवं मनुते अंशांशिनोर्भेद इति, तादृशयोराखण्डलार्जुनयोर्भेदादिति, भेदसहिष्णुरंशांशिभाव इति । अत्रैव भेदसहिष्णुरभेदस्तादात्म्यमित्येकदेशिमतं प्रागेव भेदांशनिर्बन्धेन परिहृतम् । तथा च सिद्धान्ते तादात्म्यसहिष्णुरंशांशिभाव इत्याशयः । न चाखण्डलार्जुनयोर्व्यभिचारः, तयोरवान्तरांशांशिभावेन नरनारायणयोरेव मुख्यांशांशिभावस्वीकारात् । तेजोविशेषप्रकृतिकार्जुनदेहस्येन्द्रसम्बन्धातिशयितत्वेऽपि शक्तावाधानात् तदवच्छिन्नस्यार्जुनस्य तदंशत्वम्, तर्हि शुद्धचिदंशस्य तस्य निजधर्मिचित्तादात्म्यातिशयरूपशक्तिविशेषात्मकविषयताविशेषसम्बन्धात् नारायणांशत्वं चेति वैकुण्ठस्वर्गदूताभ्यां विवादे, देहप्राप्तिरास्तामिन्द्रकोटे, आत्मना स्वयं भगवत्प्रपन्नः प्रपत्स्यते चेति कस्यायमंशो मुख्य इति विचारणीयम् । 'आत्मा वै पुत्र'इत्यादौ चात्माभेदोप्येवं रीत्योभयथा समर्थनीयः । नामान्यप्यात्मन्येव सर्वस्वरूपेऽन्वीयुरेव, 'अनामे' त्यादेरेकनामनियन्त्रितशङ्काभावार्थत्वात् । किञ्च 'नामयन्ति स्वार्थमाख्यातार्थे तानि नामानी'ति जैमिनेरनुशासनान्नामार्थस्य भगवतो गुणीभावरूपनमनासंभवादाख्यातार्थस्यैव गुणत्वं, भगवतः प्राधान्यमिति प्रथमान्तमुख्यविशेष्यत्वमनामत्वपदार्थो वैयाकरणानाम् । गोत्रं निजशाखायोजनं प्रत्येकविश्रान्तम्, भगवतस्तास्सर्वाः शाखाः, सर्वशाखाप्रत्ययन्यायात्, कां कां कुत्र कुत्र योजयेत्, तदर्थमेवर्षयो विभक्ताः । अनियमात्ततो भगवति गोत्राभाव इत्यादि बोध्यम् । मन्वत्वमनयाऽप्रस्तुतप्रशंसया, नरनारायणयोरपि भेदः रामकृष्णाभेदादपीति प्रत्युपस्थितोऽयं माध्वः येन विद्वद्वारणेन वारणीयः । न खलु निखिलनिगमगीतामुपदिशन्नपि भगवांस्त्वमहमिति कुत्राप्युपदिष्टवान्, विभूतिगाथान्याभेदस्तु जीवातिरिक्तप्रपञ्चेऽपि, न च तयोरेकविधोऽभेद इति विज्ञापिते प्रतिवादिनां विमोचितयुक्तिप्रत्याभिरेव तत्त्ववादिनारणचरणशृङ्खलामुपाददते वाक्यभेदप्रसङ्गादिति । वाक्यसमुदायात्मकप्रकरणभेदप्रसङ्गादित्यर्थः । तेन नायं मीमांसार्थः-यत्र वाक्यान्यर्थतोऽपि भिन्नानि पूर्णान्येव, परस्पराकाङ्क्षाभावाद् 'वाक्यानामेकवाक्यत्वं पुनः संहत्य जायत' इति न्यायसिद्धमेकवाक्यत्वमेषां नेति पञ्चावलम्बनसूत्रं स्मृत्वा स्वयं संपादते, तदाहुः विनिर्गमेकेति । केचाचिद्द्रुमः, केचाचिदुत्पत्तिरित्यद्भुतजरतीयं नादरणीयं, किन्तु द्रुम उत्पत्तिं कः पदार्थ इत्यन्वेषणे स्वरूपसम्बन्ध एव ज्ञानक्रियाशक्तिशब्दादिमत्त्वाविर्भावो विषयताविशेषात्मको जीवप्रपञ्चसाधारण इत्यध्यवसीयते । स्फुरन्ति विशेषेणोर्ध्वं प्रत्यग्भेदेनागृहीततत्तादात्म्याः पदार्था भवन्तीदमेवोक्तम् । वास्तवतन्मात्रत्वमानन्त्यसमानाधिकरणं तत्तत्परिमाणावच्छिन्नमपि हि गगनमवच्छेदकावच्छिन्नत्वयोः स्वरूपगम्भीरत्वयोर्व्यञ्जकमेवोपयोगम् । उपधानं च तस्य यच्चतुर्द्वारत्वात्मकविग्रहताविशेषाश्रयान्तःकरणप्रावरणेनोपवीतम् । बहिरावरणं हि तादृशमायावृतम् । पुरञ्जनस्य नैषा वैशारदी मतिर्मायया ऽपनेयेति परमार्थमुपदिश्य पञ्चकार्यप्रभौ चिन्तामणिप्रभृतीन् दर्शयन्ति चिन्तामणिकल्पतरुकामधेन्वादिरूप इति । यद्यपि हि चिन्तामणिरिव कल्पवृक्षकामधेनुवच्च भवति, विचारिताविचारितदातृत्वात्, उपसत्तिमात्रापेक्षितत्वात्, परन्तु

चिन्तामणिप्रभृतयः कार्यानुगुणमाभिमित्तमात्रं, न तूपादानम् । ब्रह्म तु प्रादुर्भाव्य पदार्थं तत्तच्छक्तिमत्तया तत्र तत्र प्रविशतीति निजाविर्भावलक्षणं तादात्म्यं नातिशेते, इदमेवांशत्वम् । अस्तिभातिप्रियत्वादिभानसाक्षिकमिति सूत्रेऽप्युपपत्तिं प्रदर्शयन्त एवाहुः तथापीति । पूर्वोक्तामसर्वज्ञतानुपपत्तिं सिंहावलोकनेन परिहरन्ति नैवमिति । निजस्वरूपाविर्भावे तदनुपपत्तेरित्यर्थः । इच्छया विषयताविशेषात्मकवीक्षया । तथा जगत्क्रीडनेच्छा, तथा जीवेष्वपि तत्र व्यापकीभूय रमणेच्छा । व्यापकेषु संयोगाद्यसम्भवात्स्वतादात्म्येनापि व्यापकतायां तेषु तज्ज्ञानवत्सु रमणाकाङ्क्षाविरहात्तत्तादात्म्यं तिरोधायांशिकं च तावदवच्छिन्नत्वं स्थिरीकृत्य तत्र रमणमुक्तं भवति । आनन्दांश आनन्दमयत्वम्, तद्यदि वैकारिकं तर्हि न लिपिष्येत, जीवस्वरूपस्य तन्मते आनन्दविकारत्वादिति शङ्करमोक्षितं व्यासहृदयं चन्दनेन चर्चयन्त इवाहुः अंशे एवेति । तदीयं सूत्रमन्यतमः शङ्कते [१५८] नन्वित्ति । अत्र श्रीमदाचार्यान् प्रमाणयन्ति आचार्या इति । ये स्वयमङ्गीकृत्य श्रीकृष्णात्मसात्कुर्वन्ति ब्रह्मसम्बन्धकरणेन ते आचार्या इति विशेषलक्षणं वेदितव्यम् । विषयतामात्रं सदंशः, विषयित्वं चिदंशः, प्रेयस्त्वेनानुभवविषयत्वमानन्दांश इत्याहुः स्वरूपभूतमिति । स्वरूपान्नातिरिच्यत इति विवेक इत्याहुः सर्वमेनैयदामिति । अवद्यं जडांशः, सोऽपि यत्सम्बन्धादनवद्यो भवतीति निजहृदयं विद्वन्मण्डनैर्निरूपितम्, अन्यथा स्वरूपभूतमिति न वदेयुः, स्वरूपस्यैवयाद्भेदाभेदपक्षानङ्गीकाराच्चेति । एतयोर्धर्मधर्मिणोः । विशिष्टेच्छायामपि किं नियामकमिति महाराजेन पृष्टे प्राहुः अंश इति । अस्मद्विचारपुरःसरो भवतु य एवं विलक्षणवादी भवानित्यर्थः । स एव शङ्कते नेनुं ब्रह्मरूपाणामिति । अङ्गीकृत्य वदन्ति जीवेष्वतावेवेति । प्रकृतहानाप्रकृतप्रक्रिये पुरुषदोषः, उद्भावनमात्रत्वात् । न च तादात्म्यं हीयते, न च निरयो दोषागमः, मोक्षशास्त्रप्रामाण्याच्च । ननु बन्धमोक्षावपि सति तादात्म्ये किमित्यविद्याकुक्षिनिक्षिप्ताविति पुनः पृष्टे विशिष्टेच्छानियामकतां वदन्त एव महाराजपदवीसादृश्यमाहुः राज्ञां स्वैतन्त्र्याणामिति । यथेदानीं भगवदाज्ञया श्रीगोकुले गोष्ठस्थाने रिङ्गणरमणाङ्गणादिकमिति भावः । ऐश्वर्यादेर्बलिवामनादिनिष्ठस्य यथाश्रुतदृष्टान्तानुरोधेनाहुः किं पुनरिति । लोकनियमना परस्परासंभेदः । कारणकारणस्य स्वसत्तया स्थापकस्य, 'द्यावापृथिवी विधृते तिष्ठत' इति श्रुतेः । तेन येषां सम्भेदः पतनं वा प्रसिद्धम्, तत्र तत्संकोचे मानाभावात्स्वसत्ताव्याप्यसत्ताकत्वं सर्वत्र निराबाधमित्युक्तं भवति । दासभक्तिमान् दास इति ब्रह्मदासा इति श्रुत्यर्थः । तेन केचिदसुरा अपि उक्ताः । श्रुतौ साधारण्येनोक्तिः स्वरूपयोग्यतार्था । कितवोऽजामिलः । दाश इति पाठे व्याससम्बन्धी उच्चनीचभावः समदर्शनसत्तामात्रेणेति निगर्वः । ब्रह्मत्वेनैव ज्ञानित्वं भक्तत्वं चेति धर्मिणि विरोधाभावात्सिद्धमेवोक्तम् । अन्यथाकरणमन्यथाप्रदर्शनम् । सामर्थ्यप्रभेदोऽयम् । कर्तुमकर्तुमन्यथाकरणात् तत्तद्विषयतात्मकाविर्भाववैचित्र्येण भावमात्रत्वात्रावशिष्टसामर्थ्यस्याभावविरोधोभयरूपतया भगवद्वाहिर्मुख्यं शङ्कनीयमित्यर्थः । पुरुषदोषरूपदोषोद्भावकं बहिर्मुखं प्रत्याहुः [११६] किन्त्वेवमिति । प्रसज्ज्येयातामिति [११८] । 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रत' मिति न्यायादित्यर्थः । ये त्वत्र सत्वरजस्तमउपाधिभिः शरीरभेदैर्वोक्तदोषं समादधते तान् प्रत्याहुः तथा सतीति । अयं भावः—सर्गादिजनिका कृतिरेकैव, सिसृक्षादेरुपाधिभेदाद्, भेदेऽपि कृतिभेदस्य प्रामाणिकैरलिखनाद्, इच्छाया अपि 'सोऽकामयते'त्येकस्यैव श्रवणाच्च विशिष्टस्यानतिरेकाच्च । तथा च सर्गाद्यनुकूलकृतिमतः संहारानुकूलकृतिमत्त्वमुक्तदोषापादकम् । तदिदमुक्तम्—निर्दयत्वप्रसङ्गः, असम्भवो वा स्यादिति । जीवानां तु सर्वांशत्वेनापि च शुद्धत्वात्तौ दोषावापाततः स्याताम्, शुद्धत्वात् तथा करणस्य । यच्चोक्तं 'सति तादात्म्य' इत्यादि, तदपि 'स्थितस्य गतिश्चिन्तनीये'ति न्यायान्न पर्यनुयोगार्हम्, बन्धमोक्षयोरपि तादात्म्येनाधिष्ठितत्वात् । प्रादुर्भावस्तु कार्यकाम्यविशिष्टेच्छानुरोधिनाङ्गत्वस्थितः । यत्तु अवच्छेदकभेदात्तत्तत्कृतिमत्त्वमिति, तन्मन्दम्, निरवच्छिन्नकृतेरवच्छेदकगन्धाभावे मानाभावात् । अन्यथा ब्रह्मादीनामीश्वरत्वानुपपत्तेः, निरवच्छिन्नकर्तृत्वैरैश्वरीयाया नैयायिकसिद्धान्तसिद्धत्वात् । तथा च नियतावच्छेदकानुसरणे साकारवादादस्मन्मतप्रवेशात्तदननुसरणे कृतेर्द्वैविध्यासम्भवादेकस्यां कृतौ सर्गसंहाराद्यनुकूलत्वविरोधात्तौ दोषाविति दोषापवादेऽशरीरत्वादिनां शरीरस्वीकारान्तमिति चोराकृतिरेवाभिमन्यूरचित्रमिदम् । अथ मुख्यन्यायाखिलमुक्तेऽपि जगद्व्यापारवर्जत्वाद-

शरीरतां मनुते, सेयं परेषां रीतिर्न नैयायिकानाम् । निर्दुःखत्वादिर्नैव नित्यमुक्तोपपत्तेः, आकाशादेरपि येन रूपेण स्फूर्तिः शब्दावकाशादिना तद्वज्ज्ञानतादात्म्यज्ञानवत्त्वाभ्यां यावदाश्रयभाविभ्यां ब्रह्मपत्ततः स एव व्यप्रकत्वादाकारः । निराकारत्वादिनस्तु विषयतामपि न मन्यन्ते । न चोऽसं ब्रह्मणः । तेषां सप्रकारकत्वे गतिश्चिन्तनीया । ये तु विषयतां मन्यन्ते सविशेषवादित्वेनान्यः, तेषां भगवज्ज्ञानविषयतावैचित्र्यं प्रथमप्रश्नेषु प्रपञ्चावयवेषु स्वानन्दमाविर्भाव्य प्रतिष्ठितं नित्यप्रश्नेषु वा । पौनःपुन्यं च प्रपञ्चस्य प्रपत्तिसापेक्षविषयताद्वारा सकलप्रपञ्चमेव स्वाकारीकृत्योद्धर्तुं तदेतन्मयूरचित्रं व्याख्यातम् । महद्दैश्वर्यमिति [११८] । रजआगुणाभिरताया अपि खलु ईश्वरसत्ताव्याप्यत्वमिति दर्शयन्ति मैवं पश्येति । विषयताविशेषाणां तेषामव्यक्तव्यानङ्गीकारेऽपि भावात्मकानामन्तरङ्गाणां न भेद इत्याहुः नत्वहं तेषु [११८] । नेदेन । मर्यादि [११८] । अनाविर्भावदशायाम् । परेभ्यः परमिति [११८] च । अनाविर्भावे । ब्रह्मणो मायाया दुरत्ययत्वमिच्छायां वादिसम्मतकारणप्रतीतमङ्गुणगमवादेनाहुः अविद्योदीति । महद्दैश्वर्यमिति । व्याख्यातमेतत् । किमपरं वादिप्रदत्तमगुणवनमविद्यादिकमङ्गीकरोति, सायुज्येऽप्यभावेऽप्यभावेन सदपि नासदिति हि तेषां दर्शनम्, तत्र 'मत्त एवे'त्यसाधारणः सर्वसङ्ग्रहो नोपपद्यतेऽमामिति । असद्दर्शने च निषेधो नोपपद्यते, तदुभयसमाधानं भगवता कर्तव्यम्, तथैव प्रभुवाक्यतात्पर्यात् । तथा च येनाप्यत्र आश्रीयते सोऽप्यविद्याप्रवर्तकत्वात् मत्त एवेति स्वासाधारणधर्मोऽनुग्रहविषयताश्रयः सर्ववादिनामेवावलम्बनम् । उत्कृष्टश्चायम्, अवश्याभ्युपेयत्वात्, तदाहुः मां पार्थ दैवीं प्रकृतिमिति । स्वात्मकाविर्भाववादेन सर्वसमाधानं भगवत्सिद्धान्त इत्याहुः भैर्गवतोक्तमिति । मैवं इति पञ्चम्या मुख्यावधित्वं दर्शितम् । भावपदोक्त्या [११९] । सार्वविभक्तिकस्तसिः । अपोहनं विस्मृतिरप्रतिभा वा । स्वात्मकमतिरोभावात्तस्य भानप्रयोजकसम्बन्धत्वाकल्पनादिति भावः । कार्यकल्प्या हि विषयतेति हृदयम् । स्मृतित्वमपि स्मरामीति प्रतीतिसिद्धो विषयताविशेषः । तदवच्छिन्नस्मृतावनुभवानन्तरीणव्यवहिताव्यवहितानियतसमयोद्बोधकान्तरादिशालिनी मूलविषयतैव संस्कारस्थानाभिषिक्तेत्युक्तं भवति । अपिना भगवद्वाक्यान्तराण्यनुसन्धेयानि । राजनीत्याश्रितो भगवानिह मामवस्थे प्रार्थितः प्रकटीभूय दैवीमित्यादिना देवानां समूहोऽप्यत्र विचारे गम्यत इति दर्शयति । तेन सर्वत्र कारणतावच्छेदकानां भगवद्विषयताविशेषावेश उक्तो भवति । युक्त्या युक्तिः प्रतिवध्या, सत्प्रतिपक्षन्यायात् । 'ब्रह्मास्य तु ब्रह्मास्त्र'मिति श्रुतेर्नान्यः प्रतिपक्षः । ननु बलाबलविवेको युक्त्योः श्रुत्योश्च युक्त एवेति चेत्, सत्यम्, तथापि श्रुतेर्बलं श्रुतिः । श्रौतोऽर्थश्च स्वत एवं इत्यादरत्वेनोपपत्तेः एवेति युक्तिरेवन्दन्तर्यतैवेति तत्र तत्र वक्ष्यामः । एवं च श्रुतिः कर्मणां कारणत्वं वदन्ती श्रुत्यन्तरेण नैयायिकाभिमतानिष्टकारणतावच्छेदकत्वेनान्यथासिद्धिं वदता न विरुध्यत इत्याहुः येमंवोचामेति । वाक्यान्तरैरननुभूय इत्यर्थः । श्रौतस्य भावस्य तदेकगम्यत्वादिति भावः । श्रुतेर्हि विरोधे निर्णायकमेकवाक्यत्वम्, कर्मणां चानुभवविशिष्टानां कारणत्वम्, अननुभूयमानस्य कारणत्वे मानाभावात् । यद्यपि कर्ममात्रस्य नानुभवः कारणतावच्छेदकः, किन्तु फलातिशयः कारणतावच्छेदकः । 'ज्ञात्वाऽज्ञात्वे'ति भगवदुक्तेः । तथापि मयेदं कृतं फलं जनयिष्यतीत्यभिसन्धिविशिष्टस्य जनकत्वे तादृशानुसन्धानस्यावच्छेदकत्वे लाघवात्तत्तद्विशिष्टानुसन्धानस्यानुभवत्वात्तस्य चाखण्डत्वेनयाद्विनिगमकाभावात्कर्मणां च सखण्डत्वात्कर्मोपलक्षितानुभवतादात्म्यत्वेन कारणतावच्छेदकत्वम् । एतेन कर्मणां कारणतावच्छेदकत्वे तद्विपरीतं गौरवमित्यपास्तम् । कर्मण्यपि तिष्ठन् कर्मान्तर इति । एवंरीत्यैकवाक्यता स्वाचार्यैः कृतेत्यत्रायनेनोक्तमवोचामेति । ओंहेति श्रुतिसम्वादोऽपि दर्शितः । अंत पश्येति । अत एवान्तरो नियामकः, अत एव जीवनिष्ठमिश्रत्वमपि भगवत एवेत्याहुः सङ्कुचेत इति । इयं श्रुतिः पूर्वश्रुत्या गमयतीत्यसङ्गता भवतीति भावः । अत्र विषमदर्शित्वं नित्यसम्बन्धात्मकतिरोभावसत्त्वेन तत्तज्जीवानां प्रपत्त्यभावप्रयुक्तमिति स्वरूपतः सर्वत्र पर्याप्तत्वादिति श्रुत्योऽप्यत्र विचारे कर्णाकर्णिकयन्तीति श्रुत्वा व्यासस्यापि प्रविशन्तीत्याहुः अंत पश्येति । सिद्धान्तं भाष्योक्तम् । ननु जीवे न दोषाय, ब्रह्मणि तु दोषायैव, विषमदृष्ट्यापादकत्वादिति चेत्, न; 'नैव तस्य कृतेनार्थो नाकृतेने'ति भगवता निरालिङ्गपुरुषे स्वधर्माणामुपक्षेपात् । यथा मम न कृताकृते, कृतं सार्वत्र्यादि तत्प्रयुक्तं च विहितादि, तत्तिरोभावाऽकृत-

मत्सार्वत्र्यादि तत्प्रयुक्तं च किञ्चिद्यदि जीवे मयाऽपाद्यते, तर्हि मदंशे मय्येवेदमापादितमिति नायमपराधोऽस्य। किञ्च यदि नैवं कुर्यां, कर्मोच्छेदापत्तिः। अतोऽधिकारविशेषार्थं मयेयं प्रादुर्भावाख्यसर्गप्रक्रिया कर्मनिबन्धना रचिता। सापि किमर्थमिति चेद्वेद उपालभ्यताम्, वेदश्चेन्मदुपालम्भं कुर्यात्, किमर्थं स्वरूपाद्दूरमिव यागादिभिरायासित इति तदा मयि सुप्ते किमर्थमयं श्रुतिवीणामुपढौकयति स्म, प्रबुद्धः किलाहं किं करवाणि, तदर्थमधिकारानि-क्षेपेषु वेदानां नियोगं कृतवान्, सर्वात्मभावं च प्रदर्शितवान्। एवं च मदीयस्यापेक्षया मोक्षलीला निर्विशेष-रूपस्वभावा। सा राजसादीनां—त्वमिदमिति चेद्, गुणनिरोधादिति गृहाण। सात्त्विकानां भेदाभेदप्रधाना साम्या-वस्था हि सत्त्वाभिधैव प्रकृतिरिति तदनिवृत्तौ भेदाभेदव्यवस्थितेः मदधिष्ठितानां शुद्धतादात्म्यलक्षणसत्त्वपर्याय-नैर्गुण्यप्रधानेति भगवतो राद्धान्तः समर्थितः। 'परात्तु तच्छ्रुते'रित्यधिकरणेन यथाश्रुतकर्मवादानुरोधी कश्चित् तत्त्ववित्तमः प्रत्यवतिष्ठते, तद्वाचं स्वयमुदीरयन्ति ये[१८०] त्विति। ईश्वरस्य साक्षात्प्रवर्तकत्वे विधिनिषेधयो र्व्यर्था-पत्तिमाह अन्यथेति। ननु शब्दस्यैव स्वातन्त्र्येण प्रवर्तकत्वमीश्वरसचिवस्येति कर्मवादावैयर्थ्यमित्याशङ्क्याह कस्यचिदित्यादि। तदिह कर्मैवेति। तथा च शब्दस्यापि कर्मैव सचिवः, शब्दमात्रादलसादेः प्रवृत्त्यभाव-दर्शनात्, प्राक्तनादृष्टस्यैव तत्र तन्त्रत्वात्। तत एव तस्यानादिसत्तां प्रतिपादयति प्रवाहस्येति। तत्तत्प्राग-भावातिरिक्तप्रागभावाप्रतियोगिकर्मधाराया इत्यर्थः। न चाप्रसिद्धिः, परस्परं प्रागभावानां भेदप्रसिद्धेः, परस्परं च प्रतियोगित्वप्रसिद्धेः। प्रागभावानङ्गीकारे तु तत एवानादित्वम्। तथाप्यनादित्वनिर्वचनं कीदृशमिति चेत्, आकाशादीनां नित्यत्वमेव, तदन्येषां तु तत्तद्वर्तमानसमयसम्बन्धित्वमेवेत्यवेहि। समादधते तेषामिति[१८०]। कर्मसापेक्षत्वे कर्मण एव कृतिमत्त्वमित्यस्तु, अतिरिक्तशाब्दभावनान्यायात्, 'कामः सङ्कल्प' इत्यादिना मनस इव। एतेन सिसृक्षादयो मायावृत्तय इति मायिकमतमपास्तम्। कृत्याश्रयत्वेन मायाया एव सिद्धौ नवलक्षणलब्धि-तत्कर्तृत्वाश्रयस्यातिरिक्तस्यासिद्धौ तल्लक्षणप्रयासवैयर्थ्यात्। अध्यासपक्षेऽपि मायाया एव विनिगमकाभावेन परमेश्वरत्वापत्तेः, सेश्वरवेदान्तसिद्धान्तभङ्गप्रसङ्गात्। चैतन्यस्यैव प्राधान्यं वदन्ती श्रुतिस्तु चेतनासाधारणधर्मं स्वरूपविषयतात्मकमेव कारणतावच्छेदकीकुर्यात्। तस्माच्चेतने ज्ञानं चैतन्यं विषयता ज्ञप्तिस्वरूपसम्बन्ध एवेति न तया द्वैतापत्तिरिति। एवमवान्तरप्रसङ्गे तेषामिति सर्वनाम्ना परेऽपि महाप्रकरणानिर्दिष्टाजडजडयोरेक-ज्ञप्तितादात्म्यमप्रतिपन्ना अजडांशेन द्वैतपरिहाराय तमेव मृषा भाषन्तः परिधानीयत्यागेनापि च निजवपुः संर-क्षन्तो विमृश्याः। तथैवेतरेऽपि वादिनः, जाड्यापरिहारात्। एवं च ज्ञप्तिर्विषयता चेत्यभेदक्षमं पुटद्वयम्, तत्र च प्रेयस्तादात्म्यं मणिनिवेशितः स्वार्थः। ज्ञप्तिस्तदाधारो विषयता च, विषयाश्चान्ये इति त्रिचतुःपुटी-पक्षो नोपादेय इति हृदयम्। ननु 'धाता यथापूर्व'मिति सर्गकर्तृत्वश्रुतेस्तस्य च प्रलयपूर्वकत्वात्तदुभयकर्तृत्वे तस्य प्राप्यदृष्टसहकारकत्वेनैव कर्मणां सिद्धत्वादुपजीव्यविरोधात्कर्मणान्यथासिद्धेरसम्भवादीश्वरसिद्धिरिति वदन्तं तदक्षं तं प्रत्येव निक्षिपन्तः प्राहुः आपद्येते इति। तेन प्रवाहानादित्वं तदुक्तं तस्य स्मारितम्। यदहोरात्रं तदहोरात्राव्यवहितपूर्वकमिति तैः स्वीकारात्सर्गप्रलयावार्थवादिकौ, न वास्तवौ, अवान्तरसृष्टेश्च कुविन्दादेरपि सम्भवादितीश्वरसाधनानुपपत्तिरेवेत्यर्थः। प्रबलग्रन्थिबन्धेन भवदीयकर्मणैवेश्वरो निगृहीत इवेति भावः। स्यादे-तत्, मीमांसकस्य नेदं दूषणम्, तस्य निरीश्वरत्वात्। मम तु मीमांसाप्रतिपन्नकर्मफलसमर्पकत्वात् सेवितराजव-दीश्वरसिद्धिरिति सेश्वरमीमांसकमते प्रविशन्तं महाराजं प्रत्यनीकं कुर्वन्ति न[१८१] चेति। अन्यथेति। सदका-रित्वान्यथानुपपत्त्यैवेत्यर्थः। तथा च कर्मणैव सचिवतरेण परसम्मत इवेश्वरो निगृहीत इति नापबलमनुसन्धेय-मिति भावः। न च जडस्य कर्मणो न तथाभावः, जडस्याप्यौषधविशेषादेः, पार्श्वमणेश्च स्वर्णजनकत्वदर्शनात्। महान्तस्त्वाभिमानिकी देवता मन्यन्ते। प्रभवत्वाभिमानिकव्यपदेशं भगवत एवेति विवेचयन्ति। अथ व्यासः स्वसूत्रव्याख्यावैचित्र्यमनुभाष्यस्य विद्वन्मण्डनोक्तिप्राधान्येनैकवाक्यत्वं च श्रोतुं राजानिभं पुनः प्रत्यवस्थापयन्ति नैतु कृतमयवेति। ईश्वरवादकर्मवादयोरुभयोः साधकं सूत्रमिदम्। तदुक्तं तत्त्वेति। तयोर्वाक्ययोर्भाव एकवाक्यत्वम्, तस्य सूत्रं सर्वतोमुखम्। तथा च मध्यमणिस्थानीयं कृत्वा ब्रह्मसूत्रमिति व्याख्येयम्। क्वचि-त्तथैव पाठः। तथोच्येते इति। कर्मण एव तथात्वकल्पने यथाश्रुतसूत्रवैयर्थ्यम्। 'परात्वि'ति सूत्रवैयर्थ्यं

तद्विषयवाक्यवैयर्थ्यं न तत्रावश्यं पूर्वपक्षिणा सन्दिह्यते, उचितानुचितकारणं श्रुतिर्वदन्ती कृतहानादिदोषं च पश्यन्तीश्वरस्योदासीनकर्तृत्वं ब्रूयात्, तर्हि निनीषायामेव दोषानपहारः, तदपहाराय केनचिद्भिक्षुके ग्रामं प्रत्यानयने यथोदासीनस्याभिमायामजाव्यवस्थायां न गुणदोषौ, तथा कर्मणा नियुक्तस्येश्वरस्य तेनैव सह परस्परोपकारित्वमर्थं एवास्तु, न त्वीश्वरस्य प्राधान्येन कर्तृत्वं, येन दोषाशङ्कनमिति प्राप्ते सूत्रकारः श्रुतिं प्रमाणीकुर्वन्नाह [१८१] **श्रुतेरिति** । कर्म श्रुत्या प्रदर्शितं, श्रुतिर्ब्रह्मणेति ब्रह्मण एवोभयथापि प्राधान्यमित्यर्थः । तथापि 'कृतप्रयत्ने'त्यादिसूत्रं श्रुतिवैयर्थ्यपरिहाराय, तत्कथम्, ब्रह्मस्थाने फलदातृत्वेन कर्मण एव स्वीकारे श्रुतेरपौरुषेयत्वमेवास्त्विति पूर्वपक्षिणोऽभिमान इति, तस्मादत्र सिद्धान्तकरणे पुरुषकर्तृकत्वं श्रुतेः शङ्क्यते, पूर्वपक्षदोषापहारेणानेन सूत्रेण, तत्सूत्रनीश्वरास्वीकारे व्यर्थमसंस्कारकत्वादिति तथेत्यस्य भावार्थः । वेदवेदान्तवक्तॄणामेव मुखतो वेदश्रवणात्तेषामेव संस्कारकं तत्सूत्रम्, तेन तत्तद्विहितादिनियुक्ताधिकारिणां प्रवृत्तिनिवृत्तिभ्यां स्वरूपप्राप्तिफलकत्वबोधनस्यैव संस्कारपदार्थत्वादिति मनसि निधाय तथाहीत्यादिना लोकोत्तरं विलक्षणविचारं संचारयन्ति । **परात्तु तच्छ्रुतेरिति** । अत्र विचारे राजमन्दिर इवानेके संचारास्तत्र तत्र व्यक्तीभविष्यन्तीति गिरिराजेनोपस्थापितो नृत्यन्मयूरोऽत्र वक्ता भविष्यति कनीयांसं प्रति । परादिन्द्रभिन्नाद्भगवतस्तच्छ्रुतेः । 'किमिन्द्रेणे'ति भगवद्वाक्यादित्यर्थः । इति केकायां मेघैर्मेदुरं मन्द्रं मृदङ्गायते—आस्तां भगवानिन्द्रतो भिन्नः, इन्द्रस्य वपुर्वयमेवेति न वयं रूपादितो भगवतो भिन्नाः । कीदृशोऽयमभेद इति तावदादौ विवेक्तव्यम् । नच वयं नियोज्यान्तरवद्विधिनिषेधगोचराः गाव इव भवतां तथेति गोकुलनाथान्प्रस्तवान्तरोपालम्भः । कदाचिद्वयं कुर्मः, कदाचिन्नेति, तथा च यदीच्छथ, तर्हि स्वाभिमानिनमिन्द्रं प्रति पुनः प्रार्थयाम इत्यापतिते व्यसने विधिनिषेधौ नियोगपाशौ मेघानामपि स्वाधीनीकरणायेति कनीयांसं तौ दर्शयन्ति [१८२] **सर्वस्यैवेति** । विधिज्ञानाभिनिवेशज्ञानाय प्रवृत्तिनिवृत्ती नियमतः स्याताम् । तथा च पुण्यातिशयात् क्रमशः सर्वोऽपि मुच्येत, एवमपि सर्वो विलम्बाविलम्बाभ्यां मुच्यत एव क्रमेण । 'सर्वं एकीभवन्ती'त्यादिश्रुतेरिति चेत्, न; तथापि क्रमनियामकाभावात् । तस्माद्विधिनिषेधयोस्तु प्रवर्तनानिवर्तने एव नियामिके इति सिद्धमुनिष्ठं यदि, तर्हीश्वरवैयर्थ्यमेकतो विचारास्पदम् । प्रस्तुतस्त्वयं विचारः–सन्मार्गविरोधित्वमन्तर्यामिणः, पूर्वकर्मणो वेति । आद्ये वैषम्यं अपसिद्धान्तश्च । द्वितीये कः कर्मशब्दार्थः पूर्ववासनैव चेत्तत्राहुः [१८३] **विधिनिषेधवैयर्थ्यापातादिति** । एतेन कर्मणः श्रुतिप्रतिपाद्यत्वेन विधिनिषेधमूलत्वात्कथं वैयर्थ्यमुक्तमित्याशङ्का निरस्ता । अनादिकर्मधारायाः प्रवर्तकत्वपक्षेऽपि तथैव श्रुतिः कल्प्यताम्, कर्मपरम्परया प्रवृत्तिरिति, न तु 'यजेत' 'नानृत'मित्यादि । किञ्च वासनायामपि न नियमः । कर्मण्यपि फलानुरोधस्तत्रापि तुल्य इति क्वचिदवश्याभ्युपेयवासनयैवोपपत्तौ वैदिके कर्मणि मानाभावात् । इदानीं च विधिनिषेधवैयर्थ्यम्, आथर्वणेनैवोपपत्तेरित्याशङ्कार्थः । तदुक्तं धूर्तवकैर्यच्छ्रिता गिरिगुहादिकं **गुरुंश्चोपासत** इति । एतेन पश्वादिभिरविशेषो जीवानां विधिनिषेधविषयत्वाविशेषादिति जीववृन्दे तथैवानधिकारदोषदण्डप्राप्तौ भगवदीयगवामिव नियोगपाशावेताविति जीवानां बहिर्मुखत्वनिवारणं तान्याभिति सिद्धान्तः फलिष्यति । एवं सर्वसूरिभिर्मुनिभिः कृतं 'कृते'त्यादिसूत्रपूर्वपक्षं विस्तारयितुं पवित्रसूत्रनिर्मितां तिरस्कारिणीं मध्ये महाभोगं प्रापयति **अन्धपरम्परेति** । अन्यथा संशयमूलो विचार एव न प्रवर्तेत । अविदेहेनुन्दाद्यात्मनामीश्वरवादानुगुणं मतं वदन्ति । अधुना श्रीमदाचार्यसिद्धान्तं सिद्धान्तेन संगोप्य वदतां श्रीगोकुलनाथानामुक्तिमुपदर्शयन्ति **यागादिकरणस्येति समाधानायेति** पर्यन्तम् । विध्यादिना फललाभस्य तन्निषेधस्य च 'कष्टं कर्मेति' न्यायेन प्रतारणामात्रत्वाद्यागादिकमफलमित्यर्थः । गूढार्थस्तु सर्वे सन्मार्गवर्तिनो भवन्त्वितीच्छया विधिनिषेधौ कृतौ, नहि पूर्वपूर्वकर्मानुसरणे तादृशेच्छा निर्वहति, कदाचित्पापदर्शनात्, तदर्थं तत्र शास्त्रं तत्त्वदीपवज्ज्ञापकं न कारकम् । तत्र च 'कर्मात्मा हरिरीश्वर' इत्युक्तः । स च न विधिनिषेधयोः प्राक्तनयोः कर्मवदधीनः, स्वयमेव तस्य प्रदर्शनात् । कर्मनिष्ठं च फलजननतासामर्थ्यमीश्वरस्य, कर्मविशिष्टानुभवस्यासम्भवस्य कारणतायां ईक्षतिकारणतयैव सिद्धत्वात् । तथा च तत्सामर्थ्यमज्ञात्वा विधिनिषेधप्रयोज्यः पशुः, ईश्वरज्ञानरूपबहिर्मुखत्वस्यानिवृत्तेरित्युक्तम्, **अन्धपरम्परेति** । अत एवोक्तं 'स्वतन्त्रः

सततं विष्णुर्विस्मर्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः' इति । एतयोः स्मरणास्मरणयोः । धर्मत्वहानिश्चेति । 'वेदप्रणिहितो धर्म' इत्युक्तेर्वेदस्य प्राप्तमपि प्रामाण्यं कदाचिदपलापादनुष्ठापकत्वलक्षणे-नाप्रामाण्येनाभिभूतमिति प्रमाणाप्रतिपन्नत्वात्तदानीं धर्मत्वहानिरित्यर्थः । वास्तवार्थस्तु ब्रह्मत्वाद्धर्मस्य केवलधर्म-त्वहानिरिति । ब्रह्मत्वं तु सकलसामर्थ्यस्य तदेकनिष्ठत्वात्, कर्म ब्रह्मतादात्म्यापन्नम्, तदसाधारणफलजनकता-वच्छेदकशक्तिसंक्रान्तत्वात्, तत्त्वज्ञानवदित्यादिरीत्या मन्तव्यम् । परैरपि स्वरूपावच्छिन्नचैतन्यस्यैव तत्त्वज्ञानत्वा-ङ्गीकारात् । उपास्तिरप्येतेन व्याख्यातेति । व्यपदेशभेदस्तु सिद्धत्वसंक्रमाभ्याम्, संक्रमश्चाभिव्यक्तिविशेष इति । फलोद्देशेति । नित्यन्यायेन सर्वस्य फलोद्देशाभावे भगवदर्थत्वात्तस्य चेदानीमपि सुप्रसन्नत्वादभिव्यक्त्य-भावनतिप्रसक्तायाः फलोपपत्तेरपूर्वकल्पने मानाभाव इति निगूढार्थः । अग्निमेति[162] । कर्मपदेनादृष्टमेव वक्त-व्यम् । फलस्य भ्रमप्रतिपन्नत्वे तन्निर्वाहकादृष्टकल्पनायां प्रमाणाभावादग्निमकर्मप्रवर्तकमदृष्टमेव नास्तीति कर्मप्र-वाहे नियामकालाभ इति यावदुक्तं प्रावाहिकं प्रति सेश्वरवादेन ये समादधते, तत्समाधानमाहुः समाधाना-येति । निषेधकोटिपरिग्रहः पूर्वपक्षः, विधिकोटिसमर्थनं समाधानम्, प्रवाहप्रवर्तकं विधिः कर्म, अन्यतरं न वेति विप्रतिपत्तिः । विधिप्रसिद्धिर्यागादिकरणे । निषेधप्रसिद्धिर्भोजनादिनिखिललौकिकव्यापारे । विधेस्तत्राभा-वात् । अदृष्टस्य कार्यमात्रहेतुत्वेऽपि साक्षात्प्रवर्तकत्वं साध्यम्, अदृष्टस्य च दृष्टद्वारकत्वनियमात् । तत्र विधि-कोटिं समर्थयन्ते विधेर्यागादेरेवेति । यागादावित्यर्थः । विधेस्तथात्वसिद्धौ कर्मणोऽपि तथेत्याहुः औने-रिति । तौ[163] विधिधर्मौ । व्यतिरेकव्यभिचारं वारयन्ति अपीति । स्वस्वव्याप्यसकलकारणमध्ये ईश्वरेच्छा-यास्तत्तन्मात्रवृत्तित्ववैशिष्ट्यावच्छेदेन व्याप्यत्वात्तत्सत्त्वे तद्व्यतिरेकोऽसिद्ध इत्यर्थः । अपिनाऽजानन्तोऽपि संगृ-हीताः । तेनान्वयव्यभिचारोऽपि, तादृशानां प्रवृत्तिनिवृत्त्योर्दर्शनात्, यागादेरपि दीक्षितान्तरदृष्टान्तेनैव कर-णात्, अनुष्ठानसमये वैधप्रयोगस्येव लौकिकव्यापारतुल्यत्वादिति भावः । विचित्रेति । स्वसिद्धान्ताभि-प्रायेण । अन्यैः पुनरिच्छायास्तत्तद्विशेषितेन रूपेण कारणत्वस्वीकारात् । तथा च स्वसिद्धान्ते यथापदपदार्थ-विशेषिताभिधारूपेच्छायाः शाब्दबोधजनकत्वं सर्वसिद्धम्, अन्यथा पदाद्यप्रवेशेन शाब्दबोधेच्छामात्रं शक्तिः स्यात्, तद्वल्लक्षणाजन्यबोधसाधारणमपि भवतु, तर्हि प्रकृतेऽपीच्छामात्रादुच्चरीत्याऽह्लादादावतिप्रसङ्गः । तथा च कार्यसामान्येऽप्यवश्यं विषयतासम्बन्धेनेच्छा वाच्या । सा च विनिगमकाभावात्कार्यकारणादिसकलविषयेषु वाच्या । तथा पदार्थविषयिण्यपि । तथा पुरुषान्तरेच्छाविषयिण्यपि । स्यादेतत्, संयोगाद्यवच्छिन्नोत्पत्ति-सम्बन्धेन घटत्वाद्यवच्छिन्नं प्रति शुद्धविषयतयेच्छात्वेन कारणत्वमित्यत्र न कारणान्तराणामवच्छेदकतया प्रवेश इति तेषां स्वतन्त्रकारणत्वमेवेति चेत्, नैवम्; विषयतयेच्छायास्तन्त्वादावपि सत्त्वेन तत्रापि घटोत्प-त्त्यापत्तेः, विषयतायाः केवलान्वयित्वेन तन्मात्रवृत्तिविषयतयेच्छायाः कारणत्वस्य वक्तुमशक्यत्वात् । न च कारणान्तराभावान्न तथेति वाच्यम् । तर्हि सामग्रीव्याप्तौ विषयतयेच्छारूपकारणाधिकरणे कारणान्तरा-धिकरणत्वं सम्भवत्सम्बन्धभेदैर्निवेशनीयम् । वस्तुतस्त्वीश्वरेच्छाया अन्वयव्यतिरेकसिद्धं न कारणत्वं, किन्तु शब्दादित इति सामग्रीव्याप्तावीश्वरेच्छा न निवेश्यते, नाप्यन्वयसहचारशरीरे । तथा च केवलेच्छायाः कारणत्वे तन्त्वादौ कथं व्यभिचारो वारणीयः । यत्तु इच्छायाः कारणत्वे कारणान्तराणां सहकारित्वम्, अत एवोक्तम् 'अधिष्ठानं तथे'त्यादीति । तदिदं कारणानामवच्छेदकत्वेऽपि युज्यते । अन्यथ समानान्वयव्यतिरेकयोरेव परस्परं सहकारिता, तस्या व्यतिरेकघटितत्वात् । न चेच्छायास्तथात्वमित्युक्तं पुरस्तात् । न चेश्वरेच्छाऽभावस्य वक्तुमशक्यत्वात्तत्प्रयुक्तकार्याभावकत्वरूपं सहकारित्वं नेश्वरेच्छाया उररीकुर्मः, स्वीकुर्मस्तु कारणान्तरा-णामेव तथात्वमिति वाच्यम् । तथापीश्वरेच्छायाः कार्यत्वावच्छिन्नं प्रति हेतुत्वे तदवच्छिन्नं प्रति विशेषकारणा-नामकारणत्वादिच्छातिप्रसङ्गस्य तन्त्वादौ दुर्वारत्वात्कार्यत्वावच्छिन्नयत्किञ्चिदुत्पत्तौ व्यक्तिस्थानीयतयोपपत्तेः । न च नैव दोषः, विशेषाणां विशेषाधीनत्वादिति वाच्यम् । तर्हि कार्यत्वावच्छिन्नकार्यसामान्यापत्तेः । तद्व्याप्यध-र्मावच्छिन्नं प्रति कारणान्तराणां सहकारित्वमेवेति तु न वाच्यम् । सामान्यापत्तेरनुद्धारात् । यावद्विशेषविनिर्मुक्तं सामान्यं नास्तीति चेत्, स्वयमेव तावत्कार्यत्वमवच्छेदकं यदन्विभावय । यदि च कार्यत्वस्यानुगमाद्विधिध्वे-येच्छायाः कारणत्वे सहकारिणां प्राप्तत्वान्नोक्तातिप्रसङ्ग इति विभाव्यते, तथापि तत्तन्मात्रवृत्तिविषयतया तत्त-

दवच्छिन्नं प्रति तदिच्छायाः कारणत्वे तत्तद्वस्तुदेशतत्तत्कालीनाया उपयोगोऽस्तु। यत्र तन्त्वादौ तेन सम्बन्धेनेच्छा तत्तत्कालीना, तत्र पटोत्पत्तिरित्येव प्रमाणप्रतिपत्तेः। तथा च सिद्धं नः समीहितम्। अथोक्तं प्रस्तुतविचारायदि तत्तत्कारणानामुपादानं तत्संगोचरीकुर्याः, कुर्यां तर्हि तदिच्छयामेव भवदभिमतकारणानां प्रवेशम्। तत्तत्तदिच्छाया उपादानप्रयोजकत्वादीश्वराज्ञानेऽपि न दोषः। तत एव तत्तदुपादानोपपत्तेः तादृशविषयताया एवेच्छासंसर्गत्वादाकस्मिकत्वापत्तिरपि प्रत्युक्ता। न च वाच्यम् इच्छायाः पञ्चम्यर्थहेतुत्वविषयकत्वानुपपत्तिः, अवच्छेदकासत्त्वाः संसर्गतया, नियामकतयैव तेषामन्यथासिद्धेरिति दण्डादिपदार्थस्य सन्मात्रत्वेन 'सन्मूला' इत्याद्युक्तावभिन्नमात्रस्य पञ्चम्यर्थत्वात्, यतो विषयतया तत्र तत्र प्रविष्टत्वात्। ततश्च कारणत्वं ज्ञानत्वेनेच्छात्वकृतित्वाभ्यां च। तत्तत्सिद्धासिद्धगोचरविषयताप्रभेदानां ज्ञानत्वेच्छात्वादीनामेकत्रैव धर्मिणि स्वीकारादित्येककारणपरिशेषापत्तिर्भ्रमादिनामलङ्कार एव। व्यञ्जकतासम्बन्धेन हेतुत्वावधित्वादेर्दण्डादिनिष्ठत्वात्प्रयोजकत्वादेरन्यथासिद्धसाधारणस्वरूपसम्बन्धरूपस्य पञ्चम्यर्थत्वाच्च दोषः। एतेन दण्डादिकमिव रासभमप्यवधीकुर्यादिति न्यायाचार्योक्तमपि समाहितम्। एवं पाकसाध्यभोजनसाध्यतृप्त्यर्थिनः पाके प्रवृत्तिदर्शनात् प्रयोजकसाधारणेष्टसाधनताज्ञानस्य प्रवर्तकत्वं बोध्यम्। एतेनेच्छाया लोकन्यायेन कारणत्वं क्षममेव, नत्वीश्वरेच्छात्वेनेति सामग्र्यामेव कारणान्तरेण सहेच्छाया अपि निवेशः संभाव्यते, तथापि नित्येच्छाव्यतिरेकासम्भवाच्च तस्या निवेशः। विधिनिषेधेच्छायाः कारणत्वे तु विशिष्टविषयतया तदभावस्य सुवचत्वाद्भवति व्यवस्थितिरिति। एकत्र द्वयन्यायेन चेच्छायां विशेषणानां प्रवेशः। सत्तादात्म्यं चावच्छेदकतावच्छेदकानामप्यनुगमकम्। कारणतावच्छेदकं च तत्र तत्र सत्तादात्म्यधर्मेणैवावच्छेदकताया व्यासज्यवृत्तित्वानङ्गीकारेऽपि न क्षतिरिति। अधिकमस्मत्कृतपत्रावलम्बनव्याख्यानादनुसन्धेयम्।

**श्रीभक्तिहेतुव्याख्यायां संक्षिप्तं विशदीकृतम्। मार्गाङ्गीकारकर्तॄणां मयेदं तद्विभाव्यताम्।**

एवं स्थिते तान् प्रति पूर्वपक्षिमुखेनाहुः **कृतं तैर्भ्यामिति**। व्यापारतया तत्सिद्धिस्तु विचारयिष्यते। ननु विधिनिषेधेच्छया तावपि क्रोडीकरणीयौ विधिधर्माविति चेत्, न; कार्यकल्पकत्वात्तस्याः, कार्याणां च लौकिकसामग्र्यैव एवोपपत्तेः। महत्त्वं समाप्तिं प्रति, तदिच्छाया विघ्नादिविषयकत्वे प्रमाणाभावादित्यर्थः। नन्वेवमप्यनवस्थापरम्परा स्यात्तत्राहुः **पर्वं चेति**। परम्परायामेकस्य चक्षुर्भङ्गे प्रथमस्य वा चक्षुर्भङ्गे सर्वेषामन्धनिराकरणम्, तेनैकेनैव सर्वोद्धारसंभवादिति भावेनाहुः **ईश्वरेति**। स हि 'सर्वतोऽक्षिशिरोमुखः' इति हृदयम्। असाधारणेश्वरेच्छाप्रयुक्तविधिज्ञाने व्यतिरेकव्यभिचारं दर्शयन्ति **दृश्यत इति**। **बालस्येति**। क्रीडया भगवत्सेवां कुर्वन् इत्यनुशयः। यद्यपि दीक्षितं दृष्ट्वा बालकस्य क्रीडया यागादौ प्रवृत्तिरनधिकारित्वे व्यर्था, तथापि धर्मप्रवृत्तिसामान्ये विधिज्ञानत्वेन कारणत्वे व्यभिचारस्तदवस्थ एव, तस्मात्तत्रेश्वरेच्छायाः कारणत्वमङ्गीकृत्य तत्स्मरणे तद्व्यतिरेकासम्भवात्व्यतिरेकव्यभिचारः परिहरणीयः, एवमन्वयव्यभिचारोऽपि। उक्तविशिष्टसंसर्गेण व्याप्यव्यापकत्वान्निर्विशिष्टेश्वरेच्छास्मरणे कार्यसत्त्वस्यावश्यकत्वात्, तथापि नेयं वादवसन्तक्रीडा सुदुस्तरा समुत्तर्तुं तत्रैवाहुः **पर्वमेपि सति न निस्तार इति**। श्रुतौ तावदिच्छाया कारणत्वमुक्तं, न तु देशकालादिविशेषेण, बहुभवनं तु सार्वज्ञ्यविषयतया बहुसम्बन्ध एवेति तार्किकसतनयैः प्रत्युपस्थिते देवान्तरमवतारयन्ति। सार्वज्ञ्यविषयतया परम्परया सर्वत्र स्वसम्बन्धमपेक्ष्य स्वात्मकचिद्विषयतया साक्षात्सम्बन्धे चिद्विषयतायाः प्रकारताद्यन्यतमत्वात्कारणादिविषयतायाश्चावच्छेदकत्वे निवेशावश्यकत्वाच्छब्दशक्तिसमष्टीस्त्वचेति गोमयगिरिराजं परितः कुङ्कुमरसमयनदीं प्रवर्तयन्ति भावेनापि तैर्थोहीति। **स्वैरेत इति**। अयमत्र तात्पर्यार्थः—विधिनिषेधद्वारा जीवस्य स्वतन्त्रकर्तृत्वेऽपि न विहितनिषिद्धाचरणानाचरणाभ्यां कृतहानादिदोषः। करणे सुखमन्यथा दुःखमिति स्वातोऽप्रसक्तस्याकृतस्य दुःखदुरितादेरभ्यागमः, कृतस्य सहजसुखस्य त्याग इति। तथा चात्र विधिनिषेधावेव नियामकौ जीवस्य भवेतां तर्हि नित्यसुखसहपस्वस्वरूपानुभव एव जीवस्य तथा प्राप्तौ हेतुर्वाच्यः, आपाततस्तद्विकारकत्वाच्छास्त्रस्य। विशेषतस्तु विज्ञानिनामपि नियतविशिष्टाभिव्यक्तिः, प्रयोज्यव्यापारस्य स्वाभाविकोऽधिकार इति राद्धान्तः। प्रकृते चास्य स्वरूपानभिज्ञस्य न कोऽपि दोषः। अन्तर्यामिणस्तु तत्कारणे दोषः स्यादेव। कृतौ प्रविष्टत्वाज्जीवोऽपि दोषभागिति तटस्थं शङ्क-

मानं प्रत्युत्तरयन्ति **अर्कैतप्रायमिति** । साक्षात्परम्परया सर्वाविष्टसत्स्वरूपस्यैव सर्वकारणत्वेन द्विकर्तृकत्वपक्षे मानाभाव इति भावः । प्रभूणां श्रमापनोदायोपसंहारव्याजेनावहारं कुर्वता पूर्वोक्तं 'परात्तु तच्छ्रुते'रित्यन्यतमविवादायनमधिकरणान्तरमास्कन्दितं परेणेति केनाप्यनुगृहीतेन विज्ञापिते सर्वानुग्रहार्थं स्वयमुद्यम्य विवादायनमधिकरणान्तरं रमणरेणुकाभिरसिधाराव्यूहेनोपोद्बलयन्ति **कृतप्रैयैत्नापेक्षस्त्विचलादि** । अत्रासिधाराव्यूहे निवेशिताः केचित्स्वपक्षीयाः पौत्रप्रभृतयस्त एव प्रतिवादिनं पर्यनुयुञ्जते । तद्यथा खड्गकर्तुर्न वधकर्तृत्वम्, मूल्यग्रहणं विना यथोद्देश्यकतत्करण एव हिंसकत्वात् । मूल्यग्रहणात्तु तस्यैवोद्देश्यत्वम् । तथा चेयं वक्ष्यमाणमर्यादायां कारणधारा खड्गधाराप्राया । यत्र प्रवर्तमानो यदि यत्किञ्चित् कुर्यात्तदान्तर्यामिणोऽपि न हिंसकत्वम्, अन्तर्यामिणोऽपि मर्यादायां क्रोडीकृतत्वेन सेतुरूपस्वपुत्रेणान्यथासिद्धत्वात्, विवयितयाऽन्तर्यामिणोपि कारणतावच्छेदकत्वाच्च । न चैवं मर्यादाकर्तुर्हिंसकत्वम्, मर्यादाया रिरंसाहेतुकत्वेन स्वतो हिंसकत्वाप्रयोजकत्वात् । न च रिरंसाया, अनुद्देश्यत्वात् । तदेतदुक्तम्–**अन्यत्सर्वमुपसर्जनीभूतमिति** । येषामपि प्रकारान्तरं तेषां सर्वमेधीयहिंसावत्र दोषो स्वयाधिष्ठातॄणाम् । प्रकृते च यथा व्रीहीणामवघातपूर्वकवैतुष्यद्वारा पुरोडाशसम्पादकतया यागजन्यसुखोपपादकव्यापारविषयत्वं, तथेह प्राकृतभावापन्नपदार्थानां प्रकृत्यवस्थाऽऽपादनेनारम्भकस्वभावानामप्यवयविनां पाकस्थपटानामिव च लीलोपयोगार्थमारम्भकभावयोग्यतां शुद्धैरवयवैः सम्पादयितुं केषाञ्चिद्विशसनं भारते । केषाञ्चित्कालादिद्वारेदानीन्तनानाम् । निरसनीयभावनिरासद्वारा स्वरूपप्रत्यापत्तौ हि भगवतः समारम्भ इत्युक्तं भवति । नन्वेवंविधाशुद्धप्रपञ्चप्रपञ्चनमेव किमर्थम्, नित्यलीलोपयोगिप्रपञ्च एव प्रस्तूयतां सर्वदैवारभ्यतां चेति चेत्, सत्यम्, नित्यारब्ध एव सः, नारब्धमपेक्षते, तत्प्रारब्धस्थानत्वेनायमपि प्रपञ्चः प्रस्तूयते, तथाप्ययं किमर्थं इति पुनर्न पर्यनुयोक्तव्यम्, यतो भगवतो लीलात्मकतिरोभावरूपस्वापदशायां प्रकृत्या पाञ्चालिकान्यायेनावैदिकी सृष्टिः स्वाक्रान्तप्राकृतपुरुषचेतन्यसमुदायैः सहारभ्यते । सोऽयं भारात्मकः प्रपञ्चसम्भारः, तमन्यथयितुं भगवतो लीला । तत्करणे भगवतो न वैषम्यादि । तदेवोक्तम्–**कदाचिन्माययेति** । सा हि जडसमुदायाभिमानिचेतनदेवतैव, स्वरूपानन्दाभिव्यक्तौ तिरोभावात्मिकेयं स्वरूपे प्रविशतीति विवेकः । **विचित्रैर्रसानुभवार्थमिति** । शृङ्गारप्राधान्येन नवरसानुभवार्थमित्यर्थः । तत्र शृङ्गारानुभवार्थं यमुनादिप्रतिफलितचन्द्रज्योत्स्नासेतुः सङ्गमार्थः । मर्यादासेतुस्तु वानरानीतपर्वतैः रावणस्य नवमरसानुभवाय । वेदात्मकस्तु सेतुः संसारपारगमनाय । त्रैगुण्यविषयाणामपि तेषां भगवत्तादात्म्यपुरःस्फूर्तिके तद्वाक्यार्थावधारणे साम्प्रतमेव मोक्षानुभवात् । यद्यपि नित्यो मोक्षः, संसारोऽसन्नेवेति परेषां मतं, तथापि संसारदशायामेवाविद्यानिवृत्त्यनिवृत्त्योरनपेक्ष एव वाक्यार्थानुभवः परं ब्रह्माविर्भावयति । विद्यमानाविद्योऽपि ब्रह्माश्चर्यवल्लभते, निवृत्ताविद्योऽपि न लभते इत्याश्चर्यश्रुतेराशयपर्यालोचनया स्वीयविषयतायाः स्वरूपसम्बन्धत्वकल्पनं यथा फलानुरोधेन ब्रह्मणोऽनुग्रहपदार्थसत्त्वोऽयं ब्रह्मसम्बन्ध इत्युक्तं भवति । अविद्या तु तिरोभावात्मकविषयतैव, न भावान्तरं, नाप्यभाव इति तत्र तत्र सुव्यक्तम् । **स्वैकृतेत्यादिवाक्यद्वयम्** । तत्र वेदस्य वक्ता । पर्वतैः कर्ता । आदिपदात् 'सेतुर्विधरण' इत्यादि । **पैर्वैमयसीयत इति** । तथा च पारनिनीषणया तथा तथा करणे न कोऽपि दोष इत्यर्थः । पारे कोऽस्ति यद्योऽयमुपक्रम इति चेत्, स एव यस्तमसः परस्तात् । तमसोऽपि तात्त्विकं रूपम् । इतरथा तमसि तदभावे विभुत्वाभावप्रसङ्गात् । तथाऽसत्पथे निनीषा कथम्, सर्वे सन्मार्गवर्तिनो भवन्त्वितीच्छाया एव मुख्यत्वादिति चेत्, सत्यम्, मार्कण्डेयादीनामिवानभिव्यक्तानन्दात्मकनिजरूपवत्तया मायास्वरूपपरिज्ञानार्थमिति । नन्वन्तर्यामिण एव तथा प्रवर्तकत्वमस्तु, कृतं सेतुसंरक्षणेन परीप्सयेति चेत्तत्राहुः **वैर्पनाय चेति** । अन्तर्यामिणः प्रवृत्तिमात्रनियामकत्वेनाधिकृतत्वात् । अन्यथा पशुपक्ष्यादीनामप्यन्तर्यामिसत्त्वात्सर्वस्युद्धारप्रसङ्गः । तस्मात्तत्त्वदीपस्थानीयो वेदोऽयं यमन्तर्याम्यप्युपादत्ते तेन हि संस्कृतो हि स प्रायः शुभ एव कर्मणि प्रवर्तयतीति सेतुमारुह्य देहरथारूढस्यान्तर्यामिणो जीवः सखा, इन्द्रियाण्यश्वाः, देवताः पार्ष्णिग्राहिणः, प्राणः सारथिः, मनः प्रग्रहः, गन्तव्या पुनः परमव्योमाख्यदहरकन्दरेति । ननु स्वतन्त्रस्य केयमधीनता । राजादिभिरपि कदाचित्स्वसेतुरक्ष्यत एवेति कश्चिदाशङ्कते **कुर्वंत पतदिति** । प्राकृतो हि स्वाशोल्लङ्घने स्वस्य अधन्यतां प्रकटयति, भगवांस्तु निर्दोषपूर्णगुणविग्रहः कथमेवं संभाव्यत इति समादधते **यैते** इति ।

'रामो द्विर्नाभिभाषत' इति सर्वो वेदेच्छेत्यादिषड्गुणसम्पन्नस्तैर्व्यवस्थित एव, नाव्यवस्थित इति तस्मादित्यर्थः । यत्र तु लीलायां लोकदृष्ट्या वेदादिरूपं सेतुमुल्लङ्घते, सा लीला न पुरुषार्थपर्यवसायिनी, किन्तु परमपुरुषार्थपर्यवसायिनी, सरागत्वसमानाधिकरणाखण्डविषयताकानन्दानुभवकत्वादिति हृदयम् । श्रीमदाचार्या एव वक्ष्यन्तीत्याहुः आचार्यास्त्विति । पुत्रं बालं वा । यस्य कस्यचिदित्यास्यस्वाभाव्यानुसारेण प्रतीतिविशेषः । वर्तमानं यत्किञ्चित्कार्योन्मुखम् । पथ्यार्थगुणदोषाविति । मधुरः कूष्माण्डरसः, कटु कारवेल्लकमित्यादि भगवद्भोगानुनयेऽपि प्रकरणाद्बोध्यम् । लोकवेदयोस्तु गजयुद्धादिभिः संभाव्यमानैर्दुर्गमोऽयं पुरुषोत्तमक्षेत्रमार्गः । कदलीवनावलम्बी सुगमस्तु मालतीमिलन्मकरन्दोऽन्यो मार्ग इति धूमादिमार्गोऽर्चिरादिमार्गश्चेतीति बोध्यम् । स्वाग्रहाभिनिवेशमिति । नैतावता प्रवर्तकदोषः, यथैव स बालकादिः प्रवर्तते, तात्कालिकस्वेष्टदृष्ट्या तथैवायमनुवर्तते । निवारितोऽपि प्रवर्तेत, सम्प्रयुक्तोऽपि वा यदि निवर्तेत, यथा धृतराष्ट्रपुत्रादयस्तदा दैवमेव प्रबलमिति मत्वा प्रेक्षापूर्वकारिण औदासीन्यमेवोचितम् । तथा भगवतो निवारणसमर्थस्यापि जीवानामिष्टानिष्टपरिज्ञानार्थं तात्कालिकप्रवृत्तिनिवृत्त्योरौदासीन्यमन्तर्यामितया तदनुवर्तित्वं चोचितमेवेति प्रघट्टकेनाहुः फलेऽवगनार्थमिति । तथा चेष्टमेव ज्ञापनीयं प्रापणीयं चेति नित्यानुवादवद्विधायेव तात्पर्यं, न निषेधे इति भावः । कर्मकारणे । यथा प्रवर्तमानं प्रति तथैव कारणे । तेन सर्वस्य सन्मार्गवर्तित्वमपि कृतप्रयत्नापेक्षमित्युक्तं भवति । सूत्रस्य विश्वतोमुखत्वं सूचयितुमवसाने श्रुतमादिभ्य इति सूत्रांशमनुकृष्य कृतप्रयत्नापेक्ष इति सम्बन्धमात्रार्थपञ्चम्याः तिशयेन चतुर्धा व्याचक्षते । एवमग्रेऽपि कर्मादिवैयर्थ्यादिभ्य इति व्याख्येयम् । कर्मैव एव फलार्थं नोदितस्यापेक्षा प्राथमिकी । सेतुपरीप्सयेति सर्वत्र बोध्यम् । 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी'ति मीमांसकन्यायेनाहुः प्रयत्नापेक्ष इति । अप्रवर्तनं प्रति न कोऽपि प्रवर्तयतीति लोकन्यायाच्चेत्यर्थः । कथं तर्हि पार्थस्य युद्धे प्रायोपविष्टस्य प्रथमं युद्धे प्रवर्तनमिति चेत्, सकामविषये एषा व्यवस्थेति समादधते कामेऽपेक्ष इति । एतेन निरर्थकप्रयत्नोऽपि वारितः । कामश्च प्रामाणिको, न तु भ्रान्तिप्रतिपन्नो ग्राह्यः । सत एव लौकिकस्वर्गकामस्य तन्मात्रे स्वर्गपदार्थत्वभ्रान्तिं सूचयन्त इत्याहुः लोकेऽप्रवाहापेक्ष इति । 'गतागतं कामकामा लभन्त' इति न्यायाद्, ये परिच्छिन्नसुखाकाङ्क्षिणस्ते तथैव प्रवर्तमानाः प्रवर्तन्त इति लौकिककामनावत्त्वकृतप्रयत्नत्वकर्मैतत्त्रितयान्तरितप्रामाण्यमत्र भगवत इति स्वमानप्रामाण्ये तस्य न दोषगन्धः । तत्प्रामाण्ये हि सर्वे सन्मार्गवर्तिनो भवन्त्विति मूलेच्छैव नियामिका । सा तु मानससृष्टिषु सनकादिष्वेव वरीवर्ति, प्रवाहिषु सृष्टौ तूवहिर्वेच्छैवेति तत्कृतदोषशङ्कायामाहुः 'न' चैवमनीश्वरस्यमिति । एवं न चेत्यर्थः । स्वकृतसेत्वनुरोधादित्याहुः मर्यादेति । अन्यथा स्वसामर्थ्येनैवोत्तारकस्य सेतुपर्वतानामप्यनुपयोगप्रसङ्गादित्यर्थः । स्वस्येच्छस्वरूपाभिप्रायेणाहुः तैत्र पुष्टीति । अङ्गीकारे इति । सत्यपि मर्यादांशे यथा पार्थानां ततोऽन्यत्र । ततोऽप्यङ्गीकार इत्याहुः ईश्वराहुरिति । अयमेपि पक्ष इति । अपिना स्वस्य स्वातन्त्र्यं सूचयन्ति । स्वयं तु क्रीडेच्छाप्राधान्यमेवोक्तवन्तः । यथा काम एव मुख्योऽन्यत्सर्वमुपसर्जनीभूतमिति श्रीमदाचार्यैरुक्तम्, तथाऽस्माभिः क्रीडैव मुख्यतयोक्ता, सेतुपरीप्साप्युपसर्जनमेवेति । तैस्तु मर्यादामात्रं प्रकृताधिकरणार्थत्वेन निरूपितम् । मर्यादाया अपि कारणीभूता पुष्टिर्नोक्ता । सा हि स्वाविर्भावस्वरूपेति श्रीमदाचार्या एवात्र प्रमाणमित्याहुः नैतिरिच्यत इति । मर्यादोक्त्यैव पुष्टेर्निरूपितत्वात् । तदुक्तम्, 'निष्कलङ्ककलानाथीभव'दिति । मार्यादिकभगवद्वाक्यान्यपि यासां वाक्यैः सङ्गतानि पुष्टिमुद्बोधयन्तीति तोलासमुक्तम् । पूर्वपक्षिणमुत्तरयन्ति तैस्त्वादिति । प्रस्तुत्या 'परात्तु तच्छ्रुते'रित्यधिकरणविदूषकेन मर्यादामुद्धृत्ता प्रोक्तः संचराणामिव शून्यो मार्गो नेत्यर्थः । प्रस्तुतविचारं विलेन पूरयितुमाहुः किञ्चेति । नाधर्मधर्माविति । अत्र केचित्, पूर्वं कृतौ यौ धर्माधर्मौ तदपेक्ष इत्यर्थः । अन्यथा विहितप्रतिषिद्धवैयर्थ्यं नोद्धृतं स्यात् । तथा च कर्मवादप्रधानमिदं सूत्रमित्याहुः, तन्मतनिराकरणायाहुः तैर्ह्येकाव्याविति । प्रयत्नशब्दस्य पुरुषभावनानान्विनोऽदृष्टवाचकत्वाभावाद्यथाश्रुतविरोध इत्यर्थः । अधर्मोऽनात्मधर्म इति तस्यागं सूचयितुमधर्मस्य प्राङ् निर्देशः । यथा चैतत्तथा वक्ष्यते । अत्र शङ्कते–ननु यथाश्रुतविरोधमात्रेण कथं कर्मवादपरतायां सूत्रस्य द्वेष उद्भाव्यते । मैवम्, परस्यैव कारणत्वोपपादनार्थं 'परा'दित्यधिकरणप्रवृत्तेस्तदुपपादकस्य 'कृते'त्यादिसूत्रस्य यदि कर्मवाद एवाभिमतस्तदा प्रतिवादिना बाधितोऽयं

सूत्रार्थः । तथापि कर्मापेक्षा स्वाचार्यैर्दर्शितेति चेत्, सत्यम्, तथापि विशिष्टेच्छाया अपि निवृत्तिदर्शिनां मुख्यफलत्वात्तत्रैव कर्मणां विषयितावच्छेदकत्वात्तदभिप्रायानुसारिभिरस्माभी रमणेच्छैव तत्त्वेन निरूपिता । आस्तां चैतत्, तथापि प्रयत्नपदार्थौ धर्माधर्माविति न स्वाचार्याणामाशयः । प्रयत्नापेक्षायाः स्वातन्त्र्येण निरूपितत्वाख्यानात् । सेतुत्वेन कर्मापेक्षायां तु सेतोः स्वकर्तृकत्वेन स्वसामर्थ्याक्रान्तत्वेनोपजीव्यविरोधाच्च कर्मवादस्तातव्यम् । तदुक्तं हनुमता 'श्रीमद्दाशरथेः प्रतापमहिमा सोऽयं समुज्जृम्भते' इति । अत्रैव पावनिः सर्ववाल्मीकानां भगवत्पूर्वप्रसादेन संघट्टिसमये प्रसादप्राप्त्यर्थं श्रीपरिरब्धध्वजाग्रादुत्पत्य कर्मवादिनं हस्तेन परामृशति मध्वाचार्यपक्षपाती किञ्चेति । विधिनिषेधौ किल स्व कर्मवादिनः कर्मणां तावदस्मदीयैर्माध्वैहिंसाभयाद्गुणीकुर्वद्भिरीश्वरशब्दमात्रत्वेन स्वीकृतौ । विहितप्रतिषिद्धयोः स्वरूपं तु तत्प्रामाण्येन निर्णेयम् । तत्र विधिविचारे यदि जीवस्य स्वतन्त्रकर्तृत्वं, तदा हिंसादिकर्तृत्वापत्तिः । न च वाच्यं शब्दाद्वारकव्यापारविशेषस्यैव हिंसात्वम् । तेनाप्यधर्मरूपादृष्टोत्पादनात् । न च विधिबलात्तेन धर्म एव जन्यत इति वाच्यम् । विहितहिंसात्वेन धर्मकारणत्वेऽपि सामान्यतो हिंसात्वादिनाऽधर्मजनकत्वस्यापि सुवचत्वात् । विहितान्यहिंसात्वेनाधर्मजनकत्वोक्तौ गौरवात् । एतेन बलवदनिष्टाननुबन्धित्वबोधनाच्च दोष इति निरस्तम् । तस्यैव सन्दिग्धत्वात् । बाधसंशयो न विरोधीति चेत्, न; हिंसात्वेन तन्निश्चयस्यापि सुवचत्वात् । तर्हि विधिवैयर्थ्यमिति चेत्, तर्हि हिंसायां, द्वेषवता न कर्तव्यमन्येन कर्तव्यमिति षोडशिग्रहणाग्रहणयोरिव विकल्पसम्भवात् । अन्यथा क्वचिदपि विकल्पानुपपत्तेहिंसात्वनिरुक्त्यैवानन्यगतिकत्वात् । अथेश्वरायत्तं जीवकर्तृत्वं, तर्हीश्वर एव निर्दोषतया समाधीयताम् । कर्मवादे तु न काप्युपपत्तिरित्युक्त्या तूष्णींभूते कपिवरे तद्दृष्टनिजाचार्यान् स्मृत्वा स्वयमाहुः द्विगिति । ध्वजाग्रकेसरिणैव त्वया तत्रत्यकेसरिभिः सुप्रसादैः क्रीडितव्यम्, यावता त्वयैवास्कन्दितमेनं वादिनं वयमासादयामः । तथाहि यदि प्रयत्नशब्दार्थौ धर्माधर्मौ, तदा तयोः प्रयत्नशब्देनैवोक्तत्वात्तदुपपादकशब्दरूपयोर्विधिनिषेधयोरेव वैयर्थ्यमुद्भावयितुं योग्यम्, न तु तद्विषयकप्रयत्नवैयर्थ्योरप्रयत्नापेक्ष इत्यर्थो वक्तुम्, धर्माधर्मयोर्वैयर्थ्येऽपि भगवतो राज्ञ आज्ञायाः पर्यनुयोगानर्हत्वात् । सेतुपरीप्सायां तु भवति धर्माधर्मव्यपेक्षेति, 'लोकवत्तु लीले'ति न्यायादिति समाप्तोऽयं वादः । अत्र मध्यस्थैः श्रीगोकुलेशैराशङ्क्यते, कथं समाप्तो वादः, यावता प्रवर्तकत्वं कृष्णस्य निरङ्कुशं निर्व्यूढं भवति । 'कृते' ति सूत्रन्यायेन सेतुपरीप्सायां भगवतः प्रवर्तकत्वस्य केनापि प्रकारेण सापेक्षत्वात्, विध्यर्थस्योपयोगे तद्द्वारा प्रवर्तकत्वे तस्यापि प्रवर्तकत्वात्तन्निषेधानुपपत्तेः, सापेक्षत्वसूत्रानुपपत्तेश्चेति द्वि विवदन्ते वादिनः । सत्यं प्राची दिगेव चन्द्रोदयवती द्विगिति प्रागेव निर्दिष्टाऽस्माभिरिति जानन्तु । अयं हि चन्द्रोदयः स्वतन्त्रः, न विधिगोचरः । तस्याऽनित्यत्वात् । नित्याविर्भावशालिनस्तु कथं कर्मजन्यता स्यात् । किञ्च कार्यस्य सर्वस्य कार्यत्व एव किं नियामकम् ?, येन कारणकल्पना । कारणजन्यत्वं चेत्, कारणानिर्णये तस्यैव ग्रहीतुमशक्यत्वात् । यथासम्भवमन्वयव्यतिरेकौ शब्दानुमाने च माने स्यातामिति चेत्, अन्वयव्यतिरेकित्वं कार्यत्वकारणत्वयोरुभयोर्ग्राहकमिति फलितम् । तत्रातिरिक्तकारणतायां मानाभावात्कारणताघटकदलद्वयग्रहे प्रत्येकमन्वयव्यतिरेकयोः प्रयोजकत्वाभावाद्विशिष्टस्य चानतिरेकादन्वयव्यतिरेकाभ्यां तयोः कारणत्वेऽनवस्थानात् । एवं कारणत्वग्रहे शब्दानुमानगम्यमपि न कार्यत्वादिकम्, व्यावहारिककार्यकारणभावस्यान्वयव्यतिरेकग्रहाधीनत्वाद्युक्त्यन्तराभावात् । खण्डनकारस्तु चार्वाकानुयायी, कारणत्वादिकमसदेव मन्यते, तच्च ग्रन्थस्य खिले प्रस्तरे व्यक्तीभविष्यति । वस्तुतः स्वरूपसम्बन्धरूपं कारणत्वादिकं सत्त्वघटितं सत एव, सच्च सर्वानुगमिति ब्रह्मवादरीतिः । तत्र च सेतुपरीप्सा स्वतो गन्तुं समर्थस्यापि लीलया, वेत्रलतावलम्बनन्यायात् । एवं विध्यर्थज्ञानेऽप्यप्रवृत्तेः प्राचीनकर्मसहकृतान्तर्यामिनः प्रवर्तकत्वं सहकारित्वेनैवान्तर्यामिणोऽन्यथासिद्धिं ये मन्यन्ते तेषां विध्यर्थोऽप्यन्यथासिद्ध एव, प्राचीनकर्मभिरेवोपपत्तेः। विध्यर्थज्ञानान्वयव्यतिरेकसहचारज्ञानमप्यन्यथासिद्धिवशाच्च कारणत्वग्राहकम् । अत एव प्राचीनकर्मणामपि विध्यर्थज्ञानमूलकत्वं तत्तत्कर्मभिरेवान्यथासिद्धम्, किन्तु विधेः शाब्दत्वाय तदर्थबोधोपयोगे वक्तव्ये विधेः पौरुषेयत्वे पुरुष एव प्रवर्तकः विधिद्वारमुपजीव्यः पुमानित्येकः प्रकारः । प्रवर्तकत्वमित्याद्युक्तेरपौरुषेयत्वं निराकृतप्रायम् । प्राचीनकर्मणां विध्यर्थविमर्शप्रमोषयोरुपक्षीणत्वादनेकत्वाच्च न प्रवर्तकत्वम्, तदुत्तरमन्तर्यामिण एव । तत्प्रवर्तकत्वानेकत्वेऽपि तावत्कर्मापेक्षया लाघवात् । पार्थस्य

च विप्ययौ नाद्या प्रवर्तको बभूव । वस्तुतो ज्ञापकं शास्त्रं सवितृप्रदीपादिवदुदासीनं न कारकमित्येव बीजं विप्यर्यप्रवर्तकत्वे । तदुक्तं साधनं च फलं चैवेत्यादि । न चात्रोक्तदोषो भगवत्यपि समानः, उदिधीर्षादेर्जडे कर्मण्यसम्भवात्तत्प्रयुक्तत्वस्य च प्रवृत्तौ स्वीकारे भगवति दोषः परिहरणीयः । स च भोगेन क्षपयिता दोषान् सम्पत्तौ तात्पर्येण । न चैवं भागवतनियोग इव श्रौतनियोगेऽपि संपत्तौ तात्पर्यमस्तु । तात्पर्यस्य चेतनधर्मत्वात् । प्रवर्तकत्वमप्येवम् । एवं समाप्तो वाद इति । किञ्च विशिष्टायामेव विप्यर्थोऽपि प्रविष्ट इत्यालोच्य पात्रनिर्विविशेष्यच्छाकल्पध्वजाधिरूढः पूर्वपक्षं करोति ननु जीवैर्नां नित्यभिन्नानामिति । चेतनत्वाविद्रूपत्वाद्यभेदवादिनं प्रत्याह अंशुत्वेनेति । चेतनत्वेनाभेदे साध्ये व्यापकचेतनत्वमुपाधिरित्यर्थः । ननु नाहं महाजाप्यभेदवादी, किन्तु पनीयान् स्वतन्त्रोऽस्य इत्यंशत्वमेव साध्यत इत्युक्ते प्राह पैकदेशेति । 'पादोऽस्य विश्वाभूतानी' त्येकदेशस्थायित्वोक्तेरित्यर्थः । पृथगंशत्वं चात्र निराक्रियते, एकदेशे नियतसम्बन्धादुपचारः । सादृश्यं भेदघटितम्, तद्गुणसारन्यायात् । तथा चांशत्वमभेदवादप्राधान्येन मया निराक्रियते, न तु भेदघटितम् । तथा च कीदृशोऽयमंशांशिभाव इति पृच्छामि । भेदघटितस्यास्य महद्भिरनङ्गीकारात्, अन्यादृशांशत्वस्य पारिभाषिकत्वादिति पूर्वकारिकोपदिष्टांशत्वं मन्यमानान् महतः कुमारान् प्रति कपिवरेण पूर्वपक्षिते तं सम्भावयन्त एव प्रभवः प्राहुः मुख्य इति । भवानपि कस्यचिदंश इति हृदयम् । कश्चिदंशत्वं प्रसिद्धं न वा, यदुपचारादंशत्वमुच्यते । तद्गतशक्तिमत्त्वं चेत्, ओम् । चेतनांशशक्तेरङ्गीकारात् । अस्मिन् चेतनेत्युक्तेर्नियतानुसन्धानविषयत्वप्रकाशत्वं तु फलितोऽर्थो गोप्यः । तथा धर्मिणो लीलाभिनिवेशे यादृशतादात्म्यं पुरस्कृत्य तद्द्वारा स्वयशोरूपकार्यव्यवहारक्षमत्वं तादृशतादात्म्यमंशत्वम् । अत्रैवं सूत्रकृतां दूषणपरिहारः—परिणामे कृत्स्नप्रसक्तिनिरवयवत्वशब्दव्याकोपौ दोषौ, तद्द्वारा निर्विषयविज्ञानवादेऽपि तौ स्याताम् । मायापरिणामाभ्युपगमात् । विवर्तितावादैरनङ्गीकारात् । सर्वांशेनाध्यस्तमेव स्यात् । अध्यासेनांशभेदानिरूपणात्, निरूपणे चान्योन्याश्रयानवस्थापातात् । अयमपि व्याकोपः । निरध्यस्तरूपानिरूपणादकुण्ठितव्यापारात् । वैकुण्ठस्तु तत्त्वतादृङ्निर्विशेषवाक्यावर्तते । 'सर्वे वेदा यत्पदमामनन्ति' । व्यापारनिरूपणे तु विषयताया एव व्यापारानुग्राहिकायाः स्वतत्त्वनिरूपणावश्यंभावादिति । एवं तादात्म्यलक्षणविषयत्वेऽनौपचारिक एवांशत्वे ध्रुवे तदनुरोधाद्भेदसहिष्णुरभेदस्तादात्म्यमिति तान्त्रिकविप्रलम्भेन वादिना यदि भेद आपाद्येत तर्हि पञ्चक्लेपे तद्दूषणं स्थयन्ति पैकविज्ञानेनेति । स्यादेवं यदि नीलपटयोस्तादात्म्यमिव तादात्म्यं स्यात्, द्रव्यगुणाभेदेऽपि द्रव्यत्वगुणत्वादिना तैर्भेदस्यापि वादिभिः स्वीकारात् । न चैवं सत्तादात्म्यम्, प्रकृतपटत्वादेरपि सत्त्वरूपत्वाविशेषात् । किञ्च किमिदं भेदसहिष्णुत्वम्, न तावद्भेदव्याप्यत्वम्, तद्धि स्वगतभेदव्याप्यत्वं परगतभेदव्याप्यत्वं वा । आद्ये घटतादात्म्यवति घटे स्वगतभेदाभावाद्व्यभिचारः । अथ घटे घटभेदाभाव एव तादात्म्यं, नीलपटयोस्तु भेदसहिष्णुत्वादिति चेन्न; सम्बन्धताविशेषतादात्म्यस्य स्वातिरिक्तत्वात्, भेदाभिधेयमित्यादौ भेदाभावातिरिक्तस्यैव तस्य सम्प्रतिपत्तेः । आरम्भणाधिकरणे च तस्यैवानन्यत्वपदार्थत्वात् । यतो न वयं भेदाभावं ब्रूमः, किं तर्हि तादात्म्यमिति । यदि च घटत्वरूपं तादात्म्यं घटाद्भिद्यते, तर्हि घटे किमायातम्, न द्वितीयः, परगतघटाद्यनुयोगिकभेदस्य घटतादात्म्याव्याप्यत्वान्नीलपटतादात्म्ये लक्षणसमन्वयेऽपि घटतादात्म्याव्याप्तेः । नापि स्वगतभेदव्यापकत्वम् स्वगतभेदस्योभयनिष्ठत्वात्पटेऽपि सत्त्वेन तत्र घटतादात्म्याभावात् । अत एव परगतभेदव्यापकत्वमपि प्रत्याख्यातम् । नापि भेदसमानाधिकरणत्वम्, नीलभेदसमानाधिकरणत्वेऽपि घटे स्वभेदाभावेन वैयधिकरण्यादिति । एवं च स्वतादात्म्यस्य सर्वत्र जीवब्रह्मसाधारण्यानङ्गीकारे स्वस्य सामान्यलक्षणप्रत्यासत्तिस्थानाभिषेको न स्यात् । विज्ञानविशिष्टं च पदार्थजातमेतेनोक्तम् । विशिष्टाधिकरणताभेदाच न पर्याप्तता । ज्ञातो घट इतिवद्घटत्वरूपसत्तायाः सर्वेष्वविज्ञानविषयतास्वरूपसम्बन्धाभिमताया अलौकिकमेव ज्ञानम् । तेन विज्ञानस्य लौकिकचाक्षुषविरहेऽपि न क्षतिः । घटत्वं साक्षात्करोमीति तु शुक्तिरजतं साक्षात्करोमीत्यादाविव दोषगुणानामननुगमादुपपन्नम् । इदं चैकविज्ञानेन सर्वविज्ञानं व्यावहारिकसामान्यलक्षणादृष्टान्तेनोच्यमानं तीर्थान्तरीयाणामपि । सर्वस्य प्रमेयत्वाङ्गीकारात् । तथा चेदानीं मोक्षापत्तिरिति तु चरमतत्त्वज्ञानत्वेन फलोपधायकत्वात्समाधेयम् । नैयायिकास्तु नहीदं मोक्षसाधनज्ञानम्, 'तमेवे'त्यादिविरोधात्, किन्तु सर्वज्ञतासाधनप्रभेदः । तथा च सुवर्णत्वजातेरेकस्या अन्वयात् सुवर्णत्वसामान्यलक्षणा दृष्टान्ततयोपादायेश्वर-

विज्ञानमेकं नित्यं चेति ज्ञानादेकत्वेश्वरस्य निमित्तत्वेन ज्ञानादेव तदवच्छिन्नसामान्यकार्यताज्ञाने कार्यत्वावच्छिन्नसर्वज्ञानमिति वर्णयन्ति । सांख्यास्तु स्थूलसूक्ष्मपृथिव्यादिदृष्टान्तेनाव्यक्तप्रकृत्यनुगतं सर्वं ज्ञातं भवति, परिणामदृष्टान्तव्यतिरेकेण सुवर्णखण्डाः सुवर्णमिति सामानाधिकरण्यानुपपत्तेरित्याहुः । स्वसिद्धान्तविज्ञानादनयोर्विवेको विदुषां ज्ञेयः । ननु नव्यनैयायिकैर्मीमांसकानुसारिभिः सामान्यलक्षणा न स्वीकृता, तत्कुतो ज्ञेयतां ब्रह्मतादात्म्यम् । स्वोक्तदृष्टान्तानङ्गीकारे श्रुतेरप्यनवकाशपराहतत्वात्, सर्वमानाभावेऽप्यनिष्टाभावात् । तत्त्वज्ञानमर्यादेयमिति चेत् न, दृष्टान्ताभावात्, सामान्यलक्षणाङ्गीकारात् । श्रुतेरुपपत्तिस्तु तार्किकसांख्याभ्यां यथामतं मन्तव्या । तथा च ब्रह्मवादिनां किं सम्पन्नम्, कथं च ब्रह्मतादात्म्येन सर्वभानं सार्वज्ञ्यापत्तिश्चेत्याशङ्क्य ते न चेति । तत्त्वज्ञानजनितेति । यद्यपि योगजधर्मोत्पादनार्थमेव योगानुष्ठानम्, तत्त्वज्ञानं तु चरमज्ञानद्वारा मोक्षस्वरूपयोग्यमेवोपादीयते, नादृष्टद्वारकम् । मध्ये सर्वज्ञताकल्पने मानाभावात् । तत्त्वज्ञानमेव सर्वज्ञता यदि तदा तत्त्वस्वरूपं विचारणीयम् । ननु तत्त्वज्ञानाद्धर्म उत्पद्यत इति कश्चिदभ्युपैति । धर्मसाधकत्वाद्विद्यायाः, 'आत्मानं चे'दिति श्रुतेः, तथापि तत्त्वज्ञानजनितालौकिकतेजस एव धर्मपदेनोक्तिरिति साम्प्रदायिकाः । अथवा 'यस्मिन् विज्ञाते' इति वाक्यप्रामाण्यात्तत्त्वज्ञानस्य सर्ववस्तूपनायकत्वं स्यात्तद्रूपेणोच्यते, सर्वधारकत्वादिना तज्ज्ञाने सर्वज्ञानसम्भवात् । दृष्टान्तस्यैकदेशेऽपि भवतीत्युपनायकत्वं धर्म उक्तः । 'य एवं वेदे'ति गुणफलं तु तत्त्वावान्तरधर्मप्राप्तिरपीति वादिनोऽभिप्रायः । तत्त्वस्वरूपं विचारयितुमुपक्रमन्ते यथा सौम्येति । तादात्म्यपक्ष एवायं दृष्टान्तः साधीयानित्याहुः अनुपपत्तेरिति । ननु मृत्तादात्म्येन प्रकारेण सर्वमृद्ज्ञाने मानाभावः, संशयानुपपत्तेर्निरासात्, देशान्तरीयघटो मृन्न वेति संशयानुपपत्तेस्तत्र मानत्वासम्भवादिति नव्यतार्किकानुसारिणा केनचिदुक्तं तन्निरासाय सदेवेत्यनुभवमुखेनाहुः सदेवेति । यथाऽधुना पश्यसि सदिति तथैव प्रागासीदित्यर्थः । तथा च पूर्वापरदशायां सदित्याकारकं सर्वज्ञानमुक्तम्, प्रमेयमिति प्रमेयत्वप्रकारकज्ञानाच्च सर्वं प्रमेयमिति ज्ञानम्, अतोऽनुमितिशब्दादिरूपं सर्वविषयकम् । प्रमेयत्वव्याप्याभिधेयत्ववत्सर्वमिति परामर्शसम्भवात् । एवं शक्तिज्ञानस्य च तद्धर्मावच्छिन्नप्रकारतान्तर्भावेण कारणत्वे विशिष्टे शक्त्यभावेऽपि शाब्दबुद्धेः सर्वविषयत्वात् तादृशशाब्दज्ञानप्रयोज्यप्रत्यक्षमप्येकविज्ञानेन सर्वविज्ञानं पश्यामीति प्रतीतिव्यङ्ग्यत्वलौकिकविषयत्वाभावे सिद्धेऽलौकिकविषयताया एव साम्राज्यात् तस्या एवात्र सन्दर्भे प्रतिष्ठापनीयत्वात्, न तु सामान्यलक्षणायां निर्बन्धः । अत एव 'सामान्यप्रत्यासत्तिरिव निरूपिते'ति निबन्धः । अपि च प्रत्यक्षस्थलेऽपि चक्षुःसंयोगाद्यनन्तरं घट इति घटत्वप्रकारकं ज्ञानं स्वानुव्यवसायादौ कारणं वाच्यम् । तत्र च घटत्वप्रकारकघटविशेष्यकज्ञानत्वावच्छिन्न एव कारणत्वात्ततो जायमानं ज्ञानं घटत्वावच्छिन्नघटान्तरविषयकमपि स्यात् । अनुव्यवसायेऽपि घटत्वेन घटावगाहने घटान्तरमादाय विनिगमकाभावात्, अनुव्यवसायं प्रति विषयत्वेन हेतुत्वेऽपि तादृशज्ञानप्रत्यक्षे तादृशज्ञानत्वेन कारणत्वे व्यवसायविषयीभूतघटादेरप्यनुव्यवसाये ज्ञानविशेषणत्वेन भानात्, तस्य च कार्यतावच्छेदकं घटत्वप्रकारकज्ञानत्वं घटत्वप्रकारकघटविषयकतादृशानुव्यवसाये घटत्वप्रकारकज्ञानत्वेन कारणतायां तत्रत्यघटविषयताया यावद्घटसाधारण्यात्सामान्यलक्षणासिद्धिः । न च सामान्यलक्षणायास्तद्धर्माश्रयमुख्यविशेष्यताशाल्यलौकिकप्रत्यक्ष एवोपयोगादनुव्यवसायीयविषयतायाश्च ज्ञाननिरूपितविशेषणतावच्छिन्नत्वान्न तत्सिद्धिरिति वाच्यम् । ज्ञाननिरूपितविशेषणतानवच्छिन्नाया अपि घटत्वप्रकारतानिरूपितमुख्यविशेष्यताया अतिरिक्तत्वाङ्गीकारसम्भवात् । अन्यच्च, तथा सति तादृशविषयताया घटांशे व्यवसायोपनीतत्वेनाप्यलौकिकत्वसिद्धेश्च ज्ञानस्य सर्ववस्तूपनायकत्वं सर्ववस्तुतादात्म्यं विनाऽनुपपन्नमित्यनुपपत्तिप्रतिसन्धानमाहितवाक्यप्रामाण्यमहिम्नैव प्रपञ्चस्य ब्रह्मात्मकत्वसिद्धेः सेयं सामान्यलक्षणाज्ञानलक्षणोभयसाधारणमार्गमुद्द्योतयन्ती गगननिर्मुक्तवाम्भानुरश्मिरिव सीमन्तायमानाऽलौकिकविषयतायामुपष्टम्भयितुं नव्यनैयायिको भीम इव प्रत्यवतिष्ठते, तद्वृत्तिविषयतासम्बन्धेन ज्ञानत्वावच्छिन्नं प्रति तद्वृत्तिविषयतासम्बन्धेन ज्ञानत्वेन कारणत्वम् । एवं च सन्निकर्षस्यापि विषयभेदेन कारणता नास्तीत्यत्र पराक्रान्तं सूरिभिः । तदेवं व्यवस्थितेनादृशेश्वरज्ञानवत्प्रमेयमिति ज्ञानवत्त्वाच्च प्रमेयमात्रज्ञानमायातम्, तच्चालौकिकविषयतांशेनेति निर्व्यलीकः पन्थाः । एवं श्रुत्यर्थोपष्टम्भने प्रत्यूहनायकः पाषण्डिकप्रतारितो जन्मत्वमंशत्वं

मन्वानो व्यासाशयमविद्वान् शङ्कते ननु 'नोत्पत्त्याऽश्रुते'रिति । सूत्रशङ्कां तोलयन् सिद्धान्तमिदमाह । अत्र गिरिराजोऽस्य मुख्याङ्कुरेण प्रणयेन प्रतिपत्तिं समादधात्विति मुख्यान् प्रत्याशापयन्ति 'अत्रिन्द्र'मिति । विचार्यत्विति । अग्नेः प्रणवस्य सञ्जीवनौषधसेवाङ्कुराः, भावप्रधाननिर्देशात् । क्षौद्रमिव मधुराः, कोमलाश्च त्रयो देवा गुणरूपा इत्यर्थः । ते च प्रणवाश्रितोद्गीथादिविद्याविदांवराणां नित्यानुभूयमानसमाधिविषयाः कपिलविनोदास्पदा इव पदार्थाः परतःसिद्धस्वोत्तरैर्लौकिकैरनुभवैर्न शक्यन्ते निवारयितुं तथैव जीवाः प्रणवाद्यात्रयात्मकाः प्रादुरासन्निति विचारयन् । स्वयमेवेति सम्बन्धः । उत्पत्तिरन्दार्थत्वमुत्पत्तिवैचित्र्ये प्राचां सम्मतिं प्रमाणयन्ति तेदुक्तमिति । विष्णुस्वामिनां संमतिरिति प्रतिभाति । तं प्रति भगवतोक्तमित्यर्थः । अनित्ये जनेनैमित्यादि । उत्पत्तिरसत्सत्तापादकसत्तारूपा यदि तदा जननमिति व्यपदिश्यते । इष्या जनिस्तु प्रादुर्भावार्थ एवेति नित्ये परिच्छिन्ने पञ्चभूतकिरणसमाजे तत्त्वात्मके तान् समूह्य तत्र निजानुभवविषयतायाः सम्बन्धस्याङ्गीकारः समागमः । संयोग इति केचित् । अधिष्ठानृत्वे संप्राप्ते यथा कश्चिन्महाराजो मौक्तिकावलिपर्यलङ्कृतविज्ञानविराजितचन्द्रमणिगणप्रभाप्रच्छादितपर्यङ्काधिरूढो भवति । नित्योपरिच्छिन्नतनौ । नित्यनिजवैजयन्तीरूपविषयताश्लिष्टोत्तरीयप्रसाधितसज्जसामग्रीसन्निधाने सन्निहितमहानिर्वितेति श्रीमदाचार्यैरस्मान् प्रति व्याख्याय दर्शितमित्याहुः । इति । तेदुक्तमिति सम्बन्धः । एवं च विषयतामात्रलक्षणसम्बन्धेन प्रवेशं विषयविषयिताभ्यां जीवे नित्ये परिच्छिन्नेऽणौ, जीवे 'य आत्मनि तिष्ठन्नात्मान'मिति रीत्या स्वावेश इति वा । प्रेर्योविषयितया स्वरूपे तादात्म्यं स्वनिरूपितसंसर्गताश्रयत्वेनाङ्गीकाररूपं प्राकट्यमेव त्रिधेति, न तूत्पत्त्यादिभेदपरं सम्मतिवाक्यमिति निष्कर्षः । वैजयन्तीसम्बन्धिपदार्थपञ्चपुष्पमणिकिरणादिसम्बन्धाज्जीवो ज्ञातनिजतत्त्वात्मको भवतीत्युक्तं भवति । ननु पूर्वं वाक्यभेदशङ्कितत्वात्तथात्वमनादीरित्युपालम्भात् सोऽत्र कल्पेऽपीति चेन्न, प्रादुर्भावरूपविशेष्यैक्येन त्रयाणामपि सिद्धान्तनिष्कर्षात् । यद्युत्पत्तिरेका स्यात्, तथा सत्यनेन तस्या एव प्रकारभेद उक्तो युज्येत । प्राकट्यं तु प्रकारभेदेऽपि स्वरूपविषयताया ऐक्यादेकविधमेवेति प्राकट्यमित्येव चकारात्त्रितयस्य योज्यम् । तेन प्राकट्यमेकमेव । विशेषभेदात्तत्सा जननादिरूपोत्पत्त्यादिभेदैर्विशेष्यत इति तदर्थो द्रष्टव्यः । तेदुर्बोधत्वमिति । दृष्टान्ते तु सुबोधम्, तथापि दृष्टान्तो बोद्धृप्रत्ययार्थम् । यादृशो बोद्धा तादृशो दृष्टान्तधर्मः स्फुरति । सहृदयस्तु चन्द्रनिष्ठाह्लादजनकतावच्छेदकं चन्द्रमुखोभयसाधारणं प्रतिपद्यते, तत्र विलक्षणविषयतारूपं सादृश्यं भेदाभेदसाधारणं च । तत्र दृष्टान्ते पुरुषान्तरेण भेदेन गृहीतधर्माणां तथैव दार्ष्टान्तिके चानन्दजनकतावच्छेदकमनुगतं सहृदयः परिपश्यतीति शुभाक्षर्यादिव एवंविधविशेषस्य बोद्धृवैशिष्ट्यस्य च प्रत्याख्यातुमशक्यत्वात्तादृशमर्थं दृष्टान्तपुरस्कारेण श्रुतिर्बोधयति । तत्र यथानर्थं सामान्यबोद्धृविशिष्टबोद्धृपुरुषयोर्वाक्यार्थबोध इत्येतत्सर्वं मनसि कुर्वन्तः सूत्रकारमुपस्थापयन्ति प्रेर्तेऽपीति । 'अपि च स्म्यि'ति । अधिकविषयतावत्त्वं महत्त्वम् । भेगवदिति । गीतासु द्वादशाध्याये भगवदुक्तेत्यर्थः । सन्तुष्टाज्ञानभक्तयोर्विषयीभूतात् । 'आश्चर्यव'दिति श्रुतेः, 'मत्प्रसादा'दिति स्मृतेः । आनन्दप्राकट्यं श्रुतिरूपासु, अत एव शुकादिषु, अन्यथा तद्वर्णनानुपपत्तेः । भावदर्शनं तु नात्रापि, ज्ञानप्रधानत्वात् । आनन्दानां तत्कर्मदानां वा प्राकट्यम् । मुक्तानां पुनः प्राकट्यमपि फलकोटौ सम्भावयन्तो मुक्तोपसृप्यत्वं दर्शयन्ति स्वैर्गुणैरित्यादि । एते सताय एव मुक्ताः, शुकादितोऽपि विलक्षणाः । शुके श्रवणकीर्तनं सर्वदा, शुनःदेवप्रसङ्गे सहसं च । सनकादयश्च । एवं देवर्षिप्रभृतयः । तैरुपसृप्य इति । लीलानुकरणं वा गुणैरित्यादिनोक्तम् । योगं "प्रसादं सर्वतो नित्यतृप्तिलक्षणम् । तदुक्तम् मे शोचतीति । चिन्ता कापि न कार्येति । न भोगसामग्रीसम्पादने लौकिकपदार्थमाकाङ्क्षति । सेर्भैः सर्वेषु जलादिष्वपि । तेनैव भोगसामग्री सम्पादयति । भगवानपि तत्त्वे तत्त्वान्तराणां प्रवेशमनुभवन् एवेति फलत्वेनेत्युक्तं भवति । एवं निरपेक्षत्वमात्रेण न कृतार्थतेत्याहुः भक्तिर्लेभेति । भगवच्चरित्रचित्रितचित्तत्वप्रवेशानन्तरमित्यर्थः । तदनन्तरं मच्चरणारविन्दे प्रविशतीत्याह विजेयैरथेति । दशनामातिरिक्तनामकरणम् । रथ एव भगवान् कुटुम्बतां प्राप्तो विजयार्थम् । भगवतोऽपि नामकरणं वादिविजयार्थम् । सकलस्य वायमतिशयो यत्सवीर्यादित्यद्वारा प्रकटनम् । पार्थो भप्यातपत्रादिधारणेन, पारस्यं सहयस्य विजयोपहारसमर्पणेन दर्शयिष्यन्ति तदाहुः प्रवेशानन्तरमिति । अर्जुनस्य भगवत्येव प्रवेश इत्यभिसन्धिः, साक्षात्सम्बन्धो, परम्परया

क्रममुक्तौ, परन्तु साक्षात्प्रवेशे चरणारविन्दस्थानम्, । नाभिस्तु न भक्तिः, किन्तु मर्यादा । 'ते वै वैखानसाः प्रोक्ता नाभीपद्मरुहाश्रयाः । अयं वै ब्रह्मलोकोऽत्र क्रममुक्तौ प्रतिष्ठिताः' । सेतुमुद्र एकायनमिति । 'आपो नारा इति न्यायात् । भगवन्नामात्मिका वागेकायनमिति । तात्पर्यमेकायनमिति तात्पर्यम् । उदके दधिसंवलितोदके । जलभेदप्रकाराश्च तद्रसाविष्टस्तदात्मको भवति । पूर्वदृष्टान्ते स्थितिरुक्ता, द्वितीये प्रवेशः, रसो रसत इति माधुर्यवदभिव्यज्यमानानन्द एव, न व्यञ्जकप्रकाशात्मकः । ज्ञानविषयताविशेषात्मको-ऽयमचेतनधर्म एव, न जडधर्म इति 'विज्ञानघन एवे'त्यादिना यद्याह नं प्रेत्येति । अत एव विषयताशून्यत्वलक्षणं प्रेत्यभावं निराकुर्वन्नाहुः भिन्नत्वेन प्रतीतिराहित्यमिति । किन्तु प्रमेयत्वेनाभेदमेव साक्षात्करोति । चकारात्तादात्म्येन प्रपञ्चयोगमपि शास्ति । महावाक्यार्थविवेचने सदंशस्यापि विषयमात्रात्मनः परिग्रहः । तथा च सर्वज्ञतासम्परया पारिभाषिकचैतन्यस्वाभाव्यं निर्विषयत्वं परेषामभिमतं प्रत्युक्तम् । स्ववेद्यत्वस्य स्वरूपसम्बन्धस्थानपोह्यस्वरूपस्य व्यासाभिमतस्यास्माकं पक्षपातात् । तत्तादात्म्यस्फूर्तिर्गतिः सा प्रपञ्चसाधारणीत्याहुः औदीत्यादि । सर्वेषां वेदान्तानामिति । भगवत्तात्पर्यग्राहकमानत्वं निबन्धोक्तवेदादिचतुष्टयसाधारणं वेदान्तत्वं प्रपञ्चितम् । तत्र सृष्ट्यादिनिरूपकाणामुपासनादिनिरूपकाणां श्रवणमननादिविधिरक्षकानां साक्षादेव ब्रह्मणि प्रामाण्यं समन्वयपदार्थ इत्यर्थः । नन्वीक्षत्यधिकरणमिदं न समन्वयाधिकरणमिति चेत्तत्राहुः फलितमिति । ईक्षत्यधिकरण एवाभिन्ननिमित्तोपादानत्वं निर्व्यूढम्, सद्रूपेण चिदंशस्येक्षतेरेव विषयतात्मनान्वयात् । निमित्तत्वमपि स्वात्मकोपादानप्रत्यक्षविधयेति बोध्यम् । तथा च चिदंशमात्रे लयः साधनं, प्रेयस्त्वेन चिदंशे प्रवेशः फलमिति फलितार्थः । योग्यत्वं स्वाविषयकप्रतीत्यविषयत्वमेव । सर्वतः परमानन्दमेकीकृत्य तत्प्राकट्यं न लोकालोकाधिष्ठानं, किन्तु सर्वात्मभावाधिष्ठानमिति निष्कर्षः । ईदृंमेव मुक्तिफलीभूतफलदानार्थमवतीर्णत्वमेव । मुक्तेः फलान्तराभावमाशङ्कते न च न स पुनरिति । प्रेमोणमार्गेति । ज्ञानमार्गेत्यर्थः । ये चरणारविन्दपुष्पन्धया, ततोऽधिका अलकालयः, पुष्परसस्यानन्दस्योभयत्र तुल्यत्वेऽपि मुखारविन्दस्य लक्ष्मीमुखारविन्दसम्बन्धः । चरणारविन्दस्य तु तस्याः पाणिकमलसम्बन्धः । अवन्मधुत्वं पुनर्मुखारविन्दस्यैवेति हृदयम् । तेदुक्तमिति । मुक्तिं विहारफलम् । न भैक्षिं स्वाधरसुधाम् । तथापि मुक्तिः परावृत्तौ संसारपात इति बिभ्यन्तमाश्वासयन्ति न हि तेषां तत इति । किन्तु चरणारविन्दानन्दमकरन्दं गृहीत्वा पीताम्बरवत्तद्विग्रहं निर्माय परिधाय च दोलायमानकुण्डलं परितो गायन्तीत्याहुः लीलाविग्रहमित्यादि । अनादिवाक्यमिदं वेदवत्प्रमाणम् । प्रायस्तेषामेव लीलाविग्रहधारिणामिदं वाक्यं तापनीभ्य उन्नीतम् । तापिनीनां स्वरूपमाहुः सेै चेत्यादि । स च श्रीमन्नन्दराजकुमारनवजलद इत्यग्रिमपरामर्शात् सम्बन्धः । सुधावृष्टियोग्यानां वृन्दावनकल्पस्वरूपाणां स्वरूपं वेणुगीतेनैवासां लीलामयत्वादुक्तप्रायम् । पुनः सम्भावनायां गीतगोविन्दोऽपि कदाचिद्वेणुमुपस्पर्शाति चिरेकालेति । पूर्वमुमं व्रतचर्यायां वस्त्राहरणे, तदनु समुदितं वक्ष्यमाणाभिलाषरूपं बीजं यासां ताः । प्रोर्चीनेति । वृद्धामनुरागोदन्तं स्मारयितुं फलरसमयं बीजमाहुः फैलसारेति । तत्कुङ्कुमपङ्कयोरनुरागेण सह यो विलासो, हृद्रस्य तदभिलाषो बीजमित्याशयः । परिजनैः सखीभिरेव कृतो निरोधो, न गुरुजनैः, तैः प्रस्तुतलीलाऽज्ञानात् । सख्यस्तु सर्वं जानन्ति । इतोऽधिकं भगवच्चरणदास्यं मा जानन्तु, तथा सत्यस्मान् गच्छन्त्यः करिष्यन्तीति तत्समक्षं निरोधेऽपि प्रतिक्षणविविधव्याजेन गुप्तचर्यया गोदोहनादौ च स्वस्यैव गोरिव गृहगतागताभ्यामावृत्तेन्द्रियैरन्तःकरणभूमिकाकर्षणं यासां ताः । 'पर्जन्यः फलभावनः' न च भूमज्योतिरादात्मकः, तत्र ज्योतिःपदार्थो विरहतरणिः, शब्दस्तु भूमवर्मोके, सलिलं श्रीयमुनायाः स्मरणमजलम्, पवनो वनमालासम्बन्धीत्येवमात्मको विरहपर्जन्यः पूर्वावस्थायां तापातिशयं करोतीति तप्यमानेत्युक्तम् । ततो निशामुखे इति । सान्ध्यनीराजनावसर इत्यर्थः । प्रियागमनेन सेसंपत्तं संपदं प्राप्तं यदिष्टावलोकनम्, भावभेदनानावैचित्र्येण च, तेनैव सेचनं परस्परावलोकनैः शृङ्गारजलसेचनक्रीडेन, तत्र रक्तिमैव कुङ्कुमम् । शुभ्रता कर्पूर इव । श्यामता शृङ्गार इति, तेन सेचनेन मुखपङ्कजविकासो हासः । वलितं च कामधेनुवद् विविधभावैस्तिर्यगवलोकनम्, तेन वियदां च परिजनकृतलज्जादिकमतिक्रान्तम् । तरलं च एकाग्रमप्राप्तं पर्याप्तम् । रुचिरं च भावोद्गारि विलोचनयुगलमुभयमुभयोर्वा, तेनैव मध्यवर्तिना

विहितो[१०८] निरवधिरसभावो[१०९] भाविलीलासम्बन्धी, स एवाङ्कुरो[११०] रतिरूपो यातु । नैतासां रसुत्पादकं सत्यन्तरमन्तरास्ति, किन्तु लोचनमात्रेति मुग्धात्मुक्तम् । अत्र शाद्वलभूमौ हरिताङ्कुरायां प्रियाः प्राप्ताः, प्रभुः पुनरुच्चैस्तरां विपुले च कलिन्दजापुलिने रासवलयाकारे नभोवलय इव यमुनानीरावर्तयमुद्राङ्काः पाययित्वा स्वयं च निपीय विराजमानः श्रीमत्स्वामिनीनां स्वाभिलषितसुधया पूर्णः काढं रसं निधिमिव स्थापयामीति विभावयन्नेव मजवरवभूमौ रचितां निजसमाजात्मकदम्बिनीं लताखण्डवीथीमिव पश्यन्, निजा या प्रिया नाम सुवर्णवादिनी प्रसादरूपैव मुरलिका, तस्या अव्यक्तमधुरो गुप्तसकार आकारान्तो विभावयितुमशक्यो नितरां समृद्धो यो गर्जितस्तेनानन्दयति । प्रियानामध्वनिश्रुत्या तद्भावापन्नाः सर्वाः करोतीति कुमारः कौमारभावाविष्टः श्रीमद्गोकुलचन्द्रमाः श्रीमाधवजलधिपरिधिः सुधां पूर्वोक्तां वर्षन्, पुनः श्रीगोवर्द्धनपरिवृढो भूत्वा सर्वत्रैव लोकान्तरव्यापितया वर्षिष्यति सुधाघोरनिनादं प्रादुर्भाव्य कूजितेन सन्तु 'बर्हापीड'मित्यादिना निजलोकव्यापकसुधावृष्टिं करिष्यतीति न ज्ञातुं शक्यम् । यत इदं पद्यं स्वयमेवानावारयत, ततः पूर्ववर्णनाशक्तिवज्ज्ञानशक्तेरपि तिरोभावादिति भावः । मर्यादेयं भक्तिमार्गमर्यादया । अत एवाहुः भेजेनमिति । श्रवणादिप्रकारेणेत्यर्थः । तेनैव[१११] सर्वं पुष्टिः पुष्टिपुष्टिश्चेति । द्विधिति[११२] । एषः श्रीगोकुलमार्ग इत्यर्थः । वृन्दावनकलानायकिरणालङ्कृतो यमुनापरपारतीरोद्भवप्रांशुपुलिननवनवीथीप्रलम्बकुञ्जमार्गोऽयमिति भावः । त्रिरूपोऽयं मार्गः, श्रेष्ठमयत्वोक्तेः, शुद्धभावप्रकाशकेति तन्मार्गगामिभिः पितृचरणैर्विवृतौ निरूपितं, तत्तत्रैवानुसन्धेयमित्यभिसन्धायाहुः[११३] अलं विस्तरेणेति । मार्यादिकप्रवाहाद्यनुसारिविसीर्णमार्गेण तादृशा नो पर्याप्तमित्यर्थः । तेन मार्गेण प्रमानर एव प्रवेशेन तु श्रीगोकुलरमणभूमिकायां भगवता सह क्रीडेदिति भावः । पूर्वं रसान्तमुखेनांशत्वं तत्साधारणमुक्तम्, यत्रैतेषां दिना दार्ष्टान्तिक एव सूत्रस्मृतिभ्यामंशत्वमनन्यविषयताविशेषरूपमुच्यते, उभयथापि पूर्वकल्पे बोद्धव्यैश्चिज्ज्ञात्तदंशत्ववैलक्षण्यं प्रतीयते, उत्तरकल्पे सूत्रस्मृत्यादिप्रमाणव्यवहारात्तादृशव्यवहारविषयत्वमेवांशत्वम् । अन्यथा तादृशांशत्वव्यवहारस्य निर्विषयत्वापत्तेः । यथा 'कः प्राण्यात्' 'एष ह्येवानन्दयती'ति ब्रह्मधर्मप्राधान्येन जीवयतीति व्युत्पत्तिरथाऽभ्युपपन्नं पञ्चमाभिरत तथा भगवता तदनुसारिसूत्रेण चांशत्वं व्यवहृतमिति । श्रुतिरादिरंशोः स्मृतिसूत्रयोरित्यतद्गुणसंविज्ञानबहुव्रीहिः । अन्यथा तु नात्र भगवत्स्मृतिविरुद्धं चांशत्वमुपजीव्यान्तर्यामिनियम्यत्वं श्रुत्याद्युक्तम्, तस्य नानुपपत्तिरित्यर्थः । अन्यथाऽखिलावच्छेदे स्वस्मिन् स्वनियम्यत्वानुपपत्तेरित्याशयः । अथांशत्वप्रसिद्धौ प्रमाणप्रसिद्धिरित्यन्योन्याश्रयादनुपचरितमंशत्वम्, अंश इवांश इति, सादृश्यं च सप्रयोजनत्वादिकमेवेति चेत्, तर्हि यत्र क्वचिदंशत्वप्रसिद्धिरवश्यं वाच्या, अन्यथा सादृश्यस्यैवासम्भवात् । चेतनासादृश्येनैव भगवद्भावमिति चेत्, चेतनाया भगवदीयत्वातिरिक्ताया अनभ्युपगमेनाभेदे सादृश्याभावात् । अभेदमादायैव सादृश्यमिति चेद् अतिकौशलमिदम् । यतः किं तेन सादृश्येन, येन बलात्तथा व्याख्यायते, यथा भगवति स भेदस्तथा जीवेऽभेदः, विशेषतस्त्वपि नरे प्रकटित इति हि सादृश्यव्याख्या । अंशत्वे किमायातम्? । तथा च तत्प्रसिद्धिरन्वेषणीया मनीषिणा । विस्फुलिङ्गा इति चेत्, किममी स्थूलारम्भका आरभ्या वा । नाद्यः, अवयविनोऽनारम्भकत्वात्, नान्त्यः, आरम्भकाणां विभागाभावात्, प्रकृतासंगतेश्च, विस्फुलिङ्गपदेनांशत्वाप्रतिपत्तेश्च । क्रियाशान्तरवच्च ममांशस्वमात्मयैवेति । प्रतिबिम्बोऽपि विषयताविशेष एव । जीवलोकोऽपि नाविद्या, किन्तु दहर एव । न हि अविद्यायां स्वरूपतो जीवो लोक्यते । एतेन सत्त्वबमवाचिका एवांशादव्यपदेश्याः, द्रव्यस्वाभाव्यवैषम्यात् । स्थूलवह्निस्फुलिङ्गेन्धनसंयोगनिमित्तकं तेजोन्तरमिवोत्पद्यन्तां ते, तथापि जीवरूपचिदंशसाधारणमंशत्वं तु दुर्घटम्, तत्स्वरूपस्वभावात् । ज्ञाने चांशत्वव्यवहारो विषयनाकृत इति सर्वतन्त्रसिद्धान्तः । यत्रान्ये विषयास्तत्र त एवांशाः । स्वविषयत्वे स्वविषयत्वेवांशत्वमिति हि भगवदभिसन्धिरित्यलं पाठेन । नन्वंशत्वं, तथापि लोकेऽदर्शनादंशिनि तत्प्रवेशानुपपत्तिरित्याशङ्कते नन्विति[११४] । तयोर्बहिः[११५]स्थत्वान्तरस्थत्वयोः । प्रज्ञानमु 'न बाह्यं नान्तर्बहिर्यस्ये'ति न बहिर्मुखभावेनापि । न वा जीवनमुक्तादशायां प्रमाप्तस्यैव जीवस्थितिः, स्थित्यनुपपत्तेः । न वा

मन्न जीवादान्तरं, जीवतो दूरतरं वेति, दूरान्तिकत्वं त्वविद्यासत्त्वासत्त्वाभ्यामित्युक्ते प्राहुः हन्तेति । हर्षे । प्रवेशाभावे निर्गमोऽप्यनुपपन्न इति सर्वदैव भगवति स्थितिरस्माकं भवता प्रत्यपादीति हर्षः । पुनः शङ्कते तर्हीति । विभागश्रुत्या व्युच्चरणपदेनांशत्वं न्यायेनेति । दुर्दृश्यमिति । श्रुत्यादिभिरंशान्तेन प्रतिपन्नमप्यंशत्वादिधर्मवत्त्वं बोद्धुवैशिष्ट्याभिर्णेयमित्यर्थः । निर्णयस्वरूपमाहुः वेदं तु तस्त्विति । तुशब्देन 'सर्वतःपाणिपादन्त'दिति पाठभ्रमनिरासः । यद्यपि पादानां सान्तत्वादेवैवं पाठेऽपि स एवार्थः, तथापि 'सर्वत' इत्युक्त्याऽप्रसिद्धपरिग्रहे आनन्त्यमपि पादादेः प्रसक्तम् । तथा च पाणित्वादिकं शब्दमात्रं माभूदिति परिच्छेदोऽपि ब्रह्मस्वरूपान्तर्गतः । स च ब्रह्मत्वव्याप्यविषयतैव । अत एव 'सर्वतःपाणिपादान्ते' इति मार्कण्डेयोक्तिः । पाण्यादीनामपीदं विरूपाण्यादिरूपमित्याशयेनाहुः यथेति । जलनीलमणिर्मुक्तजले तावत्त्वयि वा तावत्त्वमपीत्यर्थः । ननु यदवच्छेदेनान्तवत्त्वं तदवच्छेदेन ब्रह्माभावप्रसङ्ग इति चेत्, न, अनन्तत्वेनैव तत्र ब्रह्मसत्त्वाभ्युपगमात् । अवच्छेदाभावेऽनन्तत्वस्य स्वरूपतोऽविरोधात् । किन्त्वन्तवत्त्वावच्छेदकं नानन्तत्वावच्छेदकम्, तस्य स्वतो निरवच्छिन्नत्वात् । अन्तवत्त्व एवावच्छेदकापेक्षणेनोभयोपपत्तेः । अङ्गानां नियमनं व्यावृत्तिबुद्धिं जनयन्ति ते अन्ताः कटकमुद्रिकादय इत्यलङ्कृतोऽर्थः । ब्रह्मधर्माणामव्याप्यवृत्तित्वमेकविषयत्वावच्छेदेनापरविषयत्वाभाववत्त्वं विषयतानां स्वरूपसम्बन्धत्वकल्पनाकल्पनाभ्यामनुचिन्तनीयमित्याहुः मन्तव्यमिति । पराय परस्मै प्रयच्छन्ति किञ्चेति । यद्भवतां प्रश्नविषयस्तदुत्तरेण समाधीयत इति किंशब्दचकाराभ्यामर्थः । चशब्दसमभिव्याहृतकिंशब्दस्यार्थान्तरोपक्रमार्थत्वमिति । प्रवेशः 'ब्रह्माप्येती'त्यत्रोक्तः, स यदि शुद्धे तदा स्वीयविषयतायास्तत्र सम्बन्धत्वकल्पनेनार्पणं युक्तम् । अन्यथोपाधिनिवृत्तौ प्रवेश उपचर्येत । स चोपाध्यभावस्वरूपः । तथा सत्युपाधेः प्रवेशोऽयं यदधिकरणमात्रतापत्तिर्न तु चिदंशस्य । वस्तुत उपाधेः प्रवेशो यदि कारणे लयन्यायेन, तदोपाधेः कारणमुपाध्यन्तरं मृग्यम् । तस्य तु सर्वतो नाशाङ्गीकारान्न सम्भवः शुद्धचैतन्ये । उपाध्यनुप्रवेशस्तु भावरूपेण न संभवति, किन्त्वधिकरणात्मकनाशलक्षणः । सोऽपि न संभवति, विजातीये ब्रह्मणि तन्नाशायोगात् कारणेनांशस्य वृत्तेरेव लयपदार्थत्वात् । रजतस्य तु शुक्त्यवच्छिन्नचैतन्यमात्रत्वे रजतावच्छिन्नचैतन्ये तस्य लय इत्यत्र विनिगमकाभावः । किं वा स्वकल्पकाविद्यायां तस्य लयः, तस्याः सत्त्वेनैव इव तस्य पुनरुद्भवापत्तेः । तत्प्रागभावो नष्ट इति चेत्, अविद्यैव मूलाविद्यायां प्रविष्टा रजताकारतया, सह च प्रागभावेन, तथापि कारणसत्त्वे कार्योत्पादावश्यंभावात्क्रमविषयपदार्थानां सततरवेनेश्वरेच्छागोचरत्वे मानाभावाद्, आद्येऽपि वा पुनः पुनरुत्पादापत्तेः । तस्मात्तद्रजतस्य चैतन्यमात्रत्वमेव विषयताविशेषात्मना मन्तव्यम् । तत्सम्बन्धत्वकल्पनानुरूपो यथा चैतन्यस्वभावः प्रकृतिप्रवर्तकत्वानुरोधात्सिद्धः । स च वैज्ञानिको, नाविद्यकः, अर्थक्रियाकारित्वतदभावयोर्विषयताविशेषेणैवोपपत्तेः । अन्यथाऽविद्यायामप्येवं पर्यनुयोगप्रसङ्गात् । स्वरूपविषयतादृष्टान्तार्थैव हि सन्ध्ये सृष्टिः । इदमेव 'ततः सत्यं प्रपद्यत' इत्यादीनां विषयः । अतस्त्वमपि मनान्तरसिद्धं यत्तद्भिन्नं ख्यातिवादे विस्तीर्णमिति । अयोग्यत्वेति । नित्यप्रविष्टस्य नित्याप्रविष्टस्य वा प्रवेशयोग्यतानिरूपणाल्लोके तथाऽदर्शनादिति भावः । संशयात्मकमपि योग्यताज्ञानं प्रकृते न संभवति, प्रवेशकोटेः प्रकृताया अप्रसिद्धेः, गृहप्रवेशन्यायेन प्रवेशस्य चाप्रकृतत्वाद्धर्मान्तरापादकत्वादिति । चेदित्याशङ्कार्थः । योग्यताप्रमा शाब्दप्रमायां गुणः, तदभावो दोषः प्रतिबन्धकतावच्छेदकतयाऽभिमतत्वाद्विशिष्टः । स च गुणोऽभावो वा स्वप्रतियोगिज्ञानप्रमाविषयाभिधायकत्वोभयसम्बन्धेन पदनिष्ठत्वादशपदोच्चारयितृनृत्वेन वक्तृनिष्ठः स्वरूपसम्बन्धेन श्रोतृगतश्चेति विवेचयन्त आहुः अत्रेदं विचार्यत इति । भिन्नानामभिन्नानां वा जीवानां ब्रह्मणि स्वाधिष्ठयाऽसम्भवज्ञानं किल्वायोग्यताज्ञानं दोषः, योग्यताज्ञानाभावो वेत्यपि विचारः । तत्र स्वविषयोऽयोग्यता । एकपदार्थेऽपरपदार्थाभावस्तत्सम्बन्धिपदार्थप्रत्यायकत्वं पदे दोषसम्बन्धः । स च ब्रह्मण्येकपदार्थेऽपरस्य जीवस्य प्रवेशाभावः केनावधारितोऽन्वयव्यतिरेकेण, ब्रह्मस्वरूपानवधारणाद् वस्तुगत्यैव दुरूहत्वात् । एवं योग्यताप्रमाया अपि ब्रह्मण्यनिरूपणात्तदभावसम्बन्धोऽपि पदे दुर्वचः । यदि प्रमाणाद्ब्रह्मणः प्रमा, तर्हि तत्र जीवप्रवेशप्रमापि प्रमाणादेवेति तदुच्चारयितुर्दोषाभावे परिशेषाद्दुः श्रोतृगत एवेति । स दोषं यद्यपि वाक्यस्य । दुष्टत्वादुष्टत्वे पदगतसम्बन्धेनैव व्यवहर्तव्ये लौकिकवाक्ये

तथा दृष्टेः । अत्र तु लोकन्यायेन बाधावतारो न संभवति, धर्मिब्रह्मणोऽयोग्यत्वात् । न च जीवयोग्यतामात्रस्य ब्रह्मप्रवेशाभावः प्रमाविषयः, प्रतियोगिकोटिनिविष्टब्रह्मायोग्यत्वात् । न च शाब्दविषयत्वे बाधकाभावः, प्रवेशेऽपि समानत्वादित्युक्तं विचारपर्यवसानायाहुः तेषां चेति । उक्तरीत्या शाब्दबोधासम्भवादित्यर्थः । तथा च वैदिकशब्दमात्रस्यावुक्तत्वेऽलौकिकगोचरत्वाभावस्यापि प्रत्येतुमशक्यत्वाद्बाधनिरूपकधर्माणां ब्रह्मण्यनिरूपणेऽपि तदा निरूपकधर्माणां निरूपणं संभवदुचितमिति व्यवस्थिते चेत्यर्थः । कश्चित्तु वैदिकवाक्ये 'यजमानः प्रस्तर' इत्यादौ मतान्तरीत्या लक्षणाभ्युपगमेऽपि ब्रह्मविचारस्वाराज्येऽभिषेकाज्ञानिका विजयतेतमामित्याहुः ब्रह्मविदामिति । तेषां न लक्षणया वाक्यार्थबोधः, शास्त्रदृष्ट्योपदेशो मुख्यार्थबाधानवतारात् । 'लक्ष्याद्वं ब्रह्म—'त्यादय उपदेशाः 'एकधैवानुद्रष्टव्य'मित्यादिभिः संगमनीया इत्येकवचनेनाहुः [१६१] श्रुतिरिति । श्रवणमात्रेण प्रमाजननीत्यर्थः । न चैवं मीमांसावैयर्थ्यम्, प्रमाणानां परस्पराविरोधार्थत्वात् । मीमांसया अविरोधेऽपि ब्रह्मणः समस्ताभाव्यनिरूपणेन श्रुत्यर्थं एवेति चेत्, किं तेन, मीमांसाया अपि 'तद्विजिज्ञासस्वे'ति श्रुत्यर्थत्वात् । कथं तर्हि सर्वेषां न भ्रान्ती प्रमेत्यत आहुः ब्रह्मणोऽसामर्थ्येनेति । आविद्यकायोग्यताज्ञानेन दुष्टायतनजन्येन ।

'ज्ञानाञ्जनशलाकेयं प्रसादाञ्जनचित्रिता । लेखनी प्रभुवर्याणां नूनं नेत्रोद्भवा प्रभोः ।'

ज्ञानाञ्जनाभावविशिष्टमयोग्यताज्ञानं प्रतिबन्धकम् । तत्त्वज्ञानाभावविशिष्टमज्ञानं यथा मुक्तिविरोधीति हि स्वप्नेश्वरः । तेनाञ्जनानिवृत्तावपि तत्त्वज्ञानं नित्यमुक्ताभिव्यक्तिफलं जनयत्येवेति तन्मतम् । भक्तेः सहकारित्वमिति चेत्, अन्यत् । प्रकृते तु ब्रह्मणि जीवप्रवेशो विचारविषयः । तत्र वास्तवे बाधज्ञानेन प्रतिबन्धाभिनिर्णयासंभवे प्राप्तेऽप्ययथार्थयालौकिकप्रमाणानपेक्षात्प्रवेशपदार्थे निरूपणीये तादात्म्येन स्वस्मिन् प्रवेशमिदानीमनुसन्धाय परस्मिन्नपि तादात्म्यस्य सम्बन्धत्वं प्रमया परिकल्प्य बाध एवावधारणीयः, यावद्विषयतानिरूपकस्य ज्ञानत्वेनैवयावधारणादित्याहुः नेन्यथयितुमिति । किन्त्वयोग्यताज्ञानमेव बाधितमुख्यावृतमिति तदेवान्यथयितुं युक्तमिति भावः । सौंधारणजनेति । तथा चादुष्टहीरकमणिमन्त्रादिवददृष्टविशेषजनकम् । 'फलविशेषकामः स्यमन्तकं संरक्षयेत्' 'अपि वाञ्छितलौकिकादिफलार्थं गोपालमाराधये'दित्यादिनित्यानुमेयवेदवाक्यमूलकाचारस्मृत्यादिसद्भावात् । नैतदेवम्, पाषाणतुल्यत्वाच्चेति विप्रतिपन्नसाधारणजनानुभवेनान्यथयित्वाऽदृष्टाजनकं तत्तदिति न वक्तुं शक्यम् गुरूपसत्तिमिता सत्पुरुषेणेति भावः । गुणजन्यशाब्दज्ञाने दोषजन्यमयोग्यताज्ञानं न प्रतिबन्धकमित्यत्रानुरूपं दृष्टान्तमाहुः नैन्न पित्तेति । समर्पणात्पूर्वं प्रावाहिकस्य समर्पणानन्तरमिदं प्रथमतया सितां प्रसादत्वेनोपभुञ्जतः प्रावाहिकं कापट्यादिप्रयुक्तमज्ञानं पुनस्तन्माहात्म्यज्ञानं न तिरोधापयति । तस्माद्दोषविशेषाजन्यत्वमिव गुणविशेषाजन्यत्वमपि बाधप्रतिबध्यतावच्छेदके निवेश्यम् । यथा मम देह इति प्रत्यभिज्ञादिगुणजन्यं देहात्मभेदज्ञानं चैत्रोऽहमित्यादिप्रावाहिकदेहाभेदज्ञानाप्रतिबध्यम् । अन्यथा यागादौ प्रवृत्तिर्न स्यात् । न चैवं देहाध्यासोच्छेदप्रसङ्गः, इष्टापत्तेः । कर्माद्यधिकारित्वस्य देहावच्छिन्नात्मन एवोपपत्तेः, देहसम्बन्धस्य च भेदाभेदसाधारणत्वात् । मम देह इति भेदेनाप्यध्यासस्य परमते संभवात् । कथं तर्हि चैत्र इत्याद्यभेदावस्था, सत्यम्, तथाप्येतज्ज्ञानस्य ममेति ज्ञानाविरोधात् । सिद्धान्ते त्वहं चैत्रो मैत्रो वेति ज्ञानानां प्रामाण्यमेव, देहादेस्तदवच्छिन्नात्मस्वरूपत्वात् । यत्तु शारीरकमीमांसायां 'ब्राह्मणो यजेते'त्यादिवाक्यानि देहमेवाधिकुर्वन्तीत्यध्यासग्रन्थेऽभिहितम् । तत्र ब्रूमहे । यज्ञादेरात्मकर्तृकत्वात्, अन्यथाऽऽत्मनः फलानुपपत्तेः । न हि ब्राह्मणदेहाध्यासावच्छिन्नस्य कर्तृत्वे स्वर्गशरीराध्यासावच्छिन्नस्य भोक्तृत्वं संभवति, वैयधिकरण्यात् । फलानुरोधात्पूर्वदेहाध्यासविशिष्टतत्स्मृतिसंस्कारादिविशिष्टस्वर्गदेहाध्यासादिपरम्परया यागादिप्रत्यासत्तिकल्पनापेक्षयाऽऽत्मन एव । 'ब्राह्मणो यजेते'ति प्रतीतिसिद्धस्य गायत्र्यादिव्यङ्ग्यत्वाङ्गीकारात् । अत एवाहं ब्राह्मण इति सामानाधिकरण्यमुपपद्यते । ननु ब्राह्मणायेति चतुर्थ्यन्तोद्देश्यत्वं देवतात्वं युक्तम्, न तु ब्राह्मणोऽहमित्यादिप्रथमान्तार्थानाम् । सत्यम्, सिद्धस्यैव चतुर्थ्यर्थस्य प्रथमान्तार्थे सम्बन्धकल्पनात् । न चैवं स्वाहा अहं यज इत्यापत्तिः, चतुर्थ्या एव तद्बोधकत्वात् । न चैवं ब्राह्मणोऽहमित्यादेरपार्थकत्वम्, न ह्यत्र देवतात्वेन ब्राह्मणत्वं प्रतीयते, परन्तु सिद्धनिर्देशतया सार्थकत्वात् । एवं शुद्धमातापितृजन्यत्वमपि तद्बोधकं सिद्धनिर्देशतयैवेति नातिप्रसङ्गः,

किन्तु केवलस्यास्यैव व्यञ्जकत्वे सिद्धनिर्दिष्टस्य यज्ञोपवीताधिकारिकत्ववत्कर्माधिकारप्रसङ्ग इति गायत्र्युपदेशस्य व्यञ्जकस्यावश्यकत्वे उपदेश एव विद्यतस्तस्मन्यत्वं तव्यञ्जकम् । 'ब्राह्मणमुपनयीते'ति श्रुतेः, पूर्वमपि ब्राह्मणत्वाङ्गीकारावश्यकत्वात् जातिपक्षस्य साङ्कर्यभयाद्व्याप्यविरुद्धभेदेन नानाजातिकल्पनाकलहप्रस्तत्वाद्विषयताविशेषत्वेऽपि चतुर्थ्यन्तं तद्द्वितीयार्थोद्देश्यताधेदैवतात्वेनैव व्यवहारात् । यथा 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति प्रतीकायामुद्गीथावयवोङ्कारादौ देवतात्वं विनोपास्यत्वानुपपत्तेः । तथा च व्यञ्जकधर्मैर्व्यवस्थिते. चैतन्यमरधर्मं ब्राह्मणत्वादौ 'जन्मना जायत' इत्यादेः विपरीताचरणाच्च तद्विनाशमभ्युपगच्छतां सिद्धान्तैकदेशिनामप्याधुनिकानां दुराग्रह उपेक्षणीय एवेत्यलं विस्तरेण। अंतं पदेति। 'आचार्योऽन्तेवासिनमनुशास्ति'त्यनुशासनसम्बन्धेनाचार्यवत्त्वमनुबर्थः। आचार्योऽन्तर्यामिद्वारकिमान्, अन्तर्यामिकार्यकरणार्थं गृहीतलीलाविग्रहः। स आदिराचार्यो यो वेदव्यासात्मकावतारी। तदाऽवतारोऽपि तत्सम्बन्धात्। ततः स्वमेवंविधस्वरूपं कचिद्गोप्यतया प्रतिष्ठापयितुं वेदान्तविभिपुके स्वावतारे यं स्वाविष्टमाविर्भावयति स आचार्यः। अन्यथाऽन्तर्यामिणः प्रतिजीवं व्यवस्थितनिजरूपस्य प्रतारकता स्यात्। औदासीन्येऽपि दोषद्रष्टृत्वासहिष्णुत्वात्। न हि विधिनिषेधप्रवर्तकस्यौदासीन्यं घटते। अत एवोक्तम्—'ते मन्यन्ते पापकृतो न कश्चित्पश्यतीति नः। तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुष'इति। इन्द्रियदेवाः कदाचिदुदासीना भवेयुः, अन्तर्यामी तु दोषान्निवारयन् गुणेष्वेव योजयेत्। अन्यथेन्द्रियदेवतातुल्यतया व्यर्थतापत्तेः। किन्तु स्वस्यैव वेदतुल्यप्रवर्तकतायां वेदवैयर्थ्यापत्तेर्वेदस्थानीयत्वेन वेदप्रामाण्यनिर्वाहकमाचार्यं प्रकटीकर्तुमनुमेने। सोऽयमाचार्य उपनिषदाचार्यवान् वेदेति। तदुक्तं मैमित्यमिति। सूत्रकारमप्याचार्यत्वेन स्मारयन्ति अंतं पदेति। यत एव गुणजन्यं ज्ञानं न बाधप्रतिबध्यमत एवेत्यर्थः। द्वैपेदेति। स्वतन्त्रो रव इत्यर्थः। श्रुतिः कूजितं मूलं यस्य वर्णनात्मकस्य। तयोरभेदत्वादात्म्यं रसतात्पर्येण। तेन च मर्यादानुसन्धाने पुष्टोऽर्थः फलतीति हृदयम्। मूलत्वं स्वतन्त्रत्वम्। यद्यपि यागीयपशुहिंसाया विहितत्वप्रतिपादकमिदं सूत्रम्, तथापि तत्र यथा सामान्यनिषेधो न बाधको भिन्नविषयत्वात्, तथांशत्वप्रतिपादने प्रसिद्धांशत्वानुपपत्तिर्न बाधिका। अश्वदग्धरथादिपदानामिव प्रमेयत्वेनांशपदवत्त्वेन वोपस्थितांशपदार्थान्वयसम्भवात्तदनन्तरपर्यालोचनायां धर्मिधर्मौ विषयताविशेषात्मनांशत्वं पर्यवसास्यते इति भावः। किञ्च श्रौतविनियोगस्थले प्रकृतिप्रत्ययार्थयोर्व्यवधानाभावात्कर्मत्वान्वये तदपेक्षितक्रियान्वयावश्यकत्वमेव द्वितीयादिश्रुतीनां प्राबल्यम्। एवं तृतीयादिश्रुतिष्वपि यथायथम्। तथा च वेदेऽपि श्रुतिपदस्य प्रकृतसूत्रेण सङ्केतालौकिकबाधाभावायनपेक्षत्वेनाव्यवधानेनैव बोधकत्वमभिमतम्। सर्वस्य चानुभवोऽव्यवहितः, मानाधीना मेयसिद्धिरिति न्यायात्। लिङ्गज्ञानपदज्ञानाधीनामेव मानत्वात्। तत्र ज्ञानं विषयताविशेषान्वयि फलम्। चक्षुरादिकं स्वत एवोपयोगेऽपि विषयताश्रयं गृह्णाति, तत्रापि ब्रह्मण एव मानत्वम्। 'चक्षुषश्चक्षुः' श्रुत्या। तदर्थश्च करणशक्तिरिति वक्ष्यते। स्वप्रत्यक्षमात्रेणोपस्थितमनुभवं पदार्थपदेऽभिधिच्यानुभवविशिष्टस्य पदार्थत्वे तत्तदर्थविशिष्टानुभवस्य वा पदार्थत्वे ध्रुवे पदार्थांसाङ्कर्याय तत्तद्विषयतानां पार्ष्णिकोऽन्वय इत्युक्तं भवति। एवं च समन्वयस्वारस्यमपि, ज्ञानविषयताया एव सर्वत्रान्वयादित्याहुः इत्येवाहेति[१८२]। न ह्यनुभवविषयतानिर्वाहार्थं प्रमाणान्तरमदर्शयत्। अनुकूलतर्कत्वेनापि शब्दोपयोग इत्येवकारार्थः। यत्तु ज्ञानमादाय प्रयोज्यप्रयोजकव्यवहाराभावात्कथं तत्र शक्तिनिर्णय इति समन्वयानुपपत्तिरिति। तत्तुच्छम्। विषयताश्रयमादाय व्यवहारसाम्राज्यात्।

नैयायिकः प्रत्यवतिष्ठते भेदं तु प्रवेशाति[१८३]। हन्तेति। हर्षे। अक्षरात्मके मन्दिरे प्रविश्य तत्र विभवो भविष्याम इत्यनुषयः। शुद्धो भावाङ्कुरः शशास्याशीत्यर्थान्तरव्यननाय निजपदम्। तथा च तादृशभावात्मकवृन्दावनहरिताङ्कुरः शुद्धः। एवं तन्मयतया व्यापकत्वमेवोदीरितम्, 'आसामहो'इत्युक्तः। तदेव चाहुः। अंध्रुरिति। चरणारविन्दवेणुवत्सरिमण्डल इत्यर्थः। तेनैवाहीति। बोधृवैशिष्ट्याद् दृष्टान्तदार्ष्टान्तिकयोरन्वयबोध इत्यर्थः। नैयायिकपक्षपातेनान्यतमः प्रत्यवतिष्ठते स्योदेतदिति। प्रामाणिकत्वागाद श्रुतिर्स्मृतीतीति। तदुदाहरति 'सैषा' इति। 'सैषे' इति। जीवात्मा साक्षिणोऽप्यहंप्रत्ययवेद्यत्वात्। अहमंशस्यानुल्लिखितभेदत्वात् करोत्यादिप्रतीतेश्चान्तःकरणावच्छिन्न एवोदयात्तत्र जीवत्वव्यवहार इति पक्ष एकः। सिद्धान्तस्तु स्वरूपविषयताया एव करोतेर्गदवच्छेदेन

सम्बन्धः प्रतीतिसिद्धस्तदवच्छिन्नत्वसम्बन्धत्वस्वीकाररूपा ब्रह्मणो लोके कल्पनेति व्यपदिश्यते। सेयमियंति वार्त-गण्यानुसारिणामेकेषां परेषां मतम्। स्वरूपैकविषयतायाः सार्वत्र्यरूपायाः स्वीकारेऽवान्तरविषयताया अपि तत्र सत्त्वात्तदनङ्गीकारनिबन्धना पूर्णत्वाख्यातिः। अङ्गीकारानङ्गीकारौ च कार्यकल्प्यौ सर्वेषां विद्यावादिनां चाविद्या-प्रवृत्त्यनुरोधात्क्वचिदपि समानाविति। 'विज्ञानमयः प्राणेषु'। प्राणनये सव्यापारप्राणनविशिष्टेऽपि तद्व्यापारस्य विज्ञानसाध्यत्वात्तत्रापि विज्ञानमयो व्यापकः, तस्य विज्ञानस्य बुद्धिवृत्तित्वभ्रमनिरासाय 'अन्तर्ज्योति'रिति। नित्यविषयताया एव ब्रह्मसम्बन्धत्वायेति तत्त्वम्। अत्र परमते बुद्ध्यवच्छिन्नत्वमपि बुद्धिधर्मः, अणुत्वमाध्यासिकं ब्रह्मणि जीवव्यवहारनिर्वाहकम्। स्वरूपेण तु ब्रह्मणा जीवो व्यापकः, दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमिति यावत्। न्यायमते च सर्वमूर्तसंयोगी। मतद्वयेन चैतद्व्यवस्थानं वादिद्वयोः। वागीशचर्चायां तु चर्चायाम-स्वन्तावधाननियतायां युगपद्विप्रतिपत्तयोऽपि भेदतः प्रामाण्यादेरिव संभाव्यन्ते। इतरथा प्रत्येकविप्रतिपत्-तया ग्रन्थो व्याख्येयः। व्यापकत्वाभावे श्रौतीमनुपपत्तिमुद्भावयति सत्यमिति। जीवपदवाच्योऽनवच्छिन्न-चिन्मात्रेण वा। विधिप्रसिद्धिः श्रौते ब्रह्मणि, निषेधो घटादौ सुलभः। न्यायनये तु स सर्वमूर्तसंयोगी न वा। विधिप्रसिद्धिराकाशादाविति। 'न हीति। तत्त्ववादिसिद्धान्तेरित्यर्थः। अभेदस्वसिद्धान्तानुरोधात्तत्त्ववादिनोऽपि कोटिर्निवादात्मम्। लौकिकानुपपत्तिमुद्भावयति 'किञ्चेति। सकलशरीरव्यापकतया तदवच्छिन्नत्वेनेति यावत्। दार्ष्टान्तिके सन्दिग्धे न्यायमवतारयति 'न चेति। एकदेशिगुणत्वानुभविनृचैतन्यस्य पक्षत्वे बाधः, तद्वारणाय सर्वत्वादिविशेषणम्। न चैवं पक्षतावच्छेदकज्ञानादेव साध्यसिद्धेः सिद्धसाधनम्। अवच्छेदकावच्छेदेन साध्य-सिद्धेरुद्देश्यत्वात्। संयोगसम्बन्धेनात्मशून्यतत्तच्छरीरावयवे समवायेन स्वरूपेण वा वृत्तित्वं साध्यम्। परिच्छि-न्नवृत्तिभिन्नगुणत्वं हेतुः। य एवंविधो गुणः स स्वाश्रयाधिकदेशवृत्तिरिति सामान्यतोमुखी व्याप्तिः। यथा वायोः प्रत्यक्षत्वसन्देहे तदीयस्पर्शस्य प्रत्यक्षत्वम्। तथा चन्दनावयवानां प्रत्यक्षाभावेनानुमानस्य चानुकूलतर्कोद्भाव-प्रवृत्तेः शीतस्पर्शदेशवर्तिनो मानाभावेन न दृष्टान्तासिद्धिः। अनुमानेनाणुत्वमिति। पक्षधर्मतावत्त्वादित्यर्थः। पक्षे निरुक्तसाध्यासत्त्वे धर्मिणो व्यापकत्वपर्यवसानादिति भावः। दूषयति हेत्वसिद्धेरिति। यथाश्रुतानुरोधेन क्व-चित्सिद्धौ सिद्धसाधनमित्याह 'सौख्येत्यादि। सिद्धे जीवस्येति। जीवस्य सिद्धे इत्यन्वयः। तथा सति संयोगेन तच्छून्यदेशे सिद्धौ तदात्मानं विहाय हेतोः सिद्धिसत्त्वदशा न तत्सिद्धिरित्याहुः 'अन्योन्येति। यत्तु समवाये-नाधिकदेशवृत्तित्वे साध्ये तद्देशस्थात्मत्वापत्तेर्देहेऽनेकात्मवादप्रसङ्गः। सम्बन्धान्तरेण साध्ये सिद्धसाधनम्। नैयायिकैरपि कालिकविशेषणत्वविषयत्वादिना तदङ्गीकारात्। समवायेनैवात्माऽतिरिक्ते ज्ञानाद्यनभ्युपगमस्य तेषां सत्त्वादिति, तत्रोच्यते निरुक्तकालिकादितत्सम्बन्धातिरिक्तस्वरूपसम्बन्धेन साध्यता शीतस्पर्शादेरपि तथैव, तत्प्रत्यक्षदृष्टान्तसिद्धानुमानस्य तथैव प्रवृत्तेः। अत एव देशान्तरस्थात्मत्वापत्तिरपि प्रत्युक्ता। अतिरिक्तसम्बन्ध-कल्पनापेक्षयाऽवयवानामेव तत्र गमनं किमिति न रोचताम्। एवमात्मनो वैभवमपीति चेत्, मैवम्, तदवयवा-नामेकैकशो वा तावत्सम्बन्धकल्पनापेक्षयाऽतिरिक्तसम्बन्धकल्पनाया लघुत्वात्। एवमात्मनोऽनन्तमूर्तक्रियाधी-नानन्तसंयोगकल्पनापेक्षया तद्धर्मज्ञानसम्बन्ध एवातिरिक्त इत्यपि लाघवम्। ननु चाहं ज्ञानवानिति देशान्त-रानवगाही प्रत्ययो युष्माकं बाधकः। शीतस्पर्शस्तु स्यादधिकदेशवृत्तिः, इदमेव चन्दनशैत्यमिति प्रत्ययादिति चेत्, सत्यम्, अत्रैव चन्दनसम्बद्धशीतस्पर्शसम्बन्धवदात्मनः बद्धज्ञानसम्बन्धस्य सुखादिसम्बन्धस्य चाहं ज्ञानवानिति प्रत्ययविषयत्वात्, ज्ञानविषयस्य देशाव्यवस्थयैव ज्ञानव्यवस्थोपपत्तेः। घटादिज्ञानस्य च शुद्धात्माधिकरणकत्व-मेवेति किमनुपपन्नम्। अयं चानुभवः शीर्षे मे सुखमित्यादिरूपः सुखसम्बन्धो वा, स्वगततया तदवच्छेदेन प्रतीयते तत्र स्वाश्रयसत्तां नापेक्षते, सम्बन्धविशेषेण स्वप्रतीत्यैवोपपत्तेः। न चैवमवच्छेदकत्वं तेषां दुर्घटम्। अवच्छेदकत्वस्यात्मनोऽनङ्गीकारेऽपि सुखज्ञानादेरेव तत्त्वात्तदवच्छिन्नसुखादिसम्बन्धस्यात्मनि प्रतीतिविषयत्वात्। एवं च न गन्धगमनं न वा ज्ञानादेरिति निष्कर्षः। अपि च शीतः सुरभिर्पांशुरित्यस्य प्रत्ययस्य भ्रमत्वमनुभवबा-धितमिदम्, तत्र सन्निहितावयववर्तिनो (वरस्य) पुष्पवर्तिनो वा गन्धस्योपनीतभानमेव। लौकिकविषयत्वमपि स्फुटितलक्षणवायप्रत्यक्षोद्बुद्धं पश्यामः। किञ्च भवन्मतेऽवयवाद्वौ लौकिकविषयताश्रयेऽपि तद्गन्धांशेन

गन्धप्रत्यक्षानुदयात् भ्रममात्रस्योपपाद्यत्वात् । अत एव घ्राणादेर्द्रव्याग्राहकत्वम् । अनन्तावयवसंयोगापेक्षया लाघवात्सन्निकर्षमात्रोपपादनार्थमवयवसत्त्वाभ्युपगमे स्वसंयुक्तदेशावच्छेद्यत्वमेव वैज्ञानिकं सम्बन्धोऽस्तु । कुङ्कुमसंस्कृताम्बरवर्णप्रत्ययोऽपि न स्वाश्रयाध्यासनिबन्धनः, किन्तु स्वाश्रयसंयोगावगाही, न्यायविदां कदाचित्तेषामपि स्फटिकादभ्यवभ्रममूलेऽप्यस्माकमतिरिक्तसम्बन्धावगाह्येव सः । स चान्ततः सर्वज्ञविषयतैव सम्बन्धपदेऽभिधिच्यत इति विवादमन्दिरगवाक्षान्तरम् । कुसुमादभ्यसम्बन्धोऽप्यनेन व्याख्यातः । तदभिध्यानं च सौत्रम् । स्यादेतत्, अन्तर्यामिदेश एवाणुजीवदेशो वाच्यः, निबिडयोरेव मूर्तयोः समानदेशताविरोधेनानयोस्तेजसोरिव विरोधाभावात्, श्रुतिस्मृतिविद्वत्प्रतीतिप्रामाण्याच्चेति चेत्, एवमेतत् । [१८१] एतेनेति । विवादलीलास्थभ्रमरोक्तिरियम् । पूरणसम्भवादिति । भ्रमरभोग्यारदैन कमलावयवानां पूरणसम्भवादित्यर्थः । अन्यथानुपपत्तेरिति । उक्तानुमाने परिच्छिन्नवृत्तिभिन्नगुणत्वस्य कारणं विहाय कार्ये आपाततो दृष्टस्य रूपादेरपि सम्भवेन तत्रापि निरुक्तसाध्यस्वीकारे पटरूपस्य पटादावप्यतिप्रसङ्गात्स्वाश्रयापरित्यागेन गुणसत्त्वसाधनानुपपत्तेर्यलिङ्गत्वाद्, उक्तानुमानतोऽपि बलिष्ठत्वात्तत्रातिप्रसक्तेः प्रतिकूलतर्कत्वादिति भावः । स्वाश्रयापरित्यागे रूपादौ दृष्टे कारणत्यागोऽपि रूपादौ नास्तीति तन्मताभिप्रायादित्यर्थः । अदृष्टकल्पनाऽधिकदेशवृत्तित्वकल्पना दृष्टे गन्धादेरधिकदेशवृत्तित्वे संभवति नादृष्टावयवसत्त्वकल्पनेति प्रकृतन्यायो वादिनेऽपि प्रत्यक्षमिति, किन्त्ववयवानामप्रत्यक्षत्वादनुमानं कर्तव्यम्, तथायं गन्धः स्वाश्रयसंयुक्तवायुसम्बन्धी, द्रव्यसमवेतगुणत्वात्, स्वाश्रयद्रव्यसमवेतपीतिमेव वसनसम्बन्ध इति । उपनीतवायुसम्बन्धित्वेन गृह्यमाणो गन्धः स्वाश्रयसमवेतः, तादृशगुणत्वादिति वा । तत्र चानुकूलतर्कविरहः । अनीदृशे घटादिगन्धे व्यभिचारश्च । न चोभयत्र पक्षसङ्कोचः । तर्हि गन्धान्तरस्येव स्वाश्रयसमवेतत्वमात्रं सिद्ध्यतु, न तु स्वाश्रयसंयुक्तत्वान्तर्भावेण, येनावयवसंयोगकल्पना स्यात् । न च तेन वाय्वादिसम्बन्धो बाध्यते, स चास्तु या काचित्परम्परा, वैज्ञानिको वा, सैद्धान्तिकः । अनेकदेशघटितपरम्परया अनन्तावयवघटितसम्बन्धस्य या कल्पनातीत्यात् । अनुमानाधीनसिद्धिकसम्बन्धकल्पनापेक्षया स्वपरम्परायाः सम्बन्धत्वकल्पनस्य लघुत्वाच्च । अथैतत्प्रसङ्गमध्येन मध्ये व्याविद्धयितुं कश्चिदुज्जृम्भते–यां नित्यविषयतां संसर्गत्वेनाभ्युपैषि, सा भ्रान्तिज्ञविषयता न भ्रान्तज्ञानसम्बन्धो भवितुमर्हति, भ्रान्तानामभ्रान्तरवत्स्वेश्वरे भ्रान्तत्वस्य च प्रयोजकत्वादिति चेत्, नहि तदभाववति तत्प्रकारावगाहित्वेन तस्याः सम्बन्धत्वम्, अविद्धेः । परन्तु तत्त्वतरत्वेन समुद्गमवलम्ब्यमानायाः सकलतेजोमयसुदर्शनस्येव सम्बन्धत्वं यदाविश्चकार भगवान् रथाङ्गपाणिस्तिलकपात्रिकायामपि नैतावता रथाङ्गचक्रयोः स्वरूपविपर्ययः । एवं सार्वज्ञविषयतायाः प्रतिव्यक्तिसम्बन्धाया न भ्रान्तविषयतात्वम् । न वा भ्रान्तिविशिष्टज्ञानस्य सार्वज्ञविषयतात्वम् । प्रत्येकमादायांशतः प्रमात्वं स्यादिति चेद्, भवतामपि समानत्वात् । यदि च सार्वज्ञविषयताया अपि विशिष्टवैशिष्ट्यविषयतात्वं व्यवस्थापयिष्यतेतरां, तदा ताद्रूप्येण न सम्बन्धत्वं, किन्तु विशिष्यविषयकत्वेनेत्येवं प्रत्यक्षयोर्व्यासङ्गे मणिप्रभाप्रभावेन प्रतिवादी प्रतिकूलाक्रमायान्तं प्रतिरुणद्धि नेति चेति । इदं च प्रभा तेजसो रूपमिति सिद्धान्तानुसारेण रूपत्वे मणित्यागयोगात्मायं सिद्धान्तः परैः क्षम्यत इत्याह द्रव्यान्तरत्वादिति । वस्तुतस्तु रूपं प्रमेत्येव सिद्धान्तः । तथाहि तस्या द्रव्यान्तरत्वे तदारम्भको न मणिः, प्रभायास्तस्याः सान्द्रावयवित्वापत्तेः, मणेरन्त्यावयवित्वाच्च । नापि मण्युपष्टम्भकतेजोभागास्तदारम्भकाः, उपष्टम्भकानामनारम्भकत्वदर्शनात् । अतिरिक्तकार्यकारणभावकल्पनामपेक्ष्य रूपस्यैवाधिकदेशवृत्तितायाः स्वीकर्तुमुचिततरत्वात् । इदमपि सिद्धान्तोपष्टम्भकम्, तद्वैतदुपधानीकृत्यावस्थितान् प्रभून् प्रतिवादी पुनः प्रत्याह 'धंसेनं चेति । अत्र प्रदीपसूर्यादिमण्डलोपष्टम्भकानां तेजसां द्रव्यारम्भकत्वे तूक्त एव दोष इति स्मर्तव्यम् । धर्मधर्मिणोर्भेदाभेदाविति यथाश्रुतप्रकाशाश्रयसूत्रानुरोधिनः । दुर्ज्ञेयत्वेत्याभिप्रायमिति । ननु दुर्ज्ञेयत्वं मनःप्रणिधानादिव्यापारमन्तरा परमात्मन एव, न तु जीवस्य, अहंप्रत्ययवेद्यत्वात् । एवं निर्विषयत्वलक्षणं दुर्ज्ञेयत्वमपीति चेत्तत्राहुः तर्क्योदिति । परमात्मस्वरूपत्वादेवेत्यर्थः । नैयायिकमते त्वणुत्वपाश्चयोपपत्तिरणुमनःसंयोगित्वार्थकत्वेनेति बोध्यम्, शब्दार्थत्वानेकधोपपत्तेः, अन्यथाऽहं महानिति प्रत्ययानुपपत्तेरिति भावः । अत्र वदन्तीति । भगवदीयत्वेन

न्मस्य विभुत्वं व्यक्तीकर्तुं बहुवचनम्। विभुत्वमेव हि सर्वसंयोगसादात्म्यं वा बहुत्वनिर्वाहकम्। तेनैवसूत्रेति। 'नानात्मानो व्यवस्थात' इति न्यायपञ्चाध्यायीसूत्रस्य तत्त्वसूत्रैकवाक्यतयेत्यर्थः। तत्र हि नानात्वमेवोक्तं, न तु व्यापकत्वम्। आत्मपदं तु रूढम्। अतति व्याप्नोतीत्यर्थे आकाशादावतिव्याप्तेः। अयं भावः, यत्र नानात्वं तत्राणुत्वं मध्यमपरिमाणवत्त्वं वा, घटपरमाण्वादौ दर्शनात्। द्रव्यत्वे सतीति विशेषणान्न गुणादौ व्यभिचारः। आकाशादौ यत्राणुत्वाभावस्तत्र नानात्वाभाव इति व्यतिरेकसहचारोऽपि। यदि च व्यापकानामाकाशादीनामानन्त्यवत्प्रतिजीवानामपि नानात्वं व्यापकत्वाविरोधीत्युच्यते, तथापि यद्धर्मावच्छिन्ने व्यापकत्वं तद्धर्माकाशत्वाद्यवच्छिन्ने न नानात्वमिति नियमः। नन्वयमप्यनियमः, भेदप्रतियोगित्वस्यैव नानात्वपदार्थत्वादिति चेत्, न स्ववृत्तितत्तद्व्यक्तित्वावच्छिन्नभेदप्रतियोगित्वस्य नानात्वपदार्थत्वात्। आकाशवृत्त्याकाशव्यक्तित्वावच्छिन्नभेदाभावेन तादृशरूपेणाकाशस्य धर्तुमशक्यत्वात्। न चैवंविधनानात्व एव को नियमः, घटादयो नाना, नाकाशादय इत्यादिव्यवहारस्यैव नियामकत्वात्। यदि चाकाशादीनामीश्वरत्वं तदेश्वर एव व्यापकः। भेदवादिनां जीवाणुत्वमेव स्यात्। जीवा अणवः, ईश्वरभिन्नद्रव्यत्वात्, परमाणुवत्। पक्षस्याहंप्रत्ययवेद्यस्य विभुत्वाणुत्वसन्देहेन तत्र च व्यभिचारस्यादोषत्वात्। अणुत्वं चात्र विभुभिन्नत्वम्, तेन घटादौ न व्यभिचारः। न चात्मभिन्नत्वमुपाधिः, जीवात्मभिन्नत्वस्य जीवभिन्नत्वस्यैव वा तथात्वे वक्तव्ये पूर्वत्र विशेष्यवैयर्थ्यादुत्तरत्र पक्षेतरत्वात्, आत्मभिन्नत्वस्यापि पक्षेतरतौल्यात्। न च पक्षतावच्छेदकावच्छिन्नेतरत्वमेव पक्षेतरत्वम्, वह्नौ कृतकत्वेनानुष्णत्वे साध्येऽतेजस्त्वादेरुपाधित्वात्। न चायं बाधोन्नीतः संप्रत्यय एवेति वाच्यम्, अणुत्वबाधानिर्णयात्। न चाहं महानिति प्रत्यक्षाद्बाधः, महत्त्वस्य आढ्यत्वादेरिवोत्कर्षविशेषरूपत्वात्। नव्यैरात्मनोऽपरिमितद्रव्यत्वाङ्गीकारात्। तदाऽणुत्वमप्यखण्डधर्मान्तरमंशत्वं वा निरुक्तप्रायं, न तु महत्त्वस्य कथञ्चित्प्रत्यक्षगम्यत्वमपि। तव परिमाणरूपमतिरिक्तं चास्तु यदि प्रत्यक्षानुरोधः। अणुत्वं तु सर्वथैव न प्रत्यक्षगम्यम्। अनुमानं तु प्रसाध्यात्मकं, शब्दस्तूभयपक्षपातः, उभयथाप्युपलम्भादिति चेद्, मैवम्; ईश्वरभिन्नत्वेन जीवाणुत्वस्य साधितत्वात्। न चाप्रयोजकत्वम्, तर्कस्य वक्ष्यमाणत्वात्। किञ्च जीवा अणवः, बहिरिन्द्रियाग्राह्यगुणवत्त्वात्, उक्तनानात्वाद्वा (आत्मनो वद) अन्यन्तरवद्वा। अणुगुणत्वे सुखादीनां मानसं न स्यादिति तु नाशङ्क्यम्। गुणयोग्यताया अननुगतत्वात्। अपरिमितत्वमतेऽपि महत्त्वाभावेन तदनुपपत्तिपरिहारार्थमुक्तगतेरेव शरणीकरणीयत्वात्। अत एवात्मनोऽपि मानसं न स्यादित्यपास्तम्, द्रव्यलौकिकचक्षुरादौ महत्त्वापेक्षायामपि मानसप्रत्यक्षे तदपेक्षायां प्रमाणाभावात्। असति बाधके महानिति प्रत्ययो महत्परिमाणविषयक एवेति तु न वाच्यम्, तादृशप्रत्यये विवादात्, अहमित्येव प्रतीतेः। अत एव तदेकत्वपरिमाणे गौण्ये इति टीकाकृतः। गौरवत्वकल्पने गौरवादित्यादितदाशयात्। अत एव चापरिमितद्रव्यत्वं नवीनाः समामनन्ति, अन्यथा तत्प्रत्यक्षाप्रामाण्यप्रसङ्गात्। तस्मात्तादृशप्रत्यये अणुप्रत्ययेऽपि विवादात्। एतन्मतेऽणुत्वमणुमनःसंयोगाश्रयत्वमेव। सिद्धान्तेऽप्यक्षतेः। किञ्च महत्त्वेऽणुत्वे वा निरवयवत्वाविशेषादुभयोः संयोगो नावयवावच्छिन्नः, परमाणुद्वयसंयोगस्यापि सन्निहितदेशावच्छेदकत्वेन सावच्छिन्नत्वमात्रे संयोगस्य नियमपर्यवसानात्। तत्र किं नाम गतिप्रधानम्, स्वसंयुक्तत्वस्य संयोगावच्छेदकविरहेणैव परास्तत्वात्। स्वसंयोगे प्रदेश एव स्वावयवानिरवच्छेदक इति चेत्, तदिदं वाचितकमण्डनम्, निरवयवद्वयसंयोगोपपादने प्रस्तुते तयोः प्रत्येकं देशं संयोगसमर्थनार्थं देशावयवानां परमाणुपर्यन्तानां संयोगस्थाप्यो महद् समर्थनीयः। तत्र पुनः परमाणुसंयोगासम्भव इति पक्षद्वयं प्रमाणम्। द्व्यणुकपर्यन्तानामेवैतैरिति चेत्, सोऽयमवयवसंयोगजो न वा, नाद्यः, तदनुपपत्तेः। नान्त्यः, कर्मजन्यस्य संयोगजन्यत्वनियमात्। अवयवसंयोगो नैवमिति चेत्, अणुद्वयसंयोगोपपादनार्थमवच्छेदकवदस्यावश्यापेक्षणीयत्वात्, तत्र च पूर्वोक्तिवादवरस्थ्यात्। प्रकृतमनुसरामः। एवं च मनसो जीवस्य चाणोर्महतो वा संयोगसम्भवत्वात्, ज्ञानानुत्पत्तिरूपायां प्राप्तायां तत्प्रतिक्रियार्थमात्ममनसोर्मनइन्द्रियाणां च 'अणवश्चे'ति सूत्रान्तमेव प्रोक्तं व्याप्तिरूपसंसर्गं स्वरूपसंसर्गं वा प्रत्युपस्थापयति, अन्यथाऽनुपपत्तेर्वक्तव्यत्वात्। एकदेशिनस्तु मनसोऽणुत्वाभावं

जीवाणुत्वेऽप्यवतारयन्ति–'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' । मनोऽणुत्वमेव युज्यते । तथाहि मणिकृतः, चाक्षुषज्ञानवतो मैत्रस्य स्वस्वविषयसम्बद्धानि त्वग्रसनत्वक्श्रोत्राणि स्वस्वविषयसाक्षात्कारहेतुसंयोगशून्यानि, तदानीं स्वस्वविषयसाक्षात्काराजनकत्वात् पटवत् । एकैकं वा पक्षः । अन्यथा हेतुना कल्प्ये युगपज्ज्ञानोत्पत्तिप्रसङ्गः । न च वैभवेऽप्यदृष्टविलम्बाद्विलम्बः, तदितरसाकल्ये तस्यापि सत्त्वात् । इन्द्रियान्तरविलोपश्चैवं स्यात् । न च बुभुत्सावशात्क्रमः, दृश्यते हि रूपदर्शनवतोऽभिमतविषयान्तरज्ञानमिति वाच्यम् । सा हि न स्वविषयज्ञानहेतुः, अबुभुत्सितेऽपि ज्ञानोदयः । नाप्यन्यज्ञानप्रतिबन्धिका, घटबुभुत्सायां पटज्ञानोदयात्, किन्तु सा क्रियाहेतुमनोगोचरप्रयत्नद्वारेन्द्रियान्तरादाकृष्याभिमते इन्द्रियान्तरे मनो निवेशयन्ती बुभुत्सितग्रहे हेतुरन्यग्रहे प्रतिबन्धिका च, न तु साक्षात् । अत एव सा सत्यपि मनोगोचरप्रयत्नाभावेऽनुपयुक्तैव । अथ मनोवैभवेऽपि करणधर्मत्वात् क्रियाक्रमः । यथैकं करणमेकदैकत्रैकामेव क्रियां जनयति, नान्यामित्यत्र व्यक्तिस्थानीयताऽपत्तिः कथं वारणीया । तथा चेन्द्रियाणां मिथः कलहप्रसङ्गः । अष्टावधानेऽपि ज्ञानक्रमानुमानमेवेति महता प्रबन्धेन मनसोऽणुत्वं व्यवस्थापयाञ्चक्रुः । तदिदं जीवाणुत्वेऽपि समानम् । तथाहि–चाक्षुषज्ञानवतो मैत्रस्य मनःक्रियाहेतुकश्चक्षुर्मनःसंयोग आत्मनः संयोगश्च वाच्यः । तथा चेन्द्रियात्मसंयोग एवास्तु, चक्षुर्विजातीयक्रियया चक्षुरात्मसंयोगकाले घ्राणाद्यात्मसंयोगाभावाच्च ज्ञानयोर्यौगपद्यम् । सुखादिप्रत्यक्षानुरोधाच्च मनःसिद्धिरपि । न चोभयक्रिययोभयेन्द्रियात्मसंयोगे ज्ञानयौगपद्यापत्तिरित्यपि साम्प्रतम्, मन्मते जीवात्माणुत्वाङ्गीकारेण युगपत्संयोगद्वयासंभवात् । किञ्च भवन्मते परमनसा परात्मप्रत्यक्षापत्तिवारणायात्ममनःसंयोगे वैजात्यमभ्युपेयमिति तत्तन्मनोयोगवैजात्यानां कल्पनागौरवं, न त्वस्मन्मते । यत्रैकस्यैव विजातीयक्रियया तत्तद्देशावच्छेद्य उभयात्मसंयोगः, तत्र परात्मप्रत्यक्षापत्तेर्दुर्वारत्वाच्च, विजातीयक्रियाया एव विजातीयसंयोगनियामकत्वाङ्गीकारात् । फलबलकल्प्यं तदिति चेत्, क्रियावैजात्यस्य फलं विजातीयात्ममनःसंयोगः, तस्य चातीन्द्रियस्य बलस्य शपथनिर्णेयत्वात् । न च प्रत्यक्षात्मकफलाभावेन तादृशसंयोगाभावमनुमाय क्रियावैजात्याभावानुमानमिति वाच्यम्, तथापि तादृशवैजात्यस्य वाङ्मनोयोगवृत्तित्वमादाय विनिगमनाविरहात्, अनन्तकार्यकारणभावप्रसङ्गात् । अपि च तत्पुरुषीयात्ममनोयोगवृत्तिवैजात्यमेवानतिप्रसक्तं वाच्यम् । तथा च युक्त्ययुक्त्या पुरुषान्तरीयमनोयोगवृत्तिवैजात्यस्य तस्य च परस्पराभावसमानाधिकरणस्य सामान्यत आत्ममनःसंयोगे सामानाधिकरण्यात्साङ्कर्यम् । तत्रापि सामान्यकारणताया अनतिप्रसङ्गाय वैजात्यावच्छिन्नत्वात् । तस्मान्महागौरवादात्मनो विभुत्वानङ्गीकार एव साधीयान् । अनुपपत्त्यन्तरपरिहारश्च मूलव्याख्यान एव विशदीभविष्यति । तथाप्यात्मनो वैभवं किमिति त्यज्यत इति चेद्, भगवद्वैभवेनैवास्माकं वैभवमित्याद्यभिसन्धायाहुः अन्यथा त्वन्यथेति । यदि तत्तत्सूत्रानुसारेण न वेदार्थनिर्णयो नापि सूत्रान्तरनिर्णयस्तर्हीत्यर्थः । अत्र च 'तेभ्य एवाणुरेव चे'ति पूर्वकारिकायामुभयं प्रतिज्ञातम् । तत्रांशत्वेनांश्यभेदस्य तादात्म्यलक्षणस्य समर्थनमिति तत्प्रतिज्ञा प्रामाणिकी । तथा चाधितादात्म्य एवाणुरिति नोपपद्यते, अत एव दुर्ज्ञेयत्वाभिप्रायोऽपि न । 'चेतसा वेदितव्य' इत्युक्तेः । चकाराद्भगवदीयं व्यापकत्वमपि । तदुक्तं निबन्धे 'व्यापकत्वश्रुतिस्त्वस्य भगवत्त्वेन युज्यत' इति । योगस्वरूपयोग्यता भगवन्तसम्भवानाम् । 'यद्गीतेनेदम्' 'याभिरप्यावृत'मिति तद्भावार्थः । यत्र यत्र भगवांस्तत्र तत्र भक्तस्वरूपतो गुणतश्चेति व्याप्तेः । न च भक्तानामानन्त्याच्च वैभवमिति वाच्यम्, भगवदानिष्टत्वेन तेषामभेदात् । एवं चान्यथैवेत्यस्य सूत्रमात्रविश्वासाभावे युक्तयोऽप्यस्मदुक्तरीत्या अनुसन्धेया इत्यर्थोऽपि द्रष्टव्यो मीमांसाकृत्त्वात्प्रस्तुतमन्यस्येति । इति । 'महानज आत्मा योऽयं विज्ञानमय' इति । जीवप्रकरणमपीदम्, बोधाभिधानात्, बन्धविषयताभिधानाद्वा, 'प्राणेष्वि'त्युक्तेः, तथापि 'हृद्यन्तर्ज्योति'रित्युपसंहारानुरोधाद्वाक्यान्तरानुरोधाच्च महाप्रकरणं ब्रह्मण एवेत्यत्र सूत्रकारं प्रमाणयन्ति रेतेति । अधिकाराद् प्रकरणाद् वृत्तिनिजविषयताया एव नियतसंसर्गे बन्धत्वाङ्गीकारादिति हृदयम् । न्यायपक्षपातिनमन्यतममनुक्षिपन्ति अक्षपादीयानामिति । मननभ्यासरूपस्य महर्षेस्त्वपरोक्षो माभूदिति चरणेऽप्यस्मै भगवता चक्षुषी दत्ते इत्यक्षपादीयत्वात्तदीयानां दृष्टान्तता । अयमाशयः–'ययोर्द्वयोरेकतरमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ' इत्युक्तेऽपि नियामके । तथा च यथा घटनाशेऽपि तं विहाय घटत्वे समवायः स्वाश्रयि । कथ

न यथं रूपादिकं विहाय तदाश्रये समवायः स्यादिति, तथा गुणो गन्धादिरप्येकमाश्रयं विहाय समवायेनैवान्यमपि स्याश्रयतीति । न च समवायस्य गुणस्य चाऽपराश्रितत्वे नियतावेव सम्बन्धिनौ नियामकौ, येन गन्धादिसमवायः पूर्वाश्रय एव वर्तेत, तथा सत्युभयोर्नाशे कालेऽपि न वर्तेत । कालिकेन वृत्तौ नायं नियम इति चेत्, समवायेन वृत्तावेवायं कः कुलधर्मः, इदानीमित्यादिवदिह वायौ सौरभमिति प्रतीतेर्निरङ्कुशत्वात् । अत एव 'दूरा' दिति श्रुतेश्च, सूक्ष्मावयवसञ्चारकल्पनायां मानाभावः । न च समवायेन गन्धाश्रये देशान्तरे जलादौ वा पृथिवीत्वापत्तिः, पृथिवीत्वजातेरेव तल्लक्षणत्वात् । विषयसद्भावासद्भावाभ्यामेव प्रत्यक्षाप्रत्यक्षोपपत्तेर्गन्धादिमत्त्वपृथिवीत्वादेर्व्यञ्जकव्यञ्जकभावे मानाभावात् । अत एव नियतसंस्थानादेर्जातिव्यञ्जकत्वमिति प्रभाकरमतमपि प्रत्युक्तम् । ननु समवायेन गन्धोत्पत्तौ पृथिवीत्वेन कारणत्वात्कथं स्वाधिकदेशे गन्धस्य वर्तनमिति चेत्, न वयं स्वाधिकदेशे उत्पत्तिसम्बन्धेन गन्धवत्तामुररीकुर्मः, उत्पत्तेः सम्बन्धघटकत्वे गौरवात् । अत एव नोत्पत्तिर्न कार्यतावच्छेदकमपि । समवायेन गन्धवत्तानियामकः स्व एवास्तु देशो यत्र गन्धः प्रतीयते, न तु तद्देशसंयुक्ततत्तत्पृथिव्यवयवा एव । तेषां चाक्षुषस्पार्शनाद्यभावादयोग्यत्वेन तदीयगन्धस्यायोग्यत्वात् तद्ग्रहप्रसङ्गात् । उपलभ्यमानगन्धः स्वप्रकारकप्रतीतिविशेष्यसंयुक्तद्रव्याश्रयः, तत्तत्पृथिव्यवयवाश्रयो वा, पृथिवीगुणत्वादित्यनुमानात्पृथिवीसमवेतत्वं सिद्ध्यतु, न तु यथोक्तसाध्यम् । घटादिगन्धादावपि तत्सिद्ध्यापत्तेरर्थान्तरप्रसङ्गात् । नापि द्वितीयसाध्यसिद्धिः । पक्षविशेषणवाय्वादिविशेष्यप्रतीतिविशेषकत्वमुपलभ्यमानत्वम्, तदवच्छिन्नगन्धस्य पृथिव्यवयववृत्तित्वसाधनेऽर्थान्तरत्वात् । सिद्धे च पृथिव्यवयववृत्तित्वे वाय्वादिविशेष्यकत्वस्य प्रतिनिरूप्यत्वं, तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयात् । अन्यथा वाय्वादिविशेष्यकत्वोपपादनायोगात् । न चैवं पृथिवीत्वेन कारणतायां व्यभिचारः । गन्धस्य देशान्तरे वाय्वादौ समवायमात्राङ्गीकारात्, समवायैक्यमतेऽपि समानत्वात् । विशिष्टाधिकरणतायाः सम्बन्धत्वे तत्र तत्र प्रतीतिनियामकस्वरूपस्यैव सम्बन्धत्वम्, विनिगमकाभावादिति बोध्यम् । प्रत्येकमादाय गौरवानवकाशात्, तत्र तत्रोत्पत्तेरनङ्गीकारात् । न च समवायेन वृत्तावुत्पत्तिमत्त्वम्, तत्राणुगन्धे गुणान्तरे च नित्ये व्यभिचारात् । न चैवं नित्यतुल्यत्वम्, पृथिवीजन्यत्वेनैव जन्यत्वात् । अवयवनिर्गमपक्षेऽपि यद्देशे ते गच्छन्ति, तत्र देशान्तरेऽपि तदतिप्रसक्तेर्वारणाय देशानां तेषां नियामकताया आवश्यकत्वात् वस्तुत आविर्भावप्रन्थे समवायपदस्य स्वरूपसम्बन्धेऽपि प्रयोगात्प्रकृतेऽपि स एव स इत्यलं पल्लवेन । साधारणी योग्यतामाशङ्कते ननु रूपैरसादीनामिति । तत्तद्व्यक्तित्वेनैवाभावादियोग्यतावदनुगतैव गुणयोग्यतेत्याशयेन समाधत्ते ईर्षादेचेति । तिष्ठेयुरेवेति चेत्तर्हि प्रतीतेरभेदेति भावः । स्यादित्यापाततः । सितामाधुर्यादीनां दुग्धादौ प्रतीतेः, तत्राप्युत्करीतेरवतारात् । अतद्गुणसंविज्ञानाद्रूपादीनामित्यर्थ इत्यपि न, कुङ्कुमरूपादेरप्यन्यत्र प्रतीतेः, कस्मिंश्चिद्द्रव्ये गुरुत्वद्वयप्रतीतावपि पुष्पादौ तदप्रतीतेस्तत्रैव गुणानां नियताश्रयानैकान्त्यात्, तथापि साधारणी योग्यतेत्यभिमानेन शङ्कते चैरूपकावयवानामपीति । चेदित्यनन्तरं नेत्यध्याहारः । तथा चेयं कल्पनेव वितथा । तथाहि सर्गादौ विभक्ताः परमाणव ईश्वरेच्छातः संयुज्यन्त इति हि तन्मतम्, तस्याश्चेच्छाया द्रव्यारम्भविषयकत्वं, न तु खण्डद्रव्यपूरणविषयकत्वम्, पूर्णद्रव्योन्मज्जनापत्तेः, समपरिमाणतापत्तेः, खण्डघटादेरपि पूरणापत्तेश्च । यदि च फलानुरोधाद्यावदनिमतविषयकत्वं तदिच्छाया इति मन्यते, तदा निबिडमूर्तयोः समानदेशताविरोधात्पुष्पादौ द्रव्यान्तरं तज्जातीयमुत्पाद्यत इति न शक्यते वक्तुं, किन्तु तदेव पुष्पं परिमाणभेदाद्द्रव्यभेद इति न्यायेन द्रव्यान्तरत्वमापाद्यते । पूरणेनेत्युच्यमाने परिमाणभेद एवास्तु, न द्रव्यभेदः, अनुकूलतर्काभावात् । अनुपपत्तिरूपप्रतिकूलतर्कावतारासम्भवाद्द्रव्यान्तरत्वापादनमिति रिक्तं वचः । एतेन धर्मपुष्पादिजनकतावच्छेदकतयेश्वरकृतिसिद्धिरित्यपि न स्वाभिमतम्, खण्डद्रव्यधर्माण एव हि तद्विषयकत्वस्येश्वरेच्छया वक्तुं शक्यत्वात्, तत्रैव च मानाभावात् । अस्त्वेवम्, अवयवनिर्गमः पूरणं चोपपन्नमेवेति चेत्, तत्र तर्कयन्ति 'नैन्विति । अङ्गीकुर्वन्नित्यनेन सम्बन्धः । लोकस्य गुणिनं विहाय गुणानवस्थाननियमस्यानुरोधेन निर्गमपूरणयोः कल्पनेऽपि पूर्वद्रव्यं नष्टमिति प्रतीतेरभावात्तत्पूरणस्य वैयर्थ्यपरिहाराय द्रव्यान्तरत्वापादनमेव प्रयोजनं वाच्यम् । तथा च पूर्वद्रव्येण सह समानदेशताविरोधः । नन्वत एव पूर्वद्रव्यनाशः, प्रत्यभिज्ञा च

तज्जातीयत्वं विषय इति चेद्, न, नासाप्रत्यक्षात्, अनुमानस्याप्रयोजकत्वात् । तज्जातीयत्वं विषय इत्यपि मन्दम्, पटत्वद्रव्यत्वादेस्तु जातेस्तत्र केनापि प्रमाणेनाविषयीकरणात्, अनुमानस्य चाप्रयोजकत्वात् । अन्यथाऽऽद्यखण्डपटादखण्डपटो विलक्षण इति पूर्वपूर्वघटवैजात्यान्तरप्रसङ्गेनानन्तजातिकल्पनापत्तेः । एतेन पीलुपाकवादिनः प्रत्याख्याताः । शरीरादावयवपूरणं तु प्रत्यक्षासिद्धम् । यदिदमवस्येति व्यपदिशन्ति, तदपि न द्रव्यान्तरत्वापादकम् । नवाऽनया प्रतिबद्धा यथावस्थितपुष्पादानवयवपूरणकल्पना । न चा द्रव्यान्तरत्वम् । न चैवं पृथिवीपटयोरप्येकत्वे सांख्याभिनिवेशः शङ्क्यः, पटत्वादेः प्रत्यक्षसिद्धत्वात्तत्तदवच्छिन्नयोर्भेदात्, समनियतावच्छेदकावच्छिन्नयोरेवाभेदात् । यथा घटत्वकम्बुग्रीवादिमत्त्वावच्छिन्नयोः पृथिवीत्वपटत्वयोः परस्पराभावसामानाधिकरण्याभावेन साङ्कर्याभावेऽप्युपधेयाभेदलक्षणमुपधेयसाङ्कर्यमस्त्येव । पृथिवीत्वावच्छिन्नाभिन्नत्वाद्घटत्वावच्छिन्नस्येति चेत्, तथाप्ययमभेदो न भेदसह इत्येव साङ्ख्यवैलक्षण्यम् । ते हि व्यष्टिसमष्ट्योः सामान्यविशेषभावक्षमं भेदं सामान्यात्मना वाऽभेदं मन्यन्ते । सामान्यं च नाम तादात्म्येनानुगता पृथिवीव्यक्तिरेव, न तु समवायेनानुगतं पृथिवीत्वम् । सिद्धान्ते तु तद्भावेन सकलकार्यानुगतमूलप्रकृतिस्थानाभिषिक्तं विषयताविशेषलक्षणसत्तात्मना ब्रह्मैवैकविज्ञानवाक्यात्प्रपञ्चितमिति प्रसङ्गान्मायावादनिराकरणे प्रभुचरणानां नन्विस्तारम्य तर्कचरणोऽयमिति युक्तमुत्पश्यामः । तत्प्रतिबन्दिमुद्भावयन्ति सम्बायस्यापीति । तथात्वं सम्बन्धिनं विनापि सत्त्वम्, तदङ्गीकारो नैयायिकानाम् । तथा सति नियामकत्वाभावादित्यन्वयः । ततोऽतिरेकापत्ताविष्टनेनान्वयः । अतिरेकः सम्बन्धिनं विहायावस्थानमिति यावत् ।

नियामकाभावस्य तुल्यत्वादित्याशयः । तत्समाधानाय नियामकानुसारेण पुनः समवायमादाय जञ्जालाच्च निस्तार इत्याहुः सम्बन्धेति । तथा च साङ्ख्यमतप्रवेशः । अत्र तादात्म्येनानुगतोपादानव्यक्तिर्घटेनातिरिच्यते, न तु चैतन्यमित्येकं तन्मतम् । सूक्ष्मरूपेण परिणामिनि कारणे कार्यमित्यपरम् । तत्र प्राथमिकमते ब्रह्मैवोपादानतयाऽनुगतमिति सिद्धान्तपरिष्काराद्द्वितीयमतरीत्या सूक्ष्मत्वमेवापादितमिति बोध्यम् । सम्बन्धसामान्येनायं नियम इत्याचक्षते नेत्युं जन्येति । तदस्माभिरपि गन्धातिरिक्तेति विशेषणमुपक्षेप्तव्यमित्याहुः अत्रापीति । ननु सम्बन्धत्वं नैकं, गुणत्वं त्वेकमिति चेन्न; सम्बन्धत्वस्याप्यखण्डस्यैकत्वात्, विषयतदात्मकत्वात्, अन्यत्वस्य च भवन्नियमनिविष्टस्याननुगतत्वात् संयोगत्वादिनैव नियम इति चेद्, अस्माकमपि रूपत्वादिनैव भवदभिमतो नियमः पर्यवस्यतीत्याहुः तुल्यमिति । गन्धातिरिक्तेति । साधारणयोग्यतानियामके गुणसत्त्वे द्रव्यसत्त्वं नियामकमिति साधारणनियमे वैयर्थ्यं बोध्यम् । रूपत्वादिना नियमे तु न वैयर्थ्यम्, तद्विशेषणानुपादानादेवेति बोध्यम् । गन्धसत्त्वे द्रव्यसत्त्वस्यानुभवविरोधं दर्शयन्ति मृगमदस्येति । तत्तद्गन्धाश्रयाणामवयवानां गतौ वायुसंयोगादेरन्वयव्यतिरेकसिद्धहेतुत्वात्तत्सत्त्वे विनिगमकाभावेन सर्वावयवानामुड्डीनताप्रसङ्गः कर्पूरादाविवेति भावः । फलानुरोधेन व्यवस्थायां गुण एव कर्माङ्गीकारोऽस्तु, द्रव्यत्वजातेरभावेनैवानतिप्रसङ्गाद्, व्यञ्जकजातिपक्षस्योक्तोत्तरत्वात् । तेद्रूसः कषायादिः । योग्यमात्रवृत्तिगुणत्वेन योग्यत्वमाहुः तेषामिति । असङ्कोच इति । चतुष्टयकल्पनागौरवापेक्षया गन्धातिरिक्तेति विशेषणमात्रप्रक्षेपस्य लघुत्वात् । यदि च तत्तत्त्वेनैव योग्यत्वात्र रसोपलब्धिस्तदा ममापि रूपादिसत्त्वे द्रव्यसत्त्वमिति रूपत्वादिना विशिष्यैव नियमाच्च तद्विशेषणमिति तुल्यं ज्ञापकमित्यर्थः । एवं मणिप्रभान्यरूपत्वेन तत्तद्रूपत्वेन वेत्यपि बोध्यम् ।

एवं कर्पूरन्यायेनावयवोद्गमः सम्भाव्यते, न तु तदा द्रव्यविशेषे इत्याहुः किञ्चेति[१८८] । उग्रगन्धस्य[१८९] चम्पकशिरीषादेः कुसुमस्य । उग्रत्वं स्वाश्रयाधिकदेशवृत्तित्वेन स्फुटतरत्वम् । किञ्च कतिपयावयवास्ततो गच्छन्ति, कतिपये तिष्ठन्ति, कतिपये चागच्छन्ति, तत्र दोधूयमानलतापुष्पाणां सर्वावयवावच्छेदेन वायुसम्बन्धात्सर्वोद्गमो भीमोद्भीतगजानामिव स्यात् । समायद्भिश्चानेकावयवैः पुष्पादिवृद्ध्यापत्तिः । न हि तावतामेव सम्बन्धं तावत्वानुभवः कल्पयन्नपि प्रयत्नतरानां वायूपनीतानन्तावयवानां संयोगं प्रत्याचक्षीत । नाप्यदृष्टः पुष्पादेस्तावत्त्वमात्रनिर्वाहकः, विभिन्नजातीयविलक्षणसंयुक्ततद्द्व्यारब्धफलान्तरस्यैव कस्यचिददृष्टात्तद्विलक्षणस्थलपुष्पान्तरप्रसङ्गसम्भवात् । दृष्टकारणसमाजे तदंवारहस्यापि कल्पनीयत्वात् । फलबलकल्प्यमदृष्टमिति चेत्,

तथापि सादृष्टकारणसम्पत्तेरदृष्टप्रतिबन्धत्वाभावात्। अथ तत्राप्यनन्तावयवसंयोगे पुष्पतावत्त्वानुरोधाददृष्टकल्पना तत्संयोगे तावत्त्वाधिकत्वापादकं वैजात्यं न कल्प्यते इति चेत्, तत्र तावत्त्वाधिकत्वापादकवैजात्यसिद्ध्या तत्कल्पनायोगात्। अन्यत्र सिद्धस्य तत्राभावकल्पनेऽपि तत्रैव तत्सिद्धिरन्वेष्टव्या। तत्रैव च वैजात्ये मानाभावात्, सामान्यतो विशेषतश्चावयवसंयोगानामेव कारणत्वात्, न तु वैजात्यावच्छिन्नानाम्। तच्छक्तित्वावच्छिन्नेन च द्रव्यारम्भे द्रव्यं जायत एव, विलक्षणपुष्पादिकं न जायते चेत्कार्यतावच्छेदकतच्छक्तित्वावच्छिन्नाप्रसिद्ध्यैव तदापादनासम्भवात्तत्र वैजात्यासिद्धेः। अस्माभिस्तु सामान्यकारणबलात्तच्छक्तिरूपविशेषकारणबलाच्च द्रव्यत्वावच्छिन्ने आपादनीये अर्थतो विलक्षणपुष्परूपद्रव्यान्तरमापाद्यते। आस्तां वा तादृशारम्भकस्वरूपयोग्यावयवसम्बन्धात्पुष्पान्तरोपधायकाद्धाऽत्रैव देशे तत्पुष्पारम्भप्रसङ्गः, पूरकत्वेनाक्षमत्वात्, अन्यथा कर्पूरपूरणापत्तेः। कदाचिदिह देशेऽपि तादृशपुष्पान्तरोत्पत्त्याऽस्मिन्समये चान्यत्र तत्तुल्यत्वा तद्देशकालयोरपि नियामकयोः सत्त्वात्तत्तादवयवसंयोगैः पूरणमिति कल्पना कल्पनयैव स्तम्भनीयेति। **स्थितिर्सर्गभव** इति। इदं च द्व्यणुकाद्यभिप्रायेण। परमाणूनां स्थितौ तु महत्त्वासामानाधिकरण्येन तद्ग्रहणस्यायोग्यत्वादेव ग्रहो न सम्भवति, अन्यथा सर्वदाऽनन्तजातीयदोधूयमानपरमाणूनां गन्धादिग्रहप्रसङ्गादित्याशयः। अदृष्टस्य नियामकत्वे एककारणपरिशेषापत्तिः। उपसंहरन्ति **अर्ते** इति। उक्तविचारप्रस्तावादित्यर्थः। तत्रैवात्र सम्मतिरित्याहुः **यैर्धा तवेति**। आश्रयनाशजन्यगुणनाशे आश्रयनाशस्य हेतुत्वानुरोधेनाश्रयनाशदशायां क्षणमात्रं गुणसत्त्वं क्वचिद्देशकालयोर्वाच्यं न तु तदाश्रये, तस्य नाशात्। तदतिरिक्ते तद्द्रव्यसत्त्वमिति नियमे तु गन्धातिरिक्तत्वेनापि विशेषणेन भाव्यमिति भावः। वृक्षस्य मालत्यादेः संपुष्पितस्य गह्वरवनस्थस्य वेणुनादाद् संपुष्पितस्य तद्वनोद्देशो भगवत्सन्निधानादपि दूरतरः, विभुतान्यस्य। ततो दूराद्गन्धो वृषभानुसरसि। वार्तात्वेनेन गतिर्गन्धनं चोक्तम्। गन्धनं च सरसीदद्देषु चित्रगन्धोत्पादनम्। अत एव भगवतस्तन्मात्राधारणम्। **पुण्यस्य कर्मणो** गोचारणस्य दोहनकुण्डं परितस्तस्माच्च दूरानिमाद्देशाद्गन्धो हेतुः कर्मणोऽपूर्वं कीर्तिरा। वार्तात्वपूर्वस्य फलपर्यन्तगामित्वम्। यदि भगवान् गोदोहनं न कुर्यात् 'गोदोहनेन पशुकामस्य' इत्यनेन बोधितमपूर्वद्वारकत्वं न सिध्यति, शास्त्रजन्यज्ञानस्य दृष्टफलत्वार्थं हि भगवदवतारः। भगवद्दोहनेनैव पशवो वर्धन्ते, देवादिभिस्तु दीयमानाः पशवो गवादयोऽदृष्टान्तरप्रतिरोधाद्वृद्धिं न प्राप्स्यन्ते। अदृष्टनिवारणाय च प्रायश्चित्तप्रभावनिमित्तफलदाने परमुखनिरीक्षका देवाः। भगवता वृद्धिं प्रापितानां च गवां प्रतिदीभवितुमीष्टे, कीर्त्यपि विरूपदृष्ट्या सर्वसमाधानात्। एवं प्रियासम्बन्धिगवां पानार्थं वेणुनादादिनाऽनुकूल्येन चरन्तीनां सौदयवां पयसा कुण्डं प्रवर्तयन् विराजत इति कीर्तेः स्वामिनीसमाजगामित्वं चोक्तम्। शब्दरूपा कीर्तिर्वेणौ प्रतिष्ठिता कीर्तौ श्रुत्वा गन्धपदं प्रयुक्तं नानार्थं द्योतयति। लोकेऽपि पुष्पगन्धोऽस्यास्तीत्यपूर्वेणोच्यते। कीर्तिर्वाऽस्य पुष्पगन्ध इत्यपि। तेन शब्दस्यापि गतिरुच्यते, न तु वीचीतरङ्गन्यायेन शब्दोत्पत्तिः। एवं लोकानुगतापि श्रुतिर्मुख्यार्थपक्षे लीलापरत्वेनैव भावनीया। **सौधर्म्येणेति**। गौणीलक्षणाप्रकारः परमतरीत्येति बोध्यम्। हृदयदेशोऽष्टदलकमलम्, स एव मनउद्देशोऽन्तर्यामिदेशो जीवदेशश्च। तत्रान्तर्यामी युगपत्सर्वसञ्चारी स्थिरश्च। व्यापकस्य तु सर्वत्र तौल्यान्नियतस्थितौ मानाभावः। न च स्वसंयुक्तमनःसंयोगावच्छेदकत्वेन शक्तिरूपसंसर्गावच्छेदकत्वेन वा तत्तद्देशस्य स्थित्यधिकरणत्वमिति वाच्यम्। अनन्तसंयोगकल्पने गौरवात्, तेषां प्रत्यक्षाभावात्, अनुमाने चानुकूलतर्कांशानुसरणप्रयासात्, अणोरेव जीवस्य शक्तिरूपसंसर्गेण स्वरूपसंसर्गेण वा सर्वदेशावच्छेदेन सम्बद्धत्वात्सर्वमूर्तसंयोगित्वलक्षणव्यापकत्वासिद्धेः। घटादौ सम्बन्धानुभवाच्छक्त्यादेः संसर्गत्वं न कल्प्यते, तदनुभवे तु भगवदीयव्यापकत्वस्फूर्तिरभेदवादिनामित्याहुः **सर्वमनवद्यमिति**। अणुत्वं महत्त्वं चोपपन्नमिति भावः। इदं चानुसन्धेयम्—निरवयवस्यात्मनः **संयोगस्य** सावच्छिन्नत्वमङ्गीकृत्य घटावयवावच्छिन्न एव स वाच्यः। तथा च घटमपेक्ष्य संयुक्तः, तमपेक्ष्य चासंयुक्त आत्मा प्रसज्येत, न चोभयकर्मजसंयोग एवोभयतोऽवच्छेदकावच्छिन्नत्वनियमः, अयं त्वन्यतरकर्मजत्वाच्च तन्नियमासहमिति वक्तुमशक्यम्, परमाणूनां संयोगे व्यभिचारात्। तत्रोक्तरीतेरवतारेऽपि प्रकृते एकतो निरवच्छिन्नत्वात्तादृशसंयोग एव मानाभावः, इतरथाऽऽत्मनि निरवच्छिन्नवृत्तित्वास्वीकारप्रसङ्गात्। यत्रावच्छेदकं तत्रैव वृत्तिः

स्यात्। न च यावदाश्रये निरवच्छिन्नवृत्तित्वमेव व्याप्यवृत्तित्वं, न चायं तथेत्यव्याप्यवृत्तित्वोपपत्तिरिति वाच्यम्, संयोगाभावस्य गुणादौ व्याप्यवृत्तित्वानुपपत्तेः। न चायं संयोगजात्मनि व्याप्यवृत्तिरेवेति वाच्यम्। अपसिद्धान्तात्। सामान्यतो व्याप्यवृत्तित्वस्य भावाभावभेदेन द्विसंयोगत्वम्, किञ्चिदवच्छिन्नवृत्तिसंयोगत्वात् कायपुस्तकसंयोगत्ववदिति चेद्, न; उभयावच्छिन्नसंयोगत्वस्योपाधित्वात्, कायपुस्तकसंयोगस्यापि यत्किञ्चिदुभयावच्छिन्नत्वात्, आत्मसन्निहितदेशस्य च प्रत्युक्तत्वात्। किञ्च भेदप्रमाणाभावाद् यावत्त्वस्य गौरवेणानिर्वचनीयत्वाच्चोक्तरीत्याऽऽत्मसन्निहितदेशस्यावच्छेदकत्वे सन्निधानस्य दुर्वचत्वाच्च। स संयोगः किञ्चिदवच्छिन्नः, संयोगत्वात्, कायपुस्तकसंयोगवदिति चेद्, न, आश्रयव्यत्ययस्ति यत्संयोगावच्छेदकं तदेव संयोगाश्रयोऽस्तु, न तु तद्वारकसम्बन्धेनाश्रयान्तरम्। अत एव संयोगजसंयोगोऽपि विवादग्रस्तः, परमाणुद्वयसंयोगो वा। न चैवं द्व्यणुकाद्यनारम्भापत्तिः, यतस्तावता नास्माकमपराधः स्वीकर्तव्यो वा, तत्र स्वरूपमेव सम्बन्ध इति। न चैवं संयोग एवमस्तु, संयुज्यत इति प्रत्यक्षात्, अन्यथेष्टापत्तेः। यत्तु जीवाणुत्वे देशान्तरीयो पट एतददृष्टजन्यो न स्यात्, संयोगेनात्मनि पटोत्पत्तौ समवायेनादृष्टस्य कारणत्वादिति। तत्रोच्यते, संयोगस्योक्तरीत्या विवादग्रस्ततया स्वाश्रयस्वरूपसम्बन्धस्य शक्तिसम्बन्धस्य वा सम्भवात्। भोक्तृत्वसम्बन्धेन वा पटोत्पत्तौ समवायेनादृष्टं कारणम्, संयोगेनात्मनि पटोत्पत्तौ तु न किञ्चित्कारणम्, तत्सम्बन्धेनोत्पत्तावेव मानाभावात्, तद्देशसंयोगेन पटोत्पत्तौ तु स्वाश्रयसंयुक्तसंयोगादिघटितपरम्परायाः सम्बन्धत्वात्। न चैवं गौरवम्, भवतामनन्तसन्निहितदेशानामात्मसंयोगावच्छेदकत्वमुक्तन्यायेनासंभवदपि कल्पनीयम्, तथा तत्तद्व्यात्मसंयोगानां च कल्पनमिति तदपेक्ष्य लघुपरम्पराया एव सम्बन्धत्वे लाघवात्। एवं कायव्यूहस्थलेऽपि शक्तिः स्वरूपं योगजधर्मो वा संसर्ग इत्यलं नैयायिकैः सह प्रासङ्गिकविचारसञ्चारेणेति। अथेदानीं स्वरूपस्यैव संसर्गत्वममृष्यमाणोऽघटितघटनायां मायाया एव सम्बन्धादिकार्यनिर्वाहकत्वं मन्वानो मायावादी प्रस्तुत एव प्रत्यवतिष्ठते, तन्मतमाहुः 'यैस्त्विति। एतन्मतेऽपठमानोऽपि संयोगादिर्मायिकत्वाद्घटत इत्येकं मतम्। अध्यास एव वा यथायथं सम्बन्ध इति वा मतम्। तत्सर्वं संकलय्य प्राहुः व्योमैकत्वं वदन्तीति। देशादिपरिच्छेदशून्यत्वं व्यापकत्वं, न तु सर्वमूर्तसंयोगित्वम्, आत्मनो निर्गुणत्वात्। इदं च व्यापकत्वमभेदोपपादकम्, परिच्छेदस्य भेदस्य प्रतियोगिनो मिथ्यात्व एवाद्वैतोपपत्तेः। वदन्तीति। तेषां मत एवेदमनुपपन्नमिति ध्वन्यते। तथाहि कोऽसौ देशादिपरिच्छेदः, घटादीनामिवाल्पदेशवृत्तित्वं देशप्रतियोगिकभेदवत्त्वं वा, यदभावोऽपरिच्छिन्नत्वमुच्यते, तत्राद्ये तदापादकमन्तःकरणं व्यापकाविद्या वा, नान्त्यः, असम्भवात्, तत्प्रयुक्तव्यापकत्वस्यापि निषेध्यत्वात्। नाद्यः, जीवतादशायामणुत्वस्यैवापातात्, व्यापकत्वाबाधेऽपि ब्रह्मात्मना परिच्छेदप्रतीतेश्च, केवलव्यापकत्वासिद्धेः। अस्तूभयमिति चेत्, तर्हि जीवस्यैतद्धितस्य तथैव हेत्वव्यापत्तेः, केवलव्यापकत्वासिद्धितादवस्थ्यात्। अथोऽनुपहितत्वमेव व्यापकत्वमधिकरणात्मकमिति चेत्प्रतियोगिनैव परिच्छेदप्रसक्तिः। न द्वितीयः, देशादिप्रतियोगिकभेदाभावनिरूपणे तादृशभेदेन तत्प्रतियोगिभिश्च परिच्छेदात्। अयं परिच्छेदो न स्वतो विभुत्वविरोधीति चेत्सम्बन्धान्तरवत्प्रतियोगित्वानुयोगित्वादेरपि निषेध्यत्वात्। नन्वेवं ब्रह्मात्मना जीवस्य व्यापकत्वम्, तच्चोभयसमाधेयम्, अस्मत्पक्षनिराकरणे भवतामपि च दुर्घटमिति चेत्, सत्यम्, अस्मत्पक्षस्य वक्तव्यत्वात्। तथा च स्वीकृतं चिन्त्यत्वं धर्मरूपज्ञानस्य स्वयं दूषयन्ति नैतद्विद्वद्भिरादरणीयमिति। चैतन्यमात्रत्वेन व्यापकत्ववादिना शरीरारोहणं यदि चैतन्यकर्तृकं वाच्यम्, तदा प्रज्ञावच्छिन्नताया वृत्तेः करणत्वं कृत्स्नावच्छेदकत्वं च वाच्यम्। इत्थमेवाखिलशरीरवृत्तिचैतन्योपलम्भोऽपीति वृत्तावेवैतत्पर्यवस्यति। स्यादेतत्, 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा' इति श्रुतेर्बृंह वृद्धाविति धातोर्मनिन्प्रत्यये गुणगतबृहत्त्वोपपत्तिरूपाया गुणानां वृद्धेश्चानन्त्यमात्ररूपाया ब्रह्मणि सावकाशत्वमिव जीवेऽपि धर्माणामधिकदेशवृत्तित्वेनापि व्यापकत्वोपपादकत्वमेवास्त्विति, मैवम्, स्यादेवम्, यदीयं श्रुतिर्व्यापकत्वमाचक्षीत, किन्तु ब्रह्मत्वमेवेति तदिष्टमेवेति सन्तोष्टव्यम्। किञ्च किञ्चिन्मूर्तसंयोगित्वमणुत्वं सर्वमूर्तसंयोगित्वाभावान्तरमविरुद्धमेव। परिमाणं तु नाङ्गीक्रियत एवेति ध्येयम्। एवं चैतन्यमात्रस्य सार्वत्रिकत्वादारोहणानपेक्षायां प्रज्ञावच्छिन्नतावन्मात्रनिरूपितत्वविशिष्टविषयताविशेषात्मना वास्तवरूपेण समारोहणं वक्तव्यम्। तथा च

तादृशरूपमेवाणुत्वं जीवत्वं च । न च प्रज्ञायाः करणत्वेन कर्तृत्वानुपपत्तिः, 'आत्मानमात्मना वेत्सी'त्यादाविव
कर्तृकर्मकरणानामविरोधादुपधेयसङ्करेऽपीति न्यायात् । यत्तु औपाधिकभेदमादायोपपादने उभयमेवौपाधिकम्,
स चान्ततो दशाविशेष इति, तन्न, उक्तेन 'आत्मान' मित्यादिवाक्येन स्वप्रकाशत्वस्यैव सिद्धेस्तस्य च निरुपाधिक-
त्वात् । ततश्च लोकतो विरोधपरिहारेणालौकिकं प्रतिपाद्यत इति पत्रावलम्बनोक्तरीत्या सर्वज्ञताप्रतिष्ठाधिकज्ञ-
तायां स्वरूपसम्बन्धरूपविषयताविशेषात्मिकायां न कोऽपि विवाद इत्युभयाविरोधार्थकतराप्रामाण्यमिति सिद्धमु-
च्यम्–'अधिकोपदेशा'दिति सूत्रेण तावन्मात्रत्वनिराकरणपरेण, तच्चिन्तयितुं स्वयं व्युत्पादयन्ति अपि[११०] चेति ।
प्रकृतेऽपि ज्ञानप्रकारेणैवात्मोपलम्भाज्ज्ञानतादात्म्याद्यनुपलम्भे तदनुपलम्भात् तत्तादात्म्यस्य गुणसाम्यव्यभि-
चारात्तादात्म्येन धर्मधर्मिभावमतिक्रम्य स्वरूपानुमेय इति फलितं सूत्रान्तरमवतारयन्ति कि[१११]ञ्चेति । एतैर्देहेन्द्रि-
यप्राणान्तःकरणैर्विषयतामापन्नैः सह चन्द्रमसमेव मनःस्वरूपं रासलीलायां गच्छन्ति । अन्तर्गृहगता अप्रिमा
रासोत्सव उपयोक्ष्यन्त इति चन्द्रेण स्वस्मिन् स्थाप्यन्त इत्यर्थः । लोक्यत इति लोकात्मकाय कर्मणे भगवदुपयुक्ता
भवन्तीति श्रुत्यर्थः । एवं च लीलैव लोक्यते, ताद्रूप्यप्रतिसन्धानाप्रतिसन्धानाभ्यां परमार्थव्यवहारदशाभेदेन,
अन्यथा दृष्टिवैयर्थ्यात्, इन्द्रियाधिदेवतानां लीलादर्शनार्थमेवोपयुक्तत्वादिति भावो लोकानुगतश्रुतीनामपि भगवदी-
यगवामिवेति मन्तव्यम् । स यथा महाराज इति । रासमावतारोऽस्यास्यानुवादको दृष्टान्तः । तथा भगवान् मजं
सकृद्धमेवाधिदैविकवृन्दावनपर्यन्तं परि[१११]वर्तते परितो लीलया प्रविशतीति फलितोऽर्थः । प्राणान् पद्माकरगुणग्रथितो
यातान् । स्वे शरीरे आर्यभ्रातरि । तत्रापि 'स्वयं विहृत्य' । 'विहारशब्दार्थस्तावत् सुखोल्लासप्रयुक्तक्रियाविशेषः, न
त्ववस्थादेः स्वाप्निकस्य वा ज्ञानमात्रं प्राधान्येन निरूप्यते, अनुभूयमानस्य तस्य पदार्थस्य प्रतिपादनेऽनुवादक-
तापत्तेः । अतस्तात्पर्यविषयता ब्रह्मणो लीलायामेव, तस्याः समाध्येकगम्यत्वात्, समाधेश्च शास्त्रैकसम्प्रतिपन्न-
त्वात्, एवमवस्थाज्ञानस्याप्यवान्तरतात्पर्यविषयत्वात् । तथा चाणुत्वं तत्र तत्र निलायनलीलायां भगवतोऽपि
संभाव्यते, एवं जीवभावोऽपीत्याहुः स्नात इति । अथवा परिवर्तनविहारावपीति श्रुतिस्थयथातथापदाभ्यामन्वी-
येते । परिवर्तनोत्सवोऽपि परिवर्तनम् । तदनन्तरं सन्दर्भभेदेन योजनीयम् । अणुत्वमृते नेति उपपद्येते
इति । यदा स्वयं प्रकटो भवति, तदाऽणुत्वमप्यस्य ज्ञातं भवतीति भावः । भगवदिन्द्रियाद्यधिष्ठातृस्वरूपाः
परस्परं विवदन्ते, ननु 'तत्त्वमसी'ति । एष लीलायामिन्द्रियसंवादः, आसन्यश्च मुख्यप्राणः, वेणुरुद्गाता ।
अत्रावृत्तिः पुनर्गोपान्तरोक्तौ 'तत्त्वमसी'ति । तथा चेन्द्रियाणां भगवदात्मकत्वेनोद्गानसामर्थ्ये किमर्थं वेणोः
प्रार्थनम्, यतस्तत्प्रार्थनेनापि प्रभुर्वेणुमुदीरयति, गोप्यस्तु तमुपालभन्ते, न तु प्रार्थयन्ति, स्वत एवोद्गानसाम-
र्थ्यात् । गोपाः पुनः स्वात्मन्येव भवान् भगवन्तं परामृशतीति वदन्तो निलायनलीलायां तदधिकरणं नेत्रं
परस्परं करपद्मेन मुद्रयन्तीति महावाक्यसन्दर्भद्वयम् । मध्वे विष्णोः पदे मिश्रांशानुभाव एव मध्व वसतो
माध्वानन्दय इति मिश्रानुभावौत्सुक्येन समाधातुं नैयायिकानपि पार्श्वग्राहिणः कुर्वन् भेदांशेन यथा हि पदं
भगवतो मदभ्युपगतं विशेषमहिम्ना सिद्धम्, भेदसम्बन्धोभयकार्यकारित्वाद्विशेषस्य, तथैवायं जीवोऽपीति त-..
दिदमाहुरधिकारिसूत्रया अमात्य इति स्वधर्म इति पर्यन्तम् । तमाहुः तेन[११२] चेति । अतिसंतुष्ट इति ।
अणोर्मम निलायनलीलायां ग्रहणमनेन कृतम्, तत्र मत्सामीप्यमनमित्यतिसन्तुष्टस्तस्मै स्वप्रसादाञ्जनदानद्वारेण
भ्रमरानिव कांश्चिच्चरणारविन्दप्रदक्षिणायमानवनमालायां नियोजयति, कांश्चिन्मकरिकापत्रमकरन्दं परितो गुञ्जा-
रवान्विदधातीति नितरां गर्वो भगवदीयानामिति तद्गर्वासहिष्णवः प्रत्यवतिष्ठन्ते पूर्व[११३]पक्षेत्वेनेति । पूर्वमेव
निरस्तत्वादिति । जीवत्वाणुत्वयोरिव ब्रह्मत्वव्यापकत्वयोरपि भवन्मते औपाधिकत्वादित्यर्थः । स्वरूपतस्त्वाद्य-
स्येन ब्रह्मैव ब्रह्मत्वमिति चेत्, तत्तादात्म्यस्य कल्पितत्वाकल्पितत्वाभ्यामुक्तदोषादिप्रसङ्ग एव । किञ्च प्रत्येकं
सदिति प्रतीतिसिद्धसत्तादात्म्येन ब्रह्मैव सर्वमित्यपि रोचताम्, तत्रांशतोऽपि तादात्म्यस्य निविष्टत्वात् । न च
प्रत्येकं सत्स्वभावतायामेव सत्तादात्म्यम्, तथात्र गौरवमेवेति सर्वानुगतसत्तादात्म्यादेकमेव सदिति वाच्यम् ।
प्रत्येकं तादात्म्यव्यतिरेकेणानुगतत्वस्य दुर्वचत्वात् । सत्तादात्म्येन सकलतादात्म्यानुगमाच्च सम्बन्धांशेऽपि

ब्रह्माद्वैतविरोध इति हृदयम् । बुद्धिः प्राणोपलक्षणम् । अत्र यद्यपि तत्तदवच्छिन्नोत्क्रान्तिः सूत्रार्थः प्रतिबिम्बगमनन्यायाद्युपाधेः पर्यवस्यति, तथापि प्रतिबिम्बादिपक्षनिरासात्तन्निरासः । किञ्चानूत्क्रामणमुच्यते पौर्वापर्येणेत्याहुः [१११] श्रुतिश्चेति । उत्क्रान्तिस्तत्तद्देहावच्छेदेन प्राणवियोगः । गत्यागती तदनभिमानाभिमानौ । तथा च यथावस्थितजीवस्वरूपस्य चिदंशस्य पूर्वापरलोकविषयतायाः सम्बन्धत्वकल्पनालक्षणः सञ्चार इत्याहुः न च सौरत्वमिति । विषयतायाः स्वरूपसम्बन्धात्मिकाया एव सारत्वमित्यर्थः । अत एवानूत्क्रमणं नोत्क्रान्तिः । ननु 'अधिकं तत्रानुप्रविष्ट'मिति न्यायात्तत्राप्युत्क्रान्तिरन्वीयतामिति चेत्, स्वविषयतासञ्चारव्याप्यसञ्चारित्वं तेषां प्राणानां, न तु विषयताश्रयत्वनिरूपकत्वे साक्षात्, प्राणादेः सञ्चारस्य चेष्टाधारमकत्वादित्यभिप्रायात् । ननु 'ध्यायतीव लेलायतीवे'ति फलतो लीलासाधर्म्यकथनाद्वास्तवंतद्धर्माभावे विहारस्योपाधिगुणत्वमेवेति चेत्, तत्राहुः न्यायेति । 'लोकवत्तु लीलाकैवल्य'मिति न्यायेत्यर्थः । न्यायपदात् पूर्वपक्षादिपञ्चाङ्गवत्तया सोपपत्तिकं सूत्रवाक्यं सूच्यते साधर्म्यमत्र । तथा च व्यापकस्य क्रिया न संभवतीत्येव पूर्वपक्षः, तत्रोत्तरम् 'लीले'ति । यद्यप्यस्यां श्रुतौ जीवविहारकथनादेतन्मायाविषयत्वं, तथापि लीलामात्राद्विषयत्वं तन्नित्यलीलायां व्यक्तं भविष्यति, विहारस्य च स्पष्टश्रुतेः, पुरञ्जनन्यायेऽपि साधर्म्यश्रुत्यपेक्षया प्रत्यक्षविहारश्रुतेर्बलवत्त्वात्साधर्म्यपरत्वे एतस्या उपचरितार्थत्वप्रसक्तेः, साक्षादुपचारबोधकश्रुतेरेव भेदाभेदसाधारणसादृश्यस्य विहारकर्तुरपि सम्भवादुपपत्तेः । किमर्थं तर्हि वान्तः प्रयोगः । सादृश्यस्यापि भगवद्धर्मत्वं व्याहर्तुमिति जानीहि । प्रत्यक्षायां तु विहारश्रुतौ ब्रह्मलीलावदांशिकी जीवलीलाऽपि । भगवति पुनर्लीलाकर्तृत्वे प्रसक्तमणुत्वं निराकर्तुं लीलासादृश्यकथनं, न तु लीलाकर्तृभेदघटितसादृश्यकथनम् । ब्रह्मणस्त्वणुत्वं जीवत्वमेव । न च विभुत्वविरोधः, अस्मदन्तःकरणप्रजापत्यन्तःकरणदेवमायावच्छेदभेदेनाविरोधात् । न चैवं ब्रह्मधर्माणामव्याप्यवृत्तित्वापत्तिः, इष्टापत्तेरित्येके । सर्वतादात्म्यमेव तत्तत्तादात्म्यमेव वा ब्रह्मधर्मः, तत्रापि सदादिद्वितीयतादात्म्यं फलदशायां सदादितादात्म्यापन्नानन्दतादात्म्यमेव वा ब्रह्मधर्मः, तस्य किमवच्छेदकेनाप्यखण्डैकरसस्य सर्वात्मभावानुभवप्रमाणप्रतिपन्नस्य विद्वदनुभवेनाभावो निरूपयितुं शक्यत इत्येवं निष्कर्षः । एवं ब्रह्मवादरीत्या जीवाणुत्वमंशत्वं च व्यवस्थाप्य 'तदपिमुच्य नियन्तृ भवे' दिति नियन्तृत्वाविमोकयोरवच्छेदकोपाधिमायं नरमुमापरिगृहं दर्शयन्त इत्याहुः उमापरिगृहेति । उकारः प्रणवावयवः सदैवाऽकारसन्निहितोऽजवयवश्च, स यदा व्यञ्जनमकारेण परतः श्रूयमाणेनापि मध्ये सन्निहितो भवति, तदोमा राजश्री भगवतः शक्तिः । तस्याः सृष्ट्यादिहेतुत्वाद् भगवदेकपरतायां च तदनुपपत्तेः, तस्याः सकलजगत्सृष्टिनियामकमंशं परिगृह्णं कुर्वन् सगुणशास्त्रानुसारिणी दृष्टिर्वर्धत इति गुणप्रधानमायाप्रधानं शास्त्रं प्रणेतुं प्रभुराज्ञापयामास । यद्यपि तत्रापि ब्रह्मवाद एव, मायाजगदाधारस्य ब्रह्मत्वात्, तथाप्याधारत्वमपि मायिकमिति केनापि रूपेणानिरूपणादनुपादेयत्वपरिहाराय स्वसंवेदनसंवेद्यत्वममायिकमेवास्थेयम्, तत्परिष्कर्तुमस्पृष्टिनमेव परशास्त्रालङ्करणं भगवज्ज्ञानिनां च मण्डनमित्याहुः अलमिति । यद्यपि सर्व एव परमतमिति व्यवहरन्ति, कपिलमुनिनाऽप्यनिर्वचनीयख्यातिः खण्डिता, तत्कथमुमापरिग्रहप्रवर्तितमिदं शास्त्रमिति श्रद्धेयम्, तथापि व्यासोऽपि महान् शङ्करोऽपीति निबन्धानुसारात्स्वयं प्रभवः सुरेश्वरोक्तं 'शङ्करः शङ्करः साक्षा'दित्यादिवचनं मानयन्तस्तच्छास्त्रस्योमापरिग्रहप्रवर्तितत्वं प्रतिपादितवन्त इति ज्ञायते । इदानीं देवतायाः पूर्वं सत्त्वेऽप्यमे तिरोधानाद्ब्रह्मणाभासत्वं यथा तथा स्वसम्बद्धस्वांशे जीवे सतामेव पूर्णानन्दादिधर्माणामभिध्यानात्सतिरोधानाद्ब्रह्माभासत्वं जीवस्य संपन्ने अत्र प्रकटो भविष्यामीति पुनर्दानार्थं सूर्येणेव जलप्रहणाद्धरणिमण्डलाखण्डले निजानन्दब्रह्मसम्बन्धसुधां वर्षति तं पूर्णीकर्तुं स्वप्रतिबिम्बयोग्यत्वार्थमियं लीलेति फलानुरोधात् प्रतीम इत्याहुः 'पूर्णमेवेति । न स्वैर्लीक इति । न तु केनाप्यंशेन च्युत इति, अर्थात् 'पूर्णमदः पूर्णमिद'मिति नित्यलीलायां वयमेवोक्तवन्त इति भावः । नैयायिकः प्रत्यवतिष्ठते स्वैर्यदेतदिति । नाक्षचरणशिक्षितो भवानित्याहुः [११५] नैवमिति । न ह्याकाशस्य शब्दोपादानत्वे विकारोऽस्ति, जन्यत्वातिरिक्तविकारानङ्गीकाराच्च, तैर्ब्रह्मस्वरूपेण सदादितादात्म्येन समष्टिप्रयोजकेन सर्वस्यैव पुरुषार्थत्वाचेत्याहुः यदि स्वैर्युक्तीति । स्वानुद्दिरनाविर्भूतसर्वात्मभावा, तत्कृतो विरोधो निराकृतश्चेत्, अविरुद्धसर्वधर्माश्रयं ब्रह्मेत्याहुः येस्तु तस्त्विति । तुशब्देन

विरोधांशपरित्यागः । अप्राकृतनिखिलधर्मवत्त्वं फलितोऽर्थः । तदविष्ट एव वे । अपिशब्देनैतमेव समवायीति । समवायोऽत्र तादात्म्यम् । तादात्म्येन कटककुण्डलादिभावे तादात्म्येन सुवर्णं कारणम् । निमित्तभेदात्कार्यासाङ्कर्यम् । समवायातिरेके च तत्सम्बन्धस्य स्वरूपस्य प्रागेवाभ्युपगमो वरम् । इदमप्राकृतं समवायित्वम्, सांख्याभ्युपगतपरिणामानङ्गीकारात्, मायावाद्यभ्युपगतमायापरिणामानपेक्षत्वेन विवर्तवैलक्षण्याच्च । तर्हिमारम्भवादापेक्षेति चेद्, न, आरम्भणाधिकरणविरोधात् ।

सत्ताश्रयैः संपतद्भिर्जगदारम्भवर्णने । सत्तैका कारणीभूता लाघवात्तेऽनुयायिनः ॥

तथापि तत्तदाकारेण विषयतात्मना भासमानत्वमस्मन्मतेऽविकृतसमवायिशब्दितं, परमते विवर्तशब्दितम्, परन्तु परैर्निर्विषयकविज्ञानाग्रहेण विषयता मायिकी समाश्रिता, सिद्धान्ते स्वरूपसम्बन्ध इति विवेक इत्याहुः व्येवंस्थेति । श्रुतेस्तु शब्दप्रमाणस्य तु स्वाश्रयाकाशात्मकब्रह्मैकज्ञप्तिसमवायिकत्वात्सुतरां प्रामाण्यम् । यद्यपीदं फलतोऽपूर्वसाधकमधिकरणम्, यागीयभावनाया अपूर्वजनकत्वे तात्पर्यात्, तथापि सूत्राणां विश्वतोमुखत्वाच्छब्दप्रमाणस्य श्रेष्ठत्वार्थं साक्षाद्विषयतानिरूपकज्ञप्तिविषयतानिर्वाहकत्वं कारणीभूताकाशात्मकज्ञप्तिस्वाभाव्यादव्यवहितम् । प्रत्यक्षस्यापि चैतन्यान्तरङ्गस्वाभाव्याच्छब्दगाम्येऽधिकरणानां चक्षुरादीनां साक्षाज्ज्ञप्तिजन्यत्वाभावात् संभावितदोषकरणत्वादनुमानादेर्लिङ्गज्ञानाद्यात्मकस्यापीच्छाघटितगुरुसामग्रीकतया लाघवाच्छब्दसामग्रीप्राबल्यात्स्वप्रामाण्ये चानुमानस्य शब्दोपजीवितायाः प्रामाणिकैर्लिखनात् । यदि च शक्तिग्रहार्थं शब्दस्याप्यनुमानापेक्षा, तथापि प्रमेयत्वेन शक्तिग्रहस्यादृष्टदशरथादिपदे ज्ञातसंख्य ब्रह्मादिभिः सार्वत्रिकत्वाङ्गीकारात्तेन रूपेण शक्तिग्रहस्यान्ततत आत्मादौ वाक्येनापि गृह्यमाणस्यानुमानापेक्षत्वात्, अहंप्रत्ययस्य वाच्यत्वोपनीतमानात्मनोऽपि प्रात्यक्षिकत्वात्, जन्मान्तरीणस्य कस्यचिदुपनायकत्वात्, अन्यबोधकासम्भवस्य सर्वेषामेव समानत्वात् । यानि पुनर्वेदमूलकानि 'यतो वे'त्याद्यनुमानमयानि, तत्र युगपद्विलक्षणविषयताशालिनीं शब्दात्मकानुमितिमामनन्त्यौपनिषदाः । व्यक्तीभविष्यति चेदं श्रुतेः शब्दमूलत्वे स्वतन्त्रप्रामाण्यरूपे पर्यवसिते । तत्र संभवन्मानान्तराणामप्रवृत्तिरिति न, स्वाभिमतेऽर्थे विरोधाभावात्, वैयाकिकसूत्रेषु हेतुवचनानामनुपपत्तेश्च, किन्तु बलवदुपनिषद्धेयत्वम् । न च बलवत्त्वं तत्समानार्थलौकिकवाक्यसाधारणम् । समानार्थकत्वं हि समानतात्पर्यकत्वम् । न लौकिकप्रमाणप्रवृत्तौ तत्समानार्थकत्वग्रहः संभवति । मत एवास्तु लौकिकानामपि घटोऽस्तीत्यादिवाक्यानामिव प्रामाण्यं, किं तत्तुल्यतात्पर्यग्रहेणेति चेत्, ईश्वरः कर्तेत्यादिवाक्यानां यदि स्वतन्त्रप्रामाण्यमभिमतं, तर्हि चैत्रः कर्तेत्यादिवाक्यतुल्यतापत्तिः । अस्त्विति चेन्न, ईश्वरकर्तृत्वसन्देहस्यानिस्तीर्णत्वात् । तदर्थे वेदानुसरणे प्रथमतो लाघवज्ञानं तत्रैव पाणिग्रहादि वृत्तमित्यलौकिकप्रमाणप्राधम्यम् । न च लौकिक एव लाघवज्ञानं तथाऽस्त्विति वाच्यम्, भगवतोऽप्यन्यपक्षपातापत्तेः ॥

'लघूपायो हि भगवान् स्वात्मपष्ठानचीकमत् । तत्रापि नरमादाय नैकाकी रमतेऽमाम् ।'

अयमभिप्रायः—यदि लाघवज्ञानं लौकिकप्रमाणपक्षपाति स्यात्, तर्हि प्रत्येकं चैत्रमैत्रादीनां कार्यस्थपवनादे सार्वकर्तृकतापत्तेः, ईश्वरासिद्धिप्रसङ्गात् । अलौकिकेषु तु प्रमाणेषु वैयाकिकविषयवाक्यवशाऽकल्पितोपनिषद्वाक्येषु ब्रह्मपदेनैव सोपपत्तिकवाक्यतानिर्धारणवेदान्तवाक्यमूर्धन्येन कर्तृतादिव्यवस्थापनाय मायावनवधर्मित्वानन्त्यमिति तत्कृतमेव लाघवज्ञानमपि तत्रोपतिष्ठते इत्यनेकस्वरसमिदं सिद्धमलौकिकप्रमाणानां प्रामाण्यम् । शब्दस्वरूपमेव मूलं प्रमाणं यस्येत्येव गुप्तवेणुधारस्तो निरूपितः । तथाहीति प्रकारोऽर्थः, स च भावरूप एव, यत्राभावो विरोधितानियामकसम्बन्धेन न भासते । अयं भावः । श्रोतव्यत्वं शाब्दबोधविषयत्वम्, तदविषयत्वं वागगम्यत्वम्, उभयमिदं संसर्गे दृष्टम्, तस्यानुपस्थितस्य स्मृतेरभावेन वागविषयत्वाद्, संसर्गस्यादिरूपयत्किञ्चित्प्रमेयाभिधायकवागविषयत्वेऽपि सांसर्गिकविषयतया वागगम्यत्वात्, शाब्दबोधविषयत्वाच्च । एवं च संसर्गतया प्रमाणः स्यादित्यपि पीनूषजिह्विका । ननु वृत्तिव्याप्यत्वं श्रोतव्यत्वं, न फलव्याप्यत्वमिति,

तन्न मनोरमम् । यतो वृत्तेः प्रतिफलितचैतन्यग्राहित्वम् । शाब्दात्मिकायाः प्रमाणत्वं प्रमेयत्वं च विषयत्वम् । तत्रावरणभङ्गार्था वृत्तिरिति पक्षेऽनावृतचैतन्यस्वरूपमेव विषयता, न त्वावरणभङ्गमात्रम्, तस्याप्यधिकरणात्मकत्वेनाधिकरणस्य च सदाकारस्फूर्त्यात्मकविषयतानतिरेकात्, 'घनच्छन्नदृष्टि'रिति न्यायेन वस्तुत आवरकाभावादनावृतचैतन्यस्य सार्वदिकत्वे स्वस्य सम्बन्धत्वाङ्गीकाररूपानुग्रहस्य सर्वैरेवावश्यं शरणीकरणीयत्वात् । न चैवं यथाकार्यानुरूपैव विषयज्ञप्तिस्वाभाव्यकल्पने वृत्तिस्वीकारवैयर्थ्यम्, विकारानङ्गीकर्तॄणां ब्रह्मवादिनां मायाविद्यान्तःकरणपरिणामरूपवृत्तेरनङ्गीकारे क्षतिविरहात्, जन्यज्ञानाङ्गीकारस्य च नित्यविषयतायाः संसर्गत्वकल्पनाधिष्ठानत्वेनावश्यकत्वात्, अन्यथा स्वरूप एव रममाणस्य प्रपञ्चवैफल्यापत्तेः । तत्र यावान् प्रपञ्चसृष्टिप्रक्रियात्मतायास्तावन्नित्यविषयतायाः संसर्गत्वकल्पनानिमित्तं, न तु भ्रान्तस्वप्नमहान्धकारमानोरथिकसृष्ट्यादेस्तथात्वं साक्षात्, किन्तु वास्तवसृष्टिद्वारा । अथवा स्वरूपविषयतैव निरवलम्बना खण्डशः पदार्थेषु वैशिष्ट्यं स्वगतं प्रत्याययति, तदिदमुक्तम्–खपुष्पादिकमपि ब्रह्मसत्तयैव भासत इति । वास्तवसृष्टौ तु सावलम्बनेति विवेकः । वृत्तेश्चैतन्योपरागार्थत्वेऽप्यासत्त्यैवोपरागत्वात्तदर्थं परिणामभेद आविद्यक आश्रयणीयो, भासमानत्वांशे ज्ञप्तिपर्यवसितश्च । सदसत्तादात्म्यावगाहित्वस्य ज्ञप्तिस्वाभाव्यपर्यवसितत्वात् । तदिदं विषयत्वानातिरिच्यत इत्यविषयत्ववादो बहिर्मुख्यमेवेत्यलम् । क्रियावत्त्वतदभाववत्त्वे मतुबर्थसम्बन्धे प्रकाररूपो, न च मतुबर्थो विद्यते । तत्र प्रतीत्यसाङ्कर्याय यदि विशिष्टाधिकरणत्वं मतुबर्थस्तथापि विशिष्टस्यानतिरेके तादृश्यधिकरणतापि तथा । न च विशिष्टस्याधिकरणताऽतिरिक्ता, न तु विशिष्टा चासावधिकरणता चेति वाच्यम्, कर्मधारयेऽपि विशिष्टनिरूपितत्वविशिष्टाधिकरणतात्वे तात्पर्यपर्यवसानात् । किञ्च यदेव घटाधिकरणं तदेव समयान्तरे तदभावाधिकरणमिति सम्बन्धितासामान्यमनुगतं मतुबर्थः । किञ्चिद्वैशिष्ट्यस्य सार्वदिकत्वात् । तदेव तत्तद्वैशिष्ट्योपहितमनतिप्रसङ्गायेत्यस्तु सामान्यतः संसर्गे विरुद्धधर्माश्रयत्वम्, एवं प्राणादिप्रवर्तकत्वे सति सुषुप्तौ निष्क्रियत्वं च । एतेन निःश्वासाद्युपलब्धेः पुरुषान्तरविभ्रममात्रत्वमिति प्रत्युक्तम्, तल्लीनत्वेऽपि तदीयप्रवर्तकत्वेनैवास्य प्रवर्तकत्वात् । एष एव करणलयः । वाचश्च सुप्तत्व स्वसर्वनामत्वाय । न चैवं सोम राजन्नित्यादिनाम्ना सम्बोधितोऽप्यजातशत्रुणा केनचिद्राज्ञा प्रसुप्तपुरुषो न जागार, किन्तु स पाणिभ्यां बोधनादेवेति कथमुपपद्यताम् । अत एव परैः सर्वनामोत्तीर्णस्यैव सौषुप्तस्य ब्रह्माभिधानमिति निर्णीतमिति वाच्यम् । राज्ञा खण्डशस्तात्पर्येण सोमेत्यादिनामाभिधानात्, अखण्डार्थातिरेकेण सुषुप्तस्य शाब्दबोधानङ्गीकारात् । किञ्चैवं सुषुप्तोत्थापकवाक्यानां साक्षात्कारजनकत्वं स्वीकृतमभियुक्तैः, तत्तदेव सङ्गच्छते, यदि सर्वनामत्वं सुषुप्तस्याङ्गीक्रियेत । न वा दशमत्वादिवच्छब्दबोधमनुसाध्यैव स साक्षात्कारः । अस्तु वा तथा, तथापि वाक्याधीनविलक्षणविषयतासिद्धौ ब्रह्मवादिनां संरम्भ इति सुषुप्तस्य तत्सिद्धिः । न च तादृशविषयतोन्मेषदशायां न सुषुप्तत्वम्, शुद्धात्मनः सुषुप्तत्वात्, सुषुप्तस्य तद्विषयतानङ्गीकारे तदितरस्य जागरणप्रसङ्गात् । नापि सत्तासम्पन्नस्य साक्षिता नास्तीति वक्तुं युक्तम् । एवं प्राणनीयानन्दकार्यार्थं स्वरूपसम्बन्धेन सत एव तत्तत्कार्यनिर्वाहकस्वरूपस्य ससम्बन्धत्वकल्पनाभिर्निष्क्रियस्य क्रियावत्त्वं तत्तत्पदार्थस्त्ववच्छेदक इति रीतिः, ब्रह्मतादात्म्यशून्यदेशानङ्गीकारात् । एवं पाणिपादकार्यानुविधायित्वम्, तदप्रत्यायने च कूर्मवत् । एवं पूर्वं कम्पनमुक्तम्, तद्वद्वक्रत्वं सुखकृत्त्वं च । तद्यथायं भीतवत्कामुकवच्च बोध्यम् । वेगो गरुडारूढस्य गृहीताप्रसूनावचये । 'चक्षुषश्चक्षुः' । इन्द्रियदेवतायाश्च चक्षुस्तत्करणतावच्छेदकशक्तिस्वरूपः, साक्षात्स्वविषयतानियम्यत्वात् इन्द्रियदेवादिसृष्टिप्रपञ्चप्रवाहस्य । अन्तः संसर्गः तावन्मात्रसंसर्गताकल्पनस्यैव सर्वज्ञतोपपादकपरिच्छेदपदार्थत्वात् । यदि 'अणोरणीयान्' प्रसिद्धः, अनवस्थापत्तेः, तथाप्यनवस्था, प्रतिद्वन्द्वितयैव धर्मिग्राहकमानाप्रसिद्धिरिति ध्येयम् । स्थूलत्वाभावो नाणुत्वम्, परस्पराश्रयापत्तेः, किन्तु धर्मद्वयम् । ब्रह्माण्डे स्थितोऽपि जगदाधार इत्याधारत्वं सूच्यग्रभागावच्छिन्नगगनस्यापि दृष्टम्, तत्रापि ब्रह्मसत्तादात्म्यमेव बलमातिष्ठामह इति धर्मिणः स्वसाक्षिकमानसिद्धस्यैव सर्वतोमुखस्य विरोधविरोधित्वमित्याहुः नैकेतरबाध इति । विरोधघटकबाधसंभवानादराद्विरोधाऽवधीरणमिति भावः । तादृशपदार्थजिज्ञासुः प्रत्यवतिष्ठते स्यादेतदिति । तादृशशब्देन किं सविशेषमेव निर्विशेषमुच्यते, निर्विशेषं वा सविशेषम्, उभयसादृश्यं चोभयत्र, अविरुद्धनिर्विशेष-

भिन्नत्वे सति विशेषे विशेषान्तराभावादशेषविशेषात्मके निर्विशेषत्वसादृश्यासंभवात्, सत्यम्, तस्याव्याप्यवृत्तित्वात्। एवं सविशेषभिन्नत्वे सति सविशेषत्वस्य निर्विशेषत्वरूपं विशेषमादाय सादृश्यसम्भवाच्च। अधिकरणस्वरूपत्वमिति विशेषो द्रष्टव्यः। तस्मात्तत्तादृशमेवेत्युपपन्नं निर्विशेषप्रतिबिम्बत्वेन। न चैवं तादृशत्वं निरंकुशान्वयत्वं चेद्, ममैव मतमिति वाच्यम्। यत्तन्निरुच्यते तत्तादृशमेवेति सर्वविषयतायां तात्पर्यात्। अन्यथाऽपि तादृशपदेनैव निर्वचनादिति सर्वं रमणीयम्। तथाप्येतदेव नोदयितुं सिद्धान्त्येकदेशी शङ्कते तदिति[११८]। अत्र यद्यपि सविशेषवाक्यं तत्त्वेन न श्रूयते, तथापि 'निषेधशेष' इति वाक्यान्निषेधः शेषोऽङ्गं यस्मात्तैः सर्वशेषस्येत्यर्थो लभ्यते। 'योऽवशिष्येत सोऽस्म्यह'मिति सविशेषार्थश्रौतवाक्ये परिसमाप्तसर्वविषयताश्रयस्वरूपाभिधानात्। [११९]इतीति। वीप्सया प्राप्तानुवादसकलनिषेधेऽप्राप्तस्वरूपविषयताया एव विधेयत्वे तस्याः प्रकारतात्वादिनैव सुनिरूपणीयत्वान्निर्विकल्पकनिरासे सर्वविषयत्वसिद्धेः। 'अधिकं तु भेदनिर्देशा'दित्युक्तत्वात्। निषेधस्य 'नेति नेती'त्यादेर्निषेधाधारे यत्किञ्चिद्विषयतासमर्पणं विना वाक्यापर्यवसानात्। न चायमेवादेशः शास्त्रसमाप्तेरिति वाच्यम्। 'अस्ति ब्रह्मेति चेद्वेदे'त्यत्रैव समाप्तेः। तस्मादधिकरणसत्तां प्रतिपादयन्त्याः श्रुतेः सन्मात्रं विधिमुखप्रत्ययविषयब्रह्म सविशेषमेव तात्पर्यविषयः, निषेधस्य द्वारत्वे निर्विशेषप्रतिपत्तेः, सविशेषप्रतिपत्त्यङ्गत्वात्, भेदेनाशेषविशेषप्रतिपत्त्यङ्गत्वात्, भेदेनाशेषविशेषराहित्येऽशेषविशेषात्मकस्यातिरिक्तशुद्धधर्मिणो वा सविशेषत्वात्। शुद्धप्रतिपत्तौ हि शुद्धिपर्यालोचनेऽनावृतचैतन्यस्य स्वविषयत्वमेव शुद्धिपदार्थः, तदाद्यनाशेषविशेषसामान्यादिति मन्तव्यम्। अस्थूलाऽस्थूलत्वच्छेदेन। एवमग्रेऽपि। एवं च सविशेषे सविशेषं, निर्विशेषे निर्विशेषमित्यत्र सौषुप्तो दृष्टान्तः। न यदि नोपाधिमत्ता निर्विशेषत्वमनौपाधिकं भवितुमर्हतीत्यभिप्रायेणाह प्रतिपत्तव्यमिति। सविशेषस्य त्वीश्वरोऽवच्छेदकीभवन्नपि स्वोपाधीनां व्यष्टीनामप्यवच्छेदकत्वात्तदवच्छिन्नस्य परिच्छिन्नत्वमादायैव पर्यवस्यति, व्यापकोपाधेरपि व्यष्ट्यवच्छिन्नत्वात्, स्वरूपतः परिच्छेदकल्पने भेदप्रसङ्गात्, अद्वैतश्रुतिविरोध इत्याह एकमेवेति। ननु व्यष्टीनां परस्परमाश्रयाश्रयिभावेन तदवच्छिन्नस्य सर्वपरिमाणत्वमेकस्यैव। एतन्मते स्वनिष्ठधर्मावच्छेदकत्वमुपाधीनाम्, तत्राह अन्योन्येति। तथा सत्येकावच्छिन्ने महत्त्वप्रत्ययापत्तिरिति विशिष्यैवावच्छेदकत्वं। वाच्यम्। तथा च प्रत्येकावच्छिन्नस्य सर्वत्वाभावादनुगतप्रतीत्यादिरिति।

स्यादेतदिति पूर्वपक्षाभिप्रायः। विभुरूपतामजानन् कश्चित्परिच्छिन्नकरादिदर्शी शङ्कते किञ्चेति। नार्जुनस्येवास्य सुयोधनानुयायिनो दर्शनं, किन्त्वेषा माया जीवेष्वपि महासत्त्वेषु सुयोधनादिषु साधारणीत्याह लौकिकैरेवादिति। स्वरूपस्य निर्विषयचिन्मात्रस्य गौरवादिति सर्वं ज्ञानं धर्मिण्यभ्रान्तमिति न्यायाद्धर्मिणि विवादाभावाच्च तत्रैव चालौकिकत्वं, न प्रकारेषु, अवश्याङ्गीकरणीयधर्म्यलौकिकत्वेनैकल्पनयैव चारितार्थ्यादित्यर्थः। दौर्बल्यं परिच्छेदापादकत्वेनानुपदमेवोक्तम्। पूर्वमेव वा धर्मिनिरूपकाणामुपजीव्यत्वादिनाऽर्थादुक्तमित्यर्थः। वाग्धेन्वाद्युपासनावद्ध्योपास्यं मन्वानः शङ्कते अन्यथेति। श्रुतिनिरूपितं सविशेषब्रह्मस्वरूपं चेत्, अलौकिकमेव, प्रत्यक्षादेर्दौर्बल्याच्च। तदेव न, किन्तु धर्मिणि धर्माणामारोपपरा श्रुतिः, आरोपश्च प्रसिद्धानामेव लौकिकानामित्याह लोकप्रसिद्धविशेषवदिति। आरोपविषयत्वं मतुबर्थः। अधिकारे शुद्धेर्धर्मिपरत्वे शाखाद्यसम्भविनि धर्मावलम्बनत्वेन सिद्ध इत्यर्थः। चित्तस्य शुद्धिरनेकत्र विषयेषु चापल्यनिरासः। ततः स्वगृहीततद्धर्मशाखामप्यतिक्रम्य निर्विशेषधर्मिरूपफलाभिलाषे तादृशमेव बुद्धिविषयीकरोति। तत्र निर्विशेषबुद्धिर्मोक्षपर्यवसन्नीत्याहुः न ह्यन्यत्प्रयोजनं घटत इति। तथा च शब्दात्साक्षात्कार एव ब्रह्मणः, कुसीदपारकापयन्यायात्, 'दशमस्त्वमसी'तिवच्च, न तु निर्विशेषश्रुतिभ्यो ब्रह्मणः शाब्दबोधः, इतः प्रतिलक्षणान्यतररूपाया ज्ञानाविषयत्वात्तत्त्वादाह तैरेवेति। कर्तृकरणकर्मणां निषेधमाह तैस्तैकेनेत्यादि। पदानुपस्थितानामपि भेदैः शाब्दबोधविषयत्वाभ्युपगमाद्दशमत्वादिबोधः पार्थिको वा मानसः। ततो झटिति दशमत्वादिसन्देहनिरासः। नेति नेतीति। तद्रूपं नेत्यर्थः। स्यादेतत्, प्रकारवाचिनेतिशब्देन वीप्सया सर्वप्रकारनिरासे स्वतोऽपि प्रकारनिरासेनेतीत्यस्य निषेध एव प्रकार इति फलितोऽर्थः। तथा च नेत्यक्षरकाभावप्रत्यक्षशाब्दबोधयोरभावेऽपि भवन्मते तदापत्तिरित्याशङ्क्याह यद्वं वै' सतीति। चित्स्वैकरूपत्वमिति। भावरूपोऽयमभावः, तत्र च

नोक्तदोषः, भावत्वेनैव भानादिति भावः । सप्रतियोगिक एवायमभाव इत्यभिप्रायेणाह अन्यथेति । इति सिद्धमिति । अभावरूपतया स्वस्यैव प्रतियोगिकत्वसम्बन्धेन प्रतियोगिवैशिष्ट्यामेत्याकारकत्ववारणमित्यर्थः । अत्र यथाश्रुतमनुसारामेत्याकारकश्रौतशब्दादिधीविषयत्वं परेषामिष्टमेव । नचेतिशब्दस्य प्रतियोगिबोधकत्वामेत्याकारत्वं वारणीयम्, सामान्यतः प्रतियोगिकत्वाधिकरणत्वादिसम्बन्धस्यापि निषेध्यत्वात्, तदापत्तेरवारणात् । न चैवं प्रभावनिर्विकल्पकस्वीकारापत्तिः, इष्टत्वात्, तमसः प्रतियोग्यनुपहितरूपेणेदन्त्वादिना प्रत्यक्षाभ्युपगमाच । तदभिप्रायिका वा श्रुतिरस्त्वति परमतपरिष्कारः, समाधानमपि सिद्धान्ते भविष्यति । ननु 'प्रक्षालना'दी'ति न्यायात्किं निषेध्यनिरूपणेनेति प्रागेवोक्तमिति चेत्तत्राह उपासनेति । तस्मादिति । न च सौम्यतमिति । धीरकर्तृकव्यापारस्य तत्रापर्याप्तत्वमिति तदीयज्ञानविषयत्वमपि तेनैव कल्पितमित्यभिमानेनाह तेनेत्समानयोगक्षेमत्वस्येति । उपष्टम्भकान्तरमाह तदेति । अन्यदप्युपष्टम्भकमाह तदा नेति । तथा चास्य प्रत्यगात्मानं सर्वान्तरं बाहिर्मुख्येन विषयीकर्तुं तदीयं विषयत्वं कल्पितमेव, अन्यथा तु 'सति संपद्य न विदुः संपद्यामहे' इत्येवावस्था स्यात् । तथा च स्वतोऽविषयत्वमेवेति परेषामभिमानः । न च 'आवृत्तचक्षु'रित्युक्तेः कथं तदीयविषयतायाः कल्पितत्वमिति वाच्यम् । चक्षुःपदोपलक्षितकारकभावापन्नबाह्याविद्यायाः शुद्धसत्त्वात्मकवृत्त्यास्तिरोधाने लौकिककारकभावापत्तौ तत्तदैन्द्रियककल्पितवृत्तिविषयत्वमित्यभिप्रायात् । तदाऽविद्यानिवृत्ताविन्द्रियाणां चासन्योपासनया प्राप्तदेवभावानामलौकिकविषयतासम्पत्तिरित्यसन्मताज्ञाः, स्वाविषयत्वाभावो वाऽमृतमित्यभिप्रायाच । यतो नेत्तत्रेति । तत्र निर्विशेषे । तथा च कुत्र सूर्यादयो भान्तीत्याकाङ्क्षायां सविशेष एवेत्यर्थात्तत्रैव सूर्यादिप्रकाश्यत्वं कथनपदेनोक्तम् । अवतारेषु स्पष्टं च । देवैरिन्द्रियाधिष्ठातृभिः प्रकृतं प्राकृतम् । प्रतिषेधे हि प्रतियोगिनां प्रक्रमः प्राकृतानामेव, अप्राकृतस्यानिषेधात् । ततश्च स्वरूपस्यैव धर्मिणोऽप्राकृतत्वपर्यवसानमित्याह सिद्धमिति । प्राप्ते पूर्वपक्षे प्राप्ते । धेयं सिद्धान्तिनः । पूर्वं साधारणप्रपञ्चप्रत्यायकत्वमविद्याया निरस्तम् । इदानीं ब्रह्मधर्मप्रत्यायकत्वमविद्याया निरस्यते यदेन्वादीत्यादिना । न तत्त्वनिर्णीतेषु किं तर्हि वदन्तेवेति वादाङ्गं ल्यप् उक्तः । तथा चापूर्वोऽयं वादी यदान्तरदर्शनेऽपि धीरस्थविद्यां साधनं मनुत इत्याशयेन तथोक्तम् । न तौविदाद्य इति । तथाहीति । जीवाश्रया ब्रह्मविषया मायेति वाचस्पतिमतम् । तत्रास्या आश्रयदोषत्वं विषयदोषत्वं वा आश्रयदोषत्वमप्याश्रयावरकत्वे सति तत्रैव विक्षेपकत्वम् । तर्हि जीवधर्मकल्पकत्वमेव स्यान्न ब्रह्मधर्मकल्पकत्वमित्याहुः तस्या इति । न चाङ्गुल्यादेः संयोगाद्याश्रयचक्षुरावरकत्वेऽपि चन्द्रविक्षेपकत्वं दृष्टमिति वाच्यम् । दृष्टान्ते विषयीभूतचन्द्रादिदोषत्वस्यापि वक्तुं शक्यत्वात्, दार्ष्टान्तिके तथाऽङ्गीकारे ब्रह्मणो भ्रान्तरूपदुष्टत्वापातः । किञ्चाङ्गुल्यादेश्चक्षुरावरकत्वे वास्तवचन्द्रभानं न स्यात् । अन्यच्च, अङ्गुल्याद्यवच्छिन्नाविद्ययाऽनिर्वचनीयचन्द्रान्तरं जन्यते, चन्द्रगतं द्वित्वं वा, उभयथाऽपि निर्विशेषान्तरमेव तुल्यचन्द्रद्वयवदित्सिद्धमिति सविशेषश्रुतीनामाकाङ्क्षावास्थितेत्याशयेनाहुः ब्रह्मगतधर्मेति । न च द्वित्वादिवद्धर्मकल्पनम्, चन्द्रधर्माणां सिद्धत्वात् । तथा च निर्विशेषद्वैतापत्तिः, क्वचिद्भ्रममात्रबोधे उपाध्यनुविधानात् । अङ्गुल्यादिसम्पर्कप्रतियोगिचन्द्रद्वयानुभवे धर्मिणो यथाऽवस्थितस्यैव द्वैतभानवदविद्यासम्पर्कात्, तदध्यासविशेषप्रतियोगिनिर्विशेषस्यैव द्वैतभानौचित्यात् । द्वैतमकल्पयित्वा धर्मान्तरकल्पने निर्विशेषाभेदः सविशेषे स्यात् । अस्तु, काल्पनिकत्वे को दोष इति चेद् न; भेदस्यैव काल्पनिकत्वात् । एवं च सप्रतियोगिकभेदोऽपि स्वस्मिन्न विधेयेष्यताम्, विलक्षणत्वात्तस्याः । अथवाऽऽश्रयान्तरे उभयोर्युगपत्कल्पना । तत्राद्ये सविशेषनिर्विशेषयोरभेदो वास्तवो भेदः कल्पित इत्युभयान्तरत्वं वस्तुतः शास्त्रस्यायातम् । द्वितीये कल्पनीयमध्यवर्यन्तरं समानविषयताश्रय इति कीदृशोऽयं कल्पितसविशेषवादः । अथ भ्रान्तपुरुषाश्रया शुक्तिविषयिण्यविद्या रजतकल्पिका दृष्टेति दृष्टान्तान्तरमिति चेत्, तर्हि तस्या यदवच्छेदेन रजतविक्षेपकत्वं तदवच्छेदेन विषयदोषत्वम् । न हि तया पुरुषो विक्रियते, किन्तु शुक्तिरेव । तत्रजतस्य साक्षिचैतन्यनिष्ठत्वाज्जीवसाक्षी भ्रान्त इति चेन्न, इदं रजतमित्याकारतानुपपत्तेः, शुक्तिसाक्ष्यवच्छिन्नचैतन्ययोरभेदोऽविद्याष्टरया संपाद्यते । ततश्चेदमंशविषयतेति चेत्, न; अहमंशस्यापि भानापत्तेः । ननु निमित्तमस्तीति न्यायादनादिसंस्कार एवंविध एवेति चेत्, अस्त्वेवम्, तथाऽपि शुक्तिसाक्ष्युभयावच्छिन्नचैतन्यस्यैव जीवस्वविशेषोभयचैतन्यसावि-

द्याविषयत्वाश्रयत्वाभ्यामाश्रयत्वस्यैव दुष्टत्वव्यवहारनियामकत्वेऽप्यविद्यावृत्त्या तदुभयोरैक्यापादने उभयोर्दुष्टत्वापातः। न च शुक्त्यवच्छिन्नमिव सविशेषं निर्दुष्टमिति वाच्यम्। ऐक्येऽप्यन्तावच्छेदकानामप्रयोजकत्वात्। यथा ह्यहं देहीत्यादौ शुद्धस्यैव देहाकारवृत्त्या दोषसम्भवस्तथा सविशेषणीशस्वरूपमपि दोषदुष्टं स्यात्। एवं चान्यथा सन्तं परमात्मानमन्यथा प्रतियतापि दुष्टत्वमप्यविवक्षणात्र दोषमावहतीत्यास्थायामविद्यैव ब्रह्मसम्बन्धाच्च दोष इति वा, स्वाश्रयजीवदोषो नेति पर्यालोचने विषयदोषत्वमैक्ये चैतन्ययोः प्रागेवापादितम्। ननु कल्पकजीवतद्विशेषचैतन्ययोर्नाभेदः तादृशाविद्यावृत्तेरभावादिति चेद्, जीवाश्रयाविद्यया धर्मविशिष्टब्रह्मणः कल्पने शुक्तेर्द्वारित्वे तथा तदुभयचैतन्याभेदसंभवात्। तस्मादसम्बन्धात्मा न दोष इत्येव वक्तव्यम्। आध्यासिकसम्बन्धस्यापि वस्तुतोऽसत्त्वाद् ब्रह्मणः स्वप्रकाशस्यावरकाभावात्। नापि विक्षेपोऽवस्थान्तरापत्तिरविकृतस्य ब्रह्मणो नाम। अत एव तद्धर्मा अपि न वैकारिकाः, किन्तु विद्यासिद्धाः। न च साप्यन्तःकरणवृत्तित्वादविद्याप्रभेदः, परिणामशीलत्वादिति वाच्यम्। तत्किमुपादानसमसत्ताकं कार्यान्तरं स्वरूपेण जन्यते, तर्ह्यसत्कार्यवादापत्तिः। अथ विद्यमानं प्रत्याय्यते, प्राक्तनो न प्रतीयते। ईश्वरेच्छाभावादिति चेन्न, तादृशेच्छायां मानाभावात्, तस्या एव प्रत्यायकत्वपरिशेषाच्च। अविद्याया एवंविधमेव वैचित्र्यं यन्नाम सदपि कदाचित्प्रतीयते तथेति चेन्न, तादृशवैचित्र्येऽपि मानाभावात्। धर्मिग्राहकमानं हि मायाब्रह्मणोरुभयत्र वर्तमानं जगद्वैचित्र्यात्कारणगतवैचित्र्यं प्रतिपादयन्मायागतवैचित्र्यस्य ब्रह्मेक्षणादिदलापीक्षणमिव स्वरूपप्रवेशाप्रवेशाभ्यां भावाभावोभयात्मैकविषयतायां पर्यवस्यति। तथा च सदीक्षणमभिन्ननिमित्तोपादानं, सद्विषयत्वस्वरूपसत्तानुगमात्, घटप्रत्यक्षसामग्रीदशायां ज्ञानप्रत्यक्षसामग्रीसत्त्वात्। एवं च स्वरूपसम्बन्धविषयताविशिष्टज्ञप्तिप्रत्यक्षमेवोभयसाधारणविषयतया विषयप्रत्यक्षम्। तथा च शुद्धद्वयीपक्ष एव ज्ञातव्यतांशे चालौकिकमपि पश्यामीति विषयता रजतादेरिव तज्जातिशंसे, ज्ञानस्य विशेषणत्वे तज्ज्ञानस्याप्यन्ततो धर्मिरूपतया पूर्वपूर्वत्वात्। सेयं विषयता व्यक्त्युपधाने घटत्वादिस्थानीया। अत एव भिन्नविषयकानुमितिसामग्रीकाले यथा घटमात्रप्रत्यक्षं जायतामितीच्छाबलाद्व्यक्तिमात्रभानं, तथा प्रकृतेऽपीति विभावनीयम्। एवमुपासनापि विद्यारूपा विषयताविशेषात्मकजीवस्वरूपावच्छेदेन ब्रह्मण एव धर्मरूपा सती ब्रह्मणि धर्मप्रमापिका, लोके सन्निकर्षादिव्यापाराणामिव मनःप्रणिधानादेस्तादृशविषयतायाः संसर्गस्य कल्पनानिमित्तत्वमिति। नहीयं सामर्थ्येन्यादिवदुपासना, निरीश्वरपक्षापत्तेः। भवन्मते जगत्कारणमार्गणापत्तेः। अनधिष्ठितमायायाः कारणत्वानुपपत्तेश्च, सांख्यमतोन्मज्जनापत्तेश्च। न च 'नेदं यदिदमुपासत' इत्यनेन विरोध इति वाच्यम्। बुद्धिपरिणामत्वपक्षस्योपासनायां नैरास्यपरत्वादेतच्छ्रुतेः। कथमेतदवगम्यते चेत्, तदेवेति— तदेव ब्रह्म त्वं विद्धि यदुपासते पूर्वोक्तगुणवत्तया शमपत्तया च यत्स्वत एव तत्तत्फलानुबन्धिविषयताश्रयो भवति। निदिध्यासनं चैतत्। 'ते ध्यानयोगानुगता अपश्यन्'नित्यादिश्रुतेश्च। नित्यत्वेऽपि श्रुतेर्नियतानिरूपकत्वस्यापूर्वत्वात्तस्य फलबलकल्प्यत्वात्। नैतदप्रतीतत्वोत्तरभावं जगत्, किं तर्हि नित्यमेतद्दृश्या जगदपि। श्रीः।

एतावदेवोपलब्धम्।

# सङ्केतसूची ।

अष्टा०—अष्टाध्यायी.
अम०—अमरकोशः.
आश्व०-श्रौ०—आश्वलायनश्रौतसूत्रम्.
ईशा०—ईशावास्योपनिषद्.
उ०सू०—उणादिसूत्रम्.
ऋ०सं०—ऋग्वेदसंहिता.
ऐतरे०—ऐतरेयोपनिषद्.
कठो०—कठोपनिषद्.
कपिलसू०—कपिलसूत्रम्.
काव्य०प्र०—काव्यप्रकाशः.
कृ०उ०—कृष्णोपनिषद्.
केन०—केनोपनिषद्.
कैव०—कैवल्योपनिषद्.
कौषी०ब्रा०—कौषीतकिब्राह्मणोपनिषद्.
गोपा०ताप०—गोपालतापनी.
गीतगोवि०—गीतगोविन्दः.
छान्दो०—छान्दोग्योपनिषद्.
जाबालो०—जाबालोपनिषद्.
जाबालि०—जाबाल्युपनिषद्.
तत्व०नि०—तत्वदीपनिबन्धः.
तै०उ०—तैत्तिरीयोपनिषद्.
तै०आर०—तैत्तिरीयारण्यकम्.
तै०ब्रा०—तैत्तिरीयब्राह्मणम्.
तै०सं०—तैत्तिरीयसंहिता.
नृसिंहो०-ता०—नृसिंहोत्तरतापनी.
न्या०कु०—न्यायकुसुमाञ्जलिः.
परि०शे०—परिभाषेन्दुशेखरः.
पात०यो०—पातञ्जलयोगदर्शनम्.
पु०सू०—पुरुषसूक्तम्.
पू०मी०—पूर्वमीमांसा.
प्रश्नो०—प्रश्नोपनिषद्.
ब्र०सू०—ब्रह्मसूत्रम्.
बृह०—बृहदारण्यकम्.
बृहद्वा०—बृहद्वामनपुराणम्.
भ०गी०—भगवद्गीता.
भा०स्कं०—भागवतम् स्कन्धः.
भा०प०—भाषापरिच्छेदः.
म०भा०—महाभारतम्.
म०भाष्य०—महाभाष्यम्.
महो०नि०—महोपनिषद्.
मार्कं०पु०—मार्कण्डेयपुराणम्.
मुण्ड०—मुण्डकोपनिषद्.
वि०सू०—विष्णुसूक्तम्.
श०प०ब्रा०—शतपथब्राह्मणम्.
शु०यजुः०—शुक्लयजुर्वेदसंहिता.
श्वेता०—श्वेताश्वतरोपनिषद्.
सांख्य०कौ०—सांख्यतत्वकौमुदी.
सि०मु०—सिद्धान्तमुक्तावलिः.
सुबो०—सुबोधिनी.

# अकारादिक्रमेण प्रमाणवचनसूची ।

आ

ग

र



ल

## स

---

# विद्वन्मण्डनस्य शुद्धिपत्रम्।

| अशुद्धम् | शुद्धम् | पृ. | प. |
|---|---|---|---|
| श्रुतिपुराणेषु | श्रुतिस्मृतिपुराणेषु | ११ | १ |
| पूर्वमभावमुखेन | पूर्वकमभावमुखेन | २१ | ३ |
| उभयवत्त्वम् | उभयधर्मवत्त्वम् | २२ | ७ |
| सोपधि ब्रह्म | सोपाधि ब्रह्म | २४ | १ |
| हेत्वपेक्षाया | हेत्त्वपेक्षायाम् | ३१ | २ |
| निश्वसितमस्य | निःश्वसितमस्य | ५९ | ५ |
| जीवरूपस्य | जीवस्वरूपस्य | ६३ | ७ |
| तदपृत्तिर्मवेत् | तदनुवृत्तिर्भवेत् | ६५ | २ |
| पुराणरोधात् | पुराणविरोधात् | ६५ | ३ |
| कालाभयत्वेन | कालाश्रितत्वेन | ९४ | २ |
| असिद्धेः | अप्रसिद्धेः | ९९ | २ |
| यथागतम् | यथागतमित्यादि | ११० | १० |
| तत्पुरुषवत् | तत्पुरुषतत्तद्व्यवहाराव्यवहारावपि | १२१ | ३ |
| नाज्ञाननिवर्वकत्वम् | नाज्ञानमात्रनिवर्तकत्वम् | १३३ | ६ |
| ब्रह्मस्वरूपं | ब्रह्मस्वरूपं जीवस्वरूपम् | १४१ | ७ |
| यत्पदमामनन्ति | यत्पदमामनन्तीति च | १४४ | ६ |
| नियमनमतस्तस्मिन् | नियमनं तस्मिन् | १४७ | ६ |
| अपि च स्मर्यते | अपि स्मर्यते | १४९ | ६ |
| न चैवं सार्वज्ञ्यानुपपत्त्या | न चैवमसार्वज्ञ्यानुपपत्त्या | १५५ | १ |
| | | १५९ | ४ |
| प्रवर्तकत्वम् | प्रवर्तकत्वं निवर्तकत्वं च | १६२ | ७ |
| जीवकर्तृकत्वम् | जीवकर्तृत्वम्। | १६४ | १ |
| जीवस्य तद्रूपस्य | जीवस्य तद्योगं तद्रूपस्य | १७२ | ४ |
| स्वस्मिन् भगवतो | स्वस्मिन् अन्यस्य तस्मिन् भगवतो | १७४ | ३ |
| निरूपणादित्यर्थः | निरूपणाद्धेत्यर्थः | १७४ | ५ |
| योग्यास्ते | तद्योग्यास्ते | १७५ | ३ |
| निरतिशय | निरतिशयित | १७६ | ३ |
| तम्यमान | तातम्यमान | १७६ | ६ |

| अशुद्धम् | शुद्धम् | पृ. | प. |
| --- | --- | --- | --- |
| नन्दराजकुमारो नवजलदः | नन्दराजकुमारनवजलदः | १७७ | ३ |
| शक्यते | शक्यम् | १७७ | ४ |
| —भ सम्भव | त्तदसम्भव | १८० | ६ |
| अन्योन्याश्रयत्वाच | अन्योन्याश्रयाच | १८५ | २ |
| अङ्गीकारात्तन्निर्वाहाय | अङ्गीकारात्समवायस्य नित्यत्वेनाङ्गीकारात् | १८७ | ३ |
| अन्यत्र | अत्र अन्यत्र | १८७ | ७ |
| गन्धस्य | गन्धस्यैव | १८८ | ५ |
| कथने सङ्कोचः | कथने च सङ्कोचः | १८८ | २ |
| तदवयव | तावदवयव | १८८ | ३ |
| गुहा प्रविष्टा | गुहां प्रविष्टा | १८९ | ४ |
| जीवसंस्थितिरुक्ता | जीवस्य स्थितिरुक्ता | १८९ | ५ |
| स्पर्शधर्मवत्वेन | स्पर्शधर्मत्वेन | १९१ | १ |
| श्रुत्युक्त्या | श्रुत्युक्ता | १९१ | ४ |
| उत्पत्स्यते | उपपद्यते | १९७ | ५ |
| स्वरूपस्य | स्वरूपमात्रस्य | १९९ | २ |
| वद्धत्वमिति | वद्धत्वमपि | १९९ | ४ |
| समर्थे | समर्थत्व | १९९ | ५ |
| तत्कल्पनमप्यशक्यम् | तत्कल्पनमशक्यं च | १९९ | ७ |
| निरूपितमत्य | निरूपितमित्य | २०० | २ |
| स्वरूपवत् | स्वरूपत्ववत् | २०१ | ४ |
| आद्यः | आद्या | २०५ | १ |
| शुद्धब्रह्मणि | शुद्ध एव ब्रह्मणि | २०५ | ३ |
| तव | इति तव | २०६ | ९ |
| तेन | तेन च | २०८ | ५ |
| भवत | न भवत | २१२ | ४ |
| उत्सृज | उत्सृजा | २१३ | १ |
| सृजत | असृजत | २१३ | २ |
| शोधकत्वम् | शोधकत्यम् | २१४ | ५ |
| तत्पराणाम् | तत्परत्वानाम् | २१६ | ३ |
| यमयति स आत्मा | यमयत्येष त आत्मा | २२२ | ५ |

| अशुद्धम् | शुद्धम् | पृ. | प. |
|---|---|---|---|
| हैतमेव | हैतमेव | २२३ | ७ |
| सिद्धान्तम् | स्वसिद्धान्तम् | २२४ | ४ |
| सोऽविमुक्ते च प्रतिष्ठितः | सोऽविमुक्ते प्रतिष्ठितः | २२४ | ६ |
| धर्मेषु | ब्रह्मधर्मेषु | २३० | ३ |
| रूपरूपस्य | रूपरूपत्वस्य | २३६ | १० |
| विशेषात्मकत्वं | विशेषगमकत्वम् | २३९ | १ |
| रसादि | रासादि | २४५ | १२ |
| तत्साहचर्यंवत्त्वम् | तत्साहचर्यवत्त्वेऽपि न तत्प्रयोजकत्वम्। | २६२ | २ |
| भवान्, तदा | , तदा | २६६ | ४ |
| अवसीयत इति | अवसीयते | २८० | २ |
| कर्मण्युच्छ्रितत्वम् | कर्मण्युत्थितत्वम् | २८५ | १ |
| बाहुल्यार्थत्वेन | बाहुल्यार्थकत्वेन | २९४ | १० |
| रूपत्व | रसरूपत्व | २९९ | ४ |
| तत्स्थानं | तत्तत्स्थानं | ३०० | ९ |
| पूतनापयः | पूतनास्तुपयः | ३०२ | ५ |
| सम्पत्त्या | सम्पत्त्यां | ३०६ | १ |
| जीर्यते | जीर्यति | ३०७ | २ |
| धरा भवेत् | धराऽभवत् | ३२० | १० |
| श्रुतिस्मृतिभिः | स्मृतिश्रुतिभिः | ३२७ | ७ |
| यत्सर्वेषु | यः सर्वेषु | ३३३ | ९ |

---

## सुवर्णसूत्रस्य शुद्धिपत्रम्।

| अशुद्धम् | शुद्धम् | पृ. | प. |
|---|---|---|---|
| प्रभुचरणाः | श्रीमत्प्रभुचरणाः | २ | ३ |
| न भिन्नाः। एवास्तु | तस्मान्न भिन्ना एवास्तु | ४ | २ |
| सिनोति बध्नातीति विषयः। | सिनोति बध्नातीति। | ६ | १ |
| पञ्चमप्रपाठके(?) | तृतीयप्रपाठके संप्रत्युपलभ्यते। | २७ | २ |
| अतः सर्वं | सर्वं | २७ | ८ |
| विशष्यान्वितेन | विशेष्यान्वितेन | ३२ | १ |
| अथानुरोध | अर्थानुरोध | ३७ | ३ |

| अशुद्धम् | शुद्धम् | पृ. | प. |
|---|---|---|---|
| तावद्वयाश्च रथ्याद् | तावद्वरथ्याद् | ९६ | १० |
| वैशंपायन | वैशम्पायन | ११० | ३ |
| ह्रंत तिरोसानी- | हन्त तिरोसानी- | ११७ | ११ |
| विकासङ्कोच | विकाससङ्कोच | १५१ | ७ |
| अमृतो ब्रह्म | अमृतोऽभयो ब्रह्म | १५१ | १० |
| न तु द्वितीयम् | न तु तद्द्वितीयम् | १५२ | १२ |
| अन्धपरंपरा | अन्धपरम्परा | १६३ | २ |
| कारणाववस्थाया | कारणावस्थाया | १६८ | २ |
| एवं मानवमावर्त | इमं मानवमावर्तं | १७५ | १० |
| इत्यन्तानि | इत्यन्तानि | १९० | २ |
| यथाकथंचित् | यथाकथञ्चित् | २१८ | ४ |

## हरितोषिण्याः शुद्धिपत्रम्।

| अशुद्धम् | शुद्धम् | पृ. | प. |
|---|---|---|---|
| वाक्यान्याहुं | वाक्यान्याहुः | १३ | २ |
| पक्षपटम् | पक्षपट्टम् | ६१ | ५ |
| नित्यत्वाद्धटोप- | नित्यत्वाद्धटोप- | ७८ | ७ |
| न चति | न चेति | ११३ | ६ |
| तदधीकदेशः | तदधिकदेशः | १८४ | १२ |
| श्रुतिप्रमाण्याद् | श्रुतिप्रामाण्याद् | २९५ | ४ |

## गङ्गाधरभट्टयाः शोधपत्रम्।

| अशुद्धम् | शुद्धम् | पृ. | प. |
|---|---|---|---|
| आब्रह्मस्तम्बान्तानि | आब्रह्मस्तम्बान्तानाम् | १८ | ५ |
| उपजीव्यस्य | उपजीव्यत्वस्य | २३ | २ |
| यदनन्तरं | यदुत्तरतरं | २३ | ३ |
| धर्मनिरूपक | धर्मनिरूपक | २५ | २ |

| अशुद्धम् | शुद्धम् | पृ. | प. |
|---|---|---|---|
| तेनाहुः | तत्राहुः | ६५ | ३ |
| परिप्लुते- | 'परिप्लुते' संप्रत्युपलभ्यते । | ११२ | १ |
| गीतैकादेशोक्तेत्यर्थः | गीतैकादशोक्तेत्यर्थः | १७२ | २ |
| अनुमानमस्त्येव | अनुभानमस्त्येव | २५३ | ७ |
| एतदनतरमिति | एतदनन्तरमिति | २९६ | ७ |
| खञ्जः कुब्जः | खञ्जकुब्जः | ३१० | ३ |

## टिप्पण्याः शोधपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ. | प. |
|---|---|---|---|
| मादाय 'एकस्या' इति न्यायोऽपि । | 'मादायापि' 'एकस्या' इति न्यायस्तु | २५ | १२ |
| अन्तर्भावेन | अन्तर्भावेण | ५१ | ६ |
| इदं वै दध्यङ्ङा- | इदं वै तन्मधु दध्यङ्ङा- | ५२ | १ |
| न तु | ननु | ८३ | ७ |
| तद्रूरूपा | तद्रूपा | ८६ | ९ |
| स्वादिप्रविष्ट | स्वादिविशिष्ट | ९५ | १ |
| 'संयुक्ता' 'अप्यङ्गुलय'- | 'संयुक्ता अप्यङ्गुलय- | १६९ | २ |
| अयुक्तम् | अयुक्तत्वम् | १८९ | ६ |
| विविदपन्ति | विविदिपन्ति | २३९ | ३ |
| अथैते दुःखमेवोपयन्ति | अथेतरे दुःखमेवापियन्ति | २३९ | ८–९ |
| अभ्युगम | अभ्युपगम | २८५ | ८ |
| गृहिण इति । गुणोपसंहारन्याये- नेति स्यादिति प्रतिभाति | इदमयुक्तम् । | २९४ | १ |

# पश्चात्प्राप्तप्राचीनपुस्तकानुसारिपाठान्तराणि ।

| मुद्रितपाठः | प्रतपुस्तकपाठः | पृ. | प. |
|---|---|---|---|
| अभिसंविशन्ति | अभिसंविशन्तीति | १७ | १ |
| उपहितत्वस्या | उपहितत्वस्या- | ३० | २ |
| अविरतं सर्गः | अविरतसर्गः | ३० | ३ |
| एवं स्वभाव | एवं सति स्वभाव | ३१ | ४ |
| व्यवच्छेदक इति | व्यवच्छेदक एव इति | ३२ | ५ |
| भूतानि जायन्ते | भूतानि जायन्त इत्यादि | ३४ | ३ |
| 'अथातो ब्रह्मजिज्ञासा' इत्यत्र | 'अथातो ब्रह्मजिज्ञासे'ति | ३७ | १ |
| निर्गुणब्रह्मजिज्ञासां प्रतिज्ञाय । | ब्रह्मजिज्ञासां प्रतिज्ञाय | | |
| पश्चान्निषेधतीत्युच्येत । किन्तु | पश्चान्निषेधति, किन्तु लोकसिद्धा | ४० | ३ |
| विधिनियोज्यादि | विधिनियोज्यतादि | ४६ | ६ |
| आविद्याधिष्ठान | आधिष्ठान (?) | ४६ | ७ |
| जीवस्याऽप्यज्ञत्वमनुपपन्न- | जीवस्याज्ञत्वमनुपपन्नं | ४८ | १ |
| मिति चेत् | वेदितव्यमिति चे | | |
| विभुत्वात् | व्यापकत्वात् | ५१ | १ |
| अलीकत्वमपि | अलीकत्वं च | | |
| प्रवेशानुपपत्तिः | प्रवेशानुपपत्तेः | ६३ | ३ |
| भयादिकं च | भयादिकं वा | ६४ | ६ |
| सत्कम्पो | सत्कम्पो | ६४ | ७ |
| अज्ञानकार्ये प्रारब्धे | अज्ञानकार्यप्रारब्धे | ६५ | १ |
| अनेकवदवभासमानं | अनेकवदाभासमानम् | ६६ | २ |
| द्वित्रादि | द्विज्यादि (?) | ६६ | ३ |
| धातोर्मध्यमपुरुष | धातुमध्यमपुरुष | १३० | १ |
| ज्ञानकार्य | ज्ञानकार्यः | १३३ | ३ |
| एवाभावेनैव विभागस्य | एवाभावेन विभागस्य | १३४ | ६ |
| अभिमानो | अभिमानिनो | १३४ | ९ |
| भौतानुपपत्तेः | भौत्यनुपपत्तेः | १४० | २ |
| तस्यैतदर्थाभिज्ञत्वात् | तस्यैव तदर्थाभिज्ञत्वात् | १४५ | ३ |

| मुद्रितपाठः | प्रत्नपुस्तकपाठः | पृ. | प. |
|---|---|---|---|
| जीवादिसर्वपदार्थविषयक | जीवादिसर्वविषयक | १५३ | ८ |
| न स्वहं तेषु ते मयि | तद्वदन्तेषु ते मयि (?) | १५८ | ४ |
| तद्द्वारा | तच्चद्वारा | १६१ | ८ |
| ब्रह्मणो | ब्रह्मणि | १६५ | ५ |
| न धर्माधर्मौ | नाधर्मधर्मौ | १६५ | १० |
| चांशत्वम् | वांशत्वम् | १६६ | २ |
| एतेभ्यो भूतेभ्यः | एवैभ्यो भूतेभ्यः | १७३ | ४ |
| साध्याविशिष्टत्वाच | साध्यविशिष्टत्वाच (?) | १८४ | ५ |
| संभवे | संभवेन | १८५ | ३ |
| तत्रवारिस्थतदनुपलम्भ | तत्रवारिस्थातदनुपलम्भ | १९१ | २ |
| धर्माणामभावात् | धर्माणामभावतः | १९४ | ४ |
| सविशेषस्यापि | सविशेषत्वस्यापि | १९८ | ३ |
| इत्युच्यते | इत्युच्येत | २०० | ३ |
| लौकिकप्रसिद्ध | लोकप्रसिद्ध | २०० | ५ |
| निषेधश्चैतेषाम् | निषेधश्च तेषाम् | २०२ | ६ |
| ब्रह्मेति मन्तव्यम् | ब्रह्मेति प्रतिपत्तव्यम् | २०३ | ३ |
| न ह्येतस्माद् | न स्तेतस्माद् | २०४ | ९ |
| ज्ञानवत एव तद्दर्शनम् | ज्ञानवत एव दर्शनम् | २०६ | ४ |
| साक्षीति वक्तुं | साऽक्षीति तव वक्तुं | २०६ | ५ |
| जीवो | जातो | २१३ | ४ |
| ब्रह्मपरत्वेनैवोपासनानि | ब्रह्मत्वेनैवोपासनानि | २१८ | १ |
| ब्रह्म वेदैक | ब्रह्म हि वेदैक | २२० | २ |
| तथैव शुद्धमेव | तथैव स्वयमेव शुद्धमेव | २२३ | १ |
| वाजसनेयिशाखोक्तं | वाजसनेयिशाखोक्तं च | २२३ | ६ |
| प्रादेशमात्रस्याप्यभि- | प्रादेशमात्रस्याभि- | २२४ | ९ |
| तज्ज्ञान | तु तज्ज्ञान | २२७ | ९ |
| ब्रह्मणि | ब्रह्मण्यपि | २२९ | ७ |
| द्वितीयः पक्ष एव | द्वितीय एव पक्षः | २३० | १ |
| करचरणादि | करादि | २३५ | ८ |
| स्यनेन | स्विन्नेन | २३८ | ३ |

| मुद्रितपाठः | प्रत्तपुस्तकपाठः | पृ. | प. |
|---|---|---|---|
| ईश्वरः सांनिध्ये | ईश्वरसांनिध्ये | २४५ | ४ |
| विरुद्धसर्वधर्माणाम् | विरुद्धधर्माणाम् | २४६ | ९ |
| तदर्थस्य च वक्तुम् | तदर्थस्य वक्तुम् | २४६ | १४ |
| मृत्स्नादिप्रसङ्गेषु | मृत्सोलूखलादिप्रसङ्गेषु | २४८ | २ |
| निरूपणात् | च निरूपणात् (?) | २४८ | ४ |
| तज्जनितक्लेशादयः | तत्क्लेशादयः | २५१ | ५ |
| अनुकरणमात्रत्वं | अनुकरणमात्रत्वं तु | २५२ | १ |
| स्थायिभावस्वरूपत्वात् | स्थायिभावरूपत्वात् | २५३ | १ |
| सर्वकरणेनैवैतद् | सर्वकरणेनैतद् | २५४ | २ |
| तथात्वं मन्तव्यम् | तथा मन्तव्यम् | २५५ | ४ |
| भिन्नत्वेनापि | भिन्नत्वेन | २७५ | १ |
| भिन्नकालीनानामपि | भिन्नकालानामपि | २८० | ५ |
| दण्डी प्रैषानन्वाह | यष्टी प्रैषानन्वाह | २८२ | ५ |
| वर्तमानत्वार्थं एव | वर्तमानार्थं एव | २८३ | ७ |
| गर्गाचार्येण | गर्गाचार्येणापि | २८४ | १ |
| डित्थडपित्थादि | डित्थकपित्थादि | २८७ | २ |
| तेषां भक्तानाम् | तेषां तेषां भक्तानाम् | २८९ | ८ |
| परं | परम (?) | २९२ | ५ |
| कामान् वर्षतीति वृषा गो-<br>पिकासु कामवर्षकस्य | गोपिकासु कामवर्षकस्य<br>कामान् वर्षतीति वृषा तस्य | २९४ | ४–५ |
| बाहुल्यार्थत्वेन | बाहुल्यार्थकत्वेन | २९४ | १० |
| अयं चोभयार्थकः प्रयोगः | अयं च श्लिष्टप्रयोगः | ३०३ | १ |
| एतच्च यथा दशमस्कन्धविवरणे। | एतच्च यथा तथा दशमस्कन्धविवरणे | ३०४ | १० |
| विशेषेण | विशेषेण वा | ३१३ | ८ |
| करणकर्मेच्छया | कारणकर्मेच्छया | ३१५ | १ |
| कृत्वा | मत्वा | ३१९ | ३ |
| तथा प्रदर्शनम् | तदा प्रदर्शनम् | ३१९ | ११ |
| सम्बन्धिन्या | सम्बन्धिन्या अपि | ३२४ | १ |
| असत्त्वेन | सत्त्वेन (?) | ३३१ | ६ |

| शुद्धिपाठः | प्रत्नपुस्तकपाठः | पृ. | प. |
|---|---|---|---|
| मार्गप्रवर्तकाचार्यान् | मार्गाम्बुजातमार्तण्डान् | ३५५ | ३ |
| असात्तु येनैव | असत्कृतेनेह | ३५५ | ६ |
| वादितमः | प्रतिवादितमः | ३५५ | ७ |





दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमचरणाः ।

विद्वन्मण्डनम् —



काशीस्थश्रीमद्गोस्वामिश्रीगिरिधरचरणाः ।

